नाक्रामेत् कामतश्छायां ब्राह्मणानां गवामपि । स्वान्तु नाक्रामयेच्छायं पतिताद्यैर्न रोगिभिः ।
वर्ज्जयेन्मार्ज्जनीरेणुं वस्त्रस्नान-घटोदकम् ।।७८३।।

नाश्नीयात् पयसा तक्रं न वीजान्युपवीजयेत् । विवत्सायाश्च गोः क्षीरमौष्ट्रं वा निर्दशस्य च ।
आविकं सन्धिनीक्षीरमपेयं मनुरब्रवीत् ।।७८४।।

हन्तकारमथाग्र्यं वा भिक्षां वा शक्तितो द्विजः । दद्यादतिथये नित्यं बुध्येत परमेश्वरम् ।।७८५
भिक्षामाहुर्ग्रासमात्रमग्र्यं तस्माच्चतुर्गुणम् । पुष्कलं हन्तकारन्तु तच्चतुर्गुणमिष्यते ।।७८६।।

मार्कण्डेये—

भोजनं हन्तकारं वा अग्र्यं भिक्षामथापि वा । अदत्त्वा तु न भोक्तव्यं यथाविभवमात्मनः ।।७८७

काशीखण्डे —

नैवोत्कटासनेऽश्नीयान्नाग्नौ वस्त्वशुचि क्षिपेत् । श्राद्धं कृत्वा परश्राद्धे योऽश्नीयाज्ज्ञानवर्ज्जितः ।
दातुः श्राद्धफलं नास्ति भोक्ता किल्विषभुग्भवेत् ।।७८८।।

नोत्पाटयेल्लोमनखं दशनेन कदाचन । करजैः करजच्छेदं करेणैव विवर्ज्जयेत् ।।७८९।।

अपद्वारे न गन्तव्यं स्ववेश्मपरवेश्मनोः । उत्कोचद्युतदौत्यार्थंद्रव्यं दूरात् परित्यजेत् ।।७९०।।

निष्ठीवनञ्च श्लेष्माणं गृहाद्दूरे विनिक्षिपेत् । उद्धृत्य पञ्च मृत्पिण्डान् स्नायात् परजलाशये ।
अनुद्धृत्य च तत्कर्त्तुरेनसः स्यात्तुरीयभाक् ।।७९१।।

---

वस्त्रोदकं स्नानघटोदकञ्च ।।७८३।।

अनिर्दशस्य अनिष्क्रान्तदशदिनस्य वत्सस्य भक्ष्यं यत् क्षीरं तदित्यर्थः, दशदिनमध्येऽपेयत्वात्; सन्धिनी वृषभाक्रान्ता गौस्तस्याः क्षीरम् ।।७८४।।

दातुः अन्नदातुः; करजैः नखैः ७८८-७८९।।

---

होकर गमन न करे । ब्राह्मण, गो,–इनकी छाया को अतिक्रम न करे । पतितादि अथवा रोगग्रस्त व्यक्ति-वृन्द के द्वारा निज छाया अतिक्रम न करावे । मार्जनी धूली (बुहारी की धूरि),वस्त्रोदक, एवं स्नानघटस्थ जल वर्जनकरे ।।७८२-७८३।।

दुग्ध के सहित तक्र मिश्रित कर पान न करे । वीज को उपवीजन न करे । अर्थात् वीज को इस दशा में उपनीत न करे, जिससे वह निष्क्रिय हो जाय । वत्सहीन धेनु एवं ऊँटनी का दूध अथवा जिसके प्रसव-काल के दश दिन नहीं बीते हैं, वैसी गाय का दूध, एवं उष्ट्री का दुग्ध, गो दुग्ध, मेष दुग्ध एवं वृषभाक्रान्त धेनु का दुग्ध मनु महाराज के मत में पान योग्य नहीं है ।।७८४।।

द्विज, नित्य यथाशक्ति हन्तका, अग्रय, अथवा भिक्ष द्रव्य अतिथि को प्रदान करे, एवं उनको परमेश्वर-वत् सम्मान करे । बुधगण, ग्रास मात्र वस्तु को भिक्षा, उसके चतुर्गुण को अग्रय एवं अग्रय के चतुर्गुण को हन्तकार कहते हैं ।।७८५-७८६।।

मार्कण्डेय पुराण में वर्णित है—अतिथि को निज विभवानुसार हन्तकार, अग्रय, अथवा भिक्षा प्रदान न करके भोजन ग्रहण करना निषिद्ध है ।।७८७।।

काशीखण्ड में वर्णित है—विषम आसन में उपवेशन कर भोजन करना निषिद्ध है, अग्नि में अशुचि द्रव्य निक्षेप करना नहीं चाहिये । जो ज्ञानहीन व्यक्ति, श्राद्ध करके अपर के श्राद्ध में भोजन करता है, वह

ब्राह्मे —

यस्तु पाणितले भुङ्क्ते यस्तु फुत्कारसंयुतम् । प्रसृताङ्गुलिभिर्यस्तु तस्य गोमांसवच्च तत् ॥७९२

अत्रिस्मृतौ—

न्यूनाधिकस्तनी या गौर्याऽथवाऽभक्ष्यचारिणी । तयोर्दुग्धं न होतव्यं न पातव्यं कदाचन ॥७९३

अजा गावो महिष्यश्च याऽमेध्यमपि भक्षयेत् । हव्ये कव्ये च तद्दुग्धं गोमयश्च विवर्जयेत् ॥७९४

अङ्गुल्या दन्तकाष्ठञ्च प्रत्यक्षलवणं तथा । मृत्तिका-प्राशनं चैव तुल्यं गोमांसभक्षणैः ॥७९५॥

अत्रापवादो मनुस्मृतौ—

सामुद्रं सैन्धवं चैव लवणे परमाद्भुते । प्रत्यक्षे अपि ते ग्राह्ये निषेधस्त्वन्यगोचरः ॥७९६॥

अत्रिस्मृतौ—

दिवा कपित्थच्छाया च निशायां दधिभोजनम् ।
कार्पासं दन्तकाष्ठञ्च शक्रादपि हरेत् श्रियम् ॥७९७॥

विष्णुस्मृतौ च —

कपिलायाः पयः पीत्वा शूद्रस्तु नरकं व्रजेत् । होमशेषं पिवेद्विप्रो विप्रः स्यादन्यथा पशुः ॥७९८

---

अभक्ष्यं विष्ठादि, तच्चारिणी; अजादयस्तासां मध्ये या अमेध्यं भक्षयेत्, तस्या दुग्धं गोमयञ्च; दन्तकाष्ठं दन्तशोधनं, होमशेषं होमावशिष्टमेव पयः ॥७९३-७९८॥

---

भोक्ता का पाप भोजन करता है, एवं अन्नदाता श्राद्धफल लाभ नहीं करता है। दन्त द्वारा लोम, एवं नख उत्पाटन करना कभी भी उचित नहीं है। हस्त के नख के द्वारा नखच्छेदन करना परित्याग करे। स्वगृह में परगृह में गुप्तद्वार द्वारा प्रवेश न करे। उत्कोच, द्युत एवं दौत्य विषयक द्रव्य दूर से परित्याग करे। गृह से दूर में निष्ठीवन एवं श्लेष्मा निक्षेप करे। अपर के जलाशय में स्नान करना हो पञ्च मृत्पिण्ड जल से उठाकर ही स्नान करे। यदि ऐसा न करके स्नान करे तो जलाशय प्रतिष्ठाता के पाप के चतुर्थांश भागी होना पड़ेगा ॥७८८-७९१॥

ब्रह्मपुराण में लिखित है—जो व्यक्ति, करतल में खाद्य द्रव्य रखकर भोजन करता है, जो व्यक्ति, फुत्कार संयोग से अर्थात् फूँक मारते मारते, अथवा प्रसारित (फैली हुई) अङ्गुलियों की सहायता से भोजन करता है, उसका भोजन, गोमांस भोजन सदृश होता है ॥७९२॥

अत्रि स्मृति में लिखित है— जिस गाय के स्तन न्यून अथवा अधिक (छोटे और बड़े) हैं, अथवा जो गाय विष्ठा आदि अभक्ष्य द्रव्य भोजन करती है, कभी उसका दूध पान अथवा उससे होम-कार्य्य न करे। बकरी (अजा), गो, महिषी (भैंस) प्रभृति एवं जो गाय घृणित पदार्थ भोजन करती है, हव्य कव्य में उसके दुग्ध एवं गोमय वर्जनीय हैं। अङ्गुलि द्वारा दन्तशोधन करना, प्रत्यक्ष लवण (व्यञ्जनादि के सहित मिश्रित व्यतीत लवण) एवं मृद्भक्षण, यह सब गो-मांस के समान हैं ॥७९३-७९५॥

मनुस्मृति में इस विषय में विशेष व्यवस्था है— समुद्रजात एवं सैन्धव,–यह दो प्रकार परमाद्भुत लवण प्रत्यक्ष व्यवहार कर सकता है, किन्तु अन्य लवण प्रत्यक्ष व्यवहार के अयोग्य है ॥७९६॥

अत्रिस्मृति में उक्त है— दिन के समय कपित्थ ( कैथ ) के वृक्ष की छाया, रात्रि में दधि भोजन, एवं कार्पास काष्ठ से दन्त-शोधन (दतौन) करने पर इन्द्र भी भ्रष्ट होते हैं ॥७९७॥

विष्णुस्मृति में लिखित है— कपिलाधेनु का दुग्ध पान करने पर शूद्र का नरक गमन होता है। विप्र,– होमावशिष्ट पयः पान करें, अन्यथा वे पशु योनि को प्राप्त करेंगे ॥७९८॥

परिहर्त्तुं पुनर्लेखं तत्तत्शास्त्रोक्तमन्यथा । यदत्र लिखितं किञ्चित् तत् क्षन्तव्यं महात्मभिः ।।७९९

आचाराश्चेदृशाः सन्ति परेऽपि बहुलाः सताम् ।
तेलोकशास्त्रनो ज्ञेया अपेक्ष्या यदि वैष्णवैः ।।८००।।

नित्यत्वमेषां माहात्म्यमप्यत्र लिखितात् पुरा ।
सदाचारस्य नित्यत्वान्माहात्म्याच्च सुसिध्यति ।।८०१।।

इति श्रीगोपालभट्ट-विलिखिते श्रीभगवद्भक्तिविलासे नित्यकृत्यसमापनो नाम एकादशो विलासः ।

---

अथोपसंहरन् श्रीविष्णुपुराणादिवर्त्ति-पाठपरित्यागादिनोच्चावचोपचाराणामेषामन्यथा लिखनतो निजापराधं मत्वा साधून् क्षमापयति—परिहर्त्तुमिति । अन्यथेति कुत्रापि श्लोकादि परित्यागेन, क्वचिदन्यत्रस्थित-श्लोकपादादेरन्यत्र योजनेन, क्वचिच्चान्याक्षरैस्तदर्थलिखनेनेत्यर्थः । तच्च पुनर्लिखनं परिहर्त्तुमेव अन्यथा प्रकरणान्तरेऽत्रैव लिखितस्य पुनर्लिखनेन वैयर्थ्यापत्तेर्ग्रन्थबाहुल्यापत्तेश्च । अतो महात्मभिर्विवेकिभिः क्षन्तव्यम् ।।७९९।।

ईदृशाः उच्चावचाः सतामाचाराः; अश्वत्थच्छायायां गोष्ठे च रात्रौ न स्वपेत् । प्रातरेकेन हस्तेनैकमक्षि न संमर्द्दयेदित्यादयः । वैष्णवैर्यद्यपेक्ष्या इति तेषु केषाञ्चिदाचाराणामलक्ष्मीपरिहारपरत्वेन केषाञ्चिच्च रोगादि-परिहारपरत्वेन निजधर्म्मातिक्रमणशङ्कया वैष्णवानामनपेक्ष्यत्वात् ।।८००।।

ननु तर्हि ते किं न परिपाल्यास्तैः ? तत्र लिखति— नित्यत्वमिति । पुरा सदाचारलिखनारम्भे लिखितात्, अतो नित्यत्वात् माहात्म्याच्च वैष्णवैस्ते ते परिपाल्या एवेत्यर्थः । अलक्ष्म्या रोगादिना च कदाचिद्भक्ति-विघ्नापत्तेः । अन्यथा प्रथमप्रतिज्ञातवैष्णवावश्यककृत्यलिखनग्रन्थेऽस्मिन्नेते लेख्या एव न स्युरिति भावः ।।८०१

इत्येकादशो विलासः ।

---

पुनरुक्ति दोषपरिहार के निमित्त शास्त्रोक्त श्लोकसमूह के अंश विशेष को परित्याग कर एवं एक स्थान स्थित श्लोक का प्रयोग स्थानान्तर में करके जो कुछ लिखा गया है, तज्जन्य महात्मागण अपराध क्षमा करेंगे ।।७९९।।

सज्जनवृन्द के इस प्रकार उच्चावच (उत्तम मध्यम) और भी अनेक प्रकार के विद्यमान हैं, यदि वैष्णव वृन्द को उनका प्रयोजन हो तो शास्त्रानुसार से एवं लोकाचार से वह सब भी जान सकते हैं ।।८००।।

प्रातःकाल में एक हस्त के द्वारा अक्षिमार्जन न करे, अश्वत्थ छाया में एवं गोष्ठ में रात में शयन न करे यह सब अलक्ष्मी परिहार एवं रोगनिवारण निबन्धन निषिद्ध हुआ है । वैष्णवों के पक्ष में वह सब आचार पालनीय है अथवा नहीं है ? समाधान हेतु कहते हैं—प्रथम सदाचार लिखनारम्भ में सदाचार की नित्यता एवं महिमा का वर्णन हुआ है । अतः इस स्थान में इन सब सदाचारों की नित्यता प्रमाणित हुई है । अतएव वैष्णवों के पक्ष में वह सब पालनीय हैं । कारण, उक्त आचार को लङ्घन करने से अलक्ष्मी एवं रोगादि होने के कारण वे सब कदाचित् भक्तिमार्ग में विघ्नकारक होते हैं ।।८०१।।

इति श्रीगोपालभट्ट विलिखिते श्रीभगवद्भक्तिविलासे
नित्यकृत्य समापनो नामक एकादशो विलासः ।

———

# द्वादश-विलासः

नमो भगवते तस्मै यस्य प्रियतमा तिथिः । एकादशी द्वादशी च सर्व्वाभीष्टप्रदा नृणाम् ॥१॥

अथ पक्ष-कृत्यानि

इत्थञ्च नित्यं कुर्व्वाणः कृष्णपूजामहोत्सवम् । हरेर्दिने विशेषेण कुर्य्यात्तं पक्षयोर्द्वयोः ॥२॥

अत्र व्रतस्य नित्यत्वादवश्यं तत् समाचरेत् । सर्व्वपापापहं सर्व्वार्थदं श्रीकृष्णतोषणम् ॥३॥

अथ श्रीमदेकादशीव्रतस्य नित्यत्वम्

तच्च कृष्णप्रीणनत्वाद्विधिप्राप्तत्वतस्तथा । भोजनस्य निषेधाच्चाकरणे प्रत्यवायतः ॥४॥

---

श्रीचैतन्यप्रभुं वन्दे यदाश्रयरसाप्लुतः । वाञ्छातीतं फलत्येव मनोरथमहीरुहः ॥

पूर्व्वं नित्यकृत्यलिखनेन नित्यपूजाविधिं लिखित्वा समाप्याधुना पक्षपूजाविधिं लिखन् प्रारिप्सितसुसिद्धयै लेख्य-प्रकरणानुसारेण देवं प्रणमति—नम इति । यस्य भगवतः प्रियतमा परमवल्लभा एकादशी द्वादशी च तिथिरेव नृणां सर्व्वाभीष्टं प्रकर्षेण ददातीत्यर्थः ॥१॥

इत्थं पूर्व्वलिखितप्रकारेण, कृष्णपूजैव महोत्सवस्तं, हरेर्दिनमेकादशी द्वादशी चेत्युपवासदिनं लक्ष्यते, तस्मिन् । तं कृष्णपूजामहोत्सवम् ॥२॥

तत्र हरिदिने तद्व्रतं, तत्फलं समासेनोल्लिखति—सर्व्वेति ॥३॥

तत्र च श्रीभगवत्तोषणत्वेन विधिप्राप्तत्वेन भोजननिषेधेन अकरणे प्रत्यवायोत्पत्त्या चेति चतुर्द्धा नित्यत्वं लिखति—तच्चेति । यद्यपि अकरणे प्रत्यवायत एव मुख्यं नित्यत्वं, तथापि श्रीविष्णुपरायणानां श्रीभगवत्-प्रीणनत्वेनैव परमं मुख्यं तत् लिखितम्, तथा सामान्यतो विहितनिषेधातिक्रमेण सर्व्वत्र दोषश्रवणात् विधि-निषेधप्राप्ततया च नित्यत्वं सिध्येदेव, तच्च श्रीहेमाद्रिप्रभृतिभिर्विवृत्य लिखितमेवास्तीत्यत्र तद्विस्तारणेनालम्; एवं सर्व्वत्रान्यत्राप्यूह्यम् ॥४॥

---

जिनकी परमवल्लभा एकादशी एवं द्वादशी तिथि, मनुष्यवृन्द को सम्पूर्ण वाञ्छित फल प्रदान करती है, उन श्रीभगवान् को नमस्कार करता हूँ ॥१॥

अथ पक्ष-कृत्यानि

पूर्वोक्त प्रकार से श्रीकृष्ण-पूजारूप महोत्सव करणीय है, विशेषतः शुक्ला अथवा कृष्णा उभय पक्ष की एकादशी एवं द्वादशी तिथि में उक्त प्रकार पूजा महोत्सव का अनुष्ठान करे ॥२॥

एकादशी एवं द्वादशी तिथि में व्रत की नित्यता हेतु वह अवश्य पालनीय है । उसका अनुष्ठान करने से यावतीय पापध्वंस, सर्वार्थ प्राप्ति एवं श्रीकृष्ण की प्रीति विधान होती है, अर्थात् श्रीकृष्ण प्रसन्न होते हैं ॥३

अथ श्रीमदेकादशीव्रतस्य नित्यत्वम्

श्रीकृष्ण का प्रीति विधान, शास्त्रोक्त विधि प्राप्ति, भोजन की निषिद्धता एवं व्रताकरण में प्रत्यवाय, इन चतुर्विध कारणों से एकादशी व्रत की नित्यता प्रसिद्ध है ॥४॥

तत्र श्रीभगवत्प्रीतिहेतुत्वम्

मत्स्य-भविष्यपुराणयोः—

एकादश्यां निराहारो यो भुङ्क्ते द्वादशीदिने ।
शुक्ले वा यदि वा कृष्णे तद्व्रतं वैष्णवं महत् ॥५॥

आग्नेये—

एकादश्यां न भुञ्जीत व्रतमेतद्धि वैष्णवम् ॥६॥

बृहन्नारदीये एकादशीमाहात्म्यारम्भे—

ब्राह्मणक्षत्रियविशां शूद्राणाञ्चैव योषिताम् ।
मोक्षदं कुर्व्वतां भक्त्या विष्णोः प्रियतरं द्विजाः ॥७॥

एकादशीव्रतं नाम सर्व्वकामफलप्रदम् । कर्त्तव्यं सर्व्वदा विप्रैर्विष्णुप्रीणनकारणम् ॥८॥

अथ विधिप्राप्तत्वम्

तत्र कण्वः—

एकादश्यामुपवसेन्न कदाचिदतिक्रमेत् ॥९॥

आग्नेये—

उपोष्यैकादशी राजन् यावदायुःप्रवृत्तिभिः ॥१०॥

अतएव विष्णुरहस्ये—

द्वादशी न प्रमोक्तव्या यावदायुःप्रवृत्तिभिः ॥११॥

---

तत्र श्रीवैष्णवानां मुख्यतमनित्यत्वमादौ लिखति—एकादश्यामिति । वैष्णवं विष्णुप्रियतममित्यर्थः ॥५-६
कुर्व्वतामेकादशीव्रतमिति ज्ञेयम् ॥७॥
विप्रैरिति तेषां मुख्यत्वात् ॥८॥
यावदायुःप्रवृत्तिभिरिति यावज्जीवमित्यर्थः ॥१०॥
एतेन न कदाचिदतिक्रमेदित्यनेन नित्यत्वं साधितमेव, तदेव त्यागनिषेधेन साधयति—द्वादशीति ॥११॥

---

तत्र श्रीभगवत्प्रीतिहेतुत्वम्

मत्स्य पुराण एवं भविष्यपुराण में लिखित है—शुक्ल एवं कृष्ण उभयपक्षीय एकादशी में उपवासी रहकर द्वादशी के दिन भोजन करने से उक्त व्रत श्रीहरि का प्रियतम होता है । अर्थात् श्रीकृष्ण परम सन्तुष्ट होते हैं ॥५॥

अग्निपुराण में लिखित है—एकादशी के दिन भोजन निषिद्ध है, यह व्रत निश्चय ही विष्णु प्रियतम है ॥६

बृहन्नारदीय पुराण के एकादशी माहात्म्य में लिखित है—हे द्विजवृन्द ! ब्राह्मण, क्षत्रिय, वैश्य, शूद्र, नारी,–जो कोई क्यों न हो, भक्तिपूर्वक श्रीविष्णु प्रीतिप्रद एकादशी व्रत पालन करने से मोक्ष प्राप्त कर सकते हैं । एकादशी व्रत सर्व कामप्रद हैं । श्रीविष्णु तोषण के निमित्त इस व्रत का पालन करना ब्राह्मणों का एकान्त कर्त्तव्य है ॥७-८॥

अथ विधिप्राप्तत्वम्

इस विषय में कण्वऋषि ने कहा है—एकादशी में उपवासी रहे । कभी भी उसको उल्लङ्घन न करे ॥९

अग्निपुराण में लिखित है—हे राजन् ! यावज्जीवन एकादशी में उपवास करना उचित है ॥१०॥

अतएव विष्णु रहस्य में लिखित है—यावज्जीवन द्वादशी परित्याग न करे ॥११॥

अथ भोजननिषेधः

श्रीनारदीये पाद्मोत्तरखण्डे च —

रटन्तीह पुराणानि भूयो भूयो वरानने। न भोक्तव्यं न भोक्तव्यं संप्राप्ते हरिवासरे ॥१२॥

किञ्च —

आगमाः शतशो राजन्नितिहासा रटन्ति हि। न भोक्तव्यं न भोक्तव्यं सम्प्राप्ते हरिवासरे ॥१३

ऋषयः सङ्घशः सर्व्वे नारदाद्याश्च चुक्रुशुः। न भोक्तव्यं न भोक्तव्यं सम्प्राप्ते हरिवासरे ॥१४

विष्णुस्मृतौ —

एकादश्यां न भुञ्जीत कदाचिदपि मानवः ॥१५॥

शृङ्गिऋषिप्रोक्ते च —

एकादश्यां न भुञ्जीत नारी दृष्टे रजस्यपि ॥१६॥

बृहन्नारदीये तत्रैव —

उपवासफलं प्रेप्सुर्जह्याद्भुक्तचतुष्टयम्। पूर्व्वापरदिने रात्रौ नाहर्नक्तञ्च मध्यमे ॥१७॥

अन्यत्र च —

सायमाद्यन्तयोरह्नोः सायं प्रातश्च मध्यमे। उपवासफलं प्रेप्सुर्जह्याद्भुक्तचतुष्टयम् ॥१८॥

---

रटन्ति घोषयन्ति; वरानने हे मोहिनीति श्रीरुक्माङ्गदवाक्यम्, पाद्मोत्तरखण्डे च श्रीदुर्गां प्रति श्रीशिवस्य ॥१२-१३॥

उपवासस्य फलं श्रीभगवत्तोषणादि, तत् प्राप्तमिच्छुः, पूर्व्वस्मिन् संयमदिने अपरस्मिंश्च पारणदिने रात्रौ जह्यादिति भोजनद्वयम्। तथा मध्यमे उपवासदिने दिवा नक्तञ्चेति भोजनद्वयमेवं भोजनचतुष्टयं परित्यजेत्। भक्तेति पाठेऽपि स एवार्थः। यच्चोक्तम्—'जह्याद्भुक्तद्वयं नित्ये काम्ये भक्तचतुष्टयम्' इति। तच्च वैष्णवेतरेषु कामिषु गृहिषु नित्यकाम्यभेदाभिप्रायेणैव। वैष्णवेषु च सर्व्वथा नित्यमेव फलश्रवणादिकञ्च दर्शपौर्णमासादिवन्नित्यत्वेऽपि न विरुध्यत इति दिक् ॥१७-१८॥

---

अथ भोजननिषेधः

श्रीनारदीय पुराण में एवं पाद्मोत्तर खण्ड में वर्णित है—हे वरानने! "हरिवासर समागत होने पर भोजन करना नहीं चाहिये" यह बात आगमसमूह में एवं शत शत इतिहास ग्रन्थ में घोषित हुई है। ऋषि-वृन्द एवं नारदादि महर्षिवृन्द,—उच्चैःस्वर से कहते हैं—"हरिवासर समागत होने पर भोजन न करे, भोजन न करे ॥१३-१४॥

विष्णुस्मृति में उक्त है—मनुष्य को एकादशी के दिन कभी भोजन करना नहीं चाहिये ॥१५॥

शृङ्गीऋषि की उक्ति से भी प्रकाशित है—ऋतुमती अवस्था में भी एकादशी में भोजन करना नारी जाती का उचित नहीं है ॥१६॥

बृहन्नारदीय पुराण के उक्त स्थान में उक्त है—उपवास फलेच्छु व्यक्ति, पूर्वदिन, उपवास दिन के पूर्व दिन, रात्रि में भोजन, अपर दिन, उपवास दिन के पारण दिन में, रात्रि में एवं मध्यदिन में अर्थात् उपवास दिन में दिन रात भोजन निषिद्ध है, अर्थात् यह चार भोजन परित्याग, कामना करने वाला पुरुष करे ॥१७

ग्रन्थान्तर में भी वर्णित है—उपवास फलेच्छु व्यक्ति, पूर्वदिन में एवं परदिन में सायं भोजन एवं प्रातः भोजन,—यह चार भोजन परित्याग करे ॥१८॥

अथाकरणे प्रत्यवायाः

श्रीनारदीये—

यानि कानि च पापानि ब्रह्महत्यासमानि च । अन्नमाश्रित्य तिष्ठन्ति सम्प्राप्ते हरिवासरे ।
तानि पापान्यवाप्नोति भुञ्जानो हरिवासरे ॥१९॥

किञ्च—

सोऽश्नाति पार्थिवं पापं योऽश्नाति मधुभिद्दिने ॥२०॥

स्कान्दे—

मातृहा पितृहा चैव भ्रातृहा गुरुहा तथा । एकादश्यान्तु यो भुङ्क्ते विष्णुलोकाच्च्युतो भवेत् ॥२१

किञ्च, तत्रैवोमामहेश्वरसंवादे —

अग्निवर्णायसं तीक्ष्णं क्षिपन्ति यमकिङ्कराः । मुखे तेषां महादेवि ये भुञ्जन्ति हरेर्दिने ॥२२॥

ब्रह्मवैवर्त्ते—

स केवलमघं भुङ्क्ते यो भुङ्क्ते हरिवासरे । दिनेऽत्र सर्व्वपापानि भवन्त्यन्नस्थितानि तु ।
तानि मोहेन योऽश्नाति न स पापैर्विमुच्यते ॥२३॥

किञ्च—

पितरं को न वन्देत मातरं को न पूजयेत् । को हि दूषयते वेदं को भुङ्क्ते हरिवासरे ? ॥२४॥

---

पार्थिवं पृथिव्यां वर्त्तमानं सर्व्वमित्यर्थः ॥२०॥

यो भुङ्क्ते, स मातृहादिर्भवति, तत्तद्वधपापं प्राप्नोतीत्यर्थः । विष्णुलोकात् वैकुण्ठात् च्युतो भवति, न कदाचिदपि गच्छतीत्यर्थः । यद्वा, विष्णुलोकात् वैष्णवात् च्युतो भवति, तत्सङ्गं न प्राप्नोतीत्यर्थः ॥२१॥

हरेर्दिने हरिवासरे ॥२२॥

---

अथाकरणे प्रत्यवायाः

श्रीनारदपुराण में उक्त है—हरिवासर समुपस्थित होने पर ब्रह्म-हत्यादि निखिल पाप अन्न के मध्य में अधिष्ठित होते हैं । सुतरां हरिवासर में भोजन करने पर यावतीय पाप ही गृहीत होते हैं ॥१९॥

और भी वर्णित है—हरिवासर में भोजन करने से पृथिवी के समस्त पातक भोजन होते हैं ।२०॥

स्कन्दपुराण में वर्णित है—एकादशी में भोजन करने से मातृघाती, पितृघाती, भ्रातृघाती, गुरुहन्ता-पापियों में गण्य होता है, वह व्यक्ति, विष्णुलोक से च्युत होता है, अर्थात् उसकी विष्णुलोक प्राप्ति नहीं होती है ॥२१॥

और भी उक्त पुराण के उमा-महेश्वर-संवाद में लिखित है—हे महेश्वरि ! हरिवासर में भोजन करने पर, यमदूतगण उस पापी के वदन विवर में तीक्ष्ण अग्निवर्ण लौहास्त्र निक्षेप करते हैं ॥२२॥

ब्रह्मवैवर्त्त पुराण में लिखित है— जो व्यक्ति, हरिवासर में आहार करता है, वह केवल पाप भोजन ही करता है । इस दिन में निखिल पाप अन्न में स्थित होते हैं । सुतरां मोहवशतः जो लोक उक्त पातकान्न भोजन करता है, उसका निस्तार पापों से नहीं होता है ॥२३॥

और भी कथित है—पिता की वन्दना कौन नहीं करता है ? एवं मातृ-पूजा में कौन विमुख होता है ? कौन व्यक्ति, वेद की निन्दा करता है ? और कौन व्यक्ति हरिवासर में भोजन करता है ? ॥२४॥

विष्णुधर्म्मोत्तरे—

ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथवा यतिः। एकादश्यां हि भुञ्जानो भुङ्क्ते गोमांसमेव हि ॥२५

ब्रह्मघ्नस्य सुरापस्य स्तेयिनो गुरुतल्पिनः। निष्कृतिर्धर्म्मशास्त्रोक्ता नैकादश्यन्नभोजिनः ॥२६

एक एव नरः पापी नरके नृप गच्छति। एकादश्यन्नभोजी यः पितृभिः सह मज्जति ॥२७॥

पाद्मोत्तरखण्डे—

भुङ्क्ष्व भुङ्क्ष्वेति यो ब्रूयात् सम्प्राप्ते हरिवासरे।
गोब्राह्मणस्त्रियश्चापि जहीहि वदति क्वचित् ॥२८॥
मद्यं पिवेति यो ब्रूयात् तेषामेव अधोगतिः ॥२९॥

पुरोडाशोऽपि वामोरु सम्प्राप्ते हरिवासरे। अभक्ष्यः सर्व्वदा प्रोक्तः किं पुनश्चान्नसंस्क्रिया ॥३०

सनत्कुमारसंहितायाम्—

एकादश्यां मुनिश्रेष्ठ श्राद्धे भुङ्क्ते नरो यदि। प्रतिग्रासं स भुङ्क्ते तु किल्विषं मूत्रविण्मयम् ॥३१

गौतमीयतन्त्रे—

वैष्णवो यदि भुञ्जीत एकादश्यां प्रमादतः। विष्णवर्च्चनं वृथा तस्य नरकं घोरमाप्नुयात् ॥३१॥

विष्णुरहस्ये—

समादाय विधानेन द्वादशीव्रतमुत्तमम्। तस्य भङ्गं नरः कृत्वा रौरवं नरकं व्रजेत् ॥३३॥

---

निष्कृतिः प्रायश्चित्तमस्ति ॥२६॥

नरके मज्जति ॥२७॥

अभक्ष्यम्—अभक्ष्यभक्षणे यत् पापं तदित्यर्थः; अन्नस्य संस्क्रिया पाकः ॥३०॥

---

विष्णुधर्मोत्तर में लिखित है—ब्रह्मचारी, गृहस्थ, वानप्रस्थ, अथवा यति, जो कोई हो,—हरिवासर में भोजन करने पर गोमांस भोजन होता है। धर्मशास्त्र में ब्रह्मघाता, सुरापायी, तस्कर एवं गुरुदार गमनकारी की निष्कृति का विधान लिखित है। किन्तु एकादशी में अन्न भोजनकारी का परित्राणार्थ प्रायश्चित्त का विधान नहीं है। हे राजन्! पापीजन एकक नरक गमन करता है, किन्तु एकादशी में अन्नाहारी मानव, पितृगण के सहित नरक गमन करता है ॥२५-२७॥

पाद्मोत्तर खण्ड में लिखित है—हरिवासर उपस्थित होने पर जो व्यक्ति 'भोजन करो, भोजन करो' इस प्रकार कहता है, एवं गो-बध करो, ब्राह्मण हत्या करो, स्त्री-वध करो, मद्यपान करो' इस प्रकार उच्चारण जो व्यक्ति करता है, उसकी अधोगति सुनिश्चित होती है। हे वामोरु! हरिबासर समागत होने पर जब पुरोडाश (यज्ञीय हवि विशेष) भी अभक्ष्य होता है, तब अन्नपाक के विषय में कहना ही क्या है? २८-३०॥

सनत्कुमार संहिता में लिखित है—हे मुनिवर! यदि मनुष्य, एकादशी में एवं श्राद्ध में भोजन करता है तो वह मनुष्य, प्रति ग्रास में मूत्रविष्ठान्न पाप भोजन करता है ॥३१॥

गौतमीयतन्त्र में लिखित है—यदि वैष्णव, एकादशी में भ्रमवशतः भोजन करता है, तो उस वैष्णव के द्वारा कृत विष्णु पूजा फलवती नहीं होती है। उसको घोर नरक में जाना पड़ता है। विष्णु रहस्य में लिखित है—यथाविधि उत्तम द्वादशी व्रत ग्रहण करके तद्भङ्ग करने पर मनुष्य, रौरव नामक नरक में गमन करता है ॥३३॥

अथ तत्रैव विधवाविषयको दोषविशेषः

कात्यायनस्मृतौ —

विधवा या भवेन्नारी भुञ्जीतैकादशीदिने । तस्यास्तु सुकृतं नश्येद्भ्रूणहत्या दिने दिने ॥३४॥

नारदीये —

एकादशीं विना रण्डा यतिश्च सुमहातपाः । पच्यते ह्यन्धतामिस्रे यावदाहूतसंप्लवम् ॥३५॥

अथ पक्षद्वयेऽपि नित्यत्वम्

तत्र देवलः—

न शङ्खेन पिबेत्तोयं न खादेत् कूर्म्म-शूकरौ । एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥३६॥

विष्णुरहस्य-स्कान्द-कौर्म्म-नारदीयेषु—

यथा शुक्ला तथा कृष्णा विशेषो नास्ति कश्चन ॥३७॥

विष्णुरहस्ये ब्रह्मोक्तौ—

शुक्ला वा यदि वा कृष्णा विष्णुपूजनतत्परः । एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥३८॥

सर्व्वपापप्रणाशाय विष्णुसन्तोषणाय च । उपोष्या द्वादशी पुण्या सर्व्वैरुभयपक्षयोः ॥३९॥

वाराहे—

एकादश्यामुपवसेत् पक्षयोरुभयोरपि । द्वादश्यां योऽर्च्चयेद्विष्णुं स मुक्तिफलभाग्भवेत् ॥४०॥

विष्णुरहस्य-सौरपुराणयोः—

यथा सुपूजितो गौरः कृष्णो वा वेदविद्द्विजः । सन्तारयति दातारं द्वादश्यौ च तथा स्मृते ॥४१

---

अधुना कृष्णपक्षे संक्रान्त्यादावप्युपवासविधानेन नित्यत्वमेव द्रढ़यति — न शङ्खेत्यादिना श्राद्धमाचरेदित्यन्तेन ॥३६॥

---

अथ तत्रैव विधवाविषयको दोषविशेषः

कात्यायनस्मृति में उक्त है— जो विधवा नारी एकादशी में भोजन करती है, उसके समस्त पुण्य विनष्ट हो जाते हैं, एवं प्रतिदिन गर्भस्थ प्राणि हत्या का पाप भोग करना उसको पड़ता है ॥३४॥

नारदपुराण में लिखित है—एकादशी पालन न करने से विधवा, एवं महातपस्यान्वित यति को भी आप्रलय अन्धतामिस्र नामक नरक में पच्यमान होना पड़ता है ॥३५॥

अथ पक्षद्वयेऽपि नित्यत्वम्

उक्त विषय में देवल का कथन है— शङ्ख द्वारा जल पान करना उचित नहीं है। कूर्म एवं शूकर मांस भोजन न करे, एवं शुक्ल कृष्ण उभय पक्षीय एकादशी तिथि में उपवास करे ॥३६॥

विष्णुरहस्य में, स्कन्दपुराण में, कूर्मपुराण में एवं नारदपुराण में वर्णित है—जिस प्रकार, शुक्लाएकादशी तद्रूप कृष्णा एकादशी को भी जानना चाहिये। उभय में किसी प्रकार भेद नहीं है ॥३७॥

विष्णुरहस्य में ब्रह्मोक्ति यह है—शुक्ल अथवा कृष्णा एकादशी में भोजन करना विष्णु पूजा परायण के पक्ष में उचित नहीं है। सकल पाप क्षय हेतु एवं विष्णु सन्तोषणार्थ मानव मात्र को उभय पक्षीया पुण्या द्वादशी तिथि में उपवास करना चाहिये ॥३८-३९॥

वराह पुराण में लिखित है—उभय पक्षीया एकादशी में उपवास करे। द्वादशी में विष्णु पूजा करने पर मुक्तिफल लाभ होता है ॥४०॥

विष्णुरहस्य एवं सौरपुराण में लिखित है—जिस प्रकार गौर वर्ण एवं कृष्णवर्ण वेदविद् द्विज, सुपूजित होकर दाता को उद्धार करते हैं, उस प्रकार शुक्ला एवं कृष्ण उभय पक्षीया द्वादशी भी त्राण कारिणी अभिहिता है ॥४१॥

विष्णुरहस्ये स्कान्दे च—

तैलं शुक्लेतराणां वै तिलानां सदृशं तथा। कृष्णायाश्च सितायाश्च गोः क्षीरं सदृशं यथा।
द्वादश्योः सदृशं तद्वत् पुण्यं स्यात् कृष्णशुक्लयोः ।।४२।।

किञ्च—

चन्द्रसूर्य्यग्रहौ पुण्यौ यथैव मुनिभिः स्मृतौ। तथा सितासिते पुण्ये द्वादश्यौ विष्णुतुष्टिदे ।।४३।।

यथा गोतिलविप्राणां कृष्णत्वं नैव दूषणम्। एकादशी तथा राजन्नुपोष्या पक्षयोर्द्वयोः ।।४४।।

यथा विष्णुः शिवश्चैव संपूज्यौ मुनिभिः स्मृतौ। तथा पूज्यतमे प्रोक्ते द्वादश्यौ कृष्णशुक्लके ।।४५

नारदस्मृतौ—

नित्यं शक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः। पक्षे पक्षे तु कर्त्तव्यमेकादश्यामुपोषणम् ।।४६।।

विष्णुधर्म्मोत्तरे च—

सपुत्रश्च सभार्य्यश्च स्वजनैर्भक्तिसंयुतः। एकादश्यामुपवसेत् पक्षयोरुभयोरपि ।।४७।।

कूर्म्मपुराणे विष्णुधर्म्मोत्तरे च—

स ब्रह्महा सुरापश्च कृतघ्नो गुरुतल्पगः। विवेचयति यो मोहादेकादश्यौ सितासिते ।।४८।।

कालिकापुराणे—

सर्व्वेषामिह पापानामाश्रयः स तु कीर्त्तितः। विवेचयति यो मोहादेकादश्यौ सितासिते ।।४९

भविष्ये—

एवं ज्ञात्वा सदोपोष्ये द्वादश्यौ कृष्ण-शुक्लके। तयोर्भेदं न कुर्व्वीत भेदेन नरकं व्रजेत् ।।५०।।

---

द्वादश्यौ—शुक्ला कृष्णा च ।।४३।।

एवं द्वयोः साम्यं लिखित्वाधुना शुक्लकृष्णभेदे प्रत्यवायं लिखति—स ब्रह्महेति पञ्चभिः ।।४८-५२।।

---

विष्णुरहस्य एवं स्कन्दपुराण में लिखित है—शुक्लपक्षीय एवं कृष्णपक्षीय द्वादशी का, शुक्लतिल एवं कृष्ण तिल के तैल के समान एवं शुक्ल धेनु तथा कृष्ण धेनु के दुग्ध के समान एक रूप है ।।४२।।

और भी लिखा है—चन्द्रग्रहण, एवं सूर्य्यग्रहण को मुनिवृन्द ने जिस प्रकार समान पुण्यकाल कहा हैं, उस प्रकार विष्णु प्रीतिकारिणी शुक्ला कृष्णा उभय पक्षीया द्वादशी ही पुण्य स्वरूपा है। हे राजन्! गो, तिल, विप्र, यह सब कृष्णवर्ण होने पर भी जैसे दोषावह नहीं हैं, उस प्रकार शुक्ल एवं कृष्ण उभयपक्षीय एकादशी ही उपवास योग्या हैं। विष्णु एवं शिव जिस प्रकार संपूज्य हैं, उस प्रकार कृष्णा एवं शुक्ला उभय पक्षीया द्वादशी ही पूज्यतमा अभिहिता है ।।४३-४५।।

नारदस्मृति में लिखित है—शक्तिसम्पन्न विष्णुपरायण व्यक्तिगण, प्रतिपक्ष की एकादशी तिथि में सर्वदा उपवास करें ।।४६।।

विष्णुधर्मोत्तर में भी वर्णित है—भक्ति संयुक्त होकर भार्य्या, पुत्र एवं स्वजनगण के सहित उभयपक्षीय एकादशी तिथि में उपवासी रहना चाहिये ।।४७।।

कूर्मपुराण एवं विष्णुधर्मोत्तर में लिखित है—मोहग्रस्त होकर शुक्ला एवं कृष्णा एकादशी का भेद विचार करने से ब्रह्मघाती, मद्यपायी, कृतघ्न एवं गुरुदारगामी के सदृश पापी होना पड़ता है ।।४८।।

कालिका पुराण में लिखित है—शुक्ला एवं कृष्णा एकादशी का भेद मोहवशतः करने से इस लोक में पातक पुञ्ज का आधार कहा जाता है ।।४९।।

भविष्य पुराण में लिखित है—इस प्रकार जानकर सर्वदा कृष्ण एवं शुक्ला द्वादशी में उपवास करे। तदुभय का भेद विचार न करे। भेदज्ञान करने पर नरकगामी होना पड़ता है ।।५०।।

गारुड़े—

शुक्ला वा यदि वा कृष्णा विशेषो नास्ति कश्चन। विशेषं कुरुते यस्तु पितृहा स प्रकीर्त्तितः ॥५१

सनत्कुमारप्रोक्ते—

एकादश्योर्द्वयोर्यस्तु विशेषं कुरुते नरः। तस्योद्धारं न पश्यामि यावदाहूतरंप्लवम् ॥५२॥

विष्णुरहस्ये—

य इच्छेद्विष्णुना वासं पुत्रसम्पदमात्मनः। एकादशीमुपवसेत् पक्षयोरुभयोरपि ॥५३॥

तत्त्वसागरे—

यथा शुक्ला तथा कृष्णा यथा कृष्णा तथेतरा। तुल्ये ते मनुते यस्तु स वै वैष्णव उच्यते ॥५४॥

अथ संक्रान्त्यादावपि नित्यत्वम्

कात्यायनस्मृतौ—

संक्रान्तौ रविवारे वा यदा चैकादशी भवेत्। उपोष्या सा महापुण्या सर्व्वपापहरा तिथिः ॥५५

किञ्च—

व्यतिपातो वैधृतिर्वा एकादश्यां यदा भवेत्। उपोष्या सा तु विज्ञेया पुत्रसम्पद्विवर्द्धिनी ॥५६

---

ननु 'एकादशीषु कृष्णासु रविसंक्रमणे तथा। चन्द्रसूर्य्योपरागे च न कुर्य्यात् पुत्रवान् गृही॥' इत्यादि-वचनैः पुत्रवतां गृहिणां कृष्णैकादश्युपवासो निषिध्यते; तत्र लिखति—य इच्छेदिति। अतस्तद्वचनानि धनपुत्रादिकामेन व्रतं किञ्चित् कुर्व्वतो गृहिणः प्रति तन्निमित्तोपवासनिषेधपराणि, न तु नित्यैकादश्युपवास-निषेधकानि; इत्येतदग्रे व्यक्तं भावि ॥५३॥

विशेषतो वैष्णवैस्तु कथञ्चिदपि भेदो नैव कार्य्य इति लिखति—यथेति। अतः 'शुक्लामेव सदा गृही' इति वचनं सकामवैष्णवगृहस्थविषयकमेवेति ज्ञेयम्; एतच्चाग्रे विस्तरेण व्यक्तं भावि ॥५४॥

संक्रान्त्यादौ च यद्येकादशी भवेत्, तदापि सा उपोष्यैव ॥५५॥

पुत्रसम्पद्विवर्द्धिनीति सर्व्वसम्पत्करीति पुत्रपौत्रादिवर्द्धिनीति चेत्यनेन 'कृष्णपक्षे तु संक्रान्त्यां ग्रहणे च

---

गरुड़पुराण में लिखित है—शुक्ला अथवा कृष्णा एकादशी के मध्य में कोई भेद नहीं है। भेद विचार करने पर पितृघाती कहा जाता है ॥५१॥

सनत्कुमार के वाक्य में प्रकाशित हैं—जो मनुष्य, एकादशीद्वय में भेद ज्ञान करते हैं, उनका आप्रलय पर्य्यन्त परित्राण का उपाय दृष्ट नहीं होता है ॥५२॥

विष्णुरहस्य में लिखित है—विष्णु सान्निध्य लाभेच्छु एवं पुत्र-सम्पदादि लाभेच्छु होने पर उभय पक्षीय एकादशी में उपवास करना चाहिये ॥५३॥

तत्त्वसागर में लिखित है—शुक्ला जिस प्रकार, कृष्णा एकादशी भी उस प्रकार है। उभय पक्षीय एकादशी को जो व्यक्ति समान जानते हैं, वे वैष्णव शब्द से कीर्त्तित होते हैं ॥५४॥

अथ संक्रान्त्यादावपि नित्यत्वम्

कात्यायन स्मृति में लिखित है—संक्रान्ति अथवा रविवार में एकादशी होने पर उस दिन ही उपवास करना चाहिये। वह तिथि पुण्यस्वरूपा एवं सर्वपातक हारिण है ॥५५॥

और भी लिखित है—एकादशी में व्यतीपात एवं वैधृति योग होने पर वह तिथि उपवास योग्या, एवं पुत्र सम्पद्विवर्धिनी होती है ॥५६॥

सनत्कुमारतन्त्रे—

भानुवारेण संयुक्ता तथा संक्रान्तिसंयुता । एकादशी सदोपोष्या सर्व्वसम्पत्करी तिथिः ॥५७॥

नारदश्च—

भानुवार-समोपेता तथा संक्रान्तिसंयुता । एकादशी सदोपोष्या पुत्रपौत्रविवर्द्धिनी ॥५८॥

अतएवोक्तं जैमिनिना—

आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्रसूर्य्ययोः । पारणञ्चोपवासञ्च न कुर्य्यात् पुत्रवान् गृही ॥५९॥

तन्निमित्तोपवासस्य निषेधोऽयमुदाहृतः । नानुषङ्गगतो ग्राह्यो यतो नित्यमुपोषणम् ॥६०॥

अतएव संवर्त्तेनाप्युक्तम्—

अमावस्या द्वादशी च संक्रान्तिश्च विशेषतः । एताः प्रशस्तास्तिथयो भानुवारस्तथैव च ॥६१

अत्र स्नानं जपो होमो देवतानाञ्च पूजनम् । उपवासस्तथा दानमेकैकं पावनं महत् ॥६२॥

अतएव देवलः—

शनेर्वारे रवेर्वारे संक्रान्त्यां ग्रहणेऽपि च । त्याज्या नैकादशी राजन् सर्व्वदैवेति निश्चयः ॥६३॥

---

उपोषणम् । न कुर्व्वीत गृही राजन् सुतबन्धुधनक्षयात् ॥' इत्यादिवचनतः प्राप्तः पुत्रादिमतां गृहिणां तत्र तत्रानुपवासः परिहृतः ॥५६-५८॥

तर्हि तन्निषेधः किंविषयकोऽस्तु ? तत्र लिखति—आदित्येऽहनीमि द्वाभ्याम् । अयमादित्याहादावुपवासादि-निषेधः, तन्निमित्तस्य आदित्यवारादिनिमित्तस्योपवासादेः प्रतिषेध उदाहृतः, न त्वेकादश्यामादित्यवारादि-सम्बन्धनिबन्धनोपवास प्रतिषेधः, यत एकादश्यामुपोषणं नित्यमेव, अतः काम्यस्य रविवाराद्युपवासस्य निषेधोऽयं, न चेकादश्युपवासनिषेधो भवतीत्यर्थः ॥५९-६०॥

विशेषतः सक्रान्त्यादावुपवासः परमप्रशस्त एवेति लिखति—अमेति द्वाभ्याम् ॥६१ ६२॥

---

सनत्कुमार तन्त्र में लिखित है – रविवार एवं संक्रान्ति संयुक्ता एकादशी सर्वदा उपवास योग्या है, यह तिथि सर्वसम्पद् दायिनी होती है ।।५७।।

नारदोक्ति यह है—रविवार एवं संक्रान्ति समन्विता एकादशी में सर्वदा उपवास करे। यह पुत्र पौत्र विवर्धिनी तिथि है ।।५८।।

अतएव जैमिनी का कथन है—रविवार, संक्रान्ति, एवं चन्द्र सुर्य्य ग्रहण में पारण एवं उपवास करना पुत्रवान् गृहस्थ का कर्त्तव्य नहीं है । यद्यपि यहाँ रविवारादि के कारण उपवास को निषिद्धता कही गई है। किन्तु एकादशी में रविवारादि सम्बन्धवशतः उपवास का निषेध नहीं हुआ है । कारण, काम्य उपवास के प्रति ही रविवारादि की निषिद्धता है । एकादशी में निषेध नहीं है । कारण, एकादशी में उपवास को नित्य जानना चाहिये ।।५९-६०।।

अतएव संवर्त्त ने भी कहा है—अमावस्या, द्वादशी, संक्रान्ति,– इन सब परम प्रशस्त तिथियों में, एवं रविवार में स्नान, होम, जप, देवपूजा, उपवास एवं दान करने से,– इन सब कार्य्यो में प्रत्येक ही पवित्रता जनक होती है ।।६१-६२।।

अतएव देवल ने कहा है—हे राजन् ! सर्वदा निश्चय जानना होगा कि,–शनिवार, रविवार, संक्रान्ति, ग्रहण, इन सब कालों में एकादशी का त्याग न करें ।।६३।।

अथ सूतकादावपि नित्यत्वम्

विष्णुरहस्ये—

परमापदमापन्नो हर्षे वा समुपस्थिते। सूतके मृतके चैव न त्याज्यं द्वादशीव्रतम् ॥६४॥

वाराहे—

सूतकेऽपि नरः स्नात्वा प्रणम्य मनसा हरिम्। एकादश्यां न भुञ्जीत व्रतमेतन्न लुप्यते ॥६५॥

अतएवोक्तम्—

मृतके तु न भुञ्जीत एकादश्यां सदा नरः। द्वादश्यान्तु समश्नीयात् स्नात्वा विष्णुं प्रणम्य च ॥६६

पाद्मे—

पूर्व्वसङ्कल्पितं यच्च व्रतं सुनियतव्रतैः। तत् कर्त्तव्यं नरैस्तद्वद्दानार्च्चनविवर्ज्जितम् ॥६७॥

यथा सङ्कल्पितं सम्यग्व्रतं विष्णुपरायणैः। कर्त्तव्यञ्च तथैवेह स्नात्वा संशयवर्ज्जितम् ॥६८॥

अथोपवासदिने श्राद्धनिषेधः

पाद्मे पुष्करखण्डे—

एकादश्यां यदा राम श्राद्धं नैमित्तिकं भवेत्। तद्दिने तु परित्यज्य द्वादश्यां श्राद्धमाचरेत् ॥६९

---

परमामापदमापन्नो यदि स्यात्, तथापि द्वादशीव्रतं त्याज्यं न भवति। आपन्नैरिति वा पाठः ॥६४॥

'प्रणम्य मनसा हरिम्' इति विष्णुं प्रणम्य चेत्यनेन सूतकादौ भगवत्पूजा न कार्य्येत्यायातं, किन्तु यस्य वैष्णवस्य नित्यपूजानियमस्तेन तत्रापि पूजा कर्त्तव्येत्याह– यथेति। व्रतं नियमः, विष्णुपरायणैरिति तद्दोषा निरस्ताः ॥६५-६८॥

'एकादश्यां यदा राम' इत्यादिना उपवासदिने श्राद्धं निषिद्धम्; यच्च स्कान्दादौ—'श्राद्धदिनं समासाद्य उपवासो यदा भवेत्। तदा कृत्वा तु वै श्राद्धं भुक्तशेषन्तु यद्भवेत् ॥ तत् सर्व्वं दक्षिणे पाणौ गृहीत्वान्नं

---

अथ सूतकादावपि नित्यत्वम्

विष्णुरहस्य में कथित है—परमापद के समय, अथवा आनन्द के समय, अथवा जननाशौच, मरणाशौच में भी कभी द्वादशी का व्रत त्याग न करे ॥६४॥

वराहपुराण में लिखित है—सूतकाशौच में भी स्नान के पश्चात् मन मन में श्रीहरि को प्रणाम करके एकादशी में भोजन परित्याग करे। इस प्रकार करने पर व्रत लोप होने की सम्भावना नहीं है ॥६५॥

अतएव कहा है– मृतकाशौच में एवं एकादशी में भोजन करना कभी मनुष्य का कर्त्तव्य नहीं है। द्वादशी में स्नान करके विष्णु को प्रणाम कर भोजन करना चाहिये ॥६६॥

पद्मपुराण में लिखित है—अशौच के पूर्व में जिस व्रत का संकल्प किया गया है, नित्यव्रती मानव के पक्ष में उसके करने में दोष नहीं है। किन्तु दान एवं पूजा को त्याग देना चाहिये। किन्तु जिन मनुष्यों का सङ्कल्प पूर्वक नित्यपूजा में नियम है, उनके अशौच काल में भी श्रीभगवत् पूजा कर्त्तव्य है, वही कहते हैं—हरिपरायण पुरुषों ने इस लोक में जिस कर्म का जैसा सङ्कल्प किया है, स्नान करके निःसन्देह उसी प्रकार करे ॥६७-६८॥

अथोपवासदिने श्राद्धनिषेधः

पद्मपुराण के पुष्कर खण्ड में लिखित है– हे राम! एकादशी में नैमित्तिक श्राद्ध उपस्थित होने से उस दिन को छोड़कर द्वादशी में श्राद्ध करना चाहिये ॥६९॥

तत्रैवोत्तरखण्डे—

एकादश्यान्तु प्राप्तायां मातापित्रोर्मृतेऽहनि । द्वादश्यां तत् प्रदातव्यं नोपवासदिने क्वचित् । गर्हितान्नं न चाश्नन्ति पितरश्च दिवौकसः ॥७०॥

स्कान्दे—

एकादशी यदा नित्या श्राद्धं नैमित्तिकं भवेत् । उपवासं तदा कुर्य्याद्द्वादश्यां श्राद्धमाचरेत् ॥७१

ब्रह्मवैवर्त्ते—

ये कुर्व्वन्ति महीपाल श्राद्धं त्वेकादशीदिने । त्रयस्ते नरकं यान्ति दाता भोक्ता परेतकः ॥७२

अथाधिकारिणः

आग्नेये—

गृहस्थो ब्रह्मचारी च आहिताग्निर्यतिस्तथा । एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥७३॥

पाद्मोत्तरखण्डे शिवपार्व्वतीसंवादे—

वर्णानामाश्रमाणाञ्च स्त्रीणाञ्च वरवर्णिनि । एकादश्युपवासस्तु कर्त्तव्यो नात्र संशयः ॥७४॥

---

शिखिध्वज । अवजिघ्रेदनेनाथ भवेत् श्राद्धं शिखिध्वज । पितॄणां तृप्तिदं तात व्रतभङ्गो न विद्यते ॥' इत्यादि; तच्च वैष्णवेतरविषयं मन्तव्यम् । वैष्णवपितॄणामपि श्रीविष्णुदिने श्राद्धग्रहणायोगादिति दिक् ॥६९-७२॥

एवं सर्व्वैरेव सदोपवासः कर्त्तव्य इत्यधिकारं निर्णयन् प्रथमं चतुर्णामप्याश्रमिणां तत्राधिकारं दर्शयति—गृहस्थ इति । पूर्व्वञ्च 'ब्राह्मणक्षत्रियविशां शूद्राणाञ्चैव योषिताम्' इत्यनेन; तथाग्रे च 'कुर्य्यान्नरो वा नारी वा' इत्यनेन चतुर्वर्णानामन्त्यजानां योषिताञ्चाधिकारो दर्शितः । तत्र च विशेषतः 'विधवा या भवेन्नारी' इत्यादिना विधवायाः, तथा 'सपुत्रश्च सभार्य्यश्च' इत्यादिना सधवाया अपि तत्राधिकारो लिखितः । यच्चोक्तं मनुना—'नास्ति स्त्रीणां पृथक् यज्ञो न व्रतं नाप्युपोषणम्' इति; विष्णुनापि 'पत्यौ जीवति या नारी उपवासव्रतञ्चरेत् । आयुः सा हरते भर्त्तुर्नरकञ्चैव गच्छति' ॥' इति, तच्च भर्त्राद्यननुमतोपवासकर्त्तृस्त्रीविषयं ज्ञेयम्, अतएवोक्तं शङ्खलिखिताभ्याम्—'कामं भर्त्तुरनुज्ञया व्रतोपवासादीनारभेत्' इति । अथवा वैष्णवेतर-स्त्रीविषयं तदिति मन्तव्यम्; 'सपुत्रश्च सभार्य्यश्च स्वजनैर्भक्तिसंयुतः । एकादश्यामुपवसेत्' इत्यादिवचनात् श्री-रुक्माङ्गदादि-व्यवहारश्रवणाच्चेति दिक् ॥७३-७४॥

---

उक्त पद्मपुराण के उत्तर खण्ड में लिखित है—माता-पिता के मृताह में ( मृत दिन में ) एकादशी की उपस्थिति में द्वादशी में श्राद्ध करना चाहिये । उपवास के दिन कदापि श्राद्ध न करे । कारण, देववृन्द, एवं पितृगण निन्दितान्न भोजन नहीं करते हैं ॥७०॥

स्कन्दपुराण में लिखित है—नित्य स्वरूपिणी एकादशी में नैमित्तिक श्राद्ध समागत होने पर एकादशी में उपवासी रहकर द्वादशी में श्राद्ध करे ॥७१॥

ब्रह्मवैवर्त्त पुराण में उक्त है—हे नृप ! एकादशी के दिन में श्राद्ध करने से दाता, भोक्ता एवं प्रेत,—तीनों की नरक में गति होती है ॥७२॥

अथाधिकारिणः

अग्निपुराण में लिखित है—गृहस्थ, ब्रह्मचारी, साग्निक, यति, चतुर्थाश्रमी का उभयपक्षीया एकादशी में उपवासी रहना कर्त्तव्य है ॥७३॥

पद्मपुराण के उत्तरखण्डस्थ शिव-पार्वती-संवाद में लिखित है—हे वरवर्णिनि ! सर्व वर्ण, सर्व आश्रम एवं स्त्री जाति के पक्ष में एकादशी में उपवास करना चाहिये । इसमें सन्देह नहीं है ॥७४॥

कात्यायनस्मृतौ—

अष्टवर्षाधिको मर्त्यो अपूर्णाशीतिवत्सरः । एकादश्यामुपवसेत् पक्षयोरुभयोरपि ।।७५।।

नारदीये—

अष्टवर्षाधिको मर्त्यो ह्यशीतिर्नैव पूर्य्यते । यो भुङ्क्ते मामके राष्ट्रे विष्णोरहनि पापकृत् ।।७६

स मे बध्यश्च निर्व्वास्यो देशतः कालतश्च मे । एतस्मात् कारणाद्विप्र एकादश्यामुपोषणम् ।

कुर्य्यान्नरो वा नारी वा पक्षयोरुभयोरपि ।।७७।।

विष्णुधर्म्मोत्तरे—

वैष्णवो वाथ शैवो वा कुर्य्यादेकादशीव्रतम् ।।७८।।

सौरपुराणे—

वैष्णवो वाथ शैवो वा सौरोऽप्येतत् समाचरेत् ।।७९।।

अतएवोक्तं स्कान्दे श्रीशिवेन—

न शैवो न च सौरो वा नाश्रमी तीर्थसेवकः । यो भुङ्क्ते वासरे विष्णोः श्वपचादधिको हि सः ।।८०

विप्रियं तेन मे गौरि कृतं दुष्टेन पापिना । मद्भक्तिबलमाश्रित्य यो वै भुङ्क्ते हरेर्दिने ।।८१।।

अथाशक्तौ प्रतिनिधिः

वायुपुराणे—

उपवासे त्वशक्तस्य आहिताग्नेरथापि वा ।

पुत्रान् वा कारयेदन्यान् ब्राह्मणान् वापि कारयेत् ।।८२।।

---

तत्र च वयोमर्य्यादां लिखति— अष्टेति त्रिभिः । अपूर्णेत्यत्राकारालोपोऽविवक्षितत्वात् । एवमग्रेऽपि ।।७५।।

अष्टेत्यादि-नारदीयसार्द्धपद्यं श्रीरुक्माङ्गदपटहोद्घोषणम् ।।७६-७७।।

अधुना शैवसौरादीनामप्यधिकारं लिखति— वैष्णवो वेति सार्द्धद्वयेन । वैष्णव इत्यस्य दृष्टान्तार्थ-मुपादानम् ।।७८-८१।।

आहित्याग्नेः—यज्ञादौ दीक्षितस्य ।।८२।।

---

कात्यायनस्मृति में लिखित है—अष्टवर्ष वयःक्रम के पश्चात् अपूर्ण अशीति वर्ष पर्य्यन्त शुक्ला एवं कृष्णा उभयपक्षीया एकादशी में ही मनुष्य को उपवास करना चाहिये ।।७५।।

नारदीयपुराण में लिखत है—मेरे अधिकार में जिस जिस की अवस्था आठ वर्ष से अधिक हो गई है, और अशीति अस्सी वर्ष पूर्ण नहीं हुए हैं, वे यदि हरिवासर में भोजन करेंगे, तो, मैं उन सब पातकियों को संहार करूँगा, अथवा कालान्तर में देश से विताड़ित करूँगा। रुक्माङ्गद नृपति ने इस प्रकार ढिंढोरा पिटवा दिया था । सुतरां हे विप्र ! उभयपक्षीया एकादशी में नरनारी को उपवासी रहना चाहिये ।।७६-७७

विष्णुधर्मोत्तर में लिखित है—वैष्णव अथवा शैव सबको ही एकादशी व्रत करना चाहिये ।।७८।।

सौरपुराण में लिखित है—वैष्णव, शैव, किंवा सौर,– सभी एकादशी व्रत का अनुष्ठान करें ।।७९।।

अतएव स्कन्दपुराण की श्रीशिवोक्ति में लिखित है– हरिवासर में भोजन करने पर उसको शैव, वैष्णव सौर अथवा आश्रमी, तीर्थसेवियों में गिना नहीं जाता है । वह श्वपच, चाण्डाल से भी अधिक पापी है । हे गौरि ! मद्भक्तिबल का आश्रयकर हरिवासर में भोजन करने से उस दुष्ट पातकी को मेरा अप्रियकारी जानना होगा ।।८०-८१।।

अथाशक्तौ प्रतिनिधिः

वायुपुराण में लिखित है—साग्निक ब्राह्मण यज्ञ प्रभृति में दीक्षित होकर यदि उपवास में अक्षम हो तो

अथवा विप्रमुख्येभ्यो दानं दद्यात् स्वशक्तितः। उपवासन्तु कुर्व्वाणः पुण्यं शतगुणं लभेत् ॥८३

यमुद्दिश्य कृतं सोऽपि सम्पूर्णं फलमश्नुते। नारी स्वपतिमुद्दिश्य एकादश्यामुपोषिता ॥८४॥

पुण्यं शतगुणं प्राहुर्मुनयः पारदर्शिनः। उपवासफलं तस्याः पतिः प्राप्नोत्यसंशयम् ॥८५॥

वाराहे—

असामर्थ्ये शरीरस्य व्रते वा समुपस्थिते। कारयेद्धर्म्मपत्नीञ्च पुत्रं वा विनयान्वितम्।
भगिनीं भ्रातरं वापि व्रतमस्य न लुप्यते ॥८६॥

कात्यायनस्मृतौ—

पितृमातृ-पतिभ्रातृगुर्व्वर्थे तु विशेषतः। उपवासं प्रकुर्व्वाणः पुण्यं शतगुणं लभेत्।
दक्षिणात्र न दातव्या शुश्रूषा विहिता च या ॥८७॥

गृहस्थः क्षत्रियार्थे य एकादश्यामुपोषितः। पुरोधाः सप्रियैः सार्द्धं फलं प्राप्नोति निश्चितम् ॥८८

पितामहादीनुद्दिश्य एकादश्यामुपोषणम्। कृतं यैस्तु फलं विप्राः समग्रं ते समाययुः ॥८९॥

कर्त्ता दशगुणं पुण्यं प्राप्नोत्यत्र न संशयः। यमुद्दिश्य कृतं सोऽपि सम्पूर्णं फलमाप्नुयात् ॥९०

मार्कण्डेयपुराणे—

एकभक्तेन नक्तेन बालवृद्धातुरः क्षिपेत्। पयोमूलफलैर्व्वापि न निर्द्वादशिको भवेत् ॥९१॥

---

उपवासं पित्राद्यर्थं कुर्व्वन्नपि स्वार्थोपवासात् शतगुणं पुण्यं प्राप्नोति ॥८३॥

पत्न्याद्यभावे चोपवासाशक्तौ किं कार्य्यम्? तल्लिखति—एकभक्तेनेत्यादिना कदाचनेत्यन्तेन। बालो वृद्धश्चातुरश्च क्षिपेत् दिनं नयेत् न निर्द्वादशिकः एकादशी व्रतरहितो न भवेत्। द्वादशीति एकादश्यां द्वादश्यामप्युपवास-साम्यात् द्वादशी-शब्देनैकादशी लक्ष्यते। अतएव द्वादशी दशमीविद्धेत्यादि-वाचो युक्ताः, एवमेकादशी-शब्देनापि कुत्रापि द्वादशी ज्ञेया ॥९१॥

---

पुत्र अथवा अन्य ब्राह्मण को प्रतिनिधि स्वरूप में उपवास करावें। अथवा वेदविद् विप्र को यथाशक्ति दान करें। पितृ, मातृ, पति, भातृ एवं गुरु के निमित्त उपवास करने से शतगुण फल लाभ होता है। एवं जिसके निमित्त व्रत का अनुष्ठान किया जाता है, वह भी व्रत का सम्पूर्ण फल पाता है। पति के उद्देश्य में एकादशी व्रत करने पर नारी शतगुण शुभफल भागिनी होती है। यह कथन पारदर्शी ऋषिवृन्द का है। उसका पति भी उपवास का फल पाता है। इसमें सन्देह नहीं है ॥८२-८५॥

वराहपुराण में कथित है—व्रत समुपस्थित होने से यदि शरीर असमर्थ हो, तो, सहधर्मिणी, विनयीपुत्र, भग्नी अथवा भ्राता के द्वारा व्रत सम्पादन करावे। ऐसा करने पर व्रत लोप नहीं होगा ॥८६॥

कात्यायनस्मृति में लिखित है—विशेषतः पिता, माता, पति, भ्राता एवं गुरु के निमित्त उपवास करने पर शतगुण फल लाभ होता है। पुत्रादि, पिता-माता प्रभृति की शुश्रूषा करें। सुतरां उपवासार्थ पुत्रवर्ग को दक्षिणा प्रदान न करे। कोई गृहस्थ पुरोहित, क्षत्रिय के निमित्त एकादशी में उपवासी रहने पर प्रियजनों के सहित आधे फल का भागी होता है, इसमें सन्देह नहीं है। हे विप्रवृन्द! पितामहादि के उद्देश्य में एकादशी में उपवास करने पर समग्र फलभागी हो सकता है। जिसके निमित्त व्रत का अनुष्ठान किया जाता है, वह सम्पूर्ण फल का भागी होता है। एवं उपवासी भी निःसन्देह उसकी अपेक्षा दशगुण फल प्राप्त करता है ॥८७-९०॥

मार्कण्डेय पुराण में लिखित है—प्रतिनिधि के अभाव में बालक, वृद्ध, आतुर व्यक्ति निशाकाल में एक

बौधायनस्मृतौ—

उपवासे त्वशक्तानामशीतेरूर्द्ध्वजीविनाम् । एकभक्तादिकं कार्य्यमाह वौधायनो मुनिः ।।९२

किञ्च—

व्याधिभिः परिभूतानां पित्ताधिकशरीरिणाम् । त्रिंशद्वर्षाधिकानाञ्च नक्तादि-परिकल्पनम् ।।९३

कूर्म्मपुराणे—

एकभक्तेन नक्तेन बालवृद्धातुरः क्षिपेत् । नातिक्रमेद्द्वादशीञ्च उपवासव्रतेन च ।।९४।।

भविष्यपुराणे द्वादशीकल्पे—

एकादश्यां प्रभुं विष्णुं समभ्यर्च्च्य कदाचन । उपोषितेन नक्तेन तथैवायाचितेन च ।।९५।।
एकभक्तेन वा तात न निर्द्वादशिको भवेत् । तदेकनियमी नित्यं न सीदति कदाचन ।।९६।।

---

त्रिंशद्वर्षाधिकानामिति— 'षष्टिरेवोत्तमं वयः' इत्युक्त्या तावदुत्तमवयसस्त्रिंशद्वर्षैरधिकानां नवतिवर्ष-वयसामित्यर्थः । यद्वा, 'वनं पञ्चाशतो व्रजेत्' इति-वचनतो गृहस्थस्य गृहे पञ्चाशद्वर्षाणि स्थितिर्विहिता । ततोऽपि तत्र त्रिंशद्वर्षाण्यधिकानि येषामिति अशीतिवर्षवयसामित्यर्थः । तच्च 'अशीतिर्न हि पूर्य्यते' इत्यादिना उक्तमेव । पाठान्तरेऽपि पूर्व्ववदेवार्थः ।।९३।।

उपवासेन व्रतेन; यद्वा, उपवासे यद्व्रतं कथञ्चिन्नियमस्तेन; कदाचन असामर्थ्याद्यवस्थायाम् ।।९४-९५।।

तस्यां द्वादश्यामेवैकस्याः नियमवान् ।।९६।।

---

बार मात्र भोजन अथवा दुग्ध एवं फलमूल सेवन पूर्बक तिथि पालन करे । व्रत के बिना द्वादशी अतिवाहित करना उचित नहीं है । अर्थात् एकादशी व्रत रहित न हो ।।९१।।

बौधायनस्मृति में लिखित है—जिसका वयःक्रम अशीति वर्ष से अधिक हुआ है । एक बार मात्र भोजनानुरूप व्रतानुष्ठान करना ही उसके पक्ष में उचित है । बौधायन ऋषि ने इस प्रकार निर्देश किया है ।।९२।।

और भी कथित है—जो व्याधिग्रस्त, जिसका शरीर पित्त प्रधान, एवं जिसका वयःक्रम त्रिंशद्वर्ष अतीत हुआ है, अर्थात् जिसकी अवस्था तीस वर्ष से अधिक हो गई है । इन सबके पक्ष में रात्र्यादि भोजन की कल्पना करते हैं । 'यहाँ तीस वर्ष से अधिक' शब्द से अस्सी वर्ष अथवा नवासि नब्वे वर्ष की अवस्था को जानना होगा, अर्थात् साठ वर्ष तक मनुष्य की उत्तम अवस्था कही गई है । और गृहाश्रम में निवास करने की उत्तम अवस्था भी पचास वर्ष निर्दिष्ट है । अतएव उससे अधिक तीस वर्ष समझने चाहिये। ६०+३०= ९० वर्ष अवस्था, अथवा ५०+३०=८० वर्ष समझाये गये हैं ।।९३।।

कूर्मपुराण में कथित है—बालक, वृद्ध एवं आतुर व्यक्ति के पक्ष में वारेक मात्र नक्त भोजन निरूपित है; उपवास रूपी व्रत में द्वादशी लङ्घन न करे ।।९४।।

भविष्य पुराण में द्वादशी कल्प में लिखा है—व्याधिवशतः अक्षमतादि अवस्था उपस्थित होने पर एकादशी में प्रभु श्रीविष्णु का पूजन करके उपवास, अथवा नक्त व्रत, किंवा अयाचित व्रत द्वारा, अथवा एक वार मात्र भोजन द्वारा अवस्थिति करे । द्वादशी (एकादशी) लङ्घन नहीं करना चाहिये । सुतरां, हे तात ! उपवास के दिन, इन नियमों में एक का आश्रय ग्रहण करने पर कभी क्लेश का भागी नहीं होना पड़ता है ।।९५-९६।।

अथ विशेषतो नक्तादिकम्

वायव्ये—

नक्तं हविष्यान्नमनोदनं वा, फलन्तिलाः क्षीरमथाम्बु चाज्यम् ।
यत् पञ्चगव्यं यदि वापि वायुः, प्रशस्तमत्रोत्तरमुत्तरञ्च ॥९७॥

भविष्ये —

उपवासात् परं भैक्ष्यं भैक्ष्यात् परमयाचितम् । अयाचितात् परं नक्तं तस्मान्नक्तेन वर्त्तयेत् ॥९८

किञ्च—

सर्व्वभूतभयं व्याधिः प्रमादो गुरु-शासनम् । अव्रतघ्नानि पठ्यन्ते सकृदेतानि शास्त्रतः ॥९९॥

महाभारते उद्यमपर्व्वणि—

अष्टैतान्यव्रतघ्नानि आपो मूलं फलं पयः । हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ॥१००॥

तत्रापवादः

काश्यप-पञ्चरात्रे—

मदुत्थाने मच्छयने मत्पार्श्वपरिवर्त्तने । अत्र यो दीक्षितः कश्चिद्वैष्णवो भक्तितत्परः ॥१०१॥
अन्नं वा यदि भुञ्जीत फलमूलमथापि वा । अपराधमहं तस्य न क्षमामि कदाचन ।
क्षिपामि तरके घोरे यावदाहूतसंप्लवम् ॥१०२॥

अन्यत्र च—

मच्छयने मदुत्थाने मत्पार्श्व-परिवर्त्तने । फल-मूल-जलाहारी हृदि शल्यं समार्पयेत् ॥१०३॥

---

सर्व्वभूतेभ्यो व्याघ्रादिदुष्टजन्तुभ्यो भयम् ॥९९॥

नक्तादिकेष्वपवादं लिखति—मदुत्थाने इत्यादिना । अन्नादिभोजनरूपमपराधम्; यद्वा, पूर्व्वकृतमाधुनिकमेतच्च सर्व्वमिति ॥१०१-१०२॥

एवं वैष्णवैर्वर्ज्जनीयमिति लिखितम्, अधुना च सामान्यतः सर्व्वैरेव प्रयत्नोऽवश्यं वर्ज्ज्यमिति लिखति

---

अथ विशेषतो नक्तादिकम्

वायुपुराण में कथित है—रात्रि में हविष्यान्न, अन्नव्यतीत अन्य द्रव्य, फल तिल, दुग्ध, जल, घृत, पञ्चगव्य, अथवा वायु,– यह सब वस्तु परस्पर उत्तरोत्तर प्रशस्त निरूपित हुई हैं ॥९७॥

भविष्य पुराण में लिखित है—उपवास से भिक्षा लब्ध अन्न, भिक्षान्न से अयाचित द्रव्य एवं अयाचित की अपेक्षा नक्त व्रत श्रेष्ठ है । सुतरा असमर्थ पक्ष में नक्त व्रत के द्वारा जीवन यापन करे ॥९८॥

और भी कथित है—सर्व भूत भय, अर्थात् व्याघ्रादि जन्तु समूह से भय, व्याधि, प्रमाद एवं गुरुशासन, यह सब एक वार मात्र होने से शास्त्रानुसार व्रत लोप नहीं होता है ॥९९॥

महाभारत के उद्योग पर्व में लिखित है—जल, फल, मूल, पयः, घृत, ब्राह्मण काम्य, गुरु-वाक्य एवं औषध,–यह आठ वस्तु व्रतनाशक नहीं हैं ॥१००॥

तत्रापवादः

काश्यप पञ्चरात्र में वर्णित है—जो दीक्षित एवं भक्तिपरायण वैष्णव,– मेरे उत्थान दिन में, शयन दिन में, एवं पार्श्व परिवर्त्तन में अन्न अथवा फल मूल सेवन करता है, मैं कभी उसका अपराध क्षमा नहीं करता हूँ । प्रलयकाल पर्य्यन्त उसको घोर नरक में क्षेपण कर रखता हूँ ॥१०१-१०२॥

अन्यत्र भी वर्णित है—मदीय शयन में, उत्थान में एवं पार्श्व परिवर्त्तन में फल, मूल अथवा जल सेवन-कारी व्यक्ति मेरे हृदय में शल्य अर्पण करता है ॥१०३॥

इत्थं सुसिद्धे नित्यत्वेऽप्यग्निहोत्रादिवत् फलम् ।
चित्रं स्यादिति माहात्म्यमेकादश्या विलिख्यते ॥१०४॥

अथैकादशी-माहात्म्यम्

तत्त्वसागरे—

मातेव सर्व्वबालानामौषधं रोगिनामिव । रक्षार्थं सर्व्वलोकानां निर्म्मितैकादशी तिथिः ॥१०५
नानादुःखसमाकीर्णे संसारे नरजन्मनि । एकादश्युपवासी यः स धन्यः स च बुद्धिमान् ॥१०६
एकादशीं परित्यज्य योऽन्यव्रतमुपासते । स करस्थं महारत्नं त्यक्ता लोष्ट्रं हि याचते ॥१०७॥
एकामेकादशीञ्चापि समुपोष्य जनार्द्दनम् । तोयेनापि समभ्यर्च्च्य संसारान्मुक्तिमाप्नुयात् ॥१०८
प्रसङ्गादथवा दम्भाल्लोभाद्वा त्रिदशाधिप । एकादश्यां मनः कृत्वा सर्व्वदुःखाद्विमुच्यते ॥१०९
समायास्य महारोगाद्दुःखिनां सर्व्वदेहिनाम् । एकादश्युपवासोऽयं निर्म्मितं परमौषधम् ॥११०

---

—मच्छ्यन इति । फलं मूलं जलं वापि आहारं यः करोतीत्यर्थः । मम हृदि शल्यमर्पयेदिति महापराधी स्यादित्यर्थः ॥१०३॥

एवं पक्षद्वयादावुपवासस्य नित्यत्वं साधयित्वा, तथाधिकारनिर्णयेनापि सर्व्वेषामेव कार्य्यत्वेन तदेव द्रढ़यित्वा, तथा अशक्तादीनामप्येकभक्तादिना व्रतपालनतश्च तदेव नितरां दृढ़ीकृतम् । एवं फलानपेक्षकरूपं नित्यत्वं दर्शयित्वाऽधुना महाफलान्यपि दर्शयन् लिखति—इत्थमिति । ननु फलेन नित्यत्वं विरुध्यते, तत्राह—अग्निहोत्रादिवदिति । आदि-शब्देन दर्शपौर्णमासादि, तत्र यथा नित्यत्वं फलञ्च सयोग-पृथक्त्वेन श्रूयते, तद्वदत्रापीत्यर्थः । तत्र च युक्तिर्मीमांसादि-प्रसिद्धा श्रीकृष्णदेवाचार्य्य-वोपदेवाचार्य्यादिभिः स्पष्टं दर्शितास्तीति । किमत्र तद्विस्तारेणेति । चित्रम्—ऐहिका-मुष्मिकाभेदेन बहुविधमद्भुतमिति वा ॥१०४॥

अस्य महारोगस्य शमाय उपशान्तये परमौषधम् ॥११०॥

---

इस प्रकार हरिवासर व्रत का नित्यत्व साधित होने पर भी अग्निहोत्रादि न्याय से इसका अद्भुत फल होता है । अतएव एकादशी का माहात्म्य लिपिबद्ध करते हैं । अर्थात् विहित नित्य कर्माकरण में प्रत्यवाय होता है, करने में शुभ फल लाभ होता है । इस प्रकार नित्य कर्म में नित्यत्व एवं काम्यत्व सिद्ध होता है ॥ ॥१०४॥

अथैकादशी-माहात्म्यम्

तत्त्वसागर में वर्णित है—शिशुवृन्द की रक्षार्थ जननी के समान एवं रोगिवृन्द के परित्राणार्थ औषध के समान सर्वजन रक्षार्थ एकादशी तिथि निर्मिता हुई है ॥१०५॥

विविध दुःख समाकीर्ण संसार में मनुष्य जन्मधारण पूर्वक जो व्यक्ति एकादशी उपवास में रत होते हैं, उनको धन्य एवं बुद्धिमान् कहा जाता है ॥१०६॥

एकादशी को परित्याग कर व्रतान्तर की उपासना करने पर, करस्थ मणि को वर्जन कर लोष्ट्र की प्रार्थना की जाती है । केवलमात्र एकादशी में उपवास करके जनार्दन की पूजा, जल द्वारा करने पर संसार से रक्षा मिल जाती है । हे सुरेन्द्र ! प्रसङ्गतः दम्भवशतः किंवा लोभ निबन्धन एकादशी में मनोनिवेश करने पर सम्पूर्ण दुःखों से रक्षा मिलती है । महारोगवशतः दुःखग्रस्त शरीर एवं मन के दुःख नाशार्थ परम औषध स्वरूप एकादशी उपवास की सृष्टि हुई है ॥१०७-११०॥

संसारसर्पदष्टानां नराणां पापकर्म्मणाम् । एकादश्युपवासेन सद्य एव सुखं भवेत् ।।१११।।

नारदीये वशिष्ठोक्तौ—

एकादशीसमुत्थेन वह्निना पातकेन्धनम् । भस्मतां याति राजेन्द्र अपि जन्मशतोद्भवम् ।।११२
नेदृशं पावनं किञ्चिन्नराणां भूप विद्यते । यादृशं पद्मनाभस्य दिनं पातकहानिदम् ।।११३।।
तावत् पापानि देहेऽस्मिन् तिष्ठन्ति मनुजाधिप । यावन्नोपवसेज्जन्तुः पद्मनाभदिनं शुभम् ।।११४
अश्वमेधसहस्राणि वाजपेयशतानि च । एकादश्युपवासस्य कलां नार्हन्ति षोड़शीम् ।।११५।।
एकादशेन्द्रियैः पापं यत् कृतं भवति प्रभो । एकादश्युपवासेन तत् सर्व्वं विलयं व्रजेत् ।।११६।।
एकादशीसमं किञ्चित् पापत्राणं न विद्यते । स्वर्गमोक्षप्रदा ह्येषा राज्यपुत्रप्रदायिनी ।।११७।।
सुकलत्रप्रदा ह्येषा शरीरारोग्यदायिनी ।।११८।।
न गङ्गा न गया भूप न काशी न च पुष्करम् । न चापि कौरवं क्षेत्रं न रेवा न च वेदिका ।
यमुना चन्द्रभागा च तुल्या भूप हरेर्दिनात् ।।११९।।
व्याजेनापि कृता राजन् न दर्शयति पातकम् । अनायासेन राजेन्द्र प्राप्यते वैष्णवं पदम् ।।१२०
चिन्तामणिसमा ह्येषा अथवापि निधिः स्मृता । कल्पपादपप्रेक्षा वा सर्व्ववेदोपमाथवा ।।१२१

---

जन्तुरिति सर्व्वेषामप्यधिकारः सूचितः ।।११४।।
हरेर्दिनात् दिनेन तुल्या न भवति ।।११९।।
न दर्शयति, नाशयतीत्यर्थः ।।१२०।।
वेदेष्वपि ये ये वेदा उपनिषदादयस्तत्समेत्यर्थः । क्वचित् सर्व्ववेदेति पाठः ।।१२१।।

---

संसाररूप सर्पदष्ट पापी मनुष्यसमूह, एकादश्युपवास द्वारा सद्यः सुखी होते रहते हैं ।।१११।।

नारदपुराण की वशिष्ठोक्ति में प्रकाशित है—हे राजेन्द्र ! एकादशी समुद्भव वह्नि द्वारा शतजन्मोत्थ पातकरूप काष्ठ भस्मीभूत होते हैं । हे भूमिप ! मनुष्य पक्ष में पातक नाशन हरिवासर के तुल्य पवित्र अपर कुछ दिखाई नहीं देता है ।।११२-११३।।

हे राजन् ! जब तक कमलनाभ श्रीहरि के पवित्र वासर एकादशी में उपवासी न रहा जाय, तब तक ही शरीर में पापसमूह का अधिष्ठान रहता है । बहु सहस्र अश्वमेध यज्ञ एवं बहु शत वाजपेय यज्ञ भी एकादशी उपवास के षोड़शांश के एकांश के समान नहीं है ।।११४-११५।।

हे प्रभो ! एकादशेन्द्रियकृत पातकपुञ्ज एकादश्युपवास के द्वारा विनष्ट होते हैं। एकादशी के समान पापोद्धारक अपर कुछ लक्षित नहीं होता । एकादशी, स्वर्ग एवं मोक्षप्रदा, राज्य एवं पुत्र प्रदायिनी है । हे भूप ! एकादशी सुभार्य्याप्रदा एवं शरीरारोग्यदायिनी है । गङ्गा, गया, काशी, पुष्कर, कुरुक्षेत्र, रेवा, वेदिका, यमुना एवं चन्द्रभागा प्रभृति कोई भी एकादशी के समान नहीं हैं ।।११६-११९।।

हे राजन् ! छलपूर्वक भी हरिवासर तिथि पालन करने पर पातक ध्वंस होता है, एवं हे राजश्रेष्ठ ! अनायास वैकुण्ठधाम लाभ होता है ।।१२०।।

यह एकादशी तिथि—चिन्तामणि तुल्या, अथवा निधि के समान, किंवा कल्पतरु स्वरूप, अथवा समस्त वेदों के समान कही गई है ।।१२१।।

तत्रैवान्यत्र—

सम्प्राप्य वासरं विष्णोर्यो नरः संयतेन्द्रियः। उपवासपरो भूत्वा पूजयेन्मधुसूदनम्।
दहन्ति पूर्व्वपापानि किन्तपोभिः किमध्वरैः? ॥१२२॥

एकादशीं प्रपन्ना ये नरा नरवरोत्तम। तेऽद्वन्द्वबाहवो भूत्वा नागारिकृतकेतनाः ॥१२३॥

स्रग्विणः पीतवस्त्रा हि प्रयान्ति हरिमन्दिरम्। एष प्रभावो हि मया द्वादश्याः परिकीर्त्तितः।
पापेन्धनस्य घोरस्य पावकाख्यो महीपते ॥१२४॥

किञ्च—

यद्योगैर्मत्पदं साङ्ख्यैः प्राप्यते वा न वा द्विज।
अनायासेन तत् प्राप्यं पदं हरिदिनानुगैः ॥१२५॥

अन्नाभावे यदा विप्र एकादश्यामुपोषितः। उपवासफलं तेन समग्रं समवाप्यते ॥१२६॥

राजबन्धाद्यदा विप्र एकादश्यामुपोषितः। उपवासफलं तस्य सम्यग्भवति निश्चितम् ॥१२७॥

ब्रह्मवैवर्त्ते—

यथा दावाग्निरुदितः शुष्कमार्द्रञ्च गह्वरे। दहत्येव समस्तानि कलुषाणि हरेर्दिनम् ॥१२८॥

पापेन्धनस्य घोरस्य शुष्कस्यार्द्रस्य भार्गव। नान्यद्विनाशाय मतं विनैकादश्युपोषणम् ॥१२९॥

---

अद्वन्द्वबाहवः चतुर्भुजाः ।१२३॥

विप्र हे ब्राह्मण अविवक्षितत्वादसन्धिः ॥१२६॥

तस्यापि भवति, सम्यक् सम्पूर्णम् ॥१२७॥

शुष्कं पापं चिरकालकृतम्; आर्द्रञ्च सम्प्रतिकृतम्; महाल्पप्रायश्चित्ततया तयोर्भेदः ॥१२८॥

---

उक्त पुराण के अन्यत्र वर्णित है—जो जितेन्द्रिय व्यक्ति, हरिवासर में उपवासी रहकर मधुसूदन की पूजा करते हैं, उनके पूर्वाजन्मार्जित पापसमूह विनष्ट हो जाते हैं, सुतरां तपस्या अथवा यज्ञसाधन से उनको क्या प्रयोजन है? ॥१२२॥

हे नरवरोत्तम! जो मानव, एकादशी को शरणापन्न होते हैं, वे सब चतुर्भुजरूप प्राप्त कर गरुड़ध्वज के वाहन में आरूढ़ होकर माल्य एवं पीतवास से सुशोभित होकर श्रीहरिभवन में प्रस्थान करते हैं। हे भूप! दारुण पापरूप काष्ठ के अग्निस्वरूप द्वादशी का प्रभाव मैंने इस प्रकार वर्णन किया ॥१२३-१२४॥

और भी लिखित है—हे द्विज! हरिदिनानुग व्यक्तिगण, अवलेशे से जिस पद को प्राप्त करते हैं, योग, अथवा सांख्य के द्वारा भी वह पद प्राप्त होता है वा नहीं, इसमें सन्देह है। हे विप्र! एकादशी में अन्नाभाव से भी उपवास रहने पर समग्र उपवास का फल लभ होता है। हे विप्र! राजगृह में वन्दी अवस्था में एकादश्युपवास करने पर भी सम्यक् उपवास फल लाभ होता है, इसमें सन्देह नहीं है ॥१२५-१२७॥

ब्रह्मवैवर्त्तपुराण में लिखित है—जिस प्रकार दावानल उत्थित होकर गह्वरस्थ शुष्क काष्ठसमूह को भस्मीभूत करता है, उस प्रकार श्रीहरिवासर अखिल पातक विनष्ट करता है। हे भार्गव! केवलमात्र, एकादश्युपवास व्यतीत घोर, शुष्क, चिरकालानुष्ठित एवं आर्द्र,-सम्प्रति अनुष्ठित पातकरूप काष्ठ को विनष्ट करने के निमित्त अपर कोई वस्तु प्रशस्त नहीं है ॥१२८-१२९॥

किञ्च—

सर्व्वप्रायश्चित्तमिदं संसारोत्तारकारकम् । एकादशीव्रतं विप्र कुर्व्वन् मुक्तिमवाप्नुयात् ॥१३०

नरो दिनैर्यद्दशभिश्चतुर्भिश्च करोत्यघम् । उपोष्य पञ्चदशमं दिनं विष्णोर्हि मुच्यते ॥१३१॥

इति सर्व्वपुराणेषु मुनीनां निश्चितं मतम् । उपोष्यैकादशीं पापान्मुच्यते नात्र संशयः ॥१३२॥

कलावुच्छिन्नमार्गाणां नृशंसपातितात्मनाम् । एकादशीं विना विप्र न संसाराद्विमोक्षणम् ॥१३३

किञ्च—

एतत् सारमिदं तत्त्वमिदं सत्यमिदं व्रतम् । प्रायश्चित्तमिदं सम्यगेकादश्यामुपोषणम् ॥१३४॥

किञ्च—

गोविन्दस्मरणं नृणामेकादश्यामुपोषणम् । प्रायश्चित्तमिदं नूनं संसारोत्तारकारकम् ॥१३५॥

तत्रैवान्ते—

स्नेहेन भक्त्या वैरेण प्रसङ्गेन यथा तथा । निहन्ति सर्व्वं कलुषमेकादश्यां स्तुतो हरिः ॥१३६

किञ्च—

एवं समस्तसुखधर्म्मगुणाश्रयश्च, एकादशीव्रतमिदं कलिकेतुरुक्तः ।
शास्त्रेषु शौनक जगत्पतिषु प्रियश्च, श्रद्धापरः प्रकुरुते लभते न मुक्तिम् ॥१३७॥

---

पञ्चदशमम्—एकादशीलक्षणम् ॥१३१॥

कलिकेतुः कलिकाले सर्व्वधर्म्मादिश्रेष्ठमित्यर्थः ; हेतुरिति पाठे समस्तसुखादिकारणं, शास्त्रेषूक्तः, शास्त्रान्वित इति पाठे शास्त्रवेत्तेत्यर्थः, 'शास्त्रवित् फलमश्नुते' इत्युक्तेः ॥१३७॥

---

और भी लिखित है—हे विप्र ! यह एकादशी व्रत समूह पापों के प्रायश्चित्त स्वरूप, संसार त्राणकारी हैं, इसके अनुष्ठान से मोक्ष लाभ होता है । चतुर्दश तिथि में अर्थात् द्वादशी से प्रारम्भ कर दशमी पर्य्यन्त जो सब पातक सञ्चित होते हैं, श्रीहरि के पञ्चदश दिन, एकादशी में उपवासी होने पर, इन सब पापों से मनुष्य उद्धार हो सकता है । एकादशी में उपवासी होने से समस्त पातकों से उद्धार होता है, इसमें सन्देह नहीं है । यह सब पुराणों में समस्त मुनिवृन्द का सुनिश्चित मत है । हे विप्र ! कलियुग में जो लोक, उच्छिन्नमार्गावलम्बी हैं, एवं निष्ठुरता निबन्धन कलुषात्मा हैं, एकादशी व्यतीत उनके उद्धार का अपर उपाय नहीं है ॥१३०-१३३॥

और भी लिखित है—केवलमात्र एकादशी का उपवास ही सार तत्त्व, सत्य, व्रत एवं सम्यक् प्रायश्चित्त स्वरूप है ॥१३४॥

और भी उक्त है—गोविन्द स्मरण, एकादशी में उपवास, यह दो निःसन्देह मनुष्यवृन्द के पक्ष में प्रायश्चित्त स्वरूप एवं संसार निस्तारक हैं ॥१३५॥

उक्त पुराण के उक्त प्रसङ्ग में लिखित है—स्नेह वशतः, भक्ति वशतः, शत्रुता वशतः किंवा प्रसङ्गतः जिस किसी प्रकार से एकादशी तिथि में हरि की स्तुति करने पर समस्त पाप विनष्ट होते हैं ॥१३६॥

और भी कथित है—हे शौनक ! जो समस्त सुख, धर्म एवं गुणों का आश्रय है, जो कलिकेतु है, अर्थात् कलि में सर्वधर्मादि से श्रेष्ठ रूप में कीर्त्तित है, एवं जो जगत्पति का अतिशय प्रिय है, श्रद्धालु होकर उस एकादशी के व्रत का अनुष्ठान करने पर, मानव मुक्ति भागी होता है ॥१३७॥

तत्रैव सर्व्वान्ते—

एतच्छृणोति कुरुतेऽनुमतिं ददाति, श्रद्धाञ्च कारयति यश्च तथा नराणाम्।
एकादशीव्रतकृते कलुषैर्विमुक्त, प्राप्नोति दिव्यभुवनं गरुड़ध्वजस्य ॥१३८॥

पाद्मे वैशाखमाहात्म्ये देवदूतविकुण्डल-संवादे—

उपोष्यैकादशीमेकां प्रसङ्गेनापि मानवः। न याति यातनां यामीमिति नो यमतः श्रुतम् ॥१३९
एकादशेन्द्रियैः पापं यत् कृतं वैश्य मानवैः। एकादश्युपवासेन तत् सर्व्वं विलयं व्रजेत् ॥१४०॥

एकादशीसमं किञ्चित् पुण्यं लोके न विद्यते।
व्याजेनापि कृता यैस्ते वशं यान्ति न भास्करेः ॥१४१॥

एवमन्यत्रापि नेदृशमित्यादीनि सप्तपद्यानि पूर्व्ववदत्र प्रवर्त्तन्ते।

किञ्च—

बालत्वे यौवने वापि वृद्धत्वे वा विशांवर। उपोष्यैकादशीं नूनं नैव प्राप्नोति दुर्गतिम् ॥१४२॥

तत्रैव वैशाखमाहात्म्ये श्रीयमब्राह्मण-संवादे—

एकादश्याञ्च विधिवदुपवासपरायणाः। शुक्ले सितेतरे पक्षे ते नराः स्वर्गभागिनः ॥१४३॥

मातृवत् सर्व्वबालानामिति पूर्व्ववत्।

किञ्च—

एकादशीसमं किञ्चित् पापत्राणं न विद्यते। तामुपोष्य विधानेन पुरुषाः स्वर्गगामिनः ॥१४४॥

---

प्रसङ्गेन केषामपि सङ्गत्या; यद्वा, राजबाधाद्यनुषङ्गेणापि, व्याजेन शाठ्येनापि; भास्करेर्यमस्य ॥१३९-१४०

पूर्व्ववदिति यथा नारदीये, तथात्र माघमाहात्म्येऽपि सन्ति ॥१४२॥

विधिवदिति अग्रे लेख्येन पापवर्ज्जनादिविधिनेत्यर्थः। स्वर्ग-शब्देनात्रोद्ध्र्वलोको लक्ष्यते, तेन च श्रीवैकुण्ठपदम्; यद्वा, वैकुण्ठलोकगमनेऽपि क्रमगत्या स्वर्गसुखभोगात् स्वर्गेत्युक्तमिति दिक् ॥१४३॥

पूर्व्ववदिति यथा तत्त्वसागरे तथा वैशाखमाहात्म्येऽपि इत्यर्थः। तत्र च मातेवेति, अत्र तु मातृवदिति पदमेकमुदाहृतम् ॥१४४॥

---

इस स्थान के सर्व शेष में वर्णित है—एकादशी के व्रत की कथा सुनने से, उसके करने से, व्रतानुष्ठान में अनुमोदन करने पर और एकादशी व्रताचरण करने के निमित्त मनुष्य के हृदय में श्रद्धा उत्पन्न करा देने पर सब पापों से परित्राण प्राप्तकर गरुड़ध्वज के अत्युत्तमपद वैकुण्ठधाम में गति प्राप्त कर सकता है ॥१३८

पद्मपुराण के वैशाख-माहात्म्य में देवदूत-विकुण्डल-संवाद में लिखा है—मैंने यमराज के मुख से सुना है, किसी के सङ्गवशतः केवल एकमात्र एकादशी व्रतानुष्ठान करने पर मानवों को यम-यातना प्राप्त करना नहीं पड़ता। हे वैश्य ! एकादशी का उपवास करने से मानवगण के एकादशेन्द्रिय कृत पातकसमूह विनष्ट होते हैं। संसार में एकादशी के समान पुण्य और किसी में नहीं है। शठता के सहित भी जो लोक एकादशी व्रतानुष्ठान करते हैं, उनको यमराज का अधीन नहीं होना पड़ता है ॥१३९-१४१॥

इस प्रकार अन्यत्र भी 'नेदृशम्' इत्यादि सप्तपद्य पूर्ववत् यहाँ पर प्रवर्त्तित होते हैं, अर्थात् नारदपुराण के समान पद्मपुराण के माघ-माहात्म्य में भी उक्त वाक्यसमूह दृष्ट होते हैं। और भी कथित है—हे वैश्यवर ! बाल्य, यौवन, एवं वृद्धावस्था में, जिस समय ही क्यों न हो एकादशी में उपवास करने पर निःसन्देह दुर्गति भोगनी नहीं पड़ती ॥१४२॥

उक्त पुराण के वैशाख-माहात्म्य में यम-ब्राह्मण-संवाद में उक्त है—शुक्ला एवं कृष्णा,- उभयपक्षीया

एकादशेन्द्रियैः पापं यत् कृतं भवति द्विज । नरो निर्धूय तत्तूर्णं व्रती स्वर्गतिमान् भवेत् ।।१४५

अथ अश्वमेधेत्यादि पूर्ब्ववत् ।

किञ्च—

एकतः क्रतवः सर्व्वे सर्व्वतीर्थतपांसि च । महादानानि दत्तानि व्रतं वैष्णवमेकतः ।।१४६।।

वैष्णवव्रतजो धर्म्मो धर्म्मो यज्ञादिसम्भवः । एकत्र तुलितो धात्रा तत्पूर्व्वो ह्यभवद्‌गुरुः ।

हरिवासरभक्तानामच्युतोच्युतभाषिणाम् ।।१४७।।

नाहं शास्ता विशेषेण तेभ्यो विप्र बिभेम्यहम् । येषां पुत्त्रश्च पौत्त्रश्च एकादश्यामुपोषितः ।

स महात्मा स्वपुरुषान् शतमुद्धरते बलात् ।।१४८।।

उपोषणं ततः कुर्य्यात् पक्षयोरुभयोरपि । एकादश्यां स पुरुषो भुक्तिमुक्त्येकभाजनम् ।।१४९।।

अथ तत्रैव कार्त्तिकमाहात्म्ये श्रीयमधूम्रकेतुसंवादे—

एकादश्यान्तु प्राप्तायां समुपोष्येह मानवाः ।

सर्व्वपापैर्विनिर्मुक्ता यान्ति विष्णोः परं पदम् ।।१५०।।

धर्म्मदा ह्यर्थदा चैव कामदा मोक्षदा किल । सर्व्वकामदुघा नृणां द्वादशी बरवर्णिनि ।।१५१

एकादशीव्रतं सौम्य यद्येकं सम्यगर्ज्जितम् ।

किं दानैः किं तपस्तीर्थैः सर्व्वदं विधिना कृतम् ।।१५२।।

---

तयोः पूर्व्वः वैष्णवव्रतजो धर्म्मः । अच्युताच्युतेति भाषिणामिति दृष्टान्तत्वेनोक्तम् ।।१४७।।

अहं यमोऽपि ।।१४८।।

दानादिभिः किम् ? तेनैव सर्व्वसिद्धेः । कुत; ? विधिना यथाविधि सर्व्वदं कर्म्म कृतम् । यद्वा, विधिना विधात्रा तत् सर्व्वदं कृतम् । अथवा विधिना कृतं सर्व्वदं भवति, किं विशेषोक्त्या, सर्व्वेषामेव सर्व्वकामं परिपूरयतीत्याह—सर्व्वेति । तेन वैकुण्ठलोक प्राप्त्यादिकमभिप्रेतम् ।।१५२।।

---

एकादशी में उपवास करने पर पुरुषवृन्द स्वर्गगामी हो सकते हैं। हे द्विज ! एकादशी व्रतपरायण मानव, एकादशेन्द्रिय कृत पापों को आशु विध्वस्त करके सुरपुर में गमन करते हैं ।।१४३-१४५।।

अथ अश्वमेधेत्यादि पूर्ब्बवत्

और भी कथित है—एक ओर सकल यज्ञ, सकल तीर्थ, सकल तपस्या, एवं यावतीय महादान, एवं अपर दिक् में वैष्णव व्रत अर्थात् एकादशी व्रत हो उन सबका सम कक्ष है। विधाता ने वैष्णव व्रत जात धर्म, एवं यज्ञादि सञ्जात धर्म, एतदुभय धर्म को एकत्र तुलादण्ड में रखकर परिमाण किया है। उसमें अच्युत, अच्युत नामभाषी हरिवासर भक्तवृन्द का वैष्णव व्रतजात धर्म ही वजन में गुरु हुआ है ।।१४६-१४७

हे विप्र ! जिनके पुत्र पौत्रादि एकादशी व्रत में उपवास करते हैं, मैं उनको शासन न करके भयभीत होकर रहता हूँ। एकादशी व्रतकारी महात्मा स्वीय शतपुरुष को बलपूर्वक उद्धार करते हैं ।।१४८।।

अतएव उभयपक्षीया एकादशी में उपवास करना चाहिये। उससे भोगैश्वर्य्य एवं मुक्ति लाभ कर सकते हैं।

मनुष्य, एकादशी में उपवास करने पर समस्त पापों से मुक्त होकर श्रीविष्णु के परमपद में भी गमन कर सकते हैं ।।१४९-१५०।।

हे वरवर्णिनि ! मानववृन्द के सम्बन्ध में द्वादशी, धर्मार्थ काम मोक्षदा एवं सर्वाभीष्ट दायिनी है, इसमें सन्देह नहीं है। हे सौम्य ! केवलमात्र एकादशी का पालन सम्यक् रूप से करने पर दान, तपस्या एवं तीर्थ-सेवन की आवश्यकता क्या है ? विधिकर्त्तृक यह व्रत सर्वदायक रूप में निर्मित हुआ है ।।१५१-१५२।।

अथ तत्रैवोत्तरखण्डे शिवपार्व्वतीसंवादे —

एकादशीं परित्यज्य यो ह्यन्यद्व्रतमाचरेत् । स करस्थं महारत्नं हित्वा भैक्ष्यन्तु याचते ॥१५३

स्कान्दे —

विनापि ऋक्षसंयोगादेकैवैकादशी नृणाम् । विनिहन्तीह चैनांसि कुनृपो विषयं यथा ॥१५४॥

न दानं न तपः स्नानं न चान्यत् सुकृतं क्वचित् ।

मुक्तये ह्यभवत् सुभ्रु मुक्त्वैकं हरिवासरम् ॥१५५॥

सकृच्चोपोषणेनास्यां नश्यन्ति पापराशयः । एकतः पृथिवीदानमेकतो हरिवासरः ।

न समं कविभिः प्रोक्तं वासरो ह्यधिकः स्मृतः ॥१५६॥

तत्रैवामृतसारोद्धारे श्रीयमस्य दूतानुशासने—

अगम्यागमने पापं मित्रद्रोहे च पातकम् । इत्यादि पातकं यच्च यत्नैरन्यदुपार्ज्जितम् ॥१५७॥

पाषण्डालापजनितं पतितानाञ्च सङ्गमात् । तन्मया मार्ज्जितं सर्व्वमेकादश्युपवासिनाम् ॥१५८

प्रतिग्रहोत्थं यत् पापं दशाभ्रंशोद्भवञ्च यत् । तन्मया मार्ज्जितं दूता एकादश्युपवासिनम् ।।१५९

अतएव तत्र —

एकादश्युपवासी यो नरो भवति भूतले । मुक्तं मया शतानन्द तेषां त्रिपुरुषं कुलम् ॥१६०॥

एकादश्यामभुञ्जाना युक्ताः पापशतैरपि । भवद्भिः परिहर्त्तव्या हिता मे यदि सर्व्वदा ॥१६१

---

ऋक्षाणि पुष्यादीनि, तत्संयोगाद्विनापि । तेषां योगमाहात्म्यविशेषोऽग्रे लेख्यः ॥१५४॥

सुभ्रु, हे पार्व्वति ॥१५५॥

आदि-शब्देन स्वर्णस्तेयादि, अन्यत् परमपि अभक्ष्यभक्षणादिकम् ॥१५७॥

दशा अवस्था ब्रह्मचर्य्यादि, तद्भ्रंशेनोद्भवो यस्य तत् ॥१५९॥

---

अनन्तर पद्मपुराण के उत्तरस्थ शिव-उमा-संवाद में लिखित है—एकादशी वर्जन पूर्वक व्रतान्तर का अनुष्ठान करने से करस्थ महारत्न वर्जन पूर्वक भिक्षान्न की प्रार्थना की जाती है ।।१५३।।

स्कन्दपुराण में लिखित है—नक्षत्र संयोग व्यतीत भी एकादशी मानववृन्द के पक्ष में कुराजा के विषय विनाश के सदृश सर्वपातक विनाशिनी है । हे सुभ्रु पार्वति ! हरिवासर वर्जन पूर्वक दान, तपस्या, स्नान किंवा अन्य किसी प्रकार पुण्याचरण मुक्ति का कारण नहीं होता है । एक बार मात्र हरिवासर में उपवासी होने से पातकराशि विध्वस्त हो जाती है, एक दिक् में निखिल बसुधा दान, अन्यदिक् में हरिवासर स्थापन पूर्वक तुलादण्ड में तुलना करने पर, उभय समान न होकर हरिवासर ही गुरुतर होता है, इस प्रकार निर्णय हुआ है ।।१५४-१५६।।

उक्त पुराण के अमृतसारोद्धार में श्रीयमदूतानुशासन में लिखित है—अगम्यागमन हेतु, मित्रद्रोह कृत, पाषण्डगण सह आलाप जनित, एवं पतितागण के सङ्गमजात पाप एवं यत्नार्जित अन्य पापसमूह को क्षमा, मैं कर देता हूँ, यदि पातकी जनसमूह एकादशी में उपवास करते हैं तो ।।१५७-१५८।।

हे दूतवृन्द ! एकादश्युपवासिगण का प्रतिग्रह जनित पाप एवं ब्रह्मचर्य्यादि भ्रंशजनित पाप मैं क्षमा करता हूँ ।।१५९।।

अतएव उक्त स्थान में वर्णित है—हे शतानन्द ! पृथिवी में एकादशी में उपवासी रहने पर, मैं उसके तीन कुल को मुक्त करता हूँ । हे दूतवृन्द ! यदि निरन्तर मेरा हित साधन में तुम्हारी इच्छा हो, तो, शत-शत पापानुष्ठान करने पर भी एकादशी में उपवासी व्यक्ति को छोड़ देना ।।१६०-१६१।।

किञ्च—

वरं चाण्डालजातीय एकादश्युपवासकृत । न तु विप्रश्चतुर्वेदी यो भुङ्क्ते हरिवासरे ॥१६२॥

तत्रैव श्रीब्रह्मनारदसंवादे —

कल्पवृक्षसमाख्याता द्वादशी वाञ्छितार्थदा । सुगतेर्दायिनी पुंसां स्मृता च कृतकीर्त्तना ॥१६३

नाश्वमेधसहस्रैश्च तीर्थकोट्यवगाहनैः । यत् फलं प्राप्यते वत्स द्वादशी-वासरे कृते ॥१६४॥

पूजामाप्नोति सर्व्वत्र न रोगेभ्यो भयं भवेत् । नोपसर्गभयं तस्य दुष्टजीवसमुद्भवम् ॥१६५॥

न दाहो न क्लमो नार्त्तिः स्मरणं सर्व्वदा हरेः । सन्ततेर्न वियोगश्च द्वादशीकारिणां हरेः ॥१६६

कथारुचिर्भवेन्नित्यं न भयं विद्यते क्वचित् । रणे राजकुले चैव सर्व्वत्र विजयी भवेत् ॥१६७

धर्म्मोपरि मतिर्नित्यं कृष्णे भक्तिः सुनिर्म्मला । पातकैर्नैव लिप्येत द्वादशीभक्तितो नरः ॥१६८

इत्थं गुह्यं समाख्यातं दृष्ट्वा शास्त्रसमुच्चयम् । सर्व्वधर्म्मान् परित्यज्य कलौ कार्य्यं हरेर्दिनम् ॥१६९

न भवेन्मानसी पीड़ा रोगाश्चात्यन्तदुःखदाः । माहात्म्यं पठतः पुंसो द्वादशीसम्भवं कलौ ॥१७०

---

वाञ्छितं कर्त्तुमिष्टम् ॥१६३॥

द्वादशीवासरे कृते सति यत् फलं प्राप्यते, अश्वमेधादिभिस्तन्न प्राप्यते ॥१६४॥

उपसर्गा अरिष्टानि, तेभ्यो भयम्; सर्व्वदा हरेः स्मरणं भवति, हरेः कथायां रुचिरित्यन्वयः। भक्तिः श्रवणादिरूपा प्रेमलक्षणा वा; एवं द्वादशीभक्तितः द्वादश्याः सेवया। यद्वा, द्वादश्यां प्रीतिमात्रेणापि पातकैः कथञ्चित् क्रियमाणैरपि न लिप्यते ॥१६५-१६८॥

अस्तु तावद्द्वादशीव्रतादिनिष्पादनं, तन्माहात्म्यपठनादपि सर्व्वदुःखशान्तिः परमपुण्यप्राप्तिश्चेत्याह—

---

और भी वर्णित है—एकादशी में भोजनकारी चतुर्वेदी विप्र की अपेक्षा एकादशी में उपवास करने वाला चाण्डाल जातीय व्यक्ति भी श्रेष्ठ है ॥१६२॥

उक्त अमृतसारोद्धार के ब्रह्म-नारद-संवाद में लिखा है—अभीष्टार्थदात्री होने के कारण द्वादशी को कल्पवृक्ष सदृश कहते हैं, अतएव उसका स्मरण अथवा कीर्त्तन करने से वह मानवों को उत्तमा गति प्रदान करती है ॥१६३॥

हे वत्स ! द्वादशी वासर में उपवास करने से जो फल लाभ होता है, अश्वमेध सहस्र अथवा कोटितीर्थावगाहन स्नान के द्वारा भी उस फल के मिलने की सम्भावना नहीं है ॥१६४॥

एकादशी व्रतपरायण व्यक्ति, सर्वत्र पूज्य होता है। रोग, दुष्ट प्राणि, समुद्भूत उपसर्ग, दाह, ग्लानि एवं कातरता प्रभृति से उसको भय की सम्भावना नहीं रहती है, एवं सर्वदा उसके चित्त में हरि का स्मरण विराजमान रहता है। द्वादशी व्रतपरायण व्यक्तिगण को पुत्र-कन्या विरह जनित दुःख प्राप्त करना नहीं पड़ता है। नित्य हरिकथा में उनकी रुचि होती है। उनको किसी प्रकार भय नहीं होते हैं। वे युद्ध अथवा नृप कुल में विजयी होते हैं। उनकी मति नित्य धर्म में रहती है, एवं कृष्ण के प्रति अतिशय अमला भक्ति होती है। द्वादशी भक्ति प्रभाव से मनुष्य को कभी भी पातक में लिप्त नहीं होना पड़ता है ॥१६५-१६८॥

शास्त्रसमूह को पर्य्यवेक्षण करके इस प्रकार गुप्त आख्यान का वर्णन किया। कलियुग में निखिल धर्म परिहार पूर्वक हरिवासर का अनुष्ठान करना उचित है ॥१६९॥

कलिकाल में द्वादशी माहात्म्य पाठ करने से मानसिक पीड़ा अथवा अतीव क्लेशदायक रोग नहीं होता है। जो सब साधु व्यक्तिगण, द्वादशी माहात्म्य का पाठ करते हैं, उनका जो पुण्य सद्य होता है, कुरुक्षेत्र

न तत् पुण्यं कुरुक्षेत्रे प्रयागे च सतां कलौ ।
माहात्म्यं पठतां पुंसां यत् फलं द्वादशीभवम् ॥१७१॥

भविष्ये—

एकादशी महापुण्या सर्व्वपापविनाशिनी । भक्तेश्च दीपनी विष्णोः परमार्थगतिप्रदा ।
यामुपोष्य नरो भक्त्या न संसारे भविष्यति ॥१७२॥

एकादश्यां निराहारो यो भुङ्क्ते द्वादशीदिने । न स दुर्गतिमाप्नोति नरकाणि न पश्यति ॥१७३

कृत्वा पापसहस्राणि एकादश्यामुपोषितः । द्वादश्यामर्च्चयेद्विष्णुं न स दुर्गतिमाप्नुयात् ॥१७४

एषा तिथिः परा पुण्या विष्णोरीशस्य तुष्टिदा । तस्यामेव जगन्नाथो अमूर्त्तो मूर्त्तिमान् स्थितः ।
तेन सा सर्व्वपापघ्नी सर्व्वदुःखविनाशिनी ॥१७५॥
या सा विष्णुमयी शक्तिरनन्ता व्याप्य या स्थिता ।
सा तेन तिथिरूपेण द्रष्टव्यैकादशी सती ॥१७६॥

सनत्कुमारप्रोक्ते—

कृत्वा पापसहस्राणि ब्रह्महत्याशतानि वै । एकामेकादशीं भक्त्या समुपोष्य शुचिर्भवेत् ॥१७७

एकादशीव्रतादन्यद्यद्व्रतं क्रियते नरैः । तत्फलं तद्विजानीयाद्दुःखोद्भूतमिवाङ्कुरम् ॥१७८॥

सौरधर्म्मे—

एकतश्चाग्निहोत्रादि द्वादशीमेकतः प्रभुः । तुलयातौलयत्तत्र द्वादशी च विशिष्यते ॥१७९॥

---

न भवेदिति द्वाभ्याम् । अमूर्त्तः—अव्यक्तः, मूर्त्तिमान् स्थितः व्यक्तोऽभूत् ॥१७०-१७५॥

तस्य अन्यव्रतस्य फलं तत् एकादशीव्रतमेव विशेषेण जानीयात् । कथमिव ? दुःखेन अन्यव्रतप्रयासे-

---

अथवा प्रयाग में भी उस प्रकार पुण्य सञ्चय नहीं होता है ॥१७०-१७१॥

भविष्य पुराण में वर्णित है—एकादशी अतिशय पुण्यस्वरूपिणी एवं सर्वपातक विनाशिनी, विष्णुभक्ति-उद्दीपनी तथा परमार्थगति प्रदायिनी है। मनुष्य, भक्तिपूर्वक एकादशी में उपवास करने पर संसार बन्धन से मुक्त होते हैं ॥१७२॥

एकादशी में भोजन न करके द्वादशी के दिन में भोजन करने पर वह व्यक्ति दुर्गतिग्रस्त नहीं होता है। एवं नरकदर्शन भी नहीं करता है। बहुसहस्र पापाचरण करके भी एकादशी में उपवासी रहकर द्वादशी में श्रीहरि की पूजा करने से दुर्गति ग्रस्त नहीं होना पड़ता है ॥१७३-१७४॥

एकादशी तिथि परमा पुण्य स्वरूपिणी एवं परमेश्वर प्रीतिदायिनी है। अव्यक्त जगदीश्वर उक्त एकादशी में ही मूर्त्तिमान होकर विराजित हैं। एतज्जन्य एकादशी निखिल पापहारिणी एवं यावतीय दुःख विनाशिनी है। जो विष्णुमयी शक्ति, अनन्तस्वरूपा एवं सर्वजगत् व्याजिनी है, उनका दर्शन शुभा एकादशी तिथिरूप में करना चाहिये ॥१७५-१७६॥

सनत्कुमार ने कहा है—बहुसहस्र पाठानुष्ठान एवं अनेक शत विप्रहत्या करके भी भक्तिपूर्वक एकमात्र एकादशी व्रत साधन करने से पवित्रता प्राप्त कर सकता है। जो मनुष्य, एकादशी व्रत वर्जन कर अन्य व्रताचरण करते हैं, तत्तदनुष्ठित व्रत से दुःखाङ्कुर ही उद्भूत होती है ॥१७७-१७८॥

सौर धर्म में कथित है—भगवान् ने एक ओर अग्निहोत्रादि यज्ञसमूह, अन्य ओर द्वादशी के व्रत की स्थापना कर तोला था, तो द्वादशी ही भारी हुई थी ॥१७९॥

देवीरहस्य-स्कन्दपुराणयोः—

पापं पञ्चविधं प्रोक्तं पातकञ्चातिपातकम् । उपपातकसंज्ञञ्च महापातकमेव च ॥१८०॥

प्रकीर्णकञ्च तत् सर्व्वमेकादश्यामुपोषणात् । विलयं याति तोयस्थं यथा चैवामभाजनम् ॥१८१

देवीरहस्ये

गायत्रीह यथा सर्व्वपापपञ्जरभेदिनी । एकादशी तथा सर्व्वपापपञ्जरभेदिनी ॥१८२॥

वायव्ये स्कान्दे च—

अभोज्यभोजनाज्जातमगम्यागमनाच्च यत् । अयाज्ययाजनाद्यच्च अभक्ष्याणाञ्च भक्षणात् ॥१८३

अस्पृश्यस्पर्शनाद्यच्च परेषां निन्दया च यत् । आत्मसम्भावनाद्यच्च पारदार्य्यकृतञ्च यत् ॥१८४

विहिताकरणाद्यच्च परवित्तापहारतः । कामान्धेन कृतं यच्च पातकं चोपपातकम्

तत् सर्व्वं विलयं याति एकादश्यामुपोषणात् ॥१८५॥

विष्णुरहस्ये श्रीब्रह्मोक्तौ—

मनसापि चिकीर्षन्ति द्वादशीं ये नरोत्तमाः । तेऽपि घोरं न पश्यन्ति संसारदुःखसागरम् ॥१८६

विष्णुपुराणे—

ॐकारः सर्व्ववेदानां यथा चाद्यः प्रपूजितः । तथा सर्व्वव्रतानाञ्च द्वादशीव्रतमुत्तमम् ॥१८७॥

---

नोद्भूतमङ्कुरं पुण्यवीजोद्भेदमिव जानीयात् । यद्वा, तस्य फलं तद्विजानीयात् किमित्यपेक्षायामाह— दुःखस्योद्भूतमङ्कुरमिव । एकादशीव्रतत्यागेनान्यव्रतकरणाद्दुःखमेवोपार्जितमित्यर्थः । पातकं पातित्यकारकम्, अतिपातकं स्नुषागमनादि, उपपातकं गोवधादि, महापातकं ब्रह्महत्यादि, प्रकीर्णं बहुविध-क्षुद्रपापं वा ॥१७८-१८१॥

---

देवीरहस्य एवं स्कन्दपुराण में कथित है—पातक अतिपातक, उपपातक, महापातक एवं प्रकीर्ण पातक; ये पञ्च प्रकार पाप निर्दिष्ट हैं। एकादशी में उपवासी रहने पर जल के मध्यस्थित आमभाण्डवत् अर्थात् मिट्टी के कच्चे बर्त्तन के समान यह सब पाप क्षय होते हैं ॥१८०-१८१॥

देवीरहस्य में लिखित है—इस जगत् में गायत्री जिस प्रकार सर्व प्रकार पाप पञ्जर भेदन करती है, उस प्रकार एकादशी भी निखिल पाप पञ्जर भेदन करती है ॥१८२॥

वायु पुराण एवं स्कन्दपुराण में वर्णित है—अभोज्य भोजन, अगम्यागमन, अयाज्य याजन, अभक्ष्य भक्षण, अपृश्यस्पर्श, परापवाद, निज प्रशंसा, परदार गमन, कर्त्तव्य कर्म का अकरण, परस्व हरण,–इन सब कर्मों से जो पाप सञ्चित होता है, और कामान्ध होकर जो पाप अथवा उपपाप सञ्चित होता है, एकादशी के उपवास से उन सब पाप का विनाश होता है ॥१८३-१८५॥

विष्णुरहस्य में श्रीब्रह्मोक्ति यह है—मानस से भी जो लोक, द्वादशी व्रत करने के इच्छुक हैं, वे सब नरश्रेष्ठगण को पुनर्वार घोर नरक दर्शन नहीं करना पड़ता है ॥१८६॥

विष्णुपुराण में कथित है—वेदादिभूत प्रणव जिस प्रकार पूजनीय है, उस प्रकार द्वादशी व्रत, सर्व व्रतों के मध्य में पूज्य है ॥१८७॥

द्वारकामाहात्म्ये श्रीकृष्णं प्रति श्रीचन्द्रशर्म्मणोक्तौ—

त्वत्पादाम्बुजभक्तानां न दुःखं पापिनामपि ।
किं पुनः पापहीनानां द्वादशीसेविनां नृणाम् ॥१८८॥

तत्रैव श्रीबलिं प्रति प्रह्लादोक्तौ—

नोष्णत्वं द्विजराजे हि शीतत्वं न हुताशने । वैष्णवानामपापत्वमेकादश्युपवासिनाम् ॥१८९॥

वैष्णवतन्त्रे—

एकादशी महापुण्या विष्णोरीशस्य वल्लभा । तस्यामुपोषितो यस्तु द्वादश्यां पूजयेद्धरिम् ।
तस्य पापानि नश्यन्ति विष्णौ भक्तिश्च जायते ॥१९०॥

बृहन्नारदीये, एकादशीमाहात्म्यारम्भे—

महापातकयुक्तो वा युक्तो वा सर्व्वपातकैः ।
एकादश्यां निराहारः स्थित्वा याति परं पदम् ॥१९१॥

वायुपुराणे—

एकादशीव्रतं यस्तु भक्तिमान् कुरुते नरः ।
सर्व्वपापविनिर्म्मुक्तः स विष्णोर्याति मन्दिरम् ॥१९२॥

विष्णुधर्म्मोत्तरे—

एकादश्युपवासं यः श्रद्धया कुरुते नरः । स सर्व्वपातकैः सद्यस्त्वचेवाहिर्विमुच्यते ॥१९३॥
न पश्यत्यामयं नापि नरकान्तरयातनाम् । स नमस्यः प्रपूज्यश्च वासुदेवप्रियो हि सः ॥१९४॥

---

अधुना विशेषतो भगवद्वल्लभत्वेन भगवद्भक्ति-तल्लोकादि-प्राप्ति-महाफलं वैष्णवतन्त्रादिवचनैरन्ते

---

द्वारकामाहात्म्य में श्रीकृष्ण के प्रति श्रीचन्द्रशर्मा की उक्ति है—हे प्रभो ! त्वदीय चरणकमल के भक्त होने पर पापीगण को भी दुःख भोगना नहीं पड़ता, तब निष्पाप द्वादशीव्रतपरायण मनुष्यगण की कथा और क्या कहें ? ॥१८८॥

उक्त ग्रन्थ में श्रीबलि के प्रति श्रीप्रह्लाद की उक्ति है—जिस प्रकार शशाङ्क में उष्णता, अनल में शीतलता नहीं रह सकती है, उस प्रकार एकादशी में उपवासकारी वैष्णववृन्द में भी पाप अवस्थित नहीं होगा ॥१८९॥

वैष्णवतन्त्र में लिखित है—महापुण्य स्वरूपा, परमेश्वर वल्लभा एकादशी में जो उपवास रहकर द्वादशी में श्रीहरि की पूजा करते हैं, उनके समस्त पातक विनष्ट होते हैं, एवं हरिभक्ति लाभ होता है ॥१९०॥

बृहन्नारदीय पुराण के एकादशी माहात्म्य में वर्णित है—एकादशी में भोजन न करने पर महापातक अथवा सर्व पातकों से पातकीजन भी परमपद को प्राप्त करते हैं ॥१९१॥

वायुपुराण में लिखित है—जो मानव, भक्तिमान होकर एकादशी व्रताचरण करते हैं, वे सकल पातकों से मुक्त होकर श्रीविष्णु-निकेतन में गमन करते हैं ॥१९२॥

विष्णुधर्मोत्तर में लिखित है—जो मानव, श्रद्धा के सहित एकादशी में उपवास करते हैं, वह सद्यः कञ्चुकमुक्त भुजङ्ग के समान सर्व पातक से मुक्त होते हैं। एवं रोग अथवा नरक यन्त्रणा का भोग उनको नहीं करना पड़ता है, वह निश्चय सबके नमस्कार योग्य, प्रपूज्य एवं वासुदेव के प्रिय होते हैं ॥१९३-१९४॥

गारुड़े—

एकादशीव्रतं भक्तया यः करोति नरः सदा ।
स विष्णुलोकं व्रजति, याति विष्णोः स्वरूपताम् ॥१९५॥

आग्नेये—

एकादश्युपवासं यः सदा तु कुरुते नरः । स याति परमं स्थानं यत्र देवो हरिः स्थितः ॥१९६

शिवपुराणे—

यः करोति नरो भक्तया एकादश्यामुपोषणम् ।
स याति विष्णुसालोक्यं प्राप्य विष्णोः स्वरूपताम् ॥१९७॥
ईदृङ्माहात्म्यरत्नानि शास्त्राम्भोधौ स्फुरन्त्यपि ।
कः संग्रहीतुं शक्तः स्यादत्र कृष्णकृपां विना ॥१९८॥

अथोपवासदिननिर्णयः

एकादशी च सम्पूर्णा विद्धेति द्विविधा स्मृता ।
विद्धा च द्विविधा तत्र त्याज्या विद्धा तु पूर्व्वजा ॥१९९॥

---

दर्शयति—एकादशीत्यादिना स्वरूपतामित्यन्तेन ॥१९०-१९७॥

इदानीं माहात्म्य-लिखनमुपसंहरन् परमोपादेयानामपि तन्माहात्म्यवचनानां सर्व्वेषां लिखनासम्भवं व्यञ्जयति—ईदृगिति । स्फुरन्ति, प्रसिद्धतया प्रकाशमानान्यपि, अतो निजायोग्यत्वेन तदानन्त्येन च तानि सर्व्वाण्यत्र संगृह्य लिखितुं न शक्यन्त इत्यर्थः ॥१९८॥

विद्धैकादशी च अग्रे लेख्येन वेधातिवेधमहावेधयोगा इति भेदचतुष्टयेन सन्दिग्धा । संयुक्तादिभेदत्रयेन च किंवा स्वतः साम्यन्यूनताधिक्यैर्द्वादश्या साम्यन्यूनताधिक्यैर्नवभेदतो नानाविधा भवति । तत्र पूर्व्व-विद्धोत्तरविद्धयोर्मध्ये पूर्व्वया दशम्या विद्धा त्याज्या नोपष्येत्यर्थः । अत्र च त्याज्येति सामान्यनिर्द्देशेन सर्व्वैरेव परित्याज्येति बोद्धव्यम् । ततश्च, 'शुद्धैव द्वादशी राजन्नुपोष्या मोक्षकाङ्क्षिभिः । सकामैर्गृहिभिः पूर्व्वाविद्धापीति विनिश्चयः ॥' इति पुराणसमुच्चयादिवचनार्थो निरस्तः । तद्युक्तिश्चाग्रे दर्शयितव्येति दिक् ॥१९९

---

गरुड़पुराण में लिखित है—भक्तिमान् होकर सर्वदा एकादशी व्रतानुष्ठान करने पर, विष्णुलोक गमन होता है, एवं विष्णु सारूप्य लाभ होता है ॥१९५॥

अग्निपुराण में लिखित है—जो मानव, एकादशी में सर्वदा उपवास करते हैं, जहाँ पर श्रीहरि विराजित हैं, उन परम स्थान में उनका गमन होता है ॥१९६॥

शिवपुराण में लिखित है—भक्तिपूर्वक एकादशी में जो मानव, उपवास करते हैं, वे विष्णु सारूप्य लाभ कर विष्णु सालोक्य प्राप्त करते हैं ॥१९७॥

शास्त्रसिन्धु के अभ्यन्तर में इस प्रकार एकादशी माहात्म्य रत्नसमूह स्फुरित होने पर भी श्रीकृष्ण की करुणा व्यतीत उसको कौन मानव यहाँ संग्रह करने में समर्थ होगा ? ॥१९८॥

अथोपवासदिननिर्णयः

एकादशी 'सम्पूर्णा' एवं 'विद्धा' भेद से द्विविध हैं । विद्धा भी 'पूर्वविद्धा' एवं 'परविद्धा' भेद से द्विविध हैं । तन्मध्ये पूर्वविद्धा को परित्याग करना चाहिये ॥१९९॥

तथा च पैठीनसिः—

नागविद्धा च या षष्ठी शिवविद्धा च सप्तमी । दशम्यैकादशी विद्धा तत्र नोपवसेद्बुधः ॥२००

सारदापुराणे—

एकादशी तथा षष्ठी पौर्णमासी चतुर्द्दशी । तृतीया च चतुर्थी च अमावस्याष्टमी तथा ।
उपोष्याः परसंयुक्ता नोपोष्याः पूर्व्वसंयुताः ॥२०१॥

सौरधर्म्मोत्तरे च—

एकादशीमुपवसेद्द्वादशीमथवा पुनः । विमिश्रां वापि कुर्व्वीत न दशम्या युतां क्वचित् ॥२०२

अथ सामान्यतो विद्धोपवासदोषः

अत्र वार्षायणिः—

भूतविद्धा त्वमावस्या दशम्येकादशीयुता । दिशा विद्धा तु सा स्वर्गं हन्ति पुण्यं पुरा कृतम् ॥२०३

नारदः—

दशम्यनुगता यत्र तिथिरेकादशी भवेत् । तत्रापत्यविनाशश्च परेत्य नरकं व्रजेत् ॥१०४॥

नोपोष्या दशमी-विद्धा सदैवैकादशी तिथिः । समुपोष्य नरो जह्यात् पुण्यं वर्षशतोद्भवम् ॥२०५

किञ्च—

दशम्या चैव विद्धायामेकादश्यामुपोषितः । तस्यायुः क्षीयते नित्यं नारदोऽहं ब्रवीमि वः ।
सत्यं सत्यं विनश्येत सन्ततिस्तु न चान्यथा ॥२०६॥

---

नागः पञ्चमी तेन विद्धा, शिवः षष्ठी तेन विद्धा ॥२००॥

विमिश्रामेकादशीं द्वादशीं चान्योऽन्यमिलिताम्, एकादशीयुक्तां द्वादशीमित्यर्थः ॥२०२॥

भूतेन चतुर्द्दश्या विद्धा । एकादश्या युता दशमी च भवेत् । सा एकादशी तु दिशया दशम्या विद्धा स्वर्गं पुण्यञ्च हन्ति ॥२०३॥ अपत्यानां विनाशं व्रजेत् प्राप्नोति, विनाश इति वा पाठः ॥२०४॥

---

उक्त विषय में पैठीनसि की उक्ति है—पञ्चमी विद्धा षष्ठी में, षष्ठी विद्धा सप्तमी में एवं दशमी विद्धा एकादशी में उपवास करना विज्ञजन के पक्ष में उचित नहीं है ॥२००॥

सारदापुराण में लिखित है—एकादशी, षष्ठी, पौर्णमासी, चतुर्दशी, तृतीया, चतुर्थी, अमावस्या एवं अष्टमी,—यह सब तिथि, परविद्धा होने पर उपवास में ग्राह्या है, किन्तु पूर्वविद्धा होने से उपवास में अग्राह्या है ॥२०१॥

सौरधर्मोत्तर में भी लिखित है—एकादशी एवं द्वादशी उपवास योग्या है, किंवा एकादशी समन्विता द्वादशी में उपवास करना चाहिये । किन्तु दशमीयुक्ता एकादशी में कभी उपवास न करे ॥२०२॥

अथ सामान्यतो विद्धोपवासदोषः

उक्त विषय में वार्षायणि का कथन है—चतुर्दशी विद्धा अमावस्या, एकादशी विद्धा दशमी एवं दशमी विद्धा एकादशी में उपवासी होने पर स्वर्गगति विनष्ट होती है एवं पूर्व सञ्चित पुण्य क्षय होता है ॥२०३॥

नारद का कथन है—एकादशी तिथि दशमी संयुक्ता होने पर सन्तति नाशिनी होती है, एवं देहान्त में नरक गति होती है । दशमी विद्धा एकादशी में उपवास करना उचित नहीं है । उस दिन में उपवासी होने पर शतवर्षार्जित पुण्य क्षय होता है ॥२०४-२०५॥

और भी कथित है—मैं नारद हूँ, मैं तुम्हारे निकट सत्यकर कह रहा हूँ,—दशमी विद्धा एकादशी में उपवासी होने पर नित्य उसकी आयुः नष्ट होती है, एवं सन्तति नष्ट होती है, इसकी अन्यथा कदापि नहीं होती है ॥२०६॥

किञ्च—

मुहूर्त्तेनापि संयुक्ता दशम्यैकादशी तु या । तामुपोष्य नरो मोहात् सुखाद्धर्म्माच्च हीयते ।।२०७

वशिष्ठश्च—

दशम्येकादशी यत्र तत्र नोपवसेद्‌बुधः । अपत्यानि विनश्यन्ति स्वर्गलोकं न गच्छति ।।२०८।।

ब्राह्मे व्रतखण्डे—

उपोष्यैकादशीं मोहाद्दशमीशेयसंयुताम् । न नरः सुखमाधत्ते इहलोके परत्र च ।।२०९।।

धृतराष्ट्रेण मैत्रेयः पृष्टः प्राह नराधिपम् । यदर्थं ते वियोगोऽभूत् पुत्राणां भार्य्यया सह ।।२१०।।

पूर्व्वं त्वया सभार्य्येण दशमोशेषसंयुता । कृता चैकादशी राजन् तस्येदं कारणं मतम् ।।२११।।

किञ्च तत्रैव—

न चाहं स्वैरिणी भार्य्या न चाहमपतिव्रता । न चेह कलुषं येन किं पापं त्वन्यजन्मनि ।।२१२

रामपत्न्या वचः श्रुत्वा वाल्मीकिर्मुनिपुङ्गवः ।
चिरं ध्यात्वा महाराज तामुवाचेदृशं वचः ।।२१३।।

दशम्यैकादशीं पूर्व्वं समुपोष्य जनार्द्दनः । अभ्यर्च्चितस्त्वया देवि तस्येद कर्म्मणः फलम् ।।२१४

---

भार्य्यया सह गान्धारीसहितस्य तव । तस्यास्तव च यदर्थं पुत्रवियोगोऽभूत्, तस्येदं कारणमित्यन्वयः । तदेवाह—पूर्व्वमिति ।।२११।।

'न चाहम्' इत्यादि वचः ।।२१३।।

दशमीयुक्तामेकादशीं, देवि हे श्रीसीते ।।२१४।।

---

और भी लिखित है—मुहूर्त्त परिमाण, दशमी संयुक्ता एकादशी में भी मोहवशतः उपवास करने पर सुख एवं धर्म विनष्ट होते हैं ।।२०७।।

वशिष्ठ की उक्ति है—पण्डित व्यक्ति, दशमीयुक्त एकादशी में उपवास न करें । उक्त एकादशी में उपवास करने से अपत्य नाश होता है, एवं सुरपुर में गति प्राप्त नहीं कर सकता है ।।२०८।।

ब्रह्मपुराण के व्रतखण्ड में वर्णित है—मोहवशतः दशमी शेष संयुक्ता एकादशी में उपवास करने पर मानव, इस लोक में एवं परलोक में सुख लाभ नहीं कर सकते ।।२०९।।

धृतराष्ट्र कर्त्तृक मैत्रेय के समीप में निज पुत्र की मृत्यु के विषय में पूछने पर मैत्रेय ने कहा था,—कि, हे नृपते ! तुमने पूर्वकाल में स्त्री के सहित दशमीयुक्त एकादशी में उपवास किया था, इसी कारण, तुमको पुत्रविरह दुःख मिला ।।२१०-२११।।

और भी उक्त पुराण में लिखित है—वालिमकी मुनि से सीता ने पूछी थी कि, "हे मुने ! मैं स्वैरिणी पत्नी नहीं हूँ, एवं अपतिव्रता भी नहीं हूँ, इस जन्म में मैंने किसी प्रकार के पापाचरण नहीं किया, मैंने जन्मान्तर में क्या पापाचरण किया था, जिसके कारण ऐसी गति प्राप्त हुई ?" रामापत्नी के वचन श्रवण कर मुनिवर वालिमकी ने दीर्घकाल चिन्ता कर इस प्रकार कहा—"तुमने पूर्वकाल में दशमी समन्विता एकादशी में उपवास करके श्रीहरि की पूजा की थी, उस कर्म का ही यह फल है ।।२१२-२१४।।

किञ्च—

वशिष्ठः समुवाचेदं पृष्टो मान्धातृभार्य्यया । दशम्यैकादशी देवि पुरा चोपोषिता त्वया ।।२१५

तेन ते कर्म्मणा चेह स्वभर्त्तृसुतबान्धवैः । वियोगः समनुप्राप्तः सत्यं विद्धि पतिव्रते ।।२१६।।

यानि यानीह पापानि त्रैलोक्ये सम्भवन्ति वै । तेषां स्थानं दशम्या वै सहितैकादशी मता ।

सप्तजन्मकृतं पुण्यं नश्येत नात्र संशयः ।।२१७।।

कौर्म्मनारदीयविष्णुरहस्येषु—

दशमीशेषसंयुक्तां यः करोति विमूढ़धीः । एकादशीफलं तस्य न स्याद्द्वादशवार्षिकम् ।।२१८

यैः कृता दशमीविद्धाविद्यामोहेन मानवैः । ते गता नरकं घोरं युगानामेकसप्ततिम् ।।२१९।।

किञ्च—

दशमीवेधसंयुक्तामुपोष्यैकादशीं किल । संवत्सरकृतेनेह नरो धर्म्मेण मुच्यते ।।२२०।।

भविष्ये—

पूर्णा-विद्धां पलार्द्धेन नन्दां पूर्णामपि त्यजेत् । यदीच्छेदात्मसन्तानं चतुर्षु नियमेष्वपि ।।२२१

नोपोषितश्च नक्तश्च नैकभक्तमयाचितम् । नन्दायां पूर्व्वविद्धायां कुर्य्यादैश्वर्य्यमोहितः ।।२२२।।

---

तामिति पाठे मान्धातृभार्य्यां प्रत्युवाच । देवि, हे राज्ञि, मान्धातृभार्य्ये ।।२१५।।

मुच्यते परित्यज्यते ।।२२०।।

पलार्द्धेनापि पूर्णया दशम्या विद्धां नन्दामेकादशीं सुपूर्णामपि चतुर्षु नियमेषु वक्ष्यमाणोपोषितादिषु त्यजेत् । २२१।।

एकभक्तेन नक्तेनेत्यादिना कदाचिदशक्तादीनामेकादशीव्रतपालनार्थमेकभक्तादिकं विहितमस्ति, तदपि विद्धायां वर्ज्जनीयमित्याह—नोपोषितमिति । उपवासं यथा तथेत्यर्थः ।।२२२।।

---

और भी लिखा है—मान्धातृभार्य्या ने वशिष्ठ को पूछने पर वशिष्ठ ने कहा था,—"देवि ! तुमने पूर्व्वकाल में दशमी विद्धा एकादशी में उपवास किया था, हे पतिव्रते ! इस कर्मफल से इस जन्म में तुम पति पुत्र एवं बान्धवों के वियोग से कातर हुई हो । मेरी इस बात को सत्य ही जानना । त्रिभुवन में जितने पापों का होना सम्भव हैं, दशमी विद्धा एकादशी में उपवास करने पर निःसन्देह सात जन्मों का इकट्ठा किया हुआ पुण्य विनष्ट होता है ।।२१५-२१७।।

कूर्मपुराण, नारदपुराण, एवं विष्णुरहस्य में लिखित है—जो मूढ़बुद्धि व्यक्ति, दशमी शेष संयुक्त एकादशी में उपवास करता है, उसको द्वादशवर्ष अनुष्ठित एकादशी व्रत का फल लाभ नहीं होता है । जो सब मानव, विद्यामद से मत्त होकर दशमी विद्धा एकादशी में उपवास करते हैं उन सबको एक सप्तति युग पर्य्यन्त दारुण नरक में निवास करना पड़ता है ।।२१८-२१९।।

और भी कथित है—दशमी वेध संयुक्ता एकादशी में उपवास करने पर मनुष्य का इस जगत् में संवत्सरानुष्ठित धर्म विनष्ट होता है ।।२२०।।

भविष्य पुराण में लिखित है—यदि कोई सन्तान प्राप्त करने के इच्छुक हों तो, उनको वक्ष्यमाण 'उपोषित' प्रभृति नियम चतुष्टय में भी पलार्ध दशमी विद्धा सम्पूर्णा एकादशी को परित्याग करना पड़ेगा। एकादशी व्रत पालन में असमर्थ व्यक्ति भी धनमद से मत्त होकर पूर्वविद्धा एकादशी की रात्रि में एक भक्त एवं अयाचित व्रत द्वारा उपवास न करे ।।२२१-२२२।।

ब्रह्मवैवर्त्ते—

गङ्गोदकस्य सम्पूर्णं यथा त्याज्यं घटं भवेत् । सुराविन्दुसमायुक्तं तत् सर्व्वं मद्यतां व्रजेत् ।।२२३

हालाहलं विषं रौद्रं कः पिवेन्मूढ़धीर्नरः । दशमीशेषसंयुक्तां क उपोषति सद्व्रती ? ।।२२४।।

एवं ज्ञात्वा मुनिश्रेष्ठ दशमीशेषसंयुता । वर्ज्जिता मुनिभिः सर्व्वैर्वासुदेवमभीप्सुभिः ।।२२५।।

गारुड़े—

विद्धामेकादशीं विप्रास्त्यजन्त्येतां मनीषिणः । तस्यामुपोषितो याति दारिद्र्यं दुःखमेव च ।।२२६

नारदीये—

लववेधेऽपि विप्रेन्द्र दशम्यैकादशीं त्यजेत् । सुराया विन्दुना स्पृष्टं गङ्गाम्भःकलसं यथा ।
श्वहृतौ पञ्चगव्यञ्च दशम्या दूषितं त्यजेत् ।।२२७।।

स्कान्दे—

द्वापरान्ते तु गान्धारी कुरुवंशविवर्द्धिनी । करिष्यति च सेनानि मूढ़भावाच्छिखिध्वज ।
तेन पुत्रशतं तस्या नाशमेष्यत्यसंशयम् ।।२२८।।

कला काष्ठापि या चैव दृश्यते दशमी विभो । एकादश्यान्तु सेनानि कर्त्तव्या न कथञ्चन ।।२२९

किञ्च—

दशम्यैकादशी यत्र तत्र सन्निहितोऽसुरः । द्वादश्यैकादशी यत्र तत्र सन्निहितो हरिः ।।२३०।।

---

त्याज्यत्वे हेतुः—सुरेत्यादिः ।।२२३।।
एवं परलोके दुःखहेतुत्वमुक्तम्, इहलोकेऽप्याह—हालेति,दशम्याः शेषेण संयुक्तामेकादशीमिति शेषः ।।२२४
शुना हृतौ चर्म्मणि पञ्चगव्यमिव ।।२२७।।
अत्रासुरः सन्निहित इति दैत्यानां तदुपवासफलप्राप्तेः ।।२३०।।

---

ब्रह्मवैवर्त्तपुराण में लिखित है—जिस प्रकार गङ्गाजल पूर्ण घट में मद्यबिन्दु संयुक्त होने से पवित्र गङ्गा जल भी त्याज्य होता है, उस प्रकार दशमी लेश संयुक्त एकादशी भी अपवित्र होता है । कौन मूढ़बुद्धि मानव, भयङ्कर हलाहल विष पान करता है, एवं कौन सद्व्रती, दशमीशेष संलग्न एकादशी में व्रत करता है ? हे मुनिवर ! वासुदेव प्रार्थी मुनिवृन्द, एकादशी के समस्त विवरण अवगत होकर दशमी शेष समन्वित एकादशी में उपवास वर्जन किये थे ।।२२३-२२५।।

गरुड़पुराण में कथित है— हे विप्रगण ! पण्डितगण, दशमी विद्धा एकादशी को वर्जन करते हैं, कारण, उसमें उपवास करने से दुःख एवं दारिद्र्य उपस्थित होता है ।।२२६।।

नारदपुराण में वर्णित है—हे विप्रवर ! जिस प्रकार सुराबिन्दु स्पर्श से गङ्गोदकपूर्ण कलस अपवित्र होता है, उस प्रकार दशमी लेश संयुक्त एकादशी को वर्जन करना चाहिये । जिस प्रकार कुक्कुर चर्म संस्थित पञ्चगव्य दूषित होता है, उस प्रकार दशमी युक्त एकादशी भी वर्जनीय है ।।२२७।।

स्कन्दपुराण में लिखित है— हे शिखिध्वज ! हे देवसेनापते ! द्वापरयुगान्ते कुरुवंश विवर्द्धिनी गान्धारी मोहवशतः दशमीयुक्त एकादशी व्रत करेंगी, तज्जन्य, उनके शतपुत्र विनष्ट हो जायेंगे । इसमें सन्देह नहीं है । हे कार्त्तिकेय ! जो एकादशी, कला अथवा काष्ठा परिमित दशमी द्वारा विद्धा होगी, कभी भी उस एकादशी में उपवास न करे ।।२२८-२२९।।

और भी वर्णित है—जो एकादशी, दशमी विद्धा होती है, असुरवृन्द उस विद्धा तिथि के निकट में

किञ्च, तत्रैवोमामहेश्वर-संवादे—

स्वर्गापेक्षा महादेवि तेन त्यक्ता न संशयः।
वाञ्छितं नारकं सौख्यं विद्धं कृत्वा हरेर्दिनम् ॥२३१॥

निहताः पितरस्तेन देवतानां वधः कृतः। दत्तं राज्यन्तु दैत्यानां कृत्वा विद्धं हरेर्दिनम् ॥२३२

पितृभिः सहितं वैरं कृतं तैस्तु सुरैः सह। कारापयन्ति विद्धं ये कुर्व्वन्ति हरिवासरम् ॥२३३

किञ्च, तत्रैव—

ये शंसन्ति दिनं विष्णोर्दशमीवेधदूषितम्। ज्ञेयास्ते पापपुरुषाः शुक्रमाया-विमोहिताः ॥२३४

उपोषणदिने विद्धे जागरः पूजनं हरेः। वृथा दानादिकं सर्व्वं कृतघ्नेषु कृतं यथा ॥२३५॥

उपोषणदिने विद्धे प्रारब्धे जागरे सति। विहाय स्थानं तद्विष्णुः शापं दत्वापगच्छति ॥२३६

किञ्च—

एकादशीं यदा विद्धां कुरुते चारुलोचने। दशमीवेधजं पापं नश्यते कृष्णदर्शनात् ॥२३७॥

---

कारयन्तीति वक्तव्ये कारापयन्तीत्यार्षम् ॥२३३॥

शंसन्ति कर्त्तुमुपदिशन्ति। ननु कथं ते पापपुरुषाः, विद्धाप्यविद्धा विज्ञेयेत्यादिशास्त्रविधानात्? तत्राह—शुक्रेति। तदग्रे व्यक्तं भावि ॥२३४॥

कृष्णदर्शनान्नश्यतीति पापस्य महत्तया प्रायश्चित्तमपि दुर्घटं महदुक्तम्। 'पुनर्न कुरुते यदि' इत्यनेन

---

अवस्थित होते हैं। एवं उसमें उपवास करने पर उपवास का फल उन सबको मिलता है। द्वादशीयुक्ता एकादशी होने से श्रीहरि उसके समीप में निवास करते हैं, अर्थात् उक्त एकादशी में उपवास करने से जो फल होता है, श्रीहरि उसका सम्पूर्ण फल प्रदान करते हैं ॥२३०॥

स्कन्दपुराण के उमा-महेश्वर-संवाद में लिखित है—हे महादेवि! जो व्यक्ति, विद्धा एकादशी में व्रतानुष्ठान करते हैं। निश्चय ही वह स्वर्ग सुख वर्जन पूर्वक नरक सुख को चाहता है ॥२३१॥

विद्धा हरिवासर तिथि में उपवास करने पर पितृलोक को निहत एवं देववृन्द को बध किया जाता है, एवं असुरगण को राज्य प्रदान किया जाता है ॥२३२॥

जो मानव, दशमी विद्धा एकादशी में उपवास करता है, अथवा अपर को उपवास कराता है, वह पितृलोक एवं देवलोक के सहित वैरता करता है ॥२३३॥

स्कन्दपुराण में और भी वर्णित है—जो मानव, दशमीवेध दूषित हरिवासर में व्रत रहने के निमित्त दूसरे को उपदेश देता है, वह पुरुष निश्चय ही शुक्रमाया से विमोहित हुआ है। इसको जानना होगा ॥ २३४

जिस प्रकार कृतघ्न व्यक्ति के कार्य्यसमूह विफल होते हैं, उस प्रकार विद्ध उपवास दिन में जागरण, हरिपूजा, एवं दानादि यावतीय कार्य्य विफल होते हैं। विद्धोपवास दिन में जागरण आरम्भ करने पर भगवान् विष्णु उस जागरणकारी को शाप प्रदान कर उस स्थान से प्रस्थान करते हैं ॥२३५-२३६॥

और भी वर्णित है—हे चारुलोचने! यदि विद्धा एकादशी में व्रताचरण होता है तो, दशमी वेधजनित पाप श्रीकृष्ण दर्शन से विनष्ट होता है, पुनर्वार विद्धा व्रत न करने पर निश्चय ही उक्त पाप विनष्ट होगा, किन्तु पुनर्वार उस प्रकार विद्धा तिथि में व्रताचरण करने से भीषण पाप होगा। परन्तु जो मानव शठता-वशतः शुष्क तर्क निष्ठ है, वह ही अज्ञव्यक्तिवृन्द को विद्धाव्रताचरण करने की व्यवस्था प्रदान करता है।

न चास्ति संशयं कश्चित् पुनर्न कुरुते यदि । कारापयन्ति ये त्वज्ञाः कूटयुक्तास्तु हैतुकाः ॥२३८
प्रेतयोनिं प्रपश्यन्ति पितृभिः सहिता नराः । द्वादशी दशमो-विद्धा धनसन्ताननाशिनी ।
ध्वंसिनी सर्व्वपुण्यानां कृष्णभक्तिप्रणाशिनी ॥२३९॥

तत्रैव श्रीमार्कण्डेयभगीरथ-संवादे—

न स भागवतो ज्ञेयो यः करोति हरेर्दिनम् । दशमी-वेधसंयुक्तं पापमूलं सदैव हि ॥२४०॥
पुराणमन्यथा कृत्वा करोत्येकादशीदिनम् । दशमीशेषसंयुक्तं स नरः पशुसन्ततिः ॥२४१॥
ब्रह्मघ्नस्य च यत् पापं स्त्रीबालगुरुघातिनः । दशमीशेषसंयुक्तां यः करोति तदाप्नुयात् ॥२४२
वृषली-सेवनात् पापं स्वपचीगमने च यत् । तत् पापं जायते विद्धं य करोति हरेर्दिनम् ॥२४३
दशमीशेषसंयुक्तं निषिद्धं विष्णुना पुरा । तस्माद्भागवतैर्भूप शोधयित्वा हरेर्दिनम् ।
उपोषितव्यं यत्नेन पूर्व्वसङ्गति-वर्ज्जितम् ॥२४४॥
पृथिव्यां यानि पापानि स्थूलसूक्ष्माणि भूपते । तेषां फलमवाप्नोति सशल्यैकादशीव्रते ॥२४५
कुरुते वैष्णवो भूत्वा सशल्यैकादशीव्रतम् । ज्ञानतोऽज्ञानतो वापि न स विष्णुप्रियो भवेत् ॥२४६

किञ्च, तत्रैवान्यत्र—

विद्धामेकादशीं मोहाद्दशमीशेषसंयुताम् । कुर्व्वन्न सुखमाधत्ते इहलोके परत्र च ॥२४७॥
तस्मादेकादशी युक्ता दशम्या नरसत्तम । न कर्त्तव्या प्रयत्नेन निष्कला द्वादशी मता ॥२४८॥

---

पुनर्यदि विद्धां कुरुते तदा पुनः पापोत्पत्तेरनिष्टमेवेति विद्धाकरणपापस्य महाभयानकत्वमुक्तम् । कूटं शाठ्यं, तद्युक्ताः हैतुकाः शुष्कतर्कपराः ॥२३७-२३८॥

निष्कला शुद्धा द्वादश्येव मता मुनिभिरुपवासार्थमनुज्ञातेत्यर्थः ॥२४८॥

---

अतएव वे सब पितृगण के सहित प्रेतयोनि दर्शन करेंगे । दशमी विद्धा द्वादशी अर्थात् एकादशी धन, सन्तान सर्वविध पुण्य एवं कृष्णभक्ति विनाशिनी है ॥२३७-२३९॥

उक्त स्थान के श्रीभगीरथ-मार्कण्डेय-संवाद में उक्त है—जो व्यक्ति, दशमी वेधयुक्त हरिदिन में व्रत करता है, उसको कभी भी भगवद्भक्त नहीं जानना चाहिये । दशमी संयुक्ता एकादशी को समस्त पापों का मूल जानना होगा ॥२४०॥

जो मनुष्य, पुराण वचन को अन्यथा करके दशमी शेष संयुक्त एकादशी में व्रत करता है, उसको पशु-सन्तति जानना होगा, ब्रह्मघातक का जो पाप होता है, एवं स्त्री, बालक, एवं गुरुघातक का जो पाप होता है, दशमी शेष संयुक्त एकादशी में उपवासकारी उस पाप को प्राप्त करना है ॥२४१-२४२॥

वृषली गमन से जो पाप होता है, श्वपची गमन करने पर जो पाप होता है, वह पाप विद्धाहरिवासर में व्रत करने वाले को होता है ॥२४३॥

हे भूप ! पूर्वकाल में भगवान् विष्णु, दशमी शेष संयुक्त हरिवासर में व्रत निषेध किये हैं । सुतरां भगवद् भक्तगण, यत्नपूर्वक दशमी संयुक्त एकादशी वर्जन पूर्वक शुद्ध एकादशी में व्रत करें ॥२४४॥

हे भूप ! पृथिवी में स्थूल एवं सूक्ष्म जितने प्रकार पाप हैं, विद्धा एकादशी में व्रत करने से, उक्त समस्त पापों का फल लाभ होता है । जो मानव, वैष्णव होकर ज्ञान अथवा अज्ञान में विद्धा एकादशी व्रत करते हैं, वे निश्चय ही विष्णुप्रिय नहीं होंगे ॥२४५-२४६॥

उक्त ग्रन्थ के अन्यत्र और भी वर्णित है—जो मोहवशतः दशमीशेषसंयुक्त विद्धा एकादशी में व्रतानुष्ठान

यथा चैकादशी राजन् द्वादशी च तथा नृणाम् ।
समाना तत्फला प्रोक्ता व्रतेऽस्मिन् चक्रपाणिनः ॥२४९॥

द्वारकामाहात्म्ये चन्द्रशर्म्माणं प्रति तत्पितॄणामुक्तौ—

वर्ज्जनीयः प्रयत्नेन वेधो दशमि-सम्भवः । नोचेत् पुत्र न सन्देहः प्रेतयोनिमवाप्स्यसि ॥२५०

हत्या गच्छति काश्यान्तु गयायां पैतृकं ऋणम् । दशमीवेधजं पापं न काश्यां न गयाशिरे ॥२५१

त्रैलोक्यसम्भवं पापं तेषां भवति भूतले । सशल्यं ये कुर्व्वन्ति वासरं कृष्णसंज्ञकम् ।
प्रेतत्वं दुःसहं पुत्र दुःसहा यमयातनाः ॥२५२॥

तत्रैव तं प्रति श्रीभगवदुक्तौ—

पुण्यं सुसञ्चितं याति कल्पकोटिशतार्ज्जितम् । सशल्यं ये प्रकुर्व्वन्ति मुक्तिदं मम वासरम् ॥२५३

अतएव तत्रैव भगवन्तं प्रति तत्प्रार्थने—

दशमीवेधजं पापं त्वद्दिने मम पूर्व्वजैः । यत् कृतं नाशमायातु त्वत् प्रसादाज्जनार्द्दन ॥२५४॥

सविद्धं त्वद्दिने कृष्ण यत् कृतं जागरं विभो । तत् पापं विलयं यातु लवणन्तु यथाम्भसि ।२५५

सविद्धं वासरं यस्मात् कृतं मम पितामहैः । प्रेतत्वं तेन संप्राप्तं महादुःखप्रदायकम् ॥२५६॥

---

समाना विष्णुदैवतेन, ततस्तत्तत्फलाः समानफलाः, तत्र हेतुः—व्रत इति । चक्रपाणेरेव व्रतद्वयमेतत्, अतस्तत्र साम्यं युक्तमेवेत्यर्थः ॥२४९॥

दशमीति ह्रस्वत्वमार्षम् ॥२५०॥ जागरमिति नपुंसकत्वमार्षम् ॥२५५॥

विद्धं वेधः, तेन सह वर्त्तमानम्। सा चाख्यायिका तत्रैव—'चन्द्रशर्म्मा विप्रः श्रीरुद्रैकभक्तः श्रीभगवद्विमुखः कदाचित् स्वप्ने दृष्टविद्धाव्रतेन प्रेतत्वं गतैस्तत्पितृगणैः श्रीभगवद्भक्तचर्यमुपदिष्टो द्वारकां गत्वा भगवन्तमाराध्य संप्रार्थ्य सपितृको विमुक्तिं प्राप ।' इति ॥२५६॥

---

करता है, वह मानव, इस जगत् में एवं परजगत् में अर्थात् जीवन-मरण में सुखी नहीं होता है। सुतरां हे नरश्रेष्ठ ! दशमी विद्धा एकादशी में उपवास करना उचित नहीं है। मुनिगण, शुद्धा एकादशी में उपवास की व्यवस्था प्रदान किये हैं ॥२४७-२४८॥

हे राजन् ! चक्रपाणि श्रीहरि के इस व्रत में मनुष्यवृन्द के पक्ष में जिस प्रकार एकादशी है, उसी प्रकार द्वादशी भी है। चक्रपाणि के इस व्रत में उभय तिथि ही समान फलप्रद हैं ॥२४९॥

द्वारका माहात्म्य में चन्द्रशर्मा के प्रति तदीय पितृवृन्द की उक्ति इस प्रकार है—हे पुत्र ! यत्नपूर्वक दशमीवेध संयुक्त एकादशी व्रत वर्जन करना उचित है, अन्यथा प्रेतयोनि की प्राप्ति अवश्य होगी, इसमें सन्देह नहीं है ॥२५०॥

प्राणि हत्या जनित पाप, काशी में ध्वंस होता है, गया में पितृऋण से मुक्त होता है, किन्तु दशमीवेध जनित पाप, काशी में किंवा गया क्षेत्र में विनष्ट नहीं होता है ॥२५१॥

हे पुत्र ! जो सब व्यक्ति, सशल्य अर्थात् दशमी विद्धा एकादशी में उपवास करते हैं, इस पृथिवी में उन सबको तीन लोक में उत्पन्न पाप भोगना पड़ता है। एवं वे सब दुःसह प्रेतत्व एवं दुःसहा यम यन्त्रणा को प्राप्त करते हैं ॥२५२॥

द्वारका माहात्म्य में ही चन्द्रशर्मा के प्रति श्रीभगवान् का कथन है—जो व्यक्ति, मुक्तिदायक मेरे दिन को दशमी वेध संयुक्त करके उपवास करते हैं, उनका शतकोटि कल्प सञ्चित पुण्य नष्ट होता है ॥२५३॥

पाद्मे श्रीभगवद्ब्रह्मसंवादे—

**शुक्रेण मोहिता विप्रा दैत्यानां कारणेन तु । पुष्टयर्थं दशमीविद्धं कुर्व्वन्ति मम वासरम् ॥२५७**
**वासरं दशमीविद्धं दैत्यानां पुष्टिवर्द्धनम् । मदीयं नास्ति सन्देहः सत्यं सत्यं पितामह ॥२५८॥**
**यावद्दशम्या संयुक्तं करिष्यन्ति दिनं मम । तत् पुण्यं दैत्यजातीनां सुरैर्दत्तं पितामह ॥२५९॥**
**तेन पुण्येन संपुष्टो हिरण्याक्षः पितामह । निर्ज्जित्य वासवं संख्ये हृतं राज्यं दिवौकसाम् ॥२६०**
**शुक्रेण मोहिताः सर्व्वे दैत्यानां विजयाय वै । अतो विद्धं प्रकुर्व्वन्ति वासरं मम मानुषाः ॥२६१**
**मार्कण्ड गच्छ भद्रं ते भूर्लोकन्तु ममाज्ञया । दशमीवेधविषये मायां शुक्रस्य नाशय ॥२६२॥**
**श्रीविष्णोर्वचनं श्रुत्वा मार्कण्डो मुनिसत्तमः । संप्राप्तोऽनिमिषारण्यं यत्र यज्ञपुमान् हरिः ॥२६३**
**मार्कण्डवचनं श्रुत्वा ऋषयो नैमिषालयाः । शुक्रमायाविनिर्मुक्ता विस्मयं परमं गताः ॥२६४॥**

---

हिरण्याक्षबध प्रसङ्गे दैत्यानां बधं दुष्करं दृष्ट्वा ब्रह्मणा तत्कारणं पृष्टः श्रीभगवानाह— शुक्रेणेत्यादि । कारणमेवाह—पुष्टचर्थमिति; मदीयं वासरमेकादशीदिनम् ॥२५७॥

अतएव तेन राज्यादि हृतम् ॥२६०॥

तत्राधुनोपायः कः ? तत्राह—मार्कण्डेति, मायां शुक्रस्य नाशयेति । विद्धोपवासवचनानि शुक्रमाया-कृतान्येवेत्युपदिश्य तत्रोपवासं निषेधयतीत्यर्थः ॥२६२॥

परमं विस्मयं गता इति शास्त्रेष्वपि तादृशमायासम्भवात् ॥२६४॥

---

अतएव उक्त स्थान में श्रीभगवान् के प्रति तदीय प्रार्थना विषय में कहा है—हे जनार्दन ! मदीय पूर्ब्ब पुरुषगण, आपके दिन, हरिवासर को दशमी वेध संयुक्त रूप में पालन कर जो पाप किये हैं, आपकी कृपा से वे सब पाप विदूरित हों ॥२५४॥

हे कृष्ण ! हे विभो ! आपके दिन वेध सहित जागरण करके जो पाप सञ्चित हुआ है, बल में निक्षिप्त लवण के समान वे सब विलीन हों ॥२५५॥

मेरे पितामहगण, सविद्ध हरिवासर व्रत पालन किये थे, तज्जन्य वे सब महादुःखप्रद प्रेतत्व प्राप्त किये हैं ।

पद्मपुराण के श्रीभगवत् ब्रह्मसंवाद में वर्णित है—हिरण्याक्ष बध प्रसङ्ग में दैत्यसमूह के बध को दुष्कर जानकर ब्रह्मा के द्वारा तत् कारण जिज्ञासित होकर भगवान् कहे थे,- हे ब्रह्मन् ! विप्रगण, शुक्रमाया से मोहित होकर दैत्यवृन्द की पुष्टि के निमित्त दशमी विद्ध हरिवासर व्रत करते हैं ॥२५६-२५७॥

हे पितामह ! मेरा वासर दशमीविद्ध होकर दैत्यवर्ग की पुष्टि वर्द्धन करता है । मैं पुनः पुनः सत्यकर यह कहता हूँ, इस विषय में मेरा कोई संशय नहीं है ॥२५८॥

हे पितामह ! जब तक दशमी विद्धा एकादशी में व्रत करेगा, तब तक, देवगण, निज पुण्य असुरवृन्द को प्रदान करते रहेंगे । हे पितामह ! इस कारण, उस पुण्य के द्वारा हिरण्याक्ष परिपुष्ट होकर युद्ध में इन्द्र को पराजित करके देवगण का राज्य उनसे छीन लिया है ॥२५९-२६०॥

मानवगण, शुक्र कर्त्तृक मोहित होकर असुरवृन्द के अभ्युत्थान के निमित्त दशमी विद्ध एकादशी व्रत करते हैं । अतएव हे मार्कण्डेय ! तुम्हारा मङ्गल हो, तुम मेरी आज्ञा से पृथ्वी पर जाकर दशमी वेध विषय में शुक्राचार्य्य की माया को दूर करो ॥२६१-२६२॥

मुनिसत्तम मार्कण्डेय श्रीविष्णु के वचन को सुनकर जहाँ पर यज्ञपुरुष श्रीहरि विद्यमान हैं, उस नैमिषारण्य में आगये । मार्कण्डेय के वचन श्रवणकर नैमिषारण्य वासि मुनिगण, शुक्रमाया से विनिर्मुक्त होकर परम विस्मयान्वित हुये थे ॥२६३-२६४॥

इन्द्रद्युम्नाय कथितं महाभागवताय वै। गत्वाश्रमेषु सर्व्वेषु कथितं वनवासिनाम् ॥२६५॥

हित्वा शुक्रस्य वाक्यानि मार्कण्वचनाज्जनैः।
त्यक्ता दशमिसंयुक्ता विप्राद्यैः पुण्यकाङ्क्षिभिः ॥२६६॥

पूर्णावेधकुठारेण नरा द्वादशीपादपम्। छेदयन्ति च ये पापाः कल्पान्तं नारका हि ते ॥२६७

भविष्ये, मार्कण्डेयपुराणे च—

पूर्णाविद्धामुपास्ते को नन्दां वेदबलादपि। को वेद वचनात्तात गोसवे गां निहन्ति वै ?२६८॥

दशमीशेषसंयुक्तमाश्रयेत् को व्रतं व्रती। तस्मादेकादशी त्याज्या दशमीपलमिश्रिता।
उपोष्या द्वादशी शुद्धा त्रयोदश्यान्तु पारणम् ॥२६९॥

कौर्म्मे ब्रह्मवैवर्त्ते च श्रीव्याससूतसंवादे—

सुपुण्यैकादशी सूत यदि शल्यविवर्ज्जिता। कर्त्तुर्निरयपाताय सशल्या समुपोषिता।
शल्यं वेध इति प्रोक्तं पुराणार्थविचक्षणैः ॥२७०॥

---

वनवासिनां वनवासिनः प्रति कथितं मार्कण्डेयेन ॥२६५॥

पूर्णया दशम्या वेध एव कुठारस्तेन छेदयन्ति, तत्र व्रतद्वारा ॥२६७॥

वेदबलादपीति—वेदेषु तादृशानि वचनानि न सन्त्येव, सत्स्वपि तद्बलान् क उपास्ते ? अपि तु न कोऽपि। कथञ्चित् पूर्व्ववृत्तानामपि वचनानां परवचनैर्बाधितत्वात। तत्र दृष्टान्तः—गोमेधे पूर्व्ववृत्तमपि गोबधं कः कुर्य्यात् ? अधुना कलिकाले तन्निषेधात्। एवं शुक्रमायादिना कथञ्चित् पूर्व्वं वृत्तानामपि विद्धोपवासवचनानामधुना श्रीभगवदाज्ञया मार्कण्डेयवचनेन निषिद्धत्वात् पुर्नविद्धोपवासं कः कुर्य्यादित्यर्थः ॥२६८॥

यदि शल्यविवर्जितैकादशी समुपोषिता, तदा सुपुण्या परममङ्गलकारिणीत्यर्थः। सा चेत् सशल्या समुपोषिता, तदा कर्त्तुस्तद्व्रतकर्त्तुर्निरये पतनाय भवति सैव ॥२७०॥

---

अनन्तर मार्कण्डेय, परम भागवत इन्द्रद्युम्न को कहकर वर्णाश्रमिवृन्द के आश्रमों में जाकर उन सबको उक्त विवरण कहे थे ॥२६५॥

अनन्तर मार्कण्डेय के वचन में विश्वस्त होकर पुण्याभिलाषी विप्रादि जनगण शुक्र वाक्यसमूह को उल्लङ्घन पूर्वक दशमी संयुक्ता एकादशी व्रत को वर्जन किये थे ॥२६६॥

जो पापपरायण मानववृन्द, पूर्णा दशमी वेध रूप कुठार के द्वारा द्वादशी रूप तरु को छेदन करते हैं, वे सब कल्पकाल पर्यन्त नरक में निवास करते हैं ॥२६७॥

भविष्य एवं मार्कण्डेय पुराण में भी वर्णित है—हे वत्स ! विधि प्राप्त होने पर भी कौन व्यक्ति दशमी विद्धा एकादशी में उपवासी रहते हैं ? अथवा कौन व्यक्ति ही वेद वचनाधीन होकर गोमेध-यज्ञ में गो-बध करते हैं ? ॥२६८॥

कौन व्रती व्यक्ति, दशमीशेषसंयुक्त व्रत को अवलम्बन करते हैं ? अतएव दशमी पल मिश्रित एकादशी वर्जन पूर्वक शुद्धा द्वादशी में उपवास करके त्रयोदशी में पारण करे ॥२६९॥

कूर्म एवं ब्रह्मवैवर्त्त पुराण में श्रीव्यास-सूत-संवाद में लिखित है—हे सूत ! यदि शल्यरहिता शुद्धा एकादशी सुष्ठु रूपेण उपोसिता होती है, तो वह परम मङ्गलरूपिणी होती है। यदि शल्ययुक्ता एकादशी उपोषिता होती है तो वह उपवासकारी के नरकपात का कारण बन जाती है। अतएव पुराणार्थ विचक्षण व्यक्तिवृन्द शल्य को वेध शब्द से निरूपण किये हैं ॥२७०॥

किञ्च, तत्रैव श्रीसूतशौनकसंवादे —

ये तु मिथ्याभिधानेन मोहयन्ति नरा भुवि । विमूढ़ाः पापिनस्तेषां रौरवं शरणं चिरम् ॥२७१
अध्यापयन्त्यविज्ञेयं पण्डितन्मन्यबुद्धयः । कारयन्त्यबुधा लोके द्वादशीं दशमीयुताम् ॥२७२॥
ये कारयन्ति कुर्व्वन्ति द्वादशीं दशमीयुताम् । शुद्धये तन्मुखं वीक्ष्य सूर्य्यदर्शनमाचरेत् ॥२७३
नमो नारायणायेति जपेद्वा द्वादशाक्षरम् । वराकाः किमु जानन्ति प्राणिनः कार्य्यनिश्चयम् ?
धिग्धिङ्मूढ़धियः पापान् धर्म्मविप्लवकारिणः ॥२७४॥
हिंसितो भगवांस्तेन द्वादशी दशमीयुता । कृता येन द्विजश्रेष्ठ सम्यगुक्तं मया तव ॥२७५॥
संस्थितो भगवान् कृष्णो द्वादशीरूपधृग् यतः । तस्मादसंशयं त्याज्या द्वादशी दशमीयुता ॥२७६

किञ्च—

द्वयोर्विवदतोः श्रुत्वा द्वादशीं समुपोषयेत् । पारणन्तु त्रयोदश्यामेष शास्त्रविनिर्णयः ॥२७७॥
द्वादशी दशमीयुक्ता यत शास्त्रे प्रतिष्ठिता । न तत् शास्त्रमहं मन्ये यदि ब्रह्मा स्वयं वदेत् ॥२७८

---

अधुना विद्धोपवासोपदेशकान्निन्दति— ये त्विति सार्द्धैश्चतुर्भिः । अविज्ञेयं स्वयं ज्ञातुमशक्यमप्यन्यानध्यापयन्तीति ॥२७१-२७२॥

विद्धाकरणे च महादोषविशेषं पुनराह—हिंसित इति द्वाभ्याम् ॥२७५-२७६॥

कुतर्कबलतो विवादेनानिश्चयेऽपि जाते विद्धां परित्यज्य शुद्धा द्वादश्यवोपोष्यति सनिश्चमाह— द्वयोरिति ॥२७७॥

ननु शास्त्रदृष्टेरविवादः, तत्राह—द्वादशीति । अहं वेदव्यासः ॥२७८॥

---

उक्त स्थल में ही श्रीसूत-शौनक-संवाद में लिखित है— जो सब पापपरायण विमूढ़जन पृथिवी में मित्थ्या व्यवस्था के द्वारा मनुष्यवृन्द को विमोहित करते हैं, वे सब बहु काल यावत् रौरव नरक में निवास करते हैं ॥२७१॥

जो सब पण्डितम्मन्यजन, पृथिवी में अविशेष अध्यापन करते हैं, जो सब मानव, अज्ञव्यक्तिवृन्द के मध्य में दशमीयुक्ता एकादशी को विहित कहकर प्रचार करते हैं, उस प्रकार दशमीयुक्त एकादशी का व्रत पालन करते हैं, एवं करवाते हैं, उनके मुखदर्शन कर शुद्धि के निमित्त सूर्य्य दर्शन करना चाहिये, किंवा 'नमो नारायणाय' मन्त्र, अथवा द्वादशाक्षर मन्त्र का जप करना चाहिये । क्षुद्र मानववृन्द क्या जीवों के कर्त्तव्य को निश्चित रूप से जानने में समर्थ होते हैं ? धर्म विप्लवकारी मूढ़मति पापीसमूह को पुनः पुनः धिक्कार है ॥२७२-२७४॥

हे द्विजश्रेष्ठ ! मैं आपके समीप में निश्चय कर कहता हूँ, जो व्यक्ति, दशमी विद्धा एकादशी में उपवासी रहते हैं, उनको भगवद्विद्वेषी जानना होगा, कारण, भगवान् श्रीहरि, एकादशी रूप धारण किये हैं, सुतरां दशमी विद्धा एकादशी को परित्याग करना चाहिये, इसमें संशय नहीं है ॥२७५-२७६॥

और भी वर्णित है—वादिद्वय के परस्पर विवाद में कुतर्क के कारण किसी प्रकार स्थिर सिद्धान्त न होने पर यह सुनकर द्वादशी तिथि में उपवास कर त्रयोदशी तिथि में पारण करना चाहिये । यह शास्त्र निर्देश है । जिस शास्त्र में दशमीयुक्ता एकादशी विहिता है, उसका विधायक स्वयं ब्रह्मा होने पर भी उसको मैं शास्त्र नहीं मानता हूँ । यहाँ पर 'अहम् मैं' शब्द से वेदव्यास को जानना होगा ॥२७७-२७८॥

अतएव नारदीये—

बहुवाक्यविरोधेन सन्देहो जायते यदा । उपोष्या द्वादशी तत्र त्रयोदश्यान्तु पारणम् ॥२७९॥

श्रीमार्कण्डेयेन चेन्द्रद्युम्नं प्रति श्रीभगवदाज्ञायाः प्रतिपालने—

विवादेषु च सर्व्वेषु द्वादश्यां समुपोषणम् । पारणं हि त्रयोदश्यामाज्ञेयं मामकी मुने ।
हेतुवादो न कर्त्तव्यो हेतुना पतते नरः ॥२८०॥

अतएव पितामहः—

एकादशी-दिनक्षये उपवासं करोति यः । तस्य पुत्रा विनश्यन्ति मघायां पिण्डतो यथा ॥२८१

दिनक्षये तु संप्राप्ते नोपोष्या दशमीयुता । यदीच्छेत् पुत्रपौत्राणां वृद्धिं सम्पदमात्मनः ॥२८२

व्यासः—

एकादशीदिने क्षीणे उपवासी भवेद्‌गृही । अन्नाभावे निरुद्धो वा सङ्कल्पाद्वा विशेषतः ॥२८३

धर्म्महानिश्च भवति सन्ततिर्नश्यति ध्रुवम् । तस्यायुः क्षीयते नित्यं संवत्सरमिति श्रुतिः ॥२८४

अतएव गोभिलः—

एकादश्यां यदा ब्रह्मन् दिनक्षयतिथिर्भवेत् । तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणम् ॥२८५॥

श्रीनारदीये—

क्षये वाप्यथवा वृद्धौ संप्राप्ते वा दिनत्रये । उपोष्या द्वादशी शुद्धा त्रयोदश्यान्तु पारणम् ॥२८६

---

विद्धावर्ज्जनमेव तिथिक्षयदिनोपवासदोषदर्शनादिना साधयति—एकादशीत्यादिना ; एकादशीदिनस्य क्षयो दशम्याः शेषानुवृत्तावेव स्यात् । अतस्तद्दिनं विद्धमेव, तस्मिन् य उपवासं करोति ॥२८१॥

दशमीयुतेति द्वादशीक्षयव्यावृत्त्यर्थम् ॥२८२॥

क्षये तिथिक्षये, दिन ये, त्र्यहस्पर्श इत्यर्थः । एवं त्रयोदशीवियोगसंयोगाभ्यां भेदः ॥२८६॥

---

अतएव नारद पुराण में कथित है—जहाँ पर बहु वाग्वितण्डा हेतु सन्देहोत्पत्ति होती है, वहाँ द्वादशी में उपवास करके त्रयोदशी में ही पारण करना उचित है ॥२७९॥

श्रीमार्कण्डेय के द्वारा इन्द्रद्युम्न के प्रति श्रीभगवदाज्ञा पालन में वर्णित है—हे मुने ! सर्व प्रकार विवाद स्थल में मेरा आदेश यह है कि, द्वादशी में उपवास करके त्रयोदशी में पारण करना कर्त्तव्य है । इसमें हेतु-वाद निष्प्रयोजन है, हेतुवाद द्वारा मानव नरकगामी होते हैं । अतएव पितामह का कथन है, एकादशी दिन क्षय में उपवास करने से मघा नक्षत्र में पिण्डदान करने पर जिस प्रकार पुत्रसमूह विनष्ट होते हैं, उस प्रकार ही होते हैं । अतएव पुत्र पौत्रादि की वृद्धि एवं सम्पद् लाभेच्छु होने पर कभी भी दिन क्षय में अर्थात् त्र्यहस्पर्श में अर्थात् दशमी संयुक्ता एकादशी में उपवास न करे ॥२८०-२८२॥

व्यासोक्ति में प्रकाशित है—अन्न के अभाव में, राजादि कर्त्तृक रुद्ध होकर, अथवा कामना भेद से दिन क्षय में अर्थात् दशमी विद्धा एकादशी में उपवास करने में उस गृहस्थ का धर्मकोप होता है । सन्तति का विनाश होता है, एवं नित्य संवत्सर परिमित आयुः घटती है ॥२८३-२८४॥

अतएव गोभिल ने कहा है—हे ब्रह्मन् ! एकादशी में त्र्यहस्पर्श होने पर अर्थात् तिथि क्षय होने पर उस एकादशी को परित्याग करके द्वादशी में उपवास करना चाहिये । इस प्रकार उपवास करके त्रयोदशी में पारण करने पर शतयज्ञ का फल लाभ होता है ॥२८५॥

श्रीनारद पुराण में लिखित है—तिथि क्षय में अथवा तिथि वृद्धि में, अथवा दिनत्रय सम्प्राप्ति में शुद्धा-द्वादशी में उपवासी रहकर त्रयोदशी में पारण करना चाहिये ॥२८६॥

किञ्च —

दशम्यैकादशी विद्धा परतो द्वादशी न चेत् । द्वादशी तु तदोपोष्या त्रयोदश्यान्तु पारणम् ।।२८७

कौर्म्मे—

दिनक्षये तु सम्प्राप्ते उपोष्या द्वादशी भवेत् । दशमीशेषसंयुक्तां न कुर्व्वीत कदाचन ।।२८८।।

किञ्च—

तिथिवृद्धौ तथा ह्रासे संप्राप्ते वा दिनक्षये । सन्दिग्धेषु च वाक्येषु द्वादशीं समुपोषयेत् ।।२८९

ब्राह्मे—

तिथिच्छेदे तु संप्राप्ते द्वादशीं समुपक्रमेत् । पारयेद्वै त्रयोदश्यां यदीच्छेच्छ्रेय आत्मनः ।।२९०

जपे होमे तथा दाने ब्राह्मणानाञ्च तर्पणे । पारणे चापि राजेन्द्र प्रशस्ता च त्रयोदशी ।।२९१

स्कान्दे च—

एकादश्यान्तु विद्धायां नोपवासार्च्चनादिकम् । द्वादश्यामेव तत् कुर्य्यात्त्रयोदश्यान्तु पारणम् ।
शतयज्ञाधिकं पुण्यं मुक्तिरेव महाफलम् ।।२९२।।

किञ्च—

ऊर्द्ध्वं हरिदिनं न स्याद्द्वादशीं ग्राहयेत्ततः । द्वादश्यामुपवासोऽत्र त्रयोदश्यान्तु पारणम् ।।२९३
एवं कुर्व्वन् नरो भक्त्या विष्णुसायुज्यमाप्नुयात् ।
अन्यथा कुरुते यस्तु स याति नरकं ध्रुवम् ।।२९४।।

---

तिथिच्छेदे तिथिक्षये ।।२९०।।

यच्चोक्तं विष्णुरहस्यादौ—'पारणन्तु न कर्त्तव्यमुपोष्यैकादशीमिह । त्रयोदश्यां नरैर्नित्यं धर्म्मवृद्धिमभीप्सुभिः ।।' इत्यादि । तत्राह—जप इति । एवं त्रयोदशीपारणनिषेधवचनानि त्रयोदश्यां द्वादशीसद्भावे द्वादश्यतिक्रमेण त्रयोदश्यां पारणविषयाणि ज्ञातव्यानि । एतच्चाग्रे विवृतं भावि ।।२९१-२९४।।

---

और भी लिखित है—दशमी संयुक्ता एकादशी के पश्चात् द्वादशी न होने से शुद्धा द्वादशी में उपवासी रहकर त्रयोदशी में पारण करे ।।२८७।।

कूर्मपुराण में लिखित है—त्र्यहस्पर्श होने पर द्वादशी में उपवास करना चाहिये, कभी भी दशमी विद्धा एकादशी में उपवास न करे ।।२८८।।

और भी लिखित है—एकादशी की वृद्धि अथवा ह्रास होने पर किंवा त्र्यहस्पर्श होने से अथवा वाक्य विरोध में सन्देह उपस्थित होने पर द्वादशी में उपवास करे ।।२८९।।

ब्रह्मपुराण में लिखित है—तिथिक्षय स्थल में द्वादशी में उपवास कर त्रयोदशी में पारण करना ही निज शुभाकाङ्क्षी के पक्ष में उचित है । हे राजश्रेष्ठ ! त्रयोदशी तिथि ही जप में, होम में, दान में, ब्राह्मणवृन्द के तर्पण कार्य्य में एवं पारण कार्य्य में प्रशस्ता है ।।२९०-२९१।।

स्कन्दपुराण में वर्णित है—विद्धा एकादशी में उपवास किंवा अर्चनादि करना उचित नहीं है । द्वादशी में उक्त समस्त कार्य्य सम्पादन करके त्रयोदशी में पारण करना चाहिये । उससे शतयज्ञाधिक पुण्य एवं महाफल मुक्ति को प्राप्त हो सकते हैं ।।२९२।।

और भी वर्णित है—दशमी विद्धा एकादशी को हरिवासर में गिना नहीं जाता है, अतएव द्वादशी ही ग्रहण योग्य है । यहाँ पर द्वादशी में उपवास कर त्रयोदशी में पारण विहित है । मनुष्य इस प्रकार भक्तिपूर्वक व्रतानुष्ठान करने से विष्णु सायुज्यरूप मुक्ति प्राप्त कर सकते हैं, किन्तु इसके विपरीत आचरण करने

एकादशी ऋषीणां तु द्वादशी चक्रपाणिनः ।।२९५।।

अतएव मार्कण्डेयेन्द्रद्युम्न-संवादे—

एकादशी ऋषीणान्तु द्वादशी चक्रपाणिनः । तत् कथं द्वादशी भूप नोपोष्या क्रियते जनैः ?२९६
एषा निःश्रेयसी भूप फलभोगविवर्द्धिनी । मोक्षात्मिका पुरा प्रोक्ता द्वादशी प्रवरा तिथिः ।।२९७
एकादशी शरीरन्तु पुरुषो द्वादशी स्मृता । द्वादश्यामुपवासेन सिद्धा भूप सहस्रशः ।।२९८।।
चक्रवर्त्तित्वमतुलं संप्राप्ता अचलां श्रियम् । चतुर्द्दशैते सञ्जाता बलिनश्चचक्रवर्त्तिनः ।।२९९।।
विष्णवंशास्ते महावीरा दुष्टदैत्यनिवर्हणाः । उपोष्य द्वादशीं शुद्धां यावज्जीवं व्रतान्विताः ।।३००
चक्रवर्त्तित्वमापन्ना भुक्त्वा भोगान् सुखानि वै । कुवलाश्वो विश्वगन्धिर्हरिश्चन्द्रो नलः पृथुः ।।३०१
मरुत्तो भरतश्चैव कार्त्तवीर्य्यश्च हैहयः । मान्धाता सगरो रामः ककुत्स्थो नहुषस्तथा ।।३०२
उपोष्य द्वादशीं पुण्यामपराश्च विवर्ज्ज्य तु । भुक्त्वा स्वर्गसुखान्येते चक्रवर्त्तित्वमागताः ।।३०३
जनकानां महीपाल द्वादश्यां समुपोषणे । सप्तत्या सन्ततिर्युक्ता संसिद्धिं परमां गता ।।३०४।।

---

यद्यप्येकादश्यपि भगवत एव तिथिः, तथापि ऋषीणां सम्बन्धेनैव द्वादशी च साक्षाच्चक्रपाणेरेवेति द्वादश्या माहात्म्यविशेषार्थमुक्तम् ।।२९५।।

श्रीमार्कण्डेयेन पूर्व्वमेकादश्युपवासो द्वादश्याञ्च पारणमित्युक्त्वाऽनन्तरञ्च वेधसंशयादौ सति द्वादश्युपवासस्त्रयोदश्यां पारणमित्युक्तम् ; तत्र सर्व्वत्र सुप्रसिद्धैकादशीव्रतपरित्यागेन कथञ्चिद्दोषः स्यादित्याशङ्कया महाराजेन्द्रद्युम्नेन पृष्टे सति द्वादश्युपवासेनैव सर्व्वदोषक्षयो महाफलञ्चेति द्वादशीमाहात्म्यं श्रीमार्कण्डेयेनोक्तं लिखति—एकादशीत्यादिना पापनाशिनीत्यन्तेन ।।२९६।।

फलं मोक्षादि, भोगश्च विषयसुखादिस्तयोर्वर्द्धनी । पाठान्तरे फलं स्वर्गादिसुखं, तस्य भोगेन रहिता, मोक्षात्मकत्वात् ।।२९७।।

अपराम् एकादशीम् ।।३०३।।

---

से नरक में गति होती है । एकादशी ऋषिवृन्द की तिथि है । एवं द्वादशी श्रीहरि की प्रसिद्ध तिथि है ।। ।।२९३-२९५।।

अतएव मार्कण्डेय-इन्द्रद्युम्न-संवाद में वर्णित है— हे राजन् ! यहाँ पर जिज्ञास्य हो सकता है कि, जब एकादशी ऋषिवृन्द की तिथि है एवं द्वादशी श्रीहरि की तिथि है, तब मानवगण द्वादशी में उपवास क्यों नहीं करते हैं ? तदुत्तर में कहते हैं,–हे भूप ! यह एकादशी, केवल मङ्गलरूपिणी, स्वर्ग सुख एवं विषय सुखादि विवर्धिनी है पहले तिथिप्रधाना द्वादशी को मोक्षात्मिका कही गई है ।।२९६-२९७।

हे भूप ! एकादशी को शरीर, एवं द्वादशी को पुरुष कहकर स्मरण किया जाता है । सहस्र-सहस्र पुरुषों ने द्वादशी में उपवास पूर्वक सिद्धि प्राप्त कर अतुल चक्रवर्त्ती पद और अचला श्री प्राप्त की है । श्रीहरि के अंशस्वरूप वक्ष्यमाण चतुर्दश संख्यक पुरुष, महाबलशाली चक्रवर्त्ती, महावीर्य्यवान् एवं दुष्ट दैत्यानवर्हण हुए थे । यह सब आजीवन व्रतधारी होकर शुद्धा द्वादशी में उपवासी रहकर सार्वभौम पद लाभ पूर्वक सुख सम्भोग कर गये हैं । कुवलाश्व, विश्वगन्धि, हरिश्चन्द्र, नल, पृथु, मरुत्त, भरत, कार्त्तवीर्य्य, हैहय, मान्धाता, सगर, राम, ककुत्स्थ एवं नहुष,-यह सब उक्त चतुर्दश पुरुष हैं । इन सब पुरुषों ने एकादशी परित्यागपूर्वक पुण्यस्वरूपिणी द्वादशी में उपवासी रहकर स्वर्गसुख उपभोग कर चक्रवर्त्ती पद लाभ किये थे ।।२९८-३०३।।

हे महीपाल ! जनकवंश की सप्तति संख्यक सन्तति ने द्वादशी में उपवास करके परमा सिद्धि प्राप्त की थी । पुरुकुत्स नामक राजा द्वादशी में उपवास करके दुष्पार कर्मबन्धन छेदन पूर्वक सिद्धि को प्राप्त हुये थे ।

पुरुकुत्सो महोपालो द्वादश्यां समुपोषणे । सिद्धिं गतः परित्यज्य कर्म्मबन्धं दुरासदाम् ॥३०५
मान्धात यौवनाश्वश्च द्वादश्यां समुपोषणे । संग्रामे निधनं प्राप्य संप्राप्तः परमं पदम् ॥३०६॥
शाकुन्तलो महोपालो दौष्मन्तिरपराजितः । द्वादश्यामुपवासेन गतस्तद्वैष्णवं पदम् ॥३०७॥
वैण्यः पुरूरवा भूप पालयित्वा धरातलम् । धरणीधरमभ्यर्च्चय द्वादशीषु सदा पुनः ।
गतस्तद्वैष्णवं लोकं दाहप्रलयवर्ज्जितम् ॥३०८॥
एते राजर्षयो भूप द्वादश्यां समुपोषणैः । सिद्धिं परमिकां प्राप्ता ये द्विजास्तान् शृणुष्व मे ॥३०९
यावक्रीतश्च वैदर्भो माण्डव्यः कौशिको मुनिः ।
भरद्वाजस्तथा कण्वः कुम्भयोनिस्तथा मुनिः ॥३१०॥
अष्टाशीति सहस्राणि मुनीनामूर्द्ध्वरेतसाम् । प्रयान्ति स्यन्दनस्याग्रे तिमिरारेर्जनाधिप ॥३११
ते सर्व्वे परमां सिद्धिं द्वादश्यां समुपोषणे । मया सह गता भूप कथन्ते संशयो भवेत् ?३१२॥
द्वादशीवासरं राजन् हरिगुह्यं प्रकीर्त्तितम् । निरापबाधं लोकेऽस्मिन् शुद्धं वैष्णववल्लभम् ॥३१३
तस्माद्भूप न सन्देहः कर्त्तव्यो द्वादशीं प्रति । विशेषफलदा प्रोक्ता द्वादशी पापनाशिनी ॥३१४

अथ सम्पूर्णा-लक्षणेन विद्धा लक्षणम्

स्कान्दे —
प्रतिपत्-प्रभृतयः सर्व्वा उदयादोदयाद्रवेः । सम्पूर्णा इति विख्याता हरिवासरवर्ज्जिताः ॥३१५

---

दुरासदामन्यैर्दुर्ल्लभां सिद्धिम्; पाठान्तरे दुष्परिहरं कर्म्मबन्धम् ॥३०५॥
निःशेषेण आ सम्यक् अपगता बाधा यस्मिन्; पाठान्तरे निर्गतमात्मापराधोद्भवं फलं यस्मात तत् ॥३१३
एवं सर्व्वथा विद्धा परित्याज्येति निश्चितम्; तत्रापेक्षितं विद्धालक्षणं सम्पूर्णा-लक्षणभिन्नत्वेन लिखति—प्रतिपदिति त्रिभिः । रवेः उदयात् एकमुदयमारभ्य आउदयादन्योदयावधि यदि स्युस्तदा सम्पूर्णा इत्यर्थः । हरिवासर एकादशी, तद्वर्ज्जिताः । स च नैतादृशः, किन्तु उदयात् पूर्व्वं मुहूर्त्तद्वयं यद्यसौ भवति, तदैव सम्पूर्णः स्यादित्यर्थः ॥३१५॥

---

युवनाश्व तनय मान्धाता, द्वादशी में उपवास कर युद्धस्थल में कालकवलित होकर परम पद प्राप्त किये थे। अपराजेय शाकुन्तल दौष्मन्ति राजा भरत, द्वादशी में उपवास कर वैष्णव-पद लाभ किये थे ॥३०४-३०७॥

हे भूप ! वैण्य एवं पुरुरवा, वसुमती पालन एवं द्वादशी में धरणीधर अनन्त की पूजा करके दाह प्रलय वर्जित वैष्णव लोक में प्रस्थान किये थे। हे भूप ! राजर्षिगण, द्वादशी में उपवास करने के कारण उसके फल से परमासिद्धि को प्राप्त हुए हैं। जो सब द्विजवृन्द, द्वादशी में उपवास करके परमागति को प्राप्त हुए हैं, अनन्तर मुझसे उनके नाम श्रवण करो ॥३०८-३०९॥

यावक्रीत, वैदर्भ, माण्डव्य, कौशिक, भरद्वाज, कण्व, अगस्य, प्रभृति अष्टाशीति सहस्र संख्यक ऊर्द्ध्वरेता ऋषिगण, तमोहारी तपनदेव के विमान के अग्र में गमन करते हैं ॥३१०-३११॥

हे राजन् ! मुनिगण, द्वादशी में उपवास करके मेरे सहित परमासिद्धि को प्राप्त हुये हैं। इसमें तुम्हारे संशय करने की बात क्या हो सकती है ? हे राजन् ! श्रीहरि की गुह्य यह द्वादशी का दिन ही बाधाहीन, विशुद्ध एवं श्रीहरिप्रीतिद है। सुतरां हे राजन् ! द्वादशी के प्रति कभी भी सन्देह न करना। पातकनाशिनी द्वादशी विशेष फलदायिनी हो कही गई है ॥३१२-३१४॥

अथ सम्पूर्णा-लक्षणेन विद्धा-लक्षणम्

अनन्तर सम्पूर्ण लक्षण को कहकर उससे भिन्नत्व रूप में विद्धा के लक्षण कहते हैं। स्कन्दपुराण में

गारुड़े शिवरहस्ये च—

उदयात् प्राक् यदा विप्र मुहूर्त्तद्वयसंयुता । सम्पूर्णैकादशी नाम तत्रैवोपवसेद्गृही ॥३१६॥

भविष्ये च—

आदित्योदयवेलायाः प्राङ्मुहूर्त्तद्वयान्विता । एकादशी तु सम्पूर्णा विद्धान्या परिकीर्त्तिता ॥३१७
इति ॥

अतएव परित्याज्या समये चारुणोदये । दशम्यैकादशी विद्धा वैष्णवेन विशेषतः ॥३१८॥

अथ अरुणोदयविद्धा-परित्यागः

तत्र कण्वः—

अरुणोदयवेलायां दशमी-संयुता यदि । अत्रोपोष्या द्वादशी स्यात्त्रयोदश्यान्तु पारणम् ॥३१९॥

---

तदेव श्रीगरुड़पुराणादिवचनैर्दर्शयति—उदयादिति द्वाभ्याम् । गृहीति विद्धायां केचिदुपवासं व्यवस्थापयन्ति, तत्परिहारार्थमुक्तम् ॥३१६॥

अन्या उक्तलक्षणसम्पूर्णेतरा विद्धोक्ता ॥३१७॥

अतः पूर्व्वविद्धात्यागादेव हेतोः, तत्र च उदयात् प्राक् मुहूर्त्तद्वयान्तर्दशमी-प्राप्त्या वेधप्रसङ्गाद्धेतोरेव, अरुणस्योदयो यस्मिन् तस्मिन् समये दशम्या विद्धैकादशी परित्याज्या सर्व्वैरेव । तत्र च वैष्णवेन विशेषतः परित्याज्येति 'वैष्णवेन न कर्त्तव्यं तद्धि चैकादशीव्रतम्' इति भविष्यपुराणादिविशेषोक्तेर्वैष्णवेतरेषां शैवसौरादीनां केषाञ्चित् कथञ्चित् विद्धोपवासव्यवस्थापनाभिप्रायेण; तच्चाग्रे व्यक्तं भावि ॥३१८॥

---

लिखित है—प्रतिपदादि तिथिसमूह रवि के एक उदय से आरम्भ कर पुनरुदय पर्य्यन्त षष्टि दण्ड पूर्ण करने पर उसको 'सम्पूर्णा' कहते हैं । किन्तु एकादशी तिथि के सम्बन्ध में यह नियम नहीं है । सूर्य्योदय के पूर्व में दो मुहूर्त्त (चार दण्ड) काल के शुरू होने से ही एकादशी को 'सम्पूर्णा' कहते हैं । अर्थात् प्रतिपत् प्रभृति तिथि सूर्य्योदय विद्धा होती हैं, एवं एकादशी तिथि अरुणोदय विद्धा होती है । कारण, प्रतिपद् प्रभृति तिथि का पूर्णत्व एक सूर्य्योदय से आरम्भ कर द्वितीय सूर्य्योदय काल में है, एकादशी तिथि का पूर्णत्व, किन्तु, अरुणोदय से आरम्भ कर अपर अरुणोदय में ही है । अतएव उभय तिथि में सूर्य्योदय विद्धा प्रतिपत् प्रभृति में, एवं अरुणोदय विद्धा, एकादशी तिथि में स्वीकृत है । पूर्णत्व के समय पूर्ण तिथि का प्रवेश होने से ही विद्धा होती है ॥३१५॥

गरुड़ पुराण में एवं शिवरहस्य में कथित है—हे विप्र ! सूर्य्योदय के पूर्व में दो मुहूर्त्त एकादशी तिथि होने से, एसको 'सम्पूर्णा' कही जाती है । इस एकादशी में ही गृहस्थ को उपवास करना चाहिये ॥३१६॥

भविष्य पुराण में भी लिखित है—सूर्य्योदय के पूर्व में दो मुहूर्त्त एकादशी तिथि होने पर वह 'सम्पूर्णा' होती है, तद्व्यतीत आदित्योदय के पूर्व में एकादशी में मुहूर्त्तद्वय की न्यूनता होने पर वह दशमी विद्धा होती है । अर्थात् कथित सम्पूर्णा लक्षण से भिन्न होने पर अर्थात् सूर्य्योदय के पूर्व में दो मुहूर्त्त से कम रहने पर दशमी विद्धा में गिनी जाती है, अर्थात् उक्त दो मुहूर्त्त काल में दशमी का प्रवेश होता है ॥३१७॥

अतएव अरुणोदय समय में दशमी समन्विता एकादशी को परित्याग करे । विशेषतः वैष्णव के पक्ष में दशमी समन्विता एकादशी सर्वथा परित्याजा है ॥३१८॥

इस विषय में कण्व की उक्ति है—अरुणोदय वेला में दशमीविद्धा एकादशी होने पर द्वादशी में उपवास करके त्रयोदशी में पारण करना चाहिये ॥३१९॥

स्कान्दे—

अरुणोदयवेलायां दशमी यदि सङ्गता । रविचक्रार्द्धमात्रापि द्वादशीमुपवासयेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणम् ॥३२०॥

अतएव गारुड़े—

उदयात् प्राक् त्रिघटिकाव्यापिन्येकादशी यदा ।
सन्दिग्धैकादशी नाम वर्ज्जयेद्धर्म्मकाङ्क्षया ॥३२१॥

उदयात् प्राङ्मुहूर्त्तेन व्यापिन्येकादशी यदा । संयुक्तैकादशी नाम वर्ज्जयेद्धर्म्मवृद्धये ॥३२२॥

आदित्योदयवेलायामारभ्य षष्टिनाड़िकाम् । सम्पूर्णैकादशी नाम त्याज्या कर्म्मफलेप्सुभिः ॥३२३

एषां सर्व्वेषामन्ते—

पुत्रपौत्रसमृद्ध्यर्थं द्वादश्यामुपवासयेत् । तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणम् ॥३२४॥

किञ्च, ब्रह्मवैवर्त्ते सूतशौनकसंवादे—

अरुणोदयवेलायां या स्तोकापि तिथिर्भवेत् । पूर्णेत्यवगन्तव्या प्रभूता नोदयं विना ॥३२५॥

---

रविचक्रार्द्धमात्रापीति—सारथेररुणस्योदयात् प्रागेव रथचक्रोदयं, तत्रार्द्धचक्रोदयमात्रप्राप्तत्वेन अत्यल्पापीत्यर्थः । यथोक्तं भविष्ये—'अरुणोदये तु दशमी गन्धमात्रं भवेद्यदि' इति ॥३२०॥

त्रिघटिकेत्यनेन दशम्या घटिकैका अरुणोदये प्रविष्टेति ज्ञेयम् । एतच्च संज्ञाविशेषार्थमुक्तम् । एवमग्रेऽपि ताञ्च धर्म्मकाङ्क्षया वर्ज्जयेदिति, अन्यथा धर्म्महानिः स्यादित्यर्थः । एवमग्रेप्यूह्यम् ॥३२१-३२२॥

एषां गारुड़ोक्तानां त्रिश्लोकानाम्; पुत्राणां पौत्राणाञ्च समृद्धये; यद्वा, पुत्राश्च पौत्राश्च समृद्धयश्च धनादि सम्पत्तयस्तदर्थम् ॥३२४॥

तिथिरेकादशी, अरुणोदयं विना न प्रभूता न सम्पूर्णा । एकमरुणोदयमारभ्यान्यारुणोदयं यावद्व्यापिन्येव सती सम्पूर्णा स्यादित्यर्थः ॥३२५॥

---

स्कन्दपुराण में लिखित है—अरुणोदय काल में सूर्य्य चक्रार्द्धमात्र दशमीसङ्गता अर्थात् सूर्य्य के रथचक्र के ईषन्मात्र उदय काल में दशमीयुक्ता एकादशी होने पर भी द्वादशी में उपवास करके त्रयोदशी में पारण करना चाहिये । कारण, यह पारण, क्रतुशतानुष्ठान के पुण्य स्वरूप है ॥३२०॥

अतएव गरुड़पुराण में वर्णित है—आदित्योदय के पूर्व में घटिकात्रय व्यापिनी एकादशी होने से भी उसको 'सन्दिग्धा एकादशी कहते हैं । यहाँ तीन घड़ी कहने से अरुणोदय काल में दशमी की एक घड़ी प्रवेश हुई है; जानना होगा । यह संज्ञा है । धर्माभिलाषी के पक्ष में सन्दिग्धा एकादशी त्याज्या है । आदित्योदय के पूर्व में एक मुहूर्त्त–दो दण्ड–व्यापिनी एकादशी को 'संयुक्ता' कहते हैं । धर्म वृद्धि के निमित्त उसको परित्याग करना चाहिये । आदित्योदय से आरम्भ कर षष्टि दण्ड व्यापिनी जो एकादशी है, वह 'सम्पूर्णा' कही जाती है । धर्मफलेच्छु व्यक्तिगण के द्वारा वह वर्ज्जनीया है । सन्दिग्धा, संयुक्ता, एवं सम्पूर्णा,–संज्ञा है ॥३२१-३२३॥

गरुड़पुराणोक्त श्लोकत्रय के अन्त में लिखित है—पुत्र पौत्र समृद्ध्यर्थ द्वादशी में उपवास करना चाहिये, तत्पश्चात् त्रयोदशी में पारण करने पर शतयज्ञानुष्ठानजनित पुण्य लाभ होता है ॥३२४॥

ब्रह्मवैवर्त्त पुराण के सूत शौनक-संवाद में लिखित है—अरुणोदय काल में एकादशी अल्पमात्र होने पर भी उसको पूर्णा कही जाती है, अर्थात् एक अरुणोदय प्रवृत्त होकर अपर अरुणोदय वेला तक एकादशी की

तत्र चेद्दशमीवेधोऽतिवेधो वापि जायते । महावेधोऽथवा योगो रक्षसां तत्फलं भवेत् ॥३२६॥

तत्र प्रश्नः—

कीदृशस्तु भवेद्वेधो योगो विप्रेन्द्र कीदृशः । योगवेधौ समाचक्ष्व याभ्यां दुष्टमुपोषणम् ॥३२७॥

चतस्रो घटिकाः प्रातररुणोदयनिश्चयः । चतुष्टयविभागोऽत्र वेधादीनां किलोदितः ॥३२८॥

तत्रोत्तरम्—

अरुणोदयवेधः स्यात् सार्द्धन्तु घटिकात्रयम् । अतिवेधो द्विघटिकः प्रभासन्दर्शनाद्रवेः ॥३२९॥

महावेधोऽपि तत्रैव दृश्यतेऽर्को न दृश्यते । तुरीयस्तत्र विहितो योगः सूर्य्योदये बुधैः ॥३३०॥

व्याख्यातञ्चेदं माधवीये—

वेधातिवेधमहावेधयोगाश्चत्वार उपवासस्य दूषकाः । तत्र रवेः सन्दर्शनात् पूर्व्वं सार्द्धं घटिकात्रयमेकादश्या व्याप्तम् । तत्र प्राचीने घटिकार्द्धे दशमीसम्भावे वेधः । यदा घटिकाद्वयमुपरितनमेकादशीव्याप्तं, पूर्व्वन्तु घटिकाद्वयं दशमीव्याप्तं तदानीमतिवेध इति ॥३३१॥

परन्तु सुगमम् ।

अथ तत्र दोषाः

तत्रैव—

राक्षसानां फलं योगे महावेधे तु वास्कलेः । जम्भासुरस्यातिवेधे मोहिना वेधशिल्पिनी ॥३३२

तत्र—अरुणोदये ॥३२६॥

अवस्थिति होने पर वह एकादशी सम्पूर्णा नाम से अभिहिता होती है । अरुणोदय काल में स्थिति के बिना एकादशी सम्पूर्णा नहीं हो सकती ॥३२५॥

अरुणोदय वेला में दशमी के सहित वेध, अतिवेध, महावेध, एवं योग संघटित होने पर, इस एकादशी के फल को राक्षसगण ग्रहण करते हैं ॥३२६॥

इस विषय में प्रश्न यह है—हे विप्रवर ! वेध, किसको कहते हैं, अथवा योग ही किस प्रकार है ? जिसके द्वारा उपवास दूषित होता है, उस योग और योग एवं वेध; इन दोनों का वर्णन करें । प्रभात में निःसन्देह अवश्य ही अरुणोदय चार घटिका हैं । उस अरुणोदय में वेधादि के चार प्रकार विभाग किस प्रकार हैं ? ॥३२७-३२८॥

उपरोक्त प्रश्न के उत्तर में कहते हैं—अरुणोदय वेध, सार्धतीन घटिका अर्थात् साढ़े तीन घड़ी है सूर्य्य की प्रभा दर्शन से दो घड़ी पर्य्यन्त समय को 'अतिवेध' कहते हैं, सूर्य्य दिखाई देते हैं, अथवा नहीं देते हैं, ऐसे वेध का नाम 'महावेध' है, और सूर्य्योदय के विहित वेध को ही 'योग' कहते हैं । विज्ञ व्यक्तिगण इस प्रकार चतुर्विध भेद निर्धारण किये हैं । माधवीय ग्रन्थ में इसकी व्याख्या इस प्रकार है, वेध, अतिवेध, महावेध, एवं योग,–इन चतुर्विध वेध के द्वारा उपवास दूषित होता है । वेध चतुष्टय के मध्य में यदि सूर्य्य-दर्शन के पूर्व में सार्धत्रिदण्ड (साढ़े तीन घड़ी) व्यापिनी एकादशी और पूर्व अर्धदण्ड दशमी हो, तो 'वेध' होता है । अर्थात् अरुणोदय वेध होता है, यदि सूर्य्योदय के पूर्व दो घड़ी दशमी हो, तो उसी का नाम 'अतिवेध' है ॥३२९-३३१॥ अनन्तर अर्थ सुगम हैं ।

अथ तत्र दोषाः

ब्रह्मवैवर्त्तपुराण में ही लिखा है—यदि एकादशी 'योग' द्वारा दुष्ट हो तो, उसका फल राक्षसगण कर्त्तृक गृहीत होता है । वास्कलि नामक दैत्य, महावेध का फल, जम्भासुर, अतिवेध का फल एवं मोहिनी वेध का फल ग्रहण करती हैं ॥३३२॥

गोभिलोक्तौ—

अरुणोदयवेलायां दशमी यदि सङ्गता । संयुक्तैकादशीं तान्तु मोहिन्यै दत्तवान् विभुः ॥३३३॥

पाद्मोत्तरखण्डे—

अरुणोदयवेलायां दशमीमिश्रिता भवेत् । तां त्यक्त्वा द्वादशीं शुद्धामुपोष्येदविचारयन् ॥३३४

भविष्ये—

अरुणोदये तु दशमी-गन्धमात्रं भवेद्यदि । द्रष्टव्यं तत् प्रयत्नेन वर्ज्जनीयं नराधिप ॥३३५॥

किञ्च—

दशमीशेषसंयुक्तो यदि स्यादरुणोदयः । वैष्णवेन न कर्त्तव्यं तद्दिनैकादशीव्रतम् ॥३३६॥

गारुड़े—

दशमीशेषसंयुक्तो यदि स्यादरुणोदयः । नैवोपोष्यं वैष्णवैस्तु तत्र चैकादशीव्रते ॥३३७॥

अथ अत्र वैष्णवलक्षणम्

गृहीतविष्णुदीक्षाको विष्णुसेवापरो नरः । वैष्णवश्चात्र संग्राह्यः स्कान्दाद्युक्तानुसारतः ॥३३८

---

द्रष्टव्यं गणकादिद्वारा विचार्य्य ज्ञातव्यम् ॥३३५॥

तद्दिने यदेकादशीव्रतं तत् ॥३३६॥

तत्र तस्मिन् दिने एकादशीव्रते निमित्ते नैवोपोष्यम् । व्रत इत्यत्र दिन इति वा पाठः ॥३३७॥

ननु स च वैष्णवः कीदृशः? पूर्व्वं भगवद्भक्तिलक्षणे यो लिखितः, उतान्यो वेत्यपेक्षायां लिखति—गृहीतेति । अत्र व्रतविधौ स एव ग्राह्यः, न तु पूर्व्वलिखितो भक्तिनिष्ठाप्राप्तः, तस्य व्रताद्यनधिकारात् । एवं द्वादश्यादौ क्षौद्रकांस्यादिवर्ज्जनादिष्वपि तथैव ज्ञेयम् ॥३३८॥

---

गोभिल के कथन से प्रकाशित है—अरुणोदय वेला में दशमी मिश्रिता होने पर, उस एकादशी को 'संयुक्ता' एकादशी कहते हैं । उस व्रत का फल ब्रह्मा ने मोहिनी को प्रदान किया है ॥३३३॥

पद्मपुराण के उत्तरखण्ड में लिखा है—अरुणोदय समय में दशमीयुक्ता एकादशी होने पर, उसको वर्जन कर शुद्धा द्वादशी में उपवास करना चाहिये । इसमें किसी प्रकार विचार न करे ॥३३४॥

भविष्यपुराण में लिखित है—हे नराधिप ! अरुणोदय समय में यदि दशमी की गन्धमात्र भी हो तो, उसको देखकर गणकादि के द्वारा विचार पूर्वक जानकर यत्नसहित परित्याग करे ॥३३५॥

और भी लिखा है—अरुणोदय के समय एकादशी शेष समन्विता एकादशी होने पर उस दिन में व्रताचरण करना वैष्णव को उचित नहीं है ॥३३६॥

गरुड़पुराण में लिखित है—अरुणोदय वेला में यदि दशमी शेष का संयोग होता है तो उस दिन एकादशी व्रत करना वैष्णवों को उचित नहीं है ॥३३७॥

अथ अत्र वैष्णवलक्षणम्

स्कन्दपुराण के विधानानुसार विष्णुमन्त्र से दीक्षित एवं विष्णु सेवापरायण मनुष्य ही वैष्णव होते हैं । एवं वे ही एकादशी व्रत के अधिकारी हैं ॥३३८॥

तथा च स्कान्दे—

परमापदमापन्ने हर्षे वा समुपस्थिते । नैकादशीं त्यजेद्यस्तु यस्य दीक्षास्ति वैष्णवी ॥३३९॥

समात्मा सर्व्वजीवेषु निजाचारादविप्लुतः । विष्णवर्पिताखिलाचारः स हि वैष्णव उच्यते ॥३४०

पाद्मे च—

सदीक्षाविधि सन्यासं सयन्त्रं द्वादशाक्षरम् । अष्टाक्षरमथान्यं वा ये मन्त्रं समुपासते ।
ज्ञेयास्ते वैष्णवा लोके विष्णवर्च्चनरतास्तथा ॥३४१॥

अथारुणोदयलक्षणम्

स्कान्दे—

उदयात् प्राक् चतस्रश्च घटिका अरुणोदयः ।
तत्र स्नानं प्रशस्तं स्यात् स वै पुण्यतमः स्मृतः ॥३४२॥

ब्रह्मवैवर्त्ते—

चतस्रो घटिकाः प्रातररुणोदय उच्यते । यतीनां स्नानकालोऽयं गङ्गाम्भःसदृशः स्मृतः ॥३४३

त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम् । नाड़ीनां ते उभे सन्ध्ये दिवसाद्यन्तसञ्ज्ञिते ॥३४४

---

सर्व्वजीवेषु समात्मा समबुद्धिः हिंसानिन्दादिराहित्यात्, स्वात्मवर्द्धकारित्वाच्च । निजाचारो वैष्णव-धर्म्मस्तस्मादविप्लुतः अपरिभ्रष्टः, विष्णौ अर्पितोऽखिल आचारः स्वधर्म्मादिर्येन सः ॥३४०॥

दीक्षाविध्यादिकं पूर्व्वं लिखितमेवास्ति, दीक्षाविधिसहितं न्यासेन सहितं यन्त्रेण सहितञ्च, एतच्च पूजाङ्ग-मेवेत्युक्तम् । अन्यञ्च श्रीगोपालदेवादिमन्त्रम्; तथेति समुच्चये । तथापि दीक्षादिं विना पूजासम्पत्त्यभावाद्दीक्षा-द्यस्तीत्येव ज्ञेयम् । यद्वा, तथा तेन दीक्षाग्रहणादि प्रकारेण, विष्णवर्च्चनरता इति तेषामेव विशेषणम् । सदेति च क्वचित् पाठः: ३४१॥

प्रातरुषसि याश्चतस्रो घटिकास्ताः; अरुणोदयः गङ्गाम्भःसदृशः परमपावनं इत्यर्थः ॥३४३॥

रात्रिशेषे चतुर्घटिका व्याप्यारुणोदय इत्यत्र हेतुमाह—त्रियामामिति । नाड़ीनामाद्यन्तयोश्चतुष्टयं रात्रे-रादौ नाड़ीचतुष्टयमन्ते च नाड़ीचतुष्टयं त्यक्त्वा । एवमेकयामत्यागेन त्रियामामाहुर्मुनयः । यतः तन्नाड़ी-नामाद्यन्तचतुष्टयञ्च दिवसस्याद्यन्तसञ्ज्ञिते ते प्रसिद्धे उभे सन्ध्ये प्राहुः ॥३४४॥

---

उक्त विषय का वर्णन स्कन्दपुराण में इस प्रकार है—भीषण आपदावस्था में पतित होकर, किंवा अतिशय आनन्दित होकर भी जो व्यक्ति एकादशी को नहीं त्यागता है, एवं जो वैष्णव विधान में दीक्षित है, सर्वभूत में समचित्त है, निजाचारवान् है एवं श्रीहरि में सर्वाचार अर्पण किया है, वह ही वैष्णव है ॥ ॥३३९-३४०॥

पद्मपुराण में भी कथित है—दीक्षा विधि, न्यास एवं यन्त्रसहित द्वादशार्ण किंवा अष्टार्ण मन्त्राराधना करने पर एवं विष्णुपूजा में निरत रहने पर वही पुरुष संसार में 'वैष्णव' नाम से अभिहित होता है ॥३४१

अथारुणोदयलक्षणम्

स्कन्दपुराण में लिखा है—सूर्योदय के पूर्व में दण्डचतुष्टय को अरुणोदय कहते हैं । यह काल पुण्यतम कहा जाता है । यह समय यतिवृन्द का स्नानोपयोगी है, एवं यह गङ्गोदक के समान पवित्र है । पण्डितगण, प्रदोष के दण्ड चतुष्टय, एवं ऊषा के दण्ड चतुष्टय त्यागकर रात्रि को त्रियामा कहते हैं । उक्त चार चार दण्ड काल ही सन्ध्या काल है । वह दिवस के आदि एवं अन्त शब्द से परिज्ञात है ॥३४३-३४४॥

अथारुणोदयविद्धोपवासदोषाः

तत्र कौत्सः—

अरुणोदयवेलायां विद्धा काचिदुपोषिता । तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्ज्जयेत् ॥३४५

पाद्मे श्रीभगवद्‌ब्रह्मसंवादे—

अरुणोदयकाले तु वेधं दृष्ट्वा चतुर्विधम् । मद्दिनं ये प्रकुर्व्वन्ति यावदाहूतनारकाः ॥३४६॥

कृते तु मद्दिने तत्र सन्तानस्यापि संक्षयः । सप्तजन्मसु नश्यन्ति धर्म्माणि च धनानि च ॥३४७

भविष्ये च—

अरुणोदयकाले तु दशमी यदि दृश्यते । न तत्रैकादशी कार्य्या धर्म्मकामार्थनाशिनी ॥३४८॥

किञ्च—

अरुणोदयकाले तु दशमी यदि दृश्यते । पापमूलं तदा ज्ञेयमेकादश्युपवासिनाम् ॥३४९॥इति ।

विद्धोपवासदोषा ये सामान्याल्लिखिताः पुरा ।
ज्ञेयास्तेऽत्रापि विद्धाया लक्षणस्यानुसारतः ॥३५०॥

एवं ज्ञेयानि वाक्यानि विद्धाव्रतपराणि तु । अवैष्णवाश्रयाण्येव शुक्रमायाकृतानि वा ॥३५१

---

काचित् एका यया.पोषिता तस्याः ॥३४५॥

दृष्ट्वा ज्ञात्वापि, चातुर्विध्यश्च वेधातिवेधादिभेदेन प्राग्लिखितमेव ॥३४६॥

तदा एकादश्युपवासिनामुपवासः पापस्य मूलं ज्ञेयमित्यर्थः ॥३४९॥

सामान्यात् अरुणोदयवेधादिविशेषराहित्येन सामान्यतः पूर्व्वं लिखिताः । अरुणोदयविद्धोपवासेऽपि । कुतः ? विद्धाया लक्षणस्य पूर्व्वलिखितस्यानुसारात्, उदयात् प्राक् मुहूर्त्तद्वयव्यापिनी सती सम्पूर्णा, अन्यथा विद्धेति विद्धालक्षणेऽरुणोदयवेधस्यैव सुसिद्धेः ॥३५०॥

इत्थं सर्व्वथा विद्धोपवासो निषिद्धः, तत्र च यदुक्तमृष्यश्रृङ्गेण—'एकादशी न लभ्येत सकला द्वादशी भवेत् । उपोष्या दशमीविद्धा ऋषिरुद्दालकोऽब्रवीत् ॥'; किञ्च—अविद्धानि निषिद्धैश्चेन्न लभ्यन्ते दिनानि

---

अथारुणोदयविद्धोपवासदोषाः

तद्विषय में कौत्स का कथन है—एक नारी, अरुणोदय विद्धा एकादशी में उपवासी थी, उससे उसके शतपुत्र का वियोग हुआ था। सुतरां अरुणोदय विद्धा में उपवास करना नहीं चाहिये ॥३४५॥

पद्मपुराण के श्रीभगवद्-ब्रह्म-संवाद में वर्णित है—अरुणोदय वेला में चारों वेधों को जानकर जो व्यक्ति मेरे दिन के बोध में उसमें उपवास करता है, उसको महाप्रलय यावत् नरक में वास करना पड़ता है। इस प्रकार वेध संयुक्त मद्दिन में उपवासी होने पर सन्तति का नाश होता है, एवं सप्त जन्म धर्म एवं धन का ह्रास होता है ॥३४६-२४७॥

भविष्य पुराण में लिखित है—अरुणोदय वेला में दशमी लक्षित होने पर उस समय एकादशी व्रत करना उचित नहीं है। उसमें एकादशी व्रतानुष्ठान करने पर धर्म, अर्थ, एवं काम विनष्ट होते हैं ॥३४८॥

और भी कथित है—अरुणोदय काल में दशमी यदि लक्षित होती है, तो, उसमें जो लोक उपवास करते हैं, उन सबका वह उपवास पाप का कारण बनता है ॥३४९॥

साधारणतः जो सब विद्धोपवासादि दोषों का उल्लेख हुआ है, यहाँ पर पूर्ववर्णित लक्षण के अनुसार उन सब दोष को जानना होगा। विद्धा व्रत पर जो सब विधान हैं, उन सबको अवैष्णव पर जानना होगा,

**इत्थञ्च जन्माष्टम्यादिव्रतान्यपि न वैष्णवैः । विद्धेष्वहःसु कार्य्याणि तादृग्दोषगणाश्रयात् ॥३५२**

अथार्द्धरात्रविद्धा-समाधानम्

**अर्द्धरात्राच्च परतो वर्त्तेत दशमी यदि । तदाप्येकादशीं विद्धां मन्यन्ते यच्च केचन ॥३५३॥**

तथा च कौर्म्मे –

**अर्द्धरात्रमतिक्रम्य दशमी यदि दृश्यते । तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् ॥३५४**

॥ इति ॥

**अभिज्ञास्तच्च मन्यन्ते पक्षवर्द्धन्युपाश्रितम् । अतस्तच्च तथान्यच्च महतां नैव सम्मतम् ॥३५५॥**

---

तु । मुहूर्त्तैः पञ्चभिर्विद्धा ग्राह्यैवैकादशी तिथिः । तदर्द्धविद्धान्यन्यानि दिनान्युपवसेद्बुधः ॥', अपि च—'पारणाहे न लभ्येत द्वादशी कलयापि चेत् । तदानीं दशमीविद्धा उपोष्यैकादशी तिथिः ॥' इति; पाद्मे च—'विद्धाप्येकादशी ग्राह्या परतो द्वादशी न चेत् । द्वादशी द्वादशीर्हन्ति त्रयोदश्यान्तु पारणम् । विद्धाप्यविद्धा विज्ञेया परतो द्वादशी न चेत् ॥' इति । ईदृशान्यन्यानि च यानि वचनानि वर्त्तन्ते, तेषां विषयं व्यवस्थाप्य लिखति—एवमिति लिखितप्रकारेण । अवैष्णवाः वैष्णवेतराः शैवसौरादयः, कामिनो गृहस्थाश्चेति-विषयकाणि । तेषामपि विद्धोपवासे बहुलदोषश्रवणादपरितोषेण पक्षान्तरं लिखति—शुक्रेति ॥३५१॥

प्रसङ्गाद्वैष्णवव्रतेषु सर्व्वेष्वपि सवेधदिनानीत्थं परित्याज्यानीत्यादिशन् लिखति—इत्थञ्चेति; नैवोपोष्यं वैष्णवैस्त्वित्यादि-लिखितप्रकारेण । आदि-शब्देन रामनवमीनृसिंहचतुर्द्दश्यादि, तादृशां विद्धैकादशीव्रतोक्त-सदृशानां दोषाणां गणस्याश्रयात् ॥३५२॥

एवमरुणोदयवेधे सति न केनाप्युपवासः कार्य्य इति निश्चितम् । तत्र च केचिदर्द्धरात्रात् परतः, केचिच्चत्वारिंशद्घटिकाभ्यश्च परतोऽपि दशम्यनुवृत्तौ वेधमिच्छन्तीति तन्मतमुत्थाप्य निराकरोति—अर्द्ध-रात्राच्चेति षड्भिः । यन्मन्यन्ते तत् पक्षवर्द्धनी नाम महाद्वादशी, तद्विषयकमभिज्ञा मन्यन्त इति उत्तरेणान्वयः । तत् अर्द्धरात्रात् परतो वेधवचनं विद्धत्वं वा, अन्यत् चत्वारिंशद्घटिकोपरि वेधविषयकञ्च, महतां श्रीव्यासादीनां नैव सम्मतं भवति ॥३५३-३५५॥

---

**अथवा शुक्रमाया कल्पित जानना होगा । इस प्रकार जन्माष्टम्यादि व्रत भी विद्धा दिन में करना वैष्णवों के पक्ष में अनुचित है, विद्धाव्रत करने से पूर्वोक्त दोषसमूह उत्पन्न होते हैं ॥३५०-३५२॥**

**अथार्द्धरात्रविद्धा-समाधानम्**

**अरुणोदय वेध में कोई भी व्यक्ति उपवास न करें, यह निश्चित हुआ, किन्तु कतिपय व्यक्ति अर्धरात्र वेध मानते हैं, अर्थात् ४० चत्वारिंशद् घटिका के पश्चात्‌दशमी की अनुवृत्ति होने पर वेध मानते हैं। उस मत का निरास करने के निमित्त कहते हैं । अर्द्धरात्र के पश्चात् दशमी की स्थिति किसी किसी के मत से उसको भी विद्धा कही जाती है ॥३५३॥**

**कूर्मपुराण में उस विषय का वर्णन है—अर्धरात्र के पश्चात् दशमी होने पर एकादशी त्यागकर द्वादशी में उपवास करना चाहिये ॥३५४॥**

**अभिज्ञ व्यक्तिगण, इस अर्धरात्र वेध को पक्षवर्धिनी विषयक कहते हैं, अतएव अर्धरात्र वेध एवं चत्वारिंशद् घटिकोपरि वेध का अनुमोदन व्यासादि मुनिवृन्द नहीं करते हैं, अर्थात् अर्धरात्र वेध श्रीव्यास-आदि सम्मत नहीं है । अर्धरात्र वेध, पक्षवर्धिनी विषयक है । इस कथन का तात्पर्य्य यह है—अमावस्या एवं पूर्णिमा की वृद्धि को पक्षवर्धिनी कहते हैं, इसकी वृद्धि दशमी दिन में दशमी आधीरात तक रहकर क्रमानुसार बढ़ती हुई पौर्णमासी अथवा अमावस्या में ६० दण्ड प्राप्त होती है, वाण वृद्धि होती है । कभी सप्त वृद्धि भी होती है । ऐसे स्थान में एकादशी को छोड़कर द्वादशी में ही व्रत करना चाहिये । यही व्रत विषयक अर्द्धरात्रि वेध है ॥३५५॥**

तथा ब्रह्मवैवर्त्ते व्यासोक्तौ तत्रैव—

अर्द्धरात्रेऽपि केषाञ्चिद्दशम्या वेध इष्यते। अरुणोदयवेलायां नावकाशो विचारणे ॥३५६॥

कपालवेध इत्याहुराचार्य्या यं हरिप्रियाः।

न तन्मम मतं यस्मात् त्रियामा रात्रिरुच्यते ॥३५७॥

---

अरुणोदयवेलायान्तु वेधविचारणोपरि अवकाशोऽपि नास्तीत्यनेनारुणोदयवेध एव निश्चितः। न त्वर्द्ध-रात्रोपरि वेधः स्थापित इति कैमुतिक न्याय-विचारादिति दिक् ॥३५६॥

नन्वर्द्ध रात्रोपरि वेधो हि कपालवेधत्वेन प्रसिद्धो वैष्णवानां सम्मतः, अतः सोऽपि वर्ज्जनीय एव। तत्राह —कपालेति। यमर्द्ध रात्रात् परतो वेधम्, आचार्य्याः कपालवेध इति वदन्ति, हरिप्रिया इति हरिप्रियतया वेधश्रवणमात्रेण दोषाशङ्कयाहुर्न तु विचारेणेत्यर्थः। यद्वा, हरिप्रिया इति तत्रत्यानां शौनकादीनां सम्बोधनम्। तेन चाखिलविचारनैपुण्यं समर्थयति। ये इति पाठे केचिदाहुः; तच्च ये हरिप्रिया आचार्य्यास्तेषां मम च वेदव्यासस्य सम्मतं न भवतीत्यर्थः। तत्र हेतुः—यस्मादिति। एवं त्रियामाया रात्रेर्मध्ये एकादश्याः प्रवेश एव नास्ति। यतो दशम्या एव सा रात्रिः, अतस्तत्र यतो दशम्या वेधः स्यात्, अतोऽरुणोदये एकादशीसम्भावेन तत्सम्पूर्णता-प्रतिपादनात् तत्रैव दशम्यनुवृत्तौ वेधः कल्प्यत इत्यर्थः। अन्यथा अतिव्याप्त्यार्द्ध रात्रात् पूर्व्वं ततोऽपि पूर्व्वमित्येवं रात्रिप्रथमभागेऽपि नियमाभावाद्वेधः स्यात्। ततश्चानवस्थाप्रसङ्गदोष एव स्यादिति दिक् ॥३५७॥

---

ब्रह्मवैवर्त्तपुराण में व्यासोक्ति से भी प्रकाशित है—कतिपय अभिज्ञव्यक्ति के मत में अर्द्धरात्र के पश्चात् दशमीवेध दृष्ट होता है, किन्तु उन सब व्यक्तियों का अरुणोदय काल में वेध विचार का अवकाश नहीं है। ॥३५६॥

कितने ही वैष्णवाचार्य्यों के मत से अर्धरात्रि का परवर्त्ती दशमी वेध 'कपालवेध' कहा गया है, परन्तु वह मत मेरा सम्मत नहीं है, क्योंकि रात्रि को त्रियामा कहा गया है। इस श्लोक की टीका का विवरण इस प्रकार है—अर्धरात्रि के पश्चात् दशमी की स्थिति होने पर जो प्रसिद्ध 'कपाल' वेध है, वह वैष्णवगण सम्मत है, किन्तु अरुणोदय वेध निश्चय हेतु वह कपाल वेध वर्जनीय है। उसको कहते हैं,-अर्धरात्र के अनन्तर दशमी स्थिति से जो वेध होता है, उसको आचार्य्यगण कपाल वेध कहते हैं। हरिप्रिय आचार्यगण होते हैं, अतएव वेध श्रवण मात्र से ही दोषाशङ्का से उस प्रकार मानते हैं। किन्तु विचार पूर्वक नहीं। अथवा, हरिप्रिया शब्द का अर्थ है-तत्रत्य शौनकादि का सम्बोधन। इससे अखिल विचार नैपुण्य का समर्थन करते हैं। उक्त श्लोक में 'ये' पाठ है, उसका अर्थ है, कुछ व्यक्ति कहते हैं। अतएव निर्गलितार्थ यह है कि भगवत् प्रिय आचार्य्यगण का एवं मेरा वेदव्यास का कपाल वेध सम्मत नहीं है। उसमें कारण निर्देश करते हैं, यस्मात्-जिस हेतु, अर्थात् रात्रि को 'त्रियामा' कहते हैं, त्रियामा रात्रि के मध्य में एकादशी का प्रवेश ही नहीं है, कारण, वह रात्रि दशमी की ही है। अतएव वहाँ पर दशमी का वेध होगा। कारण, अरुणोदय में एकादशी की विद्यमानता में ही एकादशी की पूर्णता होती है, किन्तु अर्धरात्रि से अपर अर्ध-रात्रि पर्य्यन्त तिथि की पूर्णता नहीं होती है, अतएव पूर्णालक्षण के द्वारा ही वेध निष्पन्न होता है, अन्यथा जिस किसी समय पूर्व तिथि की स्थिति में वेध का प्रसङ्ग होगा। अतएव अरुणोदय काल में दशमी की अनुवृत्ति होने से ही दशमी विद्धा एकादशी होगी। तिथि का पूर्णत्व का लक्षण न करके वेध निर्णय करने पर अर्धरात्र के पूर्व दशमी रहने पर वेध होगा, उसके पहले दशमी होने पर भी वेध होगा, इस रीति से रात्रि के प्रथम भाग में भी दशमी होने पर वेध अवश्य ही होगा. कारण, कपालवेधवादी के मत में सम्पूर्णा तिथि का कोई लक्षण ही नहीं हैं, अनियम को ही नियम मान लेने पर अनवस्था दोष प्रसङ्ग होगा ॥३५७

पाद्मे च—

**अर्द्धरात्रं स्पृशेत् पूर्णा पक्षवृद्धिर्यदग्रतः । कपालवेधनी सा च शुद्धां भद्रामुपोषयेत् ।।३५८।।**

**अथ वेधविहीनापि सम्पूर्णैकादशी तिथिः । अग्रतो वृद्धिगामित्वात् परित्याज्यैव वैष्णवैः ।।३५९**

अथ शुद्धाविशेषपरित्यागः

गारुड़े—

**सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा । वैष्णवी च त्रयोदश्यां घटिकैकापि दृश्यते ।**
**गृहस्थोऽपि परां कुर्य्यात् पूर्व्वां नोपवसेत्तदा ।।३६०।।**

---

ननु तर्हि अर्द्धरात्रमतिक्रम्येत्यादि-कूर्म्मपुराणवचनम्—'अर्द्धरात्रात् परं याम्याः कलाकाष्ठादिसंयुता । मोहिनी साधिकारा च ब्रह्मणा निर्म्मिता पुरा ।। निशीथात् परतो याम्या एकादश्यामुपोषिता । स पतेन्नरके घोरे यावदाहूतसंप्लवम् ।।' इत्यादि । स्मृत्यर्थसारवचनञ्च यत्, तस्य को विषयः ? तत्राह—अर्द्धरात्रमिति । यदाग्रतः पक्षवृद्धिर्भवति, तदा पूर्णा दशमी चेदर्द्धरात्रं स्पृशेत्, तदा सा कपालवेधनी नामैकादशी स्यात् । तदा च शुद्धां भद्रां द्वादशीमेवोपवसेदित्यर्थः । अतश्च—'पूर्णैकचत्वारिंशच्च घटिका दृश्यते यदि । तदा व्यालमुखी ज्ञेया वर्जिता मत्परायणैः ।। द्विचत्वारिंशद्घटिका दशमी दृश्यते यदि । महाव्यालेति विख्याता न कार्य्या मुक्तिकाङ्क्षिभिः ।। त्रिचत्वारिंशद्घटिकाऽभया सा ह्यभिधीयते । पूर्णा चतुश्चत्वारिंशत् कथिता सा महाभया ।।' इत्यादीनि । श्रीकृष्णार्ज्जुनसंवादे—'द्विपञ्चाशच्च घटिका दशमी दृश्यते यदि । छायाभिधा तु सा ज्ञेया नन्दा या वृद्धिगामिनी ।। त्रिपञ्चाशद्यदा पूर्णा ग्रस्ता सैव तु गीयते । चतुःपञ्चाशको ज्ञेयोऽप्यतिवेधस्ततोऽधिकः ।। महावेधः षडधिकस्तथोक्तः पूर्व्वसूरिभिः । प्रलयः सप्तपञ्चाशत महान् प्रोक्तस्ततोऽपरः ।। नवाधिका महाघोरा सम्पूर्णा षष्टिराक्षसी । छायादि-नववेधेषु यः कुर्य्यात् समुपोषणम् । मृते स नरकं याति यावदाहूतसंप्लवम् ।।' इत्यादीनि च वचनानि स्वत एव निरस्तानि । अर्द्धरात्रवेधपक्षस्यापि निरसनाद्विशेषतश्च प्राचीनैर्महद्भिरभिज्ञैरसंगृहीतत्वात्तान्यमूलान्येव ज्ञेयानि ।।३५८।।

एवमनेकदोषहेतुत्वात् विद्धोपवासः परित्याजितः । अधुना कदाचित् शुद्धापि परित्याज्येति लिखति—अथेति । दशमीवेधेन विहीना परित्यक्ता; कुतः ? पूर्णा सम्पूर्णा अरुणोदयादेव प्रवृत्तेत्यर्थः, साप्येकादशी परित्याज्या । तत्र हेतुः—अग्रत इति । कदाचिदेकादश्या द्वादशीदिने, कदाचित् द्वादश्याश्च त्रयोदशीदिने, कदाचित् पक्षान्ततिथेश्च प्रतिपद्दिने वृद्धिगामित्वात् । वृद्धिगामित्वाभावेन च त्रयोदश्यां सम्पूर्णायामपि सत्यां, तथा द्वादश्यामपि सम्पूर्णायां सत्यां, पक्षान्तस्यापि वृद्ध्यभावे च सति सम्पूर्णायामेकादश्यामेवोपवासः। द्वादश्याश्च लेखालक्षणहरिवासरत्यागेन पारणमिति व्यवस्था । सा चैकादशी नोन्मीलन्यादिषु कास्वपि भवतीति विशेषतो नो लिखिता । वैष्णवैरित्यनेन केचिदवैष्णवाश्च न परित्यजेयुरित्यग्रे व्यवस्थायां लेख्यम् ।।३५९।।

सम्पूर्णा अरुणोदयमारभ्य परदिने सूर्य्योदयं यावद्व्याप्तेत्यर्थः । पुनरपि तत्परदिने प्रभाते सा एकादशी

---

**पद्मपुराण में लिखित है—एकादशी के पश्चात् जो पूर्णिमा अथवा अमावस्या तिथि होती है, वह तिथि यदि ६० दण्ड अथवा अधिक होती है, तो उसको वृद्धि तिथि कहते हैं, ५ दण्ड पर्य्यन्त वृद्धि का साधारण नियम है । उस पक्षवर्द्धिनी के समय दशमी पूर्ण तिथि की स्थिति अर्धरात्रि में होती है तो, उसे कपालवेधिनी एकादशी कहते हैं । उस एकादशी को छोड़कर शुद्ध द्वादशी में उपवास करना चाहिये ।।३५८।।**

**यदि वेध विहित होकर भी सम्पूर्णा एकादशी तत्परदिन वृद्धिगामिनी होती है, तो उस एकादशी को अवश्य परित्याग कर द्वादशी में व्रत करना वैष्णवों का कर्त्तव्य है ।।३५९।।**

अथ शुद्धाविशेषपरित्यागः

**गरुड़पुराण में वर्णित है—सम्पूर्णा एकादशी, अरुणोदय से प्रारम्भ कर परदिन सूर्य्योदय पर्य्यन्त व्याप्त**

किञ्च, श्रीनारदः—

सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा। अत्रोपोष्या द्वितीया तु पुत्रपौत्रविवर्द्धिनी ॥३६१॥

अतएव पाद्मे—

द्वादशीमिश्रिता ग्राह्या सर्व्वत्रैकादशी तिथिः।
द्वादशी च त्रयोदश्यां विद्यते यदि वा न वा ॥३६२॥

किञ्च—

सर्व्वत्रैकादशी कार्य्या द्वादशी-मिश्रिता नरैः।
प्रातर्भवतु वा मा वा यतो नित्यमुपोषणम् ॥३६३॥

स्कान्दे—

सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा। तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणम् ॥३६४॥

---

भवति वर्द्धत इत्यर्थः। वैष्णवी द्वादशी। गृहस्थोऽपीत्यपिशब्दः। 'एकादशी प्रवृद्धा चेच्छुक्ले कृष्णे विशेषतः। तत्रोत्तरां यतिः कुर्य्यात् पूर्व्वामुपवसेद्गृही ॥' इत्यादिवचनप्राप्तो यतेरेव परदिनोपवासो न गृहस्थस्येति पक्षनिरासार्थः ॥३६०॥

एवं त्रयोदश्यां द्वादश्या निष्क्रमे सति शुद्धैकादशीत्यागो लिखितः। प्रायोऽयमवैष्णवानामपि सम्मतः। अधुना द्वादश्यनिष्क्रमेऽपि महाद्वादश्यपेक्षया वैष्णवानां सम्मतं शुद्धापरित्यागं लिखति—श्रीनारदाद्युक्तैः सम्पूर्णेत्यादिभिः। प्रभाते द्वादशीदिने सैवैकादशी पुनर्भवति, वृद्धिगामित्वात्। एवञ्च द्वादशी-परतो वर्द्धतां न वेत्यपेक्षा नास्ति। अतएवोक्तं स्कान्दादौ—'परतो द्वादशी न चेत्' इत्यादि। अत्र अस्मिन् काले द्वितीयैवैकादशी उपोष्या, सम्पूर्णप्रथमदिनपरित्यागेन निष्क्रमणदिनमेवोपोष्यमित्यर्थः। एवञ्च—'सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा। तत्रोपोष्या द्वितीया तु परतो द्वादशी यदि ॥' इत्यादिवचनैः। त्रयोदश्यां द्वादशीसम्भावे सत्येव सम्पूर्णैकादशी परित्याज्या, अन्यथा तु नेति व्यवस्थापितः पक्षो निरस्तः। ननु 'एकादशी प्रवृद्धा चेत्' इति वचनानुसारेण यतिपरोऽयमिति व्यवस्थापरितव्यं, तत्राह—पुत्रेति। एवं पुत्रपौत्रविवर्द्धिनीत्यनेन तथाग्रे लेख्येन गृहिभिः पुत्रवद्भिश्चेत्यादिना च एकादशी प्रवृद्धा चेदित्यादिवचनप्राप्तो गृहिणां द्वितीयैकादश्युपवास-निषेधोऽपि परिहृत इति दिक् ॥३६१॥

प्रातस्त्रयोदश्यां द्वादशी भवतु वा, मा भवतु। नित्यमुपोषणमिति उक्तप्रकारेणोक्तलक्षणस्योन्मीलनीव्रतस्य नित्यत्वादित्यर्थः ॥३६३॥

एवं द्वादशीवृद्धिक्षययोरनपेक्षया शुद्धात्यागं लिखित्वा इदानीं द्वादशीक्षयमपेक्ष्यैव उन्मीलनीं लिखन्

---

एकादशी अर्थात् प्रातःकाल तक वृद्धि प्राप्त होने से, एवं द्वादशी त्रयोदशी में एक दण्ड दिखाई देने पर, परदिन अर्थात् द्वादशी में उपवास करना ही यति एवं गृहस्थ का कर्त्तव्य है। पूर्व एकादशी में व्रत न करे। ॥३६०॥

देवर्षि नारद कहे हैं—सम्पूर्णा एकादशी अरुणोदय वेला से आरम्भ कर द्वितीय दिन प्रातःकाल पर्य्यन्त अवस्थित होने से द्वादशी में ही व्रत करना उचित है। यह व्रत पुत्र पौत्र विवर्धिनी है ॥३६१॥

अतएव पद्मपुराण में कथित है—एकादशी त्रयोदशी युक्ता हो वा न हो, द्वादशी मिश्रिता एकादशी ही समस्त व्रतों में ग्रहण करने योग्य है ॥३६२॥

और भी कथित है—सर्वत्र द्वादशी सङ्गता एकादशी ग्रहण करना मनुष्यों का कर्त्तव्य है। त्रयोदशी के प्रभात में द्वादशी होने पर अथवा न होने पर भी उन्मीलोलनी व्रतोपवास की नित्यता है ॥३६३॥

स्कन्दपुराण में लिखित है—सम्पूर्णा एकादशी पुनर्वार प्रभात काल में होने पर दूसरे दिन यदि व्रत किया जाय तो, शतयज्ञानुष्ठान जनित फल लाभ होता है। उक्त व्रत का पारण, त्रयोदशी में होता है ॥३६४

किञ्च—

एकादशी-कला यत्र परतो द्वादशी न चेत् । तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणम् ।।३६५

कौर्म्मे—

एकादशीकलाऽप्येको परतो द्वादशी न चेत् । तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणम् ।।३६६

भविष्ये—

एकादशीकलाप्येका परतो न च वर्द्धते । गृहिभिः पुत्रवद्भिश्च नैवोपोष्या सदा तिथिः ।।३६७

किञ्च, पाद्मे—

एकादशीकलायुक्ता येन द्वादश्युपोषिता । किन्तस्य बहुभिर्यज्ञैरश्वमेधादिभिर्नृप ।।३६८।।

एकादशी द्वादशी च तत्र सन्निहितो हरिः । उपोष्य रजनीमेकां ब्रह्महत्यां व्यपोहति ।।३६९।।

विष्णुरहस्ये—

एकादशीकला-प्राप्ता येन द्वादश्युपोषिता । तुल्या क्रतुशतेन स्यात् त्रयोदश्यान्तु पारणम् ।।३७०

बौधायनस्मृतौ—

एकादशीकलायुक्ता उपोष्या द्वादशी नरैः ।
त्रयोदश्यान्तु यो भुङ्क्ते तस्य विष्णुः प्रसीदति ।।३७१।।

इत्युन्मीलनी ।

---

शुद्धापरित्यागमेव लिखति—सम्पूर्णेत्यादि-स्कान्दादिवचनैः । परतस्त्रयोदश्यां न वर्द्धते द्वादशी । फलविशेषं दर्शयति—एकादशीति पञ्चभिः ।३६७-३६५।।

---

और भी लिखित है—द्वादशी के दिन कलामात्र एकादशी होने पर एवं परदिन अर्थात् त्रयोदशी में द्वादशी न होने पर द्वादशी में उपवास कर त्रयोदशी में पारण करना चाहिये । यह व्रत शत यज्ञ का फल प्रदान करता है ।।३६५।।

कूर्मपुराण में लिखित है—द्वादशी में एकादशी की कलामात्र होने पर एवं त्रयोदशी में द्वादशी न होने पर, वह उन्मीलनी द्वादशी होती है । यह व्रत शत यज्ञ का फलप्रद है । इस व्रत का पारण, त्रयोदशी में होता है ।।३६६।।

भविष्यपुराण में लिखित है—एकादशी की कलामात्र द्वादशी में लक्षित होने पर एवं त्रयोदशी की वृद्धि न होने पर सर्वदा द्वादशी तिथि में ही पुत्रवान् गृहस्थ को भी व्रत करना चाहिये ।।३६७।।

पद्मपुराण में लिखित है—हे नृप ! जो द्वादशी, एकादशी की एक कला संयुक्ता है, उसमें उपवास करने पर अश्वमेधादि अनेकानेक साधन करने का क्या प्रयोजन है ? श्रीहरि, एकादशी एवं द्वादशी-उभय में ही अधिष्ठित हैं । केवल एक रात्रि उपवास के फल से ब्रह्महत्या जनित पाप विदूरित होता है ।।३६८-३६९।।

विष्णुरहस्य में उक्त है—एकादशी की कलायुक्त द्वादशी में उपवासी रहने पर वह व्रत शतयज्ञ तुल्य पुण्य बहुल होता है । उक्त व्रत में त्रयोदशी में पारण होता है ।।३७०।।

बौधायन स्मृति में लिखित है—मानववृन्द, एकादशी की कलायुक्त द्वादशी में उपवासी रहकर त्रयोदशी में पारण करने पर श्रीविष्णु प्रसन्न होते हैं ।।३७१।।

इत्युन्मीलनी ।

### अथ वञ्जुली-द्वादशीव्रतविधिः

स्कान्दे—

एकादशी भवेत् पूर्णा परतो द्वादशी यदा । तदाह्येकादशीं त्यक्त्वा द्वादश्यां समुपोषयेत् ॥३७२

कालिकपुराणे—

एकादशी तु सम्पूर्णा परतो द्वादशी भवेत् । उपोष्या द्वादशी तत्र तिथिवृद्धिः प्रशस्यते ॥३७३

भविष्ये—

उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारणम् ।
निर्गतायां त्रयोदश्यां कला च विकलापि वा ॥३७४॥

विकलायान्तु द्वादश्यां पारणं यः करोति हि । तामुपोष्य महीपाल न गर्भे विशते नरः ॥३७५

भागवतादि-तन्त्रे च—

सम्पूर्णैकादशी त्याज्या परतो द्वादशी यदि । उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारणम् ।
न गर्भे विशते जन्तुरित्याह भगवान् हरिः ॥३७६॥

इति वञ्जुली ।

---

एवं शुद्धापरित्यागे उन्मीलनी महाद्वादशीविषयं दर्शयित्वाधुना वञ्जुली-महाद्वादशीविषयं लिखति—एकादशीति सार्द्धपञ्चभिः । पूर्णा सम्पूर्णा यदा एकादशी भवेदिति प्रायस्तस्याः सम्पूर्णत्वेनैव द्वादश्या अपि सम्पूर्णायाः सत्या वृद्धिसम्भवात्, न त्वत्र द्वादशीवृद्धिमात्रापेक्षा, वञ्जुल्यामेकादशीसम्पूर्णतापेक्षणात् । यद्वा, पूर्णेति—अरुणोदयात् प्रवृत्तत्वेन शुद्धापरित्यागो दर्शित इति दिक् ॥३७२॥

तिथेर्वृद्धिः प्रशस्यते, तत्र व्रतादिकं महाफलमित्यर्थः । वञ्जुलीमाहात्म्यविशेषश्चाग्रे मुख्यप्रसङ्गे लेख्यः । अत्र च शुद्धा-परित्यागप्रकरणस्यैव मुख्यत्वादुन्मीलन्यादिनिरूपणप्रकरणमथोन्मीलनीत्यादिरूपेण स्पष्टतया मुख्यत्येन न लिखितमिति दिक् ॥३७३॥

यच्चोक्तम्—पूर्णाप्येकादशी त्याज्या परतो वर्द्धते यदि । द्वादश्यां पारणालाभे पूर्णैव परिगृह्यते ॥' इत्यनेन

---

अथ वञ्जुली-द्वादशीव्रतविधिः

स्कन्दपुराण में वर्णित है—अरुणोदय से आरम्भ कर एकादशी पूर्णा होने पर एवं द्वादशी पूर्णा होकर परदिन त्रयोदशी में कुछ अंश होने से एकादशी वर्जन पूर्वक द्वादशी में उपवास करना चाहिये ॥३७२॥

कालिकापुराण में लिखित है—एकादशी सम्पूर्णा होने पर एव द्वादशी वृद्धि प्राप्त होने से द्वादशी में ही उपवास करना कर्त्तव्य है । इस व्रत में तिथि वृद्धि ही प्रशस्ता है ॥३७३॥

भविष्यपुराण में लिखित है—शुद्धा द्वादशी में उपवास करके द्वादशी में पारण करना पड़ता है । द्वादशी का कलामात्र, त्रयोदशी में हो या न हो, विकला द्वादशी में ही पारण करना चाहिये । हे महीपाल ! उक्त द्वादशी में उपवास करने पर पुनर्वार मनुष्य को जननी जठर में प्रविष्ट होना नहीं पड़ता है, अर्थात् उसका पुनर्जन्म नहीं होता है ॥३७४-३७५॥

भागवतादि तन्त्र में भी लिखित है—पराहे अर्थात् त्रयोदशी में विन्दुमात्र द्वादशी होने पर सम्पूर्णा एकादशी वर्जन पूर्वक शुद्धा द्वादशी में उपवास करतः द्वादशी में ही पारण करना चाहिये । भगवान् श्री-हरि की उक्ति यह है कि—इस प्रकार व्रत करने पर, व्रतकारी को पुनर्वार जन्म ग्रहण नहीं करना पड़ता है ॥३७६॥

इति वञ्जुली ।

अथ त्रिस्पृशा

नारदीये—

**एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । त्रिस्पृशा नाम सा प्रोक्ता ब्रह्महत्यां व्यपोहति ।।३७७**

कौर्म्मे—

**एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । त्रिभिर्मिश्रा तिथिः प्रोक्ता सर्व्वपापहरा स्मृता ।।३७८**

**उपवासः कृतस्तस्यां सदा पातकनाशनः । एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।**

**तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणम् ।।३७९।।**

किञ्च—

**त्रिस्पृशैकादशी यत्र तत्र सन्निहितो हरिः । तामेवोपवसेत् कामी अकामो विष्णुतत्परः ।।३८०**

एकादशीवत् द्वादशीवृद्धौ पूर्णैकादशीत्याग इति । अतएव स्कान्दे—'शुद्धा यदा समा हीना समा क्षीणाधिकोत्तरा । एकादशीमुपवसेन्न तु शुद्धान्तु वैष्णवीम् ।।'; अस्यार्थः—शुद्धा एकादशी समा हीना वा उत्तरा द्वादशी समाऽक्षीणाधिका वा, तदा एकादशीमेवोपवसेत्, न तु शुद्धां वैष्णवीं द्वादशीमिति । तत्परिहारार्थं भविष्यपुराणादिवचनं लिखति—उपोष्येति । शुद्धेत्यनेन एकादशीसंयोगाभावादेकादशी-वृद्धिर्नापेक्षिता । अतएवोक्तं ब्राह्मे—'एकलिप्त्या समायुक्ता यदि वृद्धिपरा तिथिः । अथवैकादशी नास्ति दशम्या वाथ सङ्गता ।। द्वादशी तु कला काष्ठा यदि स्यादपरेऽहनि । द्वादशद्वादशीर्हन्ति पूर्व्वस्यां पारणं कृतम् ।।' इति । अस्यार्थः—तिथिवृद्धिपरत्वेन एकादशीपरदिने एकलिप्त्या समायुक्ता किञ्चिन्मात्राप्यस्तीत्यर्थः । अथवा नास्ति द्वादशी च किञ्चिन्मात्रा त्रयोदश्यामस्ति, तदा शुद्धद्वादश्यामेवोपवासः, न त्वेकादश्याम् । दशम्या सङ्गतेत्यत्र दृष्टान्तत्वेनोदाहृतम् । एकादशीमुपोष्य सम्पूर्णद्वादश्याश्च तदा पारणं कृतं सत् 'द्वादशद्वादशीपुण्यं हन्ति' इति । 'न गर्भे विशते नरः' इति, 'न गर्भे विशते जन्तुः' इत्यादिना च वञ्जुल्या माहात्म्यविशेष उक्तः, न तु तत्र मुमुक्षोरेवाधिकारो दर्शित इति । तासामष्टमहाद्वादशीनां सर्व्वासामेव नित्यत्वादिति दिक् । 'पूर्णाप्येकादशी त्याज्या' इत्यादिवचनानाञ्च विषयव्यवस्थाग्रे लेख्या ।।३७४ ३७६।।

अधुना त्रिस्पृशाद्वादशीं लिखति—एकादशी इत्यादिना पारणमित्यन्तेन ।।३७७।।

ततश्च तदुक्तम्—'एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । उपवासं न कुर्व्वीत पुत्रपौत्र-समन्वितः ।।' इति । तत् परिहरति—त्रिस्पृशेति । कामी धनपुत्रादिकामयुक्तः, अकामो वैष्णवः । तत्र हेतुः—विष्णुतत्पर इति । यद्वा, अकामश्च मुमुक्षुः, विष्णुतत्परश्च वैष्णवः, एवं सर्व्वेषामेव तत्रोपवासो विहितः । एतदेव ब्रह्महत्यां व्यपोहतीत्यादिना सर्व्वदुःखदोषमूलपापनिरसनोक्त्या तथा 'तत्र क्रतुशतं पुण्यम्' इत्यादिना सर्व्वसुखमङ्गलहेतुपुण्योत्पादनोक्त्या च प्रतिपादितमिति दिक् ।।३८०।।

---

अथ त्रिस्पृशा

**नारदपुराण में लिखित है—एकादशी, द्वादशी एवं रात्रि शेष में त्रयोदशी—अर्थात् त्र्यहस्पर्श होने से वह त्रिस्पृशा नाम से अभिहित है । त्रिस्पृशा में व्रत करने से ब्रह्महत्या पाप विदूरित होता है ।।३७७।।**

**कूर्मपुराण में कथित है—एकादशी एवं द्वादशी एक दिन में होकर उसी दिन रात्रि शेष में त्रयोदशी होती है, इस प्रकार एक दिन में अर्थात् अहोरात्र में तीन तिथि का मिश्रण होने से, उसको त्रिस्पृशा कहते हैं । यह तिथि समस्त पाप प्रणाशिनी है । इसमें उपवास करने पर समस्त पातक विनष्ट होते हैं । एकादशी, द्वादशी एवं शेष रात्रि में त्रयोदशी होने पर—त्रिस्पृशा होती है, उसमें उपवास करने पर शत यज्ञ जनित पुण्य सञ्चय होता है । इस व्रत का पारण त्रयोदशी में होता है ।।३७८-३७९।।**

**और भी वर्णित है—जहाँ त्रिस्पृशा एकादशी है, वहाँ श्रीहरि अधिष्ठित होते हैं । सकाम एवं अकाम वैष्णव, सबको त्रिस्पृशा महाद्वादशी में उपवास करना चाहिये ।।३८०।।**

स्कान्दे—

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । उपोष्या च प्रयत्नेन महापुण्यविवर्द्धिनी ॥३८१॥

किञ्च —

एकादशीकलायुक्ता द्वादशी क्षीयते यदा । उपोष्या च महापुण्या सर्व्वपापहरा तिथिः ॥३८२

सुमन्तुस्मृतौ—

एकादशीकलायुक्ता द्वादशी लुप्यते यदा । एकादशी तदोपोष्या द्वितीया मोक्षकाङ्क्षिभिः ॥३८३

भविष्ये—

एकादशी कलाप्येका द्वादशी सकलं दिनम् । त्रयोदशी ऊषाकाले वैष्णवन्तु दिनत्रयम् ।
सर्व्वपापहरं प्राप्तं तदुपोष्यमिति स्मृतिः ॥३८४॥

पाद्मे च—

द्वादशीसंयुता यत्र भवत्येकादशीकला । दिनक्षयेऽपि या पुण्या न दशम्या कदाचन ॥३८५॥

त्रिस्पृशैकादशी यत्र तत्र सन्निहितो हरिः । पुण्यं क्रतुशतस्योक्तं त्रयोदश्यान्तु पारणम् ॥३८६

द्वारकामाहात्म्ये—

पुरा चैकादशी स्वल्पा अन्ते चैव त्रयोदशी । सम्पूर्णा द्वादशी मध्ये त्रिस्पृशा सा हरिप्रिया ॥३८७

त्रिस्पृशां द्वादशीं प्राप्य कुरुते पूर्व्ववासरम् । तेनात्मनस्तु कल्याणं दग्धं पापाग्निना दृढ़म् ॥३८८

इति त्रिस्पृशा ।

---

स्कन्दपुराण में लिखित है—एकादशी, द्वादशी एवं रात्रिशेष में त्रयोदशी होने पर महापुण्य विस्तारिणी तिथि होती है, उसमें यत्नपूर्वक उपवास करना चाहिये ॥३८१॥

और भी लिखित है—एकादशी कलायुक्ता द्वादशी का क्षय होने पर उक्त महापुण्या सर्वपापनाशिनी तिथि में उपवास करना कर्त्तव्य है ॥३८२॥

सुमन्तु स्मृति में लिखित है—एकादशी कलायुक्ता द्वादशी क्षय प्राप्त होने पर उस एकादशी में उपवास करना चाहिये, मोक्षकामि व्यक्तिगण के पक्ष में द्वादशी में उपवास करना चाहिये ॥३८३॥

भविष्यपुराण में लिखित है—प्रथमतः एकादशी की एक कला रहती है, तत्पश्चात् समस्त दिन द्वादशी तिथि रहती है, एवं ऊषाकाल में त्रयोदशी होने पर त्र्यहस्पर्श होता है, उसको विष्णु सम्बन्धीय जानना चाहिये । सर्व पाप हर यह दिन है, इसमें उपवास करना पड़ता है, यह ही शास्त्र का विधान है ॥३८४॥

पद्मपुराण में लिखित है—द्वादशी समन्विता एक कला एकादशी होने पर अथवा त्र्यहस्पर्श होने पर उस दिन में जो पुण्य सञ्चित होता है, दशमी संयुक्त होने पर उस प्रकार पुण्य होने की सम्भावना नहीं होती है । जहाँ त्रिस्पृशा एकादशी विद्यमान् है, वहाँ श्रीहरि सन्निकटस्थ होते हैं । कथित है, इस व्रत में शत यज्ञानुष्ठान जनित फल लाभ होता है । इस व्रत का पारण, त्रयोदशी में होता है ॥३८५-३८६॥

द्वारकामाहात्म्य में वर्णित है—प्रथमतः किञ्चिन्मात्र एकादशी, मध्य में सम्पूर्णा द्वादशी एवं शेष में त्रयोदशी होने पर उसको त्रिस्पृशा कहने हैं । यह तिथि श्रीहरिप्रिया है । त्रिस्पृशा द्वादशी प्राप्तकर उसके पूर्व दिन ऐकादशी में व्रत करने पर पातकाग्नि के द्वारा समस्त मङ्गल दग्ध हो जाते हैं ॥३८७-३८८॥

इति त्रिस्पृशा ।

अथ पक्षवर्द्धिनी

ब्रह्मवैवर्त्ते व्यासोक्तौ—

तिथिः सशल्या परिवर्ज्जनीया, धर्म्मार्थकामैस्तु बुधैर्मनुष्यैः ।
विहीनशल्यापि विवर्ज्जनीया, यद्यग्रतो वृद्धिमुपैति पक्षः ॥३८९॥

अन्यत्र च—

दर्शश्च पौर्णमासी च सम्पूर्णा वर्द्धते यदि । द्वितीयेऽह्नि नृपश्रेष्ठ सा भवेत् पक्षवर्द्धिनी ॥३९०
एवं महत्यो द्वादश्यश्चतस्रो दर्शिताः क्रमात् । उन्मीलनी वञ्जुली च त्रिस्पृशा पक्षवर्द्धिनी ॥३९१
अपराश्च चतस्रस्ता ज्ञेया नक्षत्रयोगतः । जया च विजया चैव जयन्ती पापनाशिनी ॥३९२॥
तत्र तत्र विशेषश्च योऽन्यः कृष्णार्च्चनादिकः । लेख्यः सोऽग्रे विशेषेण तत्तन्मुख्यनिरूपणे ॥३९३

अथ पूर्व्वोपवासादि-समाधानम्

एवं द्वादश्यवृद्धौ च पूर्व्वोपोष्येति यद्वचः ।
तथा त्याज्या त्रिस्पृशा च कृष्णाप्येकादशीति यत् ॥३९४॥

---

पक्षवर्द्धिनीं लिखति—तिथिरिति द्वाभ्याम् । पक्ष इति पक्षान्तोऽमावस्या पूर्णिमा वेत्यर्थः ॥३८९॥

तदेव स्पष्टयति—सम्पूर्णा सती द्वितीयेऽह्नि प्रतिपद्दिने यदि वर्द्धते ॥३९०॥

एते च महाद्वादशीभेदा इति स्पष्टतया लिखति—एवमिति, लिखितशुद्धैकादशीत्याग प्रकारेण ॥३९१॥

नन्वष्टौ महाद्वादश्यः प्रसिद्धा, तत्र लिखति— अपराश्चेति । ता महाद्वादश्यः ॥३९२॥

ननु तत्र केन नक्षत्रेण कतमा स्यात्, केन वा पूजादिविशेषेण तासां महत्त्वम् ? तत्र लिखति—तत्रेति । उन्मीलन्यादौ जयादौ च, विशेषेण असाधारणतया, तासां मुख्यं निरूपणमग्रतो लेख्यं, तस्मिन् ॥३९३॥

एवं शुद्धात्यागे वैष्णवानां व्रतनिश्चयवचनानि संगृह्याधुना तद्विरोधीन्यन्यान्यपि वचनानि व्यवस्थापयन् लिखति—एवमिति, लिखितवैष्णवव्रतनिश्चयप्रकारेण । द्वादश्या अवृद्धौ त्रयोदशीदिने वृद्ध्यभावे सति पूर्व्वा एकादशी एवोपोष्येति यद्वचः, पूर्णाप्येकादशी त्याज्येत्यादिवचनम् । तथेति समुच्चये । त्रिस्पृशैकादशी

---

अथ पक्षवर्द्धिनी

ब्रह्मवैवर्त्तपुराण की व्यासोक्ति में प्रकाशित है— वेध संयुक्ता एकादशी को वर्जन करना धर्मार्थकामी सुधी मनुष्यवृन्द का एकान्त कर्त्तव्य है। यदि एकादशी की परवर्त्ती अमावस्या अथवा पूर्णिमा की वृद्धि होती है तो, वेधशून्या सम्पूर्णा एकादशी भी परित्याज्या है ॥३८९॥

अन्यत्र भी वर्णित है – हे नृपवर ! यदि अमावस्या अथवा पूर्णिमा सम्पूर्ण होकर प्रतिपद दिन में वृद्धि प्राप्त हो तो, पूर्व द्वादशी को 'पक्ष वर्द्धिनी' कहते हैं ॥३९०॥

इस प्रकार उन्मीलनी, वञ्जुली, त्रिस्पृशा एवं पक्ष वर्द्धिनी, यह महाद्वादशी चतुष्टय का वर्णन क्रमपूर्वक हुआ है। एतद्व्यतीत नक्षत्र के योग से जया, विजया, जयन्ती, एवं पापनाशिनी, यह चतुर्विध द्वादशी के भेद जानने चाहिये। जिस जिस स्थान में इन चारों द्वादशी की विशेषरूप व्यवस्था मुख्य रूप से वर्णित होंगी, उस उस स्थान में कृष्णपूजादि–अपर विशेष विषय भी प्रकाशित होंगे ॥३९१-३९३॥

अथ पूर्व्वोपवासादि-समाधानम्

इस प्रकार द्वादशी की अवृद्धि होने पर पूर्वा एकादशी उपोष्या है, एवं त्रिस्पृशा एवं कृष्णा एकादशी वर्जनीया' इत्यादि जो वचनसमूह विद्यमान हैं, उसका समाधान करते हैं ॥३९४॥

तथा च स्कान्दे—

**पूर्णा एकादशी त्याज्या वर्द्धते द्वितयं यदि । द्वादश्यां पारणालाभे पूर्व्वैव परिगृह्यते ।।३९५**

**एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । त्रिस्पृशं तदहोरात्र नोपोष्यं तत् सुतार्थिभिः ।।३९६**

अतो विष्णुधर्मोत्तरे —

**एकादशी यदा वृद्धा द्वादशी च क्षयं गता । क्षीणा सा द्वादशी ज्ञेया नक्तं तत्र बिधीयते ।।३९७**

स्कान्दे च –

**एकादशी कला यत्र द्वादशी च क्षयं गता । तत्र नक्तं प्रकुर्व्वीत नोपवासं गृहाश्रमी ।।३९८।।**

भविष्योत्तरे श्रीकृष्णयुधिष्ठिर-संवादे—

**यथा शुक्ला तथा कृष्णा द्वादशी मे सदा प्रिया । शुक्ला गृहस्थैः कर्त्तव्या भोगसन्तानवर्द्धिनी ।।३९९**

---

त्याज्येत्यर्थे एकादशी द्वादशी चेत्यादिकं यद्वचः, तथा कृष्णैकादश्यपि त्याज्येत्यर्थे च 'यथा शुक्ला तथा कृष्णा' इत्यादि यद्वचः, एतत् सर्व्वं वैष्णवेतरान् अवैष्णवान् गृहस्थान् प्रति मन्यतामित्युत्तरश्लोकेनान्वयः । तत्तद्वचनमेव लिखति—पूर्णेत्यादिना सदा गृहीत्यन्तेन । द्वितयं एकादशी द्वादशी च । पाठान्तरे परतः अग्रे यदि वर्द्धते एकादश्येव, द्वादश्यां पारणस्य व्रतः माप्तिकालस्यालाभे च सति । अभावे इति क्वचित् पाठः । एवञ्च द्वादशी वृद्धिरपेक्षितैव । पूर्व्वा एव एकादशी प्रथमदिनम् । पूर्णेति पाठेऽपि स एवार्थः । अतएवोक्तं भृगुणापि— 'सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा । तत्रोपोष्या द्वितीया तु परतो द्वादशी यदि ।।' इति । एतादृशान्यन्यानि वचनानि सन्ति, तानि च वैष्णवानामनुपादेयत्वात् न संगृहीतानि । एवमग्रेऽपि ज्ञेयम् । एवं द्वादश्यवृद्धौ पूर्व्वदिनोपवासवचनं लिखितम्, अधुना पुत्रार्थिनां गृहस्थानां त्रिस्पृशानुपवासवचनं लिखति—एकादशीति ।।३९४-३९६।।

सुतार्थिनां त्रिस्पृशानुपवासमेव तत्र नक्तं विधानतः साधयति—एकादशीति द्वाभ्याम् । नक्तं नक्तभोजनं, तच्च किञ्चित् फलादिनैव, व्रतस्य नित्यत्वात् । एतच्चाग्रे व्यक्तं भावि ।।३९७-३९८।।

अधुना गृहस्थानां कृष्णैकादशीत्यागवचनानि लिखति— यथेत्यादिना । शुक्ला गृहस्थैः कर्त्तव्येति तथा 'कृष्णायां ज्येष्ठपुत्रो विनश्यति' इत्यादिना कामिनः पुत्रवतो गृहस्थस्य कृष्णैकादश्युपवासो निषिद्धः । तत्र च चातुर्मास्याः कृष्णैकादश्यस्तेनापि कर्त्तव्याः इत्याह—शयनीति; शयनीबोधन्योरेकादश्योर्मध्ये । 'शुक्लामेव

---

**उक्त विषय में स्कन्दपुराण में लिखित है—द्वादशी की वृद्धि होने पर पूर्णा एकादशी परित्याज्या है । द्वादशी में पारणकाल उपलब्ध न होने पर पूर्णा एकादशी ही ग्राह्या है । एकादशी, अतः पर द्वादशी पश्चात् त्रयोदशी शेष रात्रि में होने पर त्रिस्पृशा कहते हैं । त्रिस्पृशा में उपवास करना पुत्र की इच्छा करने वाले को उचित नहीं है ।।३९५-३९६।।**

**अनन्तर विष्णुधर्मोत्तर में वर्णित है, जब एकादशी वर्द्धित होकर द्वादशी का क्षय होता है, तब उसे क्षीणा द्वादशी कहते हैं । इस तिथि में व्रत की नित्यता के कारण इस व्रत में नक्त भोजन करना पुत्रार्थी मानव के पक्ष में कर्त्तव्य है । अर्थात् रात में फलमूलादि सेवन करना चाहिये ।।३९७।।**

**स्कन्द पुराण में वर्णित है—जिस दिन एकादशी कलामात्र रहती है एवं द्वादशी का क्षय होता है, उस दिन में उपवास न करके नक्त भोजन करना गृहाश्रमी का कर्त्तव्य है ।।३९८।।**

**भविष्योत्तर पुराण के श्रीकृष्ण-युधिष्ठिर-संवाद में वर्णित है—जिस प्रकार शुक्ला द्वादशी है, उस प्रकार कृष्णा द्वादशी भी मेरी सर्वदा प्रिया है, तथापि गृहाश्रमीगण, शुक्ला एकादशी में व्रत करें । वह उनके पक्ष में भोग एवं सन्ततिवर्धिनी है ।।३९९।।**

किञ्च—

संक्रान्त्याद्युपवासेन पारणा न युधिष्ठिर । एकादश्याञ्च कृष्णायां ज्येष्ठः पुत्रो विनश्यति ॥४००

किञ्च—

शयनीबोधनीमध्ये या कृष्णैकादशी भवेत् । सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन ॥४०१

अतएव गोभिलः—

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि । वनस्थ-यतिधर्म्मोऽयं शुक्लामेव सदा गृही ॥४०२॥ इति ।

एतत् सर्व्वं तथान्यच्च वचनं वैष्णवेतरान् । गृहस्थान् पुत्रवित्तादि-तत्परान् प्रति मन्यताम् ॥४०३

अतएवोक्तं मार्कण्डेयपुराणे—

सम्पूर्णैकादशी यत्र परतः पुनरेव सा । पूर्व्वामुपवसेत् कामी निष्कामस्तूत्तरां वसेत् ॥४०४॥

सदा गृही' इत्यनेन च नैवोपवासो निषिध्यते, व्रतस्य नित्यत्वात्, किन्तु तत्र पूजादिनियमविशेष एव निषिध्यते। तच्च श्रीकृष्णदेवाचार्य्यवोपदेवाचार्य्यादिभिरेव सविस्तरं व्याख्यातमस्त्वीत्यतस्तथात्र वैष्णवकृत्यलिखनेऽनपेक्ष्यत्वाच्च, किं तद्विस्तारणेन ॥३९९-४०२॥

एतत् लिखितं सर्व्वं वचनम् ; तथेति समुच्चये; तादृशं वा अन्यत् महाद्वादश्यष्टकं काम्यमित्यादिपरञ्च यद्वचनं, पुत्रवित्तादि-तत्परानित्यवैष्णवलक्षणम् । पूर्व्वं शुक्रमायाकल्पितत्वेन विद्धोपवास-वचनानां समाधानं कृतम् । इदानीञ्च वैष्णवावैष्णवभेदव्यवस्थया कदाचिच्छुद्धात्यागेन परदिनोपवासादिविरोधवचनानां कृतमिति विशेषः । तत्र च यद्यपि विद्धोपवासत्यागे 'वैष्णवेन न कर्त्तव्यं तद्दिनैकादशीव्रतम्' इत्यादाविवात्र परदिनोपवासादि-वचनेषु सर्व्वेषु विशेषतो वैष्णव-शब्दो व्यक्तो नास्ति, तथापि द्वादश्या माहात्म्यविशेषात्, तथा उन्मीलन्यादिषु फलविशेषश्रवणात्, तथा क्वचिच्च 'तत्र सन्निहितो हरिः' इत्यादि, क्वचिच्च 'विष्णुतत्परः' इत्यादि-शब्दवृत्तेः । तथा श्रीविष्णुप्रीणनत्वेन महाद्वादश्यष्टकस्य वैष्णवेषु नित्यत्वाच्च वैष्णवावैष्णवभेदेनैव व्यवस्था साधीयसीति महतां सम्मतमिति दिक् । अतएवाग्रे लेख्यं—वैष्णवसम्मतेति ॥४०३॥

एवं पूर्व्वोपवासादिकमवैष्णवविषयकं परदिनोपवासञ्च वैष्णवविषयकमिति व्यवस्थाप्य लिखितं, तदेव श्रीमार्कण्डेयाद्युक्तव्यवस्थया साधयति— सम्पूर्णेति— चतुर्भिः । कामी पुत्रादिकामवान्, निष्काम-शब्देन

और भी कथित है—हे युधिष्ठिर ! संक्रान्त्यादि उपवास में पारण न करने पर एवं कृष्णा एकादशी में उपवास करने से ज्येष्ठ पुत्र विनष्ट होता है, कामना परायण एवं पुत्रवान् गृहाश्रमी जनगण कृष्णा एकादशी में उपवास न करे ॥४००॥

और भी कथित है—शयनैकादशी एवं उत्थानैकादशी— इन दोनों के मध्य में जो सब कृष्णैकादशी हैं, उसमें ही उपवास करना गृहाश्रमी को चाहिये, तद्व्यतीत अन्य कृष्णा एकादशी में उपवास अनुष्ठान करने की आवश्यकता नहीं है ॥४०१॥

अतएव गोभिल ने कहा है—शुक्ला एवं कृष्णा, एतद् उभय एकादशी में भोजन परित्याग करना, वानप्रस्थ एवं यतिवृन्द का धर्म है, किन्तु सर्वदा शुक्लाएकादशी में उपवास करना गृहस्थाश्रमी का कर्त्तव्य है।

यह जो सब वचन कहे गये हैं, इनके अतिरिक्त 'महाद्वादश्यष्टक काम्यव्रत' प्रभृति अन्यान्य जो वचन समूह हैं—उन सबको पुत्र धनादि प्रार्थी अवैष्णव गृही के पक्ष में जानना चाहिये ॥४०२-४०३॥

अतएव मार्कण्डेय पुराण में उक्त है—सम्पूर्णा एकादशी होकर उसके दूसरे दिन द्वादशी में अवस्थित होने पर पुत्रादिकामी गृहस्थ द्वादशी रहिता एकादशी में उपवास करे । एवं उत्तरा एकादशी समन्विता द्वादशी में निष्कामी होना निष्काम वैष्णवों का कर्त्तव्य है ॥४०४॥

त्रिकाण्डमण्डलेन च—

सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा। उत्तरान्तु यतिः कुर्य्यात् पूर्व्वामुपवसेद्गृही ॥४०५॥

स्कान्दे—

निष्कामस्तु गृही कुर्य्यादुत्तरैकादशीं सदा। प्रातर्भवतु वा मा वा द्वादशी च द्विजोत्तम ॥४०६

विष्णुरहस्ये व्यासेनापि—

शुद्धैव द्वादशी राजन् उपोष्या मोक्षकाङ्क्षिभिः।
पारणस्तु त्रयोदश्यां पूजयित्वा जनार्द्दनम् ॥४०७॥ इति।
तादृशोऽपि गृहस्थोऽत्र परं पुत्त्रादि-कामुकः।
उपवासस्य नित्यत्वात् किञ्चिद्भक्ष्यं प्रकल्पयेत् ॥४०८॥

तदुक्तम्—

उपवासनिषेधे तु किञ्चिद्भक्ष्यं प्रकल्पयेत। नो दुष्यत्युपवासोऽत्र उपवासफलं लभेत ॥४०९॥ इति।

---

गृहस्थोऽपि ग्राह्यः, तस्यापि निष्कामतासम्भवात्। अतएव स्कान्दादौ, 'निष्कामस्तु सदा गृही' इत्यादि। अत्र च कामित्वेनावैष्णवत्वं निष्कामत्वेन च वैष्णवत्वं सुसिद्धमेव ॥४०४॥

यतिरिव, यतिः निष्काम इत्यर्थः। गृही सकाम इत्यर्थः, लिखितन्यायात्। तत्र च प्रायो यतेरेव निष्कामतया गृहिणश्च सकामतया यतिगृहि-शब्दप्रयोग इति दिक् ॥४०५॥

प्रातस्त्रयोदशीदिने द्वादशी भवतु वा, न भवतु वा, तथा उत्तरामेवैकादशीं निष्कामो गृहस्थः सदा कुर्य्यात्, न तु पूर्व्वामित्यर्थः ॥४०६॥

मोक्षो जन्ममरणादि-संसारबन्धतो मुक्तिः; यद्वा, मोक्षयतीति मोक्षः श्रीविष्णुः; यद्वा, अकारप्रश्लेषेण अमोक्षंभगवत्प्रेम, तदाकाङ्क्षात्रद्भिः। जनार्द्दनं पूजयित्वेति वैष्णवतिथेर्द्वादश्या अभावे तस्यां पारणे कृत्यस्य भगवत्पूजाविशेषस्य त्रयोदश्यामपि विधानाज्ञया सन्देहो निरस्तः ॥४०७॥

ननु 'नक्तं तत्र विधीयते' इत्यादिना पुत्रवतः कामिनो गृहस्थस्य नक्तं विहितं, तस्यापि कथं तत् सङ्गच्छतां 'न भोक्तव्यम्' इत्यादिनाधिकारनिर्णये सर्व्वेषामेव भोजननिषेधात्? सत्यं, तेनापि कथञ्चिदवश्यं व्रतं परिपालनीयमेवेति लिखति—तादृशः अवैष्णवोऽपि, अतएव परं केवलं पुत्रादिकामुकः। त्रिस्पृशादिने किञ्चित् पयोमूलं फलादिकं वा भक्ष्यं वा प्रकल्पयेत्, आहारं कुर्य्यात्, तच्च पूर्व्वं लिखितमेव ॥४०८॥

अतः किञ्चिद्भक्ष्यप्रकल्पनाद्धेतोरुपवासो न दुष्यति, उपवासफलं च लभेदिति ॥४०९॥

---

त्रिकाण्ड मण्डल में उक्त है—सम्पूर्णा एकादशी, द्वादशी के प्रत्यूष में किञ्चित विद्यमान होने पर पूर्वदिन में गृही को एवं परदिन में यति को उपवास करना चाहिये ॥४०५॥

स्कन्दपुराण में लिखित है—हे द्विज श्रेष्ठ! पारण दिन के प्रातः काल में द्वादशी विद्यमान होने पर अथवा न होने पर एकादशी के उत्तर भाग में अर्थात् परभाग में उपवास करना ही निष्काम गृहस्थ का कर्त्तव्य है ॥४०६॥

विष्णुरहस्य में व्यास कहे हैं—हे राजन्! मोक्षार्थीवृन्द शुद्धा द्वादशी में उपवासी रहकर त्रयोदशी में जनार्दन की पूजा करके पारण करें ॥४०७॥

एकादशी में उपवास की नित्यता निबन्धन पुत्रकामी अवैष्णव गृहस्थ को केवलमात्र किञ्चित् फल-मूलादि भोजन एवं दुग्धपान करना चाहिये ॥४०८॥

तद्विषय में कथित है—उपवास निषेध स्थल में किञ्चिन्मात्र भक्ष्य ग्रहण करने पर उपवास दूषित नहीं होता है। किन्तु उपवास का फल लाभ होता है ॥४०९॥

इत्थं शास्त्रविचारेण शिष्टाचारानुसारतः । एकादशीव्यवस्थेयं कृता वैष्णवसम्मता ॥४१०॥

विद्वांसोऽप्यत्र मूढ़ाः स्युर्विना कृष्णप्रसादतः । अतः सदासौ निर्द्धार्य्या पृष्ट्वा भागवतोत्तमान् ॥४११

तथा च मार्कण्डेन्द्रद्युम्नसंवादे—

द्वादश्या निर्णये भूप मूढ़मत्र जगत्त्रयम् । अत्र मूढ़ा महीपाल प्रायशो ये नराः पुरा ॥४१२॥

अतएव सौरधर्म्मोत्तरे—

महापुण्यतमा ह्येषा द्वादशी फलतोऽधिका । शोधयित्वा सदा कार्य्या सम्यग्दैवज्ञसत्तमैः ॥४१३

अथ सन्देहनिरसन-विधिः

विष्णुरहस्ये श्रीब्रह्मोक्तौ—

अर्च्चयन्ति सदा विष्णुं मनोवाक्कायकर्म्मभिः ।
तेषां हि वचनं कार्य्यं ते हि विष्णुसमा मताः ॥४१४॥

---

एवं वैष्णवावैष्णवभेदेन व्यवस्थां लिखित्वा निर्णयप्रकरणमुपसंहरन् लिखति—इत्थमिति । शास्त्रविचारेण यः शिष्टानामाचारस्तदनुसारेण । यद्वा, न केवलं शास्त्रविचारेण, किन्तु शिष्टाचारानुसारतश्च । वैष्णवानां सम्मतेत्यनेन वैष्णवेतराणां गृहिणां विद्धायामप्युपवासस्तथा एकादशीद्वादश्योर्वृद्धचैव सम्पूर्णैकादीत्यागः, तथा त्रिस्पृशायां चातुर्म्मास्यवर्त्ति-व्यतिरिक्तकृष्णैकादश्याश्चानुपवासो व्यवस्थापितः । तच्च संक्षेपेणादौ लिखितमेव, वैष्णवानामनुपादेयत्वाच्चात्र विस्तरेण नालेखीति ॥४१०॥

अत्र एकादशीव्यवस्थायां विद्वांसः शास्त्रविदोऽपि विमूढ़ाः स्युः शुक्रमायादिना । तच्च भगवदनुग्रहाभावादेवेति लिखति—विनेति । असौ व्यवस्था एकादशी वा ॥४११॥

पुरा प्राचीना अपि नराः, किमुतार्व्वाचीना इत्यर्थः । नरासुरा इति पाठे नररूपा असुरा दैत्यप्रकृतयो मानुषा इत्यर्थः ॥४१२॥

दैवज्ञसत्तमैर्गणकश्रेष्ठैर्द्वारभूतैः शोधयित्वा ॥४१३॥

अत्र च गणकानां व्यवस्थापकानाञ्च शास्त्रविदां बहूनां विवादेन सन्देहे सति श्रीभगवद्भक्तिपराणां वचनेनैव व्यवहर्त्तव्यं, न त्वन्येषामिति लिखति—अर्च्चयन्तीत्यादिना यावत्समाप्ति । अर्च्चयन्ति, सेवन्ते, मनोवाक्कायानां कर्म्मभिश्चेष्टाभिः, स्मरणकीर्त्तनपरिचर्य्यादिभिरित्यर्थः ॥४१४॥

---

इस रीति से शास्त्रपर्य्यालोचन करके एवं शिष्टगण के आचारानुसरण पूर्वक वैष्णवानुमोदित एकादशी व्यवस्था का वर्णन हुआ । श्रीकृष्ण कृपा व्यतीत विद्वज्जन को भी एकादशी निर्णय में विमूढ़ होना पड़ता है । सुतरां भागवत श्रेष्ठ वैष्णववृन्द को पूछकर सर्वदा एकादशी निरूपण करना चाहिये ॥४१०-४११॥

उक्त विषय का वर्णन मार्कण्डेय-इन्द्रद्युम्न-संवाद में है— हे भूप ! द्वादशी निर्धारण विषय में त्रिजगत् के लोक हतबुद्धि हैं, हे भूपते ! अर्वाचीन लोक की बात तो दूर है, प्राचीन जनगण भी एकादशी निर्णय में प्रायशः विभ्रान्त होते हैं ॥४१२॥

अतएव सौरधर्मोत्तर में वर्णित है—यह महापुण्यतमा द्वादशी अधिक फलप्रद है । सुतरां सर्वदा दैवज्ञ-सत्तमगण कर्त्तृक उत्तम रूप से शोधन करके ही इस व्रत का अनुष्ठान करे ॥४१३॥

अथ सन्देहनिरसन-विधिः

विष्णुरहस्य में ब्रह्मा कहे हैं—जिन्होंने मन, वाक्य, एवं कर्म चेष्टा द्वारा सर्वदा श्रीविष्णु की सेवा की है, उनके उपदेश से ही कार्य्य करना कर्त्तव्य है, कारण, वे सब विष्णु सदृश रूप में कीर्त्तित हैं ॥४१४॥

कौर्म्मे श्रीभगवदुक्तौ—

संस्पृष्ट्वा वैष्णवान् विप्रान् विष्णुशास्त्रविशारदान् ।
चीर्णव्रतान् सदाचारांस्तदुक्तं यत्नतश्चरेत् ॥४१५॥

पाद्मे वैष्णवतन्त्रे—

इतिहासपुराणज्ञाः स्मृतिसिद्धान्तवेदिनः । वासुदेवप्रिया ये च तदुक्तं वैदिकं भवेत् ॥४१६॥

अथ तत्र वर्ज्ज्यम्

विष्णुरहस्ये कौर्म्मे च —

येषां न कारणं वेदा न विप्रा न जनार्द्दनः ।
तन्त्राणि धर्म्मशास्त्राणि तेषां वाक्यं विवर्ज्जयेत् ॥४१७॥

वैष्णवतन्त्रे —

येषां गुरौ न जप्ये वा विष्णौ च परमात्मनि ।
नास्ति भक्तिः सदा तेषां वचनं परिवर्ज्जयेत् ॥४१८॥

स्कान्दे—

येषां विश्वेश्वरे विष्णौ शिवे भक्तिर्न विद्यते । न तेषां वचनं ग्राह्यं धर्म्मनिर्णयसिद्धये ॥४१९

किञ्च—

पञ्चरात्रपुराणानि सेतिहासानि मानवाः । ये विनिन्दन्ति तेषां वै वचनं परिवर्ज्जयेत् ॥४२०

---

संपृच्छ्येति वक्तव्ये संपृष्ट्वेत्यार्षम् । चीर्णव्रतान्—समापितस्वनियमान् ॥४१५॥
वैदिकं वेदोक्तमिव ॥४१६॥
वेदादयो न कारणं प्रमाणम्; तन्त्राणि आगमशास्त्राणि ॥४१७॥
जप्ये मन्त्रे ॥४१८॥
शिवे परममङ्गलस्वरूपे; यद्वा, शिवे च श्रीरुद्रे ॥४१९॥
इतिहासा महाभारतादयस्तत्संहितानि ॥४२०॥

---

कूर्म्मपुराण के भगवान् की उक्ति में प्रकाशित है– जिन्होंने निज निज विहित नियमों का पालन किया है, तादृश वैष्णव शास्त्रज्ञ सदाचार निष्ठ वैष्णव विप्रगण के निकट जिज्ञासा करके यत्नपूर्वक उनके कथनानुसार व्रतादि समस्त आचरण करे ॥४१५॥

पद्मपुराण के वैष्णवतन्त्र में उक्त है– इतिहास पुराण विशारद, स्मृति सिद्धान्तदर्शी श्रीहरिभक्तगण के वाक्य वेद सदृश है ॥४१६॥

अथ तत्र वर्ज्ज्यम्

विष्णुरहस्य एवं कूर्मपुराण में लिखत है—वेद, विप्र, हरि, यह जिनको प्रमाण नहीं हैं, अर्थात् जो इन तीनों को नहीं मानते, वह सब तन्त्र और वह सब धर्मशास्त्रों के वचन अग्राह्य हैं ॥४१७॥

वैष्णवतन्त्र में लिखा है– गुरु, मन्त्र, एवं परमात्मा हरि में भक्ति न होने पर उन सब पुरुषों का वचन निरन्तर त्याज्य है, अर्थात् उनके वचनों को ग्रहण करना कदापि उचित नहीं है ॥४१८॥

स्कन्दपुराण में लिखित है—जगदीश्वर विष्णु में, शिव में जिनकी भक्ति नहीं है, उन सबका वाक्य धर्म निर्णय विषय में ग्रहण योग्य नहीं है ॥४१९॥

और भी वर्णित है—पञ्चरात्र, पुराण, इतिहास की निन्दा करने वाले का वचन त्याग देना चाहिये ॥ ॥४२०॥

अतएव याज्ञवल्क्यः—

**पुराणं पञ्चरात्रञ्च वेदाः पाशुपतास्तथा । अतिप्रमाणान्येतानि न हन्तव्यानि हेतुभिः ॥४२१॥**

**इति श्रीगोपालभट्ट-विलिखिते श्रीभगवद्भक्तिविलासे एकादशी-निर्णयो नाम द्वादशो विलासः ।**

---

हेतुभिः कुतर्कविजृम्भितहतुवादैर्न हन्तव्यानि न खण्डयितव्यानि ॥४२१॥

इति द्वादशो विलासः ।

---

अतएव याज्ञवल्क्य ने कहा है—पुराण, पञ्चरात्र, वेद, पाशुपत-यह सब अतीव प्रमाण शास्त्र हैं, हेतुवाद अर्थात् कुतर्कादि के द्वारा उनका खण्डन करना उचित नहीं है ॥४२१॥

इति श्रीगोपालभट्टविलिखिते श्रीभगवद्भक्तिविलासे एकादशी निर्णयो नाम द्वादशोविलासः ।

———

# त्रयोदश-विलासः

**वन्दे चैतन्यदेवं तं कृष्णं नित्यनवोत्सवम् । यस्य प्रसादात् सिध्यन्ति दीनस्यापि महोत्सवाः ॥१**

अथोपवासपूर्व्वदिनकृत्यम्

**प्रातःस्नानादिकं कृत्वा सुवेशो धौतवस्त्रकः । व्रत सङ्कल्प्य कुर्व्वीत वैष्णवैश्च महोत्सवम् ॥२**

सङ्कल्पमन्त्रः

**दशमीदिनमारभ्य करिष्येऽहं व्रतं तव । त्रिदिनं देवदेवेश निर्विघ्नं कुरु केशव ॥३॥**

---

यस्य शक्त्यंशलाभेन ब्रह्मादेरपि शक्तयः । तास्ता विभान्ति तं वन्दे सर्व्वशक्तिप्रदं विभुम् ॥

एवमेकादशीव्रतं निर्णीयाधुना दशम्यादिकृत्यमहोत्सव-प्रकरणं लिखन्, तल्लिखनादि-महोत्सवसिद्धये भगवन्तं प्रणमति—वन्दे इति । नित्यं नवनवोत्सवो भक्तानां यस्मात्तं, यद्वा, प्रतिक्षणनूतनोत्सवरूपम् ॥१॥

प्रातःसमये स्नानम्, आदि-शब्देन सन्ध्योपासनादि नित्यकृत्यञ्च, सर्व्वं सम्पाद्य । सुवेश इति वैष्णवानां दशम्यां क्षौरकर्म्मादिविधानात् । क्षौरकर्म्मावसरश्च रत्नमालायाम्—'भुक्ताभ्यक्तनिरासनैश्च समयग्रामान्तर-प्रस्थितैः, स्नातैर्नो नवमेऽहनीति विबुधाः क्षौरं हि कार्य्यं जगुः । दीक्षा-बन्धविमोक्ष-मृत्युसमयोद्वाहेषु भूपाज्ञया,

---

**जिनसे भक्तवृन्द के नित्य नव-नव उत्सवोदय होते हैं, उन श्रीकृष्णचैतन्यदेव की वन्दना करता हूँ ।१॥**

अथोपवासपूर्व्वदिनकृत्यम्

**अनन्तर उपवास के पूर्वदिन का कृत्य-अर्थात् दशमीकृत्य का वर्णन करते हैं—प्रातः स्नानादि समापन पूर्वक सुवेश एवं धौत वसनधारी होकर भक्तों के सहित महोत्सव सम्पादन सङ्कल्प पूर्वक करे ।२॥**

सङ्कल्पमन्त्रः

**हे देवदेवेश ! मैं दशमी दिन से आरम्भ कर तीन दिन त्वदीय व्रतानुष्ठान करूँगा । हे केशव ! मेरा व्रत निर्विघ्न कीजिये ॥३॥**

तत्र चास्पृश्य-स्पर्शेऽपि न स्नानम्

विष्णुस्मृतौ—

उत्सवे वासुदेवस्य स्नायाद्योऽशुचिशङ्कया । तादृशं कश्मलं दृष्ट्वा सवासा जलमाविशेत् ॥४॥

इति ।

स्तुत्वाऽथ बहुधा कृष्णं घोषयेन्नियमान्वितम् । श्रीरुक्माङ्गद-मत्तेभपटहोद्‌घोषितं वचः ॥५॥

तथाहि नारदीये—

प्रातर्हरिदिनं लोकास्तिष्ठध्वं चैकभोजनाः । अक्षारलवणाः सर्व्वे हविष्यान्ननिषेविणः ॥६॥
अवनीतल्पशयनाः प्रियासङ्गविवर्ज्जिताः । स्मरध्वं देवमीशानं पुराणं पुरुषोत्तमम् ।
सकृद्भोजनसंसक्ता द्वादश्याञ्च भविष्यथ ॥७॥

किञ्च—

वरं स्वमातृगमनं वरं गोमांसभक्षणम । वरं हत्या सुरापानं नैकादश्यान्तु भोजनम् ॥८॥

---

त्रिप्राणामखिलेषु तेषु कथितं क्षौरं शुभं सूरिभिः ॥' इति; यच्च स्मृतौ—'उष्णोदकं तथाभ्यङ्गं शय्यावपन-मैथुनम् । वर्ज्जयेत्तानि यत्नेन दशम्यादि दिनत्रये ॥' इति, तच्चावैष्णवविषयकमिति ज्ञेयम् । तथा धौतं वस्त्रं यस्य येन वेति च, वस्त्रादिप्रक्षालनात् । वैष्णवैः कृत्वा सहेति वा । महोत्सवनिर्वर्त्तनप्रकारश्च पूर्व्वलिखितेनाग्रे लेख्येन च तथा सर्व्वः सदाचारेणापि प्रसिद्ध एव । यद्विशेषतः श्रीभगवन्मन्दिरं संमार्ज्जनादिना संस्कृत्य ध्वजपताकादिभिरलङ्कृत्य च भगवन्तं सिंहासनोत्तमे सुखमुपवेश्य महापूजां विधाय भक्त्या वैष्णवानाहूय सम्मान्यनृत्यगीतादिकं विनिष्पादयेदिति ॥२-४॥

अथ महोत्सवानन्तरं बहुधा विचित्र-गद्यपद्यादिपाठेन स्तुत्वा, श्रीरुक्माङ्गदस्य मत्तेभस्तस्मिन् पटहो वाद्यभाण्डविशेषस्तेन, यद्वा, श्रीरुक्माङ्गदेन प्रयोजकेन निजमत्तेभपटहेन कृत्वा उद्‌घोषितम् उच्चैः शब्दितं यद्वचः वाक्यं तद्घोषयेत्, श्रावयेत् । नियमैर्दशम्यादिकृत्यैरग्रे लेख्यैरन्वितमिति नियमांश्च घोषयेदित्यर्थः ॥५॥

---

तत्र चास्पृश्य-स्पर्शेऽपि न स्नानम्

विष्णुस्मृति में लिखित है—वासुदेव के उत्सव के समय अशुचि शङ्का से स्नान करने पर वह पापी होता है, उस पापी को देखकर सवस्त्र स्नान करना चाहिये ॥४॥

रुक्माङ्गद राजा ने विविध प्रकार से श्रीहरि की स्तुति करके गजोपरि पटह वादन पूर्वक जिन बातों की घोषणा की थी, दशमी के नियम सहित उन सबकी घोषणा करे ॥५॥

नारदपुराण में उक्त विषय का वर्णन है—हे मानववृन्द ! अद्य श्रीहरिदिन का प्रभात है, सब ही एकाहारी क्षार, लवण सेवन नहीं करना, हविष्यान्न भोजन करना, भूमि शय्या में शयन करना, भार्य्या का सङ्ग न करना, पुराणपुरुषोत्तम ईशानदेव का स्मरण करो, एवं द्वादशी में एक वार मात्र भोजन करना ॥६-७॥

और भी वर्णित है—स्वमातृगमन, गोमांस भक्षण, हत्याकरण, किंवा मद्यपान की अपेक्षा भी एकादशी में भोजन करना गर्हित कार्य्य है, सुतरां ऐकादशी में भोजन न करे ॥८॥

अथ क्षाराः

तिलमुद्गादृते शस्यं शम्यं गोधूमकोद्रवाः । चणकं देवधान्यञ्च एष क्षारगणः स्मृतः ॥९॥

अथ हविष्याणि

हैमन्तिकं सितास्विन्नं धान्यं मुद्गा यवास्तिलाः ।
कलायकङ्गुनीवारा वास्तूकं हिलमोचिका ॥१०॥

षष्टिका कालशाकञ्च मूलकं केमुकेतरत् । कन्दं सैन्धवसामुद्रे गव्ये च दधिसर्पिषी ॥११॥
पयोऽनुद्धृतसारञ्च पनसाम्रे हरीतकी । पिप्पली जीरकञ्चैव नागरङ्गञ्च तिन्तिड़ी ॥१२॥
कदली लवली धात्री फलान्यगुड़मैक्षवम् । अतैलपक्वं मुनयो हविष्याणि प्रचक्षते ॥१३॥

अथान्येऽपि नियमाः

स्कान्दे—
कांस्यं मांसं मसूरञ्च क्षौद्रञ्चानृतभाषणम् । पुनर्भोजनमायासं दशम्यां परिवर्ज्जयेत् ॥१४॥

कौर्म्मे—
कांस्यं मांसं मसूरञ्च चनकं कोरदूषकान् । शाकं मधु पराञ्च त्यजेदुपवसन् स्त्रियम् ॥१५॥

किञ्च—
कांस्यं मांसं मसूरञ्च पुनर्भोजनमैथुनम् । द्यूतमत्यम्बुपानञ्च दशम्यां सप्त वर्ज्जयेत् ॥१६॥

---

शम्यं शमीधान्यं, सप्तधान्येतरन्माषादि-गोधूमादिकं शस्यम् । हेमन्तिकं हेमन्तकालभवं धान्यम् । कथम्भूतम् ? सितञ्च तत् अस्विन्नञ्च । षष्टिका धान्यविशेषः, शाकविशेषो वा । ऐक्षवम् इक्षुविकारः, तच्च गुड़वर्जितम् । अतैलपक्वमिति तच्च शाकादिकं तैलेन पक्वं सद्धविष्यं न भवतीत्यर्थः ॥९-१३॥

आयासमित्यत्र अत्याशमिति क्वचित् पाठः सङ्गत इव । पूर्व्वं स्नाने दशम्यामवश्यं तैलं ग्राह्यमिति लिखितं, 'दशम्यां तैलमस्पृष्ट्वा यः स्नायादविचक्षणः' इतिवचनेन प्राप्तं, अत्र दशमीनियमेषु वर्ज्ज्यमिति न

---

अथ क्षाराः

तिल एवं मूँग भिन्न शस्य, शमीधान्य, गोधूम, कोद्रव, चणक एवं देवधान्य—यह सब धान्य 'क्षार' कहे गये हैं ॥९॥

अथ हविष्याणि

श्वेत वर्ण असिद्ध हैमन्तिक धान्य, मूँग यव, तिल, कलाय, काओन, उड़िधान, वास्तूक (बथुआ) हिञ्चा षष्ठिक, कालशाक, मूलक, केंउ भिन्न अन्यान्य मूलद्रव्य, कन्द, सैन्धव लवण, सामुद्र लवण, करकच लवण, गव्यदधि, गव्यघृत, नवनीत युक्त दुग्ध, कटहर, आम्र, हरीतकी, पिपुली, जीरक, नाराङ्गा, तेंतुल, कदली, लवली, आमलकी, गुड़, भिन्न इक्षु विकार, चिनी प्रभृति, अतैल पक्व द्रव्य—इन सबको मुनियों ने हविष्य कहा है ॥१०-१३॥

अथान्येऽपि नियमाः

स्कन्दपुराण में उक्त है—काँसी का पात्र, माँस, मसूर, मधु, मिथ्या भाषण, दूसरी बार भोजन, परिश्रम,—दशमी में यह सब त्याग दें ॥१४॥

कूर्मपुराण में लिखित है—कांस्यपात्र, मांस, मसूर, चना, कोरदूषक, कोप, शाक, मधु, परान्न, स्त्रीसङ्ग उपवासी के पक्ष में त्याज्य है ॥१५॥

और भी कथित है—कांस्यपात्र, मांस, मसूर, पुनर्भोजन, मैथुन द्यूतक्रीड़ा, अधिक जलपान—दशमी में यह सात वर्जनीय हैं ॥१६॥

मात्स्ये—

कांस्यं मांसं सुरां क्षौद्रं तैलं वितथभाषणम् । व्यायामञ्च प्रवासञ्च दिवास्वापञ्च मैथुनम् ।
शिलापिष्टं मसूरञ्च द्वादशैतानि सन्त्यजेत् ॥१७॥

स्मृत्यन्तरे—

दशम्यामेकभक्तन्तु कुर्व्वीत नियतेन्द्रियः । आचम्य दन्तकाष्ठन्तु खादयेत्तदनन्तरम् ॥१८॥

अथ तन्माहात्म्यम्

उक्तञ्च ब्रह्मवैवर्त्ते—

दशम्यां दन्तकाष्ठेन जिह्वां लेखयते यदा । द्वादशी-नियमार्थाय निराशः स्याद्यमस्तदा ॥१९

निर्माज्जयति तत् पापं पटस्थं दीनमानसः । अभुक्त.कर्म्मा संयाति पातकी वैष्णवं पदम् ॥२०

अथैकभक्तलक्षणम्

दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत् । एकभक्तमिति प्रोक्तं कर्त्तव्यं तत् प्रयत्नतः ॥२१॥ इति ।

ततो रात्रिं नयेताञ्च ब्रह्मचारी जितेन्द्रियः । भगवन्तं स्मरन् भक्त्या भूमिशायी सुखं स्वपन् ॥२२

---

विरुद्धं, सकामनिष्कामतया परिहार्य्याम्, 'चत्वारि तस्य नश्यन्ति आयुः प्रज्ञा यशो बलम्' इति तत्रैवोक्तेः । एवमन्यत्रापि विरोधः परिहरणीयः ॥१४-१७॥

न भुक्तं कर्म्म येन नरकदुःखाद्यभोगात्,सोऽपि सम्यग्याति, द्वादशीव्रतार्थोद्यममात्रेणैव सर्व्वदुष्कर्म्मक्षयात् । एवं दशम्यां भोजनान्तरं, काष्ठेन दन्तधावनविधानादेकादश्यां पर्णादिना दन्तधावनं निरस्तम्, अन्यथा पूर्व्व-दिनान्ते तद्धावनप्रयासानुपपत्तेः । केवलं द्वादशगण्डूषैरेव मुखशोधनं तस्यां कार्य्यमिति चादौ लिखितमेव ॥२०

ब्रह्मचारीति स्त्रीसङ्गादि वर्ज्जयन्नित्यर्थः । यद्यपि नियमेषु मैथुनवर्ज्जनं लिखितमेव, तथापि स्वभावतः स्त्रीदर्शनादिरूपं ब्रह्मचारित्वमत्र ग्राह्यम् । तच्चाग्रे व्यक्तं भावि । अतएव जितं वशीकृतमिन्द्रियं येन तथाभूतः सन् ॥२२॥

---

मत्स्य पुराण में लिखित है—कांस्य पात्र, मांस, मद्य, मधु, तैल, मिथ्या कथा, व्यायाम (कसरत) प्रवास, दिवानिद्रा, मैथुन, शिलापिष्ट द्रव्य एवं मसूर, दशमी में इन बारह को परित्याग करना चाहिये ॥१७

स्मृत्यन्तर में उक्त है—दशमी के दिन संयतेन्द्रिय होकर एकाहार, तत्पश्चात् आचमन, और इसके पीछे दन्तकाष्ठ के द्वारा दन्तधावन करना चाहिये ॥१८॥

अथ तन्माहात्म्यम्

ब्रह्मवैवर्त्तपुराण में लिखित है—द्वादशी नियमार्थ दशमी में दन्तकाष्ठ के द्वारा दन्त-धावन एवं जिह्वा-शोधन करने पर यमराज उसको देखकर निराश होकर, तदीय पत्रस्थ (खाते में जमा हुआ) पातक दूर कर देते हैं । उक्त पातकी को पुनर्वार कर्मफल-जनित क्लेश भोगना नहीं पड़ता है; वह बैकुण्ठ-धाम में गमन करता है ॥१९-२०॥

अथैकभक्तलक्षणम्

दिवस का अर्द्धभाग अतीत होने पर यथा नियम जो भोजन किया जाय, उसका नाम एक भक्त है । यत्नपूर्वक 'एक भक्त' व्रत का आचरण करना चाहिये ॥२१॥

ब्रह्मचारी और जितेन्द्रिय होकर भूमि-शय्या में सुखपूर्वक शयन कर भक्तिपूत हृदय से श्रीहरि का स्मरण करता हुआ रात्रि अतिवाहित करे ॥२२॥

अथोपवासदिनकृत्यम्

प्रातः स्नात्वार्च्चयित्वा च भगवन्तं यथाविधि। ताम्रपात्रं समादाय व्रतसङ्कल्पमाचरेत् ॥२३

तथा चोक्तं देवलेन—

गृहीत्वौडुम्बरं पात्रं वारिपूर्णमुदङ्मुखः। उपवासन्तु गृह्णीयाद्यद्वा सङ्कल्पयेद्बुधः ॥२४॥

अथ तत्र सङ्कल्पमन्त्रः

एकादश्यां निराहारः स्थित्वाऽहमपरेऽहनि। भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युते ॥२५॥

इति।

उच्चारयन्निमं मन्त्रं श्रीकृष्णचरणाब्जयोः। पुष्पाञ्जलिं समर्प्याथ मन्त्रपूतं जलं पिवेत् ॥२६॥

तदुक्तं मार्कण्डेयेन—

अष्टाक्षरेण मन्त्रेण त्रिजप्तेनाभिमन्त्रितम्। उपवासफलं प्रेप्सुः पिवेत्तोयं समाहितः ॥२७॥

देवार्च्चनं ततः कृत्वा पुष्पाञ्जलिमथापि वा। सङ्कल्पमन्त्रमुच्चार्य्य देवाय विनिवेदयेत् ॥२८॥

दशम्यां चार्द्धरात्रोपर्य्यनुवृत्तौ पुरःसरान्। एकादश्याश्चतुर्यामान् हित्वा सङ्कल्पमाचरेत् ॥२९

---

यथाविधीति पूर्व्वालिखितः स्नानार्च्चनादि-विधिरुन्नेयः ॥२३॥

औडुम्बरं ताम्रमयं पात्रम्, उपवासं गृह्णीयात्, यद्वा, सङ्कल्पयेदिति औडुम्बरपात्राद्यभावे सङ्कल्पमात्रमपि कुर्य्यादित्यर्थः। 'शरणं मे भवाच्युत' इत्यत्र 'गतिर्भव ममाच्युत' इति देवलेन पठितम्। स्थित्वेत्यत्र च भूत्वेति। विष्णुना च स्थित्वाहमपरेऽह्न्यमिति। तोयं पिवेत्, अथवा देवार्च्चनं कृत्वा तदनन्तरं देवाय पुष्पाञ्जलिं विनिवेदयेत् समर्पयेदिति जलपानपुष्पाञ्जल्यर्पणयोर्विकल्प उक्तः। कुर्य्यादिति पाठे तु देवार्च्चन-पुष्पाञ्जल्यर्पण-योर्विकल्पो ज्ञेयः ॥२४-२८॥

अर्द्धरात्रोपरि च दशम्यनुवृत्तौ सत्यां एकादश्याः पुरःसरान् आद्यान् चतुरो यामान् हित्वा व्रतसङ्कल्पं

---

अथोपवासदिनकृत्यम्

प्रातःकाल में यथाविधि स्नान एवं श्रीहरि की पूजा करके ताम्रपात्र ग्रहणपूर्वक व्रतार्थ सङ्कल्प करना चाहिये ॥२३॥

तद्विषय में देवलोक्ति यह है—सुधीजन, जलपूर्ण ताम्रपात्र लेकर उत्तरमुख उपवेशन कर उपवास का सङ्कल्प करे। ताम्रपात्र के अभाव से केवलमात्र सङ्कल्प करे ॥२४॥

अथ तत्र सङ्कल्पमन्त्रः

हे पुण्डरीकाक्ष! हे अचयुत! 'मैं एकादशी में उपवास करके परदिन द्वादशी में भोजन करूँगा, आप मेरे शरणस्थान हूजिये'। यह मन्त्र पढ़कर श्रीहरि के दोनों चरणों में पुष्पाञ्जलि प्रदान पूर्वक फिर मन्त्रपूत जल पान करना चाहिये ॥२५-२६॥

इस विषय में मार्कण्डेय ने कहा है—उपवास फलेच्छु व्यक्ति एकाग्रचित्त होकर वारत्रय अष्टाक्षर मन्त्र द्वारा अभिमन्त्रित जल पान करे। अनन्तर भगवान् की पूजा एवं सङ्कल्प-मन्त्र उच्चारण पूर्वक श्रीहरि को पुष्पाञ्जलि अर्पण करे ॥२७-२८॥

अर्द्धरात्रि के पश्चात् यदि दशमी तिथि की अवस्थिति होती है, तो एकादशी के पूर्व चार प्रहर परित्याग कर सङ्कल्प करना चाहिये ॥२९॥

तथा चोक्तम्—

दशम्याः सङ्गदोषेण अर्द्धरात्रात् परेण तु । वर्ज्जयेच्चतुरो यामान् सङ्कल्पार्च्चनयोस्तदा ॥३०

नारदीये च—

पूर्व्वायाः सङ्गदोषणैकादश्यां स्नानपूजने । वर्ज्जयन्ति नराः पूर्व्वान् यामांश्च चतुरो द्विज ।
तदूर्द्ध्वं स्नानपूजादि कर्त्तव्यं तदुपोषितैः ॥३१॥

न दिवा शुद्धिमाप्नोति तदा रात्रौ विधीयते । दिनकार्य्यमशेषञ्च कर्त्तव्यं शर्व्वरीमुखे ॥३२॥इति ।

ततश्च भगवद्भक्त्या परिचर्य्यादिरूपया । दिनं रात्रिञ्च गमयेदुपवासपरो बुधः ॥३३॥

तदुक्तं स्कान्दे—

संपूज्य देवदेवेशं भक्त्या परमया युतः । अहोरात्रं क्षिपेद्धीमानुपवासफलाप्तये ॥३४॥

अथोपवासलक्षणम्

गृह्यपरिशिष्ट-कात्यातनस्मृति-विष्णुधर्म्म-ब्रह्मवैवर्त्तादिषु—

उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह । उपवासः स विज्ञेयः सर्व्वभोगविवर्ज्जितः ॥३५॥

---

कुर्य्यात् । इत्थमपि अर्द्धरात्रवेधः परिहृतः ॥२९-३०॥

पूर्व्वायाः दशम्याः ॥३१॥

ननु दिनकृत्यं कथं रात्रौ कर्त्तव्यम् ? तत्राह—न दिवेति । दिनकार्य्यं यदि दिवा दिनमध्ये शुद्धिं नाप्नोति, तच्च शर्व्वरीमुखे प्रदोष एवाशेषं कर्त्तव्यम् ॥३२॥

परिचर्य्यादिरूपयेति व्रतादौ पूजाविशेषप्राधान्यात् ॥३३॥

पापेभ्य उपावृत्तस्य जनस्य गुणैः सह यो वासः स उपवासो विज्ञेयः । किञ्च, सर्व्वभोगैर्विवर्ज्जितः ॥३५॥

---

तद्विषय में उक्त है—अर्द्धरात्रि के पश्चात् दशमी होने पर दशमी सङ्गदोष वशतः एकादशी दिन का चार प्रहर काल त्यागकर सङ्कल्प एवं श्रीहरि की पूजा करनी चाहिये । इस प्रकार वैधानिक रीति से अर्द्धरात्र वेध निरस्त हुआ ॥३०॥

नारदीय पुराण में लिखित है—हे द्विज ! दशमी सङ्गरूप हेतु एकादशी में स्नान एवं पूजन विषय में मानवगण, एकादशी के पूर्व यामचतुष्टय वर्ज्जन करते हैं । सुतरां उपवास परायण व्यक्तिगण, चार प्रहर के पश्चात् स्नान एवं पूजादि करें ॥३१॥

दिन के कार्य्य, दिन में शुद्धिपात्र न होने पर, वे सब कार्य्य प्रदोषकाल में सम्यक् विधान से करें ॥३२॥

अतएव उपवास परायण व्यक्तिगण, परिचर्य्यारूप भगवद्भक्ति के द्वारा अहोरात्र यापन करें ॥३३॥

स्कन्दपुराण में कथित है—बुद्धिमान् व्यक्ति उपवास के फल प्राप्ति हेतु देवदेवेश्वर श्रीहरि की पूजा, भक्ति पूर्वक करके दिवा रात्र यापन करें ॥३४॥

अथोपवासलक्षणम्

गृह्यपरिशिष्ट कात्यायनस्मृति–विष्णुधर्म–ब्रह्मवैवर्त्तादि में लिखित है— सर्व पापों से निवृत्त होकर गुण के सहित मनुष्यों की अवस्थिति का नाम ही 'उपवास' है । इस उपवास को समस्त भोगों से रहित जानना चाहिये ॥३५॥

तत्र भोगाः

उक्तश्च शातातपेन—

गन्धालङ्कारवासांसि पुष्पमाल्यानुलेपनम् । उपवासेन दुष्यन्ति दन्तधावनमञ्जनम् ॥३६॥

श्रीव्यासेन च—

पुष्पालङ्कारवस्त्राणि गन्धधूपानुलेपनम् । उपवासे च दुष्यन्ति दन्तधावनमञ्जनम् ॥३७॥

अथ तत्र उपवासे पापानि

श्रीसुमन्तुना—

विहितस्याननुष्ठानमिन्द्रियाणामनिग्रहः । निषिद्धसेवनं नित्यं वर्ज्जनीयं प्रयत्नतः ॥३८॥

शातातपेनापि—

असत्यभाषणं द्यूतं दिवास्वापश्च मैथुनम् । एकादश्यां न कुर्व्वीत उपवासपरो नरः ॥३९॥

किञ्च, विष्णुधर्म्मेषु—

पाषण्डिभिरसंस्पर्शमसम्भाषणमेव च । विष्णोराराधनपरैरेतत् कार्य्यमुपोषितैः ॥४०॥

श्रीविष्णुपुराणे—

तस्मात् पाषण्डिभिः पापैरालापस्पर्शने त्यजेत् ।
विशेषतः क्रियाकाले यज्ञादौ चापि दीक्षितः ॥४१॥

---

भोगानेव दर्शयति—गन्धेति द्वयेन । अञ्जनं नर्त्तकादि-लोचनयोः । उपवासेन सह दुष्यन्ति, अतस्तत्र वर्ज्जयेदिति भावः । यच्च काशीखण्डे—'उपवासेऽपि नो दुष्येद्दन्तधावनमञ्जनम्' इत्यादि, तच्च प्रायो वेशो योषितामेव नेत्राञ्जनाचारेण तत्साहचर्य्यात् । तत्रोक्तं दन्तधावनादि सर्व्वं तद्विषयकमेव ज्ञेयमिति पूर्व्वं लिखितमेवास्ति ॥३६॥

'पापेभ्य उपावृत्तः' इत्युक्तं, तान्येव दर्शयति—विहितस्येति चतुर्भिः । नैवेति पाठेऽपि काक्वा कार्य्य-

---

तत्र भोगाः

शातातप ने कहा है—गन्ध, अलङ्कार, वसन, पुष्पमाल्य, अनुलेपन, दन्तधावन, एवं अञ्जन,-यह सब उपवास में दोषावह हैं ॥३६॥

श्रीव्यासोक्ति में प्रकाशित हैं—पुष्प, भूषण, वसन, गन्ध, धूप, अनुलेपन, दन्तधावन एवं अञ्जन,-यह सब उपवास में दोषावह है ॥३७॥

अथ तत्र उपवासे पापानि

सुमन्तु कर्त्तृक उपवास में पापसमूह का वर्णन इस प्रकार हुआ है-विहिताननुष्ठान अर्थात् शास्त्र निर्दिष्ट कर्त्तव्याचरण न करना, इन्द्रिय वर्ग को निगृहीत न करना, एवं शास्त्र निषिद्ध कार्य्य करना, इस सबका परित्याग यत्नपूर्वक करे ॥३८॥

शातातप ने कहा है—उपवास परायण मानव, एकादशी में असत्य भाषण, द्यूतक्रीड़ा, दिवानिद्रा एवं मैथुन,-इन सबका परित्याग करें ॥३९॥

विष्णुधर्म में कथित है—विष्णु की आराधना में तत्पर उपवासी मानव, कभी भी पाषण्डी के सहित संस्पर्श एवं सम्भाषण न करें ॥४०॥

श्रीविष्णुपुराण में कथित है—अतएव पापयुक्त पाषण्डिगण के सहित आलाप एवं संस्पर्श वर्जन करे। विशेषतः दीक्षित व्यक्ति, अनुष्ठान के समय अथवा यज्ञादि में उन सबके सहित वार्त्तालाप अथवा उनको स्पर्श न करे ॥४१॥

अथ तत्प्रायश्चित्तम्

तत्रैवोक्तम्—

तस्यावलोकनात् सूर्य्यं पश्येत मतिमान्नरः ॥४२॥

विष्णुधर्म्मे च—

संस्पर्शे च बुधः स्नात्वा शुचिरादित्यदर्शनात् ।
सम्भाष्य तान् शुचिषदं चिन्तयेदच्युतं बुधः ॥४३॥

अथ तत्र गुणाः

भविष्ये—

क्षमा सत्यं दया मौनं शौचमिन्द्रियनिग्रहः । देवपूजाग्निहवनं सन्तोषस्तेयवर्ज्जनम् ।
सर्व्वव्रतेष्वयं धर्म्मः सामान्यो दशधा स्थितः ॥४४॥

पाद्मे च श्रीयमधूम्रकेतुसंवादे—

दशम्यां संयमं कृत्वा व्रताहे नियतेन्द्रियः । क्रोधहिंसाविहीनश्च कृष्णकीर्त्या दिनं नयेत् ॥४५॥

विष्णुधर्म्मोत्तरे—

तज्जप्यं तज्जपध्यानं तत्कथाश्रवणादिकम् । तदर्च्चनञ्च तन्नामकीर्त्तनश्रवणादयः ।
उपवासकृता ह्येते गुणाः प्रोक्ता मनीषिभिः ॥४६॥

---

मेवेत्यर्थ एव । अत्र दर्शनमपि न कार्य्यमिति ज्ञेयम्, अग्रे तत्प्रायश्चित्तोक्तेः । शुचिषु शुद्धजलेषु शुचिनिमित्तेषु वा निषीदति शुचिषत्, तम् ॥३८-४३॥

गुणैः सहेत्युक्तं, तानेव दर्शयति—क्षमेति चतुर्भिः ॥४४॥

एवं सामान्यतो गुणान् लिखित्वाधुना एकादशीव्रते गुणविशेषं लिखति—दशम्यामिति सार्द्धद्वयेन । यद्यप्यत्रोक्तं नियतेन्द्रियत्वादिकमपि सामान्यमेव, तथापि तस्य कर्त्तृविशेषणत्वाद्गौणत्वेन कृष्णस्य कीर्त्या कीर्त्तनेन दिनं नयेदित्यस्य विधेरेव मुख्यतेति दिक् ॥४५॥

पुनरत्यन्तविशेषं लिखति—तज्जप्यमिति । तच्छब्देन सर्व्वत्र भगवतः परामर्शः, जप्यं मन्त्रः, जपो मन्त्रस्य नाम्नो वा ध्यानञ्च भगवत इति विवेचनीयम् । कथायाः श्रवणं, आदि-शब्देन तस्याः कथनादि च, नाम्नः कीर्त्तनं श्रवणञ्च; आदि-शब्देन वन्दनादयोऽग्रे भक्तिप्रकाराः ॥४६॥

---

अथ तत्प्रायश्चित्तम्

उक्त प्रकार कार्य्य होने पर किस प्रकार प्रायश्चित्त करना पड़ता है, उसका वर्णन उक्त श्रीविष्णुपुराण में ही है । पाखण्डी को देखकर बुद्धिमान् मनुष्य, सूर्य्यावलोकन करे ॥४२॥

विष्णुधर्म में उक्त है—पाषण्डी के सहित संस्पर्श होने पर विज्ञ व्यक्ति स्नान के पश्चात् पवित्र होकर सूर्य्य का दर्शन करे और उनके सहित वार्त्तालाप करने पर परम पावन श्रीहरि का ध्यान करे ॥४३॥

अथ तत्र गुणाः

भविष्य पुराण में उक्त विषय के गुणसमूह वर्णित हैं । समस्त व्रतों में सामान्य रूप से यह दश विध धर्म अवस्थित हैं । क्षमा, सत्य, दया, मौन, शौच, इन्द्रिय निग्रह, देवपूजा, होम, सन्तोष एवं अस्तेय ॥४४ ।

पद्मपुराण के श्रीयम-धूम्रकेतु संवाद में उक्त है जितेन्द्रिय एवं क्रोधहिंसा विहीन होकर दशमी में संयम पूर्वक एकादशी के दिन श्रीकृष्ण-कीर्त्तन के द्वारा दिन यापन करे ॥४५॥

विष्णुधर्मोत्तर में लिखा है, पण्डितगण कर्त्तृक उक्त है—भगवान् के मन्त्र वा नाम का जप, हरिचिन्तन, भगवत्कथा श्रवणादि, भगवदर्चन एवं भगवान के नामकीर्त्तन श्रवणादि,–यह सब उपवास कृत गुण हैं ॥४६

अथ तन्माहात्म्यम्

उक्तञ्च विष्णुधर्म्मेषु—

उपवासी हरिं यस्तु भक्तया ध्यायति मानवः । तज्जप्य-जापी तत्कर्म्मरतस्तद्गतमानसः ।
निष्कामो दैत्यवद्ब्रह्मपदमाप्नोत्यसंशयम् ॥४७॥

अथोपवासदिनेऽन्येऽपि नियमाः

तत्र कात्यायनः—

ब्रह्मचर्य्यसमायुक्त उपवासं चरेन्नरः ॥४८॥

देवलश्च—

ब्रह्मचर्य्यमहिंसा च सत्यमामिषवर्ज्जनम् । व्रतेष्वेतानि चत्वारि चरितव्यानि नित्यशः ॥४९

किञ्च—

असकृज्जलपानाच्च सकृत् ताम्बुलभक्षणात् । उपवासः प्रदुष्येत दिवास्वापाच्च मैथुनात् ॥५०

किञ्च—

दन्तधावन-ताम्बूल-दिवास्वापाच्च मैथुनात् । असकृज्जलपानाच्च नोपवासफलं लभेत् ॥५१॥

---

निष्कामश्चेत्, यद्वा, सकामोऽपि निष्कामः सन्नित्यर्थः । दैत्यः श्रीप्रह्लादः, तद्वत् । ब्रह्ममयं पदं श्रीवैकुण्ठलोकं प्राप्नोति ॥४७॥

आमिषवर्ज्जनञ्च संयमदिने पारणायाञ्च ज्ञेयम् । यद्वा, 'अष्टैतान्यव्रतघ्नानि' इत्यादिवचनेन उपवासे औषधस्यादोषात् प्राप्तस्य औषधरूपस्यामिषस्य वर्ज्जनं तत्रैव ज्ञेयम्; तथा चोक्तं व्यासेन—'वर्ज्जयेत् पारणे मांसं व्रताहेऽप्यौषधं सदा' इति औषधरूपमप्यामिषमुपवासदिने वर्ज्जयेदित्यर्थः ॥४९॥

एवं गुणानेव दर्शयित्वावश्यं परित्यागाय दोषान् लिखति—असकृदिति । यद्यपि दिवास्वापादिवर्ज्जनं पूर्व्वं लिखितमेव, तथाप्यवश्यवर्ज्ज्यत्वेनात्र नियमेषु पुनर्लिखितमित्यदोषः ॥५०॥

---

अथ तन्माहात्म्यम्

विष्णुधर्म में उसका माहात्म्य लिखित है। जो मनुष्य, उपवासी होकर भक्तिपूर्वक श्रीहरि का ध्यान एवं श्रीहरिमन्त्र जप करतः, विष्णु कर्मपरायण एवं तद्गतमानस होकर निष्काम होता है, दैत्यश्रेष्ठ प्रह्लाद के समान वह व्यक्ति वैकुण्ठ गमन करता है, इसमें सन्देह नहीं है ॥४७॥

अथोपवासदिनेऽन्येऽपि नियमाः

तद्विषय में कात्यायन कहते हैं—मनुष्य, ब्रह्मचर्य्य विशिष्ट होकर उपवास करे ।४८॥

देवल वाक्य इस प्रकार है—व्रत विषय में ब्रह्मचर्य्य, अहिंसा, सत्यभाषण एवं आमिष वर्जन,–इन चार प्रकार के नियमों का पालन अवश्य करें ॥४९॥

और भी कथित है—पुनः पुनः जलपान, एक बार मात्र ताम्बूल भोजन, दिवानिद्रा एवं मैथुन,–इन सबके द्वारा उपवास दूषित होता है ॥५०॥

और भी लिखा है—दन्तधावन, ताम्बूल सेवन, दिवानिद्रा, मैथुन एवं पुनः पुनः जलपान,–इन सबसे उपवास का फल लाभ नहीं होता है ॥५१॥

अथ ब्रह्मचर्य्यविघातानि

तत्रैवोक्तानि—

स्त्रीणान्तु प्रेक्षणात् स्पर्शात्ताभिः संकथनादपि । विपद्यते ब्रह्मचर्य्यं न दारेष्वृतुसङ्गमात् ।।५२।।
इति ।

ततो नित्यार्च्चनं कृत्वा हरिघस्रोत्सवार्थिकाम् ।
कृत्वा सायं महापूजां कुर्य्याज्जागरणं निशि ।।५३।।

अथ तत्र पूजादिकम्

ब्राह्मे—

देवस्योपरि कुर्व्वीत श्रद्धया सुसमाहितः । नानापुष्पैर्मुनिश्रेष्ठ विशिष्टं पुष्पमण्डपम् ।।५४।।

किञ्च तत्रैव—

एकादश्यामुभौ पक्षौ निराहारा समाहितः । स्नात्वा सम्यग्विधानेन धौतवासा जितेन्द्रियः ।।५५
संपूज्य विधिवद्विष्णुं श्रद्धयातिसमाहितः । पुष्पैर्गन्धैस्तथा धूपैर्दीपैर्नैवेद्यकैः परैः ।।५६।।
उपहारैर्बहुविधैर्जपहोमप्रदक्षिणैः । स्तोत्रैर्नानाविधैर्नृत्यगीतवाद्यैर्मनोरमैः ।।५७।।
दण्डवत्प्रणिपातैश्च जयशब्दैस्तथोत्तमैः । एवं सम्पूज्य विधिवद्रात्रौ कुर्य्यात् प्रजागरम् ।।५८।।
कथां वा गीतिकां वापि कुर्य्याद्विष्णुपरायणः ।
याति विष्णोः परं स्थानं नरो नास्त्यत्र संशयः ।।५९।।

---

दारेषु निजभार्य्यासु च प्रेक्षणादिना ब्रह्मचर्य्यं न विपद्यते, किन्तु ऋतुसङ्गमाद् व्यवायादेवेत्यर्थः । स्वदारेष्विनि च क्वचित् पाठः ।।५२।।

हरेर्घस्रो दिनमेकादशी, तत्रोत्सवहेतुकाम, अतएव महतीं पूजाम् ।।५३।।

परैरन्यैश्च बहुविधैरुपहारैः फलताम्बूलादिभिः ।।५६-५७।।

प्रजागरप्रकारमेवाह—कथां वा इति । रात्रिं नयेदिति शेषः ।।५९-६०।।

---

अथ ब्रह्मचर्य्यविघातानि

देवल का कथन है—नारीदर्शन, नारीस्पर्श, नारी के सहित सम्भाषण करना,-यह सब कार्य्य ब्रह्मचर्य को दूषित करते हैं । किन्तु ऋतुकाल में निज भार्य्या से सहवास करने पर दोष का स्पर्श नहीं होता है ।।५२

अनन्तर श्रीहरि की नित्य पूजा करने के पश्चात् एकादशी का महोत्सव सम्पादन के निमित्त सन्ध्याकाल में महापूजा करके रात्रिकाल में जागरण करे ।।५३।।

अथ तत्र पूजादिकम्

ब्रह्मपुराण में लिखित है—हे मुनिश्रेष्ठ ! श्रद्धालु होकर एकादशी में देवदेव जनार्दन के उपरिभाग में विविध पुष्प द्वारा अत्युत्तम पुष्पमण्डप निर्म्माण करे ।।५४।।

उक्त पुराण में और भी वर्णित है—शुक्ल एवं कृष्ण, उभयपक्षीय एकादशी में यत्नपूर्वक भोजन वर्जन करना चाहिये । सम्यक् विधान से स्नानपूर्वक धौत वस्त्र धारण कर इन्द्रिय संयम करे । महती श्रद्धा के सहित समाहित कर विधि के अनुसार गन्ध, पुष्प, धूप, दीप, अत्युत्तम नैवेद्य, नानाविध उपहार, जप, होम प्रदक्षिण, विविध स्तुति, चित्तरञ्जन, नृत्य, गीत, वाद्य, दण्डवन्नति एवं दिव्य जय शब्द के द्वारा श्रीविष्णु-पूजा करे । इस प्रकार पूजा करके रात्रिकाल में यथाविधि जागरण करे । हरिकथा कथन वा कीर्त्तन करना ही श्रीहरि परायण का कृत्य है । इस प्रकार आचरण करने से मनुष्य निश्चय ही हरिधाम में गमन करता है ।।५५-५९।।

भविष्ये च—

एकादश्युपरोधे तु रात्रौ संपूजयेद्धरिम् । ताञ्च रात्रिं यथाशक्ति पुराणश्रवणादिना ।।६०।।

'नयेत्' इति शेषः ।

अथ जागरण-प्रकरणम्

वैष्णवान् जागरेऽभ्यर्च्च्य तीर्थं शङ्खोदकान्वितम् ।
तेभ्यो दत्त्वा स्वयं प्राश्य विद्वान् स्तोत्रादिकं पठेत् ।।६१।।

पुराणादि ततः श्रुत्वा गीतनृत्यादिकं स्वयम् । कुर्य्यात् पश्येच्च पारक्यं वारयेन्न हसेन्न च ।।६२

अथ जागरणे गीतादिनिवारणादि-निषेधः

पाद्मे—

निवारयति यो गीतं नृत्यं जागरणे हरेः । षष्टियुगसहस्राणि पच्यते रौरवादिषु ।।६३।।

नृत्यमानस्य मर्त्यस्य उपहासं करोति यः । जागरे याति निरयं यावदिन्द्राश्चतुर्द्दश ।।६४।।

अथ जागरणदर्शनावश्यकता

स्कान्दे—

यमेन सूचितं तस्य नरकं यातनाकुलम् । मुखं न तस्य द्रष्टव्यं येन दृष्टा न जागरः ।।६५।।

---

तीर्थम्—श्रीचरणोदकम् ।।६१।।

पारक्यं परेण क्रियमाणं, न च हसेत् उपहसेत् ।।६२।।

निवारयतीत्यादि-श्लोकद्वयेन निवारणोपहासे दोषो दर्शितः ।।६३-६४।।

अधुना पश्येदिति यदुक्तं, तन्नित्यत्वं तदकरणप्रत्यवायदर्शनेन लिखति—यमेनेति त्रिभिः । सूचितं पापादिशयादतिरुषा भ्रूभङ्ग्यादि-सङ्केतेन प्रतिपादितम् ।।६५।।

---

भविष्य पुराण में लिखित है—एकादशी के उपलक्ष में रात्रिकाल में श्रीहरि की पूजा करे एवं शक्त्यनुसार पुराण श्रवणादि के सहित रात्रि जागरण करे ।।६०।।

अथ जागरण-प्रकरणम्

विज्ञव्यक्ति रात्रि जागरण के समय वैष्णववृन्द की पूजा करके शङ्ख में श्रीचरणोदक ग्रहण करके उन सबको प्रदान करे, एवं स्वयं किञ्चित् पान करके स्तोत्रादि पाठ करे ।।६१।।

अनन्तर पुराणादि श्रवण पूर्वक स्वयं नृत्य गीतादि करे । किंवा अन्य कर्त्तृक अनुष्ठित नृत्य गीतादि का दर्शन करे । किन्तु नृत्य गीतादि का निषेध करना अथवा उपहास करना उचित नहीं है ।।६२।।

अथ जागरणे गीतादिनिवारणादि-निषेधः

पद्मपुराण में लिखित है—श्रीहरि के जागरण में गीत अथवा नृत्य करने में निवारण करने से षष्टियुग सहस्रकाल रौरवादि नरक में पच्यमान होना पड़ता है । श्रीहरि के जागरण में नृत्यकारी मनुष्य को देख कर उपहास करने से चतुर्दश इन्द्रपात यावत् नरक में निमग्न रहना पड़ता है ।।६३-६४।।

अथ जागरणदर्शनावश्यकता

स्कन्दपुराण में वर्णित है—जो मानव, श्रीहरि का जागरण दर्शन नहीं करता है, यमराज उस मनुष्य के सम्बन्ध में यातनामय नरकस्थिर करके रखते हैं। तादृश व्यक्ति का मुखदर्शन करना उचित नहीं है ।।६५

किञ्च—

उद्धृतं नेत्रयुग्मन्तु दत्त्वा तु हृदये पदम् । कृतं ये नैव पश्यन्ति प्राणिनो हरिजागरम् ॥६६॥

किञ्च—

येषां चक्षुर्भवं तेजः प्रदग्धं कलिवह्निना । न ते पश्यन्ति कृष्णस्य जागरं न जनार्द्दनम् ॥६७

किञ्च—

कलिकल्मषजातेन परमेणावृते ध्रुवम् । चक्षुषी पापिनो नृणां ये न पश्यन्ति जागरम् ॥६८॥

अथ जागरण-विधिः

स्कान्दे ब्रह्मनारद-संवादे—

शृणु नारद वक्ष्यामि जागरस्य तु लक्षणम् । येन विज्ञातमात्रेण दुर्ल्लभो न जनार्द्दनः ॥६९

गीतं वाद्यञ्च नृत्यञ्च पुराणपठनं तथा । धूपं दीपञ्च नैवेद्यं पुष्पगन्धानुलेपनम् ॥७०॥

फलमर्घ्यञ्च श्रद्धा च दानमिन्द्रियनिग्रहः । सत्यान्वितं विनिद्रञ्च मुदायुक्तं क्रियान्वितम् ॥७१॥

साश्चर्य्यञ्चैव सोत्साहं पापालस्यादिवर्ज्जितम् । प्रदक्षिणाभिः संयुक्तं नमस्कार-पुरःसरम् ॥७२

नीराजनसमायुक्तमनिर्विण्णेन चेतसा । यामे यामे महाभाग कुर्य्यादारात्रिकं हरेः ।

एतैर्गुणैः समायुक्तं कुर्य्याज्जागरणं हरेः ॥७३॥

---

उद्धृतमुत्पाटितं याम्यैः, अतीतप्रत्ययोऽतिनिश्चयात् । यद्वा, नूनं केनाप्युद्धतमेव; तत्र हेतुः—कृतमिति । जातं समूहः, परमेण उद्रिक्तेन ॥६६-६८॥ विज्ञातमात्रेणापि ॥६९॥

श्रद्धा विश्वासो भक्तिर्वा; विनिद्रमिति कदाचिदपि किञ्चिन्निद्रया विरहितमित्यर्थः, यद्वा, घूर्णावर्ज्जितम्; क्रियापरिचर्य्यादि, तदन्वितम्; आश्चर्य्याणि अभिनयादीनि तत्सहितम्; उत्साहो मानसोल्लासस्तत्सहितम् । आदि-शब्देन धूतादि ग्राम्यवार्त्तादि वा; नीराजनेन समायुक्तमित्युक्तम् । तत्रैव विशेषमाह—अनिर्विण्णेन निर्व्वेदरहितेन चेतसा । यामे यामे चतुष्प्रहरेषु हरेरारात्रिकं नीराजनं कुर्य्यादिति । षड्‌विंशगुण-संयुक्तमिति पाठे पापेन वर्ज्जितम्, आलस्यादिना च वर्ज्जितमिति द्वयम्—एवं षड्‌विंशतिः गुणाः ॥७१-७३॥

---

और भी वर्णित है—किसी स्थान में श्रीहरि का जागरण हो रहा है, सुनकर और जानकर भी जो मानव, उसको नहीं देखते हैं, यमदूतगण, उन सब मानवों के वक्षःस्थल में पदस्थापन कर नेत्रद्वय को उत्पाटन करते हैं ॥६६॥

और भी उक्त है—कलिरूप अग्नि के द्वारा जिनकी नयन-ज्योतिः भस्मीभूत हो गई है, वे सब ही श्रीहरि का जागरण वा श्रीहरि को नयनगोचर नहीं करते हैं ॥६७॥

और भी लिखित है—जो मानव, जागरण दर्शन नहीं करते हैं, दारुण कलिकलुषराशि के द्वारा उन उन सब पातकी के दोनों नेत्र आवृत्त होते हैं—इसमें सन्देह नहीं है ॥६८॥

अथ जागरण-विधिः

स्कन्दपुराण के श्रीब्रह्म-नारद-संवाद में वर्णित है—हे नारद ! जिसके केवल जानने मात्र से ही श्रीहरि दुष्प्राप्य नहीं रहते, उसी जागरण के लक्षण को कहता हूँ, श्रवण करो ॥६९॥

हे महाभाग ! गीत, वाद्य, नृत्य, पुराण पाठ, धूप, दीप, नैवेद्य, पुष्प, गन्धानुलेपन, फल एवं अर्घ्य अर्पण, श्रद्धा निवेदन, दान, इन्द्रिय दमन, सत्य निष्ठा, विनिद्रता, आनन्दप्रकाश, क्रियानुष्ठान, चमत्कारिता, उत्साह पाप एवं आलस्यादि वर्जन, प्रदक्षिण, प्रणाम, नीराजन, एवं आरात्रिक यह सब कार्य्यानुष्ठान श्रीहरि के जागरण में एकान्तिक मन से करने चाहिये ॥७०-७३॥

किञ्च—

य एवं कुरुते भक्त्या वित्तशाठ्यविवर्ज्जितः। जागरं वासरे विष्णोर्लीयते परमात्मनि ।७४।।
धनवान् वित्तशाठ्येन यः करोति प्रजागरम् । तेनात्मा हारितो नूनं कितवेन दुरात्मना ।७५।।

तत्रैव श्रीमदुमामहेश्वरसंवादे—

सशास्त्रं जागरं यच्च नृत्यगान्धर्व्वसंयुतम् । सवाद्यं तालसंयुक्तं सदीपं साधुभिर्युतम् ।।७६।।
उपचारैश्च संयुक्तं यथोक्तैर्भक्तभावितैः । मनसस्तुष्टिजननं समुदं लोकरञ्जनम् ।।७७।।
गुणैर्द्वादशभिर्युक्तं जागरं माधवप्रियम् । कर्त्तव्यं तत् प्रयत्नेन पक्षयोः शुक्लकृष्णयोः ।।७८।।

किञ्च—

परापवादयुक्तन्तु मनः प्रशमवर्ज्जितम् । शास्त्रहीनमगान्धर्व्वं तथा दीपविवर्ज्जितम् ।।७९।।
शक्त्योपचाररहितमुदासीनं सनिद्रकम् । कलियुक्तं विशेषेण जागरं नवधाधमम् ।।८०।।

किञ्च, तत्रैव—

अभावे वाचकस्याथ गीतं नृत्यञ्च कारयेत् । वाचके सति देवेशि पुराणं प्रथमं पठेत् ।।८१।।

अथ जागरणनित्यत्वम्

स्कान्दे ब्रह्मनारद-संवादे—

सम्प्राप्ते वासरे विष्णोर्ये न कुर्व्वन्ति जागरम् ।
अतीतानागतान् वापि पातयिष्यन्ति पूर्व्वजान् ।।८२।।

---

तत्र च वित्तशाठ्यं नैव कार्य्यमित्यभिप्रायेण वित्ताशाठ्य-शाठ्याभ्यां क्रमेण महाफललाभार्थनाशने दर्शयति—य एवमिति द्वाभ्याम् । लीयते नित्यमत्यन्तसङ्गमं लभते, आत्मा एव हारितो वञ्चितः ।।७४-७५।।

जागरं जागरणं निद्राराहित्यम् , एतदेव पूर्व्वं विनिद्रमित्युक्तम् ; अतएवाग्रे जागरमिति पुनःप्रयोगः । अयमेको गुणः । एवं द्वादशभिर्गुणैर्युक्तम् । अत्र गान्धर्व्वं गीतं, समुदं सोत्साहं, लोकानां रञ्जनमनुरागवर्द्धनम् । ।।७६-७७।।

अत्रैव कञ्चिद्विशेषमाह—अभावे इति ।।८१।।

अकुर्व्वाणा जागरणाकारकाः प्रपत्स्यन्ति, कालशः चिरकालमित्यर्थः ।।८३।।

---

और भी कथित है—'अर्थ व्यय होगा' इस प्रकार चिन्ता वर्जन पूर्वक भक्ति के सहित इस प्रकार श्रीहरिवासर में जागरण करने पर परमात्मा का नित्य अत्यन्त सङ्ग लाभ होता है । धनी व्यक्ति, कृपणता पूर्वक हरिवासर में जागरण करने से वह दुरात्मा शठ धनीव्यक्ति को निश्चय ही आत्मवञ्चित जानना होगा ।।७४-७५।।

उक्त पुराण में उमा-महेश्वर-संवाद में लिखित है—शास्त्रानुसार नृत्य, गीत, वाद्य, ताल, दीप, एवं साधुगणयुक्त उपचार समन्वित, यथायथ भक्तिभावयुक्त, मनस्तुष्टिजनक, उत्साहयुक्त एवं लोकानुराग वर्धक यह द्वादशगुणयुक्त माधवप्रिय जागरण, शुक्ल कृष्ण उभयपक्षीय हरिवासर में ही यत्नपूर्वक करना चाहिये । ।।७६-७८।।

और भी कथित है—परापवादयुक्त, मानसिक शान्ति रहित, अशास्त्रीय गीत एवं दीपविहीन, स्वीय-साध्यमत उपचार रहित, आग्रह शून्य, निद्रायुक्त एवं विशेष रूप से कलहान्वित, यह नवविध लक्षणयुक्त जागरण को अधम जागरण कहते हैं ।।७९-८०।।

उक्त पुराण के उक्त स्थान में ही लिखित है—कथावाचक के अभाव होने पर नृत्य गीत करना चाहिये। हे देवेशि ! कथावाचक विद्यमान होने पर सर्वाग्र में पुराण पाठ कराना चाहिये ।।८१।।

अकुर्व्वाणाः प्रात्स्यन्ति पुत्त्रधर्म्मवसुक्षयम् । जायते नरके वासः पितृभिः सह कालशः ।।८३।।
न पुरश्चरणात् पापं व्रतैर्दानैः समाधिभिः । विलयं याति विप्रेन्द्रा विना द्वादशीजागरम् ।।८४।।
तत्रैवोमामहेश्वर-संवादे—
संप्राप्ते वासरे विष्णोर्ये न कुर्व्वन्ति जागर । भ्रश्यते सुकृतं तेषां वैष्णवानाञ्च निन्दया ।।८५।।
मतिर्न जायते यस्य द्वादश्यां जागरं प्रति । न हि तस्याधिकारोऽस्ति पूजने केशवस्य हि ।।८६
अतएवोक्तं ब्रह्मणा तत्रैव—
हृदये वर्त्तते यस्य सदा योगेश्वरो हरिः । मतिरुत्पद्यते तस्य द्वादशीजागरोपरि ।।८७।। इति ।
सामान्येन पुरालेखि गीतवाद्यादिनित्यता । अधुना लिख्यते सोऽथं जागरे च विशेषतः ।।८८

अथ जागरे गीतादिनित्यत्वम्

स्कान्दे उमामहेश्वर-संवादे—
मूकवत्तिष्ठते यो वै गानं पाठञ्च नाचरेत् । सप्तजन्मसु मूकत्वं जायते जागरे हरेः ।।८९।।

---

द्वादश्यां जागरणं विना पुरश्चरणादिभिरपि पापं न क्षीयत इति पापक्षपणेऽपि जागरणस्यावश्यापेक्षत्वान्नित्यत्वमेव सिद्धम् ।।८४।।

वैष्णवानां निन्दयेति दृष्टान्तो ज्ञेयः ।।८५।।

अस्तु तावज्जागराभावदोषः, जागरणचिकीर्षाराहित्येनापि परमानर्थं इत्याह—मतिर्नेति ।।८६।।

अतो भगवदनुग्रहेणैव जागरणं सम्पद्यत इत्याह—हृदये इति ।।८७।।

प्रसङ्गाज्जागरणे गीतनृत्यादेरपि नित्यत्वं लिखन् पूर्व्वं नित्यपूजायां तन्नित्यत्वलिखनादधुना पुनर्लिखनादपि पौनरुक्त्यदोषमाशङ्क्य तन्निरसनाय लिखति—सामान्येनेति । एवं जागरणे अवश्यमेव गीतनृत्यादिकं कार्य्यमित्यभिप्रेतम् । आदि-शब्देन स्तुत्यादि ।।८८।।

पाठं स्तोत्रादीनां जागरणे नाचरेत् ।।८९।।

---

अथ जागरणनित्यत्वम्

स्कन्दपुराण के ब्रह्म-नारद-संवाद में लिखित है—जो लोक, विष्णुवासर में जागरण नहीं करते हैं, उनके अतीत पूर्व-पुरुषगण एवं भावी पुरुषसमूह अधोगामी होते हैं, एवं जागरण न करनेवाले के पुत्र, धर्म, धन विनष्ट होते हैं, और वे लोक आवहमानकाल पितृगण के सहित नरक में वास करते हैं। हे विप्रेन्द्रगण ! द्वादशी में जागरण व्यतीत पुरश्चरण, व्रत, दान अथवा समाधि के द्वारा पाप नाश नहीं होता है ।।८२-८४।।

इसी पुराण के उमा-महेश्वर-संवाद में लिखित है—जो मानव, हरिवासर समागत देखकर जागरण नहीं करते हैं, वैष्णव-निन्दा के द्वारा जिस प्रकार सुकृति विनष्ट होती है, उसके समान उन सबकी सुकृति विनष्ट होती है ।।८५।।

द्वादशी के जागरण में जिसकी मति नहीं है, वह श्रीहरि की पूजा में अधिकारी नहीं हो सकता है ।।८६

अतएव उक्त पुराण में ही ब्रह्मा की उक्ति है—जिनके हृदय में सर्वदा योगेश्वर श्रीहरि का अधिष्ठान है, द्वादशी जागरण में उसी की बुद्धि उत्पन्न होती है ।।८७।।

इसके पहले नित्य हरिपूजा-विधि में गीत वाद्य इत्यादि की नित्यता का वर्णन संक्षेप में हुआ है। अधुना पुनर्वार जागरण के विषय में उसका विशेष रूप से वर्णन हो रहा है ।।८८।।

अथ जागरे गीतादिनित्यत्वम्

स्कन्दपुराण के उमा-महेश्वर-संवाद में लिखा है—श्रीहरि के जागरण में गान अथवा पाठ न करके मूक

यो न नृत्यति मूढ़ात्मा पुरतो जागरे हरेः। पङ्गुत्वं जायते तस्य सप्तजन्मसु पार्व्वति ॥९०॥

पाद्मे पक्षवर्द्धिनीव्रतप्रसङ्गे—

स्तुवन्ति न प्रशंसन्ति ये जना जागरं हरेः। नोत्सवो भवते तेषां गृहे जन्मानि सप्त च ॥९१॥

स्तुवन्ति ये प्रशंसन्ति जागरं चक्रपाणिनः। नित्योत्सवो भवेत्तेषां जन्मानि दश पञ्च च ॥९२

अथ जागरण-माहात्म्यम्

स्कान्दे श्रीब्रह्मनारदसंवादे, श्रीप्रह्लादसंहितायाञ्च—

न गयापिण्डदानेन न तीर्थैर्बहुभिर्मखैः। पूर्व्वजा मुक्तिमायान्ति विना द्वादशि-जागरम् ॥९३॥

सर्व्वावस्थोऽपि यः कुर्य्याद्द्वादश्यां जागरं हरेः। यामैकैकेन दहतो पापं जन्मसहस्रजम् ।९४॥

यः कुर्य्याद्दीपदानन्तु रात्रौ जागरणे हरेः। निमेषे निमेषे विप्र लभते गोशतं फलम् ॥९५॥

यः कुर्य्याज्जागरे पूजां द्वादश्यां कुसुमैर्हरेः। पुष्पे पुष्पेऽश्वमेधस्य फलमाप्नोति मानवः ॥९६॥

यो दहेच्चागुरुं विष्णोः पूजां कृत्वा तु जागरे। निमेषार्द्धेन लभते तिलपात्रशतं फलम् ॥९७॥

निमेषञ्च दहेद्धूपं सघृतं गुग्गुलुं हरेः। लभते जागरे विप्र पुण्यं माससमुद्भवम् ।९८॥

---

न स्तुवन्ति न श्लाघन्ते, न प्रशंसन्ति न चानुमोदन्ते ॥९१॥

तान् शाचन्निव स्तवनादिफलमाह—स्तुवन्तीति ॥९२॥

गोशतमिति गोशतप्रदानजमित्यर्थः। एवमग्रेऽपि ज्ञेयम् ॥९५॥

माससमुद्भवमिति—अन्यत्र सघृतगुग्गुलुधूपदाहतो मासेनैकेन यत् पुण्यं स्यात्, तदेवस्मिन्नेव जागरे सकृत्कृतेन तेन भवतीत्यर्थः। माघेति पाठे माघस्नानादिजम् ॥९८॥

---

के समान रहने से सात जन्म पर्य्यन्त मूक रहना होता है। हे गौरि! श्रीहरि के जागरण में प्रथम नृत्य न करने पर मूढ़मति को सात जन्म तक पङ्गु होकर देह का भार वहन करना पड़ता है। ८९-९०॥

पद्मपुराण के पक्षवर्द्धिनी व्रत प्रसङ्ग में कथित है—श्रीहरि के जागरण की स्तुति और प्रशसा न करने पर सात जन्म तक उस व्यक्ति के घर में आनन्दोत्सव विद्यमान नहीं रहता। जो चक्रपाणि श्रीहरि के जागरण की स्तुति और प्रशंसा करते हैं, उन पुरुषों के घर में पञ्चदश जन्म यावत् नित्य उत्सव विद्यमान रहता है ॥९१-९२॥

अथ जागरण माहात्म्यम्

स्कन्दपुराण के ब्रह्म-नारद-संवाद में एवं प्रह्लाद-संहिता में लिखित है—द्वादशी में बिना जागरण किये, गयाधाम में पिण्डदान, अथवा तीर्थस्नान किंवा अनेक प्रकार यज्ञानुष्ठान करने पर भी पितरों को मुक्ति प्राप्त करने की सम्भावना नहीं है। जिस किसी अवस्था में ही क्यों न हो, सब अवस्था में ही श्रीहरि की द्वादशी में जागरण करने पर प्रति प्रहर में उस जागरण करने वाले के सहस्रजन्मार्जित पातक दग्ध हो जाते हैं ॥९३-९४॥

हे विप्र! श्रीहरि के जागरण रात्रि के समय दीपदान करने पर वह दीप जब तक प्रज्वलित होता रहता है, तब तक पल-पल में वह व्यक्ति शत गोदान का फल प्राप्त करता है। द्वादशी जागरण में यदि अनेक प्रकार पुष्पों से श्रीहरि की पूजा करे, तो प्रति पुष्प में अश्वमेध का फल मिल सकता है। श्रीहरि के जागरण में उनकी पूजा करके अगरकाष्ठ की धूप प्रदान करने पर अर्द्ध निमेष में उसको शत तिलपात्र दान करने का फल मिल जाता है ॥९५-९८॥

योदद्याज्जागरे विष्णोर्हविष्यान्न-समुद्भवम् । नैवेद्यं लभते पुण्यं शालिशैलसमुद्भवम् ॥९९॥
पक्वान्नानि च यो दद्यात् फलानि विविधानि च । जागरे पद्मनाभस्य लभते गोऽयुतं फलम् ॥१००
सकर्पूरञ्च ताम्बूलं योददाति हि जागरे । पद्मनाभप्रदानेन श्वेतद्वीपे वसेच्चिरम् ॥१०१॥
जागरे पद्मनाभस्य यः कुर्य्यात् पुष्पमण्डपम् । स पुष्पक-विमानैस्तु क्रीड़ते ब्रह्मसद्मनि ॥१०२
जागरे पद्मनाभस्त सकर्पूरं तथागुरुम् । दहतो दहते पापं जन्मलक्षसमुद्भवम् ॥१०३॥
स्नानं ददाति कृष्णस्य दधिक्षीरघृतादिभिः । रात्रौ जागरणे विप्र मुक्तिभागी भवेद्धि सः ॥१०४
दिव्याम्बराणि यो दद्याज्जागरे समुपस्थिते । मन्वन्तराणि वसते तन्तुसंख्यासमानि वै ॥१०५॥
दद्यादाभरणं विष्णोर्हेमजं रत्नसम्भवम् । सप्त कल्पानि वसते सोत्सङ्गे मत्प्रियो हि सः ॥१०६
श्रीचन्दनं सकर्पूरं सागुरुन्तु सकेशरम् । युक्तं मृगमदेनापि यच्छते हरिजागरे ॥१०७॥
एकैकं मुनिशार्द्दूल अश्वमेधाधिकं फलम् । कलौ भवेन्न सन्देहो वासुदेवप्रसादतः ॥१०८॥
घृतेन दीपकं विष्णोर्गव्येन च विशेषतः । ज्वालयेज्जागरे रात्रौ निमेषे गोऽयुतं फलम् ॥१०९॥
जागरे वासुदेवस्य कर्पूरेण च दीपकम् । यो ज्वालयति कोटीनां कपिलानां लभेत् फलम् ॥११०

गोऽयुतं गवायुतम् ॥१००॥ तन्तवोऽम्बराणां तत्सख्याभिः समानि मन्वन्तराणि ॥१०५॥
रत्नसम्भवश्च, यद्वा, रत्नखचितमित्यर्थः । उत्सङ्गे क्रोड़े, विष्णोर्मम वासरे सति । विसर्गलोपे सन्धिरार्षः, पाठान्तरेऽपि स एवार्थः ॥१०६॥

हे विप्र ! जागरण के दिन की रात्रि में निमेषमात्र घृतयुक्त गुग्गल की धूप प्रदान का फल मिल सकता है । पर्वत प्रमाण शालितण्डुल दान करने से जो पुण्य होता है, श्रीविष्णु के जागरण में हविष्यान्न नैवेद्य प्रदान करने से वही पुण्य प्राप्त होता है । श्रीहरि के जागरण में पक्वान्न एवं विविध फल निवेदन करने से अयुत गोदानज फल लाभ होता है ॥९९-१००॥

जागरण में कपूर समन्वित ताम्बूल अर्पण करने पर पद्मनाभ के प्रसाद से सदा उस मनुष्य का श्वेतद्वीप में वास होता है । पद्मनाभ श्रीविष्णु के जागरण में पुष्पमण्डप प्रस्तुत करने से, पुष्पक विमान में आरूढ़ होकर ब्रह्मधाम में गमन कर सुखानुभव कर सकता है ॥१०१-१०२॥

पद्मनाभ के जागरण में सकर्पूर अगुरु जलाने से उसके लक्षजन्मार्जित पाप दग्ध होते हैं ॥१०३॥

हे विप्र ! श्रीहरि के जागरण में निशा भाग में दधि, दुग्ध, एवं घृत प्रभृति द्वारा श्रीहरि की स्नानक्रिया समापन करने से निश्चय मोक्ष लाभ होता है ॥१०४॥

श्रीहरि के जागरण में समुपस्थित होने पर जो व्यक्ति, श्रीहरि को दिव्य वस्त्र प्रदान करता है, उसमें जितने तन्तु होते हैं, हाता, उतने ही मन्वन्तर पर्य्यन्त श्रीहरिलोक में वास करता है । हरिवासर में श्रीहरि को रत्नमय आभरण प्रदान करता है, सप्तकल्प यावत् मदीय अङ्क में वह निवास करता है, एवं वह मेरा प्रिय होता है । हे मुनिश्रेष्ठ ! कलियुग में श्रीहरि के जागरण में श्रीहरि को कर्पूर, अगुरु मृगमद विशिष्ट श्रीचन्दन अर्पण करने पर, उक्त द्रव्यसमूह के प्रत्येक में अश्वमेध से भी अधिक फल उपार्जित होता है । इसमें सन्देह नहीं है ॥१०५-१०८॥

श्रीहरि के जागरण की रात्रि में विशेष प्रकार गो-घृत द्वारा दीप प्रदान करने से उस दीपक के निमेष मात्र जलने पर ही दश हजार गो-दान का फल होता है । जागरण में वासुदेव के सम्मुख कर्पूर द्वारा दीप प्रज्वलित करने पर कोटि संख्यक कपिला गो-दान का फल लाभ होता है ॥१०९-११०॥

आरात्रिकं हरेर्यस्तु सकर्पूरन्तु जागरे। कुरुते मोक्षमाप्नोति कुलायुतसमन्वितः ॥१११॥
विनापि यो हि कर्पूरं कुर्य्यादारात्रिकं हरेः।
निःस्वोऽपि जागरे विष्णोर्दाता भूरि फलं लभेत् ॥११२॥
वारिजं वारिणा पूर्णं शिरसि स्नापयेद्धरिम्।
विभर्त्ति शिरसा सोऽयं गङ्गास्नानकृतं फलम् ॥११३॥
कृत्वा पूजां हरेर्यस्तु जागरे पुरतः शुचिः। पठेन्नामसहस्रञ्च गीतां नागविमोक्षणम् ॥११४॥
माङ्गल्यं स्नपनं पुण्यं स्तवराजमनुस्मरन्।
वैदिकानि च जप्यामि भक्त्या रात्रौ मुहुर्मुहुः ॥११५॥
भवेत् प्रत्यक्षरं पुण्यं कपिलागोशतोद्भवम्। जागरे यज्ञरूपस्य पुरतः पठनं हरेः ॥११६॥
यः पुनः कुरुते गीतं सनृत्यं वाद्यसंयुतम्। न तत् क्रतुशतैः पुण्यं व्रतदानशतैरपि ॥११७॥
यः पुनः कुरुते गीतं विलज्जो नृत्यते यदि। लभते निमिषार्द्धेन चतुराश्रमज फलम् ॥११८॥
जागरे पद्मनाभस्य कुर्य्यात् पुस्तकवाचनम्। श्लोकसंख्यां वसेत् स्वर्गे युगानि हरिसन्निधौ ॥११९
कुर्य्याद्वन्दनमालां यो रम्भास्तम्भैः सुशोभनैः। चूतवृक्षोद्भवैः पत्रैर्जागरे चक्रपाणिनः ॥१२०

वारिजं शङ्खं पूर्णं कृत्वेति शेषः। शिरसा विभर्त्तीति फलस्य स्थैर्य्यमभिप्रेत, माङ्गल्येन स्नपयतीति तथा तत्, एतच्च लिङ्गव्यत्ययादिना सर्व्वेषामेव विशेषणं ज्ञेयं, तथा पुण्यमिति च। जागर इत्यर्द्धपद्यमुक्तन्यायेन व्याख्येयं, क्वचिच्च न तिष्ठेदेव ॥११३-११६॥

चतुराश्रमधर्म्मसम्पत्तेर्जायते यत् फलं तदित्यर्थः ॥११८॥

श्लोकसंख्यां प्रति यानि युगानि स्युस्तानि, यावन्तः श्लोकास्तावन्ति युगानीत्यर्थः। एवमग्रेऽप्यूह्यम् ॥११९

हरि के जागरण में कर्पूर के द्वारा उनकी आरती करने पर वह मानव अयुत कुल के सहित मुक्ति लाभ करता है। श्रीहरि के जागरण में धनहीनजन बिना कर्पूर से भी आरात्रिक करने पर बहुत फल को प्राप्त होता है। जलपूर्ण शङ्ख के द्वारा श्रीहरि की स्नान-क्रिया सम्पादन करने पर अपने शिर पर गङ्गास्नानकृत फलवृत होता है ॥१११-११३॥

श्रीहरि के जागरण में पवित्र आचरण से उनकी पूजा करके सहस्रनाम, गीता एवं गजेन्द्रमोक्ष पाठ करना पड़ता है, एवं रात्रि में भक्ति के सहित विशुद्ध मङ्गलकर स्नानीय स्तव स्मरण पूर्वक पुनः पुनः वैदिक मन्त्र जप करना चाहये ॥११४-११५॥

श्रीहरि के जागरण में यज्ञमूर्त्ति विष्णु के सम्मुख में पुराणादि करने से प्रति वर्ण में शत कपिला गोदान का पुण्य लाभ होता है। जो व्यक्ति, पुनः पुनः वाद्यसमन्वित नृत्य-गीत करता है, तत् कर्त्तृक सञ्चित पुण्य शत-शत यज्ञ एवं व्रतदान के द्वारा भी प्राप्त नहीं होता है। जो व्यक्ति, लज्जा परित्याग पूर्वक पुनः पुनः नृत्य गीत करता है, अर्द्ध निमेष में वह व्यक्ति, चतुराश्रमों के धर्म का पुण्य प्राप्त करता है ॥११६-११८॥

कमलनाभ श्रीहरि के जागरण में पुस्तक पाठ करने से प्रति श्लोक में युग संख्यानुसार सुरलोक में श्रीहरि के समीप में वास होता है ॥११९॥

जो व्यक्ति चक्रपाणि श्रीहरि के जागरण में मनोहर कदलीतरु में आम्रपल्लव के द्वारा वन्दन माला अर्पण करता है, उन आम्र पल्लवों की संख्या के अनुसार एक-एक युग उसका सुरधाम में महोत्सव होता है, और वह व्यक्ति, देवेन्द्र इत्यादि देवताओं के द्वारा वन्दनीय होकर अप्सराओं के साथ क्रीड़ा करता है॥

युगानि पत्रसंख्यानां स्वर्गे तस्योत्सवो भवेत् । पूज्यते वासवाद्यैश्च क्रीड़ते चाप्सरोवृतः ॥१२१
नृत्यमानस्य मर्त्यस्य ये केचिन्निरयं गताः । विमुक्ता धर्म्मराजेन मुक्तिं यान्ति हरेः पदम् ॥१२२
गीतध्वनिषु सन्तुष्टा जागरे तु रमापतिः । वासवस्याधिकं सौख्यं दद्यान्मन्वन्तरं शतम् ॥१२३
नृत्येन मर्त्ये सौख्यन्तु स्वर्गे नृत्येन जागरे । रसातले तथा सौख्यं मुक्तिर्नृत्यादवाप्यते ॥१२४॥
प्रेक्षणीयप्रदानेन यत् पुण्यं कथितं बुधैः । न तत् कोटिमखैः पुण्यं योगैः साङ्ख्यैरवाप्यते ॥१२५॥
दीपमालां हरेरग्रे यः करोति प्रजागरे । विमानकोटि संयुक्तः कल्पान्तं वसते दिवि ॥१२६॥
चरितं रामचन्द्रस्य यः शृणोति हरेर्दिने । रात्रौ वाल्मीकिना प्रोक्तं तत्समो न हि वैष्णवः ॥१२७
यः पुनः पठते रात्रौ महाभारतसम्भवाम् । कथां जागरणे विष्णोः कुलकोटिं नयेद्दिवम् ॥१२८

औत्तानपादेश्चरितं ध्रुवस्य च महात्मनः । कृष्णस्य बालचरितं जागरे पठते हि यः ।
युगकोटिसहस्रस्य क्षयः पापस्य जायते ॥१२९॥
तस्माज्जागरणं कार्य्यं पक्षयोः शुक्लकृष्णयोः ॥१३०॥

श्रीमद्भागवतं भक्त्या पठते विष्णुसन्निधौ । जागरे तत्पदं याति कुलवृन्दसमन्वितः ॥१३१॥

---

ये केचिद्बान्धवादयः ॥१२२॥
जागरे यन्नृत्यं तेन; मर्त्ये मनुष्यलोके पृथिव्यामित्यर्थः ॥१२४॥
प्रेक्षणीयमैन्द्रजालिकं, नर्त्तकादि-सम्प्रदायविशेषो वा तस्य प्रदानेन । योगैरष्टाङ्गैः, सांख्यैरात्मज्ञानैः ॥१२५
युगकोटिसहस्रस्येति युगकोटिसहस्रैर्भोग्यस्य, तेषु जातस्य वा पापस्य ॥१२९॥
जागरे पठति ॥१३१॥

---

हरि के जागरण में नृत्य करने से नृत्यकारी के नरकगत पितृगण, यमपाश से विमुक्त होकर श्रीहरि के परमपद वैकुण्ठ में गमन करते हैं ॥१२०-१२२॥

कमलापति, जागरण वासर में गीत शब्द के द्वारा प्रसन्न होने पर शत-मन्वन्तर तक देवेन्द्र की अपेक्षा भी अधिक सुखी करते हैं। हरि-जागरण में नृत्य करने पर मर्त्य, स्वर्ग एवं रसातल में सर्वत्र ही सुखी हो सकता है। और नृत्य के फल से मोक्ष लाभ भी होता है ॥१२३-१२४॥

बुद्धिमान् व्यक्तिगण कहते हैं—जागरण में ऐन्द्रजालिक नृत्य प्रदर्शन करने पर जो पुण्य अर्ज्जित होता है, असंख्य असंख्य यज्ञ, योग और सांख्य-ज्ञान के द्वारा भी तद्रूप पुण्य लाभ की सम्भावना नहीं है ॥१२५॥

श्रीहरिवासर के जागरण में श्रीहरि के सम्मुख में दीपमाला प्रदान करने पर मनुष्य कोटि विमान समन्वित होकर कल्प पर्य्यन्त सुरपुर में निवास कर सकता है ॥१२६॥

जो मानव, हरिवासर की रात्रि में बालिमकी प्रोक्त रामचरित श्रवण करता है, उनके समान अपर वैष्णव दिखाई नहीं देता है, अर्थात् रामचरित श्रवणकारी व्यक्ति ही परम वैष्णवपद वाच्य होता है ॥१२७

विष्णु के जागरण में महाभारत की कथा अध्ययनकारी व्यक्ति कोटि कुल के सहित अमरलोक में प्रस्थान कर सकता है। हरिवासर जागरण में उत्तानपाद-नन्दन महात्मा ध्रुव का चरित्र अथवा श्रीकृष्ण की शैशव-लीला का पाठ करने से युगकोटि सहस्रार्जित पातक विनष्ट होते हैं। सुतरां शुक्ल एवं कृष्ण उभय पक्षीय हरिवासर में जागरण करना उचित है ॥१२८-१३०॥

हरिवासर जागरण में श्रीहरि के सम्मुख में भक्तिपूर्वक श्रीमद्भागवत पाठ करने पर निज निखिलकुल के सहित वैकुण्ठधाम में प्रस्थान कर सकता है। अष्टादश पुराण सदा ही पुराणपुरुष श्रीहरि को प्रिय हैं।

अष्टादश पुराणानि पुराणपुरुषस्य च । दयितानि सदा विष्णोर्विशेषेण तु जागरे ॥१३२॥
यो गीतां पठते रात्रौ विष्णोर्नामसहस्रकम् । वेदोक्तानां पुराणानां जागरी पुण्यमाप्नुयात् ॥१३३
धेनुदानन्तु यः कुर्य्यात् जागरे चक्रपाणिनः । लभते नात्र सन्देहः सप्तद्वीपावनीफलम् ॥१३४॥
जागरे पद्मनाभस्य यः कुर्य्याच्छुभमण्डपम् । मण्डले ध्रुवलोकस्य यावत्तिष्ठति पद्मभूः ॥१३५
सर्व्वेषामेव पुण्यानां महत् पुण्यं महीतले । द्वादश्यां जागरे विप्र प्रसिद्धं भुवनत्रये ॥१३६॥
जागरं ये चिकीर्षन्ति कर्म्मणा मनसा गिरा । न तेषां पुनरावृत्तिर्विष्णुलोकात् कथञ्चन ॥१३७
जागरे नृत्यमानन्तु दृष्ट्वा वै द्वादशी दिने । रात्रौ मार्ज्जयते शौरिः पापं तस्य युगार्ज्जितम् ॥१३८
प्रोत्साहयित्वा लोकान् यः कुरुते जागरं निशि । प्राप्नोति चक्रवर्त्तित्वं भरतेन यथा पुरा ॥१३९

श्वपचेन यथा विष्णुं तोषयित्वा तु जागरे ।
प्राप्ता मुक्तिः पुरा विप्र गान्धर्व्वात् श्रूयते ध्रुवम् ॥१४०॥

राज्यं प्राप्तं दिलीपेन नर्त्तनाद्वासरे हरेः । नहुषेण च सम्प्राप्तमर्घ्यदानेन जागरे ॥१४१॥
फलदानात् सृञ्जयेन प्राप्तं राज्यमकण्टकम् । वञ्जुलीवासरे रात्रौ कृत्वा जागरणं हरेः ॥१४२
वस्त्रदानाद्दिने विष्णोर्नाभागेन तु जागरैः । राज्यं प्राप्तं मुनिश्रेष्ठ प्रसादान्माधवस्य हि ॥१४३

पुराणानां सर्व्वेषां पठनाद्यत् पुण्यं तदाप्नुयादित्यर्थः ॥१३३॥
यावत् पद्मभूर्ब्रह्मा तिष्ठति, तावत् ध्रुवलोकस्य मण्डले उपरि तिष्ठतीत्यर्थः ॥१३५॥
प्रोत्साहयित्वा माहात्म्यश्रावणादिना प्रकर्षेण उत्साहं जनयित्वा, यवभावोऽत्र आर्षः ॥१३९॥

विशेषतः हरिवासर जागरण में वे सब और भी अधिक प्रिय होते हैं। हरिवासर के जागरण में रात्रि के समय गीता अथवा श्रीविष्णु-सहस्रनाम पाठ करने पर वेदोक्त पुराणपाठ का फल मिल जाता है ॥१३१-३३

चक्रधर श्रीहरि के जागरण में धेनुदानकारी सप्तद्वीपा पृथिवी-दान का फल प्राप्त कर सकता है। पद्मनाभ श्रीहरि के जागरण में शुभ मण्डप निर्माण करने पर एक ब्रह्मपातकाल ध्रुवलोक में उक्त निर्माणकारी का निवास हो सकता है ॥१३४-१३५॥

हे विप्र ! द्वादशी में जागरण से जो पुण्य सञ्चित होता है, वह अवनीस्थ समुदाय पुण्य की अपेक्षा श्रेष्ठ कहा गया है। कर्म, मन एवं वाक्य के द्वारा हरिवासर में जागरण करने से कभी भी विष्णुलोक से परिभ्रष्ट नहीं होना पड़ता है। द्वादशी के जागरण में नृत्य करने से यमराज उसको देखकर तदीय युगार्जित पाप क्षमा कर देते हैं। प्राचीनकाल में भरत जिस प्रकार चक्रवर्त्तित्व पद प्राप्त किये थे। सर्वलोकों का उत्साह वर्द्धन पूर्वक हरिवासर की रात्रि में जागरण करने पर भी उसी प्रकार मानव सार्वभौम पद को प्राप्त कर सकता है ॥१३६-१३९॥

हे द्विज ! पुराकाल में एक श्वपच ने हरिवासर की रात्रि में जागरण करके गीत द्वारा श्रीविष्णु को प्रसन्न किया था। गन्धर्व के मुख से सुना है कि उसी से उसने मोक्ष प्राप्त किया था। हरिवासर में नृत्य करके राजा दिलीप राज्य प्राप्त किये थे। नहुष नृपति ने भी हरिवासर रात्रि में जागरण कर श्रीविष्णु को अर्घ्य प्रदान कर राज्य लाभ किया था। सृञ्जय, वञ्जुलद्वादशी की रात्रि में जागरण करके फलदान करने के कारण, निष्कण्टक राज्य प्राप्त किये थे ॥१४०-१४२॥

हे मुनिवर ! हरिवासर में जागरण पूर्वक वस्त्र दान करने के कारण नाभाग निष्कण्टक राज्य लाभ किये थे। हे विप्र ! मैं सत्य कहता हूँ। नृत्यकारिणी विख्यात मेनकाने, सुरलोक में त्रिस्पृशा रात्रि में

शैलूषी नर्त्तनात् सिद्धा विख्याता मेनका दिवि । त्रिस्पृशा जागरे विप्र सत्यं ते कथितं मया ॥१४४
तुलसीजागरात् प्राप्तं जागरे चक्रपाणिनः । अलर्केन क्षितीशत्वं यशःकीर्त्ति-समन्वितम् ॥१४५
षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च । अलर्को नाम राजासौ बुभुजे मेदनीं पुरा ॥१४६॥
शाण्डिली मार्ज्जनात् सिद्धा एकादश्यान्तु मण्डलात् ।
पुरतो वासुदेवस्य पक्षयोः शुक्लकृष्णयोः ॥१४७॥
उन्मीलनीदिने प्राप्ते परदीपप्रबोधनात् । इन्द्रद्युम्नेन संप्राप्तं राज्यं जागरणं हरेः ॥१४८॥
दोलादिने च संप्राप्ते वीणावाद्यात् पुरूरवाः । चक्रवर्त्तित्वमायातो दुष्प्रापं यत् सुरैरपि ॥१४९
सम्मानिताः ककुत्स्थेन रात्रौ जागरकारिणः ।
स्वशक्त्या चैव दानेन प्राप्तं राज्यं सुदुर्लभम् ॥१५०॥
श्वपाकी च मृगी नाम गानं कृत्वा हरेर्दिने । गान्धर्व्वलोकनारीणां जाता राज्ञी प्रजागरात् ॥१५१
वेणुवाद्यादृचीकस्तु विजयावासरे निशि । जागरे पुरतो विष्णोः पुना राजा भविष्यति ॥१५२
ये केचिद्गायका विप्र वादका नर्त्तका नराः ।
नर्त्तकी-सहिता यान्ति कृत्वा जागरणं दिवम् ॥१५३॥

---

शैलूषी नर्त्तकी वेश्येत्यर्थः । विप्रेत्यत्र व्यासेति क्वचित् पाठे स्कन्दपुराण-प्रह्लादसंहितोक्त्योरैक्यात् प्रह्लादसंहितायां प्रह्लादव्याससवादोऽनुसन्धेयः ॥१४४॥

चक्रपाणेर्जागरे मध्ये तुलस्यां तुलसीवनान्तिके यो जागरस्तस्मात् ॥१४५॥

मण्डलात् सर्व्वतोभद्रादि-मण्डलविधानात् । तत्रापि वासुदेवस्य पुरतः ॥१४७॥

हरेर्जागरणे परदीपस्य प्रबोधनात् ॥१४८॥

आयातः प्राप्तः; स्वशक्त्या दानेन सम्मानिताः, पाठान्तरे देहान्ते च देवदुर्लभं पदं प्राप्तवानित्यर्थः ॥१४९-१५०

---

जागरण करके नृत्य करने पर उसके फलस्वरूप सिद्धि लाभ की थी ॥१४३-१४४॥

पूर्वकाल में तुलसीवन के सन्निधान में चक्रपाणि श्रीहरि का जागरण करने पर उस फल से अलर्क ने यश एवं कीर्त्ति के सहित राज्यपद प्राप्त किया था । अनन्तर राज्यपद में अधिष्ठित होकर षष्टिसहस्र एवं षष्टिशत वर्ष यावत् इस पृथिवी को भोगा था ॥१४५-१४६॥

शुक्ल एवं कृष्णपक्षीय हरिवासर में श्रीहरि के पुरोभाग में मार्जन एवं सर्वतोभद्रादि मण्डल विरचन करके शाण्डिली को सिद्धि प्राप्त हुई थी । उन्मीलनी द्वादशी के जागरण काल में इन्द्रद्युम्न ने अन्य प्रदत्त प्रदीप उज्जीवित करके राज्य लाभ किये थे । किसी समय श्रीहरि का दोलादिन उपस्थित होने पर पुरुरवा ने वीणावादन किया था। उसी के फलस्वरूप उन्होंने देवदुर्लभ चक्रवर्त्ती पद प्राप्त किया ॥१४७-१४९॥

पुराकाल में ककुत्स्थ हरिवासर में निशाजागरणकारी को साध्यानुरूप सम्मानित करने के कारण दुर्लभ राज्य प्राप्त किये थे । हरिवासर में मृगी नाम्नी किसी स्वपाकी रमणी ने हरिवासर रात्रि में जागरण करके सङ्गीत किया था, इसी कारण गन्धर्वों की स्त्रीयों में उसको रानी का पद प्राप्त हुआ ॥१५०-१५१॥

ऋचीक, विजया वासर की रात्रि में श्रीहरि के सम्मुख में वीणावादन के फलस्वरूप पुनर्वार राज्य लाभ किये थे । हे विप्र ! जो कोई क्यों न हो, हरिवासर में जागरण पूर्वक नृत्यगीत, वा वाद्य करने से नर्त्तकी के सहित सुरपुर में गमन करता है ॥१५२-१५३॥

वियोनिमागतैः सर्व्वैः कृत्वा जागरणं हरेः । संप्राप्तं पृथिवीशत्वं सकामैर्मुनिसत्तम ॥१५४॥
निष्कामैर्मुक्तिराप्ता च श्वपचाद्यैस्तु जागरात् ।
विवक्षा नास्ति वर्णानां हरेर्जागरकारिणाम् ॥१५५॥
न कलौ पावनं ध्यानं न कलौ जाह्नवीजलम् । न कलौ पावनं जप्यं मुक्त्वैकं जागरं हरेः ॥१५६
आश्रमे वर्त्तमानानां न फलं हि द्विजन्मनाम् । संयष्टैरपि यज्ञैस्तु विना द्वादशि-जागरात् ॥१५७
लक्ष्मीः पराङ्मुखी तेषां वासवाद्या दिवौकसः । पितरः कव्यपाल्याद्या मनुष्याः सनकादयः॥१५८
एकोऽपि हि कुलोत्पन्नः किञ्जातैर्बहुभिः सुतैः ।
द्वादशीजागरात् सर्व्वांस्तारयिष्यति पूर्व्वजान् ॥१५९॥
विशल्यवासरे विष्णोर्यः करोति सुजागरम् । स वै भागवतो लोके गीयते ब्रह्मवादिभिः ।१६०
यस्य प्रसन्नो भगवान् शीलेनोत्पद्यते सुतः ।
एकोऽपि तारयेत् सर्व्वान् नरकस्थान् पितामहान् ॥१६१॥
न सौरो न च शैवो वा न ब्राह्मो नैव शाक्तिकः ।
न चान्यदेवता-भक्तो भवेद्भागवतोपमः ॥१६२॥

---

जागरे विष्णोः पुरतो वेणुवाद्यात्, मङ्गलाचरणादिति पाठे 'जयति जननिवासः' (श्रीभा १०।९०।४८) इत्यादिपठनादित्यर्थः; वेणुवाद्यस्वरूपविशेषणं वा । विवक्षा नास्तीति तेषां संख्यां वक्तुं न शक्यत इत्यर्थः । यद्वा, विवक्षा विचारः । विशेष इति पाठेऽधिकार्य्यपेक्षा नास्तीत्यर्थः । संयष्टैः सम्यगिष्टैः ॥१५२-१५७॥

तेषां जागरणहीनानाम्, एकोऽपि कुले उत्पन्नः सन् सर्व्वांस्तारयिष्यति, अतः किं बहुभिरित्यन्वयः ॥१५८-१५९

तारयेज्जागरणतः, भागवतः जागरणादिकर्त्ता तत्समः, प्रकरणबलादेवमग्रेऽपि ज्ञेयम् ॥१६०-१६१॥

---

हे मुनिसत्तम ! वियोनि समुद्भूत मनुष्यवृन्द भी कामनापूर्वक श्रीहरिवासर में जागरण करके धराधिपत्य प्राप्त किये हैं । निष्काम भाव से रात्रिजागरण करके श्वपच प्रभृति ने भी मोक्ष लाभ किया है । श्रीहरिवासर में समस्त जाति ही जागरण में तुल्याधिकारी हैं। कलिकाल में ध्यान, गङ्गोदक, किंवा जप द्वारा शुद्धि नहीं होती है । पवित्रता का कारण, एकमात्र श्रीहरिवासर में जागरण ही है । द्वादशी जागरण न करके द्विजातिवृन्द, आश्रम में यथाविधि अधिष्ठित रहकर विविध यज्ञानुष्ठान करने पर भी फल लाभ करने में समर्थ नहीं हो सकते ॥१५४-१५७॥

हरिवासर में जागरण न करने से कमला, सुरेन्द्र प्रमुख देववृन्द, श्राद्धपात्य पितृगण, मनुष्यगण एवं सनकादि ऋषिगण, सभी उससे विमुख रहते हैं। हरिवासर जागरण में विमुख है, इस प्रकार वंश में अनेक सन्तानों की कुछ भी आवश्यकता नहीं है । द्वादशी में जागरण करने वाला एकमात्रपुत्र ही पूर्वपुरुषों की रक्षा कर सकता है ॥१५८-१५९॥

दशमीवेध वर्जित हरिवासर में सम्यक् प्रकार जागरण करने पर वह व्यक्ति वेदविद्गण कर्त्तृक परम भागवत नाम से अभिहित होता है । भगवान् श्रीहरिः जिसके प्रति प्रसन्न होते हैं, उसका सुशीलपुत्र उत्पन्न होता है, वस्तुतः तद्रूप एकमात्र सन्तान से ही निरयस्थ यावतीय पितृ पुरुषों का उद्धार होता है । सौर, शैव, ब्रह्मच, शाक्त वा अन्य देवभक्त,—कोई भी भगवद्भक्त के समकक्ष नहीं होते हैं ॥१६०-१६२॥

गृहेऽपि वर्त्तते यस्य नित्यं यस्य च चेतसि । द्वादशीचरितं पुण्यं चतुर्वर्गफलप्रदम् ॥१६३॥

### अथ जागरण-माहात्म्यफलम्

तत्रैव—

उपोषितैर्हरिदिनैः संवत्सरशतं फलम् । तत् फलं नित्यमाप्नोति पठन् जागरणं हरेः ॥१६४॥

माहात्म्यं यः पठेद्भक्त्या मयोक्तं जागरोद्भवम् ।
द्वादशीसम्भवं पुत्र कुलानामुद्धरेच्छतम् ॥१६५॥

चरितं बाललीलाया मथुरायाश्च यः पठेत् । द्वादश्यां देवकीसूनो रात्रौ जागरणे कलौ ।
अयुतानां वसेत् कोटिं पितृभिः परिवारितः ॥१६६॥
वञ्जुलीसम्भवं यो वै माहात्म्यं जागरे हरेः ।
कीर्त्तयिष्यति नित्यं वा तस्य पुण्यं वदाम्यहम् ॥१६७॥

दशभिर्वासरैर्विष्णोर्दशभिर्गुणितैर्मुने । कृतैर्भवति यत् पुण्यं नित्यमाप्नोति तत् फलम् ॥१६८॥
जन्मकोटिं मखैर्यष्टैर्न मुक्तिर्जायते नृणाम् । द्वादशी-जागरेणैव मुक्तिं गच्छति मानवः ॥१६९॥
सर्व्वपापविशुद्धात्मा लभते वैष्णवं पदम् । सर्व्वे दुष्टाः समास्तस्य सौम्यास्तस्य सदा ग्रहाः ।
यः पठेज्जागरे विष्णोर्माहात्म्यं द्वादशीषु च ॥१७०॥

---

इदानीं जागरणमाहात्म्यफलपाठादिफलमाह—गृहेऽपीत्यादिना । चेतसि च वर्त्तते, द्वादशीचरितं जागरणमाहात्म्यादिकं तस्य चतुर्व्वर्गफलप्रदं पुण्यं स्यात् । तत्र चतुर्व्वर्गो धर्म्मार्थकाममोक्षाः, फलश्च भक्तिः । जागरणं जागरणमाहात्म्यम् ॥१६३-१६४॥

दृष्टान्तत्वेन प्रसङ्गेन वा तत्रान्यपाठस्यापि फलमाह—चरितमिति । देवकीसूनोर्मथुरायां या बालवल्लीला तस्य सम्बन्धि चरितं, कलौ द्वादश्याः रात्रौ जागरणे यः पठेत्, सोऽयुतानां वर्षाणां कोटिं वसेद्वैकुण्ठलोक इति शेषः ॥१६६॥ जन्मकोटिं व्याप्य यष्टैः कृतैर्मखैः ॥१६९॥

समाश्चरन्ति, दुष्टतां विहाय मित्रतां यान्तीत्यर्थः । पाठान्तरे शान्ता भवन्तीत्यर्थः ॥१७०॥

---

द्वादशी जागरणादि माहात्म्य जिसके भवन में वा अन्तर में नित्य विराजित हैं, वह व्यक्ति चतुर्वर्ग फल लाभ करने में सक्षम होता है ॥१६३॥

### अथ जागरण-माहात्म्यफलम्

उक्त स्कन्दपुराण के उक्त स्थान में ही वर्णित है हरिवासर में सर्वदा जागरण माहात्म्य पाठ करने पर शत वर्ष कृत एकादश्युपवास का फल लाभ होता है। ब्रह्मा, श्रीनारद को कहे थे– हे वत्स ! द्वादशी जागरण करने का मैंने जो माहात्म्य कहा, उसको पाठ करने से मनुष्य, अपने सौ कुलों की रक्षा करने में समर्थ हो सकता है। कलिकाल में द्वादशी रात्रि में जागरण करके देवकीनन्दन की मथुरा मण्डलीय बाल्य-लीलाओं का पाठ करने से पितृलोक समन्वित होकर अयुत कोटि वर्ष श्रीहरि-धाम में अवस्थित होती है ॥ ॥१६४-१६६॥

हरिवासर में जागरण में सदा वञ्जुलीव्रत का माहात्म्य पाठ करने से जो पुण्य होता है, उसका वर्णन करता हूँ। हे मुने ! दश संख्यक हरिवासर को दशगुणित करने पर जो संख्या होती है, अर्थात् शतसंख्यक हरिवासर अनुष्ठान से जो पुण्य सञ्चित होता है, उक्त माहात्म्य पाठ से वही फल होता है। कोटि जन्म यज्ञानुष्ठान करने से भी मनुष्य को मोक्ष प्राप्त होने की आशा नहीं है। किन्तु हरि की द्वादशी में जागरण

अथ जागरणाकरणे दोषाः

तत्रैव श्रीमदुमामहेश्वर-संवादे—

दष्टाः कलिभुजङ्गेन स्वपन्ति मधुहादिने । कुर्व्वन्ति जागरं नैव मायापाशविमोहिताः ॥१७१॥
प्राप्याप्येकादशी येषां कलौ जागरणं विना । ते विनष्टा न सन्देहस्तरमाज्जीवनमध्रुवम् ॥१७२
अश्वमेधसहस्रस्य वाजपेयायुतस्य च । न पुण्यं कोटिगुणं गौरि विष्णोर्जागरणे कृते ॥१७३॥
पितृपक्षे मातृपक्षे भार्य्यापक्षे च भामिनि । कुलमुद्धरते चैतत् कृते जागरणे हरेः ॥१७४॥
अविद्धवासरे विष्णोर्ये कुर्व्वन्ति प्रजागरम् । तेषां मध्ये प्रहृष्टः सन् नृत्यं प्रकुरुते हरिः ॥१७५
यावद्दिनानि कुरुते जागरं केशवाग्रतः । युगायुतानि तावन्ति वसते विष्णुवेश्मनि ॥१७६॥
यावद्दिनानि वसते विना जागरणं हरेः । नृत्यन्त्युद्धृतशस्त्राश्च तद्गृहे यमकिङ्कराः ॥१७७॥
जागरे वासुदेवस्य पुराणं पठतीह यः । प्राप्नोत्यभिमतान् कामान् प्रेतत्वं नैव जायते ॥१७८॥
यः पुनः कुरुते गीतं नृत्यं जागरणे हरेः । ब्राह्मयं पदं मदीयञ्च सत्यं वै तस्य वैष्णवम् ॥१७९
यः प्रबोधयते लोकान् विष्णुजागरणे ततः । वसेच्चिरन्तु वैकुण्ठे पितृभिः सह वैष्णवः ॥१८०
मतिं प्रयच्छते यस्तु हरेर्जागरणं प्रति । षष्टिवर्षसहस्राणि श्वेतद्वीपे वसेन्नरः ॥१८१॥

---

मधुहेत्याकारान्तत्वमार्षम् ॥१७१॥ जागरणं विना गतेति शेषः ॥१७२॥

---

करने पर ही मुक्ति प्राप्त होती है। हरिवासर के जागर में द्वादशी का माहात्म्य पाठ करने पर सम्पूर्ण पापों से शुद्धि प्राप्त कर वैकुण्ठलोक मिलता है और उसके सब दुष्ट ग्रह, दुष्टता को छोड़कर सुहृद् बन जाते हैं ॥ ॥१६७-१७०॥

अथ जागरणाकरणे दोषाः

उक्त पुराण के उमा-महेश्वर संवाद में वर्णित है—कलिकाल में जो मानव, मधुसूदन हरि के दिन में जागरण न करके शयन करते हैं, उनको, शत-शत मायाजाल से जड़ित एवं कलिरूपी सर्प से दष्ट है, ऐसा जानना होगा ।।१७१॥

कलिकाल में जागरण व्यतीत एकादशी अतिवाहित होने पर निःसन्देह उन सबका जीवन विफल होता है, एवं वे स्वयं भी विनष्ट होते हैं ॥१७२॥

हे गौरि ! हरिवासर में जागरण करने पर सहस्र अश्वमेध एवं दशसहस्र वाजपेय यज्ञ की अपेक्षा भी कोटिगुण फल लाभ होता है। हे भामिनि ! हरिवासर में जागरण करने से, वह जागरण, पितृकुल, मातृ-कुल एवं श्वशुर-कुल उद्धारक होता है। दशमी वेधरहित हरिवासर में जागरण करने पर श्रीहरि अतिशय सन्तुष्ट होते हैं एवं उक्त जागरणकारीगण के मध्य में नृत्य करते हैं। जब तक श्रीकेशव के सम्मुख में जागरण किया जाता है, दिन संख्या के अनुसार उतने युग यावत् श्रीहरि-मन्दिर में निवास होता है। हरिवासर में जागरण न करके जितने दिन अतिवाहित होते हैं, यमकिङ्करगण, शस्त्र उत्तोलन कर उतने दिन उसके घर में नृत्य करते रहते हैं ॥१७३-१७७॥

हरिवासर जागरण में पुराण पाठ करने पर अभिमत कामना सिद्धि होती है, एवं प्रेतत्व लाभ नहीं होता है। मैं सत्य कह रहा हूँ। जो मानव, श्रीहरि के जागरण में गीत-नृत्य करते हैं, उनको ब्रह्मपद, शैवधाम एवं वैकुण्ठ लाभ होता है। जो मानव, हरिवासर में जागरण करने के निमित्त अपर को प्रवृत्त करते हैं, उससे उनका निवास, वैकुण्ठलोक में पितृगण के सहित चिरकाल होता है। जो व्यक्ति, हरि के जागरण करने में अपर की बुद्धि उत्पन्न करा देते हैं, उनका षष्टिसहस्र वत्सर वास, श्वेत द्वीप में होता है ॥ ॥१७८-१८१॥

यत् किञ्चित् क्रियते पापं कोटिजन्मानि मानवैः ।
कृष्णस्य जागरे सर्व्वं रात्रौ दहति पार्व्वति ।।१८२।।

शालग्रामशिलाग्रे तु ये कुर्व्वन्ति हि जागरम् । यामे यामे फलं प्रोक्तं कोटचैन्दवसमुद्भवम् ।।१८३
का ार्थसम्पदः पुत्राः कीर्त्तिर्लोकश्च शाश्वतः । यज्ञाः तैर्न लभ्येत द्वादशीजागरं विना ।।१८४।।
यावत् पदानि कुरुते केशवायतनं प्रति । अश्वमेधसमानि स्युर्जागरार्थं प्रगच्छतः ।।१८५।।
पादयोः पतितं यावद्धरण्यां पांशु गच्छतः । तावद्वर्षसहस्राणि जागरी वसते दिवि ।।१८६।।
तस्मात्स्वगृहात् प्रगन्तव्यं जागरे माधवालयम् । कलौ मलविनाशाय द्वादशी-द्वादशीषु च ।।१८७
किं व्रतैर्बहुभिश्चीर्णैस्तीर्थवासेन तस्य किम् । द्वादशीवासरे प्राप्ते न कुर्य्याज्जागरं यदि ।।१८८
प्रवासे न त्यजेद्यस्तु पथि खिन्नोऽपि पार्व्वति । जागरं वासुदेवस्य स हि मेऽतिप्रियो नरः ।।१८९

यः पुनः सुस्थचित्तोऽपि स्वस्थाने वसतेऽपि सन् ।
न हरेर्जागरं कुर्य्यात् तेन कार्य्यं न मे क्वचित् ।।१९०।।
मद्भक्तो न हरेः कुर्य्याज्जागरं पापमोहितः ।
व्यर्थं मत्पूजनं तस्य मत्पूज्यं यो न पूजयेत् ।।१९१।।

---

दह्यते पार्व्वतीति पाठे दह्यते स्वयमेव नरपतीत्यर्थः ।।१८२।।
ऐन्दवं चान्द्रायणम् ।।१८३।।
सन्नपि साधुरपि ।।१९०।।

---

हे पार्वति ! हरिवासर की रात्रि में जागरण करने पर मनुष्यों के कोटिजन्मार्जित समस्त पाप दग्ध होते हैं ।।१८२।।

शालग्रामशिला के पुरोभाग में जागरण करने पर प्रहर प्रहर में कोटि चान्द्रायण का फल जागरणकारी को मिलता है । १८३।।

द्वादशी जागरण में विमुख होकर अनेक अयुत यज्ञ करने पर भी काम, अर्थ, सम्पद्, पुत्र, यश: किंवा चिरन्तनी पारलौकिकी,–किसी के भी प्राप्त होने की आशा नहीं है । एकादशी जागरणार्थ केशव-मन्दिर के उद्देश में प्रस्थान करने पर प्रति पद में अश्वमेध-यज्ञ के समान फल लाभ होता है ।।१८४-१८५।।

हरिवासर जागरणार्थ गमनकाल में भूतल में जागरणकारी के पैर की जितनी रेणु गिरती है, उतने ही हजार वर्ष, वह मनुष्य अमरपुर में निवास करता है । अतएव कलिकलुष दूर करने के निमित्त प्रति द्वादशी में जागरण करने के निमित्त हरिमन्दिर में अवश्य जाना चाहिये । द्वादशी जागरण को समागत देखकर जागरण न करने से, उस पुरुष के अनेकानेक व्रत, प्रायश्चित्त, और अनेकानेक तीर्थों के सेवन करने से ही क्या फल है ? हे पार्वति ! प्रवास किंवा पथ में क्लान्त होकर भी जो व्यक्ति हरिवासर जागरण को परित्याग नहीं करता है, उसको श्रीहरि का एवं मेरा प्रिय पात्र जानना चाहिये ।।१८६-१८९।।

हे पार्वति ! अधिक और क्या कहूँ ? सुस्थमना होकर निज गृह में रहकर भी जो व्यक्ति हरिवासर में जागरण नहीं करता है, साधु होने पर भी उसके सहित मेरा कोई सम्बन्ध नहीं है । मेरा भक्त यदि हरिवासर में जागरण न करे तो, उसके द्वारा मेरे पूज्यतम जनार्द्दन की पूजा न होने के कारण, उस व्यक्ति को पाप से मोहित जानना चाहिये और उसके द्वारा करी गई मत्पूजा भी निष्फल होती है ।।१९०-१९१।।

सवाह्याभ्यन्तरं देहं वेष्टितं पापकोटिभिः। मुच्यते वासरे विष्णोर्जागरे नृत्यतां निशि ॥१९२

प्राप्ते कलियुगे घोरे नरास्ते त्रिदशैः समाः।
विशल्ये वासरे विष्णोर्ये कुर्व्वन्ति हि जागरम् ॥१९३॥

कूर्परं यमदूतानां दत्तं तेन यमस्य च। कृत्वा जागरणं विष्णोरविद्धद्वादशीव्रतम् ॥१९४॥
द्वादश्यां जागरे विष्णोर्यैः कृतं पुष्पमण्डपम्। प्रतिपुष्पफल तेषां वाजिमेधसमं प्रिये ॥१९५॥
द्वादश्यां कृष्णभवनं कदलीस्तम्भशोभितम्। ये कुर्व्वन्ति हरिस्तेषां स्वकीयं यच्छते पदम् ॥१९६

दीपदानं प्रकुर्व्वन्ति जागरे केशवस्य हि।
ते ध्वस्ततिमिरा गौरि यान्ति विष्णोः परं पदम् ॥१९७॥

ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्राश्च जागरे। हीनवर्णा अन्त्यजाश्च राक्षसा दैत्यदानवाः।
प्राप्तास्ते परम स्थानं श्रीविष्णोर्जागरे कृते ॥१९८॥

अप्रेरितः स्वयं भक्त्या गीतं नृत्यं करोति यः। जागरे पद्मनाभस्य स किं नाकृत मानवः ?१९९
यो नृत्यति प्रहृष्टात्मा कृत्वा वै करताड़नम्। गीतं कुर्व्वन् मुखेनापि दर्शयन् कौतुकान् बहूः ॥२००
पुरतो वासुदेवस्य रात्रौ जागरणे स्थितः। पठन् कृष्णचरित्राणि रञ्जयन् देवि वैष्णवान् ॥२०१
मुखेन कुरुते वाद्यं संप्रहृष्टतनूरुहः दर्शयन् विविधान् नृत्यान् स्वेच्छालापांश्च कुर्व्वति ॥२०२॥
भावैरेतैर्नरो यस्तु कुरुते जागरं हरेः। निमेषे निमेषे पुण्यं तीर्थकोटिसमं स्मृतम् ॥२०३॥
अविघ्नमनसा यस्तु धूपं नीराजनं हरेः। कुरुते जागरे रात्रौ सप्तद्वीपाधिपो भवेत् ॥२०४॥

---

वाह्यानि अङ्गानि, आभ्यन्तराणि इन्द्रियाणि, तैः सहितम्। मुच्यते पापकोटिभ्यस्ताभ्यः ॥१९२॥
कूर्परं दत्तं कूर्परेण प्रहृत्य विष्णुलोकं प्रयातीत्यर्थः। ध्वस्तं नष्टं तिमिरमज्ञानं येषां ते ॥१९४-१९७॥
जागरे भवन्ति, जागरं कुर्व्वन्तीत्यर्थः। हीनवर्णाः सङ्करजातयः ॥१९८॥
स किं नाकृत ? अपि तु सर्व्वमेव कृत्यमकरोदित्यर्थः ॥१९९॥
कुर्व्वति करोति, अविघ्नेन अनुद्विग्नेन मनसा ॥२०२-२०४॥

---

हरिवासर की रात्रि में जागरण पूर्वक नृत्य करने पर वाह्याभ्यन्तर बहु कोटि पापों से लिप्त देह भी मुक्त हो जाता है ॥१९२॥

समागत भीषण कलियुग में जो मानव दशमीवेधहीन हरिवासर में जागरण करते हैं, वे सब मनुष्य देवता सदृश हैं। जिन्होंने दशमी वेधशून्य द्वादशी व्रत में जागरण किया है, उन्होंने यमराज और उनके दूतों को कूर्पर प्रदान किया है, अर्थात् उन पुरुषों ने यम और उनके दूतों को कहुनी के आघात से धक्का देकर प्रथम ही हरिधाम में प्रस्थान किया है, इस प्रकार समझना होगा। हे प्रिये ! हरिद्वादशी के जागरण में पुष्प-मण्डप प्रस्तुत करवाने से प्रति पुष्प में अश्वमेध यज्ञ के तुल्य फल लाभ होता है। द्वादशी में कदलीस्तम्भ द्वारा हरि निकेतन को अलङ्कृत करने से भगवान् हरि स्वपद प्रदान करते हैं।१९३-१९६॥

हे गौरि ! जागरण रजनी में केशव के उद्देश में दीप प्रदान करने से दीप-प्रदातृगण, भवान्धकार से मुक्त होकर श्रीहरि के परमपद में प्रस्थान करते हैं ॥१९७॥

ब्राह्मण, क्षत्रिय, वैश्य, नारी, शूद्र, निकृष्ट वर्ण, अन्त्यज, राक्षस, दैत्य, दानव प्रमुख,–सबने ही हरिवासर का जागरण करके परमपद वैकुण्ठधाम पाया है। यदि कोई व्यक्ति, अपर के द्वारा प्रेरित न होकर

किञ्च—

अभावे कृष्णधिष्णस्य गत्वा मन्मन्दिरं शिवे ।
कार्य्यं जागरणं रात्रौ विद्धि मां माधवप्रियम् ॥२०५॥
अभावे मम धिष्ण्यस्य गत्वा तु रवि-मन्दिरम् ।
कार्य्यं जागरणं रात्रौ यथा विष्णुस्तथा रविः ॥२०६॥

तदभावे विना ग्राममरण्यकादशी यदि । तदाकाशे सुरेशानि विष्णोस्त्रीणि पदानि वै ।
दृष्ट्वा देवि प्रकर्त्तव्यं जागरं चक्रपाणिनः ॥२०७॥

अथवा प्रतिमा विष्णोः शालग्रामशिलाऽथवा । तिष्ठते यदि देवेशि कार्य्यस्तत्र प्रजागरः ॥२०८
मेघसंछादिते व्योम्नि विष्णोस्त्रीणि पदानि च । अदृष्ट्वा बोधिमूले तु कार्य्यं जागरणं हरेः ॥२०९
रात्रिमूलेऽथवा गौरि तुलसीवनपार्श्वतः । यत्र वा तत्र वा कार्य्यं तीर्थे वा निम्नगा-जले ॥२१०
सर्व्वाभावे महादेवि वैष्णवस्य च सन्निधौ । कर्त्तव्यं जागरं विष्णोर्मानसीं भक्तिमास्थितैः ॥२११
विना जागरणं गौरि विष्णोर्दिनफलं न हि । नास्माकं भवति प्रीतिर्ब्रह्मादीनां दिवौकसाम् ॥२१२
यज्ञानामपि सर्व्वेषां महायज्ञः स कथ्यते । वासरे वासुदेवस्य यतो जागरसंज्ञकः ॥२१३॥
तस्माज्जागरणं कार्य्यं त्यक्त्वा कार्य्यान्तराण्यपि ॥२१४॥

---

अधुना वर्त्मादौ मुख्याभावे जागरणस्थानमाह—अभाव इति सप्तभिः । अरण्ये यदि एकादशी स्यात्; सन्धिरार्षः ॥२०५-२०७॥ प्रतिमा चला ॥२०८। बोधिः– अश्वत्थवृक्षः ॥२०९॥

---

स्वयं श्रीहरि के जागरण में भक्तिपूर्वक नृत्य करता है तो—उसके द्वारा समस्त कार्य्य सम्पादित हो गये हैं, ऐसा जानना चाहिये । हे देवि ! हरिवासर की रात्रि में वासुदेव के सम्मुख में आनन्द से करतालि प्रदान पूर्वक नृत्य, मुख से सङ्गीत विविध कौतुक प्रदर्शन, श्रीकृष्णचरित कीर्त्तन द्वारा वैष्णववृन्द का मनोरञ्जन, पुलकित शरीर से मुखवाद्य, विविध नृत्यकौशल प्रदर्शन एवं स्वेच्छानुरूप आलापन,-यह सब भावों के सहित जागरण करने पर प्रति निमेष में कोटि-कोटि तीर्थजनितपुण्य सञ्चय होता है । जो मानव, अनुद्विग्न-मना होकर हरिवासर की रात्रि में धूपारात्रिक करते हैं, उससे वे सप्तद्वीपाधिपत्य लाभ करते हैं । १९८-२०४

और भी वर्णित है— हे शुभे ! हरिमन्दिर के अभाव से रात्रि में मेरे मन्दिर (शिवालय) में जाकर जागरण करे । हे देवि ! मुझको श्रीमाधव का प्रिय जानना । यदि मेरा मन्दिर भी न मिले तो, सूर्य्य के मन्दिर में जाकर रात्रि-जागरण करना चाहिये । क्योंकि जहाँ हरि हैं, वहीं सूर्य्य विराजमान हैं । हे सुरेशानि ! यदि सूर्य्य-मन्दिर भी न मिले और ग्राम के अतिरिक्त वन में हरिवासर उपस्थित हो, तो गगन मार्गस्थ श्रीहरि के त्रिपाद पर दृष्टि डालकर, चक्रपाणि हरि का जागरण करना चाहिये । अथवा हे देवेशि ! जहाँ पर श्रीविष्णु की चलमूर्त्ति अथवा शालग्राम शिला विराजित हैं, वहाँ जाकर जागरण करे। आकाश मेघाच्छन्न होने से यदि श्रीहरि के पदत्रय दृष्टिगोचर नहीं हो तो, अश्वत्थ मूल में जाकर रात्रि-जागरण करना चाहिये ॥२०५-२०९॥

हे गौरि ! धात्री वृक्षमूल में, तुलसीवन के सन्निधान में, तीर्थ किंवा नदी जल में, जिस स्थान में ही क्यों न हो, जागरण करना चाहिये । हे महादेवि ! इन सबका अभाव होने पर श्रीहरि के प्रति मानसिक भक्ति रखकर जागरण करना चाहिये । हे गौरि ! हरिवासर में जागरण न करने पर कुछ भी फल नहीं होता है,

पाद्मे देवदूतविकुण्डलसंवादे—

रात्रौ जागरणं कृत्वा समुपास्य जनार्द्दनम् । दश वै पैतृके पक्षे मातृके दश पूर्व्वजाः ।
प्रियाया दश ये वैश्य तानुद्धरति निश्चितम् ॥२१५॥

श्रीमार्कण्डेयपुराणे—

ध्यानध्येयविहीनस्य संज्ञातीतस्य भूपते । कर्म्मभ्रष्टस्य कथितो मोक्षस्तु हरिजागरे ॥२१६॥

प्रह्लादसंहितायां प्रह्लादोक्तौ—

यानि कानि च पापानि ब्रह्महत्यादिकानि च ।
कृष्णजागरणे तानि विलयं यान्ति खण्डशः ॥२१७॥

एकतः क्रतवः सर्व्वे समाप्तवरदक्षिणाः । एकतो देवदेवस्य जागरः कृष्णवल्लभः ।
न समं कवयः प्राहुरधिकः कृष्णजागरः ॥२१८॥

तत्र ब्रह्मा च रुद्रश्च शक्राद्या देवतागणाः । नित्यमेव समायान्ति जागरे कृष्णवल्लभे ॥२१९॥
ऋषयो नारदाद्यास्तु व्यासाद्या मुनयस्तथा । अहञ्च तत्र गच्छामि कृष्णपूजारतः सदा ॥२२०
तत्र काशी पुष्करञ्च प्रयागो नैमिषं गया । शालग्राममहाक्षेत्रमर्व्वुदारण्यमेव च ॥२२१॥
सुपुण्या मथुरा तत्र सर्व्वतीर्थानि चैव हि । यज्ञा वेदाश्च चत्वारो व्रजन्ति हरिजागरम् ॥२२२
गङ्गा सरस्वती रेवा यमुना वै शतद्रुका । चन्द्रभागा वितस्ता च नद्यः सर्व्वास्तु तत्र वै ॥२२३

---

अह—प्रह्लादः ॥२२०॥

---

और उस मनुष्य के प्रति हम एवं ब्रह्मादि देवगण सन्तुष्ट नहीं होते हैं। समस्त यज्ञ के मध्य में हरिवासर में जागरण को ही महायज्ञ कहा गया है। सुतरां कार्य्यान्तर वर्जन पूर्वक हरिवासर में जागरण करना चाहिये ॥२१०-२१४॥

पद्मपुराण के देवदूत-विकुण्डल-संवाद में उक्त है—हे वैश्य ! यदि कोई हरिवासर की रात्रि में जागरण पूर्वक जनार्दन की आराधना करता है तो वह व्यक्ति, पितृपक्ष के दश पूर्वपुरुष, मातृकुल के दश पूर्वपुरुष, एवं श्वशुर कुल के दश पूर्वपुरुष को उद्धार कर सकता है ॥२१५।

श्रीमार्कण्डेय पुराण में वर्णित है—हे राजन् ! हरिवासर के जागरण में ध्यान रहित, ध्येयविहीन, ज्ञान-शून्य, कर्मभ्रष्ट व्यक्ति भी मुक्ति प्राप्त कर सकता है ॥२१६॥

प्रह्लाद संहिता की प्रह्लादोक्ति में प्रकाशित है—ब्रह्महत्यादि जो सब पातक हैं, हरिवासर में जागरण करने पर तत्समुदय खण्ड खण्ड होकर विनष्ट होते हैं। सुधीगण कहते हैं,- एक समय, तुलादण्ड के ओर उत्कृष्ट दक्षिणा के सहित सम्पादित यज्ञादि, एवं अन्य दिग् में देवादिदेव श्रीहरि के प्रिय जागरण स्थापन कर तुलना की गई थी, किन्तु जागरण के सहित, यज्ञसमूह समान न होने के कारण जागरण ही अधिक हुआ था ॥२१७-२१८॥

जहाँ, कृष्णप्रिय जागरण होता है, वहाँ ब्रह्मा, रुद्र एवं इन्द्रादि देवगण सर्वदा उपस्थित रहते हैं। जहाँ हरिवासर का जागरण होता है, वहाँ, नारद प्रमुख ऋषिवृन्द, व्यासादि मुनिगण, उपस्थित होते हैं, एवं सर्वदा श्रीहरि पूजारत मैं (प्रह्लाद) उपस्थित रहता हूँ। वाराणसी, पुष्कर, प्रयाग, नैमिषारण्य, गया, शालग्राम महाक्षेत्र, अर्बुदारण्य एवं सुपुण्या मथुरा,-यह सब तीर्थ, सर्वदा श्रीहरिवासर जागरण स्थान में अधिष्ठित रहते हैं। वहाँ गङ्गा, सरस्वती रेवा, यमुना, शतद्रु, चन्द्रभागा, वितस्ता, एवं अन्यान्य नदीसमूह का समागमन होता है ॥२१९-२२३॥

सरांसि च ह्लदाः सर्व्वे समुद्राः सर्व्वं एव हि । एकादश्यां द्विजश्रेष्ठ गच्छन्ते कृष्णजागरम् ॥२२४
स्पृहणीया हि देवानां ये नराः कृष्णजागरे । नृत्यन्ति गीतं कुर्व्वंन्ति वीणावाद्यप्रहर्षिताः ॥२२५

इति ।

जन्माष्टमी-प्रबोधन्यादिकेऽन्यच्च महोत्सवे । माहात्म्यं जागरस्याग्रे लेख्यं तत्तत्प्रसङ्गतः ॥२२६
ततः प्रभाते भगवद्रात्रिक्रीड़ारसात्मिकाम् । कौशिकीं प्रमुदा गायेच्छ्रीकृष्णपरितोषणीम् ॥२२७

तथा च स्कान्दे—

प्रभाते कौशिकीं यस्तु प्रगायेज्जागरे हरेः । स समुद्धरते सर्व्वान् श्वपचान् ब्राह्मणो यथा ॥२२८

इति ।

अथ पारणदिनकृत्यम्

मङ्गलारात्रिकं कृत्वाभ्यच्चर्य प्रस्थाप्य वैष्णवान् ।
प्रातः पूजाञ्च निष्पाद्य कृष्णे तत् सर्व्वमर्पयेत् ॥२२९॥

तदुक्तं कात्यायनेन—

प्रातः स्नात्वा हरिं पूज्य उपवासं समर्पयेत् । पारणन्तु ततः कुर्य्याद्व्रतसिद्धौ हरिं स्मरन् ॥२३०

---

एवमेकादशीजागरणमाहात्म्यं लिखितम्; तर्हि किं जन्माष्टम्यादि-जागरणमहिमा नास्ति ? तत्र लिखति —जन्मेति । आदि-शब्देन श्रीरामनवम्यादि ॥२२६॥

कौशिकी श्रृङ्गाररसप्रधानगीतवृत्तिविशेषस्ताम्, अतएव भगवतो रात्रौ या क्रीड़ा रासादिस्तद्रसात्मिकाम्, यथा श्रीगीतगोविन्दे—'रजनिजनितगुरुजागर-' इत्यादि । अतएव श्रीकृष्णस्य परमरसिक-शिरोमणेः परितोषणीम् ॥२२७॥

अभ्यर्च्चर्य महाप्रसादादिना सम्मान्य, प्रस्थाप्य च स्वस्वगृहं, तत् उपवासादिकम्, केचिच्च पारणानन्तरमेव समर्पणमिच्छन्ति ॥२२९॥

---

हे द्विजवर ! जहाँ श्रीएकादशी में कृष्ण जागरण होता है, वहाँ सरोवर, ह्लद, समुद्रसमूह उपस्थित होते हैं। जो सब मानव, वीणा वाद्य से पुलकित होकर कृष्ण जागरण में नृत्य करते हैं, वे सब देववृन्द के प्रार्थनीय होते हैं ॥२२४-२२५॥

जन्माष्टमी एवं प्रबोधन्यादि अन्यान्य जो महोत्सवसमूह हैं, तत्तत् प्रसङ्ग में प्रथम उन सबका जागरण माहात्म्य लिखित होगा ॥२२६॥

अनन्तर जागरण के अवशेष भाग में अर्थात् प्रातःकाल में भगवान् की जो सब श्रृङ्गार रसात्मिका रासादि क्रीड़ा सम्बन्धिनी गीति है, श्रीकृष्ण-प्रीति के निमित्त उन सबका गान करना चाहिये ॥२२७॥

तद्विषय में स्कन्दपुराण में लिखित है—जो मानव, जागरण के प्रातःकाल में श्रृङ्गार रसात्मिका गीति का सम्यक् गान करता है, ब्राह्मण, जिस प्रकार श्वपचादि को परित्राण करते हैं, उस प्रकार वह व्यक्ति सबको उद्धार करता है ॥२२८॥

अथ पारणदिनकृत्यम्

पारणदिन के प्रातःकाल में मङ्गलारात्रिक सम्पादन पूर्वक महाप्रसादादि अर्पण द्वारा वैष्णववृन्द को सम्मान प्रदान पूर्वक उनको विदा करे। अनन्तर प्रातःकालीन पूजा सम्पन्न करके श्रीकृष्ण में उपवासादि अर्पण करना चाहिये ॥२२९॥

तद्विषय में कात्यायन की उक्ति है—प्रभातकाल में स्नान के पश्चात् श्रीहरि की पूजा करके उपवास अर्पण करना चाहिये। अनन्तर व्रतसिद्धि हेतु श्रीहरिस्मरण का पारण करना चाहिये ॥२३०॥

अथ तत्र समर्पणमन्त्रः

अज्ञानतिमिरान्धस्य व्रतेनानेन केशव । प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भव ॥२३१॥ इति।

तत्र स्नानोपचारन्तु प्रातर्नैव समाचरेत् । प्रामाणिकानां केषाञ्चिद्वैष्णवानामिदं मतम् ॥२३२॥

अथ तत्र श्रीभगवतः प्रातरस्नपनम्

पाद्मे व्रतखण्डे—

जन्मप्रभृति यत्किञ्चित् सुकृतं समुपार्ज्जितम् । नश्यति द्वादशिदिने हरेर्निर्म्माल्यलङ्घनात् ॥२३३

त्रैलोक्यमोहन-पञ्चरात्रे च—

स्नानं न हरये दद्याद्द्वादश्यां वैष्णवो दिवा । पक्षपूजाफलं सर्व्वं वास्कलायोपगच्छति ॥२३४

इति ।

अतो दिवा निषिद्धत्वाद्रजन्यां स्नापयेत् प्रभुम् । पवित्रदमनद्वादश्युत्सवे तु न निश्यपि ॥२३५

नित्यकृत्यं समाप्याथ शक्त्या विप्रांश्च भोजयेत् ।
कुर्व्वीत द्वादशीमध्ये तुलसीं प्राश्य पारणम् ॥२३६॥

---

तत्र द्वादश्यां, भगवत्पूजायां प्रामाणिकानां श्रीकृष्णदेवाचार्य्यादीनामित्यनेन तेषां मतं पालनीय-मित्यभिप्रेतम् । केषाञ्चिदित्यनेन सर्व्वेषामिति सूचितं, श्रीवैष्णवादीनां तादृशाचारादर्शनात् ॥२३२॥

तन्मतमेव प्रमाणयति—जन्मेति । निर्म्माल्यस्य लङ्घनात् अतिक्रमात् उत्तारणादित्यर्थः । न च पद्भ्यां यल्लङ्घनं तस्मादित्यर्थः, तस्य सर्व्वदा सर्व्वदेवसम्बन्धिनोऽपि निषिद्धत्वेन द्वादशी हरिपदयोर्वैयर्थ्यापत्तेः, अतएव द्वादश्यां वर्ज्जनीयमध्ये स्कान्दादौ निर्म्माल्य-लङ्घनमप्युक्तम् । तच्चाग्रे नियमेषु लेख्यं, लिखितश्च पूर्व्वं पक्षकृत्यविधौ; समयेषु मध्ये द्वादश्यां निषिद्धेषु तत्र विष्णोर्दिवा न स्नानमिति ॥२३३॥

एतदेव पञ्चरात्रवचनेन साधयति—स्नानमिति ॥२३४॥

पवित्रारोपण-दमनकारोपणद्वादश्योरुत्सवे तु रात्रावपि न स्नापयेत् । एतदपि केषाञ्चिदेव प्रामाणिकाणां मतम् ॥२३५।

नित्यकृत्यं वैश्वदेवादिकं जपादिकं वा । तुलसीं प्राश्येति तुलसीप्राशनपूर्व्वं भोजनं कुर्य्यादित्यर्थः । यद्यपि

---

अथ तत्र समर्पणमन्त्रः

हे केशव ! मैं अज्ञानरूपी अन्धकार से अन्ध होरहा हूँ । इस व्रत द्वारा सुमुख होकर अर्थात् प्रसन्न होकर मुझ पर प्रसन्न हूजिये और मुझको ज्ञान-नेत्र प्रदान कीजिये ॥२३१॥

पारणदिन की द्वादशी तिथि में स्नानादि उपचार प्रदान करना निषिद्ध है । यह मत प्रामाणिक स्मृति-कर्त्ता श्रीकृष्ण देवाचार्य्यादिका मत है ॥२३२॥

अथ तत्र श्रीभगवतः प्रातरस्नपनम्

पद्मपुराण के व्रतखण्ड में लिखित है—द्वादशी दिन में श्रीहरि की निर्म्माल्य उल्लङ्घन करने से आजन्म सञ्चित पुण्य क्षय हो जाता है ॥२३३॥

त्रैलोक्य मोहन पञ्चरात्र में भी लिखित है—वैष्णव, द्वादशीतिथि के दिन में श्रीहरि को स्नान न करावे, इस दिन स्नान कराने से एक पक्ष कृत पूजाफल समूह वास्कल दैत्य कर्त्तृक गृहीत होते हैं ॥२३४॥

सुतरां दिवा भाग में निषेध हेतु द्वादशी की रजनी में श्रीहरि को स्नान कराना विहित है । किन्तु पवित्रारोपण एवं दमनकारोपण द्वादशी की रात्रि में भी स्नान कराना निषिद्ध है ॥२३५॥

अनन्तर नित्यकृत्य समापन करके निज सामर्थ्यानुसार विप्रवृन्द को भोजन सामग्री प्रदान पूर्वक तुलसीदल भक्षण करके व्रत पारण करना चाहिये ॥२३६॥

तथा च स्कान्दे—

कृत्वा चैवोपवासन्तु योऽश्नाति द्वादशीदिने । नैवेद्यं तुलसीमिश्रं पापकोटिविनाशनम् ॥२३७

अथ पारणे द्वादश्यपेक्षणम्

यत उक्तं पाद्मे—

महाहानिकरी ह्येषा द्वादशी लङ्घिता नृणाम् । करोति धर्म्महरणमस्नातेव सरस्वती ॥२३८

स्कान्दे—

पारणाहनि संप्राप्ते द्वादशीं यो व्यतिक्रमेत् । त्रयोदश्यान्तु भुञ्जानः शतजन्मानि नारकी ॥२३९

तत्रैव श्रीमार्कण्डेयभगीरथ-संवादे—

यो हि भागवतो भूत्वा द्वादशीं न हि साधयेत् । कृतस्य पूर्व्वपुण्यस्य दत्तस्तेन विभावसुः ॥२४०

कौर्म्मे—

एकादश्यामुपोष्यैव द्वादश्यां पारणं स्मृतम् । त्रयोदश्यां न तत् कुर्य्याद्द्वादशद्वादशीक्षयात् ॥२४१

किञ्च—

कलाद्वयं त्रयं वापि द्वादशीं न त्वतिक्रमेत् । अतिक्रान्ता द्वादशी तु हन्ति पुण्यं पुराकृतम् ॥२४२

भविष्ये—

यो द्वादशीमतिक्रम्य पारणं कुरुते नरः । द्वादशाब्दकृतं तस्य तत्क्षणादेव नश्यति ॥२४३॥

---

'नैवेद्यशेषं तुलसीविमिश्रम्' इत्यादिना सदा तुलसीयुक्तमेव भोजनं विहितमस्ति, तथापि पारणे विशेषतोऽवश्यमेवेति ज्ञेयम् ॥२३६॥ तदेव स्कन्दपुराणोक्त्याभिव्यञ्जयति— कृत्वेति ॥२३७॥

लङ्घिता पारणायामतिक्रान्ता । अस्नाता सरस्वती वेति—गङ्गाद्यास्त्वन्या नदीस्तीर्त्वा परे पारे स्नानं कार्य्यं, सरस्वत्यान्तु प्रथमं स्नात्वैव परं पारं गन्तव्यमिति विधेः स्नानमकृत्वोल्लङ्घिता सरस्वती यथा धर्म्महरणं करोति, तद्वदित्यर्थः ॥२३८॥

द्वादशद्वादशीक्षयादिति द्वादशद्वादशीषु कृतं पुण्यं क्षीयत इति-हेतोरित्यर्थः ॥२४१॥

---

उक्त विषय में स्कन्दपुराण में वर्णित है—उपवास करके द्वादशी में नैवेद्य भक्षण करने से कोटि पातक विनष्ट होते हैं ॥२३७॥

अथ पारणे द्वादश्यपेक्षणम्

कारण, पद्मपुराण में उक्त है—सरस्वती नदी में स्नान न करके पार होने से जिस प्रकार धर्महानि होती है। उस प्रकार, द्वादशी लङ्घन करने से भी मनुष्यों की महाहानि होती है ॥२३८॥

स्कन्दपुराण में लिखित है—पारण दिन उपस्थित होने पर जो व्यक्ति, द्वादशी को लङ्घनकर त्रयोदशी में भोजन करता है, उसको शतजन्म नारकी होना पड़ता है ॥२३९॥

उक्त स्कन्दपुराण के श्रीमार्कण्डेय-भगीरथ-संवाद में लिखा है—भागवत होकर द्वादशी लङ्घन करने पर स्वकृत सर्व पुण्यपुञ्ज को अनल में निक्षेप किया जाता है ॥२४०॥

कूर्मपुराण में उक्त है—एकादशी में उपवासी रहकर द्वादशी में पारण करे, त्रयोदशी में पारण करना उचित नहीं है। त्रयोदशी में पारण करने से द्वादश द्वादशी का पुण्य विनष्ट होता है ॥२४१॥

और भी उक्त है—कलाद्वय, अथवा कलात्रय भी द्वादशी लङ्घन करना उचित नहीं है, लङ्घन करने से द्वादशी पूर्वपुण्य नाशिनी होती है ॥२४२॥

भविष्यपुराण में लिखित है—जो मनुष्य, द्वादशी लङ्घन करके त्रयोदशी में पारण करता है, तदीय द्वादश वर्षार्जित पुण्य तत्क्षणात् ध्वंस होता है ॥२४३॥

देवीरहस्ये—

द्वादशीं समतिक्रम्य पारणं यः करोति हि । स्नानदानादिकं सर्व्वं निष्फलं तस्य जायते ।।२४४

अल्पा चेद्द्वादशी कुर्य्यान्नित्यकर्म्मारुणोदये । अत्यल्पा चेन्निशीथोर्द्धमामध्याह्निकमेव तत् ।।२४५

अथ द्वादश्यल्पत्वे कृत्यसमाधानम्

भविष्ये—

स्वल्पायामथ भूपाल द्वादश्यामरुणोदये । स्नानार्च्चनक्रियाः कार्य्या दानहोमादि-संयुताः ।।२४६

पाद्मे—

यदा भवति स्वल्पा हि द्वादशी पारणे दिने । ऊषःकाले द्वयं कुर्य्यात् प्रातर्माध्याह्निकं तथा ।।२४७

तथा नारदीये—

अल्पायामथ विप्रेन्द्र द्वादश्यामरुणोदये । स्नानार्च्चनक्रियाः कार्य्या दानहोमादि-संयुताः ।।२४८

देवलोक्तौ, अतएवोक्तं सारदापुराणे—

दिनकर्म्मदिने सर्व्वं कर्त्तव्यं यदि तद्दिने । नैव सिद्धिमवाप्नोति तदा रात्रौ विधीयते ।।२४९।।

इति ।

अथ सङ्कटे पारणसमाधानम्

स्कान्दे—

कलार्द्धां द्वादशीं दृष्ट्वा निशीथादूर्ध्वमेव हि ।
आमध्याह्नाः क्रियाः सर्व्वाः कर्त्तव्याः शम्भुशासनात् ।।२५०।।

---

अरुणोदये नित्यकर्म्म कुर्य्यात्, आमध्याह्निकं मध्याह्नकृत्यपर्य्यन्तं तन्नित्यकर्म्म निशीथादूर्द्ध्वमर्द्धरात्रोपर्य्येव कुर्य्यात् । आमध्याह्निकमित्येतत् पूर्व्वमपि द्रष्टव्यम् ।।२४५।।

अरुणोदये नित्यकर्म्माचरणे भविष्यपुराणादिवचनानि प्रमाणत्वेन लिखित्वा अत्यल्पायां निशीथादूर्द्ध्वमेव

---

देवीरहस्य में वर्णित है—जो व्यक्ति, द्वादशी अतिक्रमपूर्वक त्रयोदशी में पारण करता है, उसके स्नान-दानादि समस्त ही निष्फल होते हैं ।।२४४।।

पारणदिन में द्वादशी स्वल्प परिमाण होने पर अरुणोदय काल में नित्यक्रिया सम्पन्न करना पड़ता है। तदपेक्षा भी द्वादशी अत्यल्प होने पर निशीथ के परवर्त्ती समय में मध्याह्न पर्य्यन्त समस्त कर्म करणीय हैं । अर्थात् मध्याह्न पर्य्यन्त जो सब कार्य्य कर्त्तव्य है, वे रात्रिकाल के पीछे सम्पादन करने चाहिये ।।२४५

अथ द्वादश्यल्पत्वे कृत्यसमाधानम्

भविष्यपुराण में कथित है - हे राजन् ! द्वादशी स्वल्प परिमाण होने पर, अरुणोदय काल में स्नान, पूजा, दान, होमप्रभृति कार्य्य सम्पादन करने चाहिये ।।२४६।।

पद्मपुराण में उक्त है—पारणदिन में द्वादशी की न्यूनता होने पर ऊषःकाल में प्रातःकालीन उभयविध कार्य्य सम्पन्न करने चाहिये ।।२४७।।

उक्त विषय में नारदपुराण में उक्त है—हे विप्रश्रेष्ठ ! द्वादशी की न्यूनता होने पर अरुणोदय काल में स्नान, दान, होम, इत्यादि कर्म सम्पन्न करे ।।२४८।।

अतएव सारदापुराण में देवल का कथन है—यदि दिन में करणीय कार्य्यसमूह दिन में ही करने योग्य हैं, तो द्वादशी की न्यूनता हेतु उन सबका सम्पन्न होना असम्भव देखकर रात्रि में सम्पादन करे ।।२४९।।

अथ सङ्कटे पारणसमाधानम्

स्कन्दपुराण में उक्त है— अर्द्धकला परिमाण मात्र द्वादशी दृष्ट होने पर मध्याह्न काल पर्य्यन्त जो सब

अशक्त्या सङ्कटे प्राप्ते पारणं वारिणा चरेत् । तद्धि नैवासितं नैवानशितञ्च विदुर्बुधाः ॥२५१

अतएव तत्र—

कलाद्वयं त्रयं वापि द्वादशी यदि दृश्यते । स्नानार्च्चनादिकं कर्म्म तदा रात्रौ विधीयते ॥२५२

कालिका-सारदापुराणयोः—

स्वल्पैव द्वादशी यत्र स्नानदानादिकाः क्रियाः । रजन्यामेव कर्त्तव्या दानहोमादिसंयुताः ॥२५३

सङ्कटे विषमे प्राप्ते द्वादश्यां पारयेत् कथम् ?
अद्भिस्तु पारणं कुर्य्यात् पुनर्भुक्तं न दोषकृत् ॥२५४॥

कात्यायनोक्तौ च—

मन्त्रं जपित्वा हरये निवेद्योपोषणं व्रती । अद्भिस्तु पारणं कुर्य्यात् सङ्कटे विषमे सति ॥२५५

किञ्च—

सन्ध्यादिकं भवेन्नित्यं पारणन्तु निमित्ततः ।
अद्भिस्तु पारयित्वा तु कुर्य्यात् सन्ध्यादिकं पुनः ॥२५६॥ इति ।

द्वादशीपूर्व्वपादीयस्तत्र चेद्धरिवासरः । द्वादश्याधिक्यतस्तिष्ठेत् पारणं तत्र नाचरेत् ॥२५७

---

तत्करणे स्कन्दपुराणादिवचनानि प्रमाणयति— कलार्द्धमिति, आमध्याह्ना मध्याह्नावधि याः क्रियाः कृत्यानि ताः सर्व्वाः ॥२५०॥

तत् वारिणा पारणमशितं भुक्तमिति न विदुर्मुनय इति । पश्चाद्भोजनेऽपि द्विर्भोजनदोष-परिहारः । 'अनशितञ्च न विदुः' इत्यनेन द्वादशीलङ्घनदोषपरिहारः ॥२५१॥

द्वादश्याः पूर्व्वपादसम्बन्धी हरिवासरः । तत्र पारणदिने द्वादश्या आधिक्यतः बाहुल्यात् पञ्चचत्वारिंशद्-घटिकोपरि वृद्धिश्चेद्यदि तिष्ठेत्, तत्र हरिवासरे पारणं नाचरेत् ॥२५७॥

---

कर्म करणीय हैं, वे रात्रिकाल के पीछे सम्पादन करने चाहिये । यही अनुशासन महादेव का है ॥२५०॥

उक्त समय के मध्य में समस्त कार्य्य सम्पन्न करना असम्भव बोध होने पर कार्य्य सम्पादन के पहले केवल मात्र जाल के द्वारा पारण करना उचित है । बुधगण, इस प्रकार पारण को युक्त अथवा अयुक्त के मध्य में परिगणित नहीं करते हैं । अर्थात् द्वादशीपारण पक्ष मे अभोजन है । कारण, व्रतरक्षा हेतु किञ्चिन्-मात्र जलपान पूर्वक नित्यक्रिया सम्पन्न करने से दोष नहीं होता है ॥२५१॥

अतएव उक्तस्थल में उक्त है—दो कला अथवा तीन कला मात्र द्वादशी दृष्ट होने पर रात्रि में स्नान, पूजादि सम्पादन करे ॥२५२॥

कालिका पुराण एवं सारदा पुराण में लिखित है—स्वल्प द्वादशी दृष्ट होने पर, स्नान, दान, होमप्रभृति कार्य्य रात्रि में सम्पादन करने चाहिये । दारुण सङ्कट उपस्थित होने पर किस रीति से पारण करना उचित है ? इस प्रकार जिज्ञासा होने पर, वहाँ केवल जल द्वारा ही पारण करना पड़ता है, उस प्रकार पारण करने से पुनर्भुक्त दोष नहीं होता है ॥२५३-२५४॥

कात्यायन का कथन है—घोर सङ्कट उपस्थित होने पर मन्त्र जप करके श्रीहरि के उद्देश में उपवासि निवेदन पूर्वक जल द्वारा व्रती को पारण करना चाहिये ॥२५५॥

और भी कथित है—सन्ध्यादि नित्यकर्म, पारण नैमित्तिक कर्म, जल द्वारा पारण करके पुनर्वार सन्ध्यादि अनुष्ठान करे ॥२५६॥

द्वादशी के प्रथम पाद को हरिवासर कहते हैं । उसको लङ्घन करके पारण करना चाहिये, अर्थात् ४५ (पैंतालीस) दण्ड के ऊद्र्ध्व-ऊपर जितने दण्ड पल द्वादशी हो, आदि में अर्थात् सूर्य्योदय के पश्चात् उतने

अथ हरिवासरकाले पारणनिषेधः

विष्णुधर्म्मोत्तरे—

द्वादश्याः प्रथमः पादो हरिवासरसंज्ञकः । तमतिक्रम्य कुर्व्वीत पारणं विष्णुतत्परः ॥२५८॥

क्वचिच्च—

द्वादश्येकादशीयोगे विख्यातो हरिवासरः । एकादश्यान्त्यपादश्च द्वादश्याः पूर्व्व एव हि ।
हरिवासर इत्याहुर्भोजनं न समाचरेत् ॥२५९॥

अथान्येऽपि द्वादशीनियमाः

स्कान्दे—

क्षौद्रं मांसं सुरां तैलं व्यायामं क्रोधमैथुने ।
परान्नं कांस्य-ताम्बूले लोभं निर्म्माल्यलङ्घनम् ।
द्वादश्यां द्वादशैतानि वैष्णवः परिवर्ज्जयेत् ॥२६०॥

ब्रह्माण्डपुराणे—

कांस्यं मांसं सुरां क्षौद्रं लोभं वितथभाषणम् । व्यायामश्च प्रवासश्च दिवास्वप्नमथाञ्जनम् ॥२६१
शिलापिष्टं मसूरश्च द्वादशैतानि वैष्णवः । द्वादश्यां वर्ज्जयेन्नित्यं सर्व्वपापैः प्रमुच्यते ॥२६२

---

एवं द्वादश्यां पूजादिनियमं लिखित्वान्यानपि नियमान् लिखति—क्षौद्रमिति षड्भिः ॥२६०॥

---

ही दण्ड पल को छोड़कर पारण करना चाहिये । टीका—"द्वादश्याः पूर्वपाद सम्बन्धी हरिवासरः । तत्र-पारण दिने, द्वादश्या आधिक्यतः, बाहुल्यात् । पञ्चचत्वारिंशद् घटिकोपरि वृद्धिश्चेद्, यदि तिष्ठेत्, तत्र, हरिवासरे पारणं नाचरेत् ॥२५७॥

अथ हरिवासरकाले पारणनिषेधः

विष्णुधर्मोत्तर में वर्णित है—द्वादशी के प्रथम पाद को हरिवासर कहते हैं । विष्णुभक्त व्यक्ति, उसको लङ्घन करके ही पारण करें ॥२५८॥

ग्रन्थान्तर में भी वर्णित है—एकादशी योगहेतु द्वादशी को हरिवासर कहा गया है । विवेकि व्यक्तिगण कहते हैं—एकादशी का शेषपाद एवं द्वादशी का प्रथम पाद हरिवासर नाम से अभिहित है । इसमें भोजन करना निषिद्ध है ॥२५९॥

अथान्येऽपि द्वादशीनियमाः

स्कन्दपुराण में कथित है—वैष्णव, द्वादशी में (१) मधु, (२) मांस, (३) मद्य, (४) तैल, (५) व्यायाम (६) क्रोध, (७) मैथुन, (८) परान्न, (९) कांस्यपात्र, (१०) ताम्बूल, (११) लोभ, (१२) निर्म्माल्य लङ्घन, यह द्वादश वस्तु को परित्याग करे ॥२६०॥

ब्रह्माण्ड पुराण में लिखित है—यदि वैष्णव, द्वादशी में कांस्यपात्र, मांस, सुरा, मधु, लोभ, मिथ्या भाषण, व्यायाम, प्रवास, दिवानिद्रा, अञ्जन, शिलापिष्ट द्रव्य एवं मसूर,—इन द्वादश को परित्याग करे तो निखिल पापों से निष्कृति मिलती है ॥२६१-२६२॥

बृहस्पतिरपि—

**कांस्यं मांसं सुरां द्यूतं व्यायामं क्रोधमैथुनम् । हिंसामसत्यं लौल्यञ्च तैलं निर्म्माल्यलङ्घनम् ।**
**द्वादश्यां द्वादशैतानि वैष्णवः परिवर्ज्जयेत् ॥२६३॥**

क्वचिच्च—

**कांस्यं मांसं मसूरञ्च चणकं कोरदूषकम् । रत्यौषधपरान्नञ्च द्वादश्यामष्ट वर्ज्जयेत् ॥२६४॥**

अथोन्मीलन्याद्यष्टमहाद्वादशीनां विशेषतो निरूपणम्

ब्रह्मवैवर्त्ते श्रीसूतशौनक-संवादे—

**उन्मीलनी वञ्जुली च त्रिस्पृशा पक्षवर्द्धिनी । जया च विजया चैव जयन्ती पापनाशिनी ॥२६५**
**द्वादश्योऽष्टौ महापुण्याः सर्व्वपापहरा द्विज । तिथियोगेन जायन्ते चतस्रश्चापरास्तथा ।**
**नक्षत्रयोगाच्च बलात् पापं प्रशमयन्ति ताः ॥२६६॥**

तत्र उन्मीलनीनिरूपणम्

**एकादशी तु सम्पूर्णा वर्द्धते पुनरेव सा । द्वादशी च न वर्द्धेत कथितोन्मीलनीनि सा ॥२६७॥**

अथ वञ्जुलीनिरूपणम्

**द्वादश्येव विवर्द्धेत न चैवैकादशी यदा । वञ्जुली तु भृगुश्रेष्ठ कथिता पापनाशिनी ॥२६८॥**

---

असत्यम्—अनृतभाषणम् ॥२६३॥
उन्मीलनी तथा वञ्जुलीत्यत्र व्यञ्जुलीति क्वचित् पाठः ॥२६५॥
पुनः परदिन मित्यर्थः । वञ्जुल्या एव विशेषणं पापनाशिनीति ॥२६७-२६८॥

---

बृहस्पति की उक्ति है—कांस्यपात्र, मांस, मद्य, द्यूतक्रीड़ा, व्यायाम, क्रोध, मैथुन, हिंसा, मिथ्यावाक्य, लोभ, तैल, एवं निर्माल्य लङ्घन,–द्वादशी में यह बारह वस्तु परित्याग करना वैष्णव का कर्त्तव्य है ॥२६३॥

ग्रन्थान्तर में उक्त है—द्वादशी में कांस्यपात्र, मांस मसूर, चणक (चना), कोरदूषक (कोदों का अन्न) मैथुन, औषध एवं परान्न,–यह आठ त्याज्य हैं ॥२६४॥

अथोन्मीलन्याद्यष्टमहाद्वादशीनां विशेषतो निरूपणम्

ब्रह्मवैवर्त्त पुराण के श्रीसूत-शौनक-संवाद में लिखित है—हे द्विज ! (१) उन्मीलनी (२) वञ्जुली (३) त्रिस्पृशा (४) पक्षवर्द्धिनी (५) जया (६) विजया (७) जयन्ती (८) पापनाशिनी,–यह अष्ट 'महाद्वादशी' महा पुण्यस्वरूपा एवं पापहरा हैं । इनमें चार,-तिथि योग में और अवशिष्ट चार,–नक्षत्र योग में होती हैं। यह सब द्वादशी, पातकराशि विनाशिनी हैं ॥२६५-२६६॥

तत्र उन्मीलनीनिरूपणम्

एकादशी सम्पूर्णा होकर परदिन द्वादशी में वृद्धि प्राप्त होने पर अथच द्वादशी की वृद्धि न होने पर उसका नाम उन्मीलनी महाद्वादशी है ॥२६७॥

अथ वञ्जुलीनिरूपणम्

हे भृगुश्रेष्ठ ! एकादशी वृद्धि प्राप्त न होकर द्वादशी की वृद्धि होने से उसका नाम "व्यञ्जुली" महा-द्वादशी है । यह द्वादशी निखिल पातक हारिणी है ॥२६८॥

अथ त्रिस्पृशा-निरूपणम्

अरुणोदय आद्या स्याद्द्वादशी सकलं दिनम् । अन्ते त्रयोदशी प्रातस्त्रिस्पृशा सा हरेः प्रिया ।।२६९

अथ पक्षवर्द्धिनी

कुहूराके यदा वृद्धिं प्रयाते पक्षवर्द्धिनी । विहायैकादशीं तत्र द्वादशीं समुपोषयेत् ।।२७०।।
पुण्यश्रवणपुष्याद्यरोहिणीसंयुतास्तु ताः । उपोषिताः समफला द्वादश्योऽष्टौ पृथक् पृथक् ।।२७१
ब्रह्मघ्नमपि सा पूर्व्वा विशोधयति भार्गव । वञ्जुलीति द्वितीया सा हत्यायुतविनाशिनी ।।२७२
महापापानि चत्वारि शोधयेत् त्रिस्पृशा कृता । कुरुतेऽशेषकलुषविच्छेदं पक्षवर्द्धिनी ।।२७३।।
जया जयन्ती विजया प्रेतमोक्षं तथापरा । जयन्ती नरकच्छेदमपि दुष्कृतकारिणाम् ।
अष्टमी तु भृगुश्रेष्ठ यथार्था पापनाशिनी ।।२७४।।

किञ्च—

अथेति महता पुण्यप्रभारेण हरेर्दिनम् । शुक्लपक्षे भृगुश्रेष्ठ विशेषव्रतसंयुतम् ।।२७५।।
तदायतमपि त्यक्तं यदि पुण्यं वहिःश्रुतैः । तदेतदमृतं प्राप्तं कराद्विगलितं क्षणात् ।।२७६।।
एकादशीस्वरूपेण धर्म्मः साक्षाज्जनार्द्दनः । तच्छरीरसमं प्राहुर्वञ्जुल्युन्मीलनीव्रतम् ।।२७७।।

---

अरुणोदय सूर्य्योदये, आद्या एकादशी; पाठान्तरेऽपि सैव अरुणोदयं व्याप्य ।।२६९।।
पुष्याद्यं पुनर्वसुनक्षत्रं, समफला इति सर्व्वासां नित्यत्वात् ।।२७१।।
पूर्व्वा उन्मीलनी तथापरा जयन्ती चेत्यर्थः । पुनर्जयन्त्या विशेषं दर्शयति— जयन्तीति । पाठान्तरे जयादि-त्रयं प्रेतमोक्षं कुरुते । तथा परेत्यस्य परेणान्वयः । परा सर्व्वश्रेष्ठा यत इत्यर्थः । अष्टमी पापनाशिनी ।।२७२-७४
हरेर्दिनम् उन्मीलन्यादि, वहिःश्रुतैः अश्रुतशास्त्रैरित्यर्थः । अक्षरेति पाठे अक्षरो जनार्द्दन एव । तत्तस्मात्

---

अथ त्रिस्पृशा-निरूपणम्

सूर्य्योदय के समय एकादशी रहकर अहोरात्र द्वादशी रहने पर तत्पश्चात् प्रातःकाल में त्रयोदशी होने पर, उसका नाम "त्रिस्पृशा" महाद्वादशी है । यह द्वादशी श्रीहरि को विशेष सन्तोषकारिणी है ।।२६९।।

अथ पक्षवर्द्धिनी

अमावस्या अथवा पूर्णिमा वृद्धि प्राप्त होने पर अर्थात् षाट दण्ड होने पर प्रतिपद् में कुछ अंश निकलने पर उससे पूर्ववर्त्ती द्वादशी का नाम "पक्षवर्द्धिनी" महाद्वादशी होती है । 'वाण वृद्धि' अर्थात् तिथि की ५ दण्ड वृद्धि होती है, एवं 'रस क्षय' '६ दण्ड क्षय' तिथि का क्षय होता है । शुद्ध एकादशी को वर्जन कर इसी द्वादशी में उपवास करना चाहिये । पुष्या, श्रवणा, पुनर्वसु, रोहिणी,–इन सब नक्षत्रों से युक्त उक्त जया, विजया, जयन्ती, पापनाशिनी महाद्वादशी उपवास योग्या हैं । इन आठ प्रकार की द्वादशी नित्यता के कारण सब ही समान फल दायिनी हैं ।।२७०-२७१।।

हे भार्गव (शौनक) ! पूर्वा द्वादशी (उन्मीलनी) ब्रह्महत्या के पाप को विदूरित करती है । द्वितीया वञ्जुली द्वादशी, अयुत हत्याजनित पाप विनष्ट करती है । तृतीया त्रिस्पृशा, चतुर्विध महाप तक को शुद्ध करती है । चतुर्थी पक्षवर्द्धिनी, अशेष कलुषच्छेदिनी है । जया, जयन्ती, एवं विजया,–यह तीन द्वादशी प्रेतत्व मोचनकारिणी हैं, किन्तु जयन्ती, दुष्कर्मकारी की नरक गति भी खण्डन करती है । हे भृगुश्रेष्ठ ! अष्टमी, यथार्थ पाप नाशिनी है ।।२७२-२७४।।

और भी वर्णित है—हे भृगुश्रेष्ठ ! उन्मीलन्यादि अष्ट महाद्वादशी अतिशय पुण्यवर्धिनी हैं । विशेषतः शुक्लपक्ष में व्रतवान् होने पर अतीव पुण्य प्रदान करती हैं । जिनके कर्णकुहर में शास्त्रोक्ति प्रविष्ट नहीं हुई है

विहाय वञ्जुलीं पापाः कारयन्त्यवरां तिथिम् । हिंसितस्तैरसौ कृष्णाक्षर इत्यवधारय ॥२७८
ये कारयन्त्यविद्वांसः शास्त्रमुल्लङ्घ्य हैतुकाः । प्राणिनस्तत्कृतं पापं तेषां गच्छत्यसंशयम् ॥२७९
तेषां निरभिमानैस्तु भूत्वा शास्त्रानुगामिभिः । यथावदुपदेष्टव्यं न भाव्यं कलुषाशयैः ॥२८०॥

ब्राह्मे वसिष्ठमान्धातृसंवादे—

जया च विजया चैव जयन्ती पापनाशिनी ।
सर्व्वपापहरा ह्येताः कर्त्तव्याः फलकाङ्क्षिभिः ॥२८१॥

अथाष्टमहाद्वादशीनित्यत्वम्

ब्रह्मवैवर्त्ते—

द्वादश्योऽष्टौ समाख्याता याः पुराणविचक्षणैः । तासामेकापि च हता हन्ति पुण्यं पुराकृतम् ॥२८२

पाद्मे मार्कण्डेयपुराणे च श्रीभगवदुक्तौ—

न करिष्यन्ति ये लोके द्वादश्योऽष्टौ ममाज्ञया । तेषां यमपुरे वासो यावदाहूतसंप्लवम् ॥२८३॥

---

अङ्गुर इति वा पाठः । ततः पदाविर्भावस्थानं तुल्यमित्यर्थः । तेषां गच्छति तान् प्राप्नोति । भाष्यमिति पाठे मलिनाशयैर्भूत्वा न वक्तव्यमित्यर्थः ॥२७५-२८०॥

फलं तत्रोक्तं यत्तत्काङ्क्षिभिः ॥२८१॥

तासां मध्ये हता अतिक्रान्ता, पाठान्तरेऽपि स एवार्थः ॥२८२॥

या अष्टौ द्वादश्यस्ता, ये न करिष्यन्ति ॥२८३॥

---

वे यदि यह समागत पुण्य दिन को परित्याग करें, तो, मानो तत्क्षण, उनके हस्तगत अमृत स्खलित हुआ । धर्मस्वरूप साक्षात् श्रीहरि, एकादशी स्वरूप में विराजित हैं । वञ्जुली एवं उन्मीलनी व्रत तदीय शरीर तुल्य अभिहित हैं । अवश्य जानना होगा कि वञ्जुली त्यागकर अन्य तिथि में उपवास करने पर, वे सब पापी कृष्णाक्षर अर्थात् कृष्णरूपी जनार्दन को निहत करते हैं । जो सब तर्कनिष्ठ पण्डित, शास्त्र उल्लङ्घन पूर्वक जीववृन्द को वञ्जुली त्याग कराकर अन्य तिथि में उपवासार्थ प्रवर्त्तित करते हैं, व्यवस्थादाता वे सब पण्डितवर्ग इन सब मानवों के किये हुये पापों से लिप्त होते हैं । अतएव बुद्धिमान् पुरुषों को निरभिमान होकर शास्त्रानुसार यथार्थ उपदेश देना उचित है, उससे पापों से लिप्त नहीं होना पड़ेगा । मलिनान्तःकरण से धर्मोपदेश प्रदान करना कभी भी उचित नहीं है ॥२७५-२८०॥

ब्रह्मपुराण के वशिष्ठ-मान्धात-संवाद में लिखित है— जया, विजया, जयन्ती एवं पापनाशिनी, यह कई द्वादशी, सब पापों को विदूरित करती हैं । सुतरां उक्त फल की आकाङ्क्षा करने वाले पुरुष को इन सब दिनों में व्रत करना चाहिये ॥२८१॥

अथाष्टमहाद्वादशीनित्यत्वम्

ब्रह्मवैवर्त्त में लिखित है—पुराण शास्त्रवित् सुधीवृन्द कर्त्तृक जो अष्टमहाद्वादशी वर्णित हैं, उनमें एक को परित्याग करने पर भी, द्वादशी वर्ज्जनकारी का पूर्व सञ्चित पुण्य विनष्ट होता है ॥२८२॥

पद्मपुराण एवं मार्कण्डेय पुराण की भगवदुक्ति में प्रकाशित है—जो मानव, इस जगत् में आकर अष्ट महाद्वादशी व्रत का अनुष्ठान नहीं करता है, मेरी आज्ञा से महाप्रलय पर्य्यन्त उसको यमपुरी में वास करना पड़ता है ॥२८३॥

स्कान्दे च ब्रह्मनारदसंवादे जागरणप्रसङ्गे—

उन्मीलनी परित्यक्ता वञ्जुली पक्षवर्द्धिनी । नरके वसते तावद्यावदिन्द्राश्चतुर्दश ॥२८४॥
त्रिस्पृशा विष्णुदयिता ये न कुर्व्वन्ति भूतले । तावद्यमपुरे वासो यावन्नद्यः ससागराः ॥२८५॥
इति ।

अथ ऋक्षप्रयुक्तानां व्रतकर्त्तव्यता

जयादीनां चतसृणां तथा व्यक्तं निरूप्यते । भान्यर्कोदयमारभ्य प्रवृत्तान्यधिकानि चेत् ।
समा न्यूनानि वा सन्तु ततोऽमीषां व्रतौचिती ॥२८६॥
किंवा सूर्य्योदयात् पूर्व्वं प्रवृत्तान्यधिकानि चेत् । समानि वा तदाप्येषा व्रताचरणयोग्यता ॥२८७
श्रवणाव्यतिरिक्तेषु नक्षत्रेषु खलु त्रिषु । सूर्य्यास्तमनपर्य्यन्तं कार्य्यं द्वादश्यपेक्षणम् ।२८८॥
श्रवणे त्वस्तमनतः प्राग्द्वादश्यां समाप्तताम् । गतायामपि तत्रैव व्रतस्योचितता भवेत् ॥२८९॥

अथ पारणकालनिर्णयः

वृद्धौ भतिथ्योरधिका तिथिश्चेत् पारणन्ततः ।
अन्ते स्याच्चेत्तिथिर्न्यूना तिथिमध्ये तु पारणम् ॥२९०॥
द्वादश्यननुवृत्तौ तु वृद्धौ ब्रह्माच्युतर्क्षयोः । तन्मध्ये पारणं वृद्धौ शेषयोस्तदतिक्रमे ॥२९१॥
श्रीद्वादशीचतुष्कस्य महतोऽसौ विनिर्णयः । नृसिंहपरिचर्य्यादि-ग्रन्थदृष्ट्या निरूपितः ॥२९२॥

---

स्कान्दोक्तोन्मीलन्यादीनां साहचर्य्यात् जयादीनामपि चतसृणां नित्यत्वं सिद्धमेव । किंवा तास्वष्टसु मध्ये उन्मीलन्यादीनामेव चतसृणां प्राधान्याभिप्रायेण तत्र तासामेव नित्यत्व युक्तमिति दिक् ॥२८४-२८५॥

---

स्कन्दपुराणस्थ ब्रह्म-नारद-संवाद के जागरण प्रसङ्ग में लिखित है—उन्मीलनी, वञ्जुली, एवं पक्षवर्द्धिनी द्वादशी परित्याग करने पर चतुर्दश इन्द्रपात यावत नरक में निवास होता है । विष्णुवल्लभा त्रिस्पृशा द्वादशी व्रत न करने पर जब तक पृथिवी पर नदी और समुद्र विद्यमान रहते हैं, तब तक यमपुर में वास करना पड़ता है ॥२८४-२८५॥

अथ ऋक्षप्रयुक्तानां व्रतकर्त्तव्यता

जया, बिजया, जयन्ती एवं पापनाशिनी,–इन चार द्वादशी व्रत का निरूपण करते हैं–शुक्ला द्वादशी में पुनर्वसु, श्रवणा, रोहिणी एवं पुष्या,–यह चार नक्षत्र सूर्य्योदय से आरम्भ कर तिथिमान से अधिक, सम, अथवा न्यून (कम) होने पर उक्त नक्षत्र चतुष्टय युक्ता द्वादशी में व्रत करना चाहिये । अथवा यदि सूर्य्योदय के पहले अरुणोदय में अथवा उसके पहले उक्त नक्षत्र चतुष्टय की प्रवृत्ति होती है, एवं तिथिमान से अधिक हो अथवा उसके समान हो तो, उक्त दिन में व्रत करना चाहिये । किन्तु तिथिमान से नक्षत्रमान कम होने से उस दिन व्रत न करे । श्रवणा नक्षत्र भिन्न, पुनर्वसु, रोहिणी एवं पुष्या,–इन तीन नक्षत्र के योग में व्रत करना हो तो,–सूर्य्य के अस्त गमन तक द्वादशी तिथि की अपेक्षा करनी चाहिये । सूर्य्य अस्त गमन के पहले द्वादशी का अवसान होने पर पूर्व कथित प्रमाणानुसार नक्षत्रयोग में द्वादशीव्रत नहीं हो सकता है । किन्तु पूर्वोक्त लक्षणानुसार श्रवणा नक्षत्र के सहित द्वादशी का योग होने पर एवं द्वादशी का अवसान सूर्य्यास्त के पहले होने पर भी उस द्वादशी में ही व्रत करना चाहिये ॥२८६-२८९॥

अथ पारणकालनिर्णयः

जयादि महाद्वादशी के पारण का समय निर्णय करते हैं—उपवास के दिन नक्षत्र एवं तिथि वृद्धि प्राप्त

अथोन्मीलन्यादीनां विशेषतो माहात्म्यं तासु पूजाविधिविशेषश्च,
अथ तत्रादौ उन्मीलनीव्रतम्

पाद्मे श्रीसूत उवाच—

राज्यं प्रकुर्व्वतः पूर्व्वमम्बरीषस्य वेश्मनि । गौतमस्तपसा श्रेष्ठः समायातो महामुनिः ॥२८३

दृष्ट्वा तमागतं राजा समुत्तस्थौ निजासनात् ।
दत्त्वार्घ्यं परया भक्त्या प्रोवाचासनसंस्थितम् ॥२८४॥

श्रीअम्बरीष उवाच—

स्वागतं मुनिशार्द्दूल प्रसादं कर्त्तुमर्हसि । धन्यानामपि धन्योऽहं यत्त्वं मद्गृहमागतः ॥२८५॥

तपसः कुशलं तेऽद्य भक्तिः श्रीकेशवोपरि । निश्चला मुनिशार्द्दूल हृदयान्नापसर्पति ॥२८६॥

श्रीगौतम उवाच—

तपसः कुशलं राजन् भक्तिः कृष्णे सुनिश्चला । कुशलं तव राजेन्द्र ब्राह्मणान् पासि सर्व्वदा ॥२८७

भक्तिं भागवतीं नित्यं किं करोषि नराधिप ।
शालग्राममयं विम्वं किं त्वं पश्यसि प्रत्यहम् ? ॥२८८॥
किं त्वं वन्दयसे नित्यं शालग्रामशिलाजलम् ।
गृहीत्वा स्नानतोयन्तु किं त्वं पिवसि प्रत्यहम् ? ॥२८९॥

---

ते तव अद्य इदानीं, तपसः कुशलं किमिति प्रश्नः । तथा भक्तिश्चेति च ॥२८६॥

भक्तिमेव प्रपञ्चयति शालेग्रामेत्यादिना प्रयत्नत इत्यन्तेन । विम्वं श्रीमूर्त्तिम्, किमित्यग्रे सर्व्वत्रैवानुवर्त्तनीयं, प्रश्नप्रकरणबलात् ॥२८८-२८९॥

---

होकर पारण के दिन किञ्चित् होने पर, तिथि के आधिक्य स्थान में नक्षत्र के शेष में पारण करना चाहिये, एवं नक्षत्र का आधिक्य होने पर तिथि में पारण करना चाहिये । पारण के दिन द्वादशी न होने पर एवं रोहिणी श्रवणा की वृद्धि होने से नक्षत्र के मध्य में पारण करे । पुनर्वसु एवं पुष्या नक्षत्र की वृद्धि होने से पुनर्वसु एवं पुष्यानक्षत्र के अवसान में पारण करना चाहिये । नृसिंह परिचर्य्यादि ग्रन्थ को देखकर जयादि महाद्वादशी चतुष्टय का निरूपण किया गया है ॥२८०-२८२॥

अथोन्मीलन्यादीनां विशेषतो माहात्म्यं तासु पूजाविधिविशेषश्च, अथ तत्रादौ उन्मीलनीव्रतम्

पद्मपुराण में श्रीसूत ने कहा है—पूर्वकाल में राजा अम्बरीष राज्य पालन कर रहे थे । उस समय एक दिन तापसश्रेष्ठ मुनिवर गौतम का आगमन राजभवन में हुआ । नृपति, मुनिवर को निज भवन में उपस्थित देखकर स्वीय आसन से गात्रोत्थान पूर्वक भक्तिपूर्वक अर्घ्य प्रदान कर पास में समासीन उन मुनिवर को कहे थे,–हे मुनिवर ! आप सुख से तो आये हैं ? मुझ पर अनुग्रह करें । हे भगवन् ! मेरे घर में आपका शुभागमन होने पर मैं धन्य मनुष्यों से भी अधिक धन्य हुआ हूँ । हे मुनिश्रेष्ठ ! आपकी तपस्या, कुशल से तो होती है ? श्रीहरि की अचलाभक्ति आपके हृदय से निर्वासित तो नहीं हुई है ? २८३-२८६॥

प्रत्युत्तर में गौतम ने कहा—हे राजन् ! मेरी तपस्या में कुशल है, अचलाहरिभक्ति भी हृदय में विराजित है । हे नृपवर ! आप निरन्तर ब्राह्मणों का पालन करने वाले हैं । आप कुशल से तो हैं ? २८७॥

हे राजन् ! श्रीभगवान् के प्रति आपकी भक्ति सतत विद्यमान तो है ? प्रत्यह विश्व को शालग्राममय जानते तो होंगे ? नित्य शालग्राम शिलोदक की वन्दना तो करते होंगे ? वैष्णववृन्द को चरणामृत अर्पण

दत्त्वा वै वैष्णवानान्तु प्रोक्षणं कुरुषे गृहे । तद्विलेपनशेषेण अङ्गानि परिमार्ज्जसि ? ।।३००।।
शालग्रामशिलामालां दत्त्वा मूर्द्धनि प्रत्यहम् । किं धारयसि भूपाल कण्ठे नित्यं सुभक्तितः ? ३०१

धूपशेषन्तु कृष्णस्य भक्त्या भजसि भूमिप ।
कृत्वा चारात्रिकं विष्णोर्भक्त्या वन्दयसे नृप ? ।।३०२।।
शङ्खोदकं हरेर्मूर्द्धिन भ्रामयित्वा सुभक्तितः ।
विभर्षि शिरसा नित्यं शेषं यच्छसि वैष्णवान् ? ।।३०३।।

नैवेद्यं देवदेवस्य सर्व्वोपस्करसंयुतम् । विष्वक्सेनाय दत्त्वा त्वं भुङ्क्षे वैष्णवैः सह ? ।।३०४।।
नित्यं नामसहस्रेन भक्त्या स्तौषि जनार्द्दनम् । दीपार्घ्यदानं देवस्य कुरुषे गीतनर्त्तनम् ?।३०५।।
दूर्व्वाङ्कुरैः पूजयित्वा पूजान्ते मधुसूदनम् । अक्षतैर्नृपशार्द्दूल किमर्च्चयसि केशवम् ?।३०६।।
पक्षे पक्षे नृपश्रेष्ठ विधिवद्द्वादशीव्रतम् । दशमीवेधरहितं कुरुषे जागरान्वितम् ?।।३०७।।
तुलसीपत्रनिकरैर्नित्यं पूजयसे हरिम् । पुण्ड्रं विभर्षि देहे त्वं गोपीचन्दनसम्भवम् ? ।।३०८।।
विभर्षि कण्ठे त्वं नित्यं धात्रीफलसमुद्भवाम् । मालां मखायुतसमां तुलसीपत्रसम्भवाम् ?३०९।।

---

दत्त्वा वैष्णवेभ्य इति शेषः ।।३००।।
वैष्णवानिति पाठे तान् प्रति शेषं निर्म्माल्यं किं यच्छसि ? ।।३०३।।
उपस्करा व्यञ्जनादीनि ।।३०४।।
तुलसीपत्रसम्भवाञ्च मालाम् ।।३०९।।

---

पूर्वक गृह में प्रोक्षण करते होंगे ? श्रीप्रभु के अङ्गलेपनावशेष द्वारा अपने अङ्गसमूह को मार्जन करते हैं ? ।।२९८-३००।।

हे भूमिप ! प्रत्यह भक्तिपूर्वक शालग्राम शिला की माला शिरोभाग में अर्पण कर प्रतिदिन कण्ठ में धारण तो करते हैं ? हे राजन् ! श्रीहरि के धूपावशेष की सुगन्धि को लेते हैं ? हे नृप ! भक्तिपूर्वक श्रीहरि की आरात्रिक करके भक्ति सहित उसकी वन्दना तो करते हैं ? भगवान् के शिरोभाग में जलपूर्ण शङ्ख भ्रामितकर (घुमाकर) सुन्दर भक्ति सहित आप प्रत्यह शिरोभाग में धारण तो करते हैं ? और उसका अवशेष जल वैष्णवों को अर्पण तो करते हैं ? ३०१-३०३।।

हे राजन् ! भगवान् के सर्वोपकरण संयुक्त नैवेद्य विष्वक्सेन को अर्पण करके वैष्णववृन्द के सहित भोजन तो करते हैं ? प्रत्यह भक्तिपूर्वक सहस्रनाम स्तव के द्वारा श्रीहरि की स्तुति तो करते हो ? दीप एवं अर्घ्य अर्पण करके श्रीप्रभु का गुण कीर्त्तन एवं नृत्य तो करते हैं ? हे नृपवर ! दूर्वाङ्कुर योग से केशव मधुसूदन की पूजा करके आतप तण्डुल (अक्षत) द्वारा अर्चना तो करते हो ? ३०४-३०६।।

हे नृपश्रेष्ठ ! प्रति पक्ष में द्वादशी वेधवर्जित जागरण युक्त द्वादश व्रत को सम्पादन तो करते हो ? हे राजन् ! प्रत्यह तुलसीपत्र द्वारा हरि की पूजा तो करते ? शरीर में गोपीचन्दन का उद्‌र्ध्वपुण्ड्र तिलक धारण तो करते हो ?३०७-३०८।।

हे राजन् ! नित्य आमलकी फल ग्रथित माल्य धारण कण्ठ में तो करते हैं ? अयुत यज्ञ तुल्य तुलसीपत्र जात माला धारण तो कण्ठ में करते रहते ? ३०९।।

शालग्रामशिलायुक्तं द्वारकायाः समुद्भवम् । नित्यं पूजयसे भूप भुक्तिमुक्तिफलप्रदम् ? ॥३१०॥
पुराणं त्वं भागवतं पठसे पुरतो हरेः । चरितं दैत्यराजस्य प्रह्लादस्य च भूपते ? ॥३११॥
वासरं वासुदेवस्य सवेधं कुर्व्वतो नरान् । निवारयसि भूपाल शास्त्रदृष्ट्या प्रयत्नतः ?३१२॥
सवेधं वासरं विष्णोर्यस्मिन् राष्ट्रे प्रवर्त्तते । लिप्यते तेन पापेन राजा भवति नारकी ॥३१३
वेधं चतुर्विधं त्यक्त्वा समुपोष्य हरेर्दिनम् । कुलकोटिं समुद्धृत्य नरकाद्व्रजते दिवम् ॥३१४॥

अम्बरीष उवाच—

त्वया यदुक्तं विप्रेन्द्र तत् सर्व्वं प्रकरोम्यहम् । पश्याम्यहं विष्णुमयं जगदेतच्चराचरम् ॥३१५॥
विष्णुरूपी त्वमायातो मद्गृहं मुनिसत्तम । व्रतं कथय मे विप्र वैष्णवं सर्व्वकामदम् ॥३१६॥
यत् कृत्वा न पुनः कृत्यं भवते ऋषिसत्तम । पुनर्गतिर्यथा विप्र विष्णुलोकाद्भवेन्न हि ॥३१७

श्रीगौतम उवाच —

शृणु भूपाल वक्ष्यामि व्रतं यद्वैष्णवं महत् । द्वादशीसम्भवं पुण्यं मयाख्यातं न कस्यचित् ॥३१८

वैष्णवोऽसि महाराज भक्त्या भागवतां नृणाम् ।
वैष्णवं यन्महागुह्यं तद्व्रतं त्वं निशामय ॥३१९॥

उन्मीलनी नाम पुरा मम भक्त्या तु विष्णुना । कथिता सुप्रसन्नेन तान्ते भूप वदाम्यहम् ॥३२०

---

द्वारकायाः समुद्भवं द्वारकासम्बन्धि चक्राङ्कम् ॥३१०॥
भागवतानामिति वक्तव्ये भागवतामित्यार्षम् ॥३१९॥

---

हे भूप ! आप प्रत्यह भुक्ति मुक्ति फलप्रद, द्वारका सम्बन्धि चक्राङ्कयुक्त शालग्राम रूपी प्रभु की पूजा तो करते हैं ? हे राजन् ! प्रत्यह श्रीहरि के सम्मुख में श्रीभागवत महापुराण का पाठ आप करते हैं ? दैत्यपति प्रह्लाद के चरित्र का पाठ आप करते हैं ?३१०-३११॥

हे महीपाल ! जो मनुष्य दशमी विद्धा एकादशी में व्रत करने को समुद्यत होते हैं, शास्त्रदृष्टि के द्वारा आप उन सबको निषेध तो करते हैं ? जिस राज्य में दशमीविद्धा एकादशी व्रत प्रचलित है, उस राज्य का राजा भी उस पातक से लिप्त होकर निरयगामी हो जाता है। जो चतुर्विध दशमीवेध परित्याग पूर्वक हरिवासर में व्रत करते हैं, वे अपने कोटिकुल को नरक से निकालकर सुरधाम में प्रस्थान करते हैं ॥३१२-३१४॥

श्रीअम्बरीष ने कहा—हे विप्रवर ! आपने जो कुछ प्रश्न किया, वह मैं सब सम्पादन करता हूं। हे मुनिश्रेष्ठ ! विष्णुरूपी आप मदीय भवन में आगमन किये हैं। हे विप्र ! जिस वैष्णवव्रत का अनुष्ठान करने से पुनर्वार काम्यकर्म में प्रवृत्त नहीं होना पड़ता है, जिसकी प्रसन्नता से हरिलोक से पुनरागमन करना नहीं पड़ता है. इस प्रकार निखिल कामद वैष्णवव्रत का कीर्त्तन मेरे निकट वर्णन कीजिये ॥३१५-३१७॥

श्रीगौतम ने कहा—हे महीपाल ! जो महत् द्वादशी सम्भूत पुण्य वैष्णवव्रत का विषय अभी तक किसी के निकट मैंने व्यक्त नहीं किया है, उसका वर्णन कर रहा हूँ, आप अवहित होकर श्रवण करें ॥३१८॥

हे महाराज ! आप विष्णुभक्त हैं, आपके निकट भागवतवृन्द के वैष्णव व्रतों का वर्णन कर रहा हूँ, भक्तिपूर्वक अवधान करें। हे राजन् ! प्राचीन काल में देवदेव विष्णु मद्भक्ति से सुप्रीत होकर मुझको उन्मीलनी व्रत का उपदेश किये थे। मैं भवत्सकाशे उसको कहता हूँ ॥३१९-३२०॥

सम्पूर्णैकादशी प्रातर्द्वितीयेऽह्नि प्रवर्द्धते। उन्मीलनीति सा प्रोक्ता पापपङ्कौघनाशिनी ॥३२१

त्रैलोक्ये यानि तीर्थानि पुण्यान्यायतनानि च।
कोट्यंशेनैव तुल्यानि मखा वेदास्तपांसि च ॥३२२॥

उन्मीलनीसमं किञ्चिन्न दृष्टं न श्रुतं मया। प्रयागो न कुरुक्षेत्रं न काशी न च पुष्करम् ॥३२३
न रेवा ब्रह्मतनया कालिन्दी मथुरा न हि। पिण्डारकं प्रभासञ्च न क्षेत्रं हाटकेश्वरम् ॥३२४
शैलो हिमाचलो नैव न मेरुर्गन्धमादनः। शैलो नैवेह मलयो न विन्ध्यो नैव नैषधः ॥३२५॥
गोदावरी च कावेरी चन्द्रभागा न देविका। न तापी न पयोष्णी च न शिप्रा नैव चन्दना ॥३२६
चर्म्मण्वती च सरयूश्चन्द्रभागा न गण्डकी। गोमती च विपाशा च शोणश्चैव महानदः ॥३२७
किमत्र बहुनोक्तेन भूयो भूयो नराधिप। नोन्मीलनीसमं किञ्चिन्न देवः केशवात् परः ॥३२८॥
उन्मीलनीमनुप्राप्य यैः कृतं केशवार्च्चनम्। पापचक्रसमूहस्य दत्तस्तेन दवानलः ॥३२९॥

यस्मिन् मासे महीपाल तिथिरुन्मीलनी भवेत्।
तन्मासनाम्ना गोविन्दः पूजनीयो यथाविधि ॥३३०॥
जातरूपमयः कार्य्यो मासनाम्नाम्ना तु माधवः।
स्वशक्त्या विश्वरूपश्च श्रद्धाभक्तिसमन्वितैः ॥३३१॥

---

कोटीनामंशानामेकेनैवांशेन तीर्थादीनि तुल्यानीत्यर्थः। यद्वा, कोट्यंशे विषयेऽपि नैव तुल्यानि ॥३२२॥

तदेव प्रपञ्चयति—उन्मीलनीति षड्भिः। प्रयागमित्यादीनां नपुंसकत्वमार्षम्, एवं सर्व्वत्रैवोह्यम्। ब्रह्मतनया—सरस्वती ॥३२३-३२४॥

एवं माहात्म्यमुक्त्वा तत्र पूजाविधिविशेषमाह—यस्मिन्नित्यादिना कथानकैरित्यन्तेन। तन्मासनाम्नेति—मार्गादिद्वादशमासेषु क्रमेण केशवाद्या दामोदरान्ताः केशवादिन्यासादौ लिखिता द्वादश देवताः। अतस्तन्मासदेवतानाम्नेत्यर्थः। अतश्च तत्तदायुधादिकमपि तथैव कर्त्तव्यमित्यूह्यम्, एवमग्रेऽपि ॥३३०॥

स्वशक्त्या निजशक्त्यनुसारेण, विश्वरूपं समग्रसौन्दर्य्यं यथा स्यात्। यद्वा, तदीयाखिलायुधाद्युपाङ्ग-न्वेत्यर्थः। कुम्भं स्थापयेदिति शेषः, स्नापयित्वा पञ्चामृतादिना, घटोपरि स्थापनीय इति घटोपरि यत्नाक्र-

---

एकादशी सम्पूर्णा होकर द्वादशी के प्रभातकाल पर्य्यन्त वृद्धि प्राप्त होने पर ही उसका नाम उन्मीलनी है। यह 'उन्मीलनी' सर्वपापराशि नाशनी है ॥३२१॥

त्रिभुवन के समस्त तीर्थ, पवित्र आश्रमसमूह, सब यज्ञ, और समस्त तपस्या भी उन्मीलनी व्रत के कोटि अंश में एक अंश के समान भी नहीं है। उन्मीलनी के तुल्य अपर कुछ न तो देखा ही है, और न सुना ही है। प्रयाग, कुरुक्षेत्र, वाराणसी, पुष्कर, रेवा, सरस्वती, यमुना, मथुरा, पिण्डारक, प्रभास, हाटकेश्वर क्षेत्र, हिमगिरि, सुमेरु, गन्धमादन, मलय, विन्ध्य, नैषधशैल, गोदावरी, कावेरी, चन्द्रभागा, देविका, तापी, पयोष्णी, शिप्रा, चन्दना, चर्मन्वती, सरयु, चन्द्रभागा, गण्डकी, गोमती, विपाशा, महानद शोण,- यह सब भी उन्मीलनी के समान नहीं हैं। हे नृप! पुनः अधिक कहने का प्रयोजन ही क्या है? उन्मीलनी सदृश अपर कुछ भी दृष्ट नहीं होते हैं। एवं केशव सदृश देवता भी नहीं हैं। जो लोक, उन्मीलनी तिथि प्राप्तकर श्रीकेशव की पूजा करते हैं, उनके अखिल पातक चक्रसमूह दावाग्नि में निक्षिप्त हो गये हैं ॥३२२-३२९॥

हे नरपति! किसी मास में उन्मीलनी तिथि का आगमन होने पर, उस मास में प्रभु का जो नाम निर्दिष्ट है, उसी नाम को उच्चारण कर यथा विधि श्रीगोविन्द की पूजा करे। जिस मास में श्रीहरि का जो

पवित्रोदकसंयुक्तं पञ्चरत्न-समन्वितम् । गन्धपुष्पाक्षतैर्युक्तं कुम्भं स्रग्दामभूषितम् ॥३३२॥

पात्रमौडुम्बरं कार्य्यं गोधूमश्चापि पूरितम् । तण्डुलैर्वा महीपाल स्थापनीयं घटोपरि ॥३३३॥

स्नापयित्वा तु गोविन्दं कुङ्कुमागुरुचन्दनैः । कृत्वा विलेपनं विष्णुः स्थापनीयो घटोपरि ॥३३४

प्रदद्याद्वस्त्रयुग्मन्तु सोपवीतञ्च सोत्तरम् । उपानहौ च राजर्षे आतपत्रं शिरोपरि ॥३३५॥

भाजनं जलपात्रञ्च सप्तधान्यं तिलैः सह । रूप्यञ्चैव च कार्पासं पायसं मुद्रिकां हरेः ॥३३६॥

धेनुं वा निष्क्रयं वापि दद्यान्माधवतुष्टये । शय्यां सोपस्करां दत्वा माधवाय तु भक्तितः ॥३३७

धूपदीपन्तु नैवेद्यं फलं पत्रं निवेदयेत् । पूजनीयो महाभक्त्या मन्त्रैरेभिस्तु वैष्णवैः ।

तुलसीपत्रसंयुक्तैः पुष्पैः कालोद्भवैर्हरिः ॥३३८॥

मासनाम्ना तु पादौ हि जानुनी विश्वरूपिणे । गुह्यन्तु कामपतये कटिञ्च पीतवाससे ॥३३९॥

ब्रह्ममूर्त्तिभृते नाभिमुदरं विश्वयोनये । हृदयं ज्ञानगम्याय कण्ठं वैकुण्ठमूर्त्तये ॥३४०॥

उरुगाय ललाटन्तु बाहू क्षत्रान्तकारिणे । उत्तमाङ्गं सुरेशाय सर्व्वाङ्गं सर्व्वमूर्त्तये ॥३४१॥

---

पात्रं, तदुपरीत्यर्थः । तत्रापि घटोपरि तस्याव्यभिचारात् । स्थापनञ्च —'एह्येहि त्वं जगन्नाथ वैकुण्ठ पुरुषोत्तम। परिवारगणोपेत लक्ष्म्या सह जगत्पते ॥' इत्यावाहनेन, तथा मनोज्योतिरिति प्रतिष्ठादिना च ज्ञेयम् । गन्धपुष्पादिसमर्पणञ्च तन्नाममन्त्रेणैव ॥३३१-३३४॥

सोत्तरम् उत्तरीयसहितम् ॥३३५॥

अवयवपूजामाह —मासेति त्रिभिः । मासनाम्ना स्वनाम्नेत्यर्थः, अत्र सर्व्वत्रैव नमः-शब्दः प्रयोज्यः । अतएव मन्त्राः, पादौ पूजयेदिति शेषः । एवमग्रेऽपि सर्व्वत्र ॥३३९॥

---

नाम निर्दिष्ट है, उसी नाम से श्रीहरि की स्वर्णमयी मूर्त्ति बनानी चाहिये । अपनी सामर्थ्य के अनुसार श्रद्धा भक्तिमान् होकर विशुद्ध सलिल समन्वित मनोहर कुम्भ, पञ्चरत्न एवं गन्ध पुष्प अक्षत युक्त करके स्थापन करे, एवं माल्य के द्वारा उक्त कुम्भ को भूषित करे । हे महीपाल ! ताम्रपात्र प्रस्तुत पूर्वक उसको गोधूम अथवा तण्डुल द्वारा पूरित कर उसको कलस के ऊपर स्थापन करे । अनन्तर गोविन्द को स्नान कराकर कुङ्कुम, अगुरु, और चन्दन के द्वारा स्वर्णमय श्रीमूर्त्ति को विलेपन कर उस ताम्रपात्र के ऊपर स्थापन करना चाहिये ॥३३०-३३४॥

हे राजर्षे ! उपवीत एवं उत्तरीय के सहित वसनद्वय, पादुकाद्वय एवं शिरोपरि छत्र अर्पण करे । श्रीहरि के सन्तोष हेतु जलपात्र, तिलक सहित सप्तधान्य, रुप्य, कार्पास, पायस, मुद्रिका अर्थात् पिष्टकादि एवं धेनु का धेनुमूल्य अर्पण करना चाहिये । भक्ति पूर्वक माधव को आच्छादन विशिष्ट शय्या अर्पण करके धूप, दीप, नैवेद्य, फल एवं पत्र अर्पण करे । वैष्णववृन्द, वक्ष्यमाण मन्त्र समूह का उच्चारण कर तुलसी पत्र एवं यथा कालोत्पन्न कुसुम के द्वारा श्रीहरि की पूजा करे । जिस मास में श्रीहरि के जो नाम निर्दिष्ट है, उसी नाम को उच्चारण करके युगल युगल 'विश्वरूप' नाम से जानुद्वय, 'कामपति' नाम से गुह्यस्थल, 'पीतवासा' नाम से कटिभाग 'ब्रह्ममूर्त्तिभृत्' नाम से नाभि, 'विश्वयोनि' नाम से उदर, 'ज्ञानगम्य' नाम से हृदय, 'वैकुण्ठमूर्त्ति' नाम से बाहुद्वय, 'सुरेश' नाम से मस्तक एवं 'सर्वमूर्त्ति' नाम से सर्वाङ्ग की पूजा करे ॥३३५-३४१॥

स्वनाम्ना चायुधादीनि पूजनीयानि भक्तितः । अर्घ्यदानं प्रकर्त्तव्यं नारिकेलादिभिः फलैः ॥३४२

शङ्खोपरि फलं कृत्वा गन्धपुष्पफलान्वितम् । सूत्रेण वेष्टनं कृत्वा दद्यादर्घ्यं विधानतः ॥३४३॥

देवदेव महादेव महापुरुष पूर्व्वज । सुब्रह्मण्य नमस्तेऽस्तु पुण्यकीर्त्तिविवर्द्धन ॥३४४॥

शोकमोहमहापापान्मामुद्धर भवार्णवात् । सुकृतं न कृतं किञ्चिज्जन्मान्तरशतैरपि ।
तथापि मां जगन्नाथ समुद्धर भवार्णवात् ॥३४५॥

व्रतेनानेन देवेश ये चान्ये मम पूर्व्वजाः । वियोनिश्च गताश्चान्ये पापान्मृत्युवशं गताः ।
ये भविष्यन्ति येऽतीताः प्रेतलोकात् समुद्धर ॥३४६॥

आर्त्तस्य मम दीनस्य भक्तिरव्यभिचारिणी । दत्तमर्घ्यं मया तुभ्यं भक्त्या गृह्ण गदाधर ॥३४७

दत्त्वार्घ्यं धूपदीपाद्यैर्नैवेद्यैर्हविरुद्भवैः । स्तोत्रैर्नीराजनैर्गीतैर्नृत्यैः सन्तोषयेद्धरिम् ॥३४८॥

वस्त्रदानैश्च गोदानैर्भोजनैस्तोषयेद्गुरुम् । अकुर्व्वन् वित्तशाठ्यन्तु व्रतं कुर्य्यात्तु वैष्णवः ॥३४९

तुष्ट्यर्थं पद्मनाभस्य कार्य्यं जागरणन्तथा । निशान्ते व्रतकृत्यन्तु गुरवे तन्निवेदयेत् ॥३५०॥

गुरौ निवेदिते भूप परिपूर्णं भवेद्व्रतम् । कृत्वा दिनकृतं कर्म्म भोजनं ब्राह्मणैः सह ।
कर्त्तव्यं नृपशार्द्दूल दिनं नेयं कथानकैः ॥३५१॥

अनेन विधिना यस्तु कुर्य्यादुन्मीलनीव्रतम् । कल्पकोटिसहस्राणि वसते विष्णुसन्निधौ ॥३५२

---

स्वनाम्ना—सुदर्शनाय नम इत्यादिरूपेण । ३४२ ।

विधानत इति सजलकुङ्कुमशङ्खोपरि एकसूत्रवेष्टितं गन्धादिसहितं फलं कृत्वार्घ्यं दद्यादिति विधानं ज्ञेयम् । तत्र मन्त्रः देवदेवेतादि । व्रतकृत्यं व्रतोपस्करं श्रीमूर्त्त्यादिकं, दिनकृतं दिनकृत्यं, कथानकैः भगवद्वार्त्तादिभिः ॥३४३-३५१॥ एवं व्रतस्य पुनः फलविशेषमाह—अनेनेति द्वाभ्याम् ॥३५२॥

---

स्वस्व नामोच्चारण पूर्वक भक्तिप्लुत हृदय से आयुधादि की पूजा करे, एवं नारिकेल प्रभृति फल द्वारा अर्घ्य प्रदान करना चाहिये। शङ्ख के उपरिस्थल में गन्ध, पुष्प, फल, स्थापन कर एक सूत्र से वेष्टन कर विधानानुसार अर्घ्य देना पड़ता है। "हे देवदेव! हे महादेव! हे महापुरुष! हे पूर्वज! हे सुब्रह्मण्य! हे पुण्यकीर्त्ति वर्धन! आपको नमस्कार। शोक, मोह, एवं महापातक स्वरूप संसार सागर से मुझको उद्धार करें। हे जगन्नाथ! मैंने शत शत जन्म में कुछ भी पुण्य नहीं किया है। तथापि आप मुझको भवसागर से उद्धार करें। हे देवेश! मदीय पूर्वपुरुषों के मध्य में जिन्होंने कुयोनि प्राप्त किया है, पातक के कारण जो कालवश हुए हैं, भविष्यत् जो जन्म ग्रहण करेंगे, एवं जो गत हुए हैं,—उनको प्रेतलोक से उद्धार कीजिये। आर्त्त एवं दीन हूँ मुझको अव्यभिचारिणी भक्ति लाभ हो, हे गदाधर! मेरा भक्ति के सहित दिया हुआ यह अर्घ्य ग्रहण कीजिये।" इस प्रकार अर्थयुक्त मन्त्र से अर्घ्य समर्पण करके धूप दीपादि, घृतपक्व नैवेद्य, स्तव, आरात्रिक, गीत एवं नृत्य के द्वारा प्रभु को सन्तुष्ट करे। अनन्तर वस्त्र एवं धेनु दान भोजनादि प्रदान कर श्रीगुरुदेव को सन्तुष्ट करना चाहिये। अर्थ विषय में कृपण न होकर व्रत करना एवं श्रीहरि-सन्तोष हेतु हरिवासर में जागरण करना कर्त्तव्य है। रात्रि के शेष में व्रत कृत्य (व्रत के उपकरण-श्रीमूर्त्ति प्रभृति) श्रीगुरुदेव को अर्पण करे ॥३४२-३५०॥

हे राजन्! श्रीगुरुदेव को अर्पण करने से ही व्रत पूर्ण होता है। हे नृपवर! अनन्तर आह्निकादि सम्पादन पूर्वक ब्राह्मणवृन्द के सहित भोजन करे। इस नियम से उन्मीलनी व्रत करने पर सहस्रकोटि कल्पकाल पर्य्यन्त श्रीविष्णु के सन्निधान में निवास होता है ॥३५१-३५२॥

किञ्च —

उन्मीलनीव्रतं कुर्य्यादेवं यः स धनी भवेत् । दीर्घायुः पुत्त्रवान् विद्वान् न कर्त्ता निरयं व्रजेत् ॥३५३

ब्रह्मवैवर्त्ते सूतशौनक-संवादे—

तावत् पापानि देहेषु दुःसहा यमयातनाः । प्राणिनां कुरुते तावद्यावन्नोन्मीलनीव्रतम् ॥३५४॥

यदत्र दीयते दानं हूयते वात्र यद्धविः । सर्व्वं तदक्षयं प्राहुरुन्मीलन्यां महर्षयः ॥३५५॥

इत्युन्मिलनीव्रतम् ।

अथ वञ्जुलीव्रतम्

पाद्म एव श्रीगौतमाम्बरीषसंवादे—

सम्पूर्णैकादशी यत्र द्वादशी च यदा भवेत् । त्रयोदश्यां मुहूर्त्तार्द्धं वञ्जुली सा हरिप्रिया ॥३५६॥

शुक्लपक्षे तथा कृष्णे यदा भवति वञ्जुली । एकादशीदिने भुक्त्वा द्वादश्यां कारयेद्व्रतम् ॥३५७

पारणं द्वादशीमध्ये त्रयोदश्यां न कारयेत् । एवं कृते महीपाल यज्ञायुतफलं लभेत् ॥३५८॥

द्वादश्यान्तु निराहारः पारणा चापरेऽहनि । धर्म्मार्थकाममोक्षार्थं करिष्ये वञ्जुलीव्रतम् ॥३५९

इति नियममन्त्रः ।

स्नात्वा नद्यां नदे वाथ तड़ागे वा ह्रदेऽपि वा ।
कृत्वा स्नानं गृहे वापि नित्यकर्म्म च कारयेत् ॥३६०॥

---

यावदुन्मीलनीव्रतं न कुरुते जनः, तावदेव प्राणिनां देहेषु पापानि, तावच्च यमयातना दुःसहा भवन्तीत्यन्वयः । नकाराभावपाठेऽपि उन्मीलनीव्रताचरणं यावदेव पापादयस्तिष्ठन्ति, तावदेव; तस्मिन् सति च न तिष्ठन्तीति तथैवार्थः ॥३५४॥ द्वादशी च सम्पूर्णा सती त्रयोदश्यां मुहूर्त्तार्द्धं किञ्चिद्भवतीत्यर्थः ॥३५६॥

---

और भी कथित है—उक्त रीत से जो उन्मीलनी व्रत करते हैं, वे धनवान्, दीर्घायु, पुत्रवान् एवं विद्वान् होते हैं । किन्तु उक्त नियम से व्रत न करने पर नरक में गति प्राप्त होती है ॥३५३॥

ब्रह्मवैवर्त्त पुराण के सूत-शौनक-संवाद में लिखित है— यावत् काल पर्य्यन्त उन्मीलनी व्रतानुष्ठान नहीं किया जाता है, तावत् काल पर्य्यन्त पातकपुञ्ज जीवगण के शरीर में दारुण यम-यन्त्रणा अर्पण करते हैं ॥

महर्षिवृन्द का कथन है कि इस उन्मीलनी व्रत में जो जो वस्तु दान की जाती हैं और जो जो होम किये जाते हैं, वह सब अक्षय होते हैं ॥३५४-३५५॥

उन्मीलनीव्रत समाप्त ।

अथ वञ्जुलीव्रतम्

पद्मपुराण के श्रीगौतम-अम्बरीष-संवाद में लिखित है— एकादशी सम्पूर्ण होकर दूसरे दिन द्वादशी भी सम्पूर्णा होने पर एवं त्रयोदशी में अर्थात् तीसरे दिन में भी द्वादशी किञ्चित् होने पर उसको 'वञ्जुली' कहते हैं । यह द्वादशी श्रीहरि को परम प्रसन्न करने वाली है ॥३५६॥

शुक्लपक्ष एवं कृष्णपक्ष, दोनों पक्ष में वञ्जुली द्वादशी होने पर एकादशी में भोजन करके द्वादशी में व्रत करना चाहिये । किन्तु, वञ्जुलीव्रत में द्वादशी के मध्य में ही पारण करना पड़ता है । त्रयोदशी में पारण करना निषिद्ध है । हे राजन् ! इस प्रकार व्रत करने पर दश सहस्र व्रत का फल लाभ होता है । मैं धर्म, अर्थ, काम, मोक्ष,–यह चतुर्वर्ग प्राप्त करने के निमित्त द्वादशी में उपवासी रहकर परदिन द्वादशी में पारण कर वञ्जुली व्रत करूँगा" यही वञ्जुली व्रत के नियम मन्त्र का अर्थ है ॥३५७-३५९॥

अनन्तर नदी, तड़ाग, वा ह्रद में किंवा घर में स्नान करके नित्यक्रिया समापन करे । एक माषे सुवर्ण

माषकेण सुवर्णेन कृत्वा नारायणीं तनूम् । रत्नगर्भघटे कृत्वा ताम्रपात्रोपरि स्थितम् ॥३६१
आतपत्रन्तु मायूरं वैणवं वा स्वशक्तितः । उपानहौ प्रकर्त्तव्यं कांस्यपात्रं घृतान्वितम् ॥३६२॥
गोधूमैः पूरयेत् पात्रं स्नाप्य देवं न्यसेत्ततः । वस्त्रयुग्मेन संछाद्य कार्य्यञ्चैव विलेपनम् ।३६३॥
अर्च्चयेदुदकुम्भस्थं पुष्पमाल्याभिवेष्टितम् । ततः पूजा प्रकर्त्तव्या सुगन्धैः कुसुमैः शुभैः ॥३६४॥
नारायणाय पादौ तु जानुनी केशवाय च । उरुभ्यां माधवायेति गुह्यं कामाधिपाय च ॥३६५
गोविन्दाय कटिं पूज्य नाभिं माधवमूर्त्तये । उदरं विश्वरूपाय वक्षः कौस्तुभधारिणे ॥३६६॥
वैकुण्ठाय नमः कण्ठं चक्षुषी ज्योतिरूपिणे । सहस्रशीर्षाय शिरः सर्व्वाङ्गं विश्वरूपिणे ॥३६७
आयुधानि स्वनाम्नैव एवं देवार्च्चने विधिः । शुभेन नारिकेलेन दद्यादर्घ्यं विधानतः ॥३६८
शङ्खे कृत्वा तु पानीयं साक्षतं कुसुमान्वितम् । नारायण जगन्नाथ पीताम्बर जनार्द्दन ।
मामुद्धर महाविष्णो नरकाब्धेः सनातन ॥३६९॥
सप्तकल्पगतं पापं यत् कृतं मम पूर्व्वजैः । अनेनार्घ्यप्रदानेन सकलं तत् प्रणश्यतु ।
मुक्तिं प्रयान्तु पितरो मया सह जगत्पते ॥३७०॥
मया तवार्घ्यदानेन ये चान्ये पितरो गताः । वसन्तु त्वत्समीपेऽद्य देवदेव जनार्द्दन ॥३७१॥
व्रतं सम्पूर्णतां यातु वञ्जुलीसम्भवं मम । दशमीसंयुतं देव यत् कृतं द्वादशीव्रतम् ।
अज्ञानादथवा ज्ञानात् परिपूर्णं तदस्तु मे ।३७२॥

---

तनूं श्रीमूर्त्तिं, घटस्थापनादिकमत्रापि पूर्व्ववत् ज्ञेयं, विशेषश्चान्यः स्वयमेव वक्ष्यते । नारायणेत्याद्यर्घ्य-मन्त्रः ।३६१-३६५॥

---

के द्वारा श्रीहरि मूर्त्ति निर्म्माण करके रत्नगर्भ घट में ताम्राधारोपरि स्थापन पूर्वक निज साध्यानुसार मयूरवर्ह वा वंशनिर्मित छत्र, पादुका एवं सघृत कांस्य का पात्र रखना चाहिये। एवं उक्त पात्र को गोधूम के द्वारा पूर्ण करे। अनन्तर प्रभु का स्नान कार्य्य समापन पूर्वक उसके ऊपर स्थापन करे। तत्पश्चात् दो वस्त्रों से प्रभु को आच्छादित कर (ढककर) विलेपन (उबटन) प्रदान करे। पुष्पमाल्य वेष्टित जल कुम्भस्थ प्रभु को पवित्र सुगन्धित कुसुम के द्वारा पूजा करे। "चरणयुगल में नारायणाय नमः, जानुद्वय में केशवाय नमः, ऊरुद्वय में माधवाय नमः, गुह्ये कामाधिपाय नमः, कटि में गोविन्दाय नमः, नाभि में माधवमूर्त्तये नमः, उदर में विश्वरूपाय नमः, वक्षःस्थल में कौस्तुभधारिणे नमः, कण्ठस्थल में वैकुण्ठाय नमः, सर्व अङ्ग में विश्वरूपिणे नमः" इस प्रकार से पूजा करके स्वस्व नामोच्चारण पूर्वक आयुधसमूह की पूजा करनी चाहिये। यही देवपूजा की विधि है। इसके पीछे यथाविधि शङ्ख के मध्य में जल, आतप तण्डुल, पुष्प एवं तदुपरि नारिकेल फल स्थापन पूर्वक अर्घ्य समर्पण करना चाहिये। 'हे नारायण! हे जगन्नाथ! हे पीताम्बर! हे जनार्द्दन! हे महाविष्णो! हे सनातन!' नरकार्णव से मेरा उद्धार करो। हे जगत्पते! मदीय पूर्वपुरुष समूह सप्तकल्प यावत् जो सब पापों का अनुष्ठान किये हैं, वे सब पापसमूह अर्घ्य प्रदान से विनष्ट हों। मदीय पूर्वपुरुष वृन्द मेरे सहित मुक्ति लाभ करें। हे देवदेव! जनार्द्दन! मैं यह अर्घ्य आपको अर्पण कर रहा हूँ, इसके द्वारा मदीय अतीत पितृगण आपके समीप में निवास करें। मत्कृत यह वञ्जुली-व्रत सुष्ठु सम्पूर्ण हो। हे देवदेव! ज्ञानपूर्वक अथवा अज्ञान से यदि मैंने दशमी विद्धा द्वादशी का व्रतानुष्ठान किया हो, वह भी सम्पूर्णता को प्राप्त हो।३६०-३७२॥

अनेन विधिना सम्यग्दत्त्वार्घ्यं मधुसूदने । वसेत् कल्पसहस्रन्तु विष्णोर्लोके महेश्वरि ॥३७३॥
अग्निष्टोमसहस्रेभ्यः अश्वमेधो विशिष्यते । अश्वमेधसहस्रेभ्यो वाजपेयो विशिष्यते ॥३७४॥
वाजपेयसहस्रेभ्यः पुण्डरीको विशिष्यते । पुण्डरीकसहस्रेभ्यः सौत्रामणिर्विशिष्यते ॥३७५॥
सौत्रामणिसहस्रेभ्यो राजसूयो विशिष्यते । राजसूयसहस्रेभ्यो वञ्जुली चाधिका नृप ॥३७६
वञ्जुलीति कृतोच्चारैः कलिकाले तु मानवैः । जन्मयुतसहस्रे तु कृतः पापस्य संक्षयः ॥३७७॥
दत्त्वा पूजार्घ्यदानन्तु धूपनैवेद्यदीपकम् । कृत्वा नीराजनं विष्णोर्गुरुं सम्पूजयेत्ततः ॥३७८॥
दद्याद्वस्त्राणि गां भूमिं धान्यं चैव सदक्षिणम् । कुर्य्याद्वित्तानुसारेण सम्पूर्णार्थं व्रतस्य हि ॥३७९
सन्तुष्टे तु गुरौ विष्णुः प्रीतो भवति नान्यथा । गुरुं सम्पूजयेत्तस्मात्तुष्ट्यर्थं चक्रपाणिनः ॥३८०
रात्रौ तु जागरः कार्य्यः श्रोतव्या वैष्णवी कथा ॥३८१॥
गीतानामसहस्रन्तु पुराणं शुकभाषितम् । पठनीयं प्रयत्नेन हरेः सन्तोषकारणम् ॥३८२॥
प्रत्येकं गोसहस्रस्य पठतां शृण्वतां फलम् । गीतं नृत्यन्तु वादित्रं कारयेत् पुरतो हरेः ॥३८३
दातव्यं गुरवे सर्व्वं प्रभाते देवतादिकम् । क्षमापयित्वा देवेशं गुरुञ्चैव विशेषतः ॥३८४॥
कृत्वा नैमित्तिकं सर्व्वं भोक्तव्यं बन्धुभिः सह ॥३८५॥

स्कान्दे श्रीब्रह्मनारदसंवादे जागरणप्रसङ्गे—

अगम्यागमने पापमभक्ष्यस्यापि भक्षणे । पापं विलयमायाति कीर्त्तिते वञ्जुलीदिने ॥३८६॥

---

कुर्य्यादेवम् ॥३७९॥

---

हे महेश्वरि ! इस प्रकार सम्यक् विधान से श्रीहरि को अर्घ्य अर्पण करने पर सहस्र कल्प यावत् श्रीहरि धाम में वास कर सकता है। हे नृप ! एक अश्वमेधयज्ञ, सहस्र अग्निष्टोम यज्ञ से श्रेष्ठ है। एक वाजपेययज्ञ, सहस्र अश्वमेध यज्ञ से श्रेष्ठ है, एक पुण्डरीक यज्ञ, सहस्र वाजपेय से श्रेष्ठ है, एक सौत्रामणि यज्ञ, सहस्र पुण्डरीक यज्ञ की अपेक्षा श्रेष्ठ है। एक राजसूय यज्ञ, सहस्र सौत्रमणि क अपेक्षा श्रेष्ठ है, एवं एक वञ्जुली व्रत, सहस्र राजसूय यज्ञ की अपेक्षा प्रशस्त है। कलिकाल में 'वञ्जुली' शब्द उच्चारण मात्र से ही मानव वृन्द, सहस्र अयुत जन्म सञ्चित पापसमूह से मुक्त होते हैं ॥३७३-३७७॥

श्रीहरि की पूजा, अर्घ्य अर्पण, धूप, दीप, नैवेद्य प्रदान एवं आरात्रिक करके श्रीगुरुदेव की पूजा करनी चाहिये। व्रत सम्पूर्णता के निमित्त श्रीगुरुदेव को वस्त्र, गो, भूमि एवं धान्य, दक्षिणा के सहित प्रदान करना चाहिये। श्रीगुरुदेव की प्रसन्नता होने पर, श्रीहरि भी सन्तुष्ट होते हैं, अतः श्रीहरि की प्रसन्नता के निमित्त सम्यक् विधान से श्रीगुरुदेव की पूजा करनी चाहिये। रात्रि में जागरण पूर्वक विष्णु सम्बन्धिनी कथा श्रवण करे एवं श्रीहरि तोषण हेतु गीता, सहस्रनाम, एवं शुक पठित पुराणरत्न श्रीमद्भागवत का पाठ यत्नपूर्वक करे। उक्त गीतादि का पाठ वा श्रवण करने पर प्रत्येक से सहस्र गोदान का फल लाभ होता है। श्रीहरि के समीप में गीत, नृत्य एवं वाजा बजाना चाहिये। अनन्तर प्रातःकाल में देव मूर्त्यादि, इत्यादि, सब श्रीगुरुदेव को प्रदान करे। इसके बाद, देवदेव श्रीहरि एवं श्रीगुरुदेव के समीप सम्यक् प्रकार से क्षमा प्रार्थना करता हुआ नैमित्तिक कार्य्य सम्पादन करे, और बन्धु-बान्धवों के साथ भोजन करना चाहिये ॥३७८-३८५॥

स्कन्दपुराण में श्रीब्रह्म-नारद-संवाद के जागरण प्रसङ्ग में उक्त है—'वञ्जुली दिन' पद उच्चारण

यत् पापं भूमिहरणे देवस्वहरणे तथा । मणिकूटं तुलाकूटं स्वर्णस्तेयादिकञ्च यत् ।।३८७।।
अज्ञानाद्यत् कृतं पापं ज्ञात्वा यत् पातकं कृतम् ।
पूर्व्वजन्मार्जितं पापमिह जन्मनि यत् कृतम् ।।३८८।।
सर्व्वं च क्षयमभ्येति कृत्वैकं वञ्जुलीदिनम् । न भवेन्मानसी पीड़ा रोगाश्चात्यन्तदुःखदाः ।।३८९

ब्रह्मवैवर्त्ते श्रीसूतशौनकसंवादे —

वञ्जुलीवासरे विप्र सम्प्राप्ते गरुड़ध्वजः । स्वस्थानाद्वसुधामेत्य कुरुते च स्थितिं विशन् ।।३९०
वञ्जुली-विमुखं विप्रमालोक्य रविनन्दनः । कुरुते सम्विदं साकं चित्रगुप्तेन हर्षितः ।।३९१।।
अयमेष्यति मन्दात्मा विष्णुव्रतवहिष्कृतः । वशं ममेति तत्पुण्यं मार्ज्जयाद्धा पुराकृतम् ।।३९२
शिरोऽर्त्तिर्नितरामेषा मां सदैव प्रबाधते ।।३९३।।

किञ्च —

सर्व्वव्रतानां चरणं सर्व्वतीर्थाभिषेचनम् । सर्व्वदानप्रदानञ्च समं स्याद्वञ्जुलीव्रतम् ।।३९४।।
तत्रान्नदानं विप्राय विधाय श्रद्धयान्वितः । प्राप्नोति पुरुषो विप्र कलुषः कृष्णसन्निधिम् ।।३९५
लक्ष्मीं नारायणं देवं सौवर्णं तत्र पूजयेत् । यथाशक्त्यन्नदानञ्च दत्वा वैकुण्ठमाप्नुयात् ।।३९६

---

विशन् वञ्जुलीव्रतकारिणां मध्ये प्रविशन् स्थितिं कुरुते वसतीत्यर्थः। आस्थितमिति पाठेऽपि भावोक्त-प्रत्ययात् स एवार्थः। पाठान्तरे तु विशां धनिनां प्रजानां वा इष्टं ददातीत्यर्थः, यद्वा, विशाञ्च धनिनां धनसम्बन्धिवाञ्छां पूरयतीत्यर्थः ।।३९०।।

सम्विदम्—मन्त्रणाम् ।।३९१।।

शिरसोऽर्त्तिः पीड़ा ।।३९३।।

कलुषः पापरूपोऽपि ।।३९५।।

---

करने पर अगम्यागमनज एवं अभक्ष्य भक्षणज पापों से छूट जाता है। एकमात्र वञ्जुली व्रत साधित होने पर भूमिहरणज, देवस्वहरणज, मणिकूट, तुलाकुट, सुवर्णस्तेयज, अज्ञान एवं ज्ञानकृत पूर्वजन्म सञ्चित, इह जन्म सञ्चित, अखिल पातक विदूरित होते हैं। उस व्रती को मानसिक क्लेश, अथवा अतिशय दुःखजनक रोगादि आक्रमण नहीं कर सकते हैं ।।३८६-३८९।।

ब्रह्मवैवर्त्त के श्रीसूत-शौनक-संवाद में लिखित है—हे विप्र ! वञ्जुली दिन उपस्थित होने पर गरुड़ध्वज भगवान् श्रीहरि, निज लोक से पृथिवी में अवतीर्ण होकर वञ्जुली व्रतकारी व्यक्तिगण के मध्य में प्रवेश पूर्वक अवस्थान करते हैं। सूर्य्यतनय यमराज ने, वञ्जुली विमुख विप्र को देखने पर प्रसन्नता सहित चित्रगुप्त से परामर्श कर कहा कि,–"यह मन्दमति श्रीहरि के व्रत से विमुख हुआ है, अधुना इसको मेरे वशीभूत होना पड़ेगा। सुतरां इस पुरुष के पूर्वजन्मकृत पुण्य नष्ट करो। कारण, इस प्रकार शिरः पीड़ा सर्वदा मुझको व्यथित करती रहती है ।।३९०-३९३।।

और भी लिखा है—एक मात्र वञ्जुली व्रत, सब व्रत के आचरण के सब तीर्थों में स्नान करने के और सब प्रकार के दान के फल के समान है। वञ्जुली व्रत में श्रद्धान्वित होकर विप्र को अन्नदान करने से पापिष्ठ व्यक्ति भी श्रीकृष्ण सन्निधान में गमन करता है। वञ्जुली व्रत में स्वर्णमय लक्ष्मीनारायण को साध्यानुसार अन्न निवेदन करने से वैकुण्ठ लाभ होता है। हे विप्र ! ऋणग्रस्त होकर किंवा काम, लोभ एवं दम्भ पूर्वक भी वञ्जुली व्रत का अनुष्ठान करने पर त्रिपुरुषकृत पातक विनष्ट होता है। वञ्जुली व्रत

अधमर्णतया कामाल्लोभाद्दम्भादपि द्विज । हन्ति त्रिपुरुषं पापं वञ्जुली पुरुषैः कृता ।।३९७।।
स एष सर्व्वशास्त्रार्थः सर्व्वबुद्धिमतां मतम् । हितं सर्व्वसमीचीनं यद्वञ्जुल्यामुपोषणम् ।।३९८
उपवासं यथाशक्त्या दानं ब्राह्मणपूजनम् । विधाय वञ्जुलीं चैवं पुरुषो याति सद्गतिम् ।।३९९

इति वञ्जुलीव्रतम् ।

अथ त्रिस्पृशाव्रतम्

तत्रैव—

शुक्ला वैशाखमासे तु सम्प्राप्ता मधुसूदनी । द्वादशी त्रिस्पृशा नाम पापकोटिक्षयावहा ।।४००।।
धन्याः सर्व्वे मनुष्यास्ते वैशाखे मधुसूदनी । सम्प्राप्ता त्रिस्पृशा यैस्तु बुधवारेण संयुता ।।४०१।।

द्वारका-माहात्म्ये तत्रैव—

आदौ नन्दा जया चान्ते मध्ये भद्रा भवेद्यदि । उपवासार्च्चने गीते दुर्लभा कृष्णसन्निधौ ।।४०२।।
एकेनैवोपवासेन उपवासायुतं फलम् । जागरे शतसाहस्रं नृत्ये कोटिगुणं कलौ ।।४०३।।
गृहेऽपि कुर्व्वतामेतां किं पुनः कृष्णसन्निधौ ? ।।४०४।।

पाद्मे श्रीसनत्कुमार-व्याससंवादे—

सर्व्वपापप्रशमनं महापातकनाशनम् । शृणु कृत्वाऽवधानं त्वं त्रिस्पृशाख्यं महाव्रतम् ।।४०५।।
कामदं सस्पृहाणाञ्च निस्पृहाणान्तु मोक्षदम् । त्रिस्पृशाख्यं व्रतं विष्णोः शृणुष्व गदतो मम।।४०६

---

अधमं धनाभावेन परमदोषावहम्, ऋणं यस्य तस्य भावस्तत्ता तया ऋणवश्यतयेत्यर्थः । अतः त्रिपुरुष-सम्बन्धि पापं हन्ति । यद्वा, ऋणित्वेनापि कृत्वा, आगमादिभिर्न मोक्षो भवति ।।३९७।।

---

ही शास्त्रराशि का अर्थ सूत्ररूप है, यह ही समस्त बुधवृन्द का मत है, एवं यह ही सर्व समीचीन मङ्गलकर रूप में कीर्तित है । वञ्जुली व्रत में उपवास, साध्यानुसार दान एवं ब्राह्मण पूजा करने से उत्तम गति मिलती है ।।३९४-३९९।।

इति वञ्जुलीव्रतम् ।

अथ त्रिस्पृशाव्रतम्

उक्त पुराण में ही लिखित है- वैशाख मास की मधुसूदनी शुक्ला द्वादशी का नाम त्रिस्पृशा है, यह कोटि पातक नाशिनी है, जो सब मनुष्य, वैशाख मास में बुधवार समन्विता मधुसूदनी त्रिस्पृशा को प्राप्त करते हैं, वे सब धन्य हैं ।।४००-४०१।।

द्वारका माहात्म्य के उसी स्थान में वर्णित है—प्रथम नन्दा (एकादशी) मध्य में भद्रा (द्वादशी) एवं शेष में जया (त्रयोदशी) होने पर श्रीकृष्ण सन्निधान में उपवास, पूजा एवं गीत,-इन सब विषयों में यह त्रिस्पृशा दुर्लभ है । कलिकाल में एक मात्र उपवास से दश सहस्र उपवास का फल लाभ होता है । एवं जागरण करने पर तदपेक्षा लक्षगुण एवं नृत्य द्वारा कोटिगुण फल होता है । घर में रहकर ही यह फल मिल जाता है । किन्तु, श्रीहरि सन्निधान में अवस्थान पूर्वक इन सबका अनुष्ठान करने पर कितना फल होता है, उसका वर्णन नहीं हो सकता है ।।४०२-४०४।।

पद्मपुराण के श्रीसनत्कुमार-व्यास-संवाद में वर्णित है । सर्व पापहारिणी, महापातक नाशिनी त्रिस्पृशा नामक महाव्रत का विषय मनोयोग पूर्वक श्रवण करो । यह सकाम मानवों को कामफलप्रद एवं निष्काम मानवों के पक्ष में मोक्षद है । श्रीविष्णु के त्रिस्पृशा नामक व्रत का विषय वर्णन करता हूँ । सुनो । हे

प्रत्यक्षमर्च्चितस्तेन कलिकालेऽपि केशवः । त्रिस्पृशाकीर्त्तनं नित्यं यः करोति महामुने ॥४०७॥
न पुरश्चरणे चीर्णे सर्व्वपापक्षयो भवेत् । त्रिस्पृशा-नाममात्रेण भवते नात्र संशयः ॥४०८॥
नागमैर्न पुराणैश्च समस्तैस्तीर्थकोटिभिः । बहुभिर्व्रतसङ्घैश्च पूजितैस्त्रिदशैरपि ॥४०९॥
मोक्षो भवति विप्रेन्द्र त्रिस्पृशा न कृता यदि । मोक्षार्थं देवदेवेन सृष्टा देवी तिथीश्वरी ॥४१०
विषयैर्विप्र युक्तानां ध्यानधारणवर्ज्जिनाम् । कामभोगप्रसक्तानां त्रिस्पृशा मोक्षदा सदा ॥४११
शङ्करस्य पुरा प्रोक्ता चतुर्वक्त्रस्य सागरे । क्षीरोदे प्रणतानान्तु मत्समीपे तु चक्रिणा ॥३१२

त्रिस्पृशां ये करिष्यन्ति विषयैरपि निर्ज्जिताः ।
तेषामपि मया दत्तं मोक्षं साङ्ख्यविवर्ज्जितम् ॥४१३॥
कुरुष्व त्वं मुनिश्रेष्ठ त्रिस्पृशां मोक्षदायिनीम् ।
बहुभिर्मुनिसङ्घैस्तु त्यक्त्वा साङ्ख्यं महामुने ॥४१४॥

कार्त्तिके शुक्लपक्षे तु त्रिस्पृशा भवते यदा । सोमेन सोमजेनापि पापकोटिविनाशिनी ॥४१५॥
यस्यामुपोषणं कृत्वा हत्यामुक्तो महेश्वरः ॥४१६॥
हस्ताद्ब्रह्मकपालन्तु तत्क्षणात् पतितं मुने । गत्वा भृगूपदेशेन त्रिस्पृशा-समुपोषणात् ॥४१७॥

---

हे विप्र विषयैर्युक्तानाम् ॥४११॥
प्रणतानामन्येषाञ्च प्रोक्ता ॥४१२॥
कुरुत्वेत्यादि सनत्कुमारवाक्यं, मुनिसङ्घैः सह ॥४१४॥

---

महामुने ! नित्य त्रिस्पृशा नाम कीर्त्तन करने से इस कलिकाल में प्रत्यक्ष श्रीहरि की पूजा की जा सकती है। पुरश्चरण अनुष्ठान से सकल पातक विनष्ट नहीं होते हैं। किन्तु त्रिस्पृशा नाम उच्चारण करते ही निःसन्देह समस्त पातक विनष्ट हो जाते हैं। हे विप्रवर ! त्रिस्पृशा के व्रत का अनुष्ठान न करने पर यावतीय आगम, निखिल पुराण, कोटि-कोटि तीर्थ, असंख्य व्रत, एवं निखिल देवताओं की पूजा के द्वारा भी मोक्ष लाभ की सम्भावना नहीं है। देवदेव श्रीहरि ने मोक्ष के निमित्त तिथिवर त्रिस्पृशा देवी को उत्पन्न किया है। हे विप्र ! त्रिस्पृशा तिथि, विषयनिष्ठ, ध्यानधारणा रहित, काम-भोगरत व्यक्ति वर्ग को भी सर्वदा मुक्तिदान करता है ॥४०५-४११॥

पुराकाल में चक्रपाणि श्रीहरि ने, महादेव को, ब्रह्मा को, एवं मुझको एवं अन्यान्य व्यक्ति को यह त्रिस्पृशा व्रत कहा। श्रीहरि ने कहा—जो मानव, विषयासक्त होकर भी त्रिस्पृशा व्रतानुष्ठान करता है, मैं उसको सांख्यज्ञान से भी अति दुर्ल्लभ मोक्ष प्रदान करता रहता हूँ। ॥४१२-४१३॥

सनत्कुमार बोले थे—हे मुनिश्रेष्ठ ! तुम ऋषिवृन्द के सहित सांख्यज्ञानानुशीलन वर्जन पूर्वक मोक्षदात्री त्रिस्पृशा का अनुष्ठान करो। हे मुनिवर ! कार्त्तिक शुक्लपक्ष में सोम अथवा बुधवार संयुक्ता त्रिस्पृशा होने पर वह पातक कोटि विनाशिनी होती है। हे मुने ! महेश्वर, त्रिस्पृशा वासर में अभुक्त रहकर हत्याजनित पातक से परित्राण प्राप्त किये हैं। भृगुवाक्य से उपवास करके महादेव के हस्त से आशु ब्रह्मकपाल भूपतित हुआ था। हे महामुने ! अन्यान्य पापों की बात तो दूर रहे, त्रिस्पृशा का उपवास करने से सहस्र-सहस्र ब्रह्महत्या के पाप भी छूट जाते हैं। हे देव ! प्रयाग, काशी, गोमती और कृष्णा के समीप,—इन सब स्थानों में भी मोक्ष की सम्भावना नहीं है, किन्तु त्रिस्पृशा में उपवास करने से ही तत्काल मोक्ष लाभ हो सकता

ब्रह्महत्या-सहस्राणि त्रिस्पृशासमुपोषणात् । हित्वाष्टौ बाहुवीर्य्यस्तु पूर्व्वजातो महामुने ॥४१८
कलिकल्मषपापात्तु मुक्ता देवी त्रिमार्गगा । उपदेशान्माधवस्य त्रिस्पृशासमुपोषणात् ॥४१९॥
ब्रह्महत्यासहस्राणि त्रिस्पृशासमुपोषणात् । विलयं यान्ति विप्रेन्द्र पापेष्वन्येषु का कथा ? ४२०

न प्रयागे न काश्यान्तु गोमत्यां कृष्णसन्निधौ ।
मोक्षो भवति विप्रेन्द्र त्रिस्पृशासमुपोषणात् ॥४२१॥

मरणेन प्रयागे तु मुक्तिः काश्यान्तथैव च । स्नानमात्रेण गोमत्यां मुक्तिर्भवति नान्यथा ।
गृहे चैव भवेन्मुक्तिः त्रिस्पृशायामुपोषणात् ॥४२२॥

विषये वर्तमानस्य कामभोगान्वितस्य च । निवृत्तविषयस्यापि मुक्तिः सांख्येन दुर्लभा ।
तस्मात् कुरुष्व विप्रेन्द्र त्रिस्पृशां मोक्षदायिनीम् ॥४२३॥

श्रीवेदव्यास उवाच—

कीदृशी स्यान्मुनिवर त्रिस्पृशा द्वादशी वद ।
विमुक्तिदा या मर्त्यानां त्वया प्रोक्ता ममाधुना ॥४२४॥

श्रीसनत्कुमार उवाच —

जाह्नव्याः पुरतो विप्र त्रिस्पृशा माधवेन तु । प्राची-सरस्वती-तीरे कथिता सुमहाफला ॥४२५

श्रीजाह्नव्युवाच—

कलिकल्मषपापौघैर्ब्रह्महत्यादिकैर्युताः । कलिकाले हृषीकेश स्नानं कुर्व्वन्ति मज्जले ॥४२६॥
तेषां पापशतैर्दग्धं मद्देहं कलुषीकृतम् । कथं यास्यति मे देव पातकं गरुड़ध्वज ? ॥४२७॥

श्रीप्राचीमाधव उवाच—

कथयामि न सन्देहो मा पुत्रि रोदनं कुरु । श्रीस्थलं नाम मे स्थानं प्राचीदेवी ममाग्रतः ॥४२८

---

है । पूवजात बाहुवीर्य्य, अन्य अष्टविध व्रत वर्जनपूवक त्रिस्पृशा का उपवास करके बहुसहस्र पाप विनष्ट किये थे । गङ्गादेवी—माधव के उपदेश से त्रिस्पृशा में उपवास कलि कलुष से मुक्त होगई थीं । हे विप्रवर ! वाराणसी में एवं प्रयाग में मृत्यु होने के बाद, गोमती में स्नान करने के पश्चात मुक्ति निःसन्देह होती है, किन्तु, त्रिस्पृशावासर में उपवास करने से घर में रहकर भी मोक्ष लाभ होता है ॥४१४-४२२॥

हे विप्रेन्द्र ! विषयासक्त, काम भोगान्वित, एवं निवृत्त विषयानुरागी व्यक्ति को सांख्य शास्त्रानुशीलन से भी मुक्ति दुष्प्राप्या है । सुतरां मोक्षदायिनी त्रिस्पृशा व्रतानुष्ठान करो ॥४२३॥

वेदव्यास ने कहा— हे मुनिवर ! आपने मुझसे अधुना कहा कि, त्रिस्पृशा मनुष्यवृन्द को मुक्तिदायिनी है । अतः उस त्रिस्पृशा द्वादशी का वर्णन आप करें ॥४२४॥

सनत्कुमार बोले— हे ब्रह्मन् ! माधव, पूर्ववाहिनी सरस्वती के तीर में जाह्नवी के समीप में इस महा फलप्रदा त्रिस्पृशा का कीर्त्तन किये थे । श्रीजाह्नवी ने हरि से पूछा था,—हे हृषीकेश ! कलियुग में मनुष्य-वृन्द, ब्रह्मवधादि जनित पातक से एवं कलिकलुष से लिप्त होकर मेरे नीर में अवगाहन स्नान करेंगे । हे देव ! उन मनुष्यों के शत-शत पापों से मेरा देह कलुषित होकर दग्ध होगा । हे गरुड़ध्वज ! मेरे पापों से छूटने का उपाय क्या है ? ॥४२५-४२६॥

श्रीप्राचीमाधव ने कहा— हे वत्से ! रोदन न करो । मैं कह रहा हूँ, इसमें सन्देह न करना । हे सुरेश्वरि ! श्रीस्थल, मदधिष्ठान भूमि है, उसी स्थान में ब्रह्मनन्दिनी प्राची सरस्वती मदीय सम्मुख में प्रवाहित होती

वहते ब्रह्मतनयः मद्दृष्टयग्रे सुरेश्वरि । स्नानं कुरुष्व नित्यं त्वं मन्त्रपूता भविष्यसि ।।४२९।।

यत्र प्राची ब्रह्मसुता तत्राहं नास्ति संशयः । तीर्थकोटिशतैर्युक्तः सुरैः सह वसाम्यहम् ।।४३०।।

तत्र नश्यन्ति पापानि यत्र प्राची सरस्वती । विशेषतो ममाग्रे तु कलिकाले विशेषतः ।।४३१

श्रीजाह्नव्युवाच—

नाहं शक्नोमि देवेश आगन्तुं नित्यमेव हि । कथं नश्यन्ति पापानि कथयस्वेह माधव ।।४३२

श्रीप्राचीमाधव उवाच—

सरस्वत्यधिका या च तीर्थकोटिशताधिका ।
मखकोटयधिका याऽपि व्रतदानाधिका च या ।।४३३।।

तपोजपाधिका नित्यं चतुर्वर्गफलप्रदा । सांख्ययोगाधिका या च त्रिस्पृशां कुरु तां शुभे ।।४३४

यस्मिन् मासे समायाति सिता चाप्यसिताथवा ।
कर्त्तव्या सा सरित्श्रेष्ठे तव पापं हरिष्यति ।।४३५।।

श्रीमन्दाकिन्युवाच—

कीदृशी त्रिस्पृशा देव ममाचक्षस्व माधव । ईदृशी महिमा यस्यास्त्वया प्रोक्ता ममाधुना ।।४३६

दशम्येकादशी भद्रा दिनैकस्मिन् यदा भवेत् । त्रिस्पृशा सा भवेद्देव न वेद्मि वद मे प्रभो ।।४३७

श्रीप्राचीमाधव उवाच—

आसुरी त्रिस्पृशा देवि या त्वया परिकीर्त्तिता । वर्ज्जनीया प्रयत्नेन व्रतहीनो यथा यतिः ।।४३८

---

भद्रा—द्वादशी ।।४३७।।

---

है, तुम प्रत्यह मेरे देखते हुए उस जल में स्नान करो, तो मन्त्र के द्वारा विशेष शुद्ध हो सकेगी । ब्रह्मपुत्री प्राची सरस्वती जिस स्थान में विराजमान है, उसी स्थान में मुझको अधिष्ठित जानना । इसमें सन्देह न करना । मैं शतकोटि तीर्थों से परिवृत होकर देवताओं के सहित उस स्थान में अधिष्ठान करता हूँ । पूर्व-वाहिनी सरस्वती यहाँ पर विराजमान है, कलिकाल में वहाँ पर, विशेषतः मदीय सम्मुख में पापसमूह विनष्ट होते हैं ।।४२७-४३१।।

श्रीजाह्नवी बोली—हे देवेश ! हे माधव ! मैं नित्य आ नहीं सकती हूँ, सुतरां किस प्रकार मेरे पापसमूह विदूरित होंगे ? आप कहें ।।४३२।।

प्राचीमाधव ने कहा—हे कल्याणि ! हे गङ्गे ! जो सरस्वती से भी श्रेष्ठ है, जो शतकोटि तीर्थ से भी श्रेष्ठ है, जो यज्ञ कोटि से भी प्रशस्त है, जो व्रत दान से भी अधिक है, जो तप, जप से भी श्रेष्ठ है, जो नित्य चतुर्वर्ग फल प्रदायक है, एवं सांख्ययोग से भी जिसका अधिक प्राधान्य है उस त्रिस्पृशा व्रत का अनुष्ठान करो । हे सरित् श्रेष्ठे ! शुक्ल किंवा कृष्णपक्ष में जिस मास में त्रिस्पृशा होती है, उस व्रत का अनुष्ठान करे । ऐसे करने पर ही त्रिस्पृशा तुम्हारे पापपुञ्ज विध्वंस करेगी ।।४३३-४३५।।

श्रीमन्दाकिनी बोली—हे माधव ! हे देव ! आपने जिसका ऐसा माहात्म्य कहा, वह त्रिस्पृशा कैसी है? यह मुझसे वर्णन कीजिये । एक दिन में दशमी, एकादशी, एवं द्वादशी का योग होने से ही त्रिस्पृशा होती है, मैं इतना ही जानती हूँ । हे भगवन् और कुछ मैं नहीं जानती हूँ । सुतरां यह विषय मुझसे वर्णन कीजिये ।।४३६-४३७।।

प्राची माधव ने कहा—हे देवि ! तुमने जो कहा, उसको आसुरी त्रिस्पृशा कहते हैं । व्रतरहित यति के समान वह परित्याज्य है, यह त्रिस्पृशा, असुर एवं राक्षसों की परमायु बढ़ाने वाली है, एवं बलवर्द्धिनी है ।

असुराणां राक्षसानामायूर्बलविवर्द्धिनी । वर्ज्जनीया प्रयत्नेन यथा नारी रजस्वला ॥४३९॥
यथा रजस्वलासङ्गमन्याय्यं वर्जितं सदा । तथा दशमिसंयुक्तं मद्दिनं वैष्णवैर्नरैः ॥४४०॥
हत्यायुतशतं हन्ति मत्प्रसादेन लभ्यते । मत्प्रसादविहीनानां त्रिस्पृशा याति जाह्नवि ॥४४१॥
एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । त्रिस्पृशा सा तु विज्ञेया दशमी-संयुता न हि ॥४४२
भुक्तं हलाहलं तेन श्वविष्ठाभक्षणं कृतम् । दशमीमिश्रितं येन कृतमेकादशीव्रतम् ॥४४३॥
इति ज्ञात्वा न कर्त्तव्यं मद्दिनं दशमीयुतम् । जन्मकोटिकृतं पुण्यं सन्तानं याति च क्षयम् ॥४४४
पक्षवृद्धौ विशेषेण सन्देहे समुपस्थिते । ममाज्ञया प्रकर्त्तव्या द्वादशी वल्लभा सदा ॥४४५॥
ममाज्ञया प्रकर्त्तव्यं मद्दिनं मत्परायणैः । मद्दिनं तद्विजानीयाद्दशमीवेधवर्ज्जितम् ॥४४६॥

श्रीवेदव्यास उवाच—

विधानं ब्रूहि मे ब्रह्मन् मुने येन करोम्यहम् ॥४४७॥

श्रीसनत्कुमार उवाच—

दामोदरं हेममयं कृत्वा विभवसारतः । पात्रं ताम्रमयं कार्य्यं तण्डुलैः परिपूरितम् ॥४४८॥
सजलन्तु घटं शुद्धं पञ्चरत्नसमन्वितम् । वेष्टितं पुष्पमालाभिः कर्पुरागुरुवासितम् ॥४४९॥
न्यसेत्ताम्रमयं देवं स्नापयित्वा विलेपितम् । परिधानं ततः कार्य्यं वस्त्र-युग्मेन भक्तितः ॥४५०॥

---

मत्प्रसादेनैव त्रिस्पृशा लभ्यते । यानि व्यर्थतामिति शेषः ॥४४१॥
विभवसारतः—निजधनाद्यनुसारेण ॥४४८॥
पात्रं घटञ्च न्यसेदित्यन्वयः, तच्च पूर्वञ्चदूह्यम् ॥४४९-४५०॥

---

अतएव रजःस्वला नारी के समान वह परित्याज्या है। रजस्वला नारी का सहवास जिस प्रकार अनुचित एवं वर्जनीय है, तद्रूप दशमी विद्धा मद्दिन भी वैष्णवगण कर्त्तृक परित्याज्य है। हे गङ्गे! मेरी प्रसन्नता होने पर ही त्रिस्पृशा लाभ कर सकता है। जिसके प्रति मेरी प्रसन्नता के चिह्न दिखाई देते हैं। उक्त त्रिस्पृशा, उस मनुष्य को ही शतसहस्र हत्याजनित पाप को विदूरित कर देती है। किन्तु जिस पर मेरी प्रसन्नता नहीं है, उसके पक्ष में त्रिस्पृशा विफल है, अर्थात् कोई फल नहीं दे सकती ॥४३८-४४१॥

प्रथम एकादशी, बाद में द्वादशी एवं रात्रिशेष में त्रयोदशी होने से ही त्रिस्पृशा होती है, किन्तु दशमी-विद्धा एकादशी होने से त्रिस्पृशा नहीं होती है। दशमी विद्धा एकादशी का अनुष्ठान करने से कालकुटविष, एवं कुत्ते का मल भोजन किया जाता है। हे गङ्गे! ऐसा जानकर दशमी विद्धा मेरा दिन वर्जन करे। उस दिन में व्रत करने से कोटिजन्मार्जित पुण्य का ह्रास होता है, और सन्तान का भी नाश होता है। पक्ष-वृद्धि होने से एवं विशेष संशय उत्पन्न होने पर, मेरी आज्ञा से मेरी प्यारी द्वादशी के व्रत का अनुष्ठान करना चाहिये। मेरी आज्ञा से मदीय दिन में व्रताचरण करना मदीयभक्तगण के पक्ष में विशेष कर्त्तव्य है। दशमी वेधरहित एकादशी को ही मेरा दिन जानना चाहिये ॥४४२-४४६॥

श्रीवेदव्यास ने कहा है—हे ब्रह्मन्! हे मुने! व्रत का विधान मुझसे वर्णन कीजिये। मैं उसी विधान से व्रतानुष्ठान करूँगा ॥४४७॥

श्रीसनत्कुमार ने कहा—ऐश्वर्य्यानुसार सुवर्णमयी प्रतिमा निर्म्माण पूर्वक ताम्रपात्र निर्माण कर उसको तण्डुलपूर्ण करे। पञ्चरत्न युक्ता शुद्ध जलपूर्ण घट, कर्पूर अगुरुवासित पुष्पमाल्य द्वारा वेष्टित करे। देवमूर्त्ति को स्नान कराकर उनके अङ्ग में विलेपन ( उबटन ) लगाकर ताम्रपात्र में स्थापन करे। अनन्तर वस्त्रद्वय

मन्त्रैस्तु पूजनं कार्य्यं गुरुणा समुदीरितैः । पुष्पैः कालोद्भवैः शुभ्रैस्तुलसीदलकोमलैः ॥४५१॥
छत्रन्तु वैणवं दद्यात् पादुकाऽम्बरसंयुतम् । नैवेद्यानि विचित्राणि फलानि सुबहून्यपि ॥४५२
उपवीतं तु दातव्यं सोत्तरीयं नरं दृढ़म् । वेणवं दापयेद्दण्डं सुरूपं सून्नतं शुभम् ॥४५३॥
दामोदराय पादौ तु जानुनी माधवाय तु । गुह्यन्तु कामपतये कटिं वामनमूर्त्तये ॥४५४॥
पद्मनाभाय नाभिन्तु उदरं विश्वमूर्त्तये । हृदयं ज्ञानगम्याय कण्ठं श्रीकण्ठसंज्ञके ॥४५५॥
सहस्रबाहवे बाहु चक्षुषी योगनायके । ललाटमुरुगायेति सहस्रशिरसे शिरः ॥४५६॥
स्वनाम्ना चायुधादीनि सर्व्वाङ्गं चारुरूपिणे ।
सम्पूज्य विधिवद्भक्त्या अर्घ्यं दद्याद्विधानतः ॥४५७॥
शुभ्रेण नारिकेलेन शङ्खोपरि-स्थितेन हि । सूत्रेण वेष्टितेनैव उभाभ्यां पाणिसंस्थितम् ॥४५८
स्मृतो हरसि पापानि सत्यं यदि जनार्द्दन । दुःस्वप्नं दुर्निमित्तञ्च मनसो दुर्विचिन्तितम् ॥४५९
नारकञ्च भयं देव भयं दुर्गतिसम्भवम् । भयमन्यत् महादेव ऐहिकं पारलौकिकम् ॥४६०॥
सर्व्वं नाशय मे विष्णो गृहाणार्घ्यं जनार्द्दन । मम भक्तिः सदैवास्तु दामोदर तवोपरि ॥४६१
धूपदीपन्तु नैवेद्यं कुर्य्यान्नीराजनं ततः ॥४६२॥

---

श्रीकण्ठसंज्ञकमिति, श्रीकण्ठाय नम इति ज्ञेयम्, एवमन्यत्रापि । उरुगायेति पाठे उरगशयनायेति ज्ञेयम् ॥ ॥४५५-४५६॥

उभाभ्यां पाणिभ्यामर्घ्यं दद्यादिति पूर्व्वेणान्वयः । अर्घ्यमेव विशिनष्टि—पाण्योः संस्थितमिति ॥४५८॥

स्मृत इत्याद्यर्घ्यमन्त्रः ॥४५९॥

---

परिधान कराकर भक्तिसहित श्रीगुरुदेव के मुखपद्म कथित मन्त्रोच्चारण सहित ऋतुजात शुभ्र कुसुम एवं कोमल तुलसीदल द्वारा पूजा करे । वेणुदण्डयुक्त छत्र एवं सवसन पादुका प्रभु को अर्पण करना चाहिये । तदनन्तर विविध नैवेद्य प्रचुर परिमाण में विविध फल, उत्तरीय, यज्ञसूत्र एवं नूतन दृढ़ सुन्दर दीर्घ वेणुदण्ड अर्पण करना चाहिये ॥४४८-४५३॥

चरणद्वय में दामोदर, जानुद्वय में माधवाय, गुह्य में कामपतये, कटि में वामनमूर्त्तये, नाभि में पद्मनाभाय, उदर में विश्वमूर्त्ते, हृदय में ज्ञानगम्याय, कण्ठ में श्रीकण्ठाय, बाहु में सहस्रबाहवे, नेत्रयुगल में योगनायकाय, ललाट में उरुगाय, एवं मस्तक में, सहस्रशिरसे नमः कहकर पूजा करके, स्वस्व नाम द्वारा आयुध समूह की एवं चारुरूपिणे नमः कहकर सर्वाङ्ग की पूजा करे । तत्पश्चात् भक्तिपूर्वक यथाविधि अर्घ्य अर्पण करना चाहिये ॥४५४-४५७॥

शङ्ख के उपरिभाग में शुभ्र नारिकेल स्थापन कर सूत्र द्वारा वेष्टन पूर्वक करद्वय में धारणकर वक्ष्यमाण मन्त्र से प्रदान करे ॥४५८॥

"हे जनार्दन ! हे देव ! हे महादेव ! आपका स्मरण करने पर पातकराशि विनष्ट होती है, यदि यह सत्य हो तो, मेरे दुःस्वप्न का भय, दुर्निमित्त भय, मानसिक दुश्चिन्ताजात भय, नरक भय, दुर्गतिजनित भय, अन्य प्रकार भय, ऐहिक पारत्रिक भयसमूह का नाश कीजिये । हे विष्णो ! हे जनार्दन ! मेरा दिया-यह अर्घ्य ग्रहण कीजिये । हे दामोदर ! आपके प्रति सदा मेरी भक्ति विद्यमान रहे ।" (इस मन्त्र से अर्घ्य प्रदान करे) अनन्तर धूप, दीप, एवं नैवेद्य प्रदान पूर्वक आरत्रिक करना चाहिये ॥४५९-४६२॥

शिरोपरि मुनिश्रेष्ठ भ्रामयेज्जलजं हरेः। कृत्वा विधानमेतद्धि पूजयेत् स्वगुरुं ततः ॥४६३॥
दद्याद्वस्त्राणि शुभ्राणि गन्धमाल्यादिनार्च्चयेत्। उपानहौ च छत्रञ्च मुद्रिकाञ्च कमण्डलुम् ॥४६४
भोजनञ्चैव ताम्बूलं सप्तधान्यं सुदक्षिणम्। सम्पूज्य देवदेवेशं कुर्य्याज्जागरणं हरेः ॥४६५॥
गीतनृत्यसमायुक्तं तथा शास्त्रसमन्वितम्। निशान्ते पुनरीशाय दत्वा चार्घ्यं विधानतः।
स्नानादिकां क्रियां कृत्वा भुञ्जीयाद्ब्राह्मणैः सहः ॥४६६॥

इति त्रिस्पृशाव्रतम्।

अथ पक्षवर्द्धिनीव्रतम्

पाद्मे ब्रह्मोक्तौ—

अमा वा यदि वा पूर्णा सम्पूर्णा जायते यदा। भूत्वा च षष्टिघटिका दृश्यते प्रतिपद्दिने।
अश्वमेधायुतैस्तुल्या सा भवेत् पक्षवर्द्धिनी ॥४६७॥
पूजाविधिन्तु विप्रेन्द्राः श्रोतुमर्हथ साम्प्रतम् ॥४६८॥
मन्त्रैः सम्पूजितो विष्णुरर्घ्यदानेन तुष्यति ॥४६९॥
जलपूर्णं नवं कुम्भं चन्दनेनैव चर्च्चितम्। पञ्चरत्नसमायुक्तं पुष्पमालाविभूषितम्।
स्थाप्यं ताम्रमयं पात्रं सगोधूमं घटोपरि ॥४७०॥
सौवर्णं कारयेद्देवं माससंज्ञाविधानकम्। पञ्चामृतेन स्नपनं कर्त्तव्यं माधवस्य च ॥४७१॥
विलेपनन्तु कर्त्तव्यं कुङ्कुमागुरुचन्दनैः। वस्त्रयुग्मन्तु दातव्यं छत्रोपानत्-सुसंयुतम् ॥४७२॥

---

शिरसः उपरि विसर्गलोपेऽपि पुनः सन्धिरार्षः। जलजं शङ्खम् ॥४६३॥
भोजनं—भोज्यम् ॥४६५॥
षष्टिघटिका व्याप्य भूत्वा सम्पूर्णा यदि दृश्यते। अतएव प्रतिपद्दिने च किञ्चिद्दृश्यते ॥४६७॥

---

हे मुनिश्रेष्ठ! तत्पश्चात् देवदेव के शिरोपरि शङ्ख भ्रामित करे। यथाविधि यह सब कार्य्य करके श्रीगुरुदेव को पूजा करे। शुक्लवस्त्र, गन्ध, माल्य, पादुका, छत्र, अङ्गुरी, कमण्डलु, भक्ष्यवस्तु, ताम्बूल, सप्तधान्य, एवं उत्कृष्ट दक्षिणा,- इन सबसे देवाधिदेव श्रीहरि की पूजा करके गीत, नृत्य एवं शास्त्रविधि से श्रीहरि का जागरण करना चाहिये। रात्रि के अवसान होने पर पुनर्वार देवदेव को यथाविधि अर्घ्यार्पण पूर्वक स्नान आदि कार्य्य समापन करके ब्राह्मणवृन्द के सहित भोजन करे ॥४६३-४६६॥

इति त्रिस्पृशाव्रतम्।

अथ पक्षवर्द्धिनीव्रतम्

पद्मपुराणस्थ श्रीब्रह्मा की उक्ति में प्रकाशित है—अमावस्या एवं पूर्णिमा, षष्टिदण्ड व्यापिनी सम्पूर्णा होकर प्रतिपद में स्वल्प परिमाण अवस्थित होने पर, उस द्वादशी का नाम ही 'पक्षवर्द्धिनी' है। यह दश सहस्र अश्वमेध तुल्य फल प्रद है। हे विप्रेन्द्र! सम्प्रति पूजा की विधि को कहता हूँ। श्रवण करें। मन्त्रपाठ पूर्वक पूजा करके अर्घ्य दान करने से श्रीहरि सन्तुष्ट होते हैं। पञ्चरत्नयुक्त, चन्दन चर्चित, पुष्पमाल्य-विभूषित नूतन जलपूर्ण कुम्भ स्थापन कर उसके ऊपर गोधूम चूर्ण पूर्ण ताम्रपात्र स्थापन करे। जिस मास में पक्षवर्द्धिनी होती है, उस मास के नाम से श्रीहरि की सुवर्णमयी प्रतिमा निर्माण करे। केशव प्रतिमा को पञ्चामृत द्वारा स्नान कराकर कुङ्कुम, अगुरु-चन्दन विलेपन करे। पश्चात् कुम्भपात्रोपरि स्थापन करके देवता को वस्त्रद्वय, छत्र एवं पादुका अर्पण करना चाहिये ॥४६७-४७२॥

पूजयेद्देवमीशं कुम्भपात्रोपरि स्थितम् । पद्मनाभाय पादौ तु जानुनी योगमूर्त्तये ॥४७३॥
ऊरुयुग्मं नृसिंहाय कटिं ज्ञानप्रदाय च । उदरं विश्वनाथाय हृदयं श्रीधराय च ॥४७४॥
कण्ठं कौस्तुभकण्ठाय बाहू क्षत्रान्तकाय च । ललाटं व्योममूर्त्ताय शिरो वै सर्व्वरूपिणे ।
स्वनाम्ना चैव शास्त्राणि सर्व्वाङ्गं दिव्यरूपिणे ॥४७५॥
एवं सम्पूज्य विधिवत् ततोऽर्घ्यं सम्प्रदापयेत् । नारिकेलेन शुभ्रेण देवदेवस्य चक्रिणः ॥४७६॥

तत्र अर्घ्यमन्त्रः

संसारार्णवपोताय पापकक्षामहानल । नरकाग्निप्रशमन जन्ममृत्युजरापह ॥४७७॥
मामुद्धर जगन्नाथ पतितं भवसागरे । गृहाणार्घ्यं मया दत्तं पद्मनाभ नमोऽस्तु ते ॥४७८॥
नैवेद्यानि प्रदेयानि घृतपक्वानि चक्रिणे । फलानि सुमनोज्ञानि स्वादूनि रसवन्ति च ॥४७९॥
सागुरुञ्च सकर्पूरं दद्याद्धूपन्तु माधवे । सघृतं गुग्गुलुञ्चापि दद्याद्वित्तानुसारतः ॥४८०॥
ताम्बूलन्तु सकर्पूरं दद्याद्देवस्य भक्तितः । घृतेन दीपकं दद्यात्तिलतैलेन वा पुनः ॥४८१॥
कृत्वा सम्यग्विधानेन गुरुपूजान्तु कारयेत् । वस्त्राणि चैव सोष्णीषं कञ्चुकञ्च प्रदापयेत् ॥४८२
दक्षिणाञ्च यथाशक्ति गुरवे सम्प्रदापयेत् । भोजनञ्चैव ताम्बूलं दत्वार्घ्यं सम्प्रतोषयेत् ॥४८३
स्ववृत्तैर्वर्त्तमानैस्तु यथाशक्त्या च निर्धनैः । कार्य्या सम्यक्प्रयत्नेन द्वादशी पक्षवर्द्धिनी ।
ततो जागरणं कुर्य्याद्गीतनृत्य-समन्वितम् ॥४८४॥

इति पक्षवर्द्धिनी-व्रतम् ।

---

अर्घ्यमन्त्रः—संसारेत्यादिः ॥४७७॥

---

अनन्तर 'पद्मनाभाय' कहकर पदद्वय में, योगमूर्त्तये कहकर जानुद्वय में, 'नृसिंहाय नमः' कहकर ऊरुयुगल में 'ज्ञानप्रदाय' कहकर कटि में, विश्वनाभाथ कहकर उदर में, 'श्रीधराय' कहकर हृदय में, 'कौस्तुभ कण्ठाय' कहकर कण्ठ में, क्षत्रान्तकाय कहकर बाहुद्वय में, 'व्योममूर्त्ताय' कहकर ललाट में एवं 'सर्वरूपिणे' कहकर मस्तक में पूजा करे । अनन्तर शस्त्रसमूह के स्वस्व नामोच्चारण पूर्वक अपण करके "दिव्यरूपिणे नमः" इस मन्त्र से सर्वाङ्ग में पूजा करे । इस प्रकार पूजा करके देवदेव चक्रपाणि को शुभ्र नारिकेल फल द्वारा अर्घ्य देना चाहिये ॥४७३-४७६॥

तत्र अर्घ्यमन्त्रः

हे संसार समुद्र के पोतस्वरूप ! हे पातक तृण दाहकारिन् ! हे नरकानल दमन ! हे जन्ममरण जरापहारिन् ! हे जगन्नाथ ! मैं संसाररूपी समुद्र में निपतित हूँ, मुझको उद्धार करो । हे पद्मनाभ ! मेरा दिया हुआ यह अर्घ्य ग्रहण करो । आपको नमस्कार ॥४७७-४७८॥

चक्रधर श्रीहरि को घृतपक्व नैवेद्य एवं सुमनोज्ञ सुस्वादु रसमय फलसमूह अर्पण करना चाहिये । सामर्थ्यानुसार श्रीहरि को अगुरु, कर्पूरयुक्त धूप एवं सघृत गुग्गुलु अर्पण करे । पश्चात् भक्तिपूर्वक प्रभु को कर्पूरयुक्त ताम्बूल एवं घृत वा तिलतैल का प्रदीप अर्पण करके पुनर्वार सम्यक् रूप से यथाविधि श्रीगुरुदेव की पूजा करे । श्रीगुरुदेव को उष्णीष एवं कञ्चुक (पगड़ी और मिर्जई) अर्पण करना चाहिये,पश्चात् शक्ति के अनुसार श्रीगुरुदेव को दक्षिणा देकर भक्ष्य ताम्बूल एवं अर्घ्य दान द्वारा श्रीगुरुदेव को प्रसन्न करे । विशेष यत्नपूर्वक यथाशक्ति पक्षवर्धिनी द्वादशी का व्रत करना निज वृत्तिस्थ धनहीन व्यक्ति का कर्त्तव्य है उक्त दिन में नृत्य-गीत के सहित जागरण भी करना चाहिये ॥४७९-४८४॥

अथ जयाव्रतम्

ब्रह्मपुराणे श्रीवशिष्ठमान्धातृसंवादे—

द्वादश्यान्तु सिते पक्षे ऋक्षं यदि पुनर्व्वसुः ।
नाम्ना सा तु जया ख्याता तिथीनामुत्तमा तिथिः ॥४८५॥
तामुपोष्य नरो घोरे नरके नैव मज्जति । अग्निष्टोमादियज्ञानां फलमाप्नोत्यसंशयम् ॥४८६॥ इति
जयाव्रतमनुष्ठेयं यथैवोन्मीलनीव्रतम् ॥४८७॥

तदुक्तं मार्कण्डेयेन—

शालग्रामशिलावारि तुलसीजलमेव च । सममेवोद्धरेत्तत्र विजयाव्रतमाचरेत् ॥४८८॥

अथ विजयाव्रतम्

ब्रह्मपुराणे तत्रैव—

यदा तु शुक्लद्वादश्यां नक्षत्रं श्रवणं भवेत् । विजया सा तिथिः प्रोक्ता तिथीनामुत्तमा तिथिः॥४८९

विष्णुधर्म्मोत्तरे च—

यदा तु शुक्लद्वादश्यां नक्षत्रं श्रवणं भवेत् । तदा सा तु महापुण्या द्वादशी विजया स्मृता ॥४९०
तस्यां स्नातः सर्व्वतीर्थे स्नातो भवति मानवः । सम्पूज्ये वर्षपूजायाः सकलं फलमश्नुते ॥४९१॥
एकजप्यात् सहस्रस्य जपस्याप्नोति यत् फलम् । दानं सहस्रगुणितं तथा वै विप्रभोजनम् ।
होमस्तत्रोपवासश्च सहस्रगुणितो भवेत् ॥४९२॥

---

घोर इति स्वरूपमात्रनिर्द्देशः, उन्मीलनीव्रतमिव जयाव्रतं कार्य्यमिति तत्र यो विधिरुक्तः, सोऽत्रापि द्रष्टव्य इत्यर्थः । विजयाव्रतन्तु नद्यादिसङ्गम एव कार्य्यम् ॥४८६-४८८॥

---

इति पक्षवर्द्धिनी-व्रतम् ।

अथ जयाव्रतम्

ब्रह्मपुराण के वशिष्ठ-मान्धातृ-संवाद में लिखित है—शुक्लपक्ष की द्वादशी में पुनर्वसु नक्षत्र होने पर उसका नाम 'जया' है । यह तिथि सब तिथियों में प्रधान कही गई है । इस तिथि में उपवास करने से, भयङ्कर नरक से उद्धार होता है और निःसन्देह अग्निष्टोमादि यज्ञ का फल मिल सकता है ॥४८५-४८६॥

उन्मीलनी व्रत की पद्धति के अनुसार जया व्रत का अनुष्ठान करना चाहिये । नदी प्रभृति के सङ्गमस्थल में विजया व्रत का अनुष्ठान करना चाहिये । शालग्राम शिलोदक और तुलसी जल को एकत्रकर उक्त सङ्गम स्थान में विजया व्रत का अनुष्ठान करे । यह कथन मार्कण्डेय का है ॥४८७-४८८॥

अथ विजयाव्रतम्

ब्रह्मपुराण के पूर्वोक्त स्थान में लिखित है,—शुक्लपक्ष की द्वादशी तिथि में श्रवणा नक्षत्र का योग होने पर ही उसका नाम विजया है । यह तिथि सब तिथियों में श्रेष्ठ कही गई है ॥४८९॥

विष्णुधर्मोत्तर में भी लिखित है—शुक्लपक्ष की द्वादशी तिथि में श्रवणा नक्षत्र का योग होने पर, उस महापुण्य स्वरूपिणी द्वादशी को विजया कहते हैं । इस तिथि में स्नान करने से समस्त तीर्थों में स्नान करने का फल लाभ होता है । उक्त तिथि में पूजा करने पर वर्ष कृत पूजा का फल लाभ होता है । उक्त दिन में एकबार मात्र जप के द्वारा सहस्र जप का फल सञ्चय होता है । उक्त तिथि में अनुष्ठित दान, विप्रभोजन, होम, तप, एवं उपवास सहस्रगुण फल प्रदान करता है ॥४९०-४९२॥

अथ विजयाव्रतविधिः

आदौ गुरुं नमस्कृत्य ततः सङ्कल्पमाचरेत् । शरशार्ङ्गधरं देवं सौवर्णं रचयेत्तथा ॥४६३॥

अथ विजयाव्रत-सङ्कल्पमन्त्रः

द्वादश्यान्तु निराहारः स्थित्वाऽहमपरेऽहनि । भोक्ष्ये त्रिविक्रमानन्त शरणं मे भवाच्युत । ४६४

सोपवीतन्तु कलसं पूर्व्ववत् स्थापयेद्व्रती । पात्रं तदुपरि न्यस्येत्ताम्रं वैणवमेव वा ॥४६५॥

तत्रोपवेश्य संस्थाप्य देवं विषदचन्दनैः । आलिप्य शुभ्रं वसनं दद्याच्छत्रञ्च पादुके ॥४६६॥

वासुदेवायेति शिरः श्रीधरायेति वै मुखम् । कृष्णायेति च कण्ठं वै वक्षः श्रीपतये इति ॥४६७

शस्त्रास्त्रधारिणे बाहु कक्षे च व्यापकाय वै । गिरिशायोदरं मेढ़ं त्रैलोक्यजननाय च ॥४६८

जघनं चार्च्चयेद्विद्वान् सर्व्वाधिपतये इति । सर्व्वात्मने इति पदावेवमङ्गानि पूजयेत् ॥४६६॥

अथ तत्र विजयाव्रतार्घ्यमन्त्रः

शङ्खचक्रगदापद्म-सारङ्गशरभूषित । गृहाणार्घ्यं मया दत्तं शार्ङ्गपाणे नमोऽस्तु ते ॥५००॥

इत्यर्घ्यं पूर्व्ववत् कृत्वा धूपदीपौ समर्प्य च । घृतपक्वप्रधानानि नैवेद्यानि निवेदयेत् ॥५०१॥

ताम्बूलादीनि दत्त्वाथ कृत्वा जागरणं निशि ।
प्रातः स्नात्वार्च्चयित्वेशं पुष्पाञ्जलिमथार्पयेत् ॥५०२॥

---

शरं शार्ङ्गञ्चायुधं धारयतीति तथा तम् ॥४६३॥

अवयवपूजामन्त्रं लिखति- वासुदेवायेति द्वाभ्याम् । पूर्व्ववत् सर्व्वत्रैव नमःशब्द-प्रयागो ज्ञेयः । पूजयेदित्युत्तरेण शिरआदीनां सर्व्वेषामन्वयः ॥४६७-४६६॥

अर्घ्यमन्त्रः—शङ्खेत्यादिः । सर्व्वं श्रीमूर्त्यादिकम् ॥५००-५०४।

---

अथ विजयाव्रतविधिः

सर्व प्रथम श्रीगुरुदेव को नमस्कार पर्वक व्रत का सङ्कल्प करके सुवर्णमय शर-शार्ङ्गधर श्रीविग्रह का निर्म्माण करावे ॥४६३॥

अथ विजयाव्रत-सङ्कल्पमन्त्रः

'हे त्रिविक्रम ! हे अनन्त ! मैं द्वादशी में उपवास रहकर परदिन अगले दिन में भोजन ग्रहण करूँगा। हे अच्युत ! आप मेरे शरण स्थान हूजिये।' व्रती व्यक्ति, पूर्ववत् यज्ञसूत्रसह कुम्भ स्थापन करके तदुपरि ताम्रनिर्मित अथवा वेणुनिमित्त किंवा वेणुनिर्मित पात्र स्थापन कर उसके ऊपर प्रभु को स्थापन करे और श्वेत चन्दन से देवदेव का अङ्गलेपन कर शुभ्र वस्त्र, छत्र एवं पादुका अर्पण करे। विज्ञ व्यक्ति, मस्तक में वासुदेवाय नमः कहकर, वदन में 'श्रीधराय नमः' कण्ठ में 'कृष्णाय नमः' वक्ष में 'श्रीपतये नमः' बाहु में शस्त्रधारिणे नमः। कक्ष में व्यापकाय नमः। उदर में गिरिशाय नमः। मेढ़ू त्रैलोक्य जननाय नमः। जघन में सर्वाधिपतये नमः, एवं चरणद्वय में सर्वात्मने नम, कहकर अङ्गसमूह की पूजा करे ॥४६४-४६६॥

अथ तत्र विजयाव्रतार्घ्यमन्त्रः

हे शङ्ख-चक्र-गदा-पद्म-सारङ्ग अलङ्कृत ! मत्प्रदत्त यह अर्घ्य ग्रहण करें। हे शार्ङ्गपाणे ! आपको नमस्कार करता हूँ। इस मन्त्र से पूर्ववत् अर्घ्य अर्पण करके धूप-दीप निवेदन करने के पश्चात् घृतपक्व उत्तम नैवेद्य एवं ताम्बूलादि प्रदान पूर्वक रात्रि में जागरण करे। अनन्तर प्रातःस्नान पूर्वक प्रभु की पूजा करके पुष्पाञ्जलि प्रदान करना चाहिये ॥५००-५०२॥

अथ तत्र विजयाव्रते प्रार्थनामन्त्रः

नमस्ते अस्तु गोविन्द बुधश्रवणसंज्ञक । अघोरं चाक्षयं कृत्वा सर्व्वसौख्यप्रदो भव ॥५०३॥

इति प्रार्थ्य ततः सर्व्वं दत्त्वा चार्घ्यं प्रतोष्य हि ।
भक्त्या विप्रान् भोजयित्वा सुखं पारणमाचरेत् ॥५०४॥
भाद्रे मासि बुधस्याह्नि यदि स्याद्विजयाव्रतम् ।
तदा सर्व्वव्रतेभ्योऽस्य माहात्म्यमतिरिच्यते ॥५०५॥

अथ जयन्तीव्रतम्

ब्रह्मपुराणे—

यदा तु शुक्लद्वादश्यां प्राजापत्यं प्रजायते । जयन्ती नाम सा प्रोक्ता सर्व्वपापहरा तिथिः ॥५०६

सप्तजन्मकृतं पापं स्वल्पं वा यदि वा बहु ।
तत् क्षयं याति गोविन्दं तस्यामभ्यर्च्च्य भक्तितः ॥५०७॥

स्कान्दे च श्रीब्रह्मनारद-संवादे—

सर्व्वपापप्रशमनं सर्व्वपुण्यफलप्रदम् । द्वादश्यां रोहिणीयोगे जयन्ती नाम सुव्रतम् ॥५०८॥

किञ्च—

जीवतां याति यत्कालो जयन्तीवासरं विना । तत् खण्डमायूषो व्यर्थं नराणामुपजायते ॥५०९

---

कालविशेषे चास्य व्रतस्य फलविशेषं लिखति– भाद्र इति । तदानीं श्रीवामनदेव-प्रादुर्भवात्, एवमग्रेऽपि ॥ ॥५०५॥

प्राजापत्यं रोहिणीनक्षत्रम्, जयन्तीवासरं तद्व्रतं विनेत्यर्थः ॥५०५-५०९॥

---

अथ तत्र विजयाव्रते प्रार्थनामन्त्रः

हे गोविन्द ! हे बुध श्रवण संज्ञक ! मुझको अघोर एवं अक्षय करके सर्वदा मेरे सुखदायक हूजिये। आपको नमस्कार है। इस प्रकार प्रार्थना करके श्रीमूर्त्यादि प्रदानपूर्वक अर्घ्य द्वारा श्रीगुरुदेव को प्रसन्न करे। तत्पश्चात् यथाशक्ति ब्राह्मणों को भोजन कराकर स्वयं सुख से पारण करे ।।५०३-५०४।।

भाद्रमास के बुधवार में विजय व्रत होने से यावतीय व्रतों से इस व्रत का माहात्म्य अधिक होता है। भाद्रमास व्यतीत अपर मास में भी उक्त प्रकार योग होने से यह विजया महाद्वादशी होती है। किन्तु श्री-वामनदेव का आविर्भाव निबन्धन भाद्रमास में इस व्रत का विशेष फल होता है ।।५०३-५०५।।

अथ जयन्तीव्रतम्

अनन्तर 'जयन्ती' व्रत को कहते हैं—ब्रह्मपुराण में लिखित है—शुक्लपक्ष की द्वादशी तिथि में रोहिणी नक्षत्र योग होने पर उसको 'जयन्ती' द्वादशी कहते हैं, यह तिथि निखिल पातक हारिणी है। उक्त तिथि में भक्तिपूर्वक श्रीहरि की पूजा करने से सप्त जन्मार्जित स्वल्प वा बहु पातक भी विदूरित होते हैं ।।५०६ ५०७

स्कन्दपुराण के श्रीब्रह्म-नारद-संवाद में लिखा है– द्वादशी तिथि में रोहिणी नक्षत्र का योग होने से वह सर्व पाप प्रशमन, सर्व पुण्य फलप्रद 'जयन्ती' नामक सुव्रत होता है ।।५०८।।

और भी कथित है—जीवितावस्था में जयन्ती वासर के विना दिन व्यतीत होने पर, वह अतीत परमायुकाल वृथा होती है ।।५०९।।

अथ तद्व्रतविधिः

गुरुं प्रणम्य सम्प्रार्थ्य गृह्णीयान्नियमं कृती । कृष्णैस्तिलैश्च मध्याह्ने स्नायाद्धात्रीफलेन च ॥५१०

अथ सङ्कल्पमन्त्र

जयन्त्यान्तु निराहारः श्वोभूते परमेश्वर । भोक्ष्यामि पुण्डरीकाक्ष शरणञ्चरणौ तव ॥५११॥
इति ।

पूर्व्ववत् स्थापयेत् कुम्भं तस्योपरि च भाजनम् ।
हैरण्यं राजतं ताम्रं वैणवं वा तिलैर्भृतम् ॥५१२॥

तत्र च स्नापितं हैमं देवकीस्तनपायिनम् । मातृवक्त्रेक्षकं देवं निवेश्यावाहयेद्व्रती ॥५१३॥

---

गुरुं संप्रार्थ्य च, प्रार्थना प्रकारश्चोक्तः स्कान्दे नारदं प्रति श्रीब्रह्मणा— 'आदौ गुरुगृहं गत्वा पश्चान्नियममाचरेत् । शिरस्तत्पादयोः कृत्वा पादौ स्पृष्टा च मौलिना ॥ कृताञ्जलिपुटो भूत्वा प्रार्थयेत गुरुं ततः । नियमं देहि विप्रेन्द्र द्वादश्याश्च मम प्रभो ॥' इति; 'नियमं व्रतसङ्कल्पं गृह्णीयाच्छ्रद्धयाचरेत्', तथा च तत्रैव— 'गृह्णीयान्नियमं पूर्व्वं दन्तधावनपूर्व्वकम् । नियमात् फलमाप्नोति न श्रेयो नियमं विना ॥' इति । एतच्च पूर्व्वलिखितानुसारेण एकादश्यामेवेति बोद्धव्यम् । अथ द्वादशीकृत्यमाह— कृष्णैरित्यादिना । कृष्णतिलैर्धात्रीफलेन स्नायादिति धात्रीफलेन शिरोऽभ्यङ्गं कृष्णतिलैश्च गात्रपरिमार्ज्जनं कुर्य्यादित्यर्थः । तथा च तत्रैव— 'उपोषितश्च मध्याह्ने स्नायात् कृष्णतिलैस्ततः । कृत्वा मूर्द्धिन फलं धात्र्या महापुण्यविवृद्धये ॥' इति ॥५१०

पूर्व्ववदिति— 'जलपूर्णं नवं कुम्भं चन्दनेनैव चर्च्चितम् । पञ्चरत्नसमायुक्तं पुष्पमालाविभूषितम् ॥' इति यथा पक्षवर्द्धिनीव्रते प्रोक्तं तद्वदित्यर्थः । तथा च स्कान्दे तत्रैव— 'कृत्वा माध्याह्निकं कर्म्म स्थापयेदव्रणं घटम् । पञ्चरत्नसमायुक्तं पवित्रोदकपूरितम् ॥ सचन्दनं गन्धयुक्तं कर्पूरेण सुवासितम् । सुधूपवासितं शुभ्रपुष्पमालाभिशोभितम् ॥' इति । तस्य कुम्भस्योपरि भाजनञ्च पात्रं स्थापयेत् । तदेव विशिनष्टि— हैरण्यमिति । तत्र पूर्व्वपूर्व्वाभावे उत्तरोत्तरं स्थापयेदिति ज्ञेयम् । तथा च तत्रैव— 'तस्योपरि न्यसेत् पात्रं सौवर्णं श्रद्धयान्वितः । तदभावेन वै रूप्यं ताम्रं वेणुमयं मुने ॥' इति ॥५१२॥

देवकीस्तनपायिनमिति— हेम्ना श्रीदेवक्याः प्रतिमां कृत्वा तदङ्के स्तनपानपरां श्रीभगवन्मूर्त्तिं शास्त्रोक्तलक्षणां कृत्वा तत्र पात्रे निवेश्यावाहयेदित्यर्थः । कथम्भूतम् ? स्नापितं क्षीरादिना कारितस्नानम् । तल्लक्षणं किञ्चिदुल्लिखति— मातुर्देवक्या वक्त्रेक्षकं मुखमवलोकयन्तमित्यर्थः । तथा च तत्रैव— 'तस्योपरि न्यसेद्देवीं हैमीं लक्षणसंयुताम् । ददमानान्तु पुत्रस्य स्तन्यं वै विस्मिताननाम् ॥ पिबन्मातुः स्तनं भद्रमाननं पाणिना स्पृशन् । अवलोकमानः प्रेम्णा वै मुखं मातुर्मुहुर्मुहुः ॥' इति ॥५१३॥

---

अथ तद्व्रतविधिः

सुकृती व्यक्ति, श्रीगुरु की वन्दना एवं प्रार्थना करके सङ्कल्प करे एवं कृष्णतिल एवं धात्रीफल के द्वारा मध्याह्न काल में स्नान करना चाहिये ॥५१०॥

अथ सङ्कल्पमन्त्रः

हे परमेश्वर ! जयन्ती द्वादशी व्रत में उपवास करके परदिन (अगले दिन) प्रभात में भोजन करूँगा। हे पद्मपलाश नयन ! भवदीय पादपद्म मदीय आश्रय का स्थान हो। इस मन्त्र से सङ्कल्प पूर्वक पूर्ववत् घट स्थापन करके तदुपरि तिल पूर्ण स्वर्ण, रौप्य, ताम्र वा वेणुनिर्मित पात्र स्थापन करे। पश्चात् व्रती व्यक्ति उसके उपरिभाग में देवकीस्तनपायी जननी के वदन के प्रति ईक्षणकारी श्रीभगवान् की सुवर्णमयी प्रतिमा, स्नान के पीछे स्थापन करके आवाहन करे ॥५११-५१३॥

अथ तत्र जयन्तीव्रते आवाहनमन्त्रः

एहि एहि जगन्नाथ वैकुण्ठ पुरुषोत्तम । परिवारगणोपेत लक्ष्म्या सह जगत्पते ।।५१४।।इति ।

प्रतिष्ठाप्य मनोज्योतिरिति मन्त्रेण वैष्णवः । पाद्यादीनुपकल्प्यानुलेपनैरनुलेपयेत् ।।५१५।।

वस्त्रयुग्मं सितं दत्त्वा पुष्पादीनि समर्पयेत् ।
दीपान् प्रज्वालयेच्छक्त्या कुर्य्यात् कुसुममण्डपम् ।।५१६।।
गीतवाद्यादिभिः शान्तिपाठैः स्तोत्रैश्च कीर्त्तनैः ।
आरभेताशठः पूजां गुरुं सम्पूज्य भक्तितः ।।५१७।।

---

अनुलेपनैस्तुलसीकाष्ठचन्दनमिश्रित-मलयजकुङ्कुमकर्पूरागुरुकस्तूरिकादिपङ्कैः, अनुलेपयेद्देवम् । तथा च स्कान्दे तत्रैव—'तुलसीदारुजातेन चन्दनेन विलेपनम् । कुङ्कुमेन महाभाग कर्पूरागुरुचर्च्चितम् । पद्म-काश्मीरगन्धैश्च मृगनाभिविमिश्रितम् ।।' इति । अत्र च प्रकल्पयेदिति पूर्व्वश्लोकस्थक्रिययान्वयः ।।५१५।।

पुष्पाणि मल्लिकामालती-चम्पकादीनि, शब्देन तुलसी-मञ्जरीदल-विल्वपत्रादीनि । तथा कुष्माण्ड-नारिकेलफलादीनि च ग्राह्याणि । तथा च तत्रैव—'मल्लिकामालतीपुष्पैश्चम्पकैः केतकीदलैः । विल्वपत्रैर-खण्डैश्च तुलसीदलकोमलैः ।। अन्यैर्नानाविधैः पुष्पैः करवीरैः सितासितैः । यूथिकाशतपत्रैश्च तथान्यैः कालसम्भवैः ।। पूजनीयो महाभागो महाभक्त्या जनार्द्दनः । कुष्माण्डैर्नारिकेलैश्च खर्ज्जूरैर्दाड़िमैस्तथा ।। वीजपूरैः पूगफलैः सुनिष्पन्नैः सुशोभनैः । द्राक्षाफलैर्जातिफलै रम्भावृक्षसमुद्भवैः ।।' इति ।।५१६।।

स्तोत्रादीनि च तत्रैवोक्तानि—'शान्तिपाठं शास्त्रपाठं गीतापाठं तृतीयकम् । सहस्रनाम चातुर्थं पञ्चमं गजमोक्षणम् । बालस्य चरितं विष्णोः पठनीयं पुनः पुनः ।।' इति । अशठः भगवदर्च्चनगुरुपूजादौ वित्तादि-शाठ्यहीनः सन् । तथा च तत्रैव—'श्राद्धे दाने तथा पर्व्वतीर्थव्रतमखेषु च । वित्तशाठ्यं न कुर्व्वीत सर्व्वधर्म्म प्रयोजने ।।', भविष्ये च—'विभवे सति यो मोहान्न कुर्य्याद्विधिविस्तरम् । न तत्फलमवाप्नोति देवद्रोही स उच्यते ।।'; प्रथमं भक्त्या गुरुं सम्यक् पूजयित्वा पश्चात् पूजामारभेत; तथा स्कान्दे तत्रैव—'अतिक्रम्य नरो यस्तु गुरुं धर्म्मोपदेशकम् । विप्रेन्द्र स्वेच्छया पुण्यं कुर्व्वाणो नरकं व्रजेत् ।। अभिवाद्य गुरुं तस्माद्-धर्म्मकार्य्याणि कारयेत् । धर्म्ममर्थञ्च कामञ्च यदीच्छेदात्मनो हितम् ।। दद्यात् स्वशक्तितो भक्त्या गां महीं काञ्चनं वसु । शुक्लं धान्यञ्च वस्त्रञ्च भूषणं मधुरं वचः । ततः पूजा विधातव्या देवक्याः केशवस्य च ।।' इति ।।५१७।।

---

अथ तत्र जयन्तीव्रते आवाहनमन्त्रः

हे जगन्नाथ ! हे वैकुण्ठ ! हे पुरुषोत्तम ! हे जगत्पते ! आप रमादेवी के सहित सपरिकर आगमन करें आगमन करें ।।५१४।।

अनन्तर विष्णुभक्ति परायण व्यक्ति, देव प्रतिमा की प्रतिष्ठा 'मनोज्योतिः' प्रभृति मन्त्र के द्वारा करके पाद्यादि अर्पण करे । पुनः तुलसीकाष्ठ चन्दन समन्वित श्वेत चन्दन, कुङ्कुम, कर्पूर, अगुरु, एवं कस्तुरी प्रभृति पङ्क द्वारा प्रभु के अङ्क में विलेपन प्रदान करे । अनन्तर शुभ्र वस्त्रद्वय अर्पण पूर्वक पुष्प प्रभृति प्रदान कर साध्यानुसार दीपसमूह प्रज्वलित करके पुष्पमण्डप निर्म्माण करे । तत्पश्चात् भक्तिमान् होकर श्रीगुरुदेव की पूजा करके वित्तशाठ्य वर्जन पूर्वक गीत, वाद्य, शान्तिपाठ, एवं स्तवपाठादि के द्वारा देव प्रतिमा की पूजा में प्रवृत्त होना चाहिये ।।५१५-५१७।।

अथ तत्रादौ श्रीदेवकीपूजा

अदिते देवमातस्त्वं सर्व्वपापप्रणाशिनि । अतस्त्वां पूजयिष्यामि भीतो भवभयस्य तु । ५१८

पूजितासि यथा देवैः प्रसन्ना त्वं वरानने । पूजिता मे तथा भक्त्या प्रसादं कुरु सुव्रते ।।५१९।।

यथा पुत्रं हरिं लब्ध्वा प्राप्ता ते निर्वृ ति परा । तामेव निर्वृतिं देवि स्वपुत्रात् दर्शयस्व मे ।।५२०

मन्त्रेणानेन सम्पूज्य देवकीं कृष्णमर्च्चयेत् । ततः समातृकायार्घ्यं तस्मै पूर्व्ववदर्पयेत् ।।५२१।।

अथ तत्र पूजामन्त्रः

अवतारसहस्राणि करोषि मधुसूदन । न ते संख्यावताराणां कश्चिज्जानाति वै भुवि ।५२२।।

देवा ब्रह्मादयो वापि स्वरूपं न विदुस्तव । अतस्त्वां पूजयिष्यामि मातुरुत्सङ्गसंस्थितम् ।।५२३

वाञ्छितं कुरु मे देव दुष्कृतं चैव नाशय । कुरुष्व मे दयां देव संसारार्त्तिभयापह ।।५२४।।इति ।

अथ अर्घ्यमन्त्र.

जातः कंसबधार्थाय भूभारोत्तारणाय च । देवतानां हितार्थाय धर्मसंस्थापनाय च ।।५२५।।

कौरवाणां विनाशाय दैत्यानां निधनाय च । गृहाणार्घ्यं मया दत्तं देवक्या सहितो हरे ।।५२६।।

इति ।

---

अनेन अदिते इत्यादिनादौ देवकीं सम्पूज्य ततः कृष्णं पूजयेत्, समातृकाय देवकीसहिताय । तथा च तत्रैव—'कृष्णाय प्रथमं दद्याद्देवकीसहिताय च । अर्घ्यं मुनिवरश्रेष्ठ सर्व्वकामफलप्रदम् ।।' इति । अतएव मन्त्रेऽपि, 'देवक्या सहितो हरे' इति । मन्त्रविशेषश्च तत्रैव—'श्रीकृष्णाय देवकीसहिताय सगणाय सपरिवाराय लक्ष्मीसहिताय अर्घ्यं नमः' इति पूर्व्ववत्, इति नारिकेलेन शुभ्रेणेत्यादिकं यत् पक्षवर्द्धिनीव्रतादावप्युक्तं, तदनुसारतः पुष्पादिसहितं शुभ्रनारिकेलशस्यं शङ्खे निधाय तेनार्घ्यं दद्यादित्यर्थः ।।५१८-५२६।।

---

अथ तत्रादौ श्रीदेवकीपूजा

उक्त पूजा के आदि में श्रीदेवकी देवी की पूजा करनी चाहिये । वही कहते हैं—'हे आदिते ! हे देवमातः ! आप सर्वपातक विनाशिनी हैं । अतएव मैं संसार भय से भीत होकर आपकी पूजा करता हूँ । हे वरानहे ! हे सुव्रते ! देवगण कर्त्तृक पूजित होकर जिस प्रकार आप प्रसन्न हुईं, ऐसे ही भक्तिसहित मेरे द्वारा पूजित होकर प्रसन्न हूजिये । हे देवि ! भगवान् श्रीहरि को पुत्र रूप में प्राप्त कर जिस प्रकार आपने परमानन्द प्राप्त किया है, आप उन्हीं निजनन्दन के सहित मुझको वैसा आनन्द प्रदान कीजिये ।' इस प्रकार अर्थयुक्त मन्त्रोच्चारण पूर्वक श्रीदेवकी देवी की पूजा करके श्रीकृष्ण-पूजा में प्रवृत्त होना चाहिये । अनन्तर समातृक श्रीप्रभु को पूर्ववत् अर्घ्य निवेदन करे ।।५१८-५२१।।

अथ तत्र पूजामन्त्रः

हे मधुसूदन ! आप सहस्र सहस्र अवतार ग्रहण करते हैं, जगत् में ऐसा कोई नहीं है, जो आपके उन अवतारों की गणना करके पूरा कर सके । हे प्रभो ! आपके स्वरूप को ब्रह्मादि देववृन्द भी नहीं जानते हैं, अतएव, जननी के क्रोड़स्थित आपकी पूजा करूँगा । हे देव ! हे भवभयहारिन् ! मदीय अभीष्ट पूर्ण कीजिये पातक नाश कीजये । और मुझ पर करुणा दिखाइये । ५२२-५२४।।

अथ अर्घ्यमन्त्रः

हे हरे ! कंसबध, भूभार-हरण, देवताओं का मङ्गल-विधान, धर्म-संस्थापन, कौरवनिपात, एवं दैत्यसंहार करने के निमित्त आपका आविभाव है । मैं आपको अर्घ्य प्रदान करता हूँ । आप देवकी माता के सहित उसको ग्रहण कीजिये ।।५२५-५२६।।

अथ अर्घ्यमाहात्म्यञ्च

स्कान्दे तत्रैव—

दत्त्वा च सकलामुर्व्वींससागरनगान्विताम् । अर्घ्यदानेन तत् पुण्यं लभते मानवो भुवि ।।५२७
इति ।

धूपदीपौ समर्प्याथ नैवेद्यं विविधं शुभम् । फलानि च विचित्राणि ताम्बूलादीनि चार्पयेत् ।।५२८

कृत्वा नीराजनं गीतं नृत्याद्युत्सवमाचरन् । कुर्य्याज्जागरणं कृष्णबाल्यलीलाकथादिना ।।५२९

अथ तन्माहात्म्यम्

स्कान्दे तत्रैव—

जागरे पद्मनाभस्य पुराणं पठते तु यः । जन्मकोटिकृतं पापं दहते तुलराशिवत् ।।५३०।।इति ।

प्रातः कृत्वा क्रियां नित्यां तन्मुर्त्तिं गुरुवेऽर्पयेत् ।
वस्त्रादिकं दक्षिणाञ्च दत्त्वा कुर्व्वीत पारणम् ।।५३१।।

किञ्च तत्रैव—

विधिनानेन संयुक्तां जयन्तीञ्च करोति यः । नारी वोद्धरते भक्त्या पुरुषानेकविंशतिम् ।।५३२

संक्षेपेण च यः कुर्य्याज्जयन्तीं हरिवल्लभाम् । मानसेष्टफलं प्राप्य विष्णुलोकं स गच्छति ।।५३३

---

सकलां पृथ्वीं दत्त्वा यत् पुण्यं लभते, तदर्घ्यदानेन लभते इत्यर्थः ।।५२७।।

विविधं घृतपक्वपायसाद्यनेकप्रकारं, शुभं परमोत्कृष्टं, फलानि च कुष्माण्डादीनि, तानि स्कान्दोक्तानि लिखितान्येव । आदि-शब्देन दर्पणच्छत्रचामरादीनि च ।।५२८।।

कृष्णस्य बाल्यलीलायाः कथा कथनं तदादिना, आदि-शब्देन तच्छ्रवणादि, प्रौढ़लीलाकथादि च । तथा च तत्रैव 'बालस्याचरितं विष्णोः' इति लिखितमेव । किञ्च, जागरणप्रसङ्गे—'चरितं देवकीसूनोर्वाचनीयं विचक्षणैः' इति ।।५२९।।

दहते दहति, तूलराशिवदिति यथाग्निस्तूलराशिं सद्यो दहेत्तद्वदित्यर्थः । हरत इति पाठेऽपि तथैवार्थः । यद्वा, वायुर्यथा तूलराशिं हरतीति ।।५३०।।

तां मूर्त्तिं पूर्व्वर्निर्म्मितां पूजितां श्रीदेवकीसहितां भगवत्प्रतिकृतिम्, एवं विसर्ज्जनं कृतमस्तीति बोद्धव्यम् ।

---

अथ अर्घ्यमाहात्म्यञ्च

स्कन्दपुराण के ब्रह्म-नारद-संवाद में लिखित है—भूतल में श्रीहरि को अर्घ्य अर्पणकर, मानव ससागरा सपर्वता वसुमती दान का पुण्य प्राप्त करते हैं ।।५२७।।

अनन्तर, धूप, दीप, विविध परमोत्तम नैवेद्य एवं उत्कृष्ट-उत्कृष्ट फल अर्पणपूर्वक ताम्बूल प्रभृति निवेदन करे । तत्पश्चात् आरात्रिक करके नृत्य-गीतादि उत्सव एवं श्रीकृष्ण की बाल्यलीला प्रभृति का कीर्त्तन करके रात्रि जागरण करे ।।५२८-५२९।।

अथ तन्माहात्म्यम्

स्कन्दपुराण के उक्त प्रकरण में लिखित है—पद्मनाभ श्रीहरि के जागरण में पुराणपाठ करने से कोटि जन्मार्जित पापसमूह अग्नि में तुलाराशि के समान भस्मीभूत होते हैं ।।५३०।।

प्रत्यूष में नित्यकृत्य सम्पन्न करके उक्त श्रीभगवन्मूर्त्ति, वस्त्रादि एवं दक्षिणा श्रीगुरुदेव को अर्पण करके पारण करना चाहिये ।।५३१।।

स्कन्दपुराण के उक्त स्थल में और भी लिखित है—भक्तिपूर्वक उक्त पद्धति से जयन्ती व्रत सम्पन्न

अथ पापनाशिनीव्रतम्

ब्रह्मपुराणे तत्रैव—

यदा तु शुक्लद्वादश्यां पुष्या भवति कर्हिचित् । तदा सा तु महापुण्या कथिता पापनाशिनी ॥५३४

सगरेण ककुत्स्थेन धुन्धुमारेण गाधिना । तस्यामाराधितः कृष्णो दत्तवानखिलां भुवम् ॥५३५

वाचिकान्मानसात् पापात् कायिकाच्च विशेषतः । सप्तजन्मकृताद्घोरान्मुच्यते नात्र संशयः ॥५३६

इमामेकामुपोष्यैव पुष्यानक्षत्रसंयुताम् । एकादशीसहस्रस्य फलमाप्नोति मानवः ॥५३७॥

स्नानं दानं जपो होमः स्वाध्यायो देवतार्च्चनम् ।

यदस्यां क्रियते किञ्चित्तदनन्तगुणं भवेत् ॥५३८॥

तस्मादेषा प्रयत्नेन कर्त्तव्या फलकाङ्क्षिभिः ॥५३९॥

अथ तद्व्रतविधिः

गुरुं प्रणम्य नियमं स्वीकुर्य्याद्व्रतहेतुकम् । कुम्भमामलकीमूले पूर्ववत् स्थापयेद्व्रती ॥५४०

अथ तत्र सङ्कल्पमन्त्रः

द्वादश्यान्तु निराहारः स्थित्वाऽहमपरेऽहनि । भोक्ष्यामि जामदग्न्येश शरणं मे भवाच्युत ॥५४१

इति ।

---

तच्च सर्व्वत्र साधारणतया प्राप्तत्वान्न स्पष्टं लिखितम्; आदि-शब्देन शक्तौ कुण्डलकञ्चुकोष्णीषमुद्रिकादि ॥ ॥५३१-५३३॥

---

करने पर नर, नारी सब ही (इक्कीस) एकविंशति कुल की रक्षा कर सकते हैं। संक्षेप से भी श्रीहरि प्रीतिकरी जयन्ती व्रत का अनुष्ठान करने पर मानसिक अभीष्ट लाभ होकर वैकुण्ठ गमन कर सकता है ॥ ॥५३२-५३३॥

अथ पापनाशिनीव्रतम्

ब्रह्मपुराण के उक्त प्रकरण में लिखित है—शुक्लपक्ष की द्वादशी तिथि में पुष्य नक्षत्र का योग होने पर उसी का नाम 'पापनाशिनी' है। यह तिथि महापुण्य स्वरूपिणी है। इस तिथि में राजा सगर, ककुत्स्थ, धुन्धुमार एवं गाधि,—इन सबने श्रीहरि की उपासना की थी, तज्जन्य ही भगवान् ने उनको समग्र धरणी-मण्डल प्रदान किया था। इस व्रत का अनुष्ठान करने पर सप्तजन्मार्जित घोर, वाचिक, मानसिक, विशेषतः दैहिक पातकों से निःसन्देह छुटकारा मिलता है। पुष्या नक्षत्रयुक्त द्वादशी में उपवासी रहने से सहस्र एकादशी फल लाभ होता है। पुष्या नक्षत्रयुक्त इस पापनाशिनी द्वादशी में स्नान, दान, जप, होम, वेदाध्ययन किंवा देवपूजा, प्रभृति, जो कोई कार्य्य किया जाय,—वह सब अनन्तगुण फलदायक होते हैं। अतएव यत्नपूर्वक फलाकाङ्क्षी मनुष्यों को यह पापनाशिनी व्रताचरण करना चाहिये ॥५३४-५३९॥

अथ तद्व्रतविधिः

व्रती व्यक्ति को प्रथमतः श्रीगुरुदेव को प्रणाम करके व्रताचरण निमित्त नियम ग्रहण करना चाहिये। एवं पूर्व पूर्ववत के समान धात्री वृक्ष मूल में कुम्भ स्थापन करना चाहिये ॥५४०॥

अथ तत्र सङ्कल्पमन्त्रः

हे जामदग्न्येश ! हे अच्युत ! मैं द्वादशी में उपवास करके दूसरे दिन भोजन करूँगा। आप मेरे शरण स्थान हूजिये ॥५४१॥

वारिपूर्णं ततः पात्रं न्यसेत् कुम्भोपरि व्रती । सुन्दरं ताम्ररचितं वेणुरचितमेव वा ॥५४२॥
माषकेण तदर्द्धेन तदर्द्धेनाथवा कृतम् । हैमं परशुरामञ्च स्नपितं स्थापयेत्ततः ॥५४३॥
दत्त्वा वस्त्रयुगच्छत्रपादुकाः श्वेतचन्दनैः । आलिप्य तुलसीपुष्पैरभ्यर्च्याङ्गानि पूजयेत् ॥५४४

अथ तत्राङ्गपूजा

विशोकायेति चरणौ जानुनी विश्वरूपिणे । हयग्रीवायेति चोरू कटिं दामोदराय च ॥५४५॥
कन्दर्पायेति वै गुह्यं नाभिं वै पद्ममालिने । अनन्तायेति जठरं श्रीकण्ठायेति वै गलम् ॥५४६॥
बाहू हैमाङ्गदायेति वैकुण्ठायेति मस्तकम् । ज्योतीरूपायेति नेत्रे नासाग्रं शोकनाशिने ॥५४७॥
ललाटं वामनायेति रामायेति श्रुवौ यजेत् । सर्व्वात्मने समस्ताङ्गं शस्त्राणि स्वस्वसंज्ञया ॥५४८
प्रदाय पूर्व्ववच्चार्घ्यं धूपदीपौ समर्प्य च । नैवेद्यादि प्रदायाथ देवं सम्प्रार्थयेच्च तम् ॥५४९॥

अथ तत्र अर्घ्यमन्त्रः

नमस्ते देवदेवेश जामदग्न्य नमोऽस्तु ते । गृहाणार्घ्यं मया दत्तमामल्या सहितो हरे ॥५५०॥

अथ तत्र प्रार्थनामन्त्रः

जामदग्न्य नमस्तेऽस्तु क्षत्रियान्तकराय च । सर्व्वाणि यानि पापानि सप्तजन्मकृतान्यपि ॥५५१
क्षयं यान्तु ममैवाद्य त्वत्प्रसादाच्च भार्गव । वाचिकं मानसं पापं ज्ञानतोऽज्ञानतोऽपि वा ॥५५२

---

माषकेण सुवर्णस्येति ज्ञेयम्, हैममिति विशेषणात् । कृतम्—विनिर्म्मितम् ॥५४३॥

'विशोकाय नमः' इति चरणौ यजेत् पूजयेदित्युत्तरेणान्वयः । एवं पूर्व्ववत सर्व्वत्रैवोन्नेयम् । अतो यत्रेति-शब्दो नास्ति, तत्र सोऽध्याहार्य्य इति । यत्र एते सर्व्वे मन्त्रा इति । तम्—श्रीपरशुरामरूपम् ॥५४५-५४९॥

---

अनन्तर व्रती, जलपूर्ण ताम्रपात्र वा वेणुपात्र घट के ऊपर स्थापन करे । पश्चात् एक माषे अथवा आध माषे अथवा उससे भी आधे सुवर्ण द्वारा परशुराम की प्रतिमा निर्माण करे और उसको स्नान कराकर पूर्वोक्त पात्र में स्थापन करे । अनन्तर दो वस्त्र, छत्र एवं पादुका प्रदान कर श्वेत चन्दन के द्वारा विलेपन पूर्वक तुलसी एवं पुष्प द्वारा पूजा करके अङ्ग पूजा करे ॥५४२-५४४॥

अथ तत्राङ्गपूजा

चरणद्वय में विशोकाय नमः, जानुयुगल में विश्वरूपिणे नमः, ऊरुद्वय में हयग्रीवाय नमः, कटिद्वय में दामोदराय नमः, जठर में अनन्ताय नमः, गलदेश में श्रीकण्ठाय नमः, नेत्रयुगल में ज्योतीरूपाय नमः, नासाग्र में शोकनाशिने नमः, ललाट में वामनाय नमः, कर्णयुगल में रामाय नमः, कहकर पूजा करे । सर्वाङ्ग में सर्वात्मने नमः, कहकर पूजा करे । अनन्तर निज-निज नामोच्चारण पूर्वक आयुधसमूह की पूजा करे । तत्पश्चात् पूर्ववत् अर्घ्य, धूप-दीप प्रदान करके नैवेद्य प्रभृति अर्पण पूर्वक प्रार्थना करना चाहिये ॥ ॥५४५-५४९॥

अथ तत्र अर्घ्यमन्त्रः

हे देव देवेश ! आपको नमस्कार । हे जामदग्न्य ! आपको नमस्कार है । हे हरे ! मद्दत्त आमलकी समन्वित यह अर्घ्य ग्रहण करो ॥५५०॥

अथ तत्र प्रार्थनामन्त्रः

हे जामदग्न्य ! हे क्षत्र कुलान्तक ! आपको नमस्कार । हे भार्गव ! भवदीय प्रसाद से अद्य मेरे सात जन्म कृत पातकसमूह विनष्ट हों । मैंने जानकर, वा विना जानकर जो सब वाचिक और मानसिक पाप

आयुर्यशस्तथारोग्यं धनं धान्यञ्च सम्पदम् । सौभाग्यं तव भक्तस्य सन्तानं विपुलं भवेत् ।।५५३

सर्व्वान् कामानाप्नुवानि दिव्यं सौख्यं निरन्तरम् ।
अन्तेऽप्यस्तु ममेशान भक्तिस्त्वच्चरणे प्रभो ।।५५४।।

जनार्द्दन हृषीकेश लक्ष्मीनाथ सुरार्च्चित । राम राम महावाहो कार्त्तवीर्य्यविनाशन ।।५५५।।

एतत् सर्व्वं मया दत्तं ज्ञानं ज्ञेयं तवाच्युत । मामुद्धर जगन्नाथ दयां कृत्वा ममोपरि ।।५५६।।

अथ धात्रीपूजा

पिता पितामहाश्चान्ये अपुत्रा ये च गोत्रिणः । वृक्षयोनिं गता ये च ये च कीटत्वमागताः ।।५५७

रौरवे नरके ये च महारौरवसंज्ञके । वियोनिं च गता ये च ये च ब्रह्माण्डमध्यगाः ।।५५८।।

पिशाचत्वं गता ये च ये च प्रेतत्वमागताः । ते पिबन्तु मया दत्तं धात्रीमूले सदा पयः ।।५५९

ते सर्व्वे तृप्तिमायान्तु धात्रीमूलनिषेचनात् ।।५५०।।

इति धात्रीं चाभिषिच्य वारानष्टोत्तरं शतम् ।
ताञ्च प्रदक्षिणीकृत्य कुर्य्याज्जागरणं व्रती ।५६१।।
प्रातश्च देवं नीराज्य नित्यं कर्म्म समाप्य च ।
मूर्त्यादि गुरवे दत्वा प्राग्वत् पारणमाचरेत् ।।५६२।।
फाल्गुने मासि यद्येषा द्वादशी पापनाशिनी ।
भवेत्तदा व्रतस्यास्य महिमा स्याद्विशेषतः ।।५६३।।

---

ज्ञानादिकञ्च सर्व्वं तव तुभ्यं दत्तमर्पितम् ।।५५६।।
प्राग्वत्—शक्त्या ब्राह्मणभोजनादिना ।।५६२।।

---

किया है, वे सब पाप विनष्ट हो जायें । हे देव ! भवदीय भक्त की परमायुः, यशः, आरोग्य, धन, धान्य, सम्पद, सौभाग्य, सन्तति, निरन्तर दिव्यसुख प्रभृति की वृद्धि हो । हे जनार्दन ! हे हृषीकेश ! हे लक्ष्मीनाथ! हे सुरार्चित ! हे राम ! हे राम ! हे महावाहो ! हे शतवीर्य्यविनाशन ! हे ईशान ! हे प्रभो ! अन्तिम समय में आपके चरण कमलों में मेरी अविचला भक्ति रहे । हे अच्युत ! आपको ज्ञान एवं ज्ञेय सबही प्रदान किया । हे जगन्नाथ ! मुझ पर दया करके मेरी रक्षा करो ।।५५१-५५६।।

अथ धात्रीपूजा

मेरे पिता, पितामह, एवं अन्यान्य पुत्रहीन सगोत्र, जो वृक्ष योनि वा कीट योनि को प्राप्त हुए हैं, जो रौरव नरक में निपतित हैं, जो कुयोनि में गये हैं, जो ब्रह्माण्ड मध्यस्थ और पिशाच योनि अथवा प्रेतयोनि को प्राप्त हुए हैं । वे सदा इस धात्री मूल में मेरा दिया हुआ जल पान करें । इस धात्री की मूल को सींचने से वे तृप्ति को प्राप्त हों । इस मन्त्र को उच्चारण कर धात्री तरु को अष्टोत्तरशत वार सींचे और फिर व्रती व्यक्ति, उसकी प्रदक्षिणा करके नित्यकर्म सम्पन्न करे, और देवता की प्रतिमा प्रभृति सब वस्तु, श्रीगुरुदेव को प्रदान करे । एवं पूर्ववत् ब्राह्मण भोजन प्रभृति करायके पारण करना चाहिये । रात्रि जागरण आरती प्रभृति का अनुष्ठान पूर्ववत् ही करना चाहिये । फाल्गुन मास में यह पापनाशिनी द्वादशी होने पर इस व्रत का माहात्म्य अधिकतर होता है ।।५५७-५६३।।

इति क्रमेण लिखितं विजयादिव्रतत्रयम् । भविष्योत्तरस्कान्दाभ्यां श्रीब्रह्माण्डपुराणतः ।।५६४
अन्येऽपि द्वादशीभेदा बहवः सन्ति विश्रुताः । अग्रतो लेखनीयास्ते तत्तन्मासप्रसङ्गतः ।।५६५

इति श्रीगोपालभट्ट-विलिखिते श्रीभगवद्भक्तिविलासे विष्णुव्रतोत्सवो नाम त्रयोदशो विलासः ।

---

विजयादि-व्रतत्रयं तत्तद्विधिश्च भविष्योत्तरादितोऽलिखितमिति तत्र तत्रोक्तं संक्षिप्यार्थतो लिखितं, न तु तत्तद्वचनानि संगृहीतानि, ग्रन्थविस्तरभयादित्यर्थः। अतएव तत्तद्विधिलिखने भविष्योत्तर इत्यादिकं नोल्लिखितम्। क्रमेणेति भविष्योत्तरतो विजयाव्रतं, स्कन्दपुराणाज्जयन्तीव्रतं, ब्रह्माण्डपुराणाच्च पापनाशिनी-व्रतमिति ।।५६४।।

अन्येऽपि मत्स्यादि-द्वादश्यो निर्ज्जलाद्याश्च ।।५६५।।

इति त्रयोदशो विलासः ।

---

भविष्योत्तर पुराण एवं स्कन्दपुराण तथा श्रीब्रह्माण्डपुराण के मत से विजया, जयन्ती एवं पापनाशिनी नामक व्रतत्रय की विधि लिखी गई है। एतद्व्यतीत अन्यान्य जो सब द्वादशी के भेद विद्यमान हैं, उन सबका वर्णन तत्तन्मास कृत्य में होगा ।।५६४-५६५।।

इति श्रीगोपालभट्ट-विलिखिते श्रीभगवद्भक्तिविलासे विष्णुव्रतोत्सवो नाम त्रयोदशो विलासः ।

---

# चतुर्द्दश-विलासः

अगत्येकगतिं नत्वा हीनार्थाधिकसाधकम् । चैतन्यदेवं लिख्यन्ते मासपूजामहोत्सवाः ।।१।।

अथ मासकृत्यानि

आग्रहायणिको मासो मासेषु प्रवरः स्मृतः । मासानां मार्गशीर्षोऽहमित्युक्तो माधवेन यः ।।२।।

---

एवं श्रीवैष्णवानां प्रत्यहकृत्यानि प्रतिपक्षकृत्यानि च लिखित्वा अधुना प्रतिमासकृत्यानि लिखन् परम गुरु-श्रीभगवन्माहात्म्येनैव तत् सिध्यतीत्यभिप्रेत्य तन्नमस्कारपूर्व्वकमारभते—अगतीति । श्रीभगवन्माहात्म्य-मेव दर्शयति—अगतीनामेकामनन्यां गतिं शरणं, न च गतिमात्रं, किन्तु हीनानां सज्जन्म-कर्म्महीनानामति-नीचजनानां येऽर्थाः प्रयोजनानि धर्म्मादयो वा तेषामधिकं यथा स्यात्तथा साधकमिति। मासेषु द्वादशसु ये भगवत्पूजाविशेषरूपा महोत्सवास्ते ।।१।।

तत्रादौ मार्गशीर्षमासस्य कृत्यानि लिखन् तस्य सर्व्वमासाद्यतां दर्शयन् तन्माहात्म्यं लिखति—आग्रहायणिक इति। हायनस्य संवत्सरस्य अग्रवर्त्तित्वादाग्रहायणिक इति-व्युत्पत्त्या सर्व्वमासाद्यत्वेन सिद्धं तस्य श्रैष्ठ्यमेव लिखति—मासेष्विति । तत्र हेतुः—मासानामिति । य आग्रहायणिको माधवेन मधुकुल-समुद्रचन्द्रेण श्रीभगवता स्वयमेव विभूत्यध्याये उक्तः ।।२।।

---

जो सज्जन्म एवं सत् कर्मशून्य अतिहीन मानवों के भी धर्मादि के साधक हैं, उन अगति के गति, श्रीचैतन्यदेव को नमस्कार करके मास पूजा महोत्सव लिखा जाता है ।।१।।

अथ मासकृत्यानि

भगवान् श्रीकृष्ण ने कहा है—मास समूह के मध्य में मुझको ही अग्रहायण (अगहन) मास स्वरूप जानना चाहिये। अतएव अग्रहायण मास ही सब मासों में प्रधान है ।।२।।

तत्रादौ मार्गशीर्षकृत्यम्

स्नानदानव्रतार्च्चादिक्रियाः सनियमं कृताः । माघादाविव मार्गेऽस्मिन् भगवद्भक्ति-भूतिदाः ।।३

तुलसीकानने पूज्यो मार्गे मासि विशेषतः । भगवान्नृत्यगीतादिमहेन सह वैष्णवैः ।।४।।

विशेषतश्च मासेऽस्मिन् वस्त्रं शीतनिवारणम् । चित्रं भगवते दद्याज्जगज्जाड्यहरं हि तत् ।।५

किञ्च विष्णुधर्म्मे—

मार्गशीर्षे त्वेकभक्तं कृत्वा योऽभ्यर्च्चयेद्धरिम् ।
भोजयित्वा द्विजान्मुक्तः स्यादित्याह कलिप्रियः ।।६।।

नक्तं व्रतेन यो मासं मार्गशीर्षं हरिप्रियम् । नयेदसौ नरो याति विष्णुलोकं सनातनम् ।।७।।इति ।

क्रमाद्दशावताराणां मत्स्यादीनां सितासु च । यन्मार्गादिद्वादशीषु व्रतं दुर्व्वाससोदितम् ।।८।।

गौतमीयतन्त्रे—
मार्गशीर्षे तथा मासि प्रातः स्नात्वा नरोत्तमः । क्रमपूजां समासाद्य जपहोमौ तथाचरेत् ।।९।।

---

तत्रादौ श्रीभगवद्विभूतित्वेन तत्प्रियतया माघादिमाहात्म्यात् माघादिकृत्यानां स्नानादि सत्कर्मणाम् त्ता-प्याचरणात् फलविशेषः स्यादिति पुराणोक्त-मार्गशीर्षमाहात्म्यानुसारेण लिखति—स्नानेति । व्रतं भक्ष्यादि-नियमः, अर्च्चा भगवत्पूजा, आदि-शब्देन भगवद्वार्त्ता वैष्णवसङ्गमादि, सनियमं ससङ्कल्पं सनिश्चयं वा यथा स्यात्, अन्यथा शैथिल्यसम्भवात्; भगवद्भक्ति भूतिश्च सम्पदम्, यद्वा, भगवद्भक्तिरूपां लक्ष्मीं ददातीति तथा ताः ।।३।।

इदानीं तत्र कृत्यविशेषं दर्शयति—तुलसीति द्वाभ्याम् । वैष्णवैः सह नृत्यगीतादिरूपो यो महोत्सवस्तेन, भगवान् पूज्यः ।।४।।

चित्रम्—बहुप्रकारकम् ।।५।।

मुक्तः स्यात् श्रीवैकुण्ठप्राप्त्या पुनः संसारबन्धाभावात् । कलिप्रियः—श्रीनारदः ।।६।।

अधुना तत्र कृत्यं श्रीवराहपुराणोक्तं मत्स्यद्वादशीव्रतमुद्दिशन् तत्प्रसङ्गात् साम्येन द्वादशमासव्रतानामेव

---

तत्रादौ मार्गशीर्षकृत्यम्

अग्रहायण मास में सङ्कल्प पूर्वक स्नान, दान, व्रत एवं पूजादि करने पर यह सब कर्म माघादि मास के समान भगवद्भक्ति रूपा सम्पद् प्रदान करते हैं ।।३।।

विशेषकर अग्रहायण मास में वैष्णववृन्द के सहित मिलित होकर नृत्य-गीतादि महोत्सव सहित तुलसी कानन में श्रीहरि की पूजा करनी चाहिये । अधिकन्तु इस मास में शीतनिवारण हेतु विविध प्रकार के विचित्र वस्त्र भगवान् को अर्पण करने चाहिये । क्योंकि यह वस्त्र दान ही दाता की संसारज जड़ता को विदूरित करता है ।।२-५।।

और भी विष्णुधर्म में लिखित है – महर्षि नारद ने कहा है, अग्रहायण मास में एकाहारी होकर श्रीहरि की पूजा करके द्विजवृन्द को भोजन कराने पर मुक्ति प्राप्त हो सकती है । नक्त व्रताचरण (रात्रि के व्रता-चरण) करके श्रीहरिप्रिय अग्रहायण मास को अतिवाहित करने से सनातन विष्णुधाम में गमन करता है ।।

महर्षि दुर्वासा ने मार्गशीर्षादि द्वादश मास की शुक्लपक्षीया द्वादशीयों में क्रमशः मत्स्यादि दशावतार का, जो व्रत कहा है, उसका अनुष्ठान वैष्णवों को करना चाहिये ।।६-८।।

गौतमीय तन्त्र में लिखित है—अग्रहायण मास में प्रातः स्नान करके क्रम पूजा समापन पूर्वक जप होम करना नरश्रेष्ठ का कर्त्तव्य है । इस मास में प्रत्यह भगवान् को गुड़ के सहित पायसान्न अर्पण करना

पायसं गुड़संमिश्रं प्रत्यहं विनिवेदयेत् । एवं मासार्च्चनं कृत्वा भवेद्भाग्यधरः पुमान् ॥१०॥
देहान्ते मोक्षमाप्नोति प्रसादात् शार्ङ्गधन्वनः ।
तत् कार्य्यं तत्र तत्रैव ज्ञात्वा वाराहतो विधिम् ॥११॥
तत्तत् फलञ्च तत्रोक्तं काम्यत्वात्तन्न लिख्यते ॥१२॥

तथा च दशमे (२२।१)—

हेमन्ते प्रथमे मासि नन्दव्रजकुमारिकाः । चेरुर्हविष्यं भुञ्जानाः कात्यायन्यर्च्चनव्रतम् ॥१३॥

अथ पौषकृत्यम्

पञ्चरात्रे—

पौषस्यैकादशीं शुक्लामारभ्य स्थण्डिलेशयः । मासमात्रं हरिप्रीत्यै त्रिवारं स्नानमाचरेत् ॥१४॥
त्रिकालं पूजयेत् कृष्णं त्यक्तभोगो जितेन्द्रियः ।
पौषस्य द्वादशीं शुक्लां यावत् पुण्यफलप्रदाम् ॥१५॥
मासमेकं तदर्द्धं वा दशाहं वा तदर्द्धकम् । कृत्वा याति हरेः स्थानं पूजां दध्योदनोत्सवाम् ॥१६॥
गीतैर्वाद्यैर्नृतैर्भक्तैर्दधिभक्तं समं नयेत् । अर्पयित्वा हरौ भक्त्या प्रसादञ्चानयेत्ततः ॥१७॥

---

कृत्यता संक्षेपेणैकत्र एव लिखति—क्रमादिति द्वाभ्याम् । श्रीमत्स्यादीनां दशावताराणां क्रमेण मार्गशीर्षादि-द्वादशमासेषु । तथा श्रीपद्मनाभस्याश्विने, श्रीयोगेश्वरस्य च कार्त्तिके इत्येवं मार्गशीर्षादिमासेषु शुक्लद्वादशीषु दुर्व्वाससा मुनीश्वरेण यद्व्रतमुक्तं, तत्र तत्र व्रते विधिं श्रीवराहपुराणतो ज्ञात्वा तत्कार्य्यमेव वैष्णवैः, विष्णुव्रतत्वात् । अतएव तस्य फलं, यद्वा, अनिर्व्वचनीयं फलम्, तत्र वाराहे उक्तं दुर्व्वाससैव । ननु तर्हि तत्तद्व्रतं फलञ्च विवृत्य लिख्यतां, तत्र लिखति—काम्यत्वादिति । प्रायोऽत्र ग्रन्थे वैष्णवानामावश्यक कृत्यस्यैव लिखनात् । अत्र यत्तदित्यादौ वीप्साया अभावेऽपि व्रतानां बहुत्वात्तथा। तत्र तत्रेत्यादौ वीप्साप्रयोगाच्चान्यत्रापि वीप्सावितर्क्यैवेति ॥७-१२॥

स्थण्डिलेशयः भूमिशायी सन् ॥१४॥

दध्योदनेन तदर्पणेन तद्रूपो वा उत्सवो यस्यां तां हरेः पूजां कृत्वा ॥१६॥

नृत्यैः नृत्यैः, भक्तैः वैष्णवैः सम गीतादिभिर्दधिमिश्रितं भक्तं नयेत् भगवदग्रे समर्पणाय । प्रसादम् उच्छिष्टरूपं तत् ॥ ७॥

---

चाहिये । सम्पूर्ण मास, इस प्रकार अनुष्ठान करने पर मानव भाग्यवान् हो सकता है, एवं शार्ङ्गधन्वा श्रीमाधव की अनुकम्पा से देहत्याग के अनन्तर मुक्ति लाभ कर सकता है । वराह पुराणोक्त विधान को जानकर नक्तव्रत का अनुष्ठान करे । उक्त व्रत का फल वर्णन उक्त पुराण के तत्तत्स्थान में है । काम्यत्व के कारण यहाँ उसका वर्णन नहीं किया गया ॥९-१२॥

अतएव भागवत दशम स्कन्ध के २२।१ में वर्णित है—नन्द व्रजस्थित कुमारीगण हेमन्त के प्रथम मास में अर्थात् अग्रहायण मास में हविष्याशी होकर कात्यायनी अर्च्चनरूप व्रताचरण किये थे ॥१३॥

अथ पौषकृत्यम्

पञ्चरात्र में उक्त है—पौष मास की शुक्ला द्वादशी तिथि से आरम्भ कर एक मास यावत् भूतल में शयन एवं श्रीहरि प्रीत्यर्थ प्रत्यह तीन वार स्नान करे । जितेन्द्रिय होकर भोगवासना त्याग करके पौष मास की पुण्य फलदायिनी शुक्ला द्वादशी यावत् प्रत्यह त्रिसन्ध्या श्रीहरि की पूजा करनी चाहिये । सम्पूर्ण

यः प्रसादं हरेर्भक्त्या गृह्णाति प्रददाति च। भुङ्क्ते च वैष्णवैः सार्द्धं सोऽनन्तफलमश्नुते ॥१८॥

घृतप्रस्थेन देवेशं पौषपुष्यसिते नरः। स्नापयित्वाश्वमेधस्य फलमाप्नोत्यसंशयम् ॥१९॥

अथ माघकृत्यम्

पाद्मे माघमाहात्म्ये विद्याधर-ध्रुवसंवादे—

माघे मासि कुरु स्नानं मणिकूटनदीजले। ऋषिसिद्धासुरैर्जुष्टे कथयामि च तद्विधिम् ॥२०॥

तत्र भाग्यवशान्माघो निकटः पञ्चमेऽहनि। पौषस्यैकादशीं शुक्लामारभ्य स्थण्डिलेशयः।

मासमेकं निराहारस्त्रिवारं स्नानमाचरेत् ॥२१॥

त्रिकालमर्च्चयेद्विष्णुं त्यक्तभोगो जितेन्द्रियः। माघस्यैकादशीं शुक्लां यावद्विद्याधरोत्तम ॥२२॥ इति।

पाद्मे श्रीदत्तात्रेय-कार्त्तवीर्य्यसंवादे—

सम्प्राप्ते मकरादित्ये पुण्ये पुण्यप्रदे सदा। सत्कार्य्यास्तिथयः सर्व्वाः स्नानदानादिकैः सदा ॥२३

कर्त्तव्यो नियमः कश्चिद्व्रतरूपी नरोत्तमैः। फलातिशयहेतोर्वै किञ्चिद्भोज्यं त्यजेद्बुधः ॥२४॥

---

माघकृत्यं चाखिलं पद्मपुराणादौ व्यक्तमेकत्रैवोक्तत्वात् पूर्व्ववदर्थतः संगृह्य स्वयमलिखित्वा तत्तद्वचनैरेव लिखति—सम्प्राप्त इत्यादिना प्रीयतामित्यन्तेन। सत्कार्य्याः सम्माननीयाः, अग्रतो यथाशक्तीत्युक्त्या सर्व्वत्र तथैव बोद्धव्यं, शास्त्रेष्वशक्यस्याविधेयत्वात्। आदि-शब्दात् किञ्चिद्भक्ष्यत्यागादि ॥२२॥

तदेवाभिव्यञ्जयति—कर्त्तव्य इत्यादिना। नियममेवाह—फलेति द्वाभ्याम्। किञ्चित् भोज्यं त्यजेदिति नित्यं प्रवृत्तानां भक्ष्याणां मध्ये किञ्चित्त्यजेदित्यर्थः ॥२४॥

---

पौष मास अथवा अर्ध मास किंवा दश दिन अथवा पञ्चदिन भी दध्योदन अर्पण पूर्वक श्रीहरि की पूजा करने पर श्रीहरि के धाम में गमन हो सकता है। श्रीहरि को निवेदन करने के निमित्त वैष्णववृन्द के सहित मिलित होकर नृत्य, गीत एवं वाद्य के सहित दधियुक्त अन्न ले जाय, अनन्तर भक्ति पूर्वक निवेदन करके श्रीहरि के समीप से प्रसाद आनयन करे। भक्तियुक्त अन्तःकरण से श्रीहरि का प्रसाद ग्रहण करने पर एवं अन्य को प्रदान करने पर अथवा वैष्णववृन्द के सहित भोजन करने पर अनन्त फल लाभ होता है। पौष मासो पुष्या समन्वित पूर्णिमा तिथि में पाँच सेर घृत के द्वारा देवदेव श्रीहरि को स्नान कराने पर मनुष्य निःसन्देह अश्वमेध यज्ञ का फल प्राप्त कर सकता है ॥१४-१९॥

अथ माघकृत्यम्

पद्मपुराण के माघ माहात्म्य के विद्याधर-ध्रुव-संवाद में वर्णित है—हे विद्याधर ! माघ मास समागत होने पर ऋषि, सिद्ध एवं असुरवृन्द द्वारा सेवित मणिकूट पर्वत के नदी जल में स्नान करो, मैं उस स्नान-विधि को कहता हूँ। तुम्हारे सौभाग्य से ही माघ मास आगत प्राय है। आज से पञ्चम दिन में माघ मास समागत होगा। पौष मास की शुक्लपक्षीया एकादशी तिथि से आरम्भ कर पूर्ण एक मास यावत् भूतल में शयन, उपवास एवं प्रत्यह तीन वार स्नान करना ॥२०-२१॥

हे विद्याधर श्रेष्ठ ! माघ मास की शुक्लपक्षीया एकादशी तिथि तक जितेन्द्रिय होकर भोगवासना परित्याग पूर्वक प्रत्यह वारत्रय श्रीविष्णु की पूजा करना ॥२२॥

पद्मपुराण के श्रीदत्तात्रेय-कार्त्तवीर्य-संवाद में लिखित है—सूर्य्य मकरराशिस्थ होने पर उस पुण्यस्वरूप पुण्यदायक समय में सर्वदा स्नान-दानादि द्वारा तिथिसमूह का सत्कार करना चाहिये ॥२३॥

माघ मास में व्रतस्वरूप किसी नियम धारण करना नरश्रेष्ठवृन्द का कर्त्तव्य है। प्रत्यह जो भोजन

भूमौ शयीत होतव्यमाज्यं तिलविमिश्रितम् । त्रिकालं चार्च्चयेन्नित्यं वासुदेवं सनातनम् ॥२५॥
दातव्यो दीपकोऽखण्डो देवमुद्दिश्य माधवम् । इन्धनं कम्बलं वस्त्रमुपानत्कुङ्कुमं घृतम् ॥२६॥
तैलं कार्पासकोषञ्च तूलीं तूलवतीं पटीम् । अन्नञ्चैव यथाशक्ति देयं माघे नराधिप ॥२७॥
स्वर्णञ्च रत्तिकामात्रं दद्याद्वेदविदे तथा । परस्याग्निं न सेवेत त्यजेद्विप्रः प्रतिग्रहम् ॥२८॥
माघान्ते भोजयेद्विप्रान् यथाशक्ति नराधिप । देया च दक्षिणा तेभ्य आत्मनः श्रेय इच्छता ॥२९
एकादशी-विधानेन माघस्योद्यापनं तथा । कर्त्तव्यं श्रद्दधानेन अक्षयस्वर्गवाञ्छया ॥३०॥
मकरस्थे रवौ माघे गोविन्दाच्युतमाधव । स्नानेनानेन मे देव यथोक्तफलदो भव ॥३१॥
इमं मन्त्रं समुच्चार्य्य स्नायान्मौनं समाश्रितः । वासुदेवं हरिं विष्णुं माधवञ्च स्मरेत् पुनः ॥३२

किञ्च —

उष्णेन वारिणा स्नानं यद्गृहे क्रियते नरैः । षड़ब्दफलदं तद्धि मकरस्थे दिवाकरे ॥३३॥
वहिःस्नानन्तु वाप्यादौ द्वादशाब्दफलं स्मृतम् । तड़ागे द्विगुणं राजन् वाप्यां तच्च चतुर्गुणम् ॥३४

---

अखण्डः अहोरात्र-मासव्यापी ॥२६॥

उद्यापनमच्छिद्रवाचनादिना नियमसमापनमेव, न तु पुनर्माघकृत्याकरणात्मकम्, एकादशीव्रतवत्तस्य नित्यत्वात् । तच्चाग्रे व्यक्तं भावि ॥३०॥

तत्र स्नानविधौ विशेषमाह— मकरस्थ इति द्वाभ्याम् । गोविन्देत्यादिना भक्त्या पुनः पुनः सम्बोधनं, स्नाने नामकीर्त्तनविशेषो वा, तथा वासुदेवमित्यादीनि च नामानि स्मरेत्, मनसि जपेत् लघु लघु कीर्त्तयेदिति वा, पुनरिति मुहुरित्यर्थ ॥३१-३२॥

---

किया जाय, सुधीगण तन्मध्य में से कुछ-कुछ माघ मास में वर्जन करें। ऐसा होने पर अधिकतर फल लाभ होता है। इस मास में भूतलशायी होना चाहिये। सतिल घृत द्वारा होम करे। एवं प्रत्यह वारत्रय सनातन श्रीहरि की पूजा करे ॥२४-२५॥

हे राजन् ! इस मास में पूर्ण एक मास यावत् भगवान् श्रीहरि के निमित्त सतत शक्त्यनुसार अहोरात्र स्थायी (अखण्ड) दीपक, काष्ठ, (अग्निताप हेतु) कम्बल, वस्त्र, पादुका, कुङ्कुम, घृत, तेल, कार्पासकोष, तूला, तुलवती पटी (वसन विशेष) एवं अन्नदान (तुलियों ऊपर रुई लपेट कर जो बत्ती आरती हेतु बनाई जाती है–उसको तूली कहते हैं) करे। इस मास में पराग्नि सेवन, एवं प्रतिग्रह वर्जन करना ब्राह्मण का कर्त्तव्य है। हे नृप ! माघ मास के शेष दिन में यथाशक्ति ब्राह्मण भोजन कराकर उनको दक्षिणा देनी चाहिये। यह कर्त्तव्य कल्याणकामी का है ॥२६-२९॥

अक्षय स्वर्गकामी, व्यक्ति, श्रद्धालु होकर एकादशी के विधानानुसार माघ व्रत का उद्यापन करे। अर्थात् व्रत की अच्छिद्रता के अवधारण वचन से नियम का समापन करे ॥३०॥

हे गोविन्द ! हे अच्युत ! हे माधव ! मैं मकरराशि गत सूर्य्य में स्नान करता हूँ। हे देव ! इस स्नान के कारण, आप यथारीति फल प्रदान करें। यह मन्त्रार्थ स्मरण कर मौन भाव से स्नान करे। तत्पश्चात् पुनर्वार वासुदेव, हरि, विष्णु एवं माधव नाम स्मरण करना चाहिये ॥३१-३२॥

और भी वर्णित है—मकर राशिस्थ भास्कर में उष्ण जल से घर में स्नान करने पर षड्वर्ष (छैः वर्ष) के स्नान का फल मिल जाता है। हे राजन् ! मुनियों ने कहा है—घर के वहिःस्थित दीर्घिका में स्नान करने से द्वादश वार्षिक स्नान का फल लाभ होता है। और तड़ाग स्नान, उसके द्विगुण, वृहत् जलाशय में

दशधा देवखाते तु शतधा तु महानदीम् । शतञ्चतुर्गुणं राजन् महानद्यास्तु सङ्गमे ।।३५।।
सहस्रगुणितं सर्व्वं तत् फलं मकरे रवौ । गङ्गायां स्नानमात्रेण लभते मानुषो नृप ।।३६।।
शतेन गुणितं माघे सहस्रं राजसत्तम । निर्द्दिष्टमृषिभिः स्नानं गङ्गायामुनसङ्गमे ।।३७।।

किञ्च —

अप्रावृतशरीरस्तु यः कष्टं स्नानमाचरेत् । पदे पदेऽश्वमेधस्य फलं प्राप्नोति मानवः ।।३८।।

भविष्योत्तरे च श्रीभगवद्युधिष्ठिरसंवादे—

पौषफाल्गुनयोर्मध्ये प्रातःस्नायी सदा भवेत् ।।३९।।

तत्र चोत्थाय नियमं गृह्णीयाद्विधिपूर्व्वकम् । माघमासमिमं पूर्णं स्नास्येऽहं देव माधव ।।४०।।

किञ्च —

अप्रावृतशरीरस्तु यः कृच्छ्रं स्नानमाचरेत् । वेदोक्तविधिना पार्थ सूर्य्यस्यार्घ्यं निवेदयेत् ।।४१
पितॄन् सन्तर्प्य तत्रस्थः समुत्तीर्य्य जलाशयात् । पदे पदेऽश्वमेधस्य फलं प्राप्नोति मानवः ।।४२।।
ततः स्नात्वा शुभे तीर्थे दत्त्वा शिरसि वै मृदम् । इष्टं देवं नमस्कृत्य पूजयेन्मधुसूदनम् ।।४३।।
शङ्खचक्रधरं देवं माधवं नाम पूजयेत् । वह्निं हुत्वा विधानेन ततश्चैकमना भवेत् ।।४४।।
तिल आमलकान्येव तीर्थे देयञ्च गोमयम् । तथा प्रज्वालयेद्वह्निं निःशीतार्थं द्विजन्मनाम् ।।४५।।

---

महानदीं प्रति, तस्यामित्यर्थः ।।३५।।

शतेन गुणितं सहस्रलक्षमित्यर्थः ।।३७।।

अप्रावृतशरीरत्वञ्च स्नानसङ्कल्पं स्नानार्थगमनञ्चारभ्य तर्पणावधि गृहागमनपर्यन्तं वा बोद्धव्यम् ।।३८

माघमासमिति माघस्नानारम्भे सङ्कल्पविशेषो दर्शितः । तत्र स्नानविधिश्च साधारण एवेति नात्र लिखितः ।।४०-४१।।

---

उसके चतुर्गुण, देवखात में दशगुण, एवं महानदी में स्नान शतगुण फलप्रद है । हे नृप ! महानदी के सङ्गम स्थल में स्नान करने पर चतुःशतगुण फल लाभ होता है एवं रवि, मकर राशिस्थ होने पर गङ्गास्नान करने से उक्त समस्त फलों के सहस्रगुण अधिक फल लाभ होता है । हे नृपवर ! ऋषिगण स्थिर किये हैं,– माघ मास में गङ्गा-यमुना सङ्गम में स्नान अर्थात् प्रयागतीर्थ स्नान, लक्षगुण फलप्रद है ।।३३-३७।।

और भी लिखा है – अनावृत शरीर से स्नान करने पर अर्थात् गृह में पुनरागमन पर्यन्त शरीर में वस्त्राच्छादन न कर क्लेश सहन पूर्वक स्नान करने से, प्रतिपद में अश्वमेधयज्ञ का फल लाभ होता है ।।३८

भविष्योत्तरपुराण में श्रीभगवान् एवं युधिष्ठिर-संवाद में लिखित है— पौष एवं फाल्गुन इन दोनों मासों के मध्य में अर्थात् माघ मास में सतत प्रात स्नान करना चाहिये । प्रभात में शय्या त्याग कर,–"हे देव ! हे माधव ! मैं सम्पूर्ण माघमास में स्नान करूँगा" यह कहकर यथाविधि नियम ग्रहण करना चाहिये ।।३९-४०

और भी वर्णित है—हे युधिष्ठिर ! पूर्ण माघ मास में नग्न शरीर से क्लेश पूर्वक स्नान करने पर, वेद विधान से सूर्य्यार्घ्य अर्पण करने से एवं जलगर्भ में स्थित होकर तर्पण कर जलाशय से गृह में प्रत्यावर्त्तन करने से प्रतिपद में अश्वमेध फल लाभ होता है । अनन्तर मस्तक में मृत्तिका लेपन पूर्वक शुभतीर्थ में स्नान करके अभीष्ट देव की वन्दना पूर्वक श्रीमधुसूदन की पूजा करे ।।४१-४३।।

चक्रधर प्रभु की पूजा माधव नाम से करके पश्चात् यथाविधि होम करता हुआ एक मनः होकर रहे । अनन्तर तिल और आमलकी फल अर्पण करके तीर्थ (घट) में गोमय लेपनपूर्वक ब्राह्मणों के शीतनिवारणार्थ

भोजनं द्विजदम्पत्योः पूजयेच्च विलेपनैः। कम्बलाजिनरत्नानि वासांसि विविधानि च ॥४६
चैलकानि च देयानि प्रच्छादनपटन्तथा। उपानहौ तथा राजन् माघस्नानेन दापयेत्।
अनेन विधिना राजन् माधवः प्रीयतामिति ॥४७॥

अथ माघस्नानस्य नित्यत्वम्

भविष्योत्तरे तत्रैव—

प्रयागं पुष्करं प्राप्य कुरुक्षेत्रमथापि वा। यत्र वा तत्र वा स्नायान्माघे नित्यमिति श्रुतिः ॥४८

किञ्च—

अवश्यमिति कर्त्तव्यं माघस्नानं यथाविधि ॥४९॥

पाद्मे—

अकामो वा सकामो वा माघस्नायी भवेन्नरः ॥५०॥

किञ्च, तत्रैव श्रीदत्तात्रेय-कार्त्तवीर्य्यसंवादे—

अमाघस्नायिनां नृणां निष्फलं जन्मकीर्त्तनम्। असूर्य्यगगनं यद्वदचन्द्रमुडुदण्डलम्।
तद्वन्न भाति सत्कर्म्म माघस्नानं विना नृप ॥५१॥
बुद्बुदा इव तोयेषु पुत्तिका इव जन्तुषु। जायन्ते मरणायैव माघस्नानविवर्ज्जिताः ॥५२॥

---

चैलकानि कन्थादीनि, माधवः प्रीयतामित्यनेन विधिना दापयेत् दद्यात् ॥४७॥

पुत्तिकाः सूक्ष्मकीटविशेषाः सद्योजन्ममरणाः। एवं माघस्नानभावेन जन्मकर्म्मादिवैफल्यान्नित्यत्वं साधितम् ॥५२॥

---

अग्नि प्रज्वालित करे। भोजन एवं विलेपन अर्पण, एवं कम्बल, अजिन, रत्न, विविध वसन प्रदान पूर्वक द्विज दम्पती की पूजा करनी चाहिये। हे राजन्! माघ स्नान में 'माधव सन्तुष्ट हों' इस बुद्धि से कन्या, आच्छादन वस्त्र, पादुका अर्पण करनी चाहिये। इस विधि से माघ स्नान करने पर भगवान् माधव सन्तुष्ट होते हैं ॥४४-४७॥

अथ माघस्नानस्य नित्यतवम

भविष्योत्तर पुराण के पूर्वोक्त प्रकरण में लिखित है—माघ मास में प्रयाग, पुष्कर, अथवा कुरुक्षेत्र के प्राप्त होने पर अथवा जिस किसी स्थान में ही क्यों न हो, नित्य स्नान करना चाहिये। इस प्रकार श्रुति-वाक्य प्रसिद्ध है ॥४८॥

और भी उक्त है—यथाविधि माघ-स्नान करना अवश्य कर्त्तव्य है ॥४९॥

पद्मपुराण में लिखित है—मनुष्य, अकाम, सकाम, जो भी हों, सबके पक्ष में माघ-स्नान करना एकान्त कर्त्तव्य है ॥५०॥

उक्त पुराण के दत्तात्रेय-कार्त्तवीर्य्य-संवाद में लिखित है—माघ मास में स्नान न करने से मानवों का जन्म धारण करना व्यर्थ होता है। हे राजन्! सूर्य्यमण्डल, चन्द्रमण्डल एवं नक्षत्रमण्डल व्यतीत जिस प्रकार नभोमार्ग शोभित नहीं होता है, उस प्रकार माघ मास व्यतीत सत्कर्म शोभित नहीं होता है। जिस प्रकार जल के मध्य में बुद्बुद एवं पुत्तिका नामक सूक्ष्म कोट जन्म ग्रहण पूर्वक सद्यः ही देहत्याग करता है, उस प्रकार माघ-स्नान वर्जित व्यक्तिगण भी मृत्यु के निमित्त ही जन्म ग्रहण करते हैं। अर्थात् माघ मास स्नान व्यतीत उनके जन्म और कर्म सब ही निष्फल होते हैं ॥५१-५२॥

किञ्च —

व्रतदानतपोभिश्च न तथा प्रीयते हरिः। माघे मज्जनमात्रेण यथा प्रीणाति माधवः ॥५३॥

किञ्च—

प्रीतये वासुदेवस्य माघस्नानं प्रकीर्त्तितम् ॥५४॥

अथ तत्राधिकारिनिर्णयः

पाद्मे तत्रैव—

सर्व्वेऽधिकारिणो ह्यत्र विष्णुभक्तौ यथा नृप।
सर्व्वेषां स्वर्गदो माघः सर्व्वेषां पापनाशनः ॥५५॥

अतएव भविष्योत्तरे तत्रैव—

ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः। प्रातः सर्व्वे प्रशंसन्ति सदा माघस्य मज्जनम् ॥५६
बालास्तरुणका वृद्धा नरनारी-नपुंसकाः। स्नात्वा माघं शुभे तीर्थे प्राप्नुवन्तीप्सितं फलम् ॥५७
ब्राह्मणः क्षत्रियो वैश्यो मन्त्रवत् स्नानमाचरेत्। तुष्णीमेव तु शूद्रस्य स्त्रीणाञ्च कुरुनन्दन ॥५८

अथ माघमाहात्म्यम्

तत्र कात्यायनः—

माघस्नायी नरो यः स्याद्दुर्गतिं नैव पश्यति। तन्नास्ति मानुषे लोके किल्विषं यन्न शोधयेत् ॥५९

---

अत्रुना भगवत्तोषणत्वात् परमनित्यत्वमाह—व्रतेति सार्द्धेन ॥५३॥

अत्र माघस्नाने, विष्णुभक्ताविति दृष्टान्तेन माघस्नानस्यापि विष्णुभक्तित्वमभिप्रेतम् ॥५५॥

प्रातर्मज्जनम् ॥५६॥

नरः—पुरुषः ॥५७॥

---

और भी लिखित है—माघस्नान मात्र से ही माधव हरि जिस प्रकार सन्तुष्ट होते हैं, व्रत, दान, किंवा तपस्या किसी से भी वैसे सन्तुष्ट नहीं होते हैं। वासुदेव की प्रीति के निमित्त ही माघ-स्नान का वर्णन किया गया है ॥५३-५४॥

अथ तत्राधिकारिनिर्णयः

पद्मपुराण के उक्तस्थान में लिखित है—हे नृप! विष्णुभक्ति में जिस प्रकार समस्त व्यक्ति अधिकारी हैं, इस प्रकार माघ मास सबके सम्बन्ध में ही स्वर्गप्रद एवं सबके सम्बन्ध में पाप क्षयकर है ॥५५॥

अतएव भविष्योत्तर पुराण के उक्त स्थान में उक्त है—ब्रह्मचारी गृहस्थ, वानप्रस्थ, भिक्षु यह सब माघ मास के प्रातःस्नान का आदर करते हैं। बालक, वृद्ध, युवा, स्त्री जाति किंवा क्लीव,—सब ही सम्पूर्ण माघ मास में पवित्र तीर्थ में स्नान करके अभिलाषानुरूप फल लाभ करते हैं। हे कौरव! ब्राह्मण, क्षत्रिय एवं वैश्यगण मन्त्र पाठ पूर्वक स्नान करें। किन्तु शूद्र एवं स्त्री जाति के पक्ष में मन्त्रपाठ की विधि नहीं है। केवलमात्र मौनावलम्वन करके स्नान करना चाहिये ॥५६-५८॥

अथ माघमाहात्म्यम्

उक्त विषय में कात्यायन ने कहा है—जो मनुष्य, माघस्नायी है, अर्थात् माघ मास में प्रातः स्नान करता है, उसको दुर्गति भोगनी नहीं पड़ती है। माघ स्नान से ध्वंस न हो, ऐसा पाप मर्त्यलोक में दृष्ट नहीं होता है ॥५९॥

भविष्योत्तरे तत्रैव—

माघमासे रटन्त्यापः किञ्चिदभ्यूदिते रवौ । ब्रह्मघ्नं वा सुरापं वा कं पतन्तं पुनीमहे ॥६०॥

प्रासादा यत्र सौवर्णाः स्त्रियश्चाप्सरसो यथा । दधिकुल्यास्तथा यत्र नद्यः पायसकर्द्दमाः ।

तत्र ते यान्ति मज्जन्ति ये माघे भास्करोदये ॥६१॥

किञ्च—

पितृपितामहैः सार्द्धं तथैव प्रपितामहैः । मातृमातामहैः सार्द्धं वृद्धमातामहैस्तथा ॥६२॥

एकविंशकुलैः सार्द्धं भोगान् भुक्त्वा यथेप्सितान् ।

माघमास्युषसि स्नात्वा विष्णुलोकं स गच्छति ॥६३॥

यो माघमास्युषसि सूर्य्यकराभिताम्रे, स्नानं समाचरति चारुनदीप्रवाहे ।

उद्धृत्य सप्तपुरुषान् पितृमातृतश्च, स्वर्गं प्रयात्यमलदेहधरो नरोऽसौ ॥६४॥

सौपर्णे श्रीनारदेन्द्रसंवादे—

दुर्लभो माघमासस्तु वैष्णवानामतिप्रियः । देवतानामृषीणाञ्च मुनीनां सुरनायक ॥६५॥

विशेषेण शचीनाथ माधवस्यातिवल्लभः । अधिको माघमासस्तु मासानान्तु शचीपते ॥६६॥

पौष्या तु समतीतायां यावद्भवति पूर्णिमा । माघमासस्य देवेन्द्र पूजा विष्णोर्विधीयते ॥६७॥

स्नानं विलेपनं धूपं नैवेद्यादि च शक्तितः । माघमासकृतं विष्णोः सर्व्वं भवति चाक्षयम् ॥६८॥

मासार्द्धं वा समग्रं वा दशाहं वा तदर्द्धकम् । यथाशक्त्या हरेः पूजां कुर्व्वन्नाप्नोति तत्पदम् ॥६९

---

भविष्योत्तरपुराण के पूर्वोक्त प्रसङ्ग में ही उक्त है—माघ मास में किञ्चित् सूर्य्योदय होने पर जलराशि से इस प्रकार वाक्य उच्चारित होता है,—"कौन व्यक्ति ब्रह्मघाती है ? किसने सुरापान किया है ? कौन व्यक्ति पतित हुआ है ? मैं उनको शुद्ध करूँगा।" जिस स्थान के सब मन्दिर स्वर्ण निर्मित हैं, अप्सरा-समूह जिस स्थान की रमणी हैं, जहाँ दधिकुल्या विराजमान हैं, एवं पायस ही जहाँ की नदी का कीचड़ (कर्द्दम) है, माघ मास के भास्करोदय के समय स्नानकारी व्यक्तिगण उस स्थान में गमन करते हैं ॥६०-६१

और भी उक्त है—माघ मास में प्रातः स्नान करने से, पिता, पितामह, प्रपितामह, माता, मातामह, वृद्धमातामह अर्थात् प्रमातामह, एवं एकविंशति (इक्कीस) कुल के सहित अभिलाषानुरूप भोगों को भोग करने के पश्चात् मनुष्य वैकुण्ठधाम में गमन करता है। जिस समय माघ मास के प्रातःकाल में सूर्य्य पूर्व-दिक् को अरुण वर्ण से रञ्जित करके उदित होते हैं, उस समय जो मानव मनोरम नदी प्रवाह में स्नान करता है वह स्वीय पितृ-मातृकुल के सप्त पुरुषों को उद्धार कर दिव्य शरीर धारण पूर्वक अमरपुर में गमन करता है ॥६२-६४॥

गरुड़पुराण के श्रीनारदेन्द्र संवाद में उक्त है—हे देवनायक ! माघ मास अति दुर्ल्लभ एवं वैष्णव, देवता ऋषि एवं मुनिवृन्द का परम प्रीतिकर है। हे शचीपते ! यह माघ मास श्रीहरि का अधिक प्रीतिप्रद है। यावतीय मास के मध्य में यह मास ही श्रेष्ठ है। हे अमरेश ! पौषी पूर्णिमा के बाद से पुनर्वार पूर्णिमागमन काल को माघ मास कहते हैं। उक्त समय में ही यथारीति श्रीहरि की पूजा करनी चाहिये। इस मास में श्रीहरि को स्नान कराने से एवं साध्यानुसार विलेपन, धूप, नैवेद्य प्रभृति अर्पण करने पर वह सब अक्षय होता है। सम्पूर्ण माघ मास अथवा अर्द्ध मास किंवा दश दिन, अथवा पाँच दिन मात्र भी अपनी शक्ति के अनुसार श्रीहरि की पूजा करने पर तदीय धाम में गति प्राप्त होती है ॥६५-६९॥

स्कान्दे ब्रह्मनारदसंवादे—

माघस्नानस्य माहात्म्यं शृणु भागवतप्रिय ।
त्वत्समो नास्ति लोकेऽस्मिन् विष्णोर्भक्तो महामुने । ७०॥

चक्रतीर्थे हरिं दृष्ट्वा मथुरायाञ्च केशवम् । यत् फलं लभते जन्तुर्माघस्नानेन तत् फलम् ॥७१॥
जितेन्द्रियः शान्तमनाः सदाचारेण सयुतः । स्नानं करोति यो माघे संसारी न भवेत् पुनः । ७२॥
ॐकारः सर्व्ववेदानां यथादौ परिगीयते । तथा विष्णुव्रतानान्तु माघस्नानं महामुने। ७३॥ इत्यादि

किञ्च तत्रैवान्यत्र—

मनसापि चिकीर्षन्ति माघस्नानन्तु ये नराः । ते घोरं न प्रयास्यन्ति संसारदुःखसङ्कुलम् ॥७४
सौरिमार्गं महाघोरं यमदूतान् यमन्तथा । स्वप्नेऽपि न हि पश्यन्ति माघस्नानरता नराः ॥७५
यदीच्छेद्विष्णुना वासं सुतान् सम्पदमात्मनः । माघस्नानं तदा कार्य्यं वर्षे वर्षे च नारद ॥७६॥
व्रतानि वैष्णवानीह मनसापि चिकीर्षति । तत्तस्य विलयं याति पापं जन्मशतोद्भवम् ॥७७॥

माघस्नानं नरः कृत्वा सदा दान्तमना व्रती ।
प्राप्नोति च पदं विष्णोः स्थानं त्रैलोक्यवन्दितम् । ७८॥

कृत्वा भूरि महापापं ज्ञानतोऽज्ञानतोऽपि वा । माघस्नानेन विप्रेन्द्र दह्यते तूलराशिवत् ॥७९

---

त्वत्समो विष्णुभक्तो नास्तीति परमगुह्यमेतत्, त्वं शृण्विति भावः ॥७०॥

वैष्णवानि व्रतानि माघस्नानादीनि, इह भारते वर्षे। यद्वा, अस्मिन् माघमासे विष्णूद्देशेऽन्यान्यपि व्रतानि एकभक्तादीनि यश्चिकीर्षति, तस्य तन्महापातकादिकम् ॥७७॥

पदमेवाह—स्थानमिति ॥७८॥

---

स्कन्दपुराण के ब्रह्म-नारद-संवाद में लिखित है— हे भागवतप्रिय ! हे महामुने ! त्वत् सदृश विष्णुभक्त इह लोक में नहीं है । अतएव माघ मास का माहात्म्य श्रवण करो । चक्रतीर्थ में श्रीहरि का, मथुरा में श्रीकेशव का दर्शन करने से माघस्नायी व्यक्ति वही फल प्राप्त करता है । जितेन्द्रिय, शान्तमनाः, एवं सदाचार परायण होकर माघ मास में स्नान करने पर पुनर्वार संसार में जन्म ग्रहण नहीं करना पड़ता है । हे महामुने ! प्रणव जिस प्रकार वेद का आदि है, ऐसे ही श्रीहरि के व्रतों में माघ-स्नान रूपी व्रत ही आदि है ॥७०-७३॥

उक्त प्रकरण में एवं अन्यत्र वर्णित है—मन में भी माघ-स्नान की इच्छा करने पर घोर क्लेश बहुल संसार से परित्राण लाभ होता है । माघ स्नानकारी व्यक्तिवृन्द को महाघोर शमन मार्ग, शमन दूत एवं शमनराज का दर्शन स्वप्न में भी नहीं करना पड़ता है ॥७४-७५॥

हे नारद ! विष्णु सन्निधान में निवास करने का अभिलाष हो, अथवा सन्तान किंवा सम्पद प्राप्त करने की आकाङ्क्षा हो तो प्रति वर्ष माघ-स्नान करना उचित है । जो मानव, इस जगत् में मनसा भी श्रीहरि-व्रत साधन करने का इच्छुक है, उसके शत जन्मार्ज्जित पापराशि विनष्ट होते हैं ॥७६-७७॥

व्रतरत होकर सर्वदा संयत मन से माघ-स्नान करके मानव त्रिलोक वन्दित विष्णुधाम प्राप्त कर सकता है ॥७८॥

हे विप्रेन्द्र ! माघस्नायी का ज्ञानाज्ञानकृत महापातक भी तूलराशिवत् विनष्ट होता है ॥७९॥

कर्म्मणा मनसा वाचा यत् पापं समुपार्ज्जितम् । दह्यते नात्र सन्देहो माघस्नानेन नारद ॥८०

स्नानं दानं जपो होमः समुद्दिश्य जनार्द्दनम् । नरैर्यत् क्रियते माघे तदनन्तफलं स्मृतम् ॥८१॥

विभवे सति यो मोहान्न कुर्य्याद्विधिविस्तरम् ।

न तत् फलमवाप्नोति यो लोभाक्रान्तमानसः ॥८२॥

ये भविष्यन्ति येऽतीता आकल्पं पुरुषाः कुले । तांस्तारयति विप्रेन्द्र माघस्नानेन माधवः ॥८३॥

सम्प्राप्ते माघमासे तु तपस्विजनवल्लभे । विलयं यान्ति पापानि तमः सूर्य्योदये यथा ॥८४॥

यतिवत् पथि गच्छेत मौनी पैशुन्यवर्ज्जितः ॥८५॥

यदीच्छेद्विपुलान् भोगान् वैष्णवं पदमव्ययम् । महानदीजले स्नात्वा इतरे वापि नारद ।

स्नापयित्वा हरिं भक्त्या पूजयेत्तुलसीदलैः ॥८६॥

ब्रह्मवैवर्त्ते श्रीसूतशौनकसंवादे—

न माघमासस्नानस्य सममन्यद्भृगूद्वह । तपः किमपि तत्त्वार्थवेदिनो मुनयो विदुः ॥८७॥

शीतकाले सुशीतेन जलेन स्वं वपुर्नरः । प्रक्षाल्य सद्यो नियतं विशोधयति दुष्कृतम् ॥८८॥

---

ननु स्नानमात्रेणैव सर्व्वसिद्धेः, किं दानादिना ? तत्राह—विभव इति । शक्तौ वित्तशाठ्येन फलं न सम्यक् सिध्येदिति भावः ॥८२॥

माहात्म्यकथनान्तरे च माघप्रातःस्नानार्थगमनविधिमाह—यतिवदिति । हिंसादि-शून्यः, मौनी भगवन्नाम-कीर्त्तनातिरिक्तवचनरहितः, विशेषतः पैशुन्येन माघकृत्यत्यागादिपरदोषसूचनेन वर्ज्जितो हीनः सन् पथि गच्छेत् । यद्वा, माहात्म्यमेवाह—माघस्नानतः, यद्वा, माघे सम्प्राप्ते सति सर्व्वोऽपि जनः यतिवत् मौनी आत्मारामत्वादि-मुनिधर्म्मयुक्तः सन्, अतएव पैशुन्यवर्ज्जितः सन् पथि सन्मार्गे गच्छेत् । संयत इति पाठेऽपि तादृगेवार्थः ॥८५॥

यदीच्छेत्तदा पूजयेदिति सार्द्धेनान्वयः ॥८६॥

---

हे नारद ! माघ-स्नान करने से निःसन्देह, कर्मज, मनोज, वाक्यज त्रिविध पातक भस्मीभूत होते हैं । ऋषिगण कर्त्तृक उक्त है, मानववृन्द जनार्द्दन के उद्देश में माघ मास में स्नान दान, जप, होम प्रभृति जो कुछ करते हैं, वे सब अनन्त फलप्रद होते हैं ॥८०-८१॥

सम्पत्ति विद्यमान होने पर भी मोहवशतः लुब्ध होकर व्यय संक्षेप कर कार्य्य करने से वह कार्य्य निष्फल होता है । हे विप्रवर ! वंश में एक जन माघस्नायी होने पर कल्पकाल पर्य्यन्त उस वंश में जितने व्यक्ति जन्म ग्रहण करेंगे, एवं जिनके जन्म हो चुके हैं, उन सबको उद्धार माधव करते हैं ॥८२-८३॥

सूर्य्योदय होने से जिस प्रकार अन्धकार विदूरित होता है, उस प्रकार तापसजनवल्लभ माघ मास समागत होने पर पातकसमूह विध्वस्त होते हैं। माघ स्नानार्थ पथ में गमन के समय यतिवत् पैशुन्यादि (खलतादि दोषसमूह) वर्जन कर मौन भाव धारण करना चाहिये ॥८४-८५॥

हे नारद ! विपुल भोग अथवा नित्य हरिधाम लाभेच्छु होने पर महानदी जल में किंवा अन्य जल में स्नान करके केशवदेव को स्नान कराकर तुलसीदल के द्वारा भक्तिपूर्वक अर्च्चन करे ॥८६॥

ब्रह्मवैवर्त्त पुराण के श्रीसूत-शौनक-संवाद में लिखित है—हे भृगुकुलतिलक ! तत्त्वार्थवित् मुनिवृन्द, माघ-स्नान के तुल्य अपर किसी प्रकार तपस्या को नहीं जानते । शीतऋतु में शीतल जल द्वारा अपना देह सतत प्रक्षालन करने से तत्क्षणात् दुष्कृत की शुद्धि होती है ॥८७-८८॥

किञ्च—

अपि शूद्रोऽपि दासोऽपि माघस्नानपरायणः । प्रोक्तो मुख्यतमो विप्रो न तु तद्विमुखो द्विजः ।।८६

यत्र साक्षाद्दिनाधीशो भवेदुदयमास्थितः । ततः किमपरं नाम प्रशस्यं धर्म्मसाधनम् ? ।।६०।।

माघस्नानं समुद्दिश्योषसि गेहात् समुत्थितः । यावत्पदान्यश्वमेधसमानि स्युर्ददाति यः ।।६१।।

यथा यथा पुमान् माघे प्रातरुत्थाय धावति । तथा तथाऽभुक्तकर्म्म-संक्षयाद्दयते यमः ।।६२।।

यत् फलं कपिलादाने कुरुक्षेत्रे रविग्रहे । तदवश्यमवाप्नोति माघस्नानं करोति यः ।।६३।।

पाद्मे भूमिखण्डे श्रीवशिष्ठदिलीप-संवादे –

सम्यगुक्तं परं श्रेयो लोकद्वयहितावहम् । निर्म्मलीकरणं तेन मुनीनां वनवासिनाम् ।।६४।।

क्रतुभुक्कामिनीनां ये प्रत्यासत्तिमखण्डिताम् । कामयन्ते मृगार्के ते स्रोतसि स्नान्तु सर्व्वदा ।।६५

---

दासः कैवर्त्तः, तस्य सततजलचारित्वेन स्वत एव स्नानसुखं सिध्येत । सऽपि यदि माघस्नानं नियमेन करोतीत्यर्थः । अथवा अन्त्यजत्वे तात्पर्य्यम् । मुख्यतमः सर्व्ववेदार्थतत्त्वज्ञो विप्रः प्रोक्तः । 'उदयमास्थितः' इति, 'किञ्चिदभ्युदिते रवौ' इति स्नानकालाभिप्रायेण ।।८६।।

यावन्ति पदानि यो ददाति न्यस्यति, तस्य तावन्ति पदानि अश्वमेधयज्ञसमानि स्युरित्यर्थः । य इति अधिकार्य्यनधिकार्य्यनपेक्षया यः कश्चिदिति भावः । अभुक्तानां नरकपातनादिना अकृतभोगानामपि कर्म्मणां सम्यक् क्षयाद्धेतोः ।।६१-६२।।

कदाचिन्माघे मृगयार्थं वनप्रविष्टेन रात्रौ वनान्तरेवोषितेन राज्ञा दिलीपेन पथि गच्छतो वानप्रस्थमुनेराज्ञया सरसि स्नात्वा गृहमागत्य तन्मुन्युक्तं माघमाहात्म्यं सविस्मयं परिपृष्टस्य तं प्रति वाक्यं सम्यगुक्तमित्यादि । क्रतुभुक्कामिन्योऽप्सरसः प्रत्यासत्तिं सम्भोगम् ।।६४-६५।।

---

और भी लिखित है—माघ मास में यथाविधि स्नान करने पर शूद्र अथवा कैवर्त्त भी सर्व वेदवित् विप्र नाम से कथित होते हैं। किन्तु, द्विज होकर माघ-स्नान वर्जित होने पर प्राधान्य लाभ नहीं कर सकता है। दिनेश सूर्य्यदेव के ईषदुदयकाल व्यतीत माघ-स्नान के निमित्त धर्मसाधन के विषय में प्रशस्तकाल और दूसरा नहीं है। माघ-स्नान के निमित्त ऊषा काल में ही घर से निकल कर जितने पद गमन किया जाता है, उतने ही पद में अश्वमेध यज्ञ का फल प्राप्त होता है। प्रातःस्नान के निमित्त गात्रोत्थान पूर्वक जितने पद गमन होते हैं, गमनकारी उतने पद में ही अश्वमेध यज्ञ का फल लाभ कर सकते हैं। माघ-स्नान हेतु प्रत्यूष में गात्रोत्थान पूर्वक जितने पद प्रधावित होते हैं, उतने पदक्षेप से ही अकृत भोग कर्मसमूह का क्षय होता है। अतएव, शमनराज, उस व्यक्ति के प्रति दया प्रकाश करते हैं। कुरुक्षेत्र में सूर्य्यग्रहण के समय कपिलाधेनु दान करने से जो फल होता है, माघ मास में नित्य स्नानकारी व्यक्ति निःश्चय ही उक्त फल लाभ करेगा ।।८६-६३।।

पद्मपुराण के भूमिखण्ड के श्रीवशिष्ठ-दिलीप-संवाद में लिखा है– एक समय माघ मास में नरपति दिलीप ने मृगया के निमित्त वन में प्रवेश कर रात्रि के समय वहाँ वास किया। दूसरे दिन प्रभात काल में गमन के समय मार्ग में एक वानप्रस्थमुनि के आदेश से सरसी जल में स्नान करके अपने घर को प्रस्थान किया। वशिष्ठ ऋषि के समीप में पूर्वोक्त ऋषि कथित माघ माहात्म्य का विषय आश्चर्य्ययुक्त चित्त से पूछने पर भगवान् वशिष्ठजी ने राजा से कहा— हे नृप ! उन वनवासी मुनि ने परम कल्याणकारक दोनों लोक में हितकर एवं शुभावह, पवित्रकर विषय को सम्यक् रूप से कहा था ।।६४।।

जो, यज्ञभुक् रमणी (अप्सरा) के सहित अखण्ड सम्भोग की इच्छा करते हैं, वे मकर राशिस्थ सूर्य्य–माघ मास में सदा नदी के स्रोत जल में स्नान करें ।।६५।।

विना वह्निं विना यज्ञनिष्टापूर्त्तं विनापि ये । वाञ्छन्ति स्वर्गतिं स्नान्तु प्रातर्माघे वहिर्जले ॥९६
गोभूमितिल-वासांसि स्वर्णधेन्वन्नकानि ये । अदत्त्वेच्छन्ति नाकं ते माघे स्नान्तु नराधिप ॥९७
त्रिरात्रेन्दुव्रतैः कृच्छ्रैः पराकैश्च निजां तनुम् ।
अशोष्येच्छन्ति ये स्वर्गं तपसि स्नान्तु ते सदा ॥९८॥
हरेरर्च्चा तु वैशाखे तपः पूजा च कार्त्तिके । तपः पूजा तथा स्नानं त्रयं माघे विशिष्यते ॥९९

किञ्च—

निरन्ना ह्यदितिः सस्नौ माघान् द्वादश मानसे ।
पुत्रान् सा द्वादशादित्यान् लेभे त्रैलोक्यदीपकान् ॥१००॥
सुभगा रोहिणी माघाद्दानशीला ह्यरुन्धती । शची च रूपसम्पन्ना अनसूया पतिव्रता ॥१०१॥
उत्तमे विषये राजन् प्रासादे साप्तभौमिके । तुमुलीकृतशोभाढ्ये रत्नकैः खचिताजिरे ॥१०२॥
द्विपकर्णमरुच्छन्ने रूपवत्स्त्रीजनाकुले । गीतवादित्रनिर्घोषे मङ्गलाचारशोभिते ॥१०३॥
वेदध्वनि-पवित्रे च विद्वद्विप्रैरलङ्कृते । सुरार्च्चनरते रम्ये सदातिथिनिषेविते ॥१०४॥
मुदितास्ते वसन्तीह यैः स्नातं मकरे रवौ । यैर्दत्तं बहुधा माघे मुरारिः पूजितस्तु यैः ॥१०५

त्रिरात्रैरिन्दुव्रतैश्च ॥९८॥ माघात् माघस्नानादिकरणात् ॥१०१॥
साप्तभौमिके— उपर्य्युपरिरचितसप्तभूमिके, तुमुलीकृतया बाहुल्येनान्योन्यसङ्कीर्णया शोभया युक्ते ॥१०२
किञ्च यैर्दत्तं, ते च वसन्तीति पूर्व्वेणान्वयः । यद्वा, तेषां किं वक्तव्यमिति शेषः । सर्व्वत्रैव हेतुः—

अनल अथवा होमादि व्यतीत, यज्ञ व्यतीत एवं इष्टापूर्त्त कर्म व्यतीत– स्वर्ग प्राप्त करने में जिनका अभिलाष है, वे माघ मास में नद्यादि स्रोतजल में प्रातः स्नान करें । गो, भूमि, तिल, वस्त्र, सुवर्ण, धेनु एवं अन्नदान के बिना ही जो स्वर्ग प्राप्त करने का अभिलाष करते हैं, वे माघ मास में स्नान करें ॥९६॥

हे नरपते ! गो, भूमि, तिल, वस्त्र, सुवर्ण, धेनु एवं अन्नदान व्यतीत स्वर्ग प्राप्त करने में जिनका अभिलाष हो, वे माघ मास में सदा स्नान करें । त्रिरात्र, चान्द्रायण, कृच्छ्र, पराक व्रत प्रभृति व्रत द्वारा शरीर शोषण न करके स्वर्ग प्राप्त करने में जिनका अभिलाष हो, वे माघ मास में सर्वदा स्नान करें । वैशाख मास में हरि की पूजा, कार्त्तिक में तपस्या एवं पूजा, एवं माघ मास में तपस्या, पूजा, स्नान,–यह तीन करणीय रूप में निर्दिष्ट हैं ॥९७-९९॥

और भी वर्णित है—अदिति ने बारह वर्ष पर्य्यन्त प्रति माघ मास में निराहार रहकर मानस सरोवर में स्नान किया था, उसी के फल से त्रिभुवन प्रकाशक द्वादश आदित्य को पुत्र रूप में प्राप्त किया । माघ स्नान के फल से ही रोहिणी सौभाग्यसम्पन्न, अरुन्धती दानशीला, शची रूपवती एवं अनसूया पतिपरायणा हुई हैं ॥१००-१०१॥

हे राजन् ! जो विविध शोभा से सुशोभित, जिसकी प्राङ्गण भूमि विविध रत्नखचित, एवं गजकर्ण के आन्दोलन वायु से समाकीर्ण, रूपवती स्त्रियों से परिव्याप्त, गीतवाद्य के शब्दों से शब्दायमान, मङ्गलाचार से अलङ्कृत, वेदध्वनि से पवित्र, विद्वान् ब्राह्मण मण्डली से अलङ्कृत, देवपूजा महोत्सव से समाकुल, रमणीय एवं सर्वदा अतिथिवृन्द के द्वारा निषेवित, विशाल राज्य के तादृश साप्तभौमिक प्रासाद में (सात महलयुक्त राजगृह में) माघस्नायी और माघ मास में अनेक प्रकार से श्रीहरि की पूजा करने वाले ही प्रमुदित चित्त से अवस्थान करते हैं ॥१०२-१०५॥

इष्टवस्तुपरित्यागान्नियमस्य च पालनात् । धर्म्ममूलं सदा माघः पापमूलं निकृन्तति ॥१०६॥
एतदेव परं पथ्यमर्थमूलञ्च कीर्त्तितम् । काममूलं फलद्वारं निष्कामज्ञानदः सदा ॥१०७॥

ये लोका दानशीलानां ये लोका विपिनौकसाम् ।
लोका येऽतिथिभक्तानां ते माघस्नायिनां नृणाम् ॥१०८॥

देवलोकान्निवर्त्तन्ते पुण्यैरन्यैः परन्तप । कदाचित् न निवर्त्तन्ते माघस्नानरता दिवः ॥१०९॥
नातः परतरं किञ्चित् पवित्रं पापनाशनम् । एतदेव परं पथ्यं सद्यो दुरितनाशनम् ॥११०॥
विद्याधराय सङ्गीतं भृगुणा मणिपर्व्वते । विकुण्डलाय चान्यत्र देवदूतेन धीमता ॥१११॥

भृगुविद्याधरसंवादे—

माघस्नानैर्विपन्नाशो माघस्नानैरघक्षयः । सर्व्वव्रताधिको माघः सर्व्वदानफलप्रदः ॥११२॥

माघो गर्ज्जति योगेभ्यो माघो योगाच्च गर्ज्जति ।
तीव्राच्च तपसो माघो भो विद्याधर गर्ज्जति ॥११३॥

पुष्करे च कुरुक्षेत्रे ब्रह्मावर्त्ते पृथूदके । अविमुक्ते प्रयागे च गङ्गासागरसङ्गमे ॥११४॥

यत् फलं दशभिर्वर्षैः प्राप्यते नियमैर्नरैः ।
तत् फलं लभते माघे त्र्यहं स्नानान्न संशयः ॥११५॥

---

धर्म्ममूलमिति । निष्कामाणाञ्च ज्ञानं ददातीति तथा । एवं चतुर्वर्गप्रदत्वमुक्तम् ॥१०५-१०७॥
तत्र चाशेष-धर्म्मतो माघस्नानस्याधिकोत्कर्षमाह—ये लोका इति चतुर्भिः ॥१०८॥
गर्ज्जति अधिक्षिपति ततोऽपि विशिष्ट इत्यर्थः ॥११३॥

---

प्रिय द्रव्य परित्याग, एवं नियम पालन न करने से ही सर्वदा धर्म का मूल स्वरूप माघ मास, पापमूल को निर्म्मूल करता है । माघ मास ही उत्तम पथ्य स्वरूप, अर्थमूल, काममूल एवं फलों का द्वार स्वरूप कीर्त्तित है । यह मास, निष्कामगणों के पक्ष में सर्वदा ज्ञानदायक है ॥१०६-१०७॥

दातृगण, जिन सब लोकों में जाते हैं, वनाश्रमिगण, जहाँ पर जाते हैं, अतिथि भक्तवृन्द जिस स्थान में प्रस्थान करते हैं,—माघ मास में स्नान करने वाले, उन सब लोकों को प्राप्त करते हैं ॥१०८॥

हे परन्तप ! अन्यान्य पुण्य द्वारा (उसका फल भोगने पर) स्वर्गलोक से विच्युत होना पड़ता है, किन्तु माघस्नायी व्यक्तिगण कदाच सुरलोक से परिभ्रष्ट नहीं होते हैं । माघस्नान से पवित्र अथवा अघनाशन, अन्य कुछ दिखाई नहीं देता । यही परम पथ्यस्वरूप और यही तत्पापों को नाश करने वाला है । मणि-पर्वत पर भृगु ऋषि ने विद्याधर के समीप में और अन्यत्र बुद्धिमान् देवदूत ने विकुण्डल के समीप में यह विषय कहा था ॥१०९-१११॥

भृगु-विद्याधर-संवाद में उक्त है—माघस्नान के द्वारा ही पातक क्षय होता है । समस्त व्रत से माघस्नान ही श्रेष्ठ है एवं सर्वविध दानफल दायक है । हे विद्याधर ! याग, योग, कठोर तपस्या प्रभृति से भी माघ-स्नान विशेष फलप्रद है । पुष्कर, कुरुक्षेत्र, ब्रह्मावर्त्त, पृथूदक, वाराणसी, प्रयाग, गङ्गासागर सङ्गम,— यह सब तीर्थों में संयतचित्त से दशवत्सर यावत् स्नान करने से जो फल लाभ होता है, माघ मास में दिनत्रय मात्र प्रातः स्नान करने से उक्त समस्त फल प्राप्त हो जाते हैं । इस विषय में सन्देह नहीं है ॥११२-११५॥

स्वर्गभोगे चिरं वाञ्छा येषां मनसि वर्त्तते । यत्र क्वापि जले तैस्तु स्नातव्यं मृगभास्करे ॥११६

आयुरारोग्यसम्पत्तौ रूपे सुभगता गुणे । येषां मनोरथास्तैस्तु न त्याज्यं माघमज्जनम् ॥११७॥

ये बिभ्यति नरकाब्देर्दारिद्र्याब्देश्च नित्यशः ।
सर्व्वथा तैः प्रयत्नेन माघे कार्य्यं निमज्जनम् ॥११८॥

दारिद्र्यपापदौर्भाग्यपङ्कप्रक्षालनाय च । माघस्नानान्न चान्योऽस्ति उपायो देवसत्तम ॥११९

श्रद्धाहीनानि कर्म्माणि मतान्यल्पफलानि वै । फलं ददाति सम्पूर्णं माघस्नानं यथा तथा ॥१२०

अकामो वा सकामो वा यत्र क्वापि वहिर्ज्जले ।
इहामूत्र च दुःखानि माघस्नायी न विन्दति ॥१२१॥

पक्षद्वये यथा चन्द्रः क्षीयते वर्द्धते तथा । पातकं क्षीयते माघे पुण्यराशिश्च वर्द्धते ॥१२२॥

यथाब्धौ खलु जायन्ते रत्नानि विविधानि च ।
स्नानपुण्यानि जायन्ते नराणां माघतस्तथा ॥१२३॥

आयुर्वित्तकलत्राणि सम्पदः प्रभवन्ति च । कामधेनुर्यथा कामं चिन्तामणिश्च चिन्तितम् ।
माघस्नानं ददातीह तद्वत् सर्व्वमनोरथान् ॥१२४॥

कृते तपः परं ज्ञानं त्रेतायां यजनन्तथा । द्वापरे तु कलौ दानं मागः सर्व्वयुगेषु च ॥१२५॥

---

रूपे सौन्दर्य्ये, सुभगता जगद्वल्लभता, तद्रूपे गुणे ॥११७॥
वहिर्ज्जले माघस्नायी ॥१२१॥

---

जिनके चित्त में स्वर्ग भोगने का चिर अभिलाष विद्यमान है, उनको मकर राशि स्थित सूर्य्य में जिस किसी जल में प्रातः स्नान करना चाहिये । जो परमायुः, नीरोगता, सम्पत्ति, सौन्दर्य्य, एवं जगत् प्रियतागुण को अभिलाष करते हैं, माघस्नान परित्याग करना उनको उचित नहीं है । जो नरकसागर और दुःखसागर से सर्वदा भीत हैं, उनको सर्वदा यत्नपूर्वक माघस्नान करना चाहिये ॥११६-११८॥

हे देवसत्तम ! दारिद्र्य, पातक एवं असौभाग्यरूप पङ्कक्षालन के निमित्त माघस्नान व्यतीत अपर उपायान्तर नहीं है । कर्म, श्रद्धाहीन होने से अल्प फलद होता है, किन्तु, माघस्नान चाहे जैसे क्यों न किया जाय, माघस्नान सम्पूर्ण फल प्रदान करता है, ऐसा कहा गया है ॥११९-१२०॥

सकाम, अथवा निष्काम होकर जिस किसी प्रकार से ही क्यों न हो, माघ मास में बहिर्जल में स्नान करने से इहलोक वा परलोक,–किसी लोक में क्लेश भोगना नहीं पड़ता है । कृष्णपक्ष में जिस प्रकार चन्द्रमा का क्षय होता है, एवं शुक्लपक्ष में उसकी वृद्धि होती है, उस प्रकार माघ मास में पाप क्षय होता है एवं पुण्यराशि की वृद्धि होती है । समुद्र में जिस प्रकार रत्नों की उत्पत्ति होती है, माघ मास में भी उस प्रकार मनुष्यों के सम्बन्ध में स्नानजनित विविध पुण्य उत्पन्न होते हैं, एवं आयुः, धन, पत्नी एवं सम्पद् लाभ होता है । कामधेनु, जिस प्रकार वाञ्छापूर्त्ति करती है, चिन्तामणि, जिस प्रकार चिन्तित द्रव्य अर्पण करती है, माघस्नान भी उस प्रकार मनोरथ सिद्ध कर देता है । सत्ययुग में तपस्या, परमज्ञान, त्रेता में यज्ञ द्वापर में पूजन एवं कलि में हरिसङ्कीर्त्तन दान प्रसिद्ध है, किन्तु माघस्नान सभी युगों में श्रेष्ठ है ॥१२१-१२५

सर्व्वेषां सर्व्ववर्णानामाश्रमाणाञ्च भूपते । माघस्नानन्तु धर्म्मस्य धाराभिः खलु वर्षति ।।१२६

तत्रैव श्रीदत्तात्रेयकार्त्तवीर्य्यार्ज्जुनसंवादे—

प्रीतये वासुदेवस्य सर्व्वपापानुत्तये । माघस्नानं प्रकुर्व्वीत स्वर्गलाभाय मानवः ।।१२७।।

न समं भवते किञ्चित् तेजः सौरेण तेजसा ।

तद्वत् स्नानेन माघस्य न समाः क्रतुजाः क्रियाः ।।१२८।।

किं रक्षितेन देहेन सुपुष्टेन बलीयसा । अध्रुवेण सुजीर्णेन माघस्नानं विना भवेत् ? ।।१२९।।

अस्थिस्तम्भं स्नायुबद्धं मांसक्षतजलेपनम् । चर्म्मावनद्धं दुर्गन्धिपूर्णं मूत्रपुरीषयोः ।।१३०।।

जराशोकविपद्व्याप्तं रोगमन्दिरमातुरम् । रजस्वलमनित्यञ्च सर्व्वदोषसमाश्रयम् ।।१३१।।

परोपताप-पापार्त्ति-परद्रोहपरेर्षकम् । लोलुपं पिशुनं क्रूरं कृतघ्नं क्षणिकं तथा ।।१३२।।

दुष्पूरं दुर्द्धरं दुष्टं दोषत्रयविदूषितम् । अशुचिस्रावि सच्छिद्रं तापत्रयविमोहितम् ।।१३३।।

निसर्गतोऽधर्म्मरतं तृष्णाशतसमाकुलम् । कामक्रोधमहालोभ-नरकद्वारसंस्थितम् ।।१३४।।

कृमिवर्च्चस्कभस्मादि परिणामे शुनां हविः । ईदृक्शरीरकं व्यर्थं माघस्नानविवर्ज्जितम् ।।१३५

---

सर्व्वेषामाश्रमाणामिति सम्बन्धः, यद्वा, सर्व्वेषामिति बालवृद्धादीनामित्यवस्था परिहृता ।।१२६।।

दोषशतव्याप्तमपि शरीरं माघस्नानेन परमोत्तमं सार्थकञ्च भवेत्, अन्यथा तद्धारणमेव व्यर्थमित्याह—अस्थीति षड्भिः। आतुरं विवशं, रजस्वलं रजोगुणप्रधानं, कर्म्मभूमौ मनुष्यजन्मप्राप्तेः। परेषामुपतापादयः, तथा परेषां द्रोहः, परेषामीर्ष्या च यस्मात् तत् । तत्रोपतापो निन्दादिना, पापञ्च द्रोहोत्पादनादिना, आर्त्तिः प्रहारादिना इति विवेकः, द्रोहः अमङ्गलचिन्तादिना । क्रूरं चाक्षान्तिः ।।१३०-१३२।।

दोषत्रयं पित्तादि, कामादि यन्नरकद्वारं, तस्मिन् सम्यक् स्थितं वर्त्तमानं, परिणामे मरणे कृम्यादिरूपम्, अतएव शुनां हविः परमभक्ष्यम् ।।१३३-१३५।।

---

हे राजन् ! माघस्नान अखिल वर्ण, एवं यावतीय आश्रमों के सम्बन्ध में धर्मधारा वर्षण करता है।।१२६

उक्त स्थान में ही श्रीदत्तात्रेय-कार्त्तवीर्य्यार्जुन-संवाद में लिखित है—हरिप्रीत्यर्थ, निखिल अघविनाशार्थ एवं स्वर्गलाभार्थ मानवों को माघस्नान करना चाहिये । कोई तेजः जिस प्रकार सूर्य्य तेजः के समान नहीं हैं, इसी प्रकार माघस्नान के सहित किसी यज्ञक्रिया की तुलना नहीं होती । माघस्नान के बिना हृष्टपुष्ट, बलिष्ठ, अध्रुव एवं अतिजीर्ण देह की रक्षा करने से क्या फल है ? ।।१२७-१२९।।

देह—अस्थि स्तम्भ में निबद्ध, स्नायु बद्ध, मांस शोणित लिप्त, चर्म्मावृत, दुर्गन्धि, मल-मूत्र पूरित, जरा-शोक व्याप्त, विपत् सङ्कुल, व्याधि-मन्दिर स्वरूप, विवश, रजोगुण प्रधान, अनित्य एवं निखिल दोषों का आधार है । परसन्ताप, पातक, परपीड़न, परद्रोह, एवं ईर्षासमूह का जन्म देह में होता है । यह देह लोभ के वशीभूत, पिशुन (खल) क्रूर, कृतघ्न, क्षणविध्वंसी, दुष्पूरणीय, दुर्द्धर, दोषों का आधार, पित्तादि त्रिदोषान्वित, अपवित्र, अशुचिस्रावी, छिद्रयुक्त, आध्यात्मिकादि तापत्रय से विमुग्ध, स्वतः ही अधर्मलिप्त, तृष्णाशत व्याप्त, नरक का द्वारस्वरूप—काम क्रोध महा लोभों में अधिष्ठित एवं मरणान्त में कृमि, विष्ठा, भस्म संज्ञित है, सुतरां उस समय कुक्कुर का उपादेय भक्ष्य है। अतएव एतद्दृश शरीर,—माघस्नान वर्जित होने पर निःसन्देह विफल होता है ।।१३०-१३५।।

अवैष्णवो हतो विप्रो हतं श्राद्धमयोगि च । अश्रद्धया हतं सर्व्वं यत् कृतं पारलौकिकम् ॥१३६

इह लोको हतो नृणां दारिद्र्येण यथा नृप । मनुष्याणां तथा जन्म माघस्नानं विना हतम् ॥१३७

मकरस्थे रवौ यो हि न स्नात्यनुदिते रवौ । कथं पापैः प्रमुच्येत स कथं त्रिदिवं व्रजेत् ? ॥१३८

ब्रह्महा हेमहारी च सुरापो गुरुतल्पगः । माघस्नायी विपापः स्यात्तत्संसर्गी च पञ्चमः ॥१३९॥

माघमासे रटन्त्यापः किञ्चिदभ्युदिते रवौ । ब्रह्मघ्नं वा सुरापं वा कं पतन्तं पुनीमहे ॥१४०॥

उपपापानि सर्व्वाणि पातकानि महान्ति च ।
भस्मीभवन्ति सर्व्वाणि माघस्नायिनि मानवे ॥१४१॥

वेपन्ते सर्व्वपापानि माघमाससमागमात् । नाशकालोऽयमस्माकं यदि स्नास्यति वारिणि ॥१४२

पावका इव दीप्यन्ते माघस्नानैर्नरोत्तमाः । विमुक्ताः सर्व्वपापेभ्यो मेघेभ्य इव चन्द्रमाः ॥१४३

आर्द्रं शुष्कं लघु स्थूलं वाङ्मनःकर्म्मभिः कृतम् ।
माघस्नानं दहेत् पापं पावकः समिधो यथा ॥१४४॥

प्रामादिकञ्च यत् पापं ज्ञानाज्ञानकृतञ्च यत् । स्नानमात्रेण तन्नश्येन्मकरस्थे दिवाकरे ॥१४५॥

निष्पापास्त्रिदिवं यान्ति पापिष्ठा यान्ति शुद्धताम् ।
सन्देहोऽत्र न कर्त्तव्यो माघस्नाने नराधिप ॥१४६॥

---

रवावनुदिते सतीत्यत्रोक्तं, भविष्योत्तरे च भास्करोदय इत्युक्तं, तथा पूर्व्वमत्रापि किञ्चिदभ्युदिते रवाविति । एवमरुणोदयकालमारभ्यार्द्धोदयपर्य्यन्तं माघप्रातःस्नानकालोऽवगन्तव्यः ॥१३८॥
आर्द्रं सद्यःकृतं, शुष्कं चिरकृतम् ॥१४४॥

---

विप्र विष्णु-भक्तिहीन होने पर, श्राद्ध-विधिहीन होने पर, समस्त पारलौकिक क्रिया—अश्रद्धा से प्रयुक्त होने पर, जिस प्रकार विफल होता है, एवं दारिद्र्य द्वारा जिस प्रकार मनुष्यों के पक्ष में यह लोक विफल होता है। हे नृप! माघस्नान हीन मानव जन्म भी उस प्रकार निष्फल है ॥१३६-१३७॥

मकरस्थ सूर्य्य में भास्करदेव के अनुदय के समय स्नान न करने से कैसे पातक विनष्ट होगा? कैसे सुरलोक गमन होगा? माघस्नान करने पर ब्रह्मघाती, सुवर्णहारी, सुरापायी, गुरुदारगामी एवं उक्त पाप-चतुष्टय का संसर्गी, यह पञ्चविध व्यक्ति भी पातकों से परित्राण प्राप्त कर सकते हैं। "किसने ब्रह्मवध किया है? किसने सुरापान किया है? कौन पतित हुआ है? मैं उसको शुद्ध करूँगा।" माघ मास के सूर्य्यदेव के ईषदुदय काल में जलगर्भ से इस प्रकार वाणी उच्चारित हुई है। माघस्नायी मानवों के समस्त पातक उपपातक एवं महापातक दग्ध हो जाते हैं। 'माघसमागम निबन्धन जल में स्नान करने पर हमारा क्षय-काल उपस्थित होगा" यह मानकर पापसमूह कम्पित होते हैं। साधुगण, माघस्नान द्वारा सकल पातक से मुक्त होकर मेघनिर्म्मुक्त चन्द्र के समान एवं अग्निवत् प्रकाशित होते हैं ॥१३८-१४३॥

अग्नि द्वारा जिस प्रकार काष्ठ भस्मीभूत होता है, उस प्रकार माघस्नायी भी वाक्यज, मनोज एवं कर्म्मज, आधुनिक तथा पूर्वकृत, स्वल्प वा भूरिपरिमित समस्त पातक को ही विनष्ट करता है। मकर राशिस्थ सूर्य्य में स्नान करने पर तत्क्षणात् प्रमादकृत समस्त पातक विध्वंस होते हैं ॥१४४-१४५॥

हे नराधिप! माघस्नान के फल से निष्पातकी की स्वर्ग-प्राप्ति होती है, एवं पापिष्ठवृन्द शुद्ध होते हैं।

एतदेव परो मन्त्र एतच्च परमन्तपः। प्रायश्चित्तं परञ्चैतत् माघस्नानमनुत्तमम् ॥१४७॥

नृणां जन्मान्तराभ्यासान्माघस्नाने मतिर्भवेत्।
अध्यात्मज्ञानकौशल्यं जन्माभ्यासाद्यथा भवेत् ॥१४८॥

संसारकर्द्दमानाञ्च प्रक्षालनविशारदम्। पावनं पावनानाञ्च माघस्नानमनुत्तमम् ॥१४९॥

स्नान्ति माघे नरा राजन् सर्व्वकामफलप्रदे। ते कथं भुञ्जते भोगान् चन्द्रसूर्य्यग्रहोपमान्? १५०॥

किञ्च—

नानवाप्तोऽत्र तस्यास्ति पुरुषार्थो हि कश्चन। नाक्षीणं पातकं किञ्चिन्माघे मज्जति यो नरः ॥१५१

तुलयन्ति न तेनात्र यज्ञाः सर्व्वे सदक्षिणाः। माघस्नानेन राजेन्द्र तीर्थे चैव विशेषतः ॥१५२॥

न चान्यत् स्वर्गदं कर्म्म न चान्यत् पापनाशनम्।
न चान्यत् मोक्षदं चात्र माघस्नानसमं भुवि ॥१५३॥

किञ्चान्यत्र—

एकविंशत्कुलैः सार्द्धं भुक्त्वा भोगान् यथेप्सितान्।
माघे मासेऽम्भसि स्नात्वा विष्णुलोकं स गच्छति ॥१५४॥

तत्रैव कुण्डविकुण्डलोपाख्यानानन्तरं श्रीकार्त्तवीर्य्य उवाच—

हेतुना केन विप्रर्षे माघस्नाने महाद्भुतः। प्रभावो वर्णितो नूनं तन्मे कथय सुव्रत ॥१५५॥

गतपापो यदेकेन द्वितीयेन दिवं गतः। वैश्यो माघजपुण्येन ब्रूहि मे तत् कुतूहलात् ॥१५६॥

---

अतः अनुत्तमं सर्व्वोत्तममिदमेवेत्यर्थः। चन्द्रसूर्य्यग्रहय रुपमान् तद्भोग्यतुल्यानित्यर्थः ॥१४९-१५०॥

माघस्नानेन न तुलयन्ति, सदृशा न भवन्तीत्यर्थः। तीर्थे च यन्माघस्नानं, तेन च विशेषतो न तुलयन्त्येव।

---

इस विषय में सन्देह करना उचित नहीं है। अत्युत्तम माघस्नान ही महामन्त्र, परम तपस्या एवं परम प्रायश्चित् स्वरूप है ॥१४६-१४७॥

जन्मान्तरीय अभ्यासवशतः जिस प्रकार अध्यात्मज्ञान के विषय में नैपुण्य दृष्ट होता है, उस प्रकार ही पूर्वजन्म के अभ्यास से ही मानवों की मति माघस्नान में होती है। निखिल पवित्रकारियों को पवित्रकारी अत्युत्तम माघस्नान, संसाररूप पङ्क प्रक्षालन विषय में सुपटु है। हे राजन्! जो मानव, समस्त कामफलप्रद माघस्नान करते हैं, वे कैसे पुनर्वार चन्द्रसूर्य्योपराग सदृश भोगों को भोगेंगे? ॥१४८-१५०॥

और भी लिखित है—माघ मास में स्नान करने से किसी प्रकार का पुरुषार्थ ही अप्राप्य नहीं रहता और किसी प्रकार का पातक शेष रहने की सम्भावना भी नहीं है। हे राजेन्द्र! माघ मास में साधारण जल में स्नान करने से सदक्षिण यज्ञ भी जब उस स्नान के सदृश नहीं हो सकता है, तब तीर्थ में माघस्नान करने पर उसका फल क्या होगा, उसका वर्णन कैसे करें? वह जो विशेष फलदायक है, इसमें कोई सन्देह नहीं है। इस जगत् में माघस्नान के सदृश अपर स्वर्गप्रद कार्य्य वा अन्य पापहर कार्य्य दृष्ट नहीं होता है। एवं अन्य कोई मुक्तिप्रद कार्य्य भी माघस्नान सदृश लक्षित नहीं होता है ॥१५१-१५३॥

और भी अन्यत्र वर्णित है—माघ मास में जल में अवगाहन स्नान करने से वह व्यक्ति, एकविंशति कुल के सहित अभिलषित भोग समूह को भोग कर विष्णुलोक में प्रस्थान करता है ॥१५४॥

उक्त पुराण के कुण्डविकुण्डल उपाख्यान के अनन्तर श्रीदत्तात्रेय को श्रीकार्त्तवीर्य्य कहे थे—हे विप्रर्षे! हे सुव्रत! किस हेतु माघस्नान का अत्याश्चर्य्य प्रभाव वर्णित हुआ? यह मुझसे निश्चयरूप से वर्णन कीजिये,

श्रीदत्तात्रेय उवाच—

निसर्गात् सलिलं मेध्यं निर्म्मलं शुचि पावनम् । मलहं पुरुषव्याघ्र द्रावकं दाहकं तथा ॥१५७॥
धारकं सर्व्वभूतानां पोषकं जीवनञ्च तत् । आपो नारायणो देवः सर्व्ववेदेषु पठ्यते ॥१५८॥
ग्रहानाञ्च यथा सूर्य्यो नक्षत्राणां यथा शशी । मासानां हि तथा माघः श्रेष्ठः सर्व्वेषु कर्म्मसु ॥१५९
मकरस्थे रवौ माघे प्रातःकाले तथामले । गोष्पदेऽपि जले स्नानं स्वर्गदं पापिनामपि ॥१६०॥
योगोऽयं दुर्लभो राजन् त्रैलोक्ये सचराचरे ।
अस्मिन् मासे त्वशक्तोऽपि स्नायादपि दिनत्रयम् ।१६१॥
दद्यात् किञ्चिद्यथाशक्ति दारिद्रयाभावमिच्छति । त्रिस्नानेनापि माघे स्युर्धनिनो दीर्घजीविनः ।
पञ्च वा सप्त वाहानि चन्द्रवद्वर्द्धते फलम् ॥१६२॥

नारदीये च —

देवैस्तेजः परिक्षिप्तं माघमासे जलेषु वै । अतः पवित्रं हि जलमशेषाघौघनाशनम् ॥१६३॥इति ।
अन्यानि माघमाहात्म्यवचनानि विशेषतः । उपाख्यानेषु वर्त्तन्ते पाद्मादौ तत्र तत्र हि ॥१६४
इत्थञ्च माघस्नानस्य प्रायोऽत्र महिमोदितः । माघकृत्येषु यत् प्रातःस्नानस्यैव प्रधानता ॥१६५

एकविंशदिति ।पितृमातृभार्य्याणां प्रत्येकं सप्ततया एकविंशतिभिः कुलैः सह । द्रावकम् आर्द्रीकारकं, दाहकं पानेनाजीर्णनाशकमित्यर्थः ॥१५१-१५७॥

—एवं स्वत एव महाप्रभावयुक्तं जलं, तत्र च भगवत्सम्बन्धविशेष इति कालविशेषे भावविशेषो भवतीति परिहरति—ग्रहाणामिति द्वाभ्याम् ॥१५९-१६०॥

ग्रन्थविस्तारभीत्या परित्यक्तानि च माघमाहात्म्यादिवर्त्तीनि वचनान्यन्यान्यपि दर्शयति—अन्यानीति ॥१६४

ननु पूर्व्वं माघे स्नानादिसत्कर्म्मवत् कर्म्मान्तरमपि विहितं, सामान्यतो माघमाहात्म्यादिलिखनाच्च तदेव दृढ़ीकृतम्, अधुना चान्ते स्नानमाहात्म्यमेव श्रूयते । एवमुपक्रमोपसंहारयोरेकार्थता न स्यात् । सत्यं, माघे

माघस्नान कृत एक पुण्य के फल से वैश्य का पाप नष्ट हुआ, द्वितीय पुण्य फल से स्वर्गलोक लाभ हुआ । सुतरां मैं कुतूहली हूँ । उस विषय में कहिये ॥१५५-१५६॥

श्रीदत्तात्रेय बोले—हे पुरुषश्रेष्ठ ! जल स्वभावतः मेध्य, मलहीन, शुचि, पवित्रजनक, मलहारक, द्रावक, अजीर्ण नाशक, धारक, जीवों का पोषक एवं जीवनस्वरूप है । जल को 'नारायण' शब्द से समस्त वेद कहते हैं । ग्रहगण के मध्य में जिस प्रकार सूर्य्य, एवं नक्षत्रगण के मध्य में जिस प्रकार चन्द्र श्रेष्ठ हैं, उस प्रकार सत्कर्मानुष्ठान में मास समूह के मध्य में माघ मास ही श्रेष्ठ है । मकरराशिस्थित सूर्य्ययुक्त माघ मास के अमल प्रभात में गोष्पद परिमित जल में भी स्नान करने से वह स्नान पापियों को स्वर्गदायक होता है । हे राजन् ! यह योग, सचराचर त्रिलोक मध्य में अति दुर्लभ है । यदि सम्पूर्ण माघ मास में स्नान करने में अक्षम हो तो दिवसत्रय स्नान करना चाहिये एवं स्वीय दारिद्रय नाश करने की इच्छा हो तो, यथाशक्ति कुछ दान भी करना चाहिये । माघ मास में केवल दिवसत्रय मात्र स्नान करने से ही धनवान् और दीर्घजीवी हो सकता है । पञ्चदिन अथवा सप्ताह स्नान करने पर चन्द्र सदृश फल की वृद्धि होती है ॥१५७-१६२

नारदपुराण में लिखित है—देवगण कर्त्तृक अपना अपना तेजः माघमासीय जल में निक्षिप्त हुआ है, एतज्जन्य माघ मास में जल पवित्र एवं अशेष पातक नाशन है ॥१६३॥

माघ मास माहात्म्य सम्बन्धीय अन्यान्य प्रमाण वचन, पद्मपुराण प्रभृति के तत्तदुपाख्यान में वर्णित है,

वासन्ती पञ्चमी माघे भैमी चैकादशी सिता ।
वाराही द्वादशी या च तासु कुर्य्यान्महोत्सवम् ॥१६६॥

अथ वसन्तपञ्चमी

माघस्य शुक्लपञ्चम्यां महापूजां समाचरेत् । नरः प्रवालैः कुसुमैरनुलेपैर्विशेषतः ॥१६७॥
नीराजनोत्सवं कृत्वा भक्त्या सम्मान्य वैष्णवान् ।
वसन्तरागं जनयन् गीतनृत्यादि कारयेत् ॥१६८॥

तदुक्तम्—
श्रीपञ्चमीं समारभ्य यावत् स्याच्छयनं हरेः । तावद्वसन्तरागस्य गानमुक्तं मनीषिभिः ।
वसन्तरागः कर्त्तव्यो नान्यदा तु कदाचन ॥१६९। इति ।
कृत्वा वसन्तपञ्चम्यां श्रीकृष्णस्यार्च्चनोत्सवम् ।
स्याद्वसन्त इव प्रेयान् वृन्दावनविहारिणः ॥१७०॥

अथ भीष्माष्टमी

माघस्य चाष्टमीं शुक्लामारभ्य दिनपञ्चकम् । तर्पयेदथवाष्टम्यां भीष्मं भागवतोत्तमम् ॥१७१॥

---

प्रातःस्नानस्यैव प्रधानत्वान, तथापि लिखितमिति लिखति—इत्थञ्चेति । प्रधानता मुख्यता, अतएव स्नानस्यैव नित्यत्वं लिखितमिति दिक् ॥१६५॥

तत्रैव तिथिविशेषेषु कृत्यं महोत्सवविशेषं लिखति – वासन्तीति ॥१६६॥

तत्रैव वसन्तपञ्चमीमहोत्सवो विशेषतः कार्य्य इति लिखति—माघस्येति । तत्रैव कृत्यविशेषं लिखति—नवैरिति सार्द्धेन । जनयन्निति भगवच्छयने सति तद्गानादन्तर्हितमिव प्रादुर्भावयन्नित्यर्थः ॥१६७-१६८॥

वसन्तपञ्चम्युत्सव-माहात्म्यं लिखति—कृत्वेति, वृन्दावनविहारिण इति; वसन्ते वृन्दावनस्य शोभाविशेष-प्रकटनाद्यथासौ सदा तद्विहारशीलस्य भगवतोऽत्यन्तप्रियो भवति, तथा सोऽपि स्यादित्यर्थः ॥१७०॥

भागवतेषु मध्ये उत्तमं, तत्प्रतिज्ञापालनाय निजप्रतिज्ञात्यागेन साक्षाद्भगवतैव भक्तवात्सल्यविशेषप्रकटनेन निजभक्तवशत्वदर्शनात् । तच्च 'स्वनिगम-' (६।३७) इत्यादिवचनैः प्रथमस्कन्धादौ प्रसिद्धमेव । अतस्तत्तर्पणं वैष्णवैः कार्य्यमेवेति भावः ॥१७१॥

---

यहाँ पर इस रीति से ही माघ मास का माहात्म्य वर्णित हुआ । माघ मास के निखिल कृत्य के मध्य में प्रातःस्नान ही प्रधान है । इस मास में शुक्ला वसन्त-पञ्चमी, भैमीएकादशी, वराही द्वादशी,–इन तीनों में महोत्सव सम्पादन करना चाहिये ॥१६४-१६६॥

अथ वसन्तपञ्चमी

माघी शुक्ला पञ्चमी में नव पत्र, पुष्प एवं अनुलेपन द्वारा श्रीहरि की महापूजा साधन करनी चाहिये । विशेषतः भक्तिमान् होकर नीराजनोत्सव के सहित वैष्णवजनों को सम्मान प्रदान कर वसन्तराग आलाप और नृत्य-गीतादि करावे ॥१६७-१६८॥

इस विषय में कथित है – सुधीगण कहते हैं–श्रीपञ्चमी से आरम्भ कर श्रीहरि शयन पर्य्यंत वसन्तराग आलापना चाहिये । तद्व्यतीत अन्य समय वसन्तराग आलाप निषिद्ध है ॥१६९॥

वसन्त पञ्चमी में श्रीकृष्ण का पूजा विषयक उत्सव करने से वह पूजक वसंत ऋतु के समान श्रीवृन्दा-वनविहारी का प्रिय पात्र हो सकता है ॥१७०॥

अथ भीष्माष्टमी

माघी शुक्ला अष्टमी से प्रारम्भ कर पञ्च दिन पर्य्यन्त भागवत श्रेष्ठ भीष्म का तर्पण करना चाहिये ।

नित्यतर्पणतः पश्चात् सलिलान्तरुदङ्मुखः । निवीती तर्पणं कुर्य्याद्‌गाङ्गेयस्य महात्मनः ॥१७२

अथ तत्र मन्त्रः

वैयाघ्रपद्यगोत्राय साङ्कृतिप्रवराय च । अपुत्राय ददाम्येतत् सलिलं भीष्मवर्म्मणे ॥१७३॥

अथ भैम्येकादशी

तत्र मात्स्ये श्रीब्रह्मोवाच—

कथमारोग्यमैश्वर्य्यमनन्तममरेश्वर । स्वल्पेन तपसा देव भवेन्मोक्षो यथा नृणाम् ?॥१७४॥

श्रीमहेश्वर उवाच—

त्वया पृष्टस्य धर्म्मस्य रहस्यस्यास्य भेदकृत् । भविता स तदा ब्रह्मन् कर्त्ता चैव वृकोदरः ॥१७५

किञ्च—

इदं व्रतमशेषाणां व्रतानामधिकं यतः । कथयिष्यति विश्वात्मा वासुदेवो जगद्‌गुरुः ॥१७६॥

अशेषयज्ञफलदमशेषाघविनाशनम् । अशेषदुष्टशमनमशेषसुरपूजितम् ॥१७७॥

पवित्राणां पवित्रञ्च मङ्गलानाञ्च मङ्गलम् ।
भविष्यञ्च भविष्याणां पुराणानां पुरातनम् ॥१७८॥

---

तद्विधिं लिखति—नित्येति । तत्र च जीवत्पितृपितामहको भीष्मतर्पणं न कुर्य्यादिति ज्ञेयम्, 'जीवत्पिता न कुर्व्वीत तर्पणं यमभीष्मयोः' इति पाद्मेऽभिधानात् ॥१७२॥

तपसा कृच्छ्रेण ॥१७४॥

भेदकृत् प्रकाशक इत्यर्थः । भवितेत्यादि भविष्यत्प्रयोगो भविष्यकथनात् । भविष्याणां व्रतानां मध्ये भविष्य परमान्त्यम्; न केवलं भविष्यमेव, किन्तु पुराणानां पूर्व्ववृत्तानां मध्ये पुरातनं सर्व्वाद्यमित्यर्थः । एवं माहात्म्यविशेषो दर्शितः । तथा च तत्रैव श्रीभीमं प्रति श्रीभगवदुक्तौ—'कुरु व्रतमिदं सम्यक् स्नेहात्तव मयेरितम् । त्वया कृतमिदं धीर त्वन्नामाङ्कं भविष्यति ॥ सा भीमद्वादशी ह्येषा सर्व्वपापहरा शुभा । या तु कल्याणिनी नाम पुराकल्पेषु पठ्यते ॥' इति ॥१७५-१७८॥

---

अथवा, केवल मात्र अष्टमी में ही तर्पण करे । नित्य तर्पण के अनन्तर जलगर्भ में उत्तरास्य होकर यज्ञोपवीत को कण्ठदेश में माल्यवत् धारणकर महात्मा भीष्म का तर्पण करे ॥१७१-१७२॥

अथ तत्र मन्त्रः

"वैयाघ्रपद्यगोत्राय साङ्कृतिप्रवराय च । अपुत्राय ददाम्येतत् सलिलं भीष्मवर्म्मणे ॥"
व्याघ्रपद गोत्रजात, साङ्कृति प्रवर युक्त, पुत्रहीन भीष्मवर्मा को यह जल अर्पण करता हूँ । पिता जीवित होने पर यम एवं भीष्म का तर्पण न करे ॥१७३॥

अथ भैम्येकादशी

मत्स्यपुराण में श्रीब्रह्मा का कथन है—हे अमरेश्वर ! हे देव ! स्वल्प परिमित तपस्यानुष्ठान द्वारा किस प्रकार,–नीरोगता, विपुल ऐश्वर्य्य और मोक्ष प्राप्त करने में मानवगण सक्षम होते हैं ? सो कहिये ॥१७४॥

श्रीमहेश्वर ने कहा—हे ब्रह्मन् ! भीमसेन ही त्वत्कर्त्तृक जिज्ञासित अर्थात् तुम्हारे पूछे हुए इस रहस्य-धर्म के प्रकाशक और कर्त्ता होंगे ॥१७५॥

और भी लिखा है—विश्वात्मा जगद्‌गुरु वासुदेव सर्वश्रेष्ठ इस व्रत का विधान वर्णन करेंगे । इस व्रत के द्वारा समस्त यज्ञफल मिल जाते हैं । यह सब पापों का नाशक, सकल दुष्ट प्रशमनकारी, अखिल सुरगण कर्त्तृक वन्दित, पवित्रसमूह के मध्य में पवित्र, मङ्गलसमूह के मध्य में मङ्गल, भविष्य व्रतसमूह के मध्य में एवं पुराकृत व्रतसमूह के मध्य में भी पुरातन अर्थात् यह व्रत सर्वादि है ॥१७६-१७८॥

तत्रैव श्रीभीमं प्रति श्रीभगवदुक्तौ—

यद्यष्टमी-चतुर्द्दश्योर्द्वादशीष्वथ भारत। अन्येष्वपि दिनर्क्षेषु न शक्तस्त्वमुपोषितुम् ॥१७९॥

ततः पुण्यामिमां भीम तिथिं पापप्रणाशिनीम्।
उपोष्य विधिनानेन गच्छ विष्णोः परं पदम् ॥१८०॥

किञ्च तत्रैव तद्व्रतविधिकथनान्ते—

इदमेव कृतं महेन्द्रमुख्यै,-र्वसुभिश्चैव सुराबिभिस्तथा।
फलमस्य न शक्यते हि वक्तुं, यदि जिह्वायुतकोटयो मुखे स्युः ॥१८१॥इति।

व्रते कृत्यविधिश्चास्मिन् पूजाविधिविशेषवान्।
वैष्णवैश्चेदपेक्ष्यः स्याज्ज्ञेयो मत्स्यपुराणतः ॥१८२॥

---

द्वादशीषु एकादशीषु, अन्यदिनेषु जन्माष्टम्यादिषु, ऋक्षेषु श्रवणद्वादश्यादिषु ॥१७९॥

पूजाविधिविशेषयुक्तः। अस्मिन् व्रते कृत्यविधिर्यः, स चेद्यदि अपेक्ष्यः स्यादिति तादृशकृत्यविधेरावश्यकत्वाभावेन वैष्णवैर्नात्यन्तापेक्षणादिति दिक्। तद्विधिस्तत्रैव तं प्रति श्रीभगवदुक्तौ, तथा हि— माघमासस्य दशमी यदा शुक्ला भवेत्तदा। घृतेनाभ्यञ्जनं कृत्वा तिलैः स्नानं समाचरेत्॥ तथैव विष्णुमभ्यर्च्चर्य नमो नारायणेति च। कृष्णाय पादौ संपूज्य शिरः सर्व्वात्मनेति च॥ वैकुण्ठायेति वैकुण्ठमुरः श्रीवत्सधारिणे। शङ्खिने चक्रिणे तद्वद्गदिने वरदाय वै॥ सर्व्वं नारायणायेति संपूज्या बाहवः क्रमात्। दामोदरायेत्युदरं मेढ्रं पञ्चशराय वै॥ ऊरू सौभाग्यनाथाय जानुनी भूतधारिणे। नमो नीलाय वै जङ्घे पादौ विश्वसृजे नमः॥ नमो देव्यै नमः शान्त्यै नमो लक्ष्म्यै नमः श्रियै। नमस्तुष्ट्यै नमः पुष्ट्यै वृष्ट्यै हृष्ट्यै यजेच्छ्रियम्॥ नमो विहगनाथाय वायुवेगाय पक्षिणे। विषप्रमाथिने नित्यं गरुड़ञ्चाभिपूजयेत्॥ एवं संपूज्य गोविन्दमुमापतिविनायकैः। गन्धैर्माल्यैस्तथा धूपैर्भक्ष्यैर्नानाविधैरपि॥ गव्येन पयसा सिक्तां कृसरामथ वाग्यतः। सर्पिषा सह भुक्त्वा तां जप्त्वा मन्त्रपदं बुधः॥ न्यग्रोधं दन्तधावनमथवा खादिरं पुनः। गृहीत्वा धावयेद्दन्तानाचान्तः प्रागुदङ्मुखः॥ ब्रूयात् सायन्तनीं कृत्वा सन्ध्यामस्तमिते रवौ। नमो नारायणायेति त्वामहं शरणं गतः॥ एकादश्यां निराहारः समभ्यर्च्चर्य च केशवम्। रात्रिञ्च सकलां स्थित्वा स्नानञ्च पयसा तथा॥ सर्पिषा चापि दहनं हुत्वा ब्राह्मणपुङ्गवैः। सहैव पुण्डरीकाक्ष द्वादश्यां क्षीरभोजनम्। करिष्यामि यतात्माहं निर्व्विघ्नेनास्तु तच्च मे॥ एवमुक्त्वा स्वपेद्भूमावितिहास-कथां पुनः। श्रुत्वा प्रभाते विधिवत् कृत्वा च पितृतर्पणम्॥ प्रणम्य च हृषीकेशममलं चार्कमीक्ष्य च। गृहस्य पुरतो भक्त्या मण्डपं कारयेद्बुधः॥ दशहस्तानथाष्टौ वा

---

उक्त पुराण में श्रीभीम के प्रति श्रीभगवान् ने कहा है— हे भीम! अष्टमी, चतुर्दशी, द्वादशी एवं अन्यान्य दिनों में एवं नक्षत्रादि में उपवासी रहने में असमर्थ होने पर, पातकहारिणी पुण्यस्वरूपा इस तिथि में वक्ष्यमाण नियम से उपवास करके श्रीहरि के परमपद में प्रस्थान करो ॥१७९-१८०॥

उक्त पुराण में ही भैमी एकादशी की विधि-कथन के अन्त में लिखित है—इन्द्रादि एवं वसु प्रभृति देववृन्द ने इस व्रत को साधन किया था। मेरे मुख में अयुतकोटि संख्यक जिह्वा होने पर भी मैं इसका फल वर्णन करने में असमर्थ हूँ ॥१८१॥

इस भैमीएकादशी व्रत में विशेष विधि, एवं पूजा पद्धति को जानने का प्रयोजन हो तो मत्स्यपुराण से विधि को जानना वैष्णववृन्दों का कर्त्तव्य है ॥१८२॥

## अथ फाल्गुनकृत्यम्

तत्र यमः—

प्रातःस्नायी भवेन्नित्यं मासौ द्वौ माघफाल्गुनौ ।
देवान् पितॄन् समभ्यर्च्च्य मुच्यते सर्व्वकिल्विषैः ॥१८३॥

किञ्चान्यत्र—

यदीच्छेद्विपुलान् भोगान् चन्द्रसूर्य्योपमान् शुभान् ।
माघफाल्गुनयोर्मध्ये प्रातःस्नायी तदा भवेत् ॥१८४॥

गौतमीये—

फाल्गुने देवकीपुत्रं पूजयेत् स्वर्णचम्पकैः । चूतसौगन्धि-कुसुमैर्धूपैर्गन्धैः सुविस्तरैः ॥१८५॥इति ।

---

करान् कुर्य्याद् विशाम्पते । चतुर्हस्तां शुभां कुर्य्याद्वेदीमरिनिसूदन ॥ चतुर्हस्तप्रमाणञ्च विन्यसेत्तत्र तोरणम् । प्रकल्प्य कलसं तत्र मासमात्रेण संयुतम् ॥ छिद्रेण जलसम्पूर्णमधः कृष्णाजिने स्थितः । तस्य धाराञ्च शिरसि धारयेत् सकलां निशाम् ॥ धाराभिर्भूरिभिर्भूरि फलं वेदविदो विदुः । यस्मात्तस्मात् कुरुश्रेष्ठ धारा धार्य्या स्वशक्तितः ॥ तथैव विष्णोः शिरसि क्षीरधारां प्रदापयेत् । अरत्निमात्रं कुण्डञ्च कृत्वा तत्र त्रिमेखलम् ॥ योनिवक्त्रञ्च तत् कृत्वा ब्राह्मणैर्यवसर्पिषी । तिलांश्च विष्णुदैवत्यैर्मन्त्रैरेकाग्निवत्तदा । हुत्वा च वैष्णवं सम्यक्-चरु गोक्षीरसंयुतम् ॥ निष्पराद्धं प्रमाणां वै धारामाज्यस्य पातयेत् । जलकुम्भान् महावीर्य्य स्थापयित्वा त्रयोदश ॥ भक्ष्यैर्नानाविधैर्युक्तान् सितवस्त्रैरलङ्कृतान् । युक्तानौडुम्बरैः पात्रैः पञ्चरत्नसमन्वितान् ॥ चतुर्भिर्वह्वृचैर्होमस्तत्र कार्य्य उदङ्मुखैः । रुद्रजापैश्चतुर्भिश्च यजुर्वेदपरायणैः ॥ वैष्णवानि च सामानि चतुरः सामवेदिनः । अरिष्टवर्गसहितान्यभितः परिपाठयेत् ॥ एवं द्वादश तान् विप्रान् वस्त्रमाल्यानुलेपनैः । पूजयेद-ङ्गुलीयैश्च कटकैर्हेमसूत्रकैः ॥ वासोभिः शयनीयैश्च वित्तशाठ्यविवर्ज्जितः । उपाध्यायस्य च पुनर्द्विगुणं सर्व्वमेव तु ॥ ततः प्रभाते विमले समुत्थाय त्रयोदश । गा वै दद्यात् कुरुश्रेष्ठ सौवर्णमुखसंयुताः ॥ पयस्विनीः शीलवतीः कांस्यदोहसमन्विताः । रौप्यखुराः सवत्साश्च चन्दनेनाभिषेचिताः ॥ तास्तु दत्त्वा ततो भक्त्या भक्ष्यभक्षणतर्पितान् । कृत्वा वै ब्राह्मणान् सर्व्वानन्नैर्नानाविधैस्तथा ॥ भुक्त्वा चाक्षारलवणमात्मना च विसर्ज्जयेत् । अनुगम्य पदान्यष्टौ पुत्रभार्य्यासमन्वितः ॥ प्रीयतामत्र देवेश केशव क्लेशनाशन । एवमुच्चार्य्य तान् कुम्भान् ताश्च गाः शयनानि च । वासांसि चैव सर्व्वेषां गृहाणि प्रापयेद्बुधः ॥ अभावे बहुशय्यानामे-कामपि सुसंस्कृताम् । शय्यां दद्याद्गुरौ भीम सर्व्वोपस्करसंयुताम् ॥ इतिहासपुराणानि वाचयित्वातिवाहयेत् । तद्दिनं नरशार्द्दूल यदीच्छेद्विपुलां श्रियम् ॥' इति ॥१८२-१८४॥

---

### अथ फाल्गुनकृत्यम्

तद्विषय में यमोक्ति यह है—माघ, फाल्गुन उभय मास में प्रत्यह प्रात स्नान करे, एवं देवगण की एवं पितृवृन्द की पूजा करे, ऐसा होने पर समस्त पापों से रक्षा हो जाती है ॥१८३॥

अन्यत्र भी वर्णित है—चन्द्र सूर्य्यवत् पवित्र असीम भोग की इच्छा होने पर, माघ एवं फाल्गुन इन दोनों मास में सतत प्रातः स्नान करना चाहिये ॥१८४॥

गौतमीय में लिखित है—काञ्चन वर्ण चम्पक कुसुम, सुगन्धि आम्रकुसुम, धूप एवं उत्कृष्ट गन्ध द्वारा फाल्गुन मास में देवकीपुत्र की पूजा करे ॥१८५॥

अथ शिवरात्रिव्रतम्

शिवरात्रिव्रतमिदं यद्यप्यावश्यकं न हि । वैष्णवानां तथाप्यत्र सदाचाराद्विलिख्यते ।।१८६।।

शिवरात्रिव्रतं कृष्णचतुर्द्दश्यान्तु फाल्गुने । वैष्णवैरपि तत् कार्य्यं श्रीकृष्णप्रीतये सदा ।।१८७

तथा च पाद्मे व्रतखण्डे—

सौरो वा वैष्णवो वान्यो देवतान्तरपूजकः । न पूजाफलमाप्नोति शिवरात्रिवहिर्मुखः ।।१८८।।

किञ्च, तदिदमौदास्ये दूषणं, द्वेषे तु कौर्म्मे भृग्वादीन् प्रति स्वयंभगवतोक्तम्—

परात् परतरं यान्ति नारायणपरायणाः । न ते तत्र गमिष्यन्ति ये द्विषन्ति महेश्वरम् ।।१८९

यो मां समच्चर्येन्नित्यमेकान्तं भावमाश्रितः ।

विनिन्दन् देवमीशानं स याति नरकायुतम् ।।१९०।।

अन्यत्र च—

मद्भक्तः शङ्करद्वेषी मद्द्वेषी शङ्करप्रियः । उभौ तौ नरकं यातौ यावच्चन्द्रदिवाकरौ ।।१९१।।

इति ।

---

अन्योऽन्यभक्तिदानार्थमन्योऽन्योपासनाकरौ । वन्दे हरिहरौ देवावन्योऽन्यप्रेमतत्परौ ॥

ननु वैष्णवानां किं शिवरात्रिव्रत्तकरणेन ? तत्र लिखति— श्रीकृष्णप्रीतय इति । शिवरात्रिव्रत-परित्यागेन भगवत्पूजाफलानुदयाद्भगवत्प्रीत्यभावः, अतस्तदर्थं वैष्णवैः कर्त्तव्यमेवेत्यर्थः । अपि-शब्दात् किं पुनः शैवैः, शाक्तैः सौरादिभिर्वेत्यर्थः ।।१८७।।

देवतान्तरं दुर्गागणेशादि, तत्पूजकोऽन्यो वा; न पूजाफलमाप्नोतीत्यनेन व्रतस्य नित्यत्वं बोधितम् ।।१८८।।

किञ्च, श्रीशिवव्रताकरणे महादोषप्रदर्शनेन नित्यतामेव द्रढ़यति—परादिति त्रिभिः । परात् चतुर्वर्गेषु श्रेष्ठात् मोक्षादपि परतरं श्रीवैकुण्ठाख्यपदं नारायणपरा यान्तीति सत्यमेव किन्तु यदि ते श्रीशिवेऽपराधिनो न भवन्तीत्याह—नेति । अत्र च पूर्व्वपद्यार्द्धं श्रीशिवेनोक्तं, परार्द्धञ्च श्रीभगवतेति सत्सु प्रसिद्धम् । यदि च कौर्म्मदृष्ट्या सर्व्वं पद्यं श्रीभगवदुक्तमेव,तर्हि निखिलगुणामृतनिधिना भगवता नारायणेन परोक्षवद्विनयभरेणोक्त-मिति ज्ञेयम् । द्विषन्तीति—द्वेषस्तु तम्व्रताकरणादिना तदनादरलक्षण एव, यथा गुरुदेवतादिद्रोहः, एवं निन्दापि ।।१८९।।

---

अथ शिवरात्रिव्रतम

यद्यपि वैष्णवों के सम्बन्ध में शिवरात्रि व्रतानुष्ठान का कोई प्रयोजन नहीं है, तथापि सदाचार निबन्धन यहाँ उसका वर्णन किया जाता है । फाल्गुन मास की कृष्ण चतुर्दशी तिथि में इस व्रत का अनुष्ठान करना करना चाहिये । श्रीकृष्ण प्रीति के निमित्त सर्वदा इस व्रत का अनुष्ठान वैष्णवों को करना चाहिये ।।१८६-८७

अतएव पद्मपुराण के व्रतखण्ड में लिखित है—सूर्य्योपासक हो, अथवा वैष्णव, किंवा अन्य देवोपासक हो, शिवरात्रि विमुख होने से उनकी पूजा फलवती नहीं होती है ।।१८८।।

और भी लिखित है कि—शिवरात्रि व्रत के प्रति अवज्ञा करने पर दोष होता है । शिवरात्रि व्रत के प्रति द्वेष करने पर जो फल होता है, उसका वर्णन कूर्म्मपुराण में भृगु प्रभृति मुनिवृन्द के निकट में स्वयं हरि किये हैं । नारायण परायण व्यक्तिगण की गति वैकुण्ठ में होती है, यह कथन सत्य है । किन्तु महेश्वर द्वेषी होने पर उनकी श्रीविष्णुधाम प्राप्ति नहीं होती है । शिव निन्दा पूर्वक सतत एकान्तभाव से मेरी पूजा करने से भी अयुत संख्यक नरक में प्रस्थान करना पड़ता है ।।१८९-१९०।।

अन्यत्र भो वर्णित है—मद्भक्त शिव द्वेषी होने से किंवा शिव भक्त मद् द्वेषी होने से चन्द्र सूर्य्य स्थिति यावत् अर्थात् प्रलयकाल पर्य्यन्त उन सबको नरक में पच्यमान होना पड़ता है ।।१९१।।

अतएव हयशीर्षपञ्चरात्रे श्रीहरिहरप्रतिष्ठायां श्रीभगवतैवोक्तम्—

यः शिवः सोऽहमेवेह योऽहं स भगवान् शिवः। नावयोरन्तरं किञ्चिदाकाशानिलयोरिव ॥१९२

वह्वृच-परिशिष्टे —

शिवाय विष्णुरूपाय शिवरूपाय विष्णवे। शिवस्य हृदयं विष्णुर्विष्णोस्तु हृदयं शिवः ॥१९३

यथा शिवमयो विष्णुरेवं विष्णुमयः शिवः। यथान्तरं न पश्यामि तथा मे स्वस्तिरायुषः ॥१९४

इति।

कार्य्यं गुणावतारत्वेनैक्याद्रुद्रस्य वैष्णवैः। वैष्णवाग्रयतया श्रैष्ठ्यात् सदाचाराच्च तद्व्रतम् ॥१९५

चतुर्थस्कन्धदृष्ट्या तु नैके कुर्व्वन्ति तद्व्रतम् ॥१९६॥

तथा च भृगुशापः (श्रीभा ४।२।२८)—

भवव्रतधरा ये च ये च तान् समनुव्रताः। पाषण्डिनस्ते भवन्तु सच्छास्त्रपरिपन्थिनः ॥१९७॥

इति।

अ शिवरात्रिव्रतनिर्णयः

तत्र स्कान्दे—

माघफाल्गुनयोर्मध्ये असिता या चतुर्द्दशी। शिवरात्रिस्तु सा ख्याता सर्व्वयज्ञोत्तमोत्तमा ॥१९८

---

ननु 'नान्यं देवं नमस्कुर्य्यान्नान्यं देवं निरीक्षयेत्। चक्राङ्कितः सदा तिष्ठन्मद्भक्तः पाण्डुनन्दन ॥' इति भविष्योत्तरोक्त-श्रीभगवद्वचनादिना विरोधः स्यात्, तत्र श्रीभगवद्वचनमेव लिखति—यः शिव इति। आकाशनिलयोरिवेति दीपाद्दीपान्तरवत् कारणेन सह कार्य्यस्याभेदाभिप्रायेणावतारिणात्मना सहावतारस्य श्रीशिवस्याभेदो दर्शितः ॥१९२॥

तथा तत इत्यर्थः, आयुषो जीवनस्य भगवद्भक्तिलक्षणस्य स्वस्तिः शोभनसत्ता सदा सम्यग्वृत्तिर्भवतीत्यर्थ, अस्त्विति शेषो वा। 'शिवस्य श्रीविष्णोर्य इह गुणनामादि सकलं, धिया भिन्नं पश्येत्' इत्यादिकञ्च श्रीमन्नामापराधस्तोत्रे पूर्व्वं लिखितमेव। अतोऽत्रायं सिद्धान्तः—श्रीविष्णुरेको देवः, शिवश्चान्यो देव इत्येवमन्यत्वे भासमाने तन्नमस्कारादिकं वैष्णवानामयुक्तमेव, किन्तु यथा मत्स्यादयो लीलावतारास्तथा श्रीशिवश्च गुणावतारोऽयमित्यभेदेन न दोषावहमपि तु गुण एव, भगवद्भक्तिविशेष एव पर्य्यवसानादिति ॥ ॥१९४-१९५॥

---

अतएव हयशीर्ष पञ्चरात्र में श्रीहरिहर प्रतिष्ठा में श्रीभगवान् ने कहा है—जो शिव हैं, सो ही मैं हूँ, और जो मैं हूँ, सो ही शिव हैं। आकाश और वायु के भेद समान—कार्य्य-कारण के अभेद के तुल्य, इन दोनों को भी अभेद समझना चाहिये। वह्वृच परिशिष्ट में लिखित है—विष्णु ही शिवरूपी और शिव ही विष्णुरूपी हैं। विष्णु ही शिव का हृदय और शिव ही विष्णु का हृदय हैं। विष्णु जिस प्रकार शिवमय हैं तद्रूप शिव भी विष्णुमय हैं। उभय में प्रभेद दिखाई नहीं देता है। ऐसे ही मदीय परमायु की सत्ता हो ॥१९२-९४

गुणावतारता रूप में एकत्व हेतु शिव, वैष्णवाग्रगण्य हैं, अतएव सदाचारवशतः शिवरात्रि व्रतानुष्ठान करना वैष्णवों के पक्ष में उचित है। कतिपय वैष्णव चतुर्थ स्कन्ध के प्रति लक्ष्य करके शिवव्रतानुष्ठान में विरत होते हैं। उक्त स्कन्ध में भृगुशाप कथन में वर्णित हुआ है, जो शिव व्रतानुष्ठान करेंगे अथवा उनके अनुगामी होंगे, उन सबको सर्व शास्त्र के प्रति कूलाचारी जानना होगा। सुतरां वे सब पाषण्ड नाम से अभिहित होते हैं ॥१९५-१९७॥

अथ शिवरात्रिव्रतनिर्णयः

स्कन्द पुराण में लिखित है—माघ एवं फाल्गुन इन दोनों के मध्यवर्त्ती कृष्णा चतुर्दशी ही शिवरात्रि कही गई है। यह तिथि सब यज्ञों की अपेक्षा श्रेष्ठ है ॥१९८॥

महीखण्डे —

माघमासस्य शेषा या प्रथमा फाल्गुनस्य च ।
कृष्णा चतुर्द्दशी सा तु शिवरात्रिः प्रकीर्त्तिता ॥१९९॥

किञ्च नागरखण्डे —

यानि कान्यत्र लिङ्गानि स्थावराणि चराणि च । तेषु संक्रमते देवस्तस्यां रात्रौ यतो हरः ।
शिवरात्रिस्ततः प्रोक्ता तेन सा हरिवल्लभा ॥२००॥इति ।
शुद्धोपोष्या च सा सर्व्वैर्विद्धा स्याच्चेच्चतुर्द्दशी ।
प्रदोषव्यापिनी ग्राह्या तत्राप्याधिक्यमागता ॥२०१॥

तथा चोक्तम् —

प्रदोषव्यापिनी ग्राह्या शिवरात्रिः शिवप्रियैः ।
रात्रौ जागरणं तस्यां यस्मात्तस्यामुपोषणम् ॥२०२॥

किञ्च—

प्रदोषश्च चतुर्नाड्यात्मकोऽभिज्ञजनैर्मतः ॥२०३॥इति ।
प्रदोषव्यापिनी साम्येऽप्युपोष्यं प्रथमं दिनम् ।
नोपोष्या वैष्णवैर्विद्धा सापीति च सतां मतम् ॥२०४॥

---

हरिवल्लभत्वेनास्य श्रीशिवप्रियत्वादेव वैष्णवैरपि कर्त्तव्यमिति भावः ॥२००॥

शिवप्रियैरित्यनेन विद्धाव्रतस्य वैष्णवानामकर्त्तव्यत्वं प्रतिपादितमिति भावः ॥२०२॥

एतदेव प्रतिपादयति—सतां मतमिति । तत्र प्रमाणमाह—माघेऽसितेत्यादि । एवञ्च—'माघफाल्गुनयोर्मध्ये या स्याच्छिवचतुर्द्दशी । अनङ्गेन समायुक्ता कर्त्तव्या सर्व्वदा तिथिः ॥' इतिवचनं भविष्योत्तरोक्त-

---

महीखण्ड में लिखित है—माघ मास के अन्तिम में एवं फाल्गुन मास के आदि में जो कृष्ण चतुर्दशी तिथि है, उसका नाम ही शिवरात्रि है ॥१९९॥

और भी नागरखण्ड में लिखित है—भूलोक में स्थावर वा चर, जितने शिवलिङ्ग विद्यमान हैं, चतुर्दशी की रात्रि में देवदेव श्रीमहादेव उन सबमें अधिष्ठित होते हैं। इसी कारण, चतुर्दशी तिथि को शिवरात्रि कही जाती है। अतएव यह तिथि श्रीशिव की प्रिय तिथि है ॥२००॥

सबके पक्ष में शुद्धा चतुर्दशी तिथि में उपवास करना चाहिये। किन्तु विद्धा चतुर्दशी यदि प्रदोष व्यापिनी वा तदपेक्षा अधिक काल व्यापिनी होती है तो वैष्णव भिन्न अन्योपासकगण कर्त्तृक वह तिथि ग्रहणीया है ॥२०१॥

उस विषय में कथित है—महादेव के प्रियपात्रवृन्द, प्रदोष व्यापिनी शिवरात्रि में ही व्रत पालन करें। कारण, उसमें ही उपवास निर्धारित हुआ है। उक्त शिवरात्रि में रात्रि जागरण करना पड़ता है ॥२०२॥

और भी कथित है—विज्ञगण के मत में चतुर्दण्डात्मक समय ही सूर्य्यास्त के पश्चात् प्रदोष नाम से अभिहित है ॥२०३॥

उभय दिन प्रदोष व्यापिनी चतुर्दशी होने पर प्रथम दिन में उपवास रहना वैष्णव भिन्न अपर के पक्ष में विहित है। प्रथम दिन त्रयोदशी विद्धा होने पर प्रथम दिन व्रत करना वैष्णव के पक्ष में उचित नहीं है। यह साधुगण सम्मत सिद्धान्त है ॥२०४॥

यत उक्तम्—

शिवरात्रिव्रते भूतं कामविद्धं विवर्ज्जयेत् ॥२०५॥

अतएवोक्तं पराशरेण—

माघासितं भूतदिनं हि राज,-न्नुपैति योगं यदि पञ्चदश्या ।
जयाप्रयुक्तां न तु जातु कुर्य्या,-च्छिवस्य रात्रिं प्रियकृच्छिवस्य ॥२०६॥ इति ।

अथ योगाश्च

उक्तञ्च लोकाक्षिणा—

द्विमुहूर्त्ता भवेद्योगो वेधो मौहूर्त्तिकः स्मृतः ॥२०७॥ इति ।

शिवरात्रौ च कर्त्तव्यं नियमेन त्रयं बुधैः । उपवास-महादेवपूजाजागरणं निशि ॥२०८॥

अथ शिवव्रतविधिः

सायं शिवालयं गत्वा शुचिराचम्य च व्रती । कृत्वा शिवाग्रे सङ्कल्पमारभेत तदर्च्चनम् ॥२०९
पञ्चाक्षरेण मन्त्रेण शतरुद्रेण वा द्विजः । क्षीरादिभिश्च शुद्धाद्भिर्धारया स्नापयेच्छिवम् ॥२१०

---

शिवरात्रिव्यतिरिक्तशिवचतुर्द्दशीसंज्ञक-व्रतविषयकं, किंवा परदिने अमावस्यायोगाभावविषयकं, सकाम-वैष्णवविषयकं, वा ज्ञेयम् । अन्ये च माघासितमित्येतद्वचनं, 'शिवरात्रिव्रते भूतम्' इति वचनं परदिन-प्रदोषव्यापि-चतुर्द्दश्युपवासविषयकमिति व्यवस्थापयन्ति, तच्चासङ्गतमिति माघेति; पञ्चदश्या योगमुपैती-त्यादिविशेषोक्त्या प्रदोषव्यापिनीत्यादिविरोधापत्तेः लिखितव्यवस्थैव युक्तेति दिक् इत्थञ्च यदा चतुर्द्दशीक्षयः स्यात्तर्हि वैष्णवानामपि विद्धोपवासः प्रसज्येतैव, अन्यथा अमावस्यासंयोगव्यवस्थाया अत्र लोपप्रसङ्गात् । अतः सा व्यवस्था वैष्णवजनसम्मता न स्यादित्युपेक्षा । एतच्चाग्रे जन्माष्टमीव्रतनिर्णयान्ते लेख्यमेव इति ॥ ॥२०४-२०६॥

शिवरात्रौ चोपवास-पूजा-जागरणानां त्रयाणामेवावश्यकत्वं लिखति—शिवेति ॥२०८॥

अधुना भविष्योत्तर-स्कन्दपुराणशिवधर्म्मोत्तराद्युक्तानुसारेण व्रतानुष्ठान-प्रकारं लिखति—सायमिति पञ्चभिः । तस्य शिवस्य अर्च्चनं पूजामारभेत ॥२०९॥

तदेव लिखति—पञ्चेति द्वाभ्याम् । आदि-शब्देन घृतमध्वादि द्राक्षारसादिकञ्च ॥२१०॥

---

कारण उक्त है—शिवरात्रि व्रत में त्रयोदशीविद्धा चतुर्द्दशी परित्याग करने के योग्या है ॥२०५॥

अतएव पराशर कहे हैं—हे राजन् ! माघी कृष्णा चतुर्दशी में अमावस्या का योग होने पर शिवरात्रि व्रत पालन करना चाहिये । यह व्रत श्रीमहादेव को प्रसन्न करने वाला है । किन्तु श्रीशिव के प्रीतिप्रद यह है । किन्तु यह उक्त त्रयोदशी संयुक्ता चतुर्दशी वर्जनीय है ॥२०६॥

अथ योगाश्च

लोकाक्षि ने कहा है—दो मुहूर्त्त समय को योग कहते हैं एवं एक मुहूर्त्त समय को वेध कहते हैं ॥२०७॥

शिवरात्रि में उपवास, रात्रि में श्रीशिवपूजा, एवं जागरण यह त्रिविध अनुष्ठान यथाविधि सम्पन्न करना विज्ञजन के पक्ष में एकान्त कर्त्तव्य है ॥२०८॥

अथ शिवव्रतविधिः

व्रतीव्यक्ति, पवित्र भाव से सन्ध्या समय में शिव-मन्दिर में जाकर आचमन पूर्वक शिव के सम्मुख में सङ्कल्प करे । तत्पश्चात् पूजा में प्रवृत्त होना चाहिये । द्विजातिगण, पञ्चाक्षर "नमःशिवाय" मन्त्र से वा शतरुद्र मन्त्र से क्षीरादि एवं घृत, मधु, द्राक्षारस, दधि प्रभृति के द्वारा तथा शुद्ध जलधारा के द्वारा महादेव

महार्च्चां विधिना कृत्वा गन्धपुष्पतिलादिभिः। समर्प्य धूपदीपादीन् शङ्खेनार्घ्यं निवेदयेत् ॥२११

अथ तत्र मन्त्रः

गौरीवल्लभ देवेश सर्पाढच शशिशेखर। वर्षपापविशुद्धचर्थमर्घ्यं मे प्रतिगृह्यताम् ॥२१२॥ इति।

आचार्य्यं परिपूज्याथ दत्त्वा तस्मै च दक्षिणाम्।
विधिवज्जागरं कृत्वा प्रातः पारणमाचरेत् ॥२१३॥

अथ तत्र पारण-निर्णयः

पूर्व्वविद्धोपवासे च परेऽहनि चतुर्द्दशी।
दिवसव्यापिनी तिष्ठेत् कुर्य्यात् तस्यां हि पारणम् ॥२१४॥

---

विधिनेत्यत्रायं विधिः—'प्रथमे यामे शिवाय नमः' इति, पञ्च-ब्रह्ममन्त्रैर्वा गन्धपुष्पतिलमाषगोधूमादिना महापूजां कृत्वा, ततश्च 'ॐ आद्याय नमः', 'ॐ वामाय नमः', 'ॐ तत्पुरुषाय नमः', 'ॐ अघोराय नमः' इति प्रत्यगादिचतुर्द्दिक्षु; 'ॐ ईशानाय नमः' इत्युपरि। एवं पञ्चवक्त्राणि पुष्पादिभि सम्पूज्य पश्चादिष्टपुष्पं समर्पयेत्। आदि-शब्दान्नैवेद्यताम्बूलादि, अर्घ्यश्च फलगन्धाक्षतान्वितं ज्ञेयम् ॥२११॥

आचार्य्यं शिवव्रतविध्युपदेशकमक्षतपुष्पान्नवस्त्रादिना सम्मान्य। विधिवदिति– द्वितीये यामे 'शङ्कराय नमः' इति, तृतीये 'महेश्वराय नमः' इति, चतुर्थे 'रुद्राय नमः' इति पूर्व्वतो विशेषः। अन्यश्च समान एव विधिर्ज्ञेयः। तथैकादशीजागरणवद्गीतनृत्यादिनेति च ज्ञेयम्। पारणमाचरेदित्यत्रापि विधिवदित्यनुवर्त्तनीयम् ततश्च प्रभाते नित्यकृत्यं कृत्वा गृहे शिवमभ्यर्च्चर्य शिवभक्तान् वैष्णवान् विप्रांश्च सम्भोज्य बन्धुभिः सह भुञ्जीत इति ज्ञेयम् ॥२१३॥

ननु तद्व्रतपारणे च शुद्धायामुपवासे सति प्रातरमावस्यायामेव पारणमबाधम्। पूर्व्वविद्धोपवासे च 'कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्द्दशी। एताः पूर्व्वयुताः कार्य्यास्तिथ्यन्ते पारणं भवेत् ॥' इत्यादि-स्कन्दवचनैस्तिथ्यन्ते पारणविधिना तत्र च समस्तदिनव्यापि-चतुर्द्दशीनिष्क्रमे सति कदा पारणमस्तु? इत्यपेक्षायां लिखति—पूर्व्वेति। हि-शब्दस्त्वेवार्थे। तस्यां चतुर्द्दश्यामेव पारणम्, अन्यथाऽमावस्यारात्रौ भोजनस्य प्रसङ्गात्, तच्च निषिद्धम्; 'भूताष्टम्यां दिवा भुक्त्वा रात्रौ भुक्त्वा च पर्व्वणि। एकादश्यां दिवा रात्रौ भुक्त्वा चान्द्रायणं चरेत् ॥' इति। एवं यद्यपि चतुर्द्दश्यां दिवाभोजनं निषिद्धं, तथापि पारणानुरोधेन अमावस्यारात्रिभोजनवत्तद्दोषविशेषावहं न स्यादिति ज्ञेयम्। किञ्च—'सर्व्वेष्वेवोपवासेषु दिवापारणमिष्यते' इति, अन्यदा तु चतुर्द्दश्यन्ते सत्येव पारणम् ॥२१४॥

---

को स्नान करावे। विधानानुसार गन्ध, पुष्प, तिल इत्यादि द्वारा पूजा समापन करके धूप, दीप अर्पणपूर्वक शङ्ख द्वारा अर्घ्य प्रदान करे ॥२०९-२११॥

अथ तत्र मन्त्रः

हे गौरीवल्लभ! हे देवेश! हे सर्पाढच! हे शशिशेखर! संवर्षकृत पापों के शोधनार्थ मैं यह अर्घ्य समर्पण करता हूँ, ग्रहण कीजिये ॥२१२॥

इस मन्त्र से अर्घ्य प्रदान कर आचार्य्य की अर्च्चना करके उनको दक्षिणा अर्पण करे एवं यथाविधि रात्रि जागरण पूर्वक प्रातःकाल में व्रत का पारण करे ॥११३॥

अथ तत्र पारण-निर्णयः

यदि त्रयोदशी विद्धा चतुर्दशी में उपवास हो और दूसरे दिन दिवस व्यापिनी चतुर्दशी हो तो, चतुर्दशी तिथि में ही पारण करना चाहिये ॥२१४॥

तथा चोक्तम् —

सा त्वस्तमयपर्य्यन्तं व्यापिनी चेत् परेऽहनि ।
दिवैव पारणं कुर्य्यात् पारणे नैव दोषभाक् ॥२१५॥ इति ।
अनुष्ठानविधिश्चास्य व्रतस्योक्तोऽतिविस्तरम् । शिवधर्म्मोत्तरादौ तु ज्ञेयोपेक्ष्यः स चेत्ततः ॥२१६
शिवव्रतस्य माहात्म्यमस्य सर्व्वत्र विश्रुतम् ।
व्याधोऽपि मुक्तो यस्तादृक् लिङ्गार्च्चाजागरादिना ॥२१७॥

अथ शिवरात्रिव्रत-माहात्म्यम्

नागरखण्डे—

स्वयम्भूलिङ्गमभ्यर्च्च्य सोपवासः सजागरः । अजानन्नपि निष्पापो निषादो गणतां गतः ॥२१८

स्कान्दे च—

शिवञ्च पूजयित्वा यो जागर्त्ति च चतुर्द्दशीम् । मातुः पयोधररसं न पिबेत् स कदाचन ॥२१९॥

---

सा शिवरात्रिचतुर्द्दशी तु परस्मिन् दिने अस्तमयपर्य्यन्तं सूर्य्यास्तसमयावधिव्यापिनी चेद्भवति, एवं चतुर्द्दश्यन्तपारणे च व्रती दोषभाक् व्रतभङ्गदोषभागी न स्यात्, अन्यथामावस्यारात्रिभोजन-प्राप्तेरिति भावः। एवमुपवासद्वयञ्च निरस्तम् । अतएवोक्तं—'यामत्रयोर्द्ध्वगामिन्यां प्रातरेव हि पारणम्' इति दिक् ॥२१५॥

अस्य शिवरात्रिसम्बन्धिनो व्रतस्य, अत्यन्तविस्तरं यथा स्यात्, अपेक्ष्यश्चेद्भवति, तदा ततः शिवधर्म्मोत्तरादितः, स विधिर्ज्ञेयः । आदि-शब्देन भविष्योत्तरस्कन्दपुराणशिवयामलादि ॥२१६॥

तादृग्दैवादन्य प्रसङ्गजातं यत्, लिङ्गार्च्चा श्रीशिवपूजनम्, जागरः, आदि-शब्देन उपवासश्च, तेनापि व्याधोऽपि मुक्त इति यत्, यद्वस्माच्छिवव्रतादिति वा ॥२१७॥

तथा चोक्तं भविष्योत्तरे—'कृष्णपक्षे चतुर्द्दश्यां न किञ्चिन्मृगयन्नपि। प्राप्तवान् प्राणयात्रार्थं क्षुधासंपीड़िनोऽवशः ॥' इत्युपवासः; किञ्च—'धनुष्कोट्या हतान्येव बिल्वपत्राणि मानद। पतितानि महाबाहो शम्भोः शिरसि भूमिप ॥ तस्थौ स एव तत्रैव सर्व्वरात्रिमतन्द्रितः। स्वोदरार्थं महाराज मृगलिप्सुरहङ्कृतः ॥' इति; एवञ्च पूजाजागरणे वृत्ते, गणतां शिवपार्षदताम् ॥२१८॥

---

इस विषय में कहा गया है—परदिन में अर्थात् पारण दिन में सूर्य्यास्त काल पर्य्यन्त व्यापिनी चतुर्दशी तिथि होने पर दिन में ही पारण करना चाहिये। इसमें दोष नहीं है। एकादशी तिथि में अरुणोदय विद्धा का नियम है, तद्भिन्न समस्त तिथियों में सूर्य्योदय विद्धा का सिद्धान्त गृहीत हुआ है, पूर्णा लक्षण से ही वेध लक्षण में द्वैविध्य हुये हैं ॥२१५॥

शिवरात्रि व्रत विधान का वर्णन विस्तृत रूप से हुआ है। इस विषय में विशेष विधि को जानने की इच्छा हो तो, शिवधर्म्मोत्तरादि ग्रन्थ से जानना आवश्यक होगा। इस व्रत का माहात्म्य सर्वत्र प्रसिद्ध है। लिङ्गपूजा एवं रात्रि जागरण करने पर तादृश पापरूप व्याध भी मुक्त हुआ था ॥२१६-२१७॥

अथ शिवरात्रिव्रत-माहात्म्यम्

नागरखण्ड में लिखित है—एक चण्डाल ने शिवरात्रि को न जानकर भी उपवास और जागरण पूर्वक अनादि लिङ्ग की पूजा करके पापरहित हो, शिव का पार्षद पद प्राप्त किया था ॥२१८॥

स्कन्द पुराण में लिखित है—चतुर्दशी में शिव पूजन करके निशा जागरण करने पर पुनर्वार जननी का स्तन्य पान नहीं करना पड़ता है, अर्थात् उस प्रकार आचरणकारि का पुनर्जन्म नहीं होता है ॥२१९॥

किञ्चान्यत्र—

कश्चित् पुण्यविशेषेण व्रतहीनोऽपि यः पुमान् । जागरं कुरुते तत्र स रुद्रसमतां व्रजेत् ॥२२०॥इति

श्रीकृष्णे वैष्णवानान्तु प्रेमभक्तिर्विवर्द्धते । कृष्णभक्तिरसासारवर्षिरुद्रानुकम्पया ॥२२१॥

अथ श्रीगोविन्दद्वादशी

फाल्गुने द्वादशी शुक्ला य पुष्यर्क्षेण संयुता । गोविन्दद्वादशी नाम सा स्याद्गोविन्दभक्तिदा ॥२२२

तस्यामुपोष्य विधिना भगवन्तं प्रपूजयेत् । लिखितः पापनाशिन्यां विधिर्योऽत्रापि स स्मृतः॥२२३

अथ गोविन्दद्वादशीमाहात्म्यम्

ब्रह्मपुराणे श्रीवशिष्ठमान्धातृसंवादे—

फाल्गुनामलपक्षे तु पुष्यर्क्षे द्वादशी यदि । गोविन्दद्वादशी नाम महापातकनाशिनी ॥२२४॥

तस्यामुपोष्य विधिवन्नरः संक्षीणकल्मषः । प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्तिदुर्ल्लभाम् ॥२२५

इति ।

---

कश्चिदन्त्यजादिरपि व्रतहीनः उपवासादिनियमरहितोऽपि यः पुण्यविशेषेण तत्र शिवरात्रौ जागरणं कुरुते, रुद्रसमतां तदीयसारूप्यादियुक्तपार्षदत्वं वैष्णवाग्रयत्वं वा स प्राप्नुयात् ॥२२०॥

ननु श्रीकृष्णचरणारविन्दभक्त्येकापेक्षकाणां वैष्णवानां शिवव्रतेन किं स्यात् ? इत्यपेक्षायां लिखति—श्रीकृष्णे इति । ननु श्रीशिवव्रतेन कथं श्रीकृष्णप्रेमभक्तिर्वर्द्धताम् ? तत्र लिखति—कृष्णेति । कृष्णभक्तिरसासारवर्षिणो रुद्रस्यानुकम्पया, श्रीशङ्करकरुणयैव श्रीकृष्णप्रेमभक्तिविशेषसिद्धेः । यद्वा, कृष्णस्य या भक्तिरसवर्षिणी रुद्रानुकम्पा तया, एवं श्रीशिवव्रतेनैव श्रीकृष्णकृपाविशेषोत्पत्तेस्तत्प्रेमभक्तिवृद्धिर्भवतीति दिक् ॥२२१

अत्र गोविन्दद्वादश्यां भगवत्पूजनेऽपि स एव विधिः स्मृतो मुनिभिः । एकदैवतत्वादिना द्वयोरेकरूपत्वात् । ॥२२३॥

पुनरावृत्तिर्येषां तैर्दुर्लभाम्, अपुनरावृत्तिकामित्यर्थः ॥२२५॥

---

अन्यत्र और भी वर्णित है—उपवासादि नियम रहित होकर भी किसी प्रकार पुण्य विशेष से शिवरात्रि में जागरण करने पर अन्त्यज व्यक्ति भी रुद्र के सारूप्यादि युक्त पार्षदत्व प्राप्त करता है ॥२२०॥

वैष्णव होकर शिवरात्रि व्रत करने से कृष्ण-भक्ति रस-सारवर्षी रुद्र के प्रसाद से श्रीकृष्ण में प्रेम-भक्ति वर्द्धित होती है ॥२२१॥

अथ श्रीगोविन्दद्वादशी

फाल्गुन मास की शुक्ला द्वादशी तिथि में पुष्यानक्षत्र का योग होने से उसको 'गोविन्द द्वादशी' कहते हैं । वह तिथि गोविन्द भक्ति प्रदायिनी है । इस तिथि में उपवासी रहकर यथाविधि श्रीभगवान् की पूजा करे । पापनाशिनी व्रत की विधि के अनुसार गोविन्द द्वादशी व्रत का अनुष्ठान करना चाहिये ॥२२२-२२३॥

अथ गोविन्दद्वादशीमाहात्म्यम्

ब्रह्मपुराण के वशिष्ठ-मान्धातृ-संवाद में लिखित है—फाल्गुन मास की शुक्ला द्वादशी पुष्यानक्षत्र के सहित मिलित होने से उसको 'गोविन्द द्वादशी' कहते हैं । उससे निखिल पाप विनष्ट होते हैं, यथाविधि गोविन्द द्वादशी में उपवास करने पर पातक विदूरित होता है एवं पुनर्जन्म निवारिणी परमा सिद्धि प्राप्त होती है ॥२२४-२२५॥

आमर्द्दकी द्वादशीति लोके ख्यातेयमेव हि । योगाभावेऽत्र तन्नाम्नी तदीयैकादशी मता ।
यत्र आमर्द्दकीपूजाव्रतमस्यां विशेषतः ॥२२६॥

अथ आमर्द्दकीव्रतविधिः

तदुक्तं ब्राह्मे तत्रैव पापनाशिनी-माहात्म्यप्रसङ्गे—

फाल्गुने तु विशेषेण विशेषः कथितो नृप । आमर्द्दक्या व्रतं पुण्यं विष्णुलोकप्रदं नृणाम् ॥२२७॥

प्रभासखण्डे च श्रीदेवीमहेशसंवादे—

फाल्गुनस्य सिते पक्षे एकादश्यामुपोषितः । स्नात्वा नद्यां ताड़ागे वा वाप्यां कूपे गृहेऽपि वा ।
गत्वा गिरौ वने वाऽपि यत्र सा प्राख्यते शिवा ॥२२८॥

क्षीरोदे मथ्यमाने तु यदा वृक्षः समुत्थितः । आमर्द्दाद्देवदैत्यानां तेन सामर्द्दकी स्मृता ॥२२६

शिवा लक्ष्मीः स्मृतो वृक्षः सेव्यते सुरसत्तमैः । देवैर्ब्रह्मादिभिः सर्व्वैर्वृक्षोऽसौ वैष्णवः स्मृतः॥२३०

तत्र गत्वा हरिः पूज्यो वृक्षमूलेऽथवा शिवा ।
पूज्या पुष्पैः शुभै रात्रौ कार्य्यं जागरणं नरैः ॥२३१॥

करकं जलपूर्णन्तु कर्त्तव्यं पात्रसंयुतम् । हविष्यान्नन्तु कर्त्तव्यं दीपः कार्य्यो विधानतः ॥२३२॥

एवं जागरणं कार्य्यं कथाश्रवणतत्परैः । मुच्यन्ते देहिनः पापैः कलिजैः कायसम्भवैः ॥२३३॥
देहान्ते च नराः सर्व्वे पूज्यन्ते हरिमन्दिरे ॥२३४॥

---

इयं फाल्गुनशुक्लद्वादशी, द्वादशी च द्वादश्येकादश्यारभेदाभिप्रायेण, किंवा द्वादश्यां पुष्यानक्षत्रे सति तस्यामेवोपवासापेक्षयेति । तदभावेऽपि एकादश्यामुपवासे सति तस्यामेवामर्द्दकीपूजादिकमपि । तच्चाग्रे व्यक्तं भावि । शिवा आमर्द्दकी ॥२२६-२२८॥

आमर्द्दकीवृक्षोऽयं शिवेति लक्ष्मीरिति च स्मृतः, अतएव सेव्यते ॥२३०॥

---

इस लोक में यह द्वादशी 'आमर्दकी द्वादशी' नाम से विख्यात है । योग का अभाव होने पर एकादशी में व्रत करना आवश्यक है । अधिकन्तु इस द्वादशी के दिन में आमर्दकी पूजनरूपी व्रत करना चाहिये ॥२२६

अथ आमर्द्दकीव्रतविधिः

ब्राह्मपुराण के पापनाशिनी व्रत वर्णन प्रसङ्ग में लिखित है—हे नृप ! फाल्गुन मास में विशेष रूप से आमर्दकी व्रत विहित हुआ है । वह व्रत मानवों के पक्ष में पुण्यस्वरूप एवं विष्णुलोक प्रद है ॥२२७॥

प्रभास खण्ड के श्रीदेवी-महेश्वर-संवाद में उक्त है—फाल्गुन मास के शुक्लपक्ष की एकादशी तिथि में उपवासी रहकर नदी, तड़ाग, वापी, कूप किंवा गृह में स्नान करके गिरि वा वन में स्थित आमलकी तरु के निकट गमन करे । क्षीरसिन्धु के मन्थन के समय देवासुर के आमर्दन के कारण, यह तरु उत्पन्न हुआ था, अतः इसका नाम आमर्दकी है । इस तरु को शिवा वा लक्ष्मी शब्द से कहते हैं । यह वृक्ष, देवश्रेष्ठगण कर्त्तृक निषेवित है, विरिञ्चि प्रमुख देववृन्द इस तरु को वैष्णवतरु नाम से कहते हैं ॥२२८-२३०॥

आमर्दकी तरु मूल में उपस्थित होकर श्रीहरि की पूजा करनी चाहिये, अथवा सुपुष्प द्वारा उक्त तरु की पूजा करके रात्रि जागरण करे । जलपूरित कमण्डलु पात्र समन्वित हविष्यान्न प्रदान करे । विधि पूर्वक दीपदान करे, एवं हरिकथा श्रवण में अभिनिविष्ट होकर रात्रि जागरण करना चाहिये । इस प्रकार अनुष्ठान करने से दैहिक कलिकलुष से मुक्त होता है एवं व्रतानुष्ठानकारी मानवगण देहान्त में हरिलोक में पूजित होते हैं ॥२३१-२३४॥

अथ वसन्तोत्सवः

फाल्गुन्यां पौर्णमास्यान्तु विदध्याद्वैष्णवैः सह । श्रीकृष्णप्रियभक्तस्य वसन्तस्यार्च्चनोत्सवम् ॥२३५
भविष्योत्तरतो ज्ञेयस्तद्विधिश्चेदपेक्ष्यते । यः श्रीयुधिष्ठिरस्योक्तो व्यक्तं भगवता स्वयम् ॥२३६

अथ वसन्तोत्सव-माहात्म्यम्

तत्रैव—

एवं यः कुरुते पार्थ शास्त्रोक्तं फाल्गुनोत्सवम् ।
मत्प्रसादाच्च सिध्यन्ति तस्य सर्व्वे मनोरथाः ॥२३७॥

वृत्ते तुषारसमये शीतपञ्चदश्यां, प्रातर्वसन्तसमये समुपस्थिते च ।
सम्प्राप्य चूतकुसुमं सह चन्दनेन, सत्यं हि पार्थ पुरुषोऽब्दशतं सुखी स्यात् ॥२३८॥

अथ चैत्रकृत्यम्

चैत्रे कुर्य्यात् सिते पक्षे श्रीरामनवमीव्रतम् ।
एकादश्यां प्रभोर्दोलां द्वादश्यां मदनार्पणम् ॥२३९॥

गौतमीये च —

चैत्रमासे वासुदेवं सर्व्वपुष्पैः समर्च्चयेत् ॥२४०॥

अथ श्रीरामनवमी

अगस्त्यसंहितायाम्—

चैत्रे मासि नवम्यान्तु शुक्लायां हि रघूद्वहः । प्रादुरासीत् पुरा ब्रह्मन् परं ब्रह्मैव केवलम् ।
तस्मिन् दिने तु कर्त्तव्यमुपवासव्रतादिकम् ॥२४१॥

---

श्रीकृष्णप्रियभक्तता च वसन्तस्य, सदा श्रीवृन्दावनाश्रितत्वात् । अतएव तस्य पूजोत्सवं कुर्य्यात ॥२३५॥
ब्रह्मन् हे सुतीक्ष्ण ॥२४१॥

---

अथ वसन्तोत्सवः

फाल्गुन पूर्णिमा में वैष्णववृन्द के सहित मिलित होकर श्रीकृष्णप्रिय भक्तरूप वसन्त पूजा महोत्सव करना चाहिये । इसकी विधि को जानने की आवश्यकता हो तो, भविष्यपुराण से जानना चाहिये । श्रीकृष्ण स्वयं, युधिष्ठिर के सन्निधान इसकी विधि को कहे थे ॥२३५-२३६॥

अथ वसन्तोत्सव-माहात्म्यम्

उक्त पुराण में लिखित है—हे युधिष्ठिर ! शास्त्रविधानानुसार फाल्गुनोत्सव करने से मदनुग्रह से सर्व मनोऽभीष्ट पूर्ण होते हैं । हे कौन्तेय ! शीतऋतु के अवसान में वसन्त का समागम होने पर पूर्णिमा के प्रभातकाल में चन्दनमिश्रित आम्रमुकुल के द्वारा पूजा करने से मानव शतवर्ष पर्य्यन्त हो सकता है ॥२३७-२३८॥

अथ चैत्रकृत्यम्

चैत्र मास के शुक्लपक्ष में श्रीरामनवमी व्रत, एकादशी में प्रभु का दोलोत्सव, एवं द्वादशी में दमनकार्पण करना चाहिये ॥२३९॥

गौतमीयतन्त्र में लिखित है—चैत्र मास में विविध पुष्पों के द्वारा वासुदेव की पूजा करे ॥२४०॥

अथ श्रीरामनवमी

अगस्त्य संहिता में लिखित है—हे ब्रह्मन् ! चैत्रमास के शुक्लपक्ष की नवमी तिथि में एकमात्र परब्रह्म रघुकुलधुरन्धर 'राम' आविर्भूत हुए थे । सुतरां उसदिन में उपवासव्रतादि का अनुष्ठान करना चाहिये ॥२४१

अथ तद्व्रतनित्यत्वम्

तत्रैव—

मुमुक्षवोऽपि हि सदा श्रीरामनवमीव्रतम् । न त्यजन्ति सुरश्रेष्ठो देवेन्द्रोऽपि विशेषतः ॥२४२॥

किञ्च—

प्राप्ते श्रीरामनवमीदिने मर्त्यो विमूढ़धीः । उपोषणं न कुरुते कुम्भीपाकेषु पच्यते ॥२४३॥

यस्तु रामनवम्यां हि भुङ्क्ते मोहाद्विमूढ़धीः । कुम्भीपाकेषु घोरेषु पच्यते नात्र संशयः ॥२४४॥

अथ तद्व्रतमाहात्म्यम्

तत्रैव—

श्रीरामनवमी प्रोक्ता कोटिसूर्य्यग्रहाधिका । तस्मिन् दिने महापुण्ये राममुद्दिश्य भक्तितः । यत् किञ्चित् कुरुते कर्म्म तद्भवक्षयकारकम् ॥२४५॥

किञ्च—

कुर्य्याद्रामनवम्यां य उपोषणमतन्द्रितः । न मातुर्गर्भमाप्नोति स वै रामप्रियो भवेत् ॥२४६॥

तस्मात् सर्व्वात्मना सर्व्वे कृत्वैतन्नवमीव्रतम् । मुच्यते सर्व्वपापेभ्यो यान्ति ब्रह्म सनातनम् ॥२४७

किञ्च—

एकमपि नरो भक्त्या श्रीरामनवमीव्रतम् । उपोष्य कृतकृत्यः सन् सर्व्वपापैः प्रमुच्यते ॥२४८॥

अथ तद्व्रतनिर्णयः

चैत्रे मासि नवम्यान्तु जातो रामः स्वयं हरिः । पुनर्वस्वृक्षसंयुक्ता सा तिथिः सर्व्वकामदा ॥२४९

---

रामप्रियो भवेदिति तत्साहूप्यं प्राप्तः स्यादित्यर्थः ॥२४६॥

---

अथ तद्व्रतनित्यत्वम्

उक्त ग्रन्थ में लिखित है— मुमुक्षुगण, विशेषतः देवश्रेष्ठ इन्द्र भी सर्वदा श्रीरामनवमी व्रतानुष्ठान करते कदापि वर्जन नहीं करते हैं ॥२४२॥

और भी कथित है—जो विमूढ़मति मानव, श्रीरामनवमी दिन प्राप्त कर उपवासी नहीं होता है, वह म्भीपाक नरक में पच्यमान होता है । मोहवशतः रामनवमी में भोजन करने पर उस मूढ़मति मानव को हण कुम्भीपाक नरक में पचना पड़ता है । इसमें संशय नहीं है ॥२४३-२४४॥

अथ तद्व्रतमाहात्म्यम्

उक्त ग्रन्थ में उक्त है— श्रीरामनवमी कोटि सूर्य्यग्रहण की अपेक्षा भी अधिक है, इस महापुण्य दिवस भक्तिपूर्वक श्रीराम के उद्देश्य में जो कुछ कर्म किया जाय, वह भव-बन्धन-मोचन का कारण होता है ॥

और भी लिखित है—अतन्द्रित होकर श्रीरामनवमी-व्रतानुष्ठान करने पर पुनर्बार जननी जठर में ष्ट नहीं होना पड़ता है, एवं व्रतकारी निश्चय ही श्रीरघुनाथ का प्रियपात्र होता है । अतएव सर्वथा इस रामनवमी व्रत का अनुष्ठान करके निखिल पातकों से मुक्त होकर सनातन ब्रह्म रघुवर को प्राप्त कर ते हैं ॥२४५-२४७॥

और भी लिखित है—हे मुने ! मानव, भक्ति के सहित एकमात्र श्रीरामनवमी व्रत में उपवास करने से कृत्य होकर सर्व पातकों से परित्राण प्राप्त कर सकता है ॥२४८॥

अथ तद्व्रतनिर्णयः

चैत्र मास की नवमी तिथि में स्वयं हरि रामचन्द्र भूमिष्ठ हुये थे । उक्त तिथि पुनर्वसु युक्त होने से

सैव मध्याह्नयोगेन महापुण्यतमा भवेत् ॥२५०॥
मेषं पूषणि सम्प्राप्ते लग्ने कर्कटकाह्वये । आविरासीत् स्वकलया कौशल्यायां परः पुमान् ॥२५१
नवमी चाष्टमीविद्धा त्याज्या विष्णुपरायणैः ।
उपोषणं नवम्यां वै दशम्यामेव पारणम् ॥२५२॥ इति ।
दशम्यां पारणायाश्च निश्चयान्नवमीक्षये । विद्धापि नवमी ग्राह्या वैष्णवैरप्यसंशयम् ॥१५३॥
अस्य व्रतस्य चागस्त्यसंहितादौ सविस्तरम् । विधिरुक्तः प्रसिद्धश्च लिख्यतेऽत्र समासतः ॥२५४

अथ श्रीरामनवमीव्रतविधिः

अष्टम्यां चैत्रमासस्य शुक्लपक्षे जितेन्द्रियः । दन्तधावनपूर्व्वन्तु प्रातः स्नायाद्यथाविधि ॥२५५॥
दान्तं कुटुम्बिनं विप्रं वेदशास्त्ररतं सदा । श्रीरामपूजानिरतं सुशीलं दम्भवर्ज्जितम् ॥२५६॥
विधिज्ञं राममन्त्राणां राममन्त्रैकसाधकम् । आहूय भक्त्या सम्पूज्य शृणुयात् प्रार्थयन्निति॥२५७
श्रीरामप्रतिमादानं करिष्येहं द्विजोत्तम । तत्राचार्य्यो भव प्रीतः श्रीरामस्त्वमेव मे ॥२५८॥
आचार्य्यं भोजयेत् पश्चात् सात्त्विकान्नैः सुविस्तरैः ।
भुञ्जीत स्वयमप्येवं हृदि राममनुस्मरन् ॥२५९॥

---

ननु वैष्णवैर्विद्धा सर्व्वत्र एव वर्ज्ज्येति पूर्व्वं निश्चितम्, अत्रापि तथैवोक्तम्, 'नवमी चाष्टमी-विद्धा त्याज्या' इति । तत्र च नवमीक्षये सति तिथिह्रासक्रमेण एकादश्याश्च शुद्धत्वे किं कर्त्तव्यम् ? तत्राह—उपोषणमिति ॥२५२॥

तदेवाभिव्यज्य लिखति—दशम्यामिति । निश्चयाद्दशम्यामेवेत्येवकारतः, अन्यथोपवासद्वयप्रसङ्गादिति-दिक् ॥२५३॥

अष्टम्यामित्यादि स्पष्टार्थमेव ॥२५५॥

---

निखिल कामप्रदा होता है । मध्याह्न काल में पुनर्वसु नक्षत्र का योग होने पर उक्त तिथि महापुण्यतमा होती है । दिवाकर मेष राशिगत होने पर कर्कट लग्न में परम पुरुष रामचन्द्र, स्वीय कला के सहित कौशल्या में आविर्भूत हुए थे । हरिपरायण व्यक्तिगण, अष्टमीविद्धा नवमी को वर्जन करके शुद्धा नवमी में उपवास करके दशमी में पारण करें ॥२४९-२५२॥

दशमी में श्रीरामनवमी व्रत का पारण निश्चय निबन्धन नवमी का क्षय होने पर निःसन्देह मन से अष्टमीविद्धा नवमी ग्रहण करना ही उपवास विषय में वैष्णववृन्दों का कर्त्तव्य है । अगस्त्य संहिता प्रभृति ग्रन्थ में श्रीरामनवमी व्रत विषय का वर्णन विस्तृत रूप से है । यहाँ पर संक्षेप से उसका उल्लेख किया गया है ॥२५३-२५४॥

अथ श्रीरामनवमीव्रतविधिः

चैत्र मास के शुक्लपक्ष की अष्टमी तिथि में इन्द्रिय-संयम पूर्वक दन्त-धावन कर यथाविधि प्रातः स्नान करे । तत्पश्चात् दान्त, कुटुम्बी, सतत वेदशास्त्र परायण, श्रीरामपूजा निरत, सुशील, दम्भशून्य, श्रीराम-मन्त्र की विधिवेत्ता, केवलमात्र रामचन्द्र के साधक विप्र को आह्वान कर प्रार्थनापूर्वक कहे—हे द्विजोत्तम ! मैं श्रीराम-मूर्त्ति की पूजा करूँगा, इस विषय में आप ही रामतत्त्वविद् हैं, सुतरां प्रसन्न होकर आचार्य्यपद को अलङ्कृत करें । अनन्तर आचार्य्य को भूरि परिमित सात्त्विकान्न भोजन कराकर निज हृदय में राम-चन्द्र का ध्यान करते-करते स्वयं भोजन करे ॥२५५-२५९॥

तत्रैकभक्त-निवेदनमन्त्रः

नवम्यामङ्गभूतेन एकभक्तेन राघव । इक्ष्वाकुवंशतिलक प्रीतो भव भवप्रिय ॥२६०॥ इति ।

ततः प्रातः समुत्थाय स्नात्वा सन्ध्यां विधाय च ।
प्रातः सर्व्वाणि कर्म्माणि शीघ्रमेव समापयेत् ॥२६१॥

उपवासनिवेदनमन्त्रः

उपोष्या नवमी त्वद्य यामेष्वष्टासु राघव । तेन प्रीतो भव त्वम्भोः संसारात् त्राहि मां हरे ॥२६२ ॥ इति ।

विधिवन्निर्म्मिते यागमण्डपे परमोत्सवैः । पुण्याहं वाचयित्वा तु सद्भिः सङ्कल्पमाचरेत् ॥२६३

अथ सङ्कल्पमन्त्रः

अस्यां रामनवम्यान्तु समाराधनतत्परः । उपोष्याष्टसु यामेषु पूजयित्वा यथाविधि ॥२६४॥
इमां स्वर्णमयीं रामप्रतिमां सुप्रयत्नतः । श्रीरामप्रीतये दास्ये रामभक्ताय धीमते ॥२६५॥
प्रीतो रामो हरत्वासु पापानि सुबहूनि मे । अनेकजन्मसंसिद्धान्यभ्यस्तानि महान्ति च ॥२६६ ॥ इति ।

मूर्त्तिं श्रीरामचन्द्रस्य सुवर्णस्य पलेन तु । अशक्तश्चेत् पलार्द्धेन तदर्द्धार्द्धेन वा चरेत् ॥२६७॥

रौप्येण वाथ लोहेन शिलया दारुणाथवा ।
लेप्याञ्च लेख्यां वा कुर्य्यात् कौशल्यां कलिपतां शुभाम् ॥२६८॥

---

तत्रैकभक्त-निवेदनमन्त्रः

"हे राघव ! हे इक्षाकुल तिलक ! हे भवप्रिय ! नवमी के अङ्गस्वरूप एकभक्त व्रत द्वारा आप सन्तुष्ट हों।" अनन्तर प्रभात में गात्रोत्थान पूर्वक स्नान सन्ध्यादि समापन करके आशु प्रातः क्रियासमूह समापन करे ॥२६०-२६१॥

उपवासनिवेदनमन्त्रः

"हे राघव ! अद्य नवमी में अष्टयाम पर्य्यन्त उपवासी रहूँगा। हे हरे ! तद्द्वारा आपको सन्तोष लाभ हो, मुझको संसार से उद्धार कोजिये।" अनन्तर यथा वधि निर्मित यागमण्डप में साधुवृन्द के सहित मिलित होकर परम उत्सव के सहित पुण्याह वाचनपूर्वक सङ्कल्प करे ॥२६२-२६३॥

अथ सङ्कल्पमन्त्रः

मैं इस रामनवमी के दिन अष्टप्रहर आराधना परायण होकर उपवासी रहूँगा एवं विधानानुसार अर्चना पूर्वक श्रीराम की प्रसन्नता हेतु यह सुवर्णमयी श्रीराम की प्रतिमा सुबुद्धि श्रीराम-भक्त को अर्पण करूँगा। रामचन्द्र सन्तुष्ट होकर बहुजन्मार्जित एवं अभ्यस्त भूरि परिमित सञ्चित पातक को आशु विनष्ट करें ॥२६४-२६६॥

एक पल परिमित सुवर्ण के द्वारा श्रीरामचन्द्र की मूर्त्ति प्रस्तुत कराना सामर्थ्यवान् पुरुष का कर्त्तव्य है। असमर्थ होने पर अर्द्ध पल अथवा तदर्द्ध पल परिमित स्वर्ण के द्वारा मूर्त्ति निर्म्माण करावे। असमर्थ होने पर रौप्य, लौह, प्रस्तर, काष्ठ, लेप्य अथवा लेख्य द्वारा कौशल्यादेवी के अङ्क में स्थित शुभ श्रीराम-मूर्त्ति प्रस्तुत करानी चाहिये। श्रीराम-मूर्त्ति के वाम भाग में वाम कर द्वारा आलिङ्गित सीता की मूर्त्ति विराजमान रहें। दक्षिण की ओर राजा दशरथ पुत्र के प्रति दृष्टिपात करते रहें, पश्चात भाग में छत्र-

वामाङ्के जानकीं चास्य संश्लिष्टां वामपाणिना । दक्षिणाङ्के दशरथं पुत्रावेक्षणतत्परम् ॥२६९

पृष्ठतो लक्ष्मणं देवं सच्छत्रं सहचामरम् । पार्श्वे भरतशत्रुघ्नौ तालवृन्तकरावुभौ ।
अग्रे व्यग्रं हनूमन्तं रामानुग्रहकाङ्क्षिणम् ॥२७०॥

आसनोपरि संविश्य न्यासजालं विधाय च । शङ्खं प्रपूजयेदग्रे गन्धपुष्पाक्षतादिभिः ॥२७१॥

कलसं वामभागस्थं पूजाद्रव्याणि चादरात् । पात्रञ्च प्रोक्षयेद्भक्त्या चात्मानं मन्त्रमुच्चरन् ॥२७२

सर्व्वेषां राममन्त्राणां मन्त्रराजः षड़क्षरः । तारकब्रह्म चेत्युक्तस्तेन पूजा प्रशस्यते ॥२७३॥

विलिखेत् सर्व्वतोभद्रं वेदिकोपरि सुन्दरम् । सर्व्वव्रते समुद्दिष्टं सर्व्वतोभद्रमण्डलम् ॥२७४॥

मध्ये तीर्थोदकैः पूर्णं कुम्भं रत्नोदरं शुभम् । चूतपल्लपपुष्पैश्च युक्तं न्यस्येदलङ्कृतम् ।
सौवर्णे राजते ताम्रे पात्रे षट्कोणमालिखेत् ॥२७५॥

अलाभे विल्वपीठे वा कलसोपरि संस्थिते । उपर्य्यास्तीर्य्य वस्त्रे द्वे आच्छिन्ने सुदशे शुभे ॥२७६

दिव्यसिंहासनं तत्र स्थापयित्वार्च्चयेत् सुधीः ।
पीठार्च्चां विधिवत् कृत्वा दत्त्वा चार्घ्यादिकन्तथा ॥२७७॥

क्षीरादिना च स्नपनं कुर्य्यादावाहनादि च । नानारत्नविचित्राणि दद्यादाभरणानि च ॥२७८

हिमाम्बुघृष्टरुचिरघनसारसमन्वितम् । गन्धं दद्यात् प्रयत्नेन सागुरुञ्च सकुङ्कुमम् ॥२७९॥

कह्लारकेतकी जाती पुन्नागाद्यैः प्रपूजयेत् । चम्पकैः शतपत्रैश्च सुगन्धैः सुमनोहरैः ॥२८०॥

चूतपल्लवपुष्पैश्च दूर्व्वाभिस्तुलसीदलैः । कोमलैर्विल्वपत्रैश्च अशोककुसुमैस्तथा ॥२८१॥

---

वामेऽङ्के पार्श्वे, दक्षिणेऽङ्के पार्श्वे। अङ्क इति वा पाठः। दक्षिणे पार्श्वे पार्श्वद्वय इति वा। ततश्च सीतादशरथयोर्बहिस्तौ ज्ञेयौ ॥२६९॥

रत्नानि उदये अभ्यन्तरे यस्य तम् ॥२७५॥

सौवर्णादिपात्रस्यालाभे सति ॥२७६॥

---

चमरधारी लक्ष्मण अधिष्ठित रहें, पार्श्वद्वय में तालवृन्त हाथ में लेकर भरत शत्रुघ्न खड़े हों, और सामने श्रीहनूमान् श्रीरघुनाथ के अनुग्रह की आशा से अवस्थान करते रहें। इस प्रकार श्रीराम-मूर्त्ति निर्म्माण करानी चाहिये ॥२६७-२७०॥

अनन्तर आसन में उपविष्ट होकर न्यास विधान के पश्चात प्रथम गन्ध, पुष्प, अक्षत द्वारा शङ्ख की पूजा करे, एवं यत्नपूर्वक मन्त्रपाठ पूर्वक उसके जल से वामभागस्थ घट, पूजोपकरण, पात्र एवं आत्मा को प्रोक्षण करे ॥२७१-२७२॥

षड़क्षर मन्त्र ही "ॐ रामाय नमः" समस्त राम-मन्त्रों के मध्य में मन्त्रराज एवं तारक मन्त्र नाम से अभिहित है। इस मन्त्र से ही श्रीरघुनाथ की अर्च्चना करनी चाहिये ॥२७३॥

प्रथमतः वेदी के ऊपर मनोरम सर्व्वतोभद्रमण्डल अङ्कन करे। इस मण्डल की आवश्यकता समस्त व्रतों में होती है। उक्त मण्डल के मध्य में तीर्थजल-पूर्ण, रत्नगर्भ, आम्रपल्लव एवं पुष्प शोभित सुशोभन कुम्भ स्थापन करना चाहिये। पुनर्वार सुवर्ण-पात्र, रौप्य-पात्र किंवा ताम्रपात्र में षट्कोण अङ्कन करे। उक्त पात्र के अभाव होने पर विल्वकाष्ठ निर्मित पीठ में षट्कोण अङ्कन पूर्वक कुम्भोपरि स्थापन कर तदुपरि अखण्डदशायुक्त शुभकर वसनद्वय अर्पण करे। उसके ऊपर सिंहासन स्थापन कर पूजन करना ही सुबुद्धि

अथ कौशल्याद्यर्च्चा

रामस्य जननी चासि रामात्मकमिदं जगत् । अतस्त्वां पूजयिष्यामि लोकमातर्नमोऽस्तु ते ॥२८२

नमो दशरथायेति पूजयेत् पितरं ततः । ततोऽनुज्ञाप्य देवेशं परिवारान् समर्च्चयेत् ।

पूर्व्वषट्कोणकोणेषु हृदयादीनि षट् क्रमात् ॥२८३॥

इति प्रथमावरणम् ।

हनूमन्तं ससुग्रीवं भरतं सविभीषणम् । लक्ष्मणाङ्गदशत्रुघ्नान् जाम्बवन्तं दलेष्विमान् ॥२८४

इति द्वितीयावरणम् ।

धृतिं जयन्तं विजयं सुराष्ट्रं राष्ट्रवर्द्धनम् । अशोकं धर्म्मपालञ्च सुमन्त्रं दलमध्यतः ॥२८५॥

इति तृतीयावरणम् ।

दलाग्रे लोकपालांश्च ॥२८६॥

इति चतुर्थावरणम् ।

तदस्त्राणि ततो वहिः ॥२८७॥

---

व्यक्ति का कर्त्तव्य है । यथाविधि पीठ-पूजा सम्पन्न करके अर्घ्यादि समर्पण एवं दुग्धादि द्वारा स्नपन यह समस्त कार्य्य शेष कर आवाहनादि करना चाहिये । अनन्तर विविध रत्नखचित विचित्र आभरण एवं शीतल सलिल से घर्षित सुन्दर घनसारयुक्त, अगुरु, कुङ्कुम मिश्रित गन्धार्पण यत्नपूर्वक करे । पश्चात् कह्लार, केतकी, जाती, पुन्नाग, चम्पक, पद्म, आम्रमुकुल, अशोक इत्यादि चित्तहर गन्धपूर्ण मनोहर पुष्प एव दूर्वा, तुलसीदल, एवं कोमल विल्वपत्र द्वारा पूजा करे ॥२७४-२८१॥

अथ कौशल्याद्यर्च्चा

हे लोकमातः ! आप श्रीरामचन्द्र की जननी हैं, यह विश्व, राममय है, सुतरां आपकी पूजा करूँगा । आपको प्रणाम है ॥२८२॥

अनन्तर "नमो दशरथाय" मन्त्रोच्चारणपूर्वक रामपिता दशरथ पूजा करके देवदेव रघुनाथ की अनुज्ञा लेकर उनके परिवारवृन्द की पूजा करे । पूर्व स्थापित षट्कोण के कोणसमूह में क्रमशः हृदयादि अङ्गषट्क की पूजा करे ॥२८३॥

इति प्रथमावरणम्

तत्पश्चात् अष्टदल पद्म के दलाष्टक में हनुमान्, सुग्रीव, भरत, विभीषण, लक्ष्मण, अङ्गद, शत्रुघ्न एवं जाम्बवान की पूजा करनी चाहिये ॥२८४॥

इति द्वितीयावरणम्

अनन्तर दल के मध्य में धृति, जयन्त, विजय, सुराष्ट्र, राष्ट्रवर्द्धन, अशोक, धर्मपाल एवं सुमन्त—इन आठ जनों की पूजा करनी चाहिये ॥२८५॥

इति तृतीयावरणम्

अनन्तर दलाग्र में लोकपालवर्ग की पूजा करे ॥२८६॥

इति चतुर्थावरणम्

दल के वहिर्देश में आयुधसमूह की पूजा करनी चाहिये ॥२८७॥

इति पञ्चमावरणम् ।

घण्टाञ्च वादयन् धूपं दीपञ्चास्मै निवेदयेत् । भक्ष्यभोज्यादिना भक्त्या नैवेद्यं विधिनार्पयेत् ॥२८८

आचामञ्च सुताम्बूलं महानीराजनं ततः । नमस्कुर्य्यात्ततः स्तोत्रैः स्तुत्वा च प्रजपेन्मनुम् ॥२८९

श्रृण्वन् जयन्ती-माहात्म्यं दिव्यां रामकथान्तथा ।
रामभक्तैः समं यामं नयेद्रामममनुस्मरन् ॥२९०॥

इति प्रथमयामकृत्यम् ।

शङ्खपात्रासनार्च्चाञ्च कुर्य्याद्यामेष्वतन्द्रितः ।
यामे द्वितीये सम्पूज्य मध्याह्ने जन्म भावयेत् ॥२९१॥

उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ
लग्ने कर्कटके पुनर्व्वसुयुते मेषं गते पूषणि ।
निर्दग्धुं निखिलाः पलाशसमिधो मेध्यादयोध्यारणे-
राविर्भूतमभूदपूर्व्वविभवं यत् किञ्चिदेकं महः ॥२९२॥

स्तुत्वैवं वादयेद्वाद्यान्यर्घ्यं दद्याज्जगत्पतेः । फलपुष्पाम्बुसम्पूर्णं गृहीत्वा शङ्खमुज्ज्वलम् ।
अशोकचूतकुसुमैर्युक्तञ्च तुलसीदलैः ॥२९३॥

---

यामं नवमीदिवस-प्रथम-प्रहरम् ॥२९०॥

अतन्द्रित इति सर्व्वेष्वेव यामेषु शङ्खपात्रपीठानां पूजामनालस्येनावश्यं कुर्य्यादित्यर्थः ॥१९१॥

जन्मभावनविधिमेवाह— उच्चस्थ इति, 'सूर्य्यादुच्चान् क्रियविषवृगस्त्रीकुलीरान्तयूके, दिग्वह्नीन्द्रद्वयतिथिशरान् सप्तविंशांश्च विंशान् । अंशान् यावद्वदति यवने' इत्याद्युक्तनिजनिजोच्चस्थानवर्त्तिनि ग्रन्थपञ्चके, मेष-मकर-कर्कट-मीन-तुलासु क्रमेण सूर्य्यभौम-गुरु-शुक्र-शनिषु स्थितेस्वित्यर्थः । किञ्च कर्कट लग्ने चन्द्रसहित-गुराविति गुणविशेषः । पलं मांसमश्नन्तीति पलाशा राक्षसास्त एव समिधस्तान् निर्द्दग्धुं यथा यज्ञेऽरणि-जातोऽग्निः पलाशकाष्ठानि निर्द्दहति, तद्वदिति रूपकार्थः ॥२९२॥

---

इति पञ्चमावरणम्

तत्पश्चात् घण्टा वाद्य के सहित धूप-दीप अर्पण श्रीरघुनाथ को करनी चाहिये । फिर भक्तिसहित विधि-पूर्वक भक्ष्य भोज्यादि द्वारा नैवेद्य अर्पण करे । अतः पर आचमन, सुताम्बूल प्रदान एवं महानीराजन पूर्वक स्तुति पाठ द्वारा स्तव करके मन्त्र जप करना चाहिये । अनन्तर रामभक्तवृन्द के सहित मिलित होकर जयन्ती-माहात्म्य, श्रुति सुखद रामलीला श्रवण एवं श्रीराम का स्मरण करते करते प्रथमयाम अतिवाहित करना चाहिये ॥२८८-२९०॥

इति प्रथमयामकृत्यम्

आलस्य परित्याग पूर्वक प्रत्येक याम में शङ्ख, पात्र और पीठ, इन सबकी पूजा अवश्य करनी चाहिये, द्वितीय याम में इस प्रकार पूजा करके मध्याह्न समय में जन्म की चिन्ता करनी चाहिये ॥२९१॥

पञ्चग्रह उच्च राशिस्थ होने पर, देवगुरु इन्दु के सहित मिलित होने से, नवमी तिथि में कर्कटलग्न और पुनर्वसु नक्षत्र में सूर्य्यदेव मेषराशिस्थ होने पर, राक्षसकुल रूप काष्ठ को भस्मीभूत करने के निमित्त अयोध्या रूप अरणि में दिव्य विभव सम्पन्न अत्याश्चर्य्य तेजः आविर्भूत हुआ था । इस प्रकार स्तुति करके वाद्यवादन पूर्वक फल पुष्प समन्वित जलपूर्ण दिव्य शङ्ख लेकर उसमें अशोक, आम्रमुकुल एवं तुलसीदल युक्त करके जगत्पति रघुपति को अर्घ्य समर्पण करना चाहिये ॥२९२-२९३॥

अथ अर्घ्यमन्त्रः

दशाननबधार्थाय धर्म्मसंस्थापनाय च । दानवानां विनाशाय दैत्यानां निधनाय च ॥२९४॥
पवित्राणाय साधूनां जातो रामः स्वयं हरिः ।
गृहाणार्घ्यं मया दत्तं भ्रातृभिः सहितोऽनघ ॥२९५॥ इति ।
पुनः पुष्पाञ्जलिं दत्त्वा यामे यामे ह्यतन्द्रितः । पूजयेद्विधिवद्भक्त्या दिवारात्रं नयेद्बुधः ॥२९६
ततः प्रातः समुत्थाय नित्यकृत्यं समाप्य च । विधिवद्राममभ्यर्च्चर्य भक्त्याचार्य्यं प्रतोष्य च ।
ब्राह्मणैः सह भुञ्जीत तेभ्यो दद्याच्च दक्षिणाम् ॥२९७॥

अथ पारणमन्त्र

तव प्रसादस्वीकारात् कृतं यत् पारणं मया ।
व्रतेनानेन सन्तुष्टः स्वस्ति भक्तिं प्रयच्छ मे ॥२९८॥ इति ।
कृत्वैकं ब्रह्महत्यादिपापेभ्यो मुच्यते ध्रुवम् । तुलापुरुषदानादिफलं प्राप्नोति मानवः ॥२९९॥
अनेकजन्मसंसिद्धपापेभ्यो मुच्यते ध्रुवम् । बहुना किमिहोक्तेन भक्तिस्तस्य करे स्थिता ॥३००
अकिञ्चनोऽपि नियत उपोष्य नवमीव्रतम् । कृत्वा जागरणं भक्त्या पूजयेद्विधिवन्मुने ॥३०१॥
गङ्गायां प्रक्षिपेल्लेप्यां लेख्यां मूर्त्तिं गृहे न्यसेत् ।
आचार्य्याय च हैमादिं ददीत प्रतिमां बुधः ॥३०२॥ इति ।

---

अथ अर्घ्यमन्त्रः

हे निष्पाप ! आप साक्षात् हरि हैं । आप रावण-बध, धर्म-संस्थापन, दानवकुल-ध्वंस, दैत्यकुल निपात, एवं साधु पुरुषों को उद्धार करने के निमित्त श्रीरामचन्द्र रूप में अवतीर्ण हुए हैं । आप भ्रातृवृन्द के सहित मद्दत्त अर्घ्य ग्रहण कीजिये ॥२९४-२९५॥

पुनर्बार पुष्पाञ्जलि अर्पण करे । अनलस एवं भक्तिमान् होकर यथाविधि याम याम में श्रीराम की पूजा करके दिन-रात अतिवाहित करना चाहिये । अतः पर प्रभात में उठकर नित्यक्रिया सम्पादन पूर्वक भक्ति-सहित यथाविधि श्रीराम की पूजा करके आचार्य्य को प्रसन्न करे, पश्चात् ब्राह्मणों के सहित भोजन करके उनको दक्षिणा प्रदान करें ॥२९६-२९७॥

अथ पारणमन्त्रः

हे प्रभो ! भवदीय प्रसाद अङ्गीकार हेतु मैं पारण कर रहा हूँ । इस व्रत के द्वारा आप सन्तुष्ट होकर मुझको मङ्गल एवं भक्ति प्रदान करें । इस प्रकार श्रीरामनवमी व्रत करने से ब्रह्महत्यादि सकल पातक से निश्चय परित्राण होता है । तुलापुरुषादि दान का फल लाभ भी होता है एवं बहुजन्मार्जित पातकराशि से मुक्त होता है । अधिक क्या कहें ? भक्ति, व्रतकारी का करतलगत होती है । हे मुने ! निष्काम भी नियत उपवासी होकर इस नवमी व्रत में जागरण पूर्वक भक्तिसहित यथाविधि श्रीरामचन्द्र की पूजा करे ॥

विज्ञ व्यक्ति, लेप्यमूर्त्ति, गङ्गा में समर्पण, लेख्यमूर्त्ति, गृह में संस्थापन, एवं सुवर्णादि द्वारा निर्म्मित मूर्त्ति, आचार्य्य को प्रदान करे ॥२९८-३०२॥

अथ दोलमहोत्सवः

चैत्रे सितैकादश्याञ्च दक्षिणाभिमुखं प्रभुम् । दोलया दोलनं कुर्य्याद्गीतनृत्यादिनोत्सवम् । ३०३

तथा च गारुडे—

चैत्रे मासि सिते पक्षे दक्षिणाभिमुखं हरिम् । दोलारूढं समभ्यर्च्य मासमान्दोलयेत् कलौ ॥३०४

अथ तन्नित्यता

पाद्मपुराणे— |

ऊर्ज्जे रथं मधौ दोलां श्रावणे तन्तुपर्व्व च । चैत्रे दमनकारोपमकुर्व्वाणो व्रजत्यधः ॥३०५॥

इति ।

दोलारूढश्च भगवानवलोक्यः प्रयत्नतः । दोलारूढस्य चास्याग्रे कुर्य्याज्जागरणं शुभम् ॥३०६

अथ दोलोत्सव-माहात्म्यम्

तत्रैव—

दोलारूढं प्रपश्यन्ति कृष्णं कलिमलापहम् । अपराधसहस्रं स्तु मुक्तास्ते घूर्णने कृते ॥३०७॥

तावत्तिष्ठन्ति पापानि जन्मकोटिकृतान्यपि । यावन्नान्दोलयेद्भूप कृष्णं कंसविनाशिनम् ॥३०८

आन्दोलनदिने प्राप्ते रुद्रेण सहिताः सुराः । कुर्व्वन्ति प्राङ्गणे नृत्यं गीतं वाद्यञ्च हर्षिताः ॥३०९

ऋषयो गणगन्धर्व्वा रम्भाद्याप्सरसां गणाः । वासुकिप्रमुखा नागास्तथा देवाः सुरेश्वराः ।

दोलयात्रां समायान्ति विष्णुदर्शनलालसाः ॥३१०॥

---

घूर्णने आन्दोलने सति ये प्रपश्यन्ति, ते मुक्ता इत्यन्वयः । यद्वा, घूर्णनेऽपि कृते सर्व्वेऽपराधसहस्रं मुक्ता भवन्तीति वाक्यन्तरम् । मधुमाधवे वसन्त इत्यर्थः, यद्वा, मधौ माधवे वेत्यर्थः । कदाचिद्विघ्नापाताद्वैशाखेऽपि तत्करणान् ॥३०७॥

---

अथ दोलमहोत्सवः

चैत्र मास की एकादशी तिथि में नृत्य-गीतादि उत्सव के सहित श्रीप्रभु को दक्षिणमुख करके दोला के द्वारा झुलाना (दोलाना) चाहिये ॥३०३॥

उक्त विषय में श्रीगरुड़पुराण में उक्त है—कलियुग में चैत्र मास के शुक्ल पक्ष में दक्षिणास्य श्रीहरि की पूजा करके एक मास यावत् दोलन करना चाहिये ॥३०४॥

अथ तन्नित्यता

पद्मपुराण में लिखित है—कार्त्तिक मास में रथ, चैत्र मास में दोला, श्रावण मास में तन्तु पर्व एवं चैत्र मास में दमनकार्पण,-इन कोई उत्सवों के बिना किये नरक में जाना पड़ता है ॥३०५॥

दोलारूढ़ श्रीहरि का दर्शन यत्नपूर्वक करे, दोलारूढ़ प्रभु के सम्मुख भाग में मङ्गलमय जागरण करना चाहिये ॥३०६॥

अथ दोलोत्सव-माहात्म्यम्

उक्त पुराण में लिखित है—जो दोलान्दोलन के समय कलिकलुषहारक दोलारूढ़ कृष्ण का दर्शन करते हैं, सहस्र-सहस्र अपराधों से वे सब मुक्त हो जाते हैं। हे राजन् ! जब तक कंसारि श्रीहरि को आन्दोलित नहीं किया जाता है, तब तक कोटिजन्मानुष्ठित पातकों से परित्राण प्राप्त होने की सम्भावना नहीं है। आन्दोलन दिवस समागत होने पर रुद्र के सहित देवगण आनन्द से प्राङ्गण में नृत्य-गीत एवं वाद्य करते हैं। ऋषिवृन्द, गन्धर्वकुल, रम्भादि अप्सरागण, वासुकि प्रमुख नागकुल, देववृन्द, एवं देवेश्वरगण, श्रीहरि-दर्शन के निमित्त समुत्साही होकर दोलोत्सव में आगमन करते हैं ॥३०७-३१०॥

दोलयात्रानिमित्तन्तु दोलाहे मधुमाधवे । भूतानि सन्ति भूपृष्ठे ये केचिद्देवयोनयः ।
समायान्ति महीपाल कृष्णे दोलास्थिते ध्रुवम् ॥३११॥
विष्णुं दोलास्थितं दृष्ट्वा त्रैलोक्यस्योत्सवो भवेत् ।
तस्मात् कार्य्यशतं त्यक्त्वा दोलाहे उत्सवं कुरु ॥३१२॥
प्रह्लादे तु समायाते विष्णुर्दोलावरोहणम् । कुरुते पाण्डवश्रेष्ठ वरं दत्तमनुस्मरन् ॥३१३॥
दोलास्थितस्य कृष्णस्य येऽग्रे कुर्व्वन्ति जागरम् । सर्व्वपुण्यफलावाप्तिर्निमेषैकेन जायते ॥३१४॥
दोलासंस्थन्तु ये कृष्णं पश्यन्ति मधुमाधवे । क्रीड़न्ति विष्णुना सार्द्धं वैकुण्ठे देववन्दिताः ॥३१५

किञ्चान्यत्र —

दक्षिणाभिमुखं देवं दोलारूढ़ं सुरेश्वरम् । सकृद्दृष्ट्वा तु गोविन्दं मुच्यते ब्रह्महत्यया ॥३१६॥
इति ।

अथ दोलोत्सवविधिः

चैत्रस्य शुक्लद्वादश्यां प्रातःकृत्यं समाप्य च । नित्यपूजां विधायाथ कुर्य्याद्दोलोत्सवं व्रती ॥३१७
तदर्थञ्च विशेषेण नैवेद्यादिकमर्पयेत् । सम्मान्य वैष्णवांस्तैश्च गीतनृत्यादि कारयेत् ॥३१८॥
महानीराजनं कृत्वा प्रक्षिपेदच्युतोपरि । गन्धानुलेपचूर्णादिविचित्राणि विभागशः ॥३१९॥

---

अथ नित्यपूजानन्तरं व्रती कृतोपवासः पूर्व्वलिखितदशम्यादिनियमयुक्तो वा, तदर्थं दोलोत्सवार्थं, विशेषेण अन्यदिनादाधिक्येन, सम्मान्य आदौ सादरं निमन्त्र्याहूय पादप्रक्षालनपूर्व्वकं श्रीचरणामृतानुलेपनमाल्यादि-महाप्रसादप्रदानेन सम्पूज्य, तैर्वैष्णवैः । आदि-शब्देन वाद्यनामसङ्कीर्त्तनादि, विचित्राणि गन्धादीनि, विभागशः श्रीमदङ्गोष्णीषादिभूषणं दलादौ भागे भागे पृथक् पृथक् अच्युतोपरि प्रक्षिपेत् । तत्र गन्धः—अगुरु-कलम्बकादि-साधित-सुरभिद्रव्यविशेषः, अनुलेपश्चन्दनादिपङ्कं, चूर्णानि च पट्टवासाः वुक्काबन्धनेति-प्रसिद्धानि । एतच्च वासन्तिकदोलक्रीड़ाविशेषलक्षणम् ॥३१७-३१९॥

---

हे महीपाल ! चैत्र वा वैशाखमास में दोलयात्रा के निमित्त श्रीहरि दोलारूढ़ होने पर भूपृष्ठस्थ देववृन्द एवं जीवगण दोला दर्शन के निमित्त वहाँ पर उपस्थित होते हैं, दोलारूढ़ श्रीहरि को दोलारूढ़ दर्शन करने पर त्रिभुवन का ही उत्सव उपस्थित होता है । अतएव शतकार्य्य वर्जन करके भी दोल-दिन में उत्सव करना चाहिये ॥३११-३१२॥

हे पाण्डवश्रेष्ठ ! प्रह्लाद समागत होने पर भगवान् विष्णु उनको जो वर प्रदान किये थे, उसका अनुस्मरण करके ही दोलारोहण करते हैं । दोलारूढ़ श्रीहरि के पुरोभाग में जागरण करने से निमेष मध्य में ही निखिल पुण्यफल को प्राप्त कर सकता है । जो मानव, चैत्र वा वैशाख मास में दोलारूढ़ कृष्ण को दर्शन करते हैं, वे देवताओं से पूजित होकर वैकुण्ठधाम में श्रीविष्णु के सहित विहार कर सकते हैं ॥३१३-३१५॥

अन्यत्र और भी वर्णित है—दोलारूढ़ दक्षिणाभिमुखी देवदेव गोविन्द को सकृन्मात्र दर्शन करने पर ब्रह्महत्याजनित पाप विनष्ट होता है ॥३१६॥

अथ दोलोत्सवविधिः

व्रती व्यक्ति, चैत्रपक्षीय शुक्लपक्ष की द्वादशी तिथि में प्रातःकाल में प्रातःकृत्य सम्पन्न करके नित्य-पूजा करने के बाद दोलोत्सव करे । दोलयात्रा के निमित्त विशेष रूप से नैवेद्य प्रभृति प्रदान पूर्वक एवं वैष्णव-वृन्द को सम्मान प्रदान करके उन सबके द्वारा नृत्य-गीतादि का अनुष्ठान करावे । अनन्तर आरात्रिक पूर्वक श्रीहरि के गात्रोपरि विचित्र गन्धानुलेप चूर्णसमूह, भिन्न-भिन्न रूप में प्रक्षेप करना पड़ता है ॥३१७-३१९॥

सन्तोष्य वैष्णवांस्तैश्च गीतनृत्यादिभिः प्रभुम् ।
नत्वाभ्यर्थ्याप्रमत्तः सन् दोलामारोहयेच्छुभाम् ॥३२०॥
नीत्वा वहिर्व्वेदिकायामुत्तुङ्गायां यथाविधि ।
अभ्यर्च्चर्यान्दोलयेत् कृष्णं सर्व्वलोकावलोकितम् ॥३२१॥
एवमभ्यर्च्चयन् यामे यामे त्वान्दोलयन् प्रभुम् । महोत्सवेन गमयेद्दिनं रात्रिश्च यत्नतः ॥३२२
एवं जागरण कृत्वा वैष्णवैः सह वैष्णवः ।
प्रणम्य प्रार्थ्य निर्म्मञ्छ्य कृष्णं स्वालयमानयेत् ॥३२३॥
केचिच्च वैष्णवाः शुक्लतृतीयायां महोत्सवम् ।
इममिच्छन्ति शक्ताश्च कुर्व्वते मासमेव तम् ॥३२४॥

---

तैर्गन्धादिभिर्वैष्णवान् सन्तोष्य प्रभुञ्च भगवन्तं नत्वा प्रणम्य, अभ्यर्थ्य च 'सर्व्वलोकहितार्थं निजजन-सुखार्थञ्च सुखं दोलामिमामारुह्य सावधानमान्दोलनलीलां विधेहि' इत्यादि, तथा बलीयसा पदा 'स्वामिन् पदवीमवधारय' इत्यादिकञ्च प्रार्थ्य;अप्रमत्तः सावधानः सन्, शुभां निर्म्माणविशेषतोऽलङ्कारविशेषतश्चोत्तमां दोलां गीतादिभिरारोहयेत । आदि-शब्देन जय जयेत्यादिमङ्गलघोष-वेदघोषवाद्यसङ्कीर्त्तनादि, वहिर्दोलायाः, उत्तुङ्गायामत्युच्चायान्तदुपरीत्यर्थः । एतच्च सर्व्वलोकानां सुखदर्शनार्थम् । यथाविधीति वेदिकां तामुपस्कृत्य ध्वजपताकातोरणादिभिरलङ्कृत्य च दृढ़पट्टवसनेन पार्श्वद्वये स्तम्भादौ दोला निबध्य दोलारूढ़स्य भगवतोऽर्च्चने फलविशेषोक्तेरान्दोलनश्रमविशेषदृष्टेश्च पूजाविशेषं कृत्वा महानीराजनं कृत्वा गन्धादिकञ्च प्रक्षिप्य शनैः शनैः सावधानमान्दोलयेदित्यादिप्रकार ऊह्यः । सर्व्वलोकैरवलोकितं यथा स्यात्तथान्दोलयेत्, दोलारूढ़-भगवद्दर्शने फलविशेषोक्तेः ॥३२०-३२१॥

एवमनेन लिखितप्रकारेण यामे यामे प्रतिप्रहरं प्रभुमभ्यर्च्चयन् आन्दोलयंश्च सन् महोत्सवेन नृत्यगीतादिना दिनं रात्रिश्च गमयेत् । अत्र प्रतियाममभ्यर्च्चनमान्दोलनञ्च, 'ततः पुष्पाञ्जलिं दत्त्वा यामे यामे ह्यतन्द्रितः' इति रामार्च्चनचन्द्रिकोक्तेः, तथा एकादशीजागरणे 'यामे यामे महाभाग कुर्य्यादारात्रिकं हरेः' इत्यादिस्कान्दोक्तेश्चानुसारतः, तथात्रैव 'घूर्णने कृते' इति, 'यावन्नान्दोलयेत्' इत्याद्युक्तयान्दोलनस्य पौनः-पुण्यप्रतीतेरिरिति दिक् । प्रार्थ्येति देवालयान्तरधिवास्य श्रीशालग्रामशिलाग्रे स्थापितस्य दमनकस्यारोपणोत्सवार्थमान्दोलनलीलामेतामाहाय भगवज्जनवात्सल्येन सुखं सावधानं स्वमन्दिरे विजयं विधेहीत्यादिप्रार्थनां कृत्वा । निर्म्मञ्छ्य दोलक्रीड़ायां दृष्टिमुत्तार्य्य, स्वालयं देवालयम् आ सम्यग्गीतवाद्यादिना नयेत्, इमं दोल-यात्राख्यम् ॥३२२-३२४॥

---

अनन्तर वैष्णववृन्द को सन्तुष्ट करके उनके द्वारा नृत्य-गीतादि का अनुष्ठान कराकर अप्रमत्त मन से प्रभु को प्रणाम करके दोलारोहण करावे । तत्पश्चात् श्रीहरि को सबके देखते हुए वहिर्भागस्थ अत्युन्नत वेदिकोपरि ले जाकर यथाविधि पूजा करके दोलन करावे ॥३२०-३२१॥

इस प्रकार प्रहर-प्रहर में यत्नपूर्वक प्रभु श्रीहरि की पूजा एवं आन्दोलन महोत्सव के सहित अहोरात्र अतिवाहित करना चाहिये । इस प्रकार वैष्णववृन्दों के सहित रात्रिजागरण पूर्वक नीराजन, नमस्कार, प्रार्थना एवं दोलक्रीड़ारत श्रीकृष्ण को दर्शन करके निज भवन में ले आना ही वैष्णवों का कर्त्तव्य है । किसी किसी वैष्णव, शुक्लपक्ष की तृतीया में इस दोलोत्सव का अनुष्ठान करते हैं । सक्षम होने पर एक मास यावत् इस प्रकार उत्सव करना कर्त्तव्य है ॥३२२-३२४॥

तथा चोक्तम्—

चैत्रे मासि सिते पक्षे तृतीयायां रमापतिम् ।
दोलारूढ़ं समभ्यर्च्चर्य मासमान्दोलयेत् कलौ ।।३२५।। इति ।

यत् फाल्गुनस्य राकादावुत्तरा फल्गुनी यदा । तदा दोलोत्सवः कार्य्यस्तच्च श्रीपुरुषोत्तमे ।।३२६
किन्त्वीदृग्भक्तिसन्दर्शि-जगन्नाथानुसारतः । दोलाचन्दन-कीलालरथयात्राश्च कारयेत् ।।३२७।।

अथ दमनकारोपणोत्सवः

चैत्रस्य शुक्लद्वादश्यां दमनारोपणोत्सवम् । विदध्यात्तद्विधिर्बौधायनाद्युक्तोऽत्र लिख्यते ।।३२८
मधोः सितैकादश्याञ्च प्रातःकृत्यं समाप्य च । गत्वा दमनकारामं तत्राशोकं स्मरं यजेत् ।।३२९

अथ तत्र मन्त्रः

अशोकाय नमस्तुभ्यं कामस्त्रीशोकनाशनः । शोकार्त्तिं हर मे नित्यमानन्दं जनयस्व मे ।।३३०।।
इति ।

---

राका पूर्णिमा, आदि-शब्देन प्रतिपदादिः, कदाचित् प्रतिपदि कदाचिद्द्वितीयायामपि उत्तरफल्गुनीनक्षत्र-योगात् कार्य्य इति यत्, तस्य श्रीपुरुषोत्तमक्षेत्रे, न तु सर्व्वत्र पुरुषोत्तमखण्डादौ, तत्रैव तस्य विधानात् ।।३२६

तथापि तद्दृष्टचान्यत्रापि तथैव दोलाद्युत्सवः कर्त्तव्य इति लिखति—किन्त्विति । ईदृशी मूर्त्तिपूजा-यात्रोत्सवादिरूपा या भक्तिस्तस्याः सम्यग्दर्शनशीलस्य लोकानुग्राहकस्य श्रीजगन्नाथदेवस्य अनुसारतः, यस्मिन् दिने यथा तत्क्षेत्रे भवेत्तद्दिनेऽपि तथा दोलयात्रां चन्दनयात्रां जलयात्रां रथयात्राश्च कुर्य्यादेवेत्यर्थः । तत्र हेतुत्वेन लिखितमेव—ईदृग्भक्तिसन्दर्शीति । महोत्सवबाहुल्यञ्च गुणावहमेवेति दिक् ।।३२७।।

तत्र दमनकारामे अशोकवृक्षरूपं स्मरमक्षतचन्दनादिना पूजयेत् । तत्र च कामरूपेण श्रीभगवत एव पूजादिकं ज्ञेयम् । यद्वा, भगवदर्पणाय दमनकगुणविशेषार्थं कामदेवस्येवेति दिक् ।।३२९-३३०।।

---

उक्त विषय में लिखित है—कलिकाल में चैत्रमास की शुक्लपक्षीय तृतीया तिथि में दोलारूढ़ श्रीहरि को पूजा करके एक मास यावत् आन्दोलित करना चाहिये ।।३२५।।

श्रीपुरुषोत्तम क्षेत्र में इस प्रकार प्रसिद्धि है कि—फाल्गुन पूर्णिमा किंवा प्रतिपद में अथवा द्वितीया में उत्तर फल्गुनी नक्षत्र का योग होने पर दोलोत्सव करना चाहिये । किन्तु इस प्रकार श्रीमूर्त्तिपूजा, यात्रोत्सव प्रभृति का अनुष्ठान भक्ति का आदर्श स्वरूप, जनानुग्रहकारी जगन्नाथ के अनुसरण करके ही दोलयात्रा, चन्दनयात्रा, स्नानयात्रा, एवं रथयात्रा का अनुष्ठान करना चाहिये । अर्थात् पुरुषोत्तम क्षेत्र में जिस दिन में उक्त समस्त क्रिया का अनुष्ठान होगा, उसी दिन में ही उक्त समस्त उत्सवानुष्ठान करे ।।३२६-३२७।।

अथ दमनकारोपणोत्सवः

चैत्र मास की शुक्ला द्वादशी में दमनकारोपणोत्सव करना चाहिये । इस विषय में बौधायन प्रभृति के द्वारा कथित विधान का उल्लेख करते हैं । चैत्र मास के शुक्लपक्ष की एकादशी तिथि में प्रातःकृत्य समाधान पूर्वक दमनकोद्यान में जाकर अशोक तरु रूप कामदेव की पूजा करे ।।३२८-३२९।।

अथ तत्र मन्त्रः

अशोक रूपधारी आपको प्रणाम करता हूँ, आप कामस्त्री का कामनाशन हैं, मदीय शोक एवं पीड़ा को विनष्ट करें, आप सतत मदीय हर्षोत्पादन करें ।।३३०।।

नेष्यामि कृष्णपूजार्थं त्वां कृष्णप्रीतिकारकम् ।

इति सम्प्रार्थ्य नत्वा च गृह्णीयाद्दमनं शुभम् ॥३३१॥

प्रोक्ष्य तत् पञ्चगव्येन प्रक्षाल्याद्भिः प्रपूज्य च ।

वस्त्रेणाच्छाद्य वेदादिघोषेण गृहमानयेत् ॥३३२॥

अथ दमनकाधिवासविधिः

कृष्णस्याग्रे समुद्घृत्य सर्व्वतो भद्रमण्डलम् । निधाय दमनं तत्र रात्रौ तदधिवासयेत् ॥३३३॥

अथ तत्र मन्त्रः

पूजार्थं देवदेवस्य विष्णोर्लक्ष्मीपतेः प्रभोः ।

दमन त्वमिहागच्छ सान्निध्यं कुरु ते नमः ॥३३४॥ इति।

सबीजं कामदेवञ्च तथा भस्मशरीरकम् । अनङ्गं मन्मथञ्चैव वसन्तसखमेव च ।

स्मरन्तथेक्षुचापञ्च पुष्पवाणञ्च पूजयेत् ॥३३५॥

प्रागादिदिक्षु रत्याढ्यं विधिवद्दमने क्रमात् ॥३३६॥

अष्टोत्तरशतं कामगायत्र्या चाभिमन्त्र्य तत् । दत्वा पुष्पाञ्जलिं कामदेवं वन्देत मन्त्रवत् ॥३३७

---

गृह्णीयादिति—निजदमनकारामाभावेऽन्योद्यानादपीत्यर्थः। शुभं परमोत्तमं सुन्दरमञ्जर्य्यादियुक्तम् ॥३३१

तत् दमनकमद्भिः शुद्धोदकेन प्रक्षाल्य प्रपूज्य अक्षतगन्धादिभिः समभ्यर्च्च्य वस्त्रेण आच्छाद्येति नवे पटले निधाय सितधौतवाससाच्छाद्येति ज्ञेयम् । आदि-शब्देन गीतवाद्यादि ॥३३२॥

तत्र मण्डले तत्पटलनिहितं दमनम् अधिवासयेदिति नित्यक्रियां निर्वर्त्य भगवतः पूजां विशेषतः कृत्वा तदनुज्ञया तदधिवासनं कुर्य्यादिति बोद्धव्यम् ॥३३३॥

दमनकस्य प्रागाद्यष्टदिक्षु क्रमेण कामदेवाद्यष्टकं कामवीजसहितञ्च, विधिवत् इक्ष्वक्षतगन्धादिभिः पूजयेत् । तत्र प्रयोगः—'क्लीं द्रीँ कामदेवाय नमः; द्रीँ रत्यै नमः' इत्यादि; यद्वा, केशवादिन्यासवत् 'क्लीं कामदेवाय रत्यै नमः' इत्यादि ॥३३५-३३६॥

तद्दमनकमभिमन्त्र्य, जागरञ्च दोलारूढ़स्य भगवतोऽग्रे यत्तदेव, किंवा शक्तौ सत्यां दमनकाधिवासस्थाने

---

हे वृक्ष ! श्रीकृष्ण की पूजा के निमित्त कृष्ण सन्तोषकर आपको ले जारहा हूँ। इस प्रकार प्रार्थना एवं प्रणाम करके पवित्र दमनक ग्रहण करे। अतः पर पञ्चगव्य द्वारा दमनक तरु को प्रोक्षण एवं जल द्वारा क्षालन पूर्वक वस्त्रावृत करके वेदोक्त मन्त्र पाठ करते करते घर में ले जाना चाहिये ॥३३१-३३२॥

अथ दमनकाधिवासविधिः

श्रीकृष्ण के पुरोभाग में सर्वतोभद्रमण्डल अङ्कन करके उसके ऊपर दमनक स्थापन पूर्वक रात्रि में अधिवास करना चाहिये ॥३३३॥

अथ तत्र मन्त्रः

हे दमनक ! देवेश्वर कमलापति श्रीविष्णु की पूजा हेतु आप यहाँ पर सन्निहित होओ, आपको प्रणाम करता हूँ ॥३३४॥

अनन्तर दमनक तरु के पूर्वादि क्रम से अष्टदिक में बीज एवं रति के सहित यथाविधि कामदेव, भस्मशरीर, अनङ्ग, मन्मथ, वसन्तसख, स्मर, इक्षु चाप, एवं पुष्पवाण यथा क्रम से इनकी पूजा करे। अतःपर एकशत आठ वार काम-गायत्री पाठ पूर्वक दमनक तरु को आमन्त्रित करके मन्त्र पाठ द्वारा कन्दर्प को पुष्पाञ्जलि अर्पण कर प्रणाम करे ॥३३५-३३७॥

अत्र प्रणाममन्त्रः

नमोऽस्तु पुष्पवाणाय जगदाह्लादकारिणे । मन्मथाय जगन्नेत्रे रतिप्रीतिप्रदायिने ॥३३८॥ इति ।
आमन्त्रितोऽसि देवेश पूराण पुरुषोत्तम । अतस्त्वां पूजयिष्यामि सान्निध्यं कुरु केशव ॥३३९॥
निवेदयाम्यहं तुभ्यं प्रातर्दमनकं शुभम् । सर्व्वथा सर्व्वदा विष्णो नमस्तेऽस्तु प्रसीद मे ॥३४०
इत्थमामन्त्र्य देवेशं दत्वा पुष्पाञ्जलिं पुनः । गीतनृत्यादिना रात्रौ कुर्य्याज्जागरणं मुदा ॥३४१

अथ दमनकार्पणविधिः

प्रातः स्नानादि निर्वर्त्य नित्यपूजां विधाय च । दमनारोपणार्थञ्च महापूजां समाचरेत् ॥३४२
ततो दमनकं भक्त्या पाणिभ्यां परिगृह्य च । घण्टादिवाद्यघोषेण श्रीकृष्णाय समर्पयेत् ॥३४३

अथ दमनकारोपण-मन्त्रः

देवदेव जगन्नाथ वाञ्छितार्थप्रदायक । कृत्स्नान् पूरय मे कृष्ण कामान् कामेश्वरीप्रिय ॥३४४
इदं दमनकं देव गृहाण मदनुग्रहात् । इमां सांवत्सरीं पूजां भगवन्निह पूरय ॥३४५॥ इति ।

---

पुत्रादिद्वारेण पृथक् कुर्य्यात् ॥३३७-३४१॥

समर्पयेदिति समर्पणञ्चादौ देवस्य शिरसि दमनकमञ्जरीमारोपयेत्, ततो यथाशोभं श्रीचरणादावारोपयेदिति ज्ञेयम् ॥३४३॥

कामेश्वरी रतिः, तस्याः प्रियेति, कृष्णस्य कामदेवत्वेनार्च्चनात् । यद्वा, सर्व्वकामप्रदा भगवती लक्ष्मीः; यद्वा, श्रीकृष्णस्य सर्व्वकामपूरणी श्रीराधा तत्प्रियेति सम्बोधनं कामविशेषपूरणार्थं प्रीत्या दमनकग्रहणार्थं वेति दिक् ॥३४४॥

---

अत्र प्रणाम मन्त्रः

आप पुष्प-शर धारणकारी हैं, आप जगत् के आनन्द का विधान करते हैं, आप मन्मथ हैं, जगन्नेता एवं रति प्रीति विधायक हैं, आपको प्रणाम करता हूँ ॥३३८॥

हे देवेश ! हे पुराण ! हे पुरुषोत्तम ! हे केशव ! आपको आमन्त्रण किया हूँ । अतःपर आपकी पूजा करूँगा, आप सन्निहित हूजिये । हे विष्णो ! मैं प्रातःकाल में आपको शुद्ध दमनक निवेदन करूँगा । मैं आपकी वन्दना सर्व प्रकार से सर्वदा करता हूँ । मेरे प्रति आप सदा प्रसन्न रहिये । इस प्रकार देवेश को आमन्त्रण करके पुनर्वार पुष्पाञ्जलि अर्पण पूर्वक आनन्दयुक्त चित्त से नृत्य-गीतादि सहित रात्रि में जागरण करे ॥३३९-३४१॥

अथ दमनकार्पणविधिः

प्रातः स्नान प्रभृति कार्यसमूह सम्पन्न करके नित्य पूजा के पश्चात् दमनकारोपणार्थ महापूजा का अनुष्ठान करे । तत्पश्चात् भक्तिपूर्वक हस्तद्वय के द्वारा दमनक को लेकर घण्टादि वादन के सहित श्रीकृष्ण को समर्पण करे ॥३४२-३४३॥

अथ दमनकारोपण-मन्त्रः

हे देवदेव ! हे जगन्नाथ ! हे वाञ्छितार्थ प्रदायक ! हे कृष्ण ! हे कामेश्वरी प्रिय ! मदीय निखिलाभीष्ट पूर्ण करें । हे देव ! हे भगवन् ! मेरे प्रति अनुग्रह प्रदर्शन पूर्वक यह दमनक ग्रहण कीजिये एवं इस धाम में मेरी यह वार्षिकी पूजा पूर्ण कर दीजिये ॥३४४-३४५॥

ततो दामनकीं मालां गन्धादीनि समर्प्य च ।
गीतादिनोत्सवं कृत्वा श्रीकृष्णं प्रार्थयेदिदम् ॥३४६॥
मणि-विद्रुममालाभिर्मन्दारकुसुमादिभिः । इयं सांवत्सरी पूजा तवास्तु गरुड़ध्वज ॥३४७॥
वनमालां यथा देव कौस्तुभं सततं हृदि । तद्वद्दामनकीं मालां पूजाञ्च हृदये वह ॥३४८॥इत्यादि ।
भगवन्तं प्रणम्याथ गुरुं सम्पूज्य भक्तितः । सम्पूज्य ब्राह्मणान् शक्त्या भुञ्जीत सह बन्धुभिः ॥३४९
पारणाहे न लभ्येत द्वादशीघटिकापि चेत् । तदा त्रयोदशी ग्राह्या पवित्रा दमनार्पणे ॥३५०॥
न कृष्णे दमनारोपः स्यान्मधौ विघ्नतो यदि ।
वैशाख्यां श्रावणे मासि कर्त्तव्यं वा तदर्पणम् ॥३५१॥

अतएवोक्तं ब्रह्मणा देवीपुराणे —
चैत्रादौ कारयेत् पूजां सम्यग्वत्स यथाविधि । गन्धधूपार्घ्यनैवेद्यमाल्यैर्दमनकोद्भवैः ॥३५२॥
सहोमं पूजयेद्देवं सर्व्वकामानुवाप्नुयात् । सर्व्वतीर्थाभिषेकस्य फलं प्राप्नोति मानवः ॥३५३॥

---

दामनकीं दमनकमञ्जरीविरचितां मालां भगवते समर्प्य अनन्तरं गन्धाद्युपचारान् पञ्च समर्प्य गीत-नृत्यादिना महोत्सवं दमनकारोपणयात्रासम्बन्धिनं कृत्वा मणिविद्रुमेत्यादि प्रार्थयेत् ॥३४६।

इयं मत्कृतदमनकार्पणरूपा पूजैव मणिविद्रुमालादिभिः पूजा तवास्तु, ताभिर्यथा प्रीयसे, अनयापि तथा प्रीतो भवेति भावः ॥३४७॥

पूजाञ्च हृदये वह—प्रीत्या स्वीकुरु ॥३४८॥

एवं विधिं विलिख्य तत्र कालं निश्चिनोति— पारणाह इति द्वाभ्याम् ॥३५०॥

विघ्नतो यदि मधौ चैत्रे न स्यात्, तदा वैशाख्यां पूर्णिमायां द्वादश्यां वा श्रावणे वा तस्य दमनकस्यार्पणं कर्त्तव्यम् । श्रावणेऽपि तथैव बोद्धव्यं, सर्व्वत्र भगवन्महोत्सवे द्वादश्येव प्रशस्ता, भगवत्तिथित्वात् ॥३५१॥

आदि-शब्देन वैशाखादिः, दमनकारोपणमाहात्म्यञ्चाह— सर्व्वकामानिति पादत्रयेण ॥३५२-३५३॥

---

अनन्तर दामनकी माला एवं गन्ध प्रभृति अर्पण पूर्वक गीतादि उत्सव के सहित उत्सव सम्पन्न करके श्रीकृष्ण के निकट प्रार्थना करे ॥३४६॥

हे गरुड़ध्वज ! मणि, प्रबाल एवं मन्दार पुष्पादि रचित मालिका के द्वारा जिस प्रकार पूजा होती है, मत्कृत दमनक प्रदान रूप यह वार्षिकी पूजा भी आपके सम्बन्ध में उस प्रकार ही है ॥३४७॥

हे देव ! जिस प्रकार सतत वक्षःप्रदेश में वनमाला एवं कौस्तुभ धारण करते हैं, उस प्रकार यह दमनक माला भी धारण कीजिये एवं पूजा भी प्रीतिपूर्वक स्वीकार कीजिये ॥३४८॥

अनन्तर प्रभु को नमस्कार करके भक्ति के सहित श्रीगुरुदेव की पूजा करके शक्त्यनुसार ब्राह्मणवृन्द की पूजा करे । तत्पश्चात् बन्धुवर्ग के सहित मिलित होकर भोजन करे । पारण दिन में एक दण्डमात्र भी द्वादशी प्राप्त न होने पर दमनकार्पण विषय में शुद्धा त्रयोदशी ही ग्रहणीया है ॥३४९-३५०॥

किसी प्रकार विघ्न उपस्थित होने पर यदि चैत्र मास में श्रीकृष्ण को दमनकार्पण नहीं किया जाय तो वैशाख मास की पौर्णमासी तिथि में अथवा श्रावणमास की शुक्लपक्ष की द्वादशी-तिथि में उक्त उत्सव करना चाहिये ॥३५१॥

अतएव देवीपुराण में ब्रह्मा ने कहा है—हे वत्स ! चैत्र में अथवा वैशाख में यथाविधि गन्ध, धूप, अर्घ्य, नैवेद्य एवं दामनकी माला,–इन सबसे श्रीहरि की अर्च्चना करने पर समस्त अभिलाष सिद्ध होते हैं और समस्त तीर्थाभिषेक का फल लाभ होता है ॥३५२-३५३॥

## अथ वैशाखकृत्यम्

पाद्मे पातालखण्डे नारदाम्बरीषसंवादे—

माधवे मासि संप्राप्ते मेषस्ते कर्म्मसाक्षिणि । केशवप्रीतये कुर्य्यात् केशवव्रतसञ्चयम् ।।३५४।।
दद्यादनेकदानानि तिलाज्यप्रभृतीन्यपि । जन्मकोटिसमुद्भूतपातकान्तकराणि च ।।३५५।।
जलान्नशर्करा‌धेनु-तिलधेनुमुखानि च । वित्तमानेन देयानि दानानीप्सितसिद्धये ।
वैशाखे विधिना स्नानद्वयं नद्यादिके वहिः ।।३५६।।
हविष्यं ब्रह्मचर्य्यञ्च भूशय्या नियमस्थितिः । व्रतं दानं दमो देव-मधुसूदनपूजनम् ।
माधवे मासि कुर्व्वीत मधुसूदनतुष्टिदम् ।।३५७।।
तिलोदकसुवर्णान्नशर्कराम्बररोहिणीः । पादत्राणातपत्राम्बुकुम्भान् दद्याद्द्विजातिषु ।।३५८।।
त्रिसन्ध्यं पूजयेदीशं भक्तितो मधुसूदनम् । साक्षाद्विमलया लक्ष्म्या समुपेतं समाहितः ।।३५९।।

तत्रैव वराहधरणीसंवादे—

विशेषादिह दातव्यास्तिला मधुसमन्विताः । धर्म्माय महते दीर्घदुरितक्षयहेतवे ।।३६०।। इति।
यद्यप्यास्तेऽखिलं कृत्यं माहात्म्यलिखने स्फुटम् । तथाप्येकत्र संगृह्य व्यलेखीदं समासतः ।।३६१

---

कर्म्मसाक्षिणि—सूर्य्ये ।।३५४।।

नियमे स्थितिः, सङ्कल्पपरिपालनमेकत्र वासादि वा ; व्रतम्—एकभक्तादि , दमः—इन्द्रियनिग्रहः, रोहिणीः—गाः ।।३५७-३५८।।

---

### अथ वैशाखकृत्यम्

पद्मपुराण के पातालखण्डस्थ नारद-अम्बरीष-संवाद में उक्त है—वैशाख मास में आदित्यदेव मेष-राशिस्थ होने पर केशव को प्रसन्नता निबन्धन केशव-व्रत का अनुष्ठान करे। तिल, घृत, प्रभृति द्रव्य वैशाख मास में प्रदान करने पर उस दान के द्वारा कोटिजन्मार्जित पातक बिनष्ट होता है। सम्पत्ति के विद्यमान रहते मनोरथ सिद्धि के निमित्त वैशाख मास में जल, अन्न, शर्करा धेनु और तिल धेनु दान करना और यथाविधि वहिःस्थ नदी प्रभृति में प्रतिदिन दोवार स्नान करना उचित है ।।३५४-३५६।।

वैशाखमास में हविष्य भोजन, ब्रह्मचर्य्यानुष्ठान, भूतल में शयन, सङ्कल्प रक्षण, व्रत, दान, इन्द्रियसंयम एवं हरिपूजा,-यह सब कार्य्य करना चाहिये। यह समस्त कार्य्यानुष्ठान से श्रीहरि प्रसन्न होते हैं। एतद्-भिन्न इस मास में तिल, जल, स्वर्ण, अन्न, शर्करा, वस्त्र, धेनु, पादुका, छत्र एवं जलपूर्ण कुम्भ प्रदान ब्राह्मण को करना चाहिये। इस मास की त्रिसन्ध्या में स्थिर मन से भक्तिपूर्वक विमला लक्ष्मी के सहित साक्षात् देवेश्वर मधुसूदन की पूजा करनी चाहिये ।।३५७-३५९।।

उक्त पुराण के धरणी-वराह-संवाद में लिखित है—वैशाखमास में विशाल पातक नाश हेतु महान् धर्म के निमित्त मधु समन्वित तिल अर्पण करना चाहिये। ।३६०।।

माहात्म्य वर्णन के विषय में बहुसंख्यक सुस्पष्ट कृत्य विद्यमान होने पर भी यहाँ पर संग्रह पूर्वक संक्षेप से वर्णन किये जाते हैं ।।३६१।।

अथ वैशाखकृत्यनित्यता

वराहधरणीसंवादे—

यः परित्यज्य वैशाखं व्रतमन्यदुपाचरेत् । स करस्थं महारत्नं हित्वा लोष्ट्रं हि याचते ॥३६२

किञ्च—

अवैशाखी भवेच्छाखी विप्रः श्रौतपरोऽपि च ॥३६३॥ इति।

अथ सामान्यतो वैशाखमाहात्म्यम्

तत्रैव नारदाम्बरीषसंवादे—

न माधवसमो मासो न माधवसमो विभुः । पोतोऽघिदुरिताम्भोधिमज्जमानजनस्य यः ॥३६४॥

तत्तं जप्तं हुतं स्नातं यद्भक्त्या मासि माधवे । तदक्षयं भवेद्भूप पुण्यं माधववल्लभे ॥३६५॥

किञ्च—

वैशाखान्तानि पापानि सूर्य्यान्तानि तमांसि च। परापकारपैशुन्यप्राप्तानि सुकृतानि च ॥३६६

कार्त्तिके मासे यत् किञ्चित्तुलासंस्थे दिवाकरे ।
स्नानदानादिकं राजंस्तत् परार्द्धगुणं भवेत् ॥३६७॥

तस्मात् सहस्रगुणितं माघे मकरगे रवौ । ततोऽपि शतसंख्याकं वैशाखे मेषगे भगे ॥३६८॥

ते धन्यास्ते सुकृतिनो नरा वैशाखमासि ये । प्रातः स्नात्वा विधानेन पूजयन्ति मधुद्विषम् ॥३६९

---

वैशाखम्—वैशाख्यनियमव्रतमित्यर्थः ॥३६२॥

माधवेन श्रीकृष्णेन समः विभुरीश्वरो यथा नास्तीति दृष्टान्तोऽवगन्तव्यः ; एवमग्रेऽपि यो मासः ॥३६४॥

माधवस्य वल्लभ इति सर्व्वत्रैव हेतुर्द्रष्टव्यः ॥३६५॥

भगे सूर्य्ये, तिष्ये कलियुगे ॥३६८-३७१॥

---

अथ वैशाखकृत्यनित्यता

वराह-धरणी-संवाद में लिखित है—वैशाख व्रत परित्याग पूर्वक व्रतान्तर का अनुष्ठान करने से वह हस्तस्थ महारत्न त्यागकर लोष्ट्र माँगने के समान होता है ॥३६२॥

और भी कथित है—वैशाख व्रत का अनुष्ठान न करने से वेदज्ञ विप्र को भी वृक्ष होकर जन्म-ग्रहण करना पड़ता है ॥३६३॥

अथ सामान्यतो वैशाखमाहात्म्यम्

उक्त पुराण के नारद-अम्बरीष-संवाद में लिखित है—वैशाख मास के तुल्य मास नहीं है, माधव के समान ईश्वर भी नहीं है । अतीव पाप-समुद्र में निमग्न व्यक्ति के पक्ष में वैशाखमास के तुल्य तरणी लक्षित नहीं होती है । हे महीप ! माधवप्रिय वैशाख मास में भक्तिपूर्वक दान, जप, होम, एवं स्नान इत्यादि जिस किसी क्रिया का अनुष्ठान किया जाय, वह अक्षय पुण्यस्वरूप होता है ॥३६४-३६५॥

और भी कथित है—यावत् वैशाख मास समागत नहीं होता है, तावत् काल ही पातकसमूह विद्यमान रहते हैं । आदित्यदेव के अनुदय यावत् ही अन्धकार राशि दृष्ट होती है, एवं यावत् अन्धकार रूप खलता लक्षित नहीं होती है, तावत् पुण्य विराजित होता है । हे राजन् ! तुलाराशि स्थित सूर्य्य में कार्त्तिक मास में जो कार्य्य किया जाता है, वही परार्द्धगुण फलद होता है, किन्तु मकरराशि गत सूर्य्य में माघ मास में उक्त क्रियासमूह उसकी अपेक्षा सहस्रगुण फल प्रदान करते हैं । तथा मेषराशि गत सूर्य्य में वैशाख मास में उससे भी अधिकगुण फल होता है । जो वैशाख मास में प्रातः स्नान करके यथाविधि श्रीहरि की पूजा

किञ्च—

पुनः कलियुगे राजन् नैतद्गोप्यं भविष्यति । अश्वमेधादिकं यस्मान्माहात्म्यं माधवस्य च ।।३७०
तस्मिंस्तिष्ये नरैः पापैर्गन्तव्यं नरकार्णवे । अतस्तु विरलस्तस्य प्रचारोऽजेन निर्म्मितः ।।३७१

किञ्च तत्रैव —

दुर्ल्लभं भारते वर्षे जन्म तत्र मनुष्यता । मानुष्ये दुर्ल्लभं लोके स्वस्वधर्म्मप्रवर्त्तनम् ।।३७२।।
ततोऽपि भक्तिर्भूपाल वासुदेवेऽतिदुर्ल्लभा । तत्रापि दुर्ल्लभो मासो माधवो माधवप्रियः ।।३७३
तमत्राप्य ततो मासं स्नानदानजपादिकम् । कुर्व्वन्ति विधिना ये तु धन्यास्ते कृतिनो नराः ।।३७४
तेषां दर्शनमात्रेण पापिनोऽपि विकल्मषाः । भवन्ति भगवद्भावभाविता धर्म्मकाङ्क्षिणः ।।३७५

अथ तत्र कर्म्मविशेषमाहात्म्यम्

तत्रैव—

प्रातः स्नानञ्च वैशाखे यज्ञदानमुपोषणम् । हविष्यं ब्रह्मचर्य्यञ्च महापातकनाशनम् ।।३७६।।

किञ्च —

वैशाखं सकलं मासं नित्यस्नायी जितेन्द्रियः ।
जपन् हविष्यभुक् शान्तः सर्व्वपापैः प्रमुच्यते ।।३७७।।

एकभक्तमथो नक्तमयाचितमतन्द्रितः । माधवे मासि यः कुर्य्याल्लभते सर्व्वमीप्सितम् ।।३७८।।

---

भगवद्धर्म्मकाङ्क्षिणः सन्तः भगवद्भावभाविता भवन्ति ।।३७५।।

---

करते हैं, वे ही धन्यवादार्ह हैं, और पुण्यवान् कहे गये हैं। उनके दर्शन मात्र से पातकीगण विशुद्ध होते हैं, एवं धर्माकाङ्क्षी होकर भगवद् भाव भावित होते हैं।।३६६-३६९।।

और भी लिखित है—हे राजन् ! पुनर्वार कलियुग में यह अश्वमेधादि गुप्त नहीं रहेंगे, क्योंकि वैशाख मास अत्यन्त अधिक माहात्म्ययुक्त है। अर्थात् वैशाख मास के फल से ही मनुष्यगण अश्वमेधादि यज्ञ के फल को प्राप्त करते हैं। कलिकाल में मनुष्य समूह नरक-सागर में निपतित होंगे, तज्जन्य ही देवदेव श्रीहरि विरलप्रचार वैशाखमास की सृष्टि किये हैं।।३७०-३७१।।

उक्त ग्रन्थ में और भी वर्णित है—हे राजन् ! भारतवर्ष में मनुष्य जन्म दुर्लभ है, तन्मध्य में भारतवर्ष में स्वधर्म में प्रवृत्ति होना और भी दुर्लभ है, एवं श्रीहरिभक्ति उससे भी दुष्प्राप्य है, एवं श्रीहरिप्रिय वैशाख मास उससे भी दुर्ल्लभ है। जिन्होंने इस प्रकार वैशाखमास प्राप्त किया है, एवं उसमें यथाविधि स्नान, दान, एवं जपादि का अनुष्ठान भी किया है, वे ही धन्य हैं एवं कृती मनुष्य हैं। इन सब पुरुषों का दर्शन करते ही पातकी विशुद्ध होते हैं। एवं धर्माकाङ्क्षी होकर भगवद्भाव भावित होते हैं।।३७२-३७५।।

अथ तत्र कर्म्मविशेषमाहात्म्यम्

उक्त पुराण में लिखित है—वैशाख मास में अनुष्ठित प्रातः स्नान, यज्ञ, दान, उपवास, हविष्य भोजन एवं ब्रह्मचर्य्य,—यह सब महापाप नाशक नाम से अभिहित हैं।।३७६।।

और भी लिखित है—सम्पूर्ण वैशाख मास में प्रत्यह प्रातः स्नान, इन्द्रिय संयम, जप एवं हविष्य भोजन करने से एवं शान्तभाव से अवस्थान करने से सकल पातकों से परित्राण होता है। जो अनलस होकर वैशाखमास में एकाहारी किंवा नक्तभोजी अथवा अयाचितव्रती होते हैं, उनके समस्त अभीष्ट सिद्ध होते हैं।।३७७-३७८।।

वराहधरणीसंवादे—

वैशाखे मासि यो विप्रान् भोजयेद्भक्तितत्परः ।
सिक्थे सिक्थे भवेत्तृप्तिः पितॄणां युगसंख्यया ॥३७९॥

यच्छन्ति तत्र मधुराधिकभोजनानि, ये वा यवाशनतिलोदकभोजनानि ।
छत्राम्बराणि चरणोचितरक्षणानि, धन्यास्त एव परितो हरितोषणानि ॥३८०॥

एवं कृतेन यत् पुण्यं प्राप्यते नियमैश्च तैः । तत् केन गणनां याति वर्षकोटिशतैरपि ? ३८१॥
पुत्रपौत्रादिसम्पत्तिं दीर्घायुंषि यथेप्सितम् । इहाप्नोति परत्रापि मामेव प्रतिपद्यते ॥३८२॥

अथ तत्र प्रातःस्नानमाहात्म्यम्

तत्रैव नारदाम्बरीष-संवादे—

अम्बरीष महापुण्य-प्राप्तये कुरु वीक्षणम् । माधवे मासि यैः स्नातं प्रातर्नियमसंयुतैः ॥३८३॥
यदानन्दपुरे प्रोक्तं वसतां वर्षकोटिभिः । तत् प्रातर्माधवे मासि स्नानेनैकेन लभ्यते ॥३८४॥

किञ्च—

यथैव माधवो ध्यातो विनाशयति किल्विषम् ।
तथैव माधवे स्नानं नियमेन विनिर्म्मितम् ॥३८५॥

अथ तत्र श्रीभगवत्पूजामाहात्म्यम्

तत्रैव विधिकथने—

विशेषादपि वैशाखे योऽच्चर्चयेन्मधुसूदनम् । सर्व्वसम्वत्सरं यावदर्च्चितस्तेन माधवः ॥३८६॥

---

मधुराधिकभोजनानि मधुरद्रव्यप्रधानभोग्यानि । यवाशनं यवान्नं, तस्य पुनरुक्तिर्विशेषाय ।.३८०॥
आनन्दपुरे तीर्थविशेषे, तत् फलम् ॥३८४॥
विशेषात् अन्यमासत आधिक्येन य एककालमभ्यर्च्चयेत्, अपि-शब्दस्त्वर्थे ॥३८६॥

---

वराह-धरणी-संवाद में लिखित है— जो मानव, वैशाख मास में भक्ति पूर्वक विप्रवृन्द को भोजन प्रदान करते हैं, प्रत्येक ग्रास में युगपरिमित उनके पितृवर्ग की तृप्ति साधित होती है ॥३७९॥

जो वैशाखमास में मधुर द्रव्य प्रधान भोज्य द्रव्यसमूह, यवान्न, तिल, जलपात्र, छत्र, वस्त्र एवं पादुका प्रदान करते हैं, वे सब धन्य हैं । इन सब दानों के द्वारा हरि प्रसन्न होते हैं ॥३८०॥

विधि पूर्वक इस प्रकार आचरण करने से जो पुण्य सञ्चित होता है, शतकोटि वर्षावध उसकी गणना नहीं हो सकती है । इस प्रकार अनुष्ठान करने से इह लोक में पुत्र-पौत्रादि सम्पद्, दीर्घायु, एवं अभीष्ट वस्तु, सबही प्राप्त होते हैं, और पारलौकिक में मुझको प्राप्त होते हैं ॥३८१-३८२॥

अथ तत्र प्रातःस्नानमाहात्म्यम्

उक्त पुराण के नारद-अम्बरीष-संवाद में लिखित है—हे अम्बरीष ! जो सब मानव, वैशाख मास में नियम विशिष्ट होकर प्रातःकाल में स्नान करते हैं, महापुण्य प्राप्त होने के निमित्त उनका दर्शन करो । इस प्रकार कथित है कि,—आनन्दपुर तीर्थ में कोटि-कोटि वत्सर वास करने से जो फल होता है, वैशाख मास में एक वार मात्र प्रातः स्नान करने से वही फल होता है ॥३८३-३८४॥

और भी लिखित है—माधव का ध्यान करने पर जिस प्रकार पाप क्षय होता है, उस प्रकार पाप क्षय के निमित्त ही नियम पूर्वक वैशाख स्नान विहित हुआ है ॥३८५॥

अथ तत्र श्रीभगवत्पूजामाहात्म्यम्

उक्त पुराण में ही विधिकथन प्रसङ्ग में लिखा है,—विशेष प्रकार से वैशाख मास में श्रीमधुसूदन की

किञ्च—

यश्चापि निःस्वः पुरुषो माधवे मासि माधवम् । पुष्पार्च्चनविधानेन पूजयेन्मधुसूदनम् ॥३८७॥
सर्व्वपापविनिर्मुक्तः पितॄणां तारयेच्छतम् । स जन्मशतसाहस्रं न शोकफलभाग्भवेत् ॥३८८

न च व्याधिभयं तस्य न दारिद्र्यं न बन्धनम् ।
स विष्णुभक्तो जायेत धन्यो जन्मनि जन्मनि ॥३८९॥

यावद्युगसहस्राणि शतमष्टोत्तरं भवेत् । तावत् स्वर्गे वसेद्वीर भूपतिश्च पुनर्भवेत् ॥३९०॥
भूपत्वे विविधान् भोगान् विहृत्य च यथासुखम् । माधवस्य प्रसादेन माधवे लीयते ततः ॥३९१

किञ्च वराहधरणीसंवादे—

विधिनाऽविधिना वापि ये यजन्ति नरा धरे ।
माधवे मासि मां भक्त्या तैश्च याज्योऽस्म्यहं सदा ॥३९२॥

ये यजन्ति धरे नित्यमध्वरैर्विविधैरपि । माधवे यजते यो मां तेभ्यस्तदधिकं फलम् ॥३९३॥ इति ।

वैशाखस्य परश्चास्ते तत्रोपाख्यानपङ्क्तिषु ।
सामान्येन च माहात्म्यं विशेषेण च सर्व्वशः ॥३९४॥

---

पुष्पैर्यदर्च्चनविधानं पूजाकरणं, तेनापि केवलेन ॥३८७॥
लीयते संयोगं प्राप्नोति ॥३९१॥
सदा याज्यः कृतपूजोऽस्मीत्यर्थः; यद्वा, सदैव मत्पूजां ते करिष्यन्ति, मद्भक्ततां प्राप्ता इत्यर्थः ॥३९२॥
तस्याधिकं फलं स्यात् । अलिखितमपि युक्त्या संगृह्लाति—वैशाखस्येति । परश्च माहात्म्यमास्ते, तत्र पद्मपुराणादौ, उपाख्यानपङ्क्तिषु इतिहासपरम्परासु ॥३९३-३९४॥

---

पूजा करने से उसी से श्रीहरि की एक वत्सर व्यापिनी पूजा साधित होती है ॥३८६॥

और भी लिखा है—धनहीन मानव यदि वैशाख मास में केवल मात्र पुष्प द्वारा श्रीहरि की अर्च्चना करें तो, वे सब पापों से मुक्त होकर शतसंख्यक पितृकुल की रक्षा करने में समर्थ होते हैं । उन मानवों को शतसहस्र वर्ष पर्य्यन्त शोक प्राप्त नहीं करना पड़ता है । वे रोगभय, दारिद्र्यभय, एवं बन्धनभय से मुक्त होते हैं, एवं जन्म जन्म में धन्य विष्णुभक्त होकर जन्म ग्रहण करते हैं । हे वीर ! वे सब मानव, एक शत आदि सहस्रयुग वत्सर स्वर्ग में निवास करते हैं । पश्चात् पुनर्बार राजा होकर धरातल में अवतीर्ण होते हैं, अनन्तर नृपति पद में अवस्थित होकर विविध भोग सम्भोग पूर्वक सुख से विहार करके अवशेष में श्रीहरि के अनुग्रह से तत्सान्निध्य लाभ करते हैं ॥३८७-३९१॥

वराह-धरणी-संवाद में और भी लिखा है—हे धरे ! विधान से हो अथवा अविधान से हो, जिस किसी प्रकार से हो, वैशाखमास में भक्तिपूर्वक मेरी पूजा करने से मैं तत्कर्त्तृक सर्वदा पूजित होता हूँ । हे धरणि ! जो लोक विविध मधुर सामग्री के द्वारा वैशाख मास में मेरी पूजा करते हैं वे सब उक्त फलों की अपेक्षा अधिक फल लाभ करते हैं ॥३९२-३९३॥

पुराणादि में, इतिहासोपाख्यान में वैशाख मास का माहात्म्य सामान्यतः एवं विस्तृत रूप से वर्णित है ॥३९४॥

अथ तत्र स्नानविधिः

तत्रैव नारदाम्बरीष-संवादे—

मेषसंक्रमणे भानोर्माधवे मासि यत्नतः। महानद्यां नदीतीर्थे नदे सरसि निर्झरे।
देवखाते तथा स्नायाद्यथा प्राप्ते जलाशये ॥३६५॥
दीर्घिकाकूपवापीषु नियतात्मा हरिं स्मरन् ॥३६६॥

मधुमासस्य शुक्लायामेकादश्यामुपोषितः। पञ्चदश्याञ्च वा वीर मेषसंक्रमणेऽपि वा ॥३६७॥
वैशाखस्नाननियमं ब्राह्मणानामनुज्ञया। मधुसूदनमभ्यर्च्चर्य्य कुर्य्यात् सवनपूर्व्वकम् ॥३६८॥
वैशाखं सकलं मासं मेषसंक्रमणे रवेः। प्रातः सनियमं स्नास्ये प्रीयतां मधुसूदनः ॥३६९॥
मधुहन्तुः प्रसादेन ब्राह्मणानामनुज्ञया। निर्विघ्नमस्तु मे पुण्यं वैशाखस्नानमन्वहम् ॥४००॥
माधवे मेषगे भानौ मुरारे मधुसूदन। प्रातः स्नानेन मे नाथ यथोक्तफलदो भव ॥४०१॥
यथा ते माधवो मासे वल्लभो मधुसूदन। प्रातःस्नानेन मे तस्मिन् फलदो भव पापहा ॥४०२
एवमुच्चार्य्य तत्तीर्थे पादौ प्रक्षाल्य वाग्यतः। स्मरन्नारायणं देवं स्नानं कुर्य्याद्विधानतः ॥४०३॥
इति।
विधानञ्च परं ज्ञेयं प्रसिद्धं स्मृतिशास्त्रतः। तत् किञ्चिल्लिखितं पूर्व्वं प्रातःस्नानप्रसङ्गतः ॥४०४

अथ विशेषतस्तत्राक्षयतृतीयाकृत्यम्

आदौ तन्माहात्म्यम्

मात्स्ये—

वैशाखे मासि शुक्लायां तृतीयायां जनार्द्दनः। यवानुत्पादयामास युगञ्च कृतवान् कृतम् ॥४०५

सवनम्—स्नानम् ॥३९८॥

अथ तत्र स्नानविधिः

उक्त पुराण के नारद-अम्बरीष-संवाद में वर्णित है—भास्कर देव, मेषराशिस्थ होने पर, महानदी में, नदी तीर्थ में, नद में, सरसी में, निर्झर में, देवखात में, दीर्घिका में, कूप में, वापी में एवं अन्य किसी जलाशय में संयत चित्त से यत्नपूर्वक हरिस्मरण कर स्नान करना चाहिये ॥३९३-३९६॥

हे वीर! चैत्र मास के शुक्लपक्ष की एकादशी तिथि में उपवासी रहकर, अथवा पूर्णिमा किंवा मेष-संक्रान्ति दिन में ब्राह्मणवृन्द से अनुमति लेकर स्नानान्त में श्रीहरिपूजा समापन पूर्वक वैशाख नियम लेना कर्त्तव्य है। सूर्य्य के मेष संक्रमण में समग्र वैशाख मास प्रातःकाल में नियम पूर्वक स्नान करूँगा, श्रीमधुसूदन एतद्द्वारा सन्तुष्ट होवें। मधुसूदन के अनुग्रह से, ब्राह्मणवृन्द की अनुमति से प्रत्यह वैशाख स्नानज पुण्य विघ्न रहित हो। हे मुरारे! हे मधुसूदन! हे नाथ! मकर राशिस्थ सूर्य्य में वैशाख मास में प्रातः स्नान के द्वारा मत्सम्बन्ध में यथायथ फल प्रदान करें। हे मुररिपो! आप निखिल पातकहारी हैं, वैशाख मास जिस प्रकार आपका प्रिय है, उस प्रकार वैशाख स्नान से आप प्रसन्न हों। इस प्रकार वाक्योच्चारण पूर्वक जल में चरणद्वय प्रक्षालन पूर्वक मौन होकर हरिस्मरण करते करते यथाविधि स्नान करना चाहिये।

अन्यान्य विधान समूह का परिज्ञान स्मृतिशास्त्र से करे। इति पूर्व में प्रातः स्नान के प्रसङ्ग में विधानावली का वर्णन किञ्चित् हुआ है ॥३९७-४०४॥

अथ विशेषतस्तत्राक्षयतृतीयाकृत्यम्

आदौ तन्माहात्म्यम्

मत्स्यपुराण में लिखित है—भगवान् जनार्दन, वैशाख मास में शुक्लपक्ष की तृतीया में यव की सृष्टि एवं

ब्रह्मलोकात् त्रिपथगां पृथिव्यामवतारयत् । तस्यां कार्य्यो यवैर्होमो यवैर्विष्णुं समर्च्चयेत् ॥४०६

यवान् दद्याद्द्विजातिभ्यः प्रयतः प्राशयेद्यवान् ॥४०७॥

पाद्मे च श्रीवराहधरणीसंवादे—

त्रेतायुगं तृतीयायां शुक्लायां मासि माधवे । प्रवृत्तश्च त्रयीधर्म्माः प्रवृत्तास्ते प्रवर्त्तिताः ॥४०८

अक्षया सोच्यते लोके तृतीया हरिवल्लभा । स्नाने दानेऽर्च्चने श्राद्धे जपे पूर्व्वजतर्पणे ॥४०९॥

येऽर्च्चयन्ति यवैर्विष्णुं श्राद्धं कुर्व्वन्ति यत्नतः ।
तस्यां ददति दानानि धन्यास्ते वैष्णवा नराः ॥४१०॥

अथ शुक्ला सप्तमी

तत्रैव नारदाम्बरीषसंवादे—

वैशाखशुक्लसप्तम्यां जाह्नवी जह्नुना पुरा ।
क्रोधात् पीता पुनस्त्यक्ता कर्णरन्ध्रात्तु दक्षिणात् ॥४११॥

तस्यां समर्च्चयेद्देवीं गङ्गां भुवनमेखलाम् । स्नात्वा सम्यग्विधानेन स धन्यः सुकृती नरः ॥४१२

तस्यां सन्तर्पयेद्देवान् पितॄन् मर्त्यान् यथाविधि ।
साक्षात् पश्यन्ति ते गङ्गास्नातकं गतकल्मषम् ॥४१३॥

अथ श्रीनरसिंहचतुर्द्दशी

वैशाखस्य चतुर्द्दश्यां शुक्लायां श्रीनृकेशरी । जातस्तदस्यां तत्पूजोत्सवं कुर्व्वीत सव्रतम् ॥४१४

---

त्रयी वेदत्रयं, तया त्रय्या प्रवर्त्तिता धर्म्माश्च प्रवृत्ताः ॥४०८॥

कृतस्नानं, स्वार्थे कन् ॥४१३॥ व्रतमुपवासादिनियमस्तत्सहितम् ॥४१४॥

---

सत्ययुग का विधान करते हैं। और त्रिपथगा गङ्गा को ब्रह्मलोक से धराधाम में अवतरण कराये हैं। एतज्जन्य उक्त तिथि में यव होम एवं यव के द्वारा श्रीहरि की पूजा करनी चाहिये। उक्त दिन में द्विजातिवृन्द को यव दान करके आदर पूर्वक यव का भोजन करावे ॥४०५-४०७॥

पद्म पुराण के श्रीधरणी-वराह-संवाद में लिखित है—वैशाख मास की शुक्ला तृतीया में 'त्रेतायुग एवं त्रिवेद प्रतिपाद्य धर्म का प्रवर्त्तन हुआ है। इस तृतीया तिथि में स्नान, दान, पूजा, श्राद्ध, जप एवं पितृ-तर्पण प्रभृति क्रिया का अनुष्ठान करने पर, वे सब अक्षय होते हैं। यह तिथि श्रीहरि-प्रीतिप्रदा है। जो इस तिथि में यत्नपूर्वक यव के द्वारा श्रीहरि की पूजा करते हैं, तथा यव के द्वारा श्राद्ध एवं यवदान करते हैं, वे सब मानव धन्यवादार्ह एवं वैष्णव नाम से अभिहित होते हैं ॥४०८-४१०॥

अथ शुक्ला सप्तमी

उक्त पुराण के नारद-अम्बरीष-संवाद में लिखित है—प्राचीन काल में जह्नु नामक ऋषि ने रोष वश से वैशाख मास के शुक्लपक्ष की सप्तमी तिथि में गङ्गादेवी को पानकर निज दक्षिण कर्ण से निकाल दिया, तज्जन्य इस तिथि में भुवन मेखला सुरनदी की पूजा करनी चाहिये। सुष्ठु विधान से उस दिन गङ्गा में स्नान करने पर मानव धन्य एवं पुण्यवान् हो सकता है। उस दिन में देव, पितृवर्ग, एवं मर्त्यवृन्द को यथाविधि सन्तुष्ट करने से वे सब गङ्गास्नायी को गतकल्मष देखते हैं ॥४११-४१३॥

अथ श्रीनरसिंहचतुर्द्दशी

वैशाख मास की शुक्ला चतुर्दशी तिथि में श्रीनृसिंहदेव आविर्भूत हुये थे। सुतरां उक्त तिथि में श्रीनृसिंह देव के पूजा रूप उत्सव उपवासादिक पालन नियम पूर्वक करना चाहिये ॥४१४॥

अथ नरसिंहचतुर्द्दशीव्रतनित्यता

वृहन्नारसिंहपुराणे श्रीभगवन्नृसिंहप्रह्लादसंवादे व्रतविधिकथने—

वर्षे वर्षे तु कर्तव्यं मम संतुष्टिकारणम् । महागुह्यमिदं श्रेष्ठं मानवैर्भवभीरुभिः ॥४१५॥

किञ्च—

विज्ञाय मद्दिनं यस्तु लङ्घयेत् स तु पापभाक् । एवं ज्ञात्वा प्रकर्त्तव्यं मद्दिने व्रतमुत्तमम् ।
अन्यथा नरकं याति यावच्चन्द्रदिवाकरौ ॥४१६॥

अथ तत्राधिकारिनिर्णयः

तत्रैव—

सर्व्वेषामेव लोकानामधिकारोऽस्ति मद्व्रते । मद्भक्तैस्तु विशेषेण प्रणेयं मत्परायणैः ॥४१७

अथ तन्माहात्म्यम्

तत्रैव श्रीप्रह्लाद उवाच—

नमस्ते भगवान् विष्णो नृसिंहवपुषे नमः । त्वद्भक्तोऽहं सुरेशैकं त्वां प्रपृच्छामि तत्वतः ॥४१८
स्वामिंस्त्वयि ममोत्पन्ना भक्तिर्बहुविधा कथम् ? कथन्ते सुप्रियो जातः कारणं वद मे प्रभो ॥४१९

श्रीनृसिंह उवाच—

कथयामि महाप्राज्ञ श्रृणुष्वैकाग्रमानसः । भक्तेर्यत् कारणं वत्स प्रियत्वस्य च तत् पुनः ॥४२०

---

वर्षे वर्षे त्विति वीप्सया नित्यत्व साध्यते, तच्च हेमाद्रिप्रभृतिभिरेवादशी प्रकरणादौ विवृतमेवास्ति ॥४१५
अकरणप्रत्यवायेन च नित्यत्वमाह—विज्ञायेति । विशेषेण ज्ञात्वापि ज्ञाननिष्टाऽपीत्यर्थः ॥४१६॥
प्रणेयं कर्त्तव्यम्, मत्परायणैर्मदेकनिष्ठैरिति तद्व्रतस्य तद्भक्तिविशेषरूपत्वादिति दिक् ॥४१७॥

---

अथ नरसिंहचतुर्द्दशीव्रतनित्यता

वृहन्नारसिंह पुराण के श्रीभगवन्नृसिंह-प्रह्लाद-संवाद के व्रत-विधि कथन में सुव्यक्त है—हे प्रह्लाद ! मदीय प्रीति विधान हेतु भवभीत मानवकुल को प्रति वत्सर इस अति गोपनीय व्रतराज चतुर्दशी व्रतानुष्ठान करना चाहिये ॥४१५॥

और भी लिखित है—जो व्यक्ति, मेरे दिन को जानकर भी उसको उल्लङ्घन करता है, वह पाप भागी होता है । सुतरां यह जानकर मेरे दिन में व्रतोत्तम का अनुष्ठान करे, नहीं तो चन्द्र सूर्य्य के स्थितिकाल यावत् निरयवास करना पड़ता है ॥४१६॥

अथ तत्राधिकारिनिर्णयः

उक्त पुराण में लिखित है—समस्त मानव ही मेरे व्रत में अधिकारी हैं । विशेषतः इस व्रत का करना, मद्भक्त और मन्निष्ठ मानवों का अवश्य कर्त्तव्य है ॥४१७॥

अथ तन्माहात्म्यम्

उक्त पुराण में श्रीप्रह्लाद ने कहा है—हे भगवन् ! हे विष्णो ! हे नृसिंहविग्रहधारिन् ! आपको पुनः पुनः नमस्कार करता हूँ । हे देवेश ! मैं त्वदीय भक्त हूँ । केवल मात्र आपके समीप में यथार्थतः जिज्ञासा करता हूँ । हे स्वामिन् ! आपके प्रति मेरी बहुविधा भक्ति का उदय हुआ ? और किस प्रकार मैं आपका प्रिय पात्र बना ? हे प्रभो ! यह मुझसे वर्णन कीजिये ॥४१८-४१९॥

श्रीनृसिंहदेव ने कहा—हे महाप्रज्ञ ! हे वत्स ! मद्भक्ति एवं मत्प्रियत्व प्राप्ति का कारण कहता हूँ, एकाग्र मानस से श्रवण करो । हे तात ! पूर्व जन्म में तुमने ब्राह्मणकुल में जन्म लिया था, किन्तु कुछ भी

पुराकल्पे ह्यभूर्विप्रः किञ्चित्त्वं नाप्यधीतवान् ।
नाम्ना च वसुदेवो हि वेश्यायां तत्परो ह्यभूः ॥४२१॥
तस्मिन् जन्मनि नैव त्वं चकर्थ सुकृतं कियत् । मुक्त्वा तु मद्व्रतं चैकं वेश्यासङ्गतिलालसः ।
मद्व्रतस्य प्रभावेण भक्तिर्जाता तवेदृशी ॥४२२॥

श्रीप्रह्लाद उवाच—

श्रीनृसिंहाच्युत स्वामिन् कस्य पुत्रेण किं कृतम् ? वेश्यायां वर्त्तमानेन कथं तद्धि कृतं मया ?
आख्यानं विस्तरेणेदं वक्तुमर्हसि साम्प्रतम् ॥४२३॥

श्रीनृसिंह उवाच—

पुरावन्तिपुरे ह्यासीद्ब्राह्मणो वेदपारगः । तन्नाम वसुशर्म्मेति सर्व्वलोकेषु विश्रुतम् ॥४२४॥
नित्यं होमक्रियामेष करोति द्विजसत्तमः । ब्रह्मक्रियासु सततं सर्व्वासु किल तत्परः ॥४२५॥
अग्निष्टोमादिभिर्यज्ञैरिष्टाः सर्व्वे सुरोत्तमाः । तेनापि विद्यमानेन न कृतं दुष्कृतं कियत् ॥४२६
तस्य भार्य्या सुशीलाभूद्विख्याता भुवनत्रये । पतिव्रता सदाचारा पतिभक्तिपरायणा ॥४२७॥
जज्ञिरे च सुताः पञ्च तस्यां द्विजवरात्ततः । सदाचाराः सुविद्वांसः पितृभक्तिपरायणाः ।
तेषां मध्ये कनिष्ठस्त्वं वेश्यायां तत्परः सदा ॥४२८॥
तां सन्निषेवमाणेन सुरापानं कृतं त्वया । सदा पापरतस्त्वं हि नाकृथाध्ययनं भृशम् ॥४२९॥
विलासिनीगृहे नित्यं वसतिर्ह्यभवत्तव । एकदा तद्गृहे ह्यासीत्तया सह महान् कलिः ॥४३०

---

कथं वा तद्व्रतं कृतम् ? ॥४२३॥
ब्रह्मक्रियासु—वैदिककर्म्मसु ॥४२५॥
अध्ययनं नाकृथाः, नाकार्षीः, सन्धिरार्षः ॥४२९॥

---

अध्ययन नहीं किया । तुम वासुदेव नाम से विख्यात थे, एवं वेश्यासक्त होकर दिनातिपात करते थे । उस जन्म में तुम्हारा मेरा एकमात्र व्रत व्यतीत अपर कोई भी पुण्यकर्म नहीं था । तुम वेश्यासङ्ग में ही लुब्ध थे । मेरे व्रत के प्रभाव से ही ऐसी भक्ति प्राप्त हुई है ॥४२०-४२२॥

प्रह्लाद ने कहा—हे नृसिंह ! हे अच्युत ! हे स्वामिन् ! मैं किसका पुत्र था, और कैसा कार्य्य किया था वेश्यानुरक्त होकर किस प्रकार से आपका व्रत का अनुष्ठान किया ? यह सब वृत्तान्त का कथन विस्तार पूर्वक करिये ॥४२३॥

श्रीनृसिंहदेव ने कहा—हे वत्स ! पुराकाल में अवन्ती नगर में सर्वजन विख्यात वसुशर्मा नामक एक वेदविद् ब्राह्मण निवास करता था । वह प्रत्यह होमानुष्ठान में तत्पर एवं निखिल वेद-क्रिया में रत था । अग्निष्टोम यज्ञादि के द्वारा देवोत्तमवृन्द को सन्तुष्ट करता था । जीवित अवस्था में उसने कोई दुष्कर्म नहीं किया । सुशीला नाम्नी उसकी पतिव्रता पत्नी सदाचार एवं पति-परायण होकर भुवनत्रय में विख्यात हुई थी । उस द्विजवर के पाँच पुत्र हुये थे । पुत्रगण, सुविद्वान्, सदाचार परायण, एवं पितृभक्त थे, किन्तु तन्मध्य में सर्व कनिष्ठ पुत्र तुम ही सर्वदा वेश्यासक्त हो गये थे ॥४२४-४२८॥

तुमने सतत वेश्यासक्त होने के कारण, मद्यपान और पाप कार्य्य में लिप्त रहकर किञ्चित् मात्र भी अध्ययन नहीं किया, अर्थात् कोई विद्या नहीं पढ़ी । सर्वदा वेश्या के घर में ही तुम्हारा वास हुआ । एक

ततः कलहभावेन भोजनं न कृतं त्वया । अज्ञानान्मद्व्रतं चक्रे व्रतानामुत्तमं व्रतम् ॥४३१॥
तया सह विवादेन रात्रौ जागरणं कृतम् । वेश्याया अपि तत् सर्व्वं प्रजातन्तु त्वया समम् ॥४३२
रात्रौ जागरणे तस्याः सञ्जातं कायशोधनम् । युवयोर्मद्व्रतं जातमज्ञानाद्बहुपुण्यदम् ॥४३३॥
येन चीर्णव्रतेनाद्य मोदन्ते दिवि देवताः । सृष्ट्यर्थन्तु ततो ब्रह्मा चक्रे मद्व्रतमुत्तमम् ॥४३४॥

मद्व्रतस्य प्रभावेण निर्म्मितं सचराचरम् । ईश्वरेणापि तच्चीर्णं बधार्थं त्रिपुरस्य च ।
महिम्नैव व्रतस्यास्य त्रिपुरं संनिपातितम् ॥४३५॥

अन्यैश्च बहुभिर्देवैर्ऋषिभिश्च पुरातनैः । राजभिश्च महाप्राज्ञैर्विहितं व्रतमुत्तमम् ॥४३६॥
एतद्व्रतप्रभावेण सर्व्वे सिद्धिमुपागताः । वेश्यापि मत्प्रिया जाता त्रैलोक्ये सुखचारिणी ।
ईदृशं मद्व्रतं वत्स त्रैलोक्ये चैव विश्रुतम् ॥४३७॥

धूर्त्तायाश्च विलासिन्या व्रतमेतदुपस्थितम् । प्रह्लाद तेन ते भक्तिर्मयि जाता ह्यनुत्तमा ॥४३८

सा वेश्या त्वप्सरा जाता दिवि भोगाननेकेशः ।
भुक्त्वा कामं विलीना तु त्वं प्रह्लाद विविष्ट माम् ॥४३९॥
कार्य्यार्थमवतारस्ते मच्छरीरात् पृथक् त्वसौ ।
विधाय सर्व्वकार्य्याणि शीघ्रं मयि गमिष्यसि ॥४४०॥

य इदं मद्व्रताग्रचन्तु प्रविधास्यन्ति मानवाः । न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥४४१

---

दिन उस वेश्या के सहित तुम्हारी तुमुल लड़ाई होगई, उस हेतु उस दिन तुम निराहार रहे उस दिन अज्ञानवशतः तुम्हारे द्वारा मेरे व्रतराज का अनुष्ठान होगया, और उस वेश्या के सहित कलह के कारण, रात्रि में जागरण भी हुआ । तुम्हारे सहित उस वेश्या के द्वारा भी व्रतादि का आचरण हुआ और रात्रि में जागरण के कारण, उसका देह भी पवित्र होगया । इस प्रकार तुम दोनों ने अज्ञान से महापुण्यप्रद मेरे व्रत का अनुष्ठान किया था ॥४२९-४३३॥

इस व्रत का अनुष्ठान करने से ही अधुना देवलोक में देवगण आनन्दानुभव करते रहते हैं । ब्रह्मा भी सृष्टि-कार्य्य के निमित्त मदीय इस व्रत का अनुष्ठान करते हैं । महेश्वर भी त्रिपुर विनाशहेतु इस व्रत का अनुष्ठान कर त्रिपुरासुर को ध्वंस किये थे । अन्यान्य असंख्य देव, प्राचीन ऋषि, एवं महामति नृपतिवृन्द इस उत्तम व्रत का अनुष्ठान किये थे । इस व्रत के प्रभाव से ही सभी ने सिद्धि प्राप्त किया । वेश्या भी इसके प्रभाव से ही त्रिभुवन सुखचारिणी एवं मत्प्रियपात्री होगई । हे वत्स ! मेरा यह व्रत त्रिभुवन प्रसिद्ध है । धूर्त्ता विलासिनी नारी के निमित्त भी यह व्रत समागत हुआ है । अर्थात् वे सब भी इस व्रत का अनुष्ठान कर फल प्राप्त कर सकती हैं । हे प्रह्लाद ! एतज्जन्य मेरे प्रति तुम्हारी उत्तमा भक्ति हुई है ॥४३४-४३८॥

हे प्रह्लाद ! वह वेश्या, देवलोक में अप्सरा रूप में बहुविध भोग सम्भोग करके मुझमें विलीन होगई है । तुम भी मुझमें प्रविष्ट हो गये थे । कार्य्य साधनार्थ मद्देह से भिन्न होकर ही तुम्हारा यह अवतार हुआ है । तुम सर्व कार्य्य समाधान करके सत्वर मुझमें प्रविष्ट हो जाओगे । मानववृन्द, मेरा यह व्रतराज का अनुष्ठान करने पर शतकोटि कल्प में भी उनको पुनर्वार इस संसार में आना नहीं पड़ेगा ॥४३९-४४१॥

अपुत्रो लभते पुत्रान् मद्भक्तांश्च सुवर्च्चसः । दरिद्रो लभते लक्ष्मीं धनदस्य च यादृशी ॥४४२
तेजस्कामो लभेत्तेजो राज्येप्सू राज्यमुत्तमम् । आयुष्कामो लभेदायुर्यादृशन्तु शिवस्य च ॥४४३
स्त्रीणां व्रतमिदं साधुपुत्रदं भाग्यदन्तथा । अवैधव्यकरं तासां पुत्रशोकविनाशनम् ॥४४४॥
धनधान्यकरञ्चैव पतिप्रियकरं शुभम् । सार्व्वभौमं सुखं तासां दिव्यसौख्यं भवेत्ततः ॥४४५॥
स्त्रियो वा पुरुषो वापि कुर्व्वन्ति व्रतमुत्तमम् । तेभ्यो ददाम्यहं सौख्यं भुक्तिमुक्तिफलन्तथा ॥४४६
बहुनोक्तेन किं वत्स व्रतस्यास्य फलस्य हि । मद्व्रतस्य फलं वक्तुं नाहं शक्तो न शङ्करः ॥४४७॥
ब्रह्मा चतुर्भिर्वक्त्रैश्च नालं स्याज्जीविताबधि ॥४४८॥

किञ्च तत्रैव व्रतविधिकथने —

यथा यथा प्रवृत्तिः स्यात् पातकस्य कलौ युगे ।
तथा तथा विधास्यन्ति मद्व्रतं विरलं जनाः ॥४४९॥

मद्व्रतस्य विधानेन मतिर्न स्याद्दुरात्मनाम् । सदा पापरतानान्तु पुरुषाणां विकर्म्मणि ॥४५०
विचार्य्यैवं प्रकर्त्तव्यं माधवे मासि मद्व्रतम् । प्राप्ते भूतदिने वत्स सर्व्वकल्मषनाशनः ॥४५१
येनैव क्रियमाणेन सहस्रद्वादशीफलम् । जायते न मृषा वच्मि मानुषाणां महात्मनाम् ॥४५२

---

चीर्णेन कृतेन व्रतेन ॥४३४॥
विलीना प्रविष्टा मयीति शेषः । मां विशिष्ट प्राविशः, कार्य्यार्थं भक्तिप्रवर्त्तनार्थम् ॥४३९॥
मानुषाणां जायते । महात्मनामिति मद्व्रतानुष्ठानात्, न चात्रासम्भावनादिकं कार्य्यमित्याह– न मृषा वचनीति ॥४५२॥

---

इस व्रत के प्रभाव से पुत्रहीन जन को अति सुन्दर पुत्रसमूह लाभ होते हैं, पुत्रगण भक्तिमान् भी होते हैं। दीन-दरिद्र व्यक्ति लक्ष्मीवान् भी होता है, एवं तेजस्कामी व्यक्ति तेजः, राज्याकाङ्क्षी व्यक्ति, उत्तम राज्य एवं आयुष्कामी व्यक्ति शिवसदृश दीर्घायुः प्राप्त कर सकता है। यह व्रत स्त्रीगण के पक्ष में सुच्चरित्र पुत्रदायक, सौभाग्यजनक, अवैधव्यकर, पुत्र-शोक नाशन, धन-धान्यप्रद, पति-प्रियकर एवं शुभकर है। इस व्रतानुष्ठान से नारीवृन्द, सार्वभौम नन्द एवं स्वर्ग-सुख प्राप्त कर सकती हैं। हे प्रह्लाद ! इस व्रत का अनुष्ठान करने पर नर वा नारी सबको मैं मुक्तिफल प्रदान करता रहता हूँ ॥४४२-४४६॥

हे वत्स ! इस व्रत के फल का विषय और अधिक क्या कहूँ ? इसका फल वर्णन करने में मेरी व शिव की भी सामर्थ्य नहीं है। विधाता आजीवन चारों मुख से कीर्त्तन करने में भी समर्थ नहीं हैं ॥४४७-४४८॥

उक्त पुराण के व्रतविधि कथन प्रसङ्ग में और भी कथित है—कलियुग में जब जब पापोद्भव होता है, तब ही मानवगण, विरलभाव से इस व्रत का अनुष्ठान करते हैं। इस व्रतानुष्ठान के प्रभाव से दुरात्मा सतत पापासक्त व्यक्तिवृन्द की भी मति, विरुद्ध धर्म में प्रवर्त्तित नहीं होती है। हे वत्स ! इस प्रकार विवेचना करके वैशाख की शुक्ला चतुर्दशी में सर्व पापहर मदीय व्रतानुष्ठान करना चाहिये ॥४४९-४५१॥

हे प्रह्लाद ! मैं मिथ्या नहीं कह रहा हूँ। केवलमात्र इस चतुर्दशी व्रत के फल से ही महानुभव मानवगण, सहस्र द्वादशी के फल को प्राप्त हो सकते हैं ॥४५२॥

तदन्ते च—

य इदं शृणुयाद्भक्त्या व्रतं पापप्रणाशनम् । तस्य श्रवणमात्रेण ब्रह्महत्यां व्यपोहति ।।४५३।।

पवित्रं परमं गुह्यं कीर्त्तयेद्यस्तु मानवः ।
सर्व्वान् कामानवाप्नोति व्रतस्यास्य फलं लभेत् ।।४५४।।

अथ तद्व्रतदिननिर्णयः

आगमे—

वैशाखे शुक्लपक्षे तु चतुर्द्दश्यां महातिथौ । सायं प्रह्लादधिक्कारमसहिष्णुः परो हरिः ।।४५५

सद्यः कटकटाशब्द-विस्मापितसभाजनः । लीलया स्तम्भगर्भान्तादुद्भूतः शब्दभीषणः ।।४५६

नृहरेरवतारात्तां यत्नतः समुपोषयेत् । महापुण्यतमायाञ्च सायं विष्णुं प्रपूजयेत् ।।४५७।।

बृहन्नारसिंहे—

वैशाखशुक्लपक्षस्य चतुर्द्दश्यां समाचरेत् । मज्जन्मसम्भवं पुण्यं व्रतं पापप्रणाशनम् ।।४५८।।

किञ्च—

स्वातीनक्षत्रयोगे तु शनिवारे हि मद्व्रतम् । सिद्धियोगस्य योगे च लभ्यते दैवयोगतः ।
सर्व्वैरेतैस्तु संयुक्तैर्हत्याकोटिविनाशनम् ।।४५९।।

केवलञ्च प्रकर्त्तव्यं मद्दिनं फलकाङ्क्षिभिः । वैष्णवैर्न तु कर्त्तव्या स्मरविद्धा चतुर्द्दशी ।।४६०

---

न तावदनुष्ठानात्, श्रवणादिनापि महाफलं स्यादिति लिखति—य इति ।।४५३।।
दैवयोगतः कदाचिन्महाभाग्येनैव लभ्यते इत्यर्थः, यतः सर्व्वैरिति ।।४५९।।
केवलं तत्तद्योगहीनमपि फलाकाङ्क्षिभिरपि कर्त्तव्यमेव, नित्यत्वात् । स्मरस्त्रयोदशी तेन विद्धा ।।४६०

---

उक्त प्रकरण के अन्त में लिखा है—भक्ति पूर्वक सर्व पापहर इस व्रत का विषय श्रवण करने से ही ब्रह्महत्या जनित पाप विनष्ट हो जाता है । इस गोपनीय अति पवित्र व्रत का कीर्त्तन करने से कीर्त्तनकारी मानव सर्वाभीष्ट प्राप्त करते हैं, एवं व्रतफल लाभ करते हैं ।।४५३-४५४।।

अथ तद्व्रतदिननिर्णयः

आगम में लिखित है—वैशाख की शुक्ला चतुर्दशी महातिथि में सायंकाल में प्रह्लाद के प्रति धिक्कार निर्य्यातन सहन करने में अक्षम होकर परमपुरुष श्रीहरि तत्क्षणात् कटकटा शब्द से सभास्थ जननिकर को विस्मित करके लीलावेश से स्तम्भ के मध्य से दारुण शब्द के सहित आविर्भूत हुए थे । श्रीनृसिंहदेव अवतीर्ण होने के कारण उस महापुण्य स्वरूप चतुर्दशी में उपवासी रहकर सायंकाल में यत्नपूर्वक श्रीविष्णु की पूजा करनी चाहिये ।।४५५-४५७।।

बृहन्नारसिंह पुराण में लिखित है—वैशाख की शुक्ला चतुर्दशी तिथि में मेरे जन्म के कारण समुद्भूत, पापविनाशन मदीय पुण्य व्रत का अनुष्ठान करे ।।४५८।।

और भी लिखा है—स्वाती नक्षत्र युक्त शनिवार एवं सिद्धि योग का समन्वय दैवात् होने से उस दिन मेरा व्रत होने पर वह कोटि हत्याजनित पापों को विनष्ट करता है । उक्त योग न होने पर भी फलेच्छु व्यक्तिगण केवल मात्र शुद्धा चतुर्दशी में उपवास करें । त्रयोदशी विद्धा चतुर्दशी में उपवास करना वैष्णवों को उचित नहीं है ।।४५९-४६०।।

आगमे—

प्रिया चतुर्द्दशी भौमे कर्त्तव्या किल्विषापहा ।
कामविद्धा न कर्त्तव्या स्वातीभौमयुता यदि ।।४६१।।

अथ तद्व्रतविधिः

तत्रैव—

प्रातरुत्थाय कुर्व्वीत नियमं मनसा स्मरन् । मामेन मद्दिने वत्स दन्तधावनपूर्व्वकम् ।।४६२।।

अथ नियममन्त्रः

श्रीनृसिंह महाभीम दयां कुरु ममोपरि ।
अद्याहं ते विधास्यामि व्रतं निर्विघ्नतां नय ।।४६३।। इति ।

व्रतस्थेन न वक्तव्यं मद्दिने पापिभिः सह । मिथ्यालापा न कर्त्तव्याः समग्रफलकाङ्क्षिभिः ।।४६४
स्त्रियं द्यूतं विहायोच्चैर्व्रतस्थेन महात्मना । स्मर्त्तव्यं मम रूपञ्च मद्दिने सकले शुभे ।।४६५।।
ततो मध्याह्नवेलायां नद्यादौ विमले जले । गृहे वा देवखाते वा तड़ागे वातिशोभने ।
वैदिकेन च मन्त्रेण स्नानं कुर्य्याद्विचक्षणः ।।४६६।।
मृत्तिकागोमयेनैव तथा धात्रीफलेन वा । तिलैर्वा सर्व्वपापघ्नैः स्नानं कृत्वा महात्मभिः ।
परिधाय शुचिर्वस्त्रे नित्यकर्म्म समाचरेत् ।।४६७।।
ततो गृहं समागत्य स्मरन् मां भक्तियोगतः । गोमयेन विलिप्याथ कुर्य्यादष्टदलाम्बुजम् ।।४६८

प्रातश्चतुर्द्दशी-प्रभाते, सर्व्वव्रतसाधारणत्वात्, पूर्व्वदिने चैकभक्तादिसयमो विज्ञेय एव । दन्तधावनन्तु उपवासदिने काष्ठेन तन्निषेधात् तृणादिना बोद्धव्यम् ।।४६२।।

आगम में वर्णित है—मङ्गलवार में मत्प्रीतिदायिका चतुर्दशी होने पर उसमें मदीय व्रतानुष्ठान निखिल पापापहारक है । त्रयोदशी विद्धा चतुर्दशी में मङ्गलवार किंवा स्वाती नक्षत्र का योग होने पर भी उस दिन में व्रत करना उचित नहीं है ।।४६१।।

अथ तद्व्रतविधिः

उक्त ग्रन्थ में लिखित है—नृसिंहदेव ने कहा,–हे वत्स ! प्रातःकाल में गात्रोत्थान पूर्वक दन्तधावन करके मुझको हृदय में स्मरण करते-करते नियम ग्रहण करे ।।४६२।।

अथ नियममन्त्रः

हे नृसिंह ! हे महाभीम ! मेरे प्रति कृपा करें । मैं अद्य आपका व्रतानुष्ठान कर रहा हूँ । यह निर्विघ्न समाप्त कर दीजिये ।।४६३।।

श्रीभगवान् बोले—व्रतदिन में पापियों के सहित वार्त्तालाप करना व्रती के पक्ष में अनुचित है । जो मानव, व्रत का सम्पूर्ण फलाभिलाषी है, उसके पक्ष में मित्थ्यालाप करना कर्त्तव्य नहीं है । मङ्गलपूर्ण मद्दिवस में महानुभव व्रती, स्त्रीलोक एवं द्यूतक्रीड़ा परित्याग पूर्वक मेरा रूप का स्मरण करे । तत्पश्चात् बुधव्यक्ति मध्याह्न समय में नदी प्रभृति के निर्म्मल जल में अथवा गृह में, किंवा देवखात में अथवा मनोहर तड़ाग में वैदिक मन्त्र के सहित स्नान करे ।।४६४-४६६।।

महानुभव व्रती, मृत्तिका, गोमय, वा आमलकी फल किंवा सर्व पापहर तिल-स्नान द्वारा स्नान करके विशुद्धभाव से वस्त्रयुगल धारण पूर्वक नित्यकर्म का अनुष्ठान करें । तदनन्तर भक्ति के सहित मेरा ध्यान

कलसं तत्र संस्थाप्य ताम्रं रत्नसमन्वितम् । तस्योपरि न्यसेत् पात्रं तण्डुलैः परिपूरितम् ।
हैमी मूर्त्तिस्तु तत्रैव स्थाप्या लक्ष्मीस्तथैव च ॥४६९॥
पलेन च तदर्द्धेन तदर्द्धार्द्धेन वा पुनः । यथा शक्तिस्तथा कार्य्या वित्तशाठ्यविवर्ज्जितः ।
पञ्चामृतेन ते स्नाप्य पूजनं तु समाचरेत् ॥४७०॥
ततो ब्राह्मणमाहूय तमाचार्य्यमलोलुपम् । कुर्य्याच्छास्त्रसमायुक्तं शान्तं दान्तं जितेन्द्रियम् ॥४७१
तेनैव कारयेत् पूजां दृष्ट्वा शास्त्रानुसारतः । आचार्य्यवचनाद्धीमान् पूजां कुर्य्याच्चरन् व्रतम् ॥४७२

अथ तत्र अग्रे श्रीप्रह्लाद-पूजा

तथा चागमे—

प्रह्लाद-क्लेशनाशाय या हि पुण्या चतुर्द्दशी । पूजयेत्तत्र यत्नेन हरेः प्रह्लादमग्रतः ॥४७३॥

बृहन्नारसिंहे —

मद्रूपं कारयेत्तत्र पुष्पस्तवकशोभितम् । ऋतुकालोद्भवैः पुष्पैः पूज्योऽहञ्च यथाविधि ॥४७४॥
उपचारैः षोड़शभिर्मन्मन्त्रैर्नामभिस्तथा । ततः पौराणिकैर्मन्त्रैः पूजनीयो विशेषतः ॥४७५॥

अथ तत्र चन्दनमन्त्रः

चन्दनं शीतलं दिव्यं चन्द्रकुङ्कुममिश्रितम् । ददामि ते प्रतुष्ट्यर्थं नृसिंह परमेश्वर ॥४७६॥ इति ।

---

ताम्रं ताम्रमयं, मूर्त्तिः श्रीनारसिंहो, तथैव लक्ष्मीः हैमी लक्ष्मीमूर्त्तिश्च । कार्य्ये द्वे मूर्त्ती, कार्य्येति पाठे प्रत्येकं सम्बन्धः ॥४६९॥

ते द्वे मूर्त्ती, स्नाप्य स्नापयित्वा ॥४७०॥

दृष्ट्वा शास्त्रोक्तविधिं ज्ञात्वा, आचार्य्याज्ञया पश्चात् स्वयमपि पूजयेदित्याह—आचार्य्येति ।४७२॥

पूजाविधिमाह—मद्रूपमिति नवभिः, मदीयमूर्त्तिम् ॥४७४॥

---

करते-करते निज गृह में प्रत्यावर्त्तन कर गोमय लिप्त भूमि के ऊपर अष्टदलपद्म अङ्कन करें । अनन्तर वहाँ सरत्न ताम्रकुण्ड स्थापन पूर्वक तदुपरि तण्डुल पूर्ण पात्र स्थापन करें । वहाँ पर नृसिंहदेव की एव लक्ष्मी-देवी की स्वर्णमयी मूर्त्ति स्थापन करना चाहिये । वित्तशाठ्य परित्याग पूर्वक शक्त्यनुसार एक पल, अर्धपल वा तदर्धपल काञ्चन द्वारा नृसिंहदेव एवं लक्ष्मी की मूर्त्ति निर्म्माण करना चाहिये, एवं उन मूर्त्तियुगल को पञ्चामृत में स्नान कराकर पूजा करनी चाहिये । तत्पश्चात् लोभहीन, शास्त्रज्ञ, दान्त, शान्त, जितेन्द्रिय ब्राह्मण को आह्वान करके आचार्य्य पद में वरण करें, एवं शास्त्रोक्त विधानानुसार उनके द्वारा पूजन करना चाहिये । आचार्य्य के वचनानुसार व्रतानुष्ठान एवं पूजन करना बुद्धिमान् मानव का कर्त्तव्य है ॥४६७-४७२

अथ तत्र अग्रे श्रीप्रह्लादपूजा

आगम में वर्णित है—प्रह्लाद के क्लेशापनोदन हेतु जिस पवित्र चतुर्दशी का उद्भव हुआ, उस तिथि में श्रीनृसिंह पूजा के पहले यत्नपूर्वक प्रह्लाद की पूजा करना कर्त्तव्य है ॥४७३॥

बृहन्नारसिंह पुराण में लिखित है—उक्त स्थान में कुसुमस्तवक शोभित मन्मूर्त्ति प्रस्तुत करके ऋतुकाल जात पुष्प द्वारा यथाविधि मेरी पूजा करे । मन्मन्त्र, मन्नाम, एवं पौराणिक मन्त्रसमूह के द्वारा विशेष रूप से षोड़शोपचार द्वारा मेरी पूजा करे ॥४७४-४७५॥

अथ तत्र चन्दनमन्त्रः

हे नृसिंह ! हे परमेश्वर ! आपकी सन्तुष्टि हेतु कर्पूर कुङ्कुमान्वित उत्तम शीतल चन्दन अर्पण कर रहा हूँ ॥४७६॥

अथ पुष्पमन्त्रः

कालोद्भवानि पुष्पाणि तुलस्यादीनि वै प्रभो । पूजयामि नृसिंहेश लक्ष्म्या सह नमोऽस्तुते ।।४७७

अथ धूपमन्त्रः

कालागुरुमयं धूपं सर्व्वदेवसुदुर्लभम् । करोमि ते महाविष्णो सर्व्वकामसमृद्धये ।।४७८।।

अथ दीपमन्त्रः

दीपः पापहरः प्रोक्तस्तमसां राशिनाशनः । दीपेन लभ्यते तेजस्तस्माद्दीपं ददामि ते।।४७९। इति ।

अथ नवेद्यमन्त्रः

नैवेद्यं सौख्यदं चास्तु भक्ष्यभोज्यसमन्वितम् । ददामि ते रमाकान्त सर्व्वपापक्षयं कुरु ।।४८०।। इति ।

अथ अर्घ्यमन्त्रः

नृसिंहाच्युत देवेश लक्ष्मीकान्त जगत्पते । अनेनार्घ्यप्रदानेन सफलाः स्युर्मनोरथाः ।।४८१।। इति ।

अथ पूजामन्त्रः

पीताम्बर महाविष्णो प्रह्लादभयनाशकृत् । यथाभूतार्च्चनेनाथ यथोक्तफलदो भव ।।४८२।।इति ।

---

यथाभूतेन यथोपपन्नेन सम्यक् सम्पादयितुमशक्तेनार्च्चनेनापि ।।४८२।।

---

अथ पुष्पमन्त्रः

हे नृसिंह ! हे ईश ! यथाकाल जात पुष्प एवं तुलसीदल के द्वारा आपकी एवं लक्ष्मीदेवी की पूजा कर रहा हूँ । आपको नमस्कार ।।४७७।।

अथ धूपमन्त्रः

हे महाविष्णो ! सर्व काम समृद्धि हेतु निखिल देवदुर्लभ कृष्णवर्ण अगुरु चन्दन-धूप अर्पण आपको कर रहा हूँ ।।४७८।।

अथ दीपमन्त्रः

दीप द्वारा पातक नाश और अन्धकार का नाश होता है, दीप द्वारा तेजोलाभ होता है, अतएव आपको दीप अर्पण कर रहा हूँ ।।४७९।।

अथ नैवेद्यमन्त्रः

हे रमाकान्त ! भक्ष्यभोज्ययुक्त नैवेद्य आपको अर्पण कर रहा हूँ। आप समस्त पातक दूर कीजिये।।४८०

अथ अर्घ्यमन्त्रः

हे नृसिंह ! हे अच्युत ! हे देवेश ! हे लक्ष्मीकान्त ! हे जगत्पते ! आपको यह अर्घ्य अर्पण कर रहा हूँ, इसके द्वारा मेरे मनोरथ सफल हों ।।४८१।।

अथ पूजामन्त्रः

हे पीताम्बर ! हे महाविष्णो ! हे प्रह्लादभय नाशकारिन् ! चतुर्दशी पूजा के द्वारा सन्तुष्ट होकर आप यथाविहित फल प्रदान कीजिये ।।४८२।।

रात्रौ जागरणं कुर्य्याद्गीतवादित्रनिस्वनैः । पुराणपठनं नृत्यं श्रोतव्यं मत्कथानकम् ।।४८३।।
ततः प्रभातसमये स्नानं कृत्वा ह्यतन्द्रितः । पूर्व्वोक्तेन विधानेन पूजयेन्मां प्रयत्नतः ।।४८४।।

किञ्च—

मद्वंशे ये नरा जाता ये जनिष्यन्ति मत्पुरः । तांस्त्वमुद्धर देवेश दुःसहाद्भवसागरात् ।।४८५
पातकार्णवमग्नस्य व्याधिदुःखाम्बुराशिभिः । तीव्रैस्तु परिभूतस्य महादुःखगतस्य मे ।।४८६।।
करावलम्बनं देहि शेषशायिन् जगत्पते । श्रीनृसिंह रमाकान्त भक्तानां भयनाशन ।।४८७।।
क्षीराम्बुधिनिवास त्वं प्रीयमाणो जनार्द्दन । व्रतेनानेन मे देव भुक्तिमुक्तिप्रदो भव ।।४८८।।
एवं प्रार्थ्य ततो देवं विसर्ज्ज्य च यथाविधि । उपहारादिकं सर्व्वमाचार्य्याय निवेदयेत् ।।४८९।।
दक्षिणाभिः सुसन्तोष्य ब्राह्मणांश्च विसर्ज्जयेत् । मम ध्यानसमायुक्तो भुञ्जीत सह बन्धुभिः ।।४९०
इति ।

अथ तत्र पौर्णमासी

पाद्मे तत्रैव श्रीयमब्राह्मणसंवादे

मेषसंक्रममारभ्य तिथयस्त्रिंशदुत्तमाः । सर्व्वयज्ञाधिकाः पुण्याः पुराणेषु प्रकीर्त्तिताः ।।४९१।।
तत्रापि पूर्णिमा पुण्या माधवी माधवप्रिया । येयं वराहकल्पस्य तिथिराद्या महाफला ।।४९२

किञ्च—

स्नानदानार्च्चनश्राद्धक्रियापुण्यविवर्ज्जिता । यस्यातीता च वैशाखी स नूनं निरयालयः ।।४९३

---

मम कथानकं कथा ।।४८३।।
माधवी वैशाखी ।।४९२।।

---

अनन्तर गीत-वाद्य के सहित रात्रि जागरण, पुराण पाठ, नृत्य एवं मदीय कथा श्रवण करे, एवं प्रभात-काल में स्नान करके अनलस होकर पूर्वोक्त विधानानुसार आदर पूर्वक मेरी पूजा करे ।।४८३-४८४।।

और भी लिखा है— हे देवेश ! जिन्होंने मेरे वंश में जन्म लिया है, अथवा मेरे सामने जन्म ग्रहण करेंगे उनकी दुःसह संसार समुद्र से रक्षा करो । मैं पाप समुद्र में निमग्न हो रहा हूँ, भयङ्कर व्याधिरूप दुःख-जलधि में पराभूत हुआ हूँ एवं महादुःख में निमग्न हुआ हूँ, आप मुझको हस्तावलम्बन अर्पण करें । हे शेषशायिन् ! हे जगत्पते ! हे श्रीनृसिंह ! हे रमाकान्त ! हे भक्तभयनाशन ! हे जनार्दन ! हे देव ! इस व्रत के द्वारा आप मेरे प्रति सन्तुष्ट होकर भुक्ति मुक्ति प्रदान कीजिये । इस प्रकार प्रार्थना करके यथाविधि देवता का विसर्जन करे और पुनर्बार उपहार प्रभृति समस्त द्रव्य आचार्य्य को प्रदान करे । तत्पश्चात् दक्षिणा प्रभृति के द्वारा सम्यक् प्रकार से ब्राह्मणवृन्द को सन्तुष्ट करके विसर्जन एवं मद्ध्यान निविष्ट होकर बन्धुवृन्द के सहित भोजन करे ।।४८५-४९०।।

अथ तत्र पौर्णमासी

पद्मपुराण के उक्त स्थान में श्रीयम ब्राह्मण-संवाद में लिखित है—मेषसंक्रम से आरम्भ कर त्रिंशत् संख्य उत्तमातिथि सर्वयज्ञापेक्षा पुण्य स्वरूपा है, पुराणसमूह में उक्त वार्त्ता लिखित है । उसके मध्य में माधव प्रीतिकरी वैशाखी पूर्णिमा अधिक पुण्य स्वरूपिणी है । यह तिथि वराह कल्प की आदि है, एवं यह तिथि महाफल प्रदान करते हैं ।।४९१-४९२।।

और भी लिखित है— वैशाखी पूर्णिमा जिस मानव के सम्बन्ध में स्नानदानादि रहित, मत्पूजा वर्जित एवं श्राद्धादि पुण्यकर्महीन होती है, वह पुरुष निःसन्देह नरक में चला जाता है । वेद सदृश शास्त्र नहीं है,

न वेदेन समं शास्त्रं न तीर्थं गङ्गया समम् । न दानं जलगोतुल्यं न वैशाखीसमा तिथिः ।।४९४

जलधेनुश्च यो दद्याद्वैशाख्यां विष्णुतत्परः । त्रयाणामपि देवानां चतुर्थोऽयं विशेषतः ।।४९५।।

तत्रैव धनशर्म्माणं प्रति प्रेतोक्तौ—

मया नैकापि वैशाखी पूर्णा पूर्णफलप्रदा । स्नानदानक्रियापूजासुकृतैः परिपालिता ।।४९६।।

तेन मे वैदिकं कर्म्म जातं सर्व्वञ्च निष्फलम् ।

ततो वैशाखनामाहं प्रेतो जातोऽस्मि गर्व्वतः ।।४९७।।

किञ्च तत्रैव—

पापेन्धनदवज्वाला-तमोद्रुमकुठारिका । कृता नैकापि वैशाखी विधिना तत्र पूर्णिमा ।।४९८।।

अव्रता यस्य वैशाखी स वैशाखी भवेन्नरः । दश जन्मानि च ततस्तिर्य्यग्योनिषु जायते ।।४९९

अथ समस्तवैशाखाशक्तकृत्यम्

तत्रैव श्रीयमब्राह्मणसंवादे—

त्रयोदश्यां चतुर्द्दश्यां वैशाख्याञ्च दिनत्रयम् ।

सर्व्वाशक्तोऽपि विधिना नारी वा पुरुषोऽपि वा ।।५००।।

---

त्रयाणां श्रीब्रह्मादीनां चतुर्थः । सारूप्यादिप्राप्त्या भगवतः सदा समीपवर्त्तिनित्यपार्षदो भवतीत्यर्थः ।।४९५।।

स्नानदानार्च्चनेति श्लोकोक्तं वैशाखीकृत्यनित्यत्वमेव वचनान्तरैर्द्रढ़यति—मयेति चतुर्भिः । तत्र चेयमाख्यायिका—'कश्चिच्छ्रोत्रियो विप्रः पूर्व्वजन्मनि निखिलं वैदिककर्म्माकरोत्, केवलं पौराणिकं वैशाखीकृत्यमप्येकं न चकार, तेन सर्व्वं तस्य वैदिकं कर्म्म विफलमभूत्, प्रत्युत भगवत्प्रियवैशाखानादरेण प्रेतत्वं जातम् ।' इति । तत्र च धनशर्म्मणो विप्रस्य पथि दृष्टैस्तदादिप्रेतैः सह संवादे तत्तन्नामकारणनिर्व्वाचने निजनामकारणं निर्व्वक्ति—मयेति द्वाभ्याम् । स्नानादिरूपसुकृतैः, तत्र क्रिया श्राद्धादि ।।४९६।।

गर्व्वतः वैदिकत्वाभिमानात्, अयमेव वैशाख्यपरिपालने हेतु ।।४९७।।

व निश्चित, स शाखी वृक्षो भवेत् ।।४९९।।

---

भागीरथी के सदृश तीर्थ नहीं है, जलदान एवं गोदान के तुल्य दान नहीं है एवं वैशाखी पूर्णिमा के सदृश दूसरी तिथि नहीं है। जो विष्णुभक्त, वैशाखी पूर्णिमा में जलदान, गोदान करते हैं, वे विशेष रूप से ब्रह्मादि त्रिदेव के मध्य में चतुर्थ नाम से गण्य होते हैं। अर्थात सारूप्यादि प्राप्त कर भगवत् पार्षद होते हैं। ।।४९३-४९५।।

उक्त स्थान में ही धनशर्मा के प्रति प्रेत ने कहा है—स्नान, दान, श्राद्ध,-पूजन रूप पुण्य द्वारा एकमात्र भी पूर्ण फल प्रद वैशाखी पूर्णिमा को पालन नहीं किया है, तज्जन्य मत्कृत वैदिक कर्मसमूह विफल हुये हैं, एवं अहङ्कार हेतु मुझको वैशाख नामक प्रेत होकर जन्म लेना पड़ा है ।।४९६-४९७।।

उक्त स्थान में और भी लिखित है– मैंने वैशाख मास में पापरूप कष्ठ को दावाग्नि स्वरूपा एवं तमोद्रुम की कुठार स्वरूपा वैशाखीपूर्णिमा का एक भी विधान पालन नहीं किया। वैशाखी पूर्णिमा जिस व्यक्ति के सम्बन्ध में व्रत रहित होकर अतिवाहित होता है, वह निश्चय ही तरु रूप में ही जन्म ग्रहण करता है एवं तत्पश्चात् दश जन्म तिर्य्यग् योनि में शरीर धारण करना पड़ता है ।।४९८-४९९।।

अथ समस्तवैशाखाशक्तकृत्यम्

उक्त पुराण के श्रीयम-ब्राह्मण-संवाद में लिखित है—नर, नारी, जो भी हो, यावतीय तिथिपालन में

पूर्व्वोक्तनियमैर्युक्तः प्रातः स्नात्वा स्वशक्तितः। विमुक्तः पातकैः सर्व्वैः स्वर्गमक्षयमश्नुते ॥५०१
वैशाख्यामप्यशक्त्या वा भोजयेद्ब्राह्मणान् दश ॥५०२॥ इति।

इति श्रीगोपालभट्ट-विलिखिते श्रीमद्भगवद्भक्तिविलासे षाण्मासिको नाम चतुर्द्दशो विलासः।

---

अक्षयं स्वर्गं श्रीवैकुण्ठलोकमित्यर्थः ॥५०१॥

इति चतुर्द्दशो विलासः।

---

अक्षम होने पर वैशाखी शुक्ला त्रयोदशी, चतुर्दशी एवं पूर्णिमा,–इन तीन दिन में यथाविधि पूर्व कथित नियमवान् हो, निज शक्ति के अनुसार प्रातः स्नान करने पर पातकपुञ्ज से उत्तीर्ण होकर स्वर्ग लाभ कर सकता है। वैशाखी पूर्णिमा में असमर्थ होने पर दशसंख्यक ब्राह्मणों को भोजन कराना चाहिये ॥५००-५०२

इति श्रीगोपालभट्ट-विलिखिते श्रीमद्भगवद्भक्तिविलासे षाण्मासिको नाम चतुर्द्दशो विलासः।

---

# पञ्चदश-विलासः

यस्माज्जलविहारादि-महोत्सवपरम्परा। सिध्येद्दीनतरस्यापि तं श्रीचैतन्यमाश्रये ॥१॥

अथ ज्यैष्ठकृत्यम्

आरभ्य राकां वैशाखीं ज्यैष्ठीं यावन्महोत्सवम्। कुर्य्यात् सम्पूजयन्नित्यं कृष्णं जलविहारिणम् ॥२
तत्रौष्ण्यतारतम्याद्धि कृष्णं तोयस्थमाचरेत्। वैशाखेऽपि तथाषाढ़े श्रावणेऽप्यभ्रवर्ज्जिते ॥३॥

---

एवमाग्रहायणिकादिवैशाखान्तमासषट्कस्य कृत्यं लिखित्वेदानीं ज्यैष्ठादीनां लिखन् भगवतः प्रभावविशेषं दर्शयन् तं शरणं याति –यस्मादिति। आदि-शब्देन क्षीराब्धिमहोत्सव-जन्ममहोत्सव-पार्श्वपरिवर्त्तन-महोत्सव विजयोत्सवादि। एवं महोत्सवानां परम्परा श्रेणी। एवमशक्तस्यापि मम तल्लिखनोत्सवः तत्प्रभावेण सेत्स्यतीति भावः ॥१॥

तत्र जलविहारमहोत्सवे, औष्णस्य तापस्य तारतम्यं न्यूनाधिकत्वं तस्मात्, ल्यब्लोपे पञ्चमी, तद्विचार्य्यैवेत्यर्थः। अतो वैशाखेऽप्युष्णतातिशये सति कुर्य्यात्, कदाचित् कुत्रापि ज्यैष्ठेऽतिशीतानुवृत्तौ न कुर्य्यादित्यभिप्रायः। अतएव गारुड़े—'क्वचिज्जैष्ठे' इति, 'क्वचिद्ग्रीष्मे' इति, क्वचित् कर्कटराशिगते सूर्य्ये' इति, 'क्वचिच्च मासे माधवसंज्ञके' इति विकल्पो दर्शितः। तच्चाग्रे व्यक्तं भावि। शीताभावेऽपि मेघागमदिने न कुर्य्यादिति लिखति— अभ्रेति। घनागम इत्यग्रतो लेख्यवचनात् ॥३॥

---

जिनके प्रसाद से अति दीनजनों के भी जलविहारादि महोत्सव समूह सिद्ध होते हैं, मैं उन्हीं श्रीचैतन्य-देव की शरण ग्रहण करता हूँ ॥१॥

अथ ज्यैष्ठकृत्यम्

वैशाखी पूर्णिमा से आरम्भ कर ज्यैष्ठ पूर्णिमा पर्यन्त प्रत्यह जलविहारी श्रीहरि की पूजा करके महोत्सव सम्पादन करे। उस समय उष्णता के न्यूनाधिक्यवशतः श्रीहरि को जल में स्थापन करना चाहिये। वैशाख, आषाढ़ वा श्रावण मास में मेघ रहित समय में श्रीहरि को जलस्थ रखना होगा। किन्तु शीत की उपलब्धि होने पर उस प्रकार श्रीहरि को जल में स्थापन न करे। कदाचित् ज्यैष्ठ मास में भी शैत्य का अनुभव होने पर श्रीहरि को जल में न रखे ॥२-३॥

अथ जले भगवत्पूजाविधिः

उत्तापेऽर्कांशुतो जाते शीतलेन सुगन्धिना । जलेन पूरिते पात्रे श्रीकृष्णमुपवेशयेत् ॥४॥

नित्यार्च्चाविधिनाऽभ्यर्च्च्य सायं सन्ध्यामुपास्य च ।
देवं सिंहासने नीत्वा गन्धादिभिरथार्च्चयेत् ॥५॥
नीराज्य देवं सर्व्वेभ्यो दत्त्वा तीर्थं भजेत् स्वयम् ।
द्वादश्यान्तु विशेषेण रात्रौ तोयस्थमर्च्चयेत् ॥६॥

अथ तन्माहात्म्यम्

गारुड़े—

स्वर्णपात्रेऽथवा रौप्ये ताम्रे वा मृण्मयेऽपि वा ।
तोयस्थं योऽर्च्चयेद्देवं शालग्रामसमुद्भवम् ॥७॥

चक्राङ्कितं वा भूपाल निवृत्ते मधुमाधवे । प्रतिमास महाभाग तस्य पुण्यमनन्तकम् ॥८॥
यावद्धराधरो लोके यावच्चन्द्रदिवाकरौ । तावत्तस्य कुले कश्चिन्न भवेद्भूप नारकी ॥९॥
तस्माज्ज्यैष्ठे सदा भूप तोयस्थं पूजयेद्धरिम् । वीततापो नरस्तिष्ठेद्यावदाहूतसंप्लवम् ॥१०॥

---

अर्कांशुनः उत्तापे घर्म्मप्राचुर्य्ये जाते मध्याह्नसमये इत्यर्थः । पात्रे ताम्रादिनिर्म्मित-श्रीमूर्त्तिनिवेशनयोग्य-भाजने ॥४॥

नित्यार्च्चाया नित्यं क्रियमाणपूजाया विधिर्यः प्रकारस्तेन ॥५॥

तीर्थं श्रीचरणोदकं सर्व्ववैष्णवेभ्यो विभज्य दत्त्वा स्वयं भजेत् प्राश्नीयात् । द्वादशीरात्रौ चावश्यं जलशायी भगवान् पूजनीय इति लिखति—द्वादश्यामिति । द्वादश्यान्तु विशेषणेत्यादिगारुड़ोक्तेः । तच्चाग्रे समग्रं व्यक्तं भावि ॥६॥

---

अथ जले भगवत्पूजाविधिः

यदि सूर्य्य के उत्तापवशतः ग्रीष्म का आधिक्य बोध हो तो, मध्याह्न समय में सुवासित शीतल जलपूर्ण पात्र में श्रीहरि को उपवेशन कराना चाहिये । एवं नित्य पूजा विधान से उनकी अर्च्चना करनी चाहिये । पश्चात् मध्याह्न काल में सायं सन्ध्या समाप्त करके श्रीप्रभु को सिंहासन में आनयन करके गन्धादि के द्वारा पूजा करनी चाहिये । प्रभु की आरात्रिक के पश्चात् श्रीवैष्णववृन्द को श्रीचरणामृत प्रदान कर स्वयं भी ग्रहण करे । द्वादशी की रात्रि में जलस्थ श्रीहरि की पूजा विशेष प्रकार से करे ॥४-६॥

अथ तन्माहात्म्यम्

गरुड़पुराण में लिखित है—हेमपात्र, रजतपात्र, वा ताम्रपात्र किंवा मृत्तिका पात्र में शालग्राम समुद्भव चक्र-चिह्नित सलिलस्थ श्रीप्रभु को अर्च्चन जो करते हैं, हे भूपाल ! हे महाभाग ! उनके द्वारा चैत्र एवं वैशाख मास यथाविधि यापित होने से प्रति मास में ही अनन्त फल लाभ किया जाता है ॥७-८॥

हे राजन् ! जो मानव, इस प्रकार श्रीहरि को सलिलस्थ करते हैं, धरातल में पर्वत समूह की एवं चन्द्र सूर्य्य की स्थिति यावत् उनके वंश के किसी को भी नरक में जाना नहीं पड़ता है । अतएव हे भूप ! सर्वदा ज्यैष्ठ मास में सलिलस्थ श्रीप्रभु की पूजा करे । जो तुलसीदल द्वारा सुवासित सुशीतल जल द्वारा श्रीहरि की अर्च्चना करते हैं, वे महाप्रलय यावत् सन्ताप रहित होते हैं ॥९-१०॥

कृतैः सुशीतलैस्तोयैस्तुलसीदलवासितैः ॥

शुचिशुक्रगते काले येऽर्च्चयिष्यन्ति केशवम् । जलस्थं विविधैः पुष्पैर्मुच्यते यमयातनात् ॥११॥

जलस्रष्टा यतो विष्णुर्जलशायी जलप्रियः । तस्माद्ग्रीष्मे विशेषेण जलस्थं पूजयेद्धरिम् ॥१२

नीरमध्यस्थितं कृत्वा शालग्रामसमुद्भवम् । योऽभ्यर्च्चयेन्महाभक्त्या स भवेत् कुलपावनः ॥१३

कर्किराशिगते सूर्य्ये मिथुनस्थे विशेषतः । येनार्च्चितो हरिर्भक्त्या जलमध्ये महीपते ॥१४॥

द्वादश्यान्तु विशेषेण जलस्थं जलशायिनम् । योऽभ्यर्च्चयेत् कृतं तेन यज्ञकोटिशतं भुवि ॥१५॥

पात्रे गन्धादिकं कृत्वा यः क्षिपेद्गरुड़ध्वजम् । द्वादश्यां पूजयेद्रात्रौ मुक्तिभागी भवेन्नरः ॥१६॥

किञ्च—

घनागमे प्रकुर्व्वन्ति जलस्थं वै जनार्द्दनम् । ये नरा नृपतिश्रेष्ठ तेषां वै नरकं ध्रुवम् ॥१७॥ इति।

तथैवात्युष्णसमये कालिन्द्यादौ विशेषतः । सम्पादयेद्भगवतो जलक्रीड़ामहोत्सवम् ॥१८॥

### अथ निर्ज्जलैकादशी

पाद्मे श्रीभीमसेन उवाच—

पितामह ह्यशक्तोऽहमुपवासे करोमि किम् ? अतो बहुफलं ब्रूहि व्रतमेकमपि प्रभो ॥१९॥

---

शुचिराषाढ़ः, शुक्रो ज्यैष्ठः ॥११॥

ते नराः भुवि देवताः परमपूज्या इत्यर्थः । पाठान्तरे कोटियज्ञफलभागी इत्यर्थः ॥१५॥

क्षिपेत्—स्थापयेत् ॥१६॥

न केवलं पात्रान्तरे जलक्रीड़ा कारयितव्या, नदीसरोवरादावपि यथायोगं कारयितव्येति लिखति—तथैवेति; पूर्व्वलिखितप्रकारेण, अत्र च श्रीमूर्त्तिविशेषेण जलक्रीड़ाविधिविशेषोऽवगन्तव्यः । १८॥

एवार्थे अपि-शब्दः, एकमेव व्रतं ब्रूहि, बहूनां किंवा द्वयोरप्यशक्यत्वात् ॥१९॥

---

ज्यैष्ठ एवं आषाढ़ मास में विविध कुसुमों के द्वारा जलस्थ श्रीहरि की पूजा करने पर यम की यातना भोगनी नहीं पड़ती है। श्रीहरि ने ही जल का सृजन किया है, श्रीहरि, जलप्रिय एवं जलशायी हैं। तज्जन्य ग्रीष्मकाल में विशेष रूप से श्रीहरि को सलिलस्थ करतः पूजा करनी चाहिये। महाभक्ति के सहित सलिलस्थ शालग्रामोद्भव श्रीप्रभु की पूजा करने से वह पूजक के द्वारा कुल पवित्र होता है। हे महीपते ! जो मानव, भक्तिपूर्वक कर्कटस्थ दिवाकर में वा विशेषरूप से मिथुन राशिस्थ भास्कर में श्रीप्रभु की पूजा करते हैं, एवं जो द्वादशी में विशेष रीति से जलस्थ जलशायी श्रीहरि की अर्च्चना करते हैं, तत् कर्त्तृक भूलोक में शतकोटि यज्ञ अनुष्ठान हुए हैं, ऐसा जानना होगा ॥११-१५॥

जो मानव रात्रि में जलपात्र में गन्धादि रखकर उसमें गरुड़ध्वज श्रीहरि को स्थापन पूर्वक पूजा करते हैं, वे मुक्ति लाभ कर सकते हैं ॥१६॥

और भी लिखित है—हे नृपतिश्रेष्ठ ! जो मानव, मेघागम में जनार्दन को सलिलस्थ करते हैं, उनको निश्चय ही नरकगामी होना पड़ता है ॥१७॥

अति ग्रीष्म के समय विशेष रीति से यमुनादि में उस प्रकार भगवान् की जलक्रीड़ा महोत्सव सम्पादन करना चाहिये ॥१८॥

### अथ निर्ज्जलैकादशी

पद्मपुराण में कथित है—श्रीभीमसेन कहे थे,—हे पितामह ! मैं उपवासी रहने में असमर्थ हूँ। सुतरां क्या करूँ ? हे प्रभो ! वह फलप्रद एकमात्र व्रत मुझसे कहिये ॥१९॥

श्रीव्यास उवाच—

वृषस्थे मियुनस्थेऽर्के शुक्ला ह्येकादशी हि या । ज्यैष्ठे मासि प्रयत्नेन सोपोष्या जलवर्ज्जिता । २०
स्नाने वाचमने चैव वर्ज्जयित्वोदकं बुधः । उपयुञ्जीत नैवान्यद्व्रतभङ्गोऽन्यथा भवेत् ॥२१॥
उदयादुदयं यावद्वर्ज्जयित्वा जलं बुधः । स्वप्रयत्नादवाप्नोति द्वादशद्वादशीफलम् ॥२२॥
ततः प्रभाते विमले द्वादश्यां स्नानमाचरेत् । जलं सुवर्णं दत्त्वा तु द्विजातिभ्यो यथाविधि ॥२३
भुञ्जीत कृतकृत्यस्तु ब्राह्मणैः सहितो वशी । एवं कृते तु यत् पुण्यं भीमसेन शृणुष्व तत् ॥२४
संवत्सरस्य या मध्ये एकादश्यो भवन्ति हि । तासां फलमवाप्नोति पुत्र मे नात्र संशयः ।
इति मां केशवः प्राह शङ्खचक्रगदाधरः ॥२५॥

किञ्च—

धनधान्यवहा पुण्या पुत्रभाग्यसुखप्रदा । उपोषिता नरव्याघ्र इति सत्यं ब्रवीमि ते ॥२६॥
यमदूता महाकायाः करालाः कामरूपिणः । दण्डपाशधरा रौद्रा नोपसर्पन्ति तं नरम् ॥२७॥
पीताम्बरधराः शङ्खचक्रहस्ता मनोजवाः । अन्तकाले नयन्त्येनं वैष्णवं वैष्णवीं पुरीम् ॥२८॥

किञ्च—

तोयस्य नियमं यस्तु कुरुते वैष्णवोत्तमः । फलं कोटिसुवर्णस्य यामे यामे स पुण्यभाक् ॥२९॥

---

कदाचिद्वृषस्थे कदाचिन्मिथुनस्थे चेत्यर्थः ॥२०॥

स्नानाचमनयोर्यदुदकं तद्विनेत्यर्थः ॥२१॥

उदयाद्रवेरुदयमारभ्य; द्वादशेति— महाद्वादश्योऽष्टौ, शयनी पार्श्वपरिवर्त्तिनी बोधिनी चेति तिस्रः, भैमी चेति फलविशेषापेक्षया । यद्वा, द्वादशमासेषु या द्वादश्यस्तासां फलम् ॥२२॥

वशी जितेन्द्रियः । यत्नतो निदाघमध्ये जलपानादि-वर्ज्जनात् ॥२४॥

---

श्रीव्यास कहे थे—वृषराशिस्थ वा मिथुनराशिस्थ सूर्य्य में ज्यैष्ठ मास में शुक्ला एकादशी में जल पर्य्यन्त परित्याग कर यत्नपूर्वक उपवासी रहे । स्नान, आचमन भिन्न अपर समस्त कार्य्य में जल व्यवहार करना विचक्षण व्यक्ति का कर्त्तव्य नहीं है । अन्यथा व्रत भङ्ग होगा । सूर्य्य के एक उदय से अन्योदय पर्य्यन्त यत्नपूर्वक जल त्यागकर विज्ञ व्यक्ति द्वादशी का फल लाभ कर सकता है । अनन्तर द्वादशी के सुप्रकाशित प्रातःकाल में स्नान पूर्वक द्विजातिवृन्द को यथा विधि जल एवं स्वर्ण अर्पण करके जितेन्द्रिय कृतकृत्य व्रती ब्राह्मणवृन्द के सहित भोजन करे । हे भीमसेन ! इस प्रकार व्रतानुष्ठान करने पर जिस प्रकार पुण्यार्जित होता है, वह सुनो ॥२०-२४॥

हे वत्स ! शङ्ख चक्र-गदाधर केशव मुझसे कहे हैं—संवत्सर के मध्य में जितने भी एकादशी व्रत हैं, इस प्रकार अनुष्ठान के द्वारा उन सबका फल प्राप्त किया जाता है । इसमें सन्देह नहीं है ॥२५॥

और भी कथित है—हे नरवर ! मैं सत्य कहता हूँ कि, इस एकादशी में उपवास करने से धन, धान्य, पुत्र, सौभाग्य एवं सुख लाभ होता है । जो व्यक्ति, इस एकादशी में व्रत करते हैं, विशाल शरीर, कराल, कामरूपी, दण्डपाश हस्त, भयङ्कर मूर्त्ति यमदूतगण उनके निकट आने में अक्षम हैं । पीतवसनधर, शङ्ख-चक्रपाणि, मनोगामी विष्णुदूतगण अन्तकाल में उन वैष्णव को वैष्णवी नगरी में ले जाते हैं ॥२६-२८॥

और भी लिखा है—जो वैष्णवोत्तम, सलिल नियम का पालन करते हैं, वे प्रहर प्रहर में कोटि स्वर्ण-दान का फल को प्राप्त करते हैं । श्रीकृष्ण कहे हैं,—द्वादशी में स्नान, दान, जप एवं होम करने से तत्समुदय

स्नानं दानं जपं होमं द्वादश्यां कुरुते नरः ।
तत् सर्व्वञ्चाक्षयं प्राप्तमेतत् कृष्णस्य भाषितम् ॥३०॥

किञ्चापरेण धर्म्मेण निर्ज्जलैकादशीं नृप । उपोष्य सम्यग्विधिना वैष्णवं पदमाप्नुयात् ॥३१॥

किञ्च—

यैः कृता भीमसेनैषा निर्ज्जलैकादशी शुभा । स्वकुलं तारितं सर्व्वं कुलातीतं तथा शतम् ।
आत्मना सह तैर्नीतं वासुदेवस्य मन्दिरे ॥३२॥

किञ्च—

आत्मद्रोहः कृतस्तैस्तु यैरेषा न ह्युपोषिता । पापात्मानो दुराचारा दुष्टास्ते नात्र संशयः ॥३३

किञ्च—

यश्चेमां शृणुयाद्भक्त्या यश्चापि परिकीर्त्तयेत् ।
उभौ तौ स्वर्गमाप्नौ हि नात्र कार्य्या विचारणा ॥३४॥

अथ निर्ज्जलैकादशीव्रतविधिः

यथा प्राग्लिखितं कृत्वा सङ्कल्पं नियमं व्रते । जलमादाय गृह्णीयान्मन्त्रेणानेन वैष्णवः ॥३५॥

तत्र नियममन्त्रः

एकादश्यां निराहारो वर्ज्जयिष्यामि वै जलम् । केशवप्रीणनार्थाय अत्यन्तदमनेन च ॥३६॥इति ।

---

कुलातीतं—सम्बन्धिशतम् ॥३२॥

तद्व्रतस्य नित्यतामाह- आत्मेति ॥३३॥

एतन्माहात्म्यश्रवणादिफलमाह—यश्चेति ॥३४॥

एवमवश्यकृत्यत्वं लिखित्वा इदानीं भविष्योत्तरोक्तानुसारेण तस्य विधिं लिखति—यथेत्यादि नवभिः । यथा प्राग्लिखितं पूर्व्वमेकादशीव्रतप्रकरणे दशमीनियमादिकं यल्लिखितं तदनुसारेण नियमं गृह्णीयात् ॥३५॥

---

अक्षय फलप्रद होते हैं । हे नृप ! अन्य धर्माचरण का क्या प्रयोजन है ? सम्यक् प्रकार से निर्जला एकादशी में उपवास करने पर ही वैष्णव पद को प्राप्त कर सकता है ॥२९-३१॥

और भी लिखित है—जो सब व्यक्ति, एकादशी में उपवास नहीं करते हैं, उन सबको पातकी, दुराचारवान्, दुष्ट एवं आत्मद्रोही जानना चाहिये । इसमें सन्देह नहीं है ॥३३॥

और भी लिखा हैं—हे भीमसेन ! जिन सब व्यक्तियों ने इस पवित्र निर्जला एकादशी का व्रतानुष्ठान किया है, उनके द्वारा अतीत शत पुरुषों के सहित स्वीय कुलों की रक्षा हुई है, ऐसा जानना चाहिये । एवं वे इन सब पुरुषों के सहित श्रीहरि के धाम में गमन करते हैं ॥३२॥

और भी कथित है—भक्तिपूर्वक, इस एकादशी माहात्म्य को श्रवण वा कीर्त्तन करने पर वह श्रोता और कीर्त्तनकारी दोनों ही स्वर्ग प्राप्त कर सकते हैं । इसमें सन्देह नहीं है ॥३४॥

अथ निर्ज्जलैकादशीव्रतविधिः

पूर्व में एकादशी व्रत नियम वर्णन प्रसङ्ग में दशमी नियमादि का वर्णन जिस प्रकार हुआ है, उस विधान के अनुसार सङ्कल्प पूर्वक जल ग्रहण करके निम्नोक्त मन्त्र के द्वारा नियम ग्रहण करे ॥३५॥

तत्र नियममन्त्रः

मैं जितेन्द्रिय होकर केशव प्रीति के निमित्त एकादशी में उपवासी रहूँगा, जल मात्र भी ग्रहण नहीं करूँगा ॥३६॥

वर्ज्जयेच्चाम्ब्वहोरात्रं विना चाचमनार्थकम् । विना च प्राशनं पादोदकस्यात्यन्तपावनम् ॥३७

एकादश्यां निशायान्तु नित्यपूजां विधाय हि ।
हैमीं त्रैविक्रमीं मूर्त्तिं स्नापयेत् पयआदिभिः ॥३८॥
वस्त्रादिकं समर्प्याथाभ्यर्च्च्य गन्धादिभिश्च ताम् ।
प्रणम्य जागरं कुर्य्यात् तदग्रे नर्त्तनादिना ॥३९॥
प्रातःस्नानादि निर्व्वर्त्त्य तं त्रिविक्रममर्च्चयेत् ॥४०॥
शक्त्याम्बुकुम्भान् विप्रेभ्यो दद्याद्गन्धाद्यलङ्कृतान् ॥४१॥

अथ तत्र मन्त्रः

देवदेव हृषीकेश संसारार्णवतारक । जलकुम्भप्रदानेन यास्यामि परमां गतिम् ॥४२॥ इति ।
दद्याच्च कनकं छत्रं वस्त्रयुग्ममुपानहौ । जलपात्राणि दिव्यानि विभवे सति वैष्णवः ॥४३॥
शक्त्या विप्रान् भोजयित्वा पीत्वा भ्रातृकराज्जलम् ।
स्वयं वा पीय मौनी सन् भुञ्जीत सह बन्धुभिः ॥४४॥

---

अहोरात्रमम्बु जलं वर्ज्जयेत् । तत्र च स्नानादावाचमने श्रीचरणोदकग्रहणे च जलं न वर्ज्जनीयमिति लिखति—विनेति । तत्र तत्र तत्पानावश्यकत्वात्, अन्यथा शुद्धिहानेः । ननु 'स्नाने चाचमने चैव' इत्युक्तं, न च पादोदकमुद्दिष्टं, तत्र लिखति—अत्यन्तेति । आचमनादप्येतत् परमशुद्धिकरमित्यर्थः । तन्नित्यता चादौ लिखितैवास्ते ॥३७॥

पयआदिभिः पञ्चामृतेन स्नापयेत् ॥३८॥

शक्त्येति—यावतो यादृशान् दातुं शक्नोति, तावतस्तादृशान् दद्यादित्यर्थः । आदि-शब्देन पुष्पवस्त्र-फलादि ॥४१॥

विभवे सति कनकादीनि च विप्रेभ्यो दद्यात् ॥४३॥

---

आचमनार्थ जलपान एवं परम पावन चरणामृत भिन्न दिवारात्रि के मध्य में अन्य जलपान त्याग करे। एकादशी के निशाभाग में नित्यपूजा सम्पन्न करके दुग्धादि द्वारा स्वर्णमयी त्रिविक्रम मूर्त्ति को स्नान करावे तत्पश्चात् वस्त्रादि अर्पण पूर्वक, गन्धादि के द्वारा पूजा एवं प्रणाम करके प्रभु के समीप में नृत्य-गीतादि के सहित रात्रि जागरण करे । पश्चात् प्रभात काल में प्रातः स्नानादि सम्पन्न करके पुनर्वार त्रिविक्रम मूर्त्ति की पूजा करनी चाहिये । साध्यानुसार विप्रवृन्द को गन्धादि द्वारा सुशोभित जलपूर्ण कुम्भ अर्पण करे ॥३७-४१

अथ तत्र मन्त्रः

हे देवदेव ! हे हृषीकेश ! हे संसारार्णवतारक ! जलपूर्ण कुम्भ अर्पण करने के प्रसाद से अति उत्तम गति प्राप्त करूँगा ॥४२॥

यदि धन सम्पत्ति हो तो, स्वर्ण, छत्र, वस्त्रद्वय, पादुकाद्वय एवं उत्तम जलपात्र प्रदान करना वैष्णवों का कर्त्तव्य है । अनन्तर साध्यानुसार विप्रवृन्द को भोजन कराकर भाई के हाथ से जलपान करके अथवा स्वयं पान करके बान्धवों के सहित यतवाक् होकर भोजन करे ॥४३-४४॥

अथाषाढ़कृत्यम्

आषाढ़-शुक्लद्वादश्यां हरौ शिशयिषौ सति । वैष्णवः पारणं कृत्वा तप्तमुद्राश्च धारयेत् ॥४५

ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैकान्तितर्द्धये । कुर्व्वन्नात्मार्पणं तप्तमुद्राभिर्देहमङ्कयेत् ॥४६॥

अथ तप्तमुद्राधारणम्

वाराहे तप्तमुद्राप्रसङ्गे—

चक्रादिधारणं पुंसां परं सम्बन्धवेदनम् । पातिव्रत्यनिमित्तं हि वलयादि-विभूषणम् ॥४७॥ इति ।

---

आषाढ़शुक्लद्वादश्यामित्यत्र यद्यपि भविष्यपुराणे—'आकाभासितपक्षेषु मैत्रश्रवण-रेवती । आदि-मध्यावसानेषु प्रस्वापावर्त्तनोत्थिति ॥' अस्यार्थः—आषाढ़भाद्रकार्त्तिकानां सितपक्षेषु शुक्लद्वादशीषु अनुराधा-श्रवणरेवतीनामादिमध्यान्त्यपादेषु शयन-पार्श्वपरिवर्त्तनोत्थानं क्रमाद्भवतीति । तथापि पादयोगाद्यभावेऽपि सति द्वादश्यामेव कुर्य्यात् । तथा च स्कान्दे—'अन्यत्र पादयोगेऽपि द्वादश्यामेव कारयेत्' इति; वाराहे च—'न पादनियमस्तत्र स्वापे वा परिवर्त्तने । पादयोगो यदा न स्यादृक्षेणापि तदा भवेत् ॥' इति । किञ्च—'द्वादश्यां सन्धिसमये नक्षत्राणामसम्भवे । आकाभासितपक्षेषु शयनावर्त्तनादिकम् ॥' इति । अतएवोक्तं पुष्करपुराणे—'यस्य यस्य तु देवस्य यन्नक्षत्रं तिथिश्च या । तस्य देवस्य तस्मिंस्तु शयनावर्त्तनादिकम् ॥' इति । यच्चोक्तमत्रिणा—'मिथुनस्थो यदा भानुरमावस्याद्वयं स्पृशेत् । द्विराषाढ़ः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥' इति । तच्च मलमासाभिप्रायेण, तथापि द्वितीयाषाढ़शुक्लद्वादश्यामेव शयनमिति सम्यगेव लिखितम्—'आषाढ़शुक्लद्वादश्याम्' इति । एवं पार्श्वपरिवर्त्तनोत्थानयोरपि ज्ञेयम् । यच्चोक्तं ब्रह्मवैवर्त्ते—'आषाढ़स्य सिते पक्षे एकादश्यामुपोषितः । नक्तं द्विजवरश्रेष्ठ गृह्णीयान्नियमं व्रती ॥' इति । तच्च एकादशीद्वादश्योरभेदा-भिप्रायेण ज्ञेयं, लिखितवचनजातानुसारात् शिष्टाचारदर्शनाच्च । एतच्च सर्व्वमग्रे प्रबोधनी प्रकरणे विस्तरतो व्यक्तं भावि । शिशयिषौ शयितुमिच्छति । पारणां कृत्वेति प्रायो द्वादश्यामेव पारणापत्तेः । कदाचित् तस्यामुपवासे च तत्रैव शयनं तप्तमुद्राधारणादिकञ्च ज्ञेयं, लिखितवचनानुसारात् । तत्र च सर्व्वैरेव वर्णैस्तप्त-मुद्रा धार्य्येति लिखति—ब्राह्मण इति । एकान्तिता शिवलिङ्गाङ्कितवृषवच्छ्रीभगवदेकनिष्ठता, तस्या ऋद्धये सिद्धचर्थम् । आत्मार्पणम्—आत्मनिवेदनरूपभक्तिप्रकारविशेषं कुर्वन् कर्त्तुम् । ब्राह्मणस्यापि तद्धारणमग्रे सन्यायं व्यक्तं भावि ॥४५-४६॥

तप्तमुद्राधारणेन चैकान्तिता-सिद्धिं श्रीवराहवचनेन प्रमाणयति—चक्रादीति । परं केवलं सम्बन्धवेदनं भगवदीयत्वज्ञापकम् । पाठान्तरे परस्य परमेश्वरस्य सम्बन्धवेदनम् । तत्र दृष्टान्तः—पातिव्रत्येति । वलयादि-धारणेन सधवालक्षणेनैव पतिमत्ता ज्ञाप्यते, तत्र च सतीनां प्रायः पतिसन्तोषार्थमेव भूषणधारणं, तद्भक्ति-विशेषोऽप्यभिव्यक्त एवेति दिक् ॥४७॥

---

अथाषाढ़कृत्यम्

जब भगवान् श्रीहरि, आषाढ़मास की शुक्ला द्वादशी तिथि में शयनेच्छु होते हैं, तब पारण के पश्चात् तप्त मुद्रा धारण करना वैष्णवों का कर्त्तव्य है। एकान्तिता सिद्धि हेतु श्रीहरि में आत्म समर्पणार्थ तप्त-मुद्रादि द्वारा देह को सुशोभित करना, ब्राह्मण, क्षत्रिय, वैश्य, शूद्र,—सबका ही कर्त्तव्य है ॥४५-४६॥

अथ तप्तमुद्राधारणम्

वराहपुराण में तप्तमुद्राधारण प्रसङ्ग में लिखित है—नारी जाति, जिस प्रकार पातिव्रत्य चिह्न के निमित्त वलयादि अलङ्कार धारण करती है, उस प्रकार, पुरुष जाति का चक्रादि धारण भी केवलमात्र भगवत् सम्बन्ध ज्ञापन के निमित्त होता है ॥४७॥

अथ चक्रमुद्र धारणनित्यता

वायुपुराणे—

अग्निनैव तु सन्तप्तं चक्रमादाय वैष्णवः। धारयेत् सर्व्ववर्णानां हरिसालोक्यसिद्धये ॥४८॥

ब्रह्माण्डे—

कृत्वा धातुमयीं मुद्रां तापयित्वा स्वकां तनुम्। चक्रादिचिह्नितां भूप धारयेद्वैष्णवो नरः ॥४९

अथ चक्रनिर्म्माणम्

नारदीयपञ्चरात्रे—

द्वादशारन्तु षट्कोणं वलयत्रयसंयुतम्। हरेः सुदर्शनं तप्तं धारयेत्तद्विचक्षणः ॥५०॥

अथ सौपर्णे च भगवद्गरुड़संवादे तप्तमुद्राप्रकरणे—

गरुत्मन्नविशेषेण सर्व्ववर्णेष्वयं विधिः। विप्रो वा क्षत्रियो वापि वैश्यः शूद्रस्तथैव च ॥५१॥

पाद्मे—

अग्निहोत्रं यथा नित्यं वेदस्याध्ययनं यथा। ब्राह्मणस्य तथैवेदं तप्तचक्रादिधारणम् ॥५२॥

किञ्च तत्रैवोत्तरखण्डे श्रीशिवोमासंवादे—

शङ्खचक्राङ्कनं कुर्य्याद्ब्राह्मणो बाहुमूलयोः। हुताग्निनैव सन्तप्य सर्व्वपापापनुत्तये ॥५३॥

---

तत्रादौ धारयेदित्यादि-विधिवशान्नित्यतां लिखति—अग्निनैवेति दशभिः। सर्व्ववर्णाना मध्ये यो वैष्णवः, स धारयेत्, वैष्णवस्यैव तद्धारणप्राधान्यात्। तथा चाग्रे लेख्यम्—'वैष्णवत्वस्य सिद्ध्यर्थम्' इत्यादि। यद्वा, सर्व्ववर्णानां या हरिसालोक्यादिसिद्धिस्तदर्थम्। तथापि सर्व्ववर्णानां तद्धारणमायातमेवेति दिक् ॥४८॥

तत्र च ब्राह्मणस्य गात्रे दोषादिदं ब्राह्मणेतरवर्णविषयकमिति न शङ्कनीयम्। सौपर्णादौ तस्यापि स्पष्टमुक्तत्वादिति लिखति- गरुत्मन्निति सप्तभिः ॥५१॥

---

अथ तप्तमुद्राधारणनित्यता

वायुपुराण में लिखित है- समस्त वर्णो के मध्य में जो वैष्णव शब्द से परिगणित हैं, हरिसालोक्य सिद्धि हेतु अग्नितप्त चक्र धारण करना उनका कर्त्तव्य है ॥४८॥

ब्रह्माण्डपुराण में लिखत है—हे भूप ! वैष्णवजन, धातुनिर्मित मुद्रा को वह्नि तप्त करके तद्द्वारा निज शरीर को चक्रादि चिह्नों से चिह्नित करें ॥४९॥

अथ चक्रनिर्म्माणम्

नारदीय पञ्चरात्र में लिखित है- द्वादश प्रान्त देश, षट्कोण एवं तीन वलय (घेरे) होने पर ही, वह चक्र श्रीहरि का 'सुदर्शन' कहा जाता है। यह चक्र अग्नितप्त करके धारण करना विज्ञ व्यक्ति का कर्त्तव्य है। ५०॥

अनन्तर गरुड़ पुराण में भगवद्-गरुड़-संवाद में तप्तमुद्रा धारण प्रकरण में भगवान् ने कहा है—हे गरुत्मन्! इस प्रकार चक्रधारण विधि, विप्रादि समस्त वर्णो के पक्ष में है। अर्थात् विप्र, क्षत्रिय, वैश्य किंवा शूद्र-सबही उसको धारण करें ॥५१॥

पद्मपुराण में लिखित है—जिस प्रकार अग्निहोत्र एवं वेदपाठ का नित्य कर्त्तव्य है, उस प्रकार यह तप्त चक्रादि मुद्रा धारण भी ब्राह्मणों के पक्ष में नित्य कर्त्तव्य है ॥५२॥

और भी उक्त पुराण के उत्तर खण्ड में शिव-पार्वती-संवाद में भी लिखा है- सर्व पातक विदूरित करने के निमित्त होमवह्नि के द्वारा सन्तप्त करके बाहुद्वय के मूल देश में शङ्ख चक्र धारण करना ब्राह्मणों का

चक्रं वा शङ्खचक्रे वा तथा पञ्चायुधानि वा । धारयित्वैव विधिवद्ब्रह्मकर्म्म समारभेत् ॥५४

किञ्च तत्प्रसङ्ग एव —

अधृत्वा विधिना चक्रं ब्राह्मणः प्राकृतो भवेत् ॥५५॥

किञ्च—

न तस्य किञ्चिदशनीयादपि कृत्यसहस्रिणः । सर्व्ववेदविदो वापि सर्व्वशास्त्रविशारदः ।
अधृत्वा विधिना चक्रं ब्राह्मणः पतितो भवेत् ॥५६॥

किञ्च—

तप्तेनैवाङ्कनं कुर्य्याद्ब्राह्मणस्य विधानतः । श्रौतस्मार्त्तादिसिद्ध्यर्थं मन्त्रसिद्ध्यै तथैव च ॥५७
हरेः पूजाधिकारार्थं चक्रं धार्य्यं विधानतः । वैष्णवत्वस्य सिद्ध्यर्थं भक्तिसिद्ध्यै विशेषतः ॥५८

किञ्च—

उपवीतादिवद्धार्य्याः शङ्खचक्रादयस्तथा । ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः ॥५९॥

श्रुतयश्च (श्रीसुदर्श ५-६)—

यो ह वै सुश्लोकमौलेधर्म्माननुतिष्ठमानोऽग्निना चक्रं धत्ते, अग्निर्वै सहस्रारः सहस्रारो नेमिर्नेमिना तप्ततनुः सायुज्यं सलोकतामाप्नोतीति ॥६०॥

---

सर्व्ववेदविदपि ॥५६॥

श्रौतादि-कर्म्मसिद्धये ॥५७॥

ब्राह्मणस्य धार्य्या भवन्ति, तेन धार्य्या इत्यर्थः, एवं वैष्णवस्येति च । ५९॥

यः अग्निना विशिष्टं चक्रं धत्ते, स सायुज्यं नित्यं संयोगरूपां सलोकतां सालोक्यं प्राप्नोति । तत्र चाग्नि-सम्बन्धेन न कोऽपि दोषोऽथच गुण एवेति दर्शयन्त्योऽग्नितप्तचक्रधारणप्रकारमेवाहुः—अग्निरिति । सहस्रारः चक्रम्, अग्निः पावनः, चक्रं परमपावनं, तयोश्चाभिन्नत्वम्, अतो दोषाभावो गुणश्चातिमहानिति भावः । ननु चक्रैकदेशेनैव तन्मुद्राधारणं सत्यं, सोऽपि चक्रादभिन्न एवेत्याहुः—सहस्रारो नेमिः, चक्रान्तभागोऽपि चक्र-मेवेत्यर्थः ॥६०॥

---

कर्त्तव्य है । चक्र वा शङ्ख चक्र वा पञ्चविध अस्त्र चिह्न यथा विधि धारण करके ब्रह्मकर्म में वैदिक कार्य्य में प्रवृत्त होना चाहिये ॥५३-५४॥

उक्त प्रसङ्ग में और भी लिखित है—यथाविधि चक्र धारण न करने पर उस ब्राह्मण को प्राकृत जानना चाहिये । अर्थात् उसको हीनजनवत् जानना चाहिये ॥५५॥

और भी लिखित है—वे यदि, सहस्र संख्यक कार्य्य का अनुष्ठान भी करें, तो भी उनका कोई भी द्रव्य भोजन करना उचित नहीं है । विधि पूर्वक चक्र धारण न करने पर वेदज्ञ एवं सर्व शास्त्र विचक्षण होने पर भी ब्राह्मण को पतित होना पड़ता है ॥५६॥

और भी लिखा है—श्रुति स्मृति विहित क्रिया-सिद्धि एवं मन्त्र-सिद्धि हेतु कृष्णार्चन में अधिकार लाभ हेतु, वैष्णवत्व सिद्धि हेतु, विशेषतः भक्ति सिद्धि के निमित्त चक्रादि धारण करना ब्राह्मण एवं वैष्णवों के पक्ष में उचित है । और भी कथित है—यज्ञोपवीत के तुल्य शङ्ख चक्रादि धारण विशेषरूप से ब्राह्मण एवं वैष्णवों के पक्ष में उचित है ॥५७-५८॥

इस विषय में श्रुति वाक्य है—जो, सुश्लोक मौलि भगवान् के धर्मसमूह के अनुष्ठान में उत्सुक हैं, वह्नि-तप्त चक्रधारण करना उनके पक्ष में कर्त्तव्य है । वह्नि ही चक्र है, एवं चक्र के प्रान्त देश को नेमि कहते हैं ।

चक्रं बिभर्त्ति वपुषाभितप्तं, बलं देवानाममृतस्य विष्णोः।
स एति नाकं दुरितं विधूय, विशन्ति यद्यतयो वीतरागाः ॥६१॥ इति।

ऋक्परिशिष्टे—

अतप्ततनुर्न तदामो अश्नुतेऽश्नुता सह इद्वहन्तस्तत् समासतेति यजुः ॥६२॥

ऋग्वेदीयाश्वलायनशाखायाञ्च—

प्रतद्विष्णोरब्जचक्रे सुतप्ते, जन्माम्भोधिं वर्त्तते चर्षणीन्द्राः।
मूले बाह्वोर्दधतेऽन्ये पुराणा, लिङ्गान्यन्ये तप्तायुधान्यर्पयन्ति ॥६३॥ इति।

छन्दोगपरिशिष्टे—

स होवाच याज्ञवल्क्यस्तत्पुमानात्महिताय प्रेम्णा हरिं भजेत्।
सुश्लोकमौलेर्धर्म्माण्यङ्गेष्वग्निना धत्ते इति शातातपी श्रुतिः ॥६४॥

---

देवानां बलं रक्षकमित्यर्थः. न विद्यते अकं दुःखं यत्र तत् परमपदमित्यर्थः ॥६१॥

अतप्ततनुरिति क्वचिद्दीर्घान्तपाठोऽपि ततश्च छान्दसः। अतप्ततनुत्वादेव आमः अपक्वः बालबुद्धिरित्यर्थः। अतस्तत् अनिर्व्वचनीयं पदं नाश्नुते, न प्राप्नोति। इत् इति वहन्तः तप्तमुद्रां धारयन्तः, तत् परमं पदम्, अश्नुता सहेति छान्दसः, अश्नुवानाः सम्यक् आसत, सुखं वर्त्तन्ते स्म। शम् इति पृथक्पाठे तत् विष्णुचिह्नं सुदर्शनं वहन्तः, शं मङ्गलं यथा स्यात्तथा आसत। श्रृता सह इति पाठे छान्दसमेव। श्रृताः परितप्ताः सन्त इत्यर्थः ॥६२॥

प्रतस्य प्रकर्षेण प्रसिद्धस्य विष्णोः। प्रते इति पाठे अब्जचक्र-विशेषणम्। अर्थश्च तथैव। यद्वा, प्रयते पवित्रे इत्यर्थः। जन्माम्भोधिं लक्ष्मीकृत्य यो वर्त्तते, ये चर्षणीन्द्रा परमसाधुजनाः, छन्दोभङ्गभयादेकवचनं, यद्वा, संसारीत्यर्थः। ये च चर्षणीन्द्राः जीवन्मुक्ताः, ते सर्व्वे एव पुराणाः पुरातनाः, बाह्वोर्मूले अब्जचक्रे द्वे दधते। अन्ये केचिच्च लिङ्गानि विष्णोश्चिह्नानि आयुधानि गदादीन्यपि सर्व्वाण्येव अर्पयन्ति गात्रेषु धारयन्तीत्यर्थः ॥६३॥

प्रेम्णा भजनलक्षणमेवाह—सुश्लोकेति। धर्म्माणि चिह्नानि चक्रादीनि ॥६४॥

---

उस नेमि के द्वारा शरीर सन्तप्त करने पर सायुज्य एवं मुक्ति प्राप्त होती है। अमृत स्वरूप श्रीहरि का चक्र, देववृन्द का रक्षक स्वरूप है। वह्नितप्त चक्र का धारण शरीर में करने से निखिल पापों से उत्तीर्ण होकर जहाँ पर निष्काम यतिगण निवास करते हैं, उसी सर्व दु खहीन परम स्थान को प्राप्त करते हैं ॥५९-६१॥

ऋक् परिशिष्ट में लिखित है—तप्त मुद्रा के द्वारा अनङ्कित देह, अपक्व बुद्धि मानव, उस अनिर्वचनीय पद को प्राप्त नहीं करता। किन्तु जो मानव उसको धारण करते हैं, वे उत्तम रूप से श्रीहरि के परम पद में सुख पूर्वक निवास करते हैं ॥६२॥

ऋग्वेदीय आश्वलायनशाखा में भी लिखित है—जो सब मानव, जन्मरूपी सागर को लक्ष्य करके संस्थित हैं, अर्थात् संसारी व्यक्तिगण, एवं जीवन्मुक्त व्यक्तिगण, एवं पुरातन पन्थी व्यक्तिगण हैं, वे सब ही बाहुमूल में प्रसिद्ध श्रीविष्णु के तप्त पद्म एवं चक्र चिह्न को धारण करते हैं। एतद्व्यतीत अनेक व्यक्ति श्रीहरि के चिह्न स्वरूप तप्तायुध चिह्नसमूह, देह में धारण करते हैं ॥६३॥

छान्दोग्य परिशिष्ट में लिखित है—याज्ञवल्क्य ने कहा है,-आत्महित के निमित्त प्रेमपूर्वक श्रीहरि की आराधना करना मानव का कर्त्तव्य है। सुश्लोक मौलि श्रीहरि के चक्र प्रभृति चिह्नसमूह को वह्नितप्त करके शरीर में धारण करना चाहिये। यही शातातपी श्रुति है ॥६४॥

अथर्व्वपरिशिष्टे तप्तचक्रादिप्रकरणे—

देवासो यत्र वितत्तेन बाहुना, सुदर्शनेन प्रयताः स्वर्गमायन् ।
येनाङ्किता मनवो लोकसृष्टिं, वितन्वते ब्राह्मणास्तद्वहन्ति ।।६५।। इति।

पाद्मे श्रीशिवेन तप्तमुद्राप्रसङ्गे—

विष्णुचक्राङ्कितं विप्रं पूजयेत् सर्व्वकर्म्मणि । विष्णुचक्रविहीनन्तु प्रयत्नेन विवर्जयेत् ।।६६।।

नारदीये तप्तमुद्राप्रसङ्गे—

श्रीकृष्णचक्राङ्कविहीनगात्रः, श्मशानतुल्यः पुरुषोऽथ नारी ।
दृष्ट्वा नरस्तं नृपते सवासाः, स्नात्वा समर्च्चेद्धरिमङ्ग सद्यः ।।६७।। इति।

बह्वश्च वेङ्कटाचार्य्यपादप्रभृतिभिर्बुधैः । श्रुतयः स्मृतयोऽप्यत्र विख्याता लिखिताः पराः ।।६८

अथ तदनादरदोषाः

पाद्मे—

तप्तचक्राङ्कितं दृष्ट्वा ये निन्दन्ति नराधमाः । अवलोक्य मुखं तेषामादित्यमवलोकयेत् ।।६९।।

---

देवास इति छान्दसः, देवाः सन्तः दीव्यन्तः सन्तो वेत्यर्थः । आयन् आगताः, तत् सुदर्शनम् ।।६५।।

एवं विविधवचनसिद्धं नित्यत्वं तद्धारणप्राशस्त्यादिना द्रढ़यित्वा, इदानीमकरणप्रत्यवायद्वारा साधयति—विष्ण्वति । सर्व्वकर्म्मणि श्राद्धादौ ।।६६।।

अङ्ग भो नृपते, सद्यः सवासाः स्नात्वा हरिं सम्यगर्च्चयेत् ।।६७।।

वेङ्कटाचार्य्यपादाः श्रीवैष्णवसम्प्रदायिनो मुख्यतमास्तदादिभिः बुधैः श्रुतिस्मृत्यभिज्ञैः । अत्र तप्तमुद्राधारणप्रकरणे बह्वयः बहुलाश्च परा लिखिताः । विख्याता इति प्रसिद्धा यात्र न संगृहीता इति भावः ।।६८।।

एवमवश्यकर्त्तव्यत्वे सिद्धेऽप्यज्ञानात् तन्निन्दकादीनां दोषं दर्शयन् नित्यतामेव साधयति—तप्तेत्यादि-त्रिभिः ।।६९।।

---

अथर्व परिशिष्ट के तप्त चक्रादि धारण प्रकरण में लिखित है—देवगण, विस्तृत बाहु द्वारा जिस सुदर्शन चिह्न से चिह्नित होकर देवलोक में समागत हुये हैं, मनुष्यगण जिस चिह्न को धारण कर सृष्टि निस्तार करते हैं, ब्राह्मणगण, उस सुदर्शन चिह्न को शरीर में धारण करते हैं ।।६५।।

पद्मपुराण के तप्तमुद्रा प्रसङ्ग में श्रीशिवोक्ति है—श्रीविष्णु चक्र चिह्नित विप्र की पूजा समस्त कार्य्य में करे । अर्थात् तादृश विप्र को श्राद्धादि सत्कार्य्य समूह में नियुक्त करना चाहिये । विष्णु चक्र चिह्न रहित विप्र को सयत्न से परित्याग करे ।।६६।।

नारदपुराण के तप्तमुद्रा प्रसङ्ग में उक्त है—नर-नारी सबका श्रीकृष्ण चक्रचिह्न विहीन देह, श्मशान तुल्य है । हे नृप ! उस व्यक्ति को देखने पर तत्क्षणात् सवस्त्र अवगाहन स्नान करके श्रीहरि की पूजा करनी चाहिये ।।६७।।

श्रीसम्प्रदाय के वेंङ्कटाचार्य्यादि पण्डितगण इस तप्तमुद्रा प्रकरण में असंख्य प्रख्यात श्रुति स्मृति को लिपिबद्ध किये हैं । तज्जन्य उसका उट्टङ्कन यहाँ पर नहीं हुआ ।।६८।।

अथ तदनादरदोषाः

पद्मपुराण में लिखित है—जो लोक, तप्तचिह्न चिह्नित मानव को देखकर उसकी निन्दा करते हैं, उन नराधम समूह का मुख देखने से मनुष्य सूर्य्य का दर्शन करके शुद्ध होगा ।।६९।।

अग्निपुराणे च दशरथहतपुत्र-विप्रविलापे—

शिलाबुद्धिः कृता किंवा प्रतिमायां हरेर्मया ?
किं मया पथि दृष्टस्य विष्णुभक्तस्य कर्हिचित् ॥७०॥
तन्मुद्राङ्कितदेहस्य चेतसा नादरः कृतः ? येन कर्म्म-विपाकेन पुत्रशोको ममेदृशः ? ॥७१॥

अथ तप्तमुद्राधारणमाहात्म्यम्

सौपर्णे—

अशुचिर्वाप्यनाचारः सर्व्वधर्म्म-वहिष्कृतः । प्रतप्तशङ्खचक्राभ्यामङ्कितः पङ्क्तिपावनः ॥७२॥

वाराहेतप्तमुद्राप्रसङ्गे—

म्लेच्छदेशे शुभे वापि चक्राङ्को यत्र तिष्ठति । योजनानि तथा त्रीणि मम क्षेत्रं वसुन्धरे ॥७३॥

ब्रह्माण्डे—

आयुधैर्वैष्णवैः सर्व्वैस्तापितैः स्वतनुं यदि । चिह्नयेद्वैष्णवो यस्तु स याति परमां गतिम् ॥७४॥

पाद्मे च तत्रैव—

अग्नितप्तं परितप्तञ्च धृत्वा वै बाहुमूलयोः । त्यक्त्वा यमपुरं घोरं यान्ति विष्णोः परं पदम् ॥७५
हुताग्नितप्तचक्रेण शरीरं यस्य चिह्नितम् । तेन तीर्थानि यज्ञाश्च लभ्यन्ते नात्र संशयः ॥७६॥

---

दशरथेन हतः पुत्रः श्रवणनामा यस्य तस्य विप्रस्य विलापे। अत्रेयमाख्यायिका—'शब्दवेधिना राज्ञा दशरथेन हस्तिबुद्धचा दूराद्विद्धे श्रवणे तद्वचनाज्जलकुम्भमादायान्धयोस्तत्पित्रोरन्तिकं तूष्णीं गते राज्ञि 'हा श्रवण ! कथं विलम्बितः ? कथञ्च न वदसि ?' इत्यादि सकरुणं भाषमाणे पितरि दशरथोऽहं त्वत्पुत्र-हन्तेति राज्ञो वचनमाकर्ण्य विमुह्य चिरात् संज्ञां लब्ध्वा विप्रोऽसौ बहु विललाप।' इत्यादि ॥७०-७१॥

पवित्रम् – चक्रम् ॥७५॥

हुतेन कृतहोमेनाग्निना तप्तं यच्चक्रं तेन ॥७६॥

---

अग्निपुराण के दशरथ कर्त्तृक हतपुत्र विप्र के विलाप प्रसङ्ग में लिखित है—हाय ! मैंने श्रीविष्णु प्रतिमा को शिलाबुद्धि किया, किंवा विष्णुचक्र से चिह्नित किसी वैष्णव को पथ में निरीक्षण करके चित्त में अनादर किया था, उसी कर्म के फल से मुझको ऐसे पुत्रशोक से कातर होना पड़ा है ॥७०-७१॥

अथ तप्तमुद्राधारणमाहात्म्यम्

गरुड़पुराण में लिखित है—अपवित्र, असदाचारी, सर्वधर्म बहिष्कृत जो कोई भी क्यों न हो, उत्तप्त शङ्ख चिह्न द्वारा चिह्नित होने से ही पङ्क्ति पावन हो सकता है। ७२॥

वराह पुराण के तप्तमुद्रा धारण प्रसङ्ग में लिखा है—हे पृथिवी ! क्या म्लेच्छ भूमि, क्या पवित्र स्थान, जहाँ क्यों न हो, हरिचक्र चिह्नित व्यक्ति जहाँ पर निवास करते हैं, वहाँ पर योजनत्रय स्थान को मदीय क्षेत्र जानना चाहिये ॥७३॥

ब्रह्माण्डपुराण में लिखित है—जो वैष्णव, तप्त विष्णु आयुध समूह के द्वारा शरीर को चिह्नित करते हैं, वे श्रीविष्णु के परमपद में गमन करते हैं ॥७४॥

पद्मपुराण के उक्त स्थान में लिखित है—जो मानव, अग्नितप्त परम विष्णु अस्त्रचिह्न को बाहुमूलद्वय में धारण करते हैं, वे, घोर यमनगरी को छोड़कर श्रीहरि के परमपद में प्रस्थान करते हैं ॥७५॥

जिनका शरीर होमाग्नि सन्तप्त चक्र-चिह्न द्वारा चिह्नित है, उनको निःसन्देह सब तीर्थ एवं सम्पूर्ण यज्ञों का फल मिल जाता है। इसमें सन्देह नहीं है ॥७६॥

अग्नितप्तेन चक्रेण ब्राह्मणो बाहुमूलयोः। अङ्कयित्वा जपेन्मन्त्रं संसारान्मोक्षभाग्भवेत् ॥७७

अग्नितप्तेन चक्रेण बाहुमूलेषु लाञ्छिताः। ते सर्व्वे पापनिर्मुक्ता यान्ति विष्णोः परं पदम् ॥७८

किञ्च—

अप्राकृतमहात्मानो विष्णुचक्रेण लाञ्छिताः।
विष्णुचक्रविहीनास्तु प्राकृताः पतिताः स्मृताः ॥७९॥ इति।

इत्थं निषेधवचनं निर्मूलं सदनादृतम्। समूलं यच्च तत् सम्यग्विध्यभावादितत्परम् ॥८०॥

अथ तप्तमुद्राधारणविधि

तप्तमुद्राधारणार्थमुपचारैस्तु पञ्चभिः। कृष्णमभ्यर्च्चय सम्पूज्य चक्रशङ्खौ तथा नमेत् ॥८१॥

---

अप्राकृता इति विष्णुचक्रचिह्नधारिणः प्राकृता अपि अप्राकृता महात्मान एव, तद्रहितास्तु अप्राकृता अपि प्राकृताः पतिता दुष्टा एव स्मृता इत्यर्थः ॥७९॥

एवं सर्व्वथा तप्तमुद्राधारणं निश्चित्य तद्विरुद्धवचनं युक्त्या परिहरति—इत्थमिति, लिखितप्रकारेण। निषेधवचनं तप्तमुद्राधारणनिषेधवाक्यं स्मार्त्तमुखश्रूयमाणं निर्मूलमेव, श्रुति-स्मृतिपुराणेतिहासादिपुरातन-ग्रन्थेषु कुत्राप्यविद्यामानत्वात्। ननु कुत्रापि दृश्यते इति चेत्तर्हि दुष्टस्मार्त्तबन्धुकल्पितमेवेत्युक्षेपणीयमित्ति लिखति—सद्भिरनादृतमुपेक्षितम्। 'पतिव्रता या न करोति जारं, तां व्याधियानि नियतं विजह्यात्' इत्यादिवदुन्मत्तभाषितत्वात्। ननु 'वज्रचक्रधरादीनि निजाङ्गेषु द्विजोत्तम। नित्यं संधारयिष्यन्ति पाषण्डोपहताः कलौ॥' इति ब्रह्मगीतायां प्रसिद्धं वचनम्। अत्र लिखति—समूलमिति। यच्च वचनं शास्त्रविरुद्धं, तत् सम्यक् समग्रो यो विधिः तप्तमुद्राधारणप्रकारस्तस्य अभावो हानिः, आदि-शब्दादवैष्णवाश्च, तत्तत्परं तद्विषयकं ज्ञेयमित्यर्थः। अयं भावः—ब्रह्मसंहितायां वज्रसमभिव्याहृतत्वाद्वज्रेण सहितानां चक्रादीनां धारणं दूषितम्। एवमयथावद्धारणविषयकमेव समूलं निषेधवचनं ज्ञेयम्। कुत्रापि समूलवचने विषयव्यवस्थापि कल्प्या, अशक्यायान्तु यद्व्यवस्थायां वैष्णवावैष्णवभेदेनैव व्यवस्था श्रयणीया एवेति दिक् ॥८०॥

तथा तेनैव प्रकारेण चक्रशङ्खौ च सम्पूज्य नमेत् ॥८१॥

---

**जो ब्राह्मण, वह्नितप्त चक्र द्वारा बाहुमूलद्वय को चिह्नित करके मन्त्र जप करते हैं, वे भवबन्धोत्तीर्ण होकर मोक्षभागी होते हैं ॥७७॥**

**जो मानव, वह्नितप्त चक्र द्वारा बाहुमूल देश को चिह्नित करते हैं, वे निखिल पातकों से उत्तीर्ण होकर श्रीविष्णु के परमपद में प्रस्थान करते हैं ॥७८॥**

**और भी लिखित है— विष्णु चक्र चिह्नित व्यक्तिवृन्द को महात्मा, एवं अप्राकृत जानना चाहिये एवं विष्णु चक्र चिह्न रहित व्यक्तिवृन्द को प्राकृत एवं पतित कहते हैं ॥७९॥**

**तप्तमुद्रा धारण के सम्बन्ध में जो सब निषिद्ध वचन दिखाई देते हैं, वे निर्म्मूल हैं एवं साधु पुरुषों के अनादरणीय हैं। अर्थात साधुपुरुषवृन्द उन वचनों को ग्रहण नहीं करते हैं। यह सब वचन समूह होने पर इनको अवैष्णव के सम्बन्ध में जानना चाहये ॥८०॥**

अथ तप्तमुद्राधारणविधिः

**तप्तमुद्रा धारण के निमित्त, पञ्चोपचार के द्वारा श्रीकृष्ण की पूजा करके एवं शङ्ख चक्र की पूजा करके प्रणाम करे ॥८१॥**

अथ तत्र मन्त्रः

सुदर्शन नमस्तेऽस्तु पाञ्चजन्य नमोऽस्तु ते ॥८२॥ इति।

अग्निमभ्यर्च्चर्य मूलेन हुत्वा चाज्याहुतीः कृती।

चक्रशङ्खौ गदादीनि शस्त्राण्यग्नौ प्रतापयेत् ॥८३॥

तत्तन्मन्त्रैरथावाह्य तान्यभ्यर्च्चर्य प्रणम्य च। गुरुं कृष्णञ्च सम्वन्द्य भक्त्या विज्ञापयेदिदम् ॥८४

उच्छिष्टभोजनादेव किङ्करः शरणागतः। तप्तचक्रदरादीनि तवाङ्कानीश धारये ॥८५॥ इति।

अथ चक्रादीनामावाहनमन्त्राः

ॐ नमो भगवते सुदर्शनाय निर्णाशित-सकलरिपुध्वजाय

भगवन्नारायणकराम्भोरुहस्पर्शदुर्ललिताय ॥८६॥

एह्येहि त्वं सहस्रार चक्रराज सुदर्शन। यज्ञभागं प्रगृह्णस्व पूजाञ्चैव नमो नमः ॥८७॥

ॐ नमो भगवते पाञ्चजन्याय विष्णुशङ्खाय, गम्भीरधीरध्वन्याकुलीकृतकौरववाहिनीनाथाय, त्रिरेखादक्षिणावर्त्ताय त्रिप्रशस्ताय ॥८८॥

एह्येहि पाञ्चजन्य त्वं नारायणकरस्थित। यज्ञभागं प्रगृह्णस्व पूजाञ्चैव नमो नमः ॥८९॥

ॐ रं णं मं नं पाञ्चजन्याय नमः ॥९०॥

ॐ भगवते खड्गाय नन्दकाय त्रैलोक्यपावित्र्याय, सकलसुरासुरसुन्दरीनेत्रोत्पलार्च्चिताय ॥९१॥

एह्येहि खड्गरत्न त्वं नन्दकाख्य सुरार्च्चित। यज्ञभागं प्रगृह्णस्व पूजाञ्चैव नमो नमः ॥९२॥

---

मूलेन निजमन्त्रेण आज्याहुतीर्यथाशक्ति हुत्वा ॥८३॥
तानि चक्रादीनि सम्बन्द्य प्रणम्य ॥८४॥

---

अथ तत्र मन्त्रः

हे सुदर्शन! आपको नमस्कार। हे पाञ्चजन्य! आपको नमस्कार ॥८२॥

सुकृती व्यक्ति, निज मन्त्र के द्वारा वह्नि की पूजा करके यथाशक्ति आहुति दान पूर्वक चक्र, शङ्ख, गदा प्रभृति आयुध समूह को अग्नि में सन्तप्त करे ॥८३॥

जिस अस्त्र का जो मन्त्र निर्दिष्ट है, उसी मन्त्र द्वारा उस अस्त्र का आवाहन, अर्च्चन, प्रणति प्रभृति करके श्रीगुरुदेव एवं श्रीकृष्ण की वन्दना पूर्वक सभक्ति निवेदन करें कि,–हे ईश! उच्छिष्ट भोजन निबन्धन मुझको भवदीय भृत्य (सेवक) और आश्रित जानिये। भवदीय तप्त चक्र और तप्त शङ्ख का चिह्न धारण करता हूँ ॥८४-८५॥

अथ चक्रादीनामावाहनमन्त्राः

जो समस्त अराति निपात के ध्वज स्वरूप हैं, जो भगवान् के कर-कमल स्पर्श से दुर्ललित हैं, अर्थात् प्यारा किया हुआ हैं। उन्हीं भगवान् सुदर्शन को नमस्कार करता हूँ। हे सहस्रार! हे चक्रराज! हे सुदर्शन! आइये, आइये! यज्ञीय भाग, एवं पूजा ग्रहण कीजिये। आपको नमस्कार है। जिन्होंने गभीर धीर ध्वनि से कौरवकुल के सेनापतिवृन्द को व्याकुलित किया है, जो प्रशस्त, दक्षिणावर्त्त त्रिरेखा युक्त हैं, उन विष्णु शङ्ख पाञ्चजन्य भगवान् को नमस्कार करता हूँ। ॐ रं णं मं नं पाञ्चजन्याय नमः। जिन्होंने भुवनत्रय को पवित्र किया है, जो निखिल देवता एवं असुर नारीवृन्द के नयन पद्म द्वारा अर्चित हैं, उन

ॐ खड्गाय नमः ॥९३॥

ॐ नमो भगवत्यै कौमोदक्यै गदायै दानवेन्द्रनिसूदनायै भगवद्भट्टारकवासुदेवलालितायै ॥९४

एह्येहि त्वं गदे देवि कौमोदक्यायुधेश्वरि । यज्ञभागं प्रगृह्णस्व पूजाञ्चैव नमो नमः ॥९५॥

ॐ रं खं चं फं शं गदायैः नमः । एवं पद्माय नमः, सशराय सारङ्गाय नमः ॥९६॥ इति ।

अथ धारणमन्त्रः

सुदर्शन महाज्वाल सूर्य्यकोटिसमप्रभ । अज्ञानान्धस्य मे नित्यं विष्णोर्मार्गं प्रदर्शय ॥९७॥

तथा—

पाञ्चजन्य निजध्वानध्वस्तपातकसञ्चय । पाहि मां पापिनं घोरसंसारार्णवपातिनम् ॥९८॥ इति ।

इममुच्चारयन्मन्त्रं दक्षिणादिक्रमेण तु । भुजयोश्चक्रपूर्व्वाणि कृष्णशस्त्राणि धारयेत् ॥९९॥

कलत्रादि-परीवारान् निजान् सर्व्वांश्च वैष्णवः । भगवत्यर्पयन् तप्तमुद्राभिस्ताभिरङ्कयेत् ॥१००

तथा च वाराहे—

अङ्कयेत्तप्तचक्राद्यैरात्मनो बाहुमूलयोः । कलत्रापत्यभृत्येषु पश्वादिषु च सम्पदि ॥१०१॥

---

भुजयोः बाहुमूलयोः, चक्रपूर्व्वाणीति प्रथमं चक्रं धारयेत्ततोऽन्यानि शङ्खादीनीत्यर्थः । तत्र च दक्षिणादि-क्रमेण त्विति, आदौ दक्षिणबाहुमूले, ततो वामबाहुमूलादिष्वित्यर्थः । तद्विशेषश्चाग्रे श्रीवाराहवचनतो व्यक्तो भावी ॥९९॥

भगवति श्रीकृष्णे अर्पयन् तदीयत्वेन निवेदयन्; तथा चैकादशस्कन्धे (३।२८)— 'दारान् सुतान् गृहान् प्राणान् यत् परस्मै निवेदनम्' इति । तत्र दाराद्यर्पणश्च यथायथमूह्यम्, ताभिः पूजितचक्रादिरूपाभिः । १००॥

---

नन्दक नामक भगवान् खड्ग को नमस्कार करता हूँ। हे सुरवृन्द पूजित नन्दकाख्य खड्गरत्न ! आप आगमन करिये, आगमन करिये । एवं आपका यज्ञभाग एवं पूजा ग्रहण करिये। आपको पुनः पुनः नमस्कार करता हूँ। ॐ खड्गाय नमः । जिन्होंने दानवों को वध किया है, जो भगवान् भट्टारक वासुदेव कर्त्तृक लालित हैं, उन भगवती कौमोदकी गदा को नमस्कार करता हूँ । हे देवि ! हे कौमोदकि ! हे आयुधेश्वरि ! आप आगमन करो, आगमन करो ! यज्ञीयभाग और पूजा ग्रहण करो । आपको बारम्बार नमस्कार करता हूँ। ॐ रं खं चं फं सं गदायै नमः । इस प्रकार पद्माय नमः, सशराय शार्ङ्गाय नमः" इत्यादि प्रकार से आवाहन करे ।।८६-९६।।

अथ धारणमन्त्रः

हे सुदर्शन ! हे महाज्वाल ! हे सूर्य्यकोटि सम प्रभ ! मैं अज्ञानान्ध हूँ, मुझको नित्य श्रीविष्णु का पथ प्रदर्शन करो ।।९७।।

और भी लिखित है—हे पाञ्चजन्य ! आप स्वीय निनाद के द्वारा पापराशि को विनष्ट करते हैं, मैं पातकी हूँ। संसार समुद्र में डूब रहा हूँ, मेरी रक्षा करो । यह मन्त्रार्थ चिन्ता पूर्वक दक्षिणादि क्रम से दोनों भुजाओं में चक्रादि कृष्ण आयुध धारण करे ।।९८-९९।।

वैष्णव व्यक्ति, स्वकीय भार्य्यादि को भगवान् में समर्पण पूर्वक समस्त तप्तमुद्रा द्वारा उनको चिह्नित करे ।।१००।।

इस विषय का वर्णन वराह पुराण में इस प्रकार है—सन्तप्त चक्रादि द्वारा स्वीय बाहुयुगल के मूलदेश को चिह्नित करना चाहिये । एवं विभव होने पर भार्य्या, पुत्र और पशुओं को भी चक्रादि द्वारा चिह्नित करे ।।१०१।।

किञ्च—

आयसं विधिवत् कृत्वा पञ्चायुधविधानतः। तत्तन्मन्त्रेण मन्त्रज्ञः प्रतिष्ठाप्य पृथक् पृथक् ॥१०२
ललाटे च गदा धार्य्या मूर्द्धि्न चापं शरन्तथा। नन्दकञ्चैव हृन्मध्ये शङ्खचक्रे भुजद्वये ॥१०३॥

किञ्च—

दक्षिणे तु भुजे विप्रो विभृयाद्वै सुदर्शनम्। सव्ये च शङ्खं विभृयादिति ब्रह्मविदो विदुः ॥१०४॥

अथ चक्रादि-प्रतिकृतिद्रव्यम्

नवप्रश्नपञ्चरात्रे—

सौवर्णं राजतं ताम्रं कांस्यमायसमेव वा। चक्रं कृत्वा तु मेधावी धारयेत विचक्षणः ॥१०५॥

इति।

एवमेव प्रबोधन्यां द्वादश्यां भगवत्परैः। तप्तमुद्रा ध्रुवं धार्य्या द्वारकायां विशेषतः ॥१०६॥

अथ शयनीक्षीराब्धिमहोत्सवः

ततो नीराज्य कृष्णन्तु नरयानेन वैष्णवः। समं गीतादिघोषेण नयेत् पुण्यं जलाशयम् ॥१०७
अथ पुष्पाञ्जलिं दत्त्वा यानादुत्तार्य्य च प्रभुम्। सम्प्रार्थ्य हस्तं दत्त्वा च तीरे समुपवेशयेत् ॥१०८

---

आयसं लोहमयश्चक्रादीति शेषः, अय उपलक्षणं सौवर्णाद्यपि, तच्चाग्रे व्यक्तं भावि। पञ्चायुधानां विधानं निर्म्माणं धारणप्रकारो वा तेन ॥१०२॥

चापशरौ मूद्ध्र्न्येकत्रैव धार्य्याविति तयोः सहचारित्वेनैक्यात् पञ्चायुधानि ज्ञेयानि ॥१०३॥

भुजद्वये शङ्खचक्रे धार्य्ये इत्युक्तं, तदेव विविच्याह—दक्षिणे त्विति ॥१०४॥

द्वारकायामिति, तस्यां चक्रतीर्थे चक्रप्रभावविशेषेणान्यतस्तन्मुद्राधारणमाहात्म्यविशेषात् ॥१०६॥

ततस्तप्तमुद्राधारणानन्तर वैष्णवैः समं नरयानेन शिविकादिना जलाशयं सरोवरादिकं नयेत् ॥१०७॥

सम्प्रार्थ्य सुखसावधानपादन्यासमाशास्य ॥१०८॥

---

और भी लिखा है—मन्त्रविद् व्यक्ति, पञ्चायुध निर्म्माण की अथवा धारण की प्रणाली के अनुसार यथा विधि लोहमय चक्रादि प्रस्तुत करके उस पर मन्त्र द्वारा पृथक् पृथक् रीति से प्रतिज्ञा पूर्वक ललाट में गदा, शिर में धनुर्वाण, हृदय में नन्दक नामक खड्ग और दोनों भुजाओं में शङ्ख धारण करे ॥१०२-१०३॥

और भी लिखित है—वेदाविद्गण उस विषय में इस प्रकार कहे हैं—दक्षिण बाहु में सुदर्शन एवं वाम बाहु में शङ्ख धारण करना ही ब्राह्मणों का कर्त्तव्य है। यहाँ ब्राह्मण शब्द उपलक्षण है, अतएव इससे क्षत्रिय, वैश्य और शूद्रों को भी जानना होगा ॥१०४॥

अथ चक्रादि-प्रतिकृतिद्रव्यम्

नवप्रश्नपञ्चरात्र में लिखित है—सुविज्ञ मेधावी व्यक्ति, सुवर्ण, रौप्य, ताम्र, कांस्य व लोहमय चक्र प्रस्तुत कर धारण करे ॥१०५॥

भगवत् परायण व्यक्ति, प्रबोधिनी द्वादशी में विशेषतः द्वारकाधाम में तप्तमुद्रा धारण अवश्य ही करे ॥१०६

अथ शयनीक्षीराब्धिमहोत्सवः

अनन्तर श्रीकृष्ण की आरात्रिक करके, शिविका में आरोहण कराकर, गीत-वाद्य प्रभृति के सहित पवित्र सरोवर के तीर में ले जाय। पश्चात् प्रभु को पुष्पाञ्जलि अर्पणपूर्वक शिविका में श्रीप्रभु को अवतरण कर.कर प्रार्थना करके अङ्ग में हाथ लगाय सरोवर के तट पर बैठावे। अनन्तर कर चरण प्रक्षालन पूर्वक आचमन एवं सङ्कल्प करके निजाङ्ग में एवं देवता के अङ्ग में न्यास करके यथाविधि प्रभु को स्नान करावे

धौताङ्घ्रिपाणिराचान्तः कृत्वा सङ्कल्पमात्मनि ।
देवे च न्यासमाचर्य्य स्नापयेत्तं यथाविधि ॥१०९॥
सम्प्रार्थ्य जलमध्ये तं देवं संस्नापयेत् सुखम् ।
गन्धपुष्पादिभिश्चाथ महापूजां समाचरेत् ॥११०॥

अथ तत्र स्वापनमन्त्रः

शेषे पर्य्यङ्कवर्य्येऽस्मिन् फणामणिगणामले । श्वेतद्वीपान्तरे देव कुरु निद्रां नमोऽस्तिवति ॥१११

अथ प्रार्थनामन्त्रः

सुप्ते त्वयि जगन्नाथ जगत् सुप्तं भवेदिदम् । विबुद्धे तु विबुध्येत प्रसन्नो मे भवाच्युत ॥११२

इति ।

इत्याशास्य प्रभोरग्रे गृह्णीयान्नियमं व्रती । चतुर्म्मासेषु कर्त्तव्यं कृष्णभक्तिविवृद्धये ॥११३॥

अथ तत्रोपक्रमकालः

सनत्कुमारेण—

एकादश्यान्तु गृह्णीयात् संक्रान्तौ कर्कटस्य तु ।
आषाढ़्यां वा नरो भक्त्या चातुर्म्मास्योदितं व्रतम् ॥११४॥

---

शयनपूजासङ्कल्पं कृत्वा, आत्मनि देवे न्यासं कृत्वा, यथाविधि इत्यस्य सर्व्वत्रैवानुसङ्गः । ततश्च सङ्कल्पादिप्रकारो यथायोग्यं यथापूर्व्वलिखितं चोह्यम् ।।१०९।।

सम्प्रार्थ्य 'जय जय महाविष्णो विश्वमनुगृहाण' इत्यभ्यर्थ्य ।।११०।।

चतुर्मासेषु कर्त्तव्यो यो नियमो व्रतं, तत् भगवदग्रे गृह्णीयात् स्वीकुर्य्यात् । ननु वैष्णवस्य चातुर्मास नियम-ग्रहणेन किम् ? तत्र लिखति—कृष्णेति । तदनुष्ठानेनाकरणप्रत्यवायापगमाद्गुणविशेषापादनाच्च भक्तिविशेषः सम्पद्येतेति दिक् ।।११३।।

---

अनन्तर हे महाविष्णो ! "आपकी जय हो, आपकी जय हो, जगत् के प्रति अनुग्रह प्रदर्शन करें", इस वाक्य के द्वारा उक्त देवता को यथा रीति प्रार्थना करके सलिलाभ्यन्तर में सुख पूर्वक स्नान करावे, एवं गन्ध पुष्पादि द्वारा महापूजा भी करे ।।१०७-११०।।

अथ तत्र स्वापनमन्त्रः

हे देव ! आप श्वेतद्वीप के भीतर फणामणिगण विभूषित अनन्त रूपी इस पर्य्यङ्क में शयन कीजिये । आपको नमस्कार करता हूँ ।।१११।।

अथ प्रार्थनामन्त्रः

जगन्नाथ ! आपके शयन करने पर यह विश्व भी शयन करता है, एवं आप जागरित होने पर ही जगत् जागता रहता है । हे अच्युत ! मुझ पर प्रसन्न हूजिये ।।११२।।

व्रती इस प्रकार प्रार्थना करके प्रभु के समीप में कृष्णभक्ति वृद्धि हेतु चातुर्म्मास्य कर्त्तव्य क्रिया करने का नियम ग्रहण करे ।।११३।।

अथ तत्रोपक्रमकालः

सनत्कुमार कहे हैं–शयनैकादशी वा कर्कट संक्रान्ति किंवा आषाढ़ी पौर्णमासी में भक्तिपूर्वक चातुर्म्मास व्रत धारण करना ही मनुष्यों का कर्त्तव्य है ।।११४।।

अथ तत्र मन्त्रः

चतुरो वार्षिकान् मासान् देवस्योत्थापनावधि ।
इमं करिष्ये नियमं निर्व्विघ्नं कुरु मेऽच्युत ॥११५॥ इति।

अथ चातुर्म्मास्यनियमावश्यकता

भविष्ये—

यो विना नियमं मर्त्यो व्रतं वा जप्यमेव वा । चातुर्म्मास्यं नयेन्मूर्खो जीवन्नपि मृतो हि सः ॥११६

अथ चातुर्म्मास्य-नियमाः

स्कान्दे नागरखण्डे—

श्रावणे वर्ज्जयेच्छाकं दधि भाद्रपदे तथा । दुग्धमाश्वयुजे मासि कार्त्तिके चामिषं त्यजेत् ॥११७

तत्रैव श्रीब्रह्मनारदसंवादे—

निष्पावान् राजमाषांश्च सुप्ते देवे जनार्द्दने । यो भक्षयति विप्रेन्द्र श्वपचादधिको हि सः ॥११८
कार्त्तिके तु विशेषेण राजमाषांश्च भक्षयन् । निष्पावान् मुनिशार्द्दूल यावदाहूतनारकी ॥११९
कालिङ्गानि पटोलानि वृन्ताकं सन्धितानि च । एतानि भक्षयेद्यस्तु सुप्ते देवे जनार्द्दने ।
सप्तजन्मार्ज्जितं पुण्यं हरते नात्र संशयः ॥१२०॥

---

नियममेव विविच्याह—व्रतं वा जप्यं वा विनेति ॥११६॥
स्वत एवामिषत्यागनिवृत्तिधर्म्मनिरतश्चामिषस्थाने माषान् त्यजेत् ॥११७॥
निष्पावाः शिम्बीप्रभेदास्तान् ॥११८॥
हरते—नाशयति ॥१२०॥

---

अथ तत्र मन्त्रः

हे अच्युत ! संवत्सर के चार मास प्रभु के उत्थान पर्य्यन्त यह नियम करूँगा । आप इस कार्य्य का विघ्न दूर कीजिये ॥११५॥

अथ चातुर्म्मास्यनियमावश्यकता

भविष्यपुराण में लिखित है—नियम अथवा व्रत, जप व्यतीत चातुर्म्मास्य यापन करने पर जीवित अवस्था में भी उस मूर्ख को मृत सदृश जानना चाहिये ॥ १६॥

अथ चातुर्म्मास्य-नियमाः

स्कन्दपुराण के नागर खण्ड में लिखित है—श्रावण में शाक, भाद्र में दधि, आश्विन में दुग्ध, और कार्त्तिक मास में आमिष वर्जन करना चाहिये ॥११७॥

उक्त ग्रन्थ के श्रीब्रह्म-नारद-संवाद में लिखित है—हे विप्रेन्द्र ! जनार्दनदेव प्रसुप्त होने पर जो मानव, निष्पाव (सेम) वरवटी, राजमाष (लोबिया) भक्षण करता है, वह मानव, चण्डाल से भी अधिक अधम है । हे मुनिसत्तम ! विशेषतः कार्त्तिक मास में राजमाष (वरवटी) किंवा निष्पाव, भक्षण करने पर प्रलय पर्य्यन्त नरक भोग करना पड़ता है । जनार्दनदेव प्रसुप्त होने पर यदि कलिङ्ग (इन्द्रयव) पटोल, वार्त्ताकु एवं सन्धित (आचार) भोजन किया जाय तो निश्चय सप्त जन्म का सञ्चित पुण्य विनष्ट हो जाता है ॥११८-१२०॥

किञ्च—

रुच्यं तत्तत्काललभ्यं फलमूलादि वर्ज्जयेत् ।।१२१।। इति।

किञ्च—

जपहोमाद्यनुष्ठानं नामसङ्कीर्त्तनन्तथा। स्वीकृत्य प्रार्थयेद्देवं गृहीतनियमो बुधः ।।१२२।।
इदं व्रतं मया देव गृहीतं पुरतस्तव। निर्व्विघ्नं सिद्धिमायातु प्रसादात्तव केशव ।।१२३।।

गृहीतेऽस्मिन् व्रते देव पञ्चत्वं यदि वा भवेत्।
तदा भवतु सम्पूर्णं प्रसादात्ते जनार्द्दन ।।१२४।। इति।

अथ चातुर्म्मास्यव्रतनियममाहात्म्यम्

विष्णुरहस्ये ब्रह्मनारदसंवादे—

शृणु नारद कार्त्स्न्येन चातुर्म्मास्यव्रतक्रियाः।
या निर्वर्त्य नरो भक्त्या प्रयाति परमां गतिम् ।।१२५।।

व्रतानि वैष्णवानीह मनस्यपि चिकीर्षतः। नरस्य क्षयमाप्नोति पापं जन्मशतोद्भवम् ।।१२६।।

एकभक्तो नरः शान्तो नित्यस्नायी दृढ़व्रतः।
योऽर्च्चयेच्चतुरो मासान हरिं स्यात्तस्य लोकभाक् ।।१२७।।
यस्तु सुप्ते हृषीकेशे क्षितिशायी भवेन्नरः।
वार्षिकान् चतुरो मासान् लभते वैष्णवीं गतिम् ।।१२८।।

---

रुच्यं रुचिकरं, चातुर्म्मास्यजायमानफलादिमध्ये निजप्रिय किञ्चिद्वर्ज्ज्यमित्यर्थः ।।१२१।।

एवं वर्ज्ज्यानि लिखितानि, कृत्यानि च सक्षेपतो लिखति—जपेति। आदि-शब्दात् पुराणश्रवणादि, स्वीकृत्येति अन्यमासतो विशेषेण तत्तन्नियमं गृहीत्वेत्यर्थः ।।१२२।।

अन्यानपि नियमान् दर्शयितुं तेषु श्रद्धाविशेषमुत्पादयितुञ्च तन्माहात्म्यं सामान्यविशेषाभ्यां लिखति—शृण्वित्यादिना पदद्वयमित्यन्तेन ।।१२५।।

वैष्णवानीति भगवतः शयने विशेषतस्तदग्रे सङ्कल्पविशेषेण गृहीतत्वात्तद्भक्तिरूपत्वेन तत्तोषणान्ये-वेत्यर्थः। अतएव फलमुक्तम्—'प्रयाति परमां गतिम्' इत्यादि ।।१२६।

चतुरो मासान् यो हरिमर्च्चयेत् ।।१२७।।

---

और भी वर्णित है—स्वीय रुचिकर कुछ कुछ चातुर्म्मास्योद्भव फल-मूलादि त्याग देना चाहिये ।।१२१

और भी लिखित है—गृहीत नियम विज्ञव्यक्ति, जप, होम, एवं नाम-सङ्कीर्त्तन करके श्रीप्रभु के समीप में गृहीत यह व्रत जैसे निर्विघ्न से सिद्ध हो। हे देव! हे जनार्दन! व्रत ग्रहण करने के पश्चात् मृत्यु होने पर भी आपकी अनुकम्पा से वह सम्पूर्ण हो ।।१२२-१२४।।

अथ चातुर्म्मास्यव्रतनियममाहात्म्यम्

विष्णुरहस्य के ब्रह्म-नारद-संवाद में लिखित है—हे नारद! सम्यक् प्रकार से चातुर्म्मास्य के व्रत की क्रिया को सुनो। भक्तिपूर्वक इन सब क्रियाओं को सम्पन्न करने से परमगति प्राप्त होती है। मन मन में ही इन सब वैष्णव व्रतानुष्ठान करने की इच्छा करने से शतजन्मार्जित पातक विनष्ट होता है। एकभक्त, शान्त, नित्यस्नायी, एवं दृढ़व्रत होकर चार मास श्रीजनार्दन की पूजा करने पर हरिलोक में वास होता है। हृषीकेश सुप्त होने पर वत्सर के मास चतुष्टय जो व्यक्ति भूतल में शयन करता है, वह वैष्णवी गति को

यस्तु केशवमुद्दिश्य चान्द्रायणपरायणः। चातुर्म्मास्यं नयेद्भक्त्या स विष्णुतनुमाविशेत् ॥१२६

भविष्योत्तरे भगवद्युधिष्ठिरसंवादे—

चतुरो वार्षिकान् मासान् देवस्योत्थापनावधि। स्त्री वा नरो वा मद्भक्तो धर्मार्थं सुदृढ़व्रतः।
गृह्णीयान्नियमानेतान् दन्तधावनपूर्व्वकम् ॥१३०॥
तेषां फलानि वक्ष्यामि तत्कर्त्तॄणां पृथक् पृथक् ॥१३१॥

मधुरस्वरसम्पन्नो भवेल्लवणवर्ज्जनात्। लभते सन्ततिं दीर्घां तैलस्य परिवर्ज्जनात् ॥१३२॥
अभ्यङ्गवर्ज्जनात् पार्थ सुन्दराङ्गः प्रजायते। पक्वतैलपरित्यागाच्छत्रुनाशमवाप्नुयात् ॥१३३॥
मधुकतैलत्यागेन सौभाग्यमतुलं भवेत्। पुष्पोपभोगत्यागेन स्वर्गे विद्याधरो भवेत् ॥१३४॥
योगाभ्यासी भवेद्यस्तु स ब्रह्मपदमाप्नुयात्। कट्वम्लतिक्तमधुरक्षारकाषायजान् रसान्।
यो वर्ज्जयेत् स वैरूप्यं दौर्गन्ध्यं नाप्नुयात् क्वचित् ॥१३५॥
ताम्बूलवर्ज्जनाद्भोगी अपक्वादोऽमलो भवेत् ॥१३६॥

पादाभ्यङ्गशिरोभ्यङ्गपरित्यागश्च पार्थिव। दीप्तिमान् दीप्तचरणो मधुक्षौद्रे परित्यजेत् ॥१३७
दधिदुग्धतक्रनियमाद्गोलोकं लभते नरः। इन्द्रातिथित्वमायाति स्थालीपाकविवर्ज्जनात् ॥१३८
लभेच्च सन्ततिं दीर्घां तापपक्वस्य वर्ज्जनात्। भूमौ प्रस्तरशायी च विष्णोरनुचरो भवेत् ॥१३९
सदा मुनिः सदा योगी मधुमांसस्य वर्ज्जनात्। निर्व्याधिर्नीरुगोजस्वी सुरामद्यविवर्ज्जनात्॥१४०

---

प्राप्त करता है। केशव के उद्देश से चान्द्रायण व्रत परायण होकर चातुर्म्मास्य अतिवाहित करने पर श्रीविष्णु के देह में प्रवेश कर सकता है ॥१२५-१२६॥

भविष्योत्तर के भगवद्-युधिष्ठिर-संवाद में उक्त है—स्त्री, किंवा पुरुष, धर्मार्थ मद्भक्तिनिष्ठ होकर दृढ़ व्रत के सहित देवोत्थान यावत् वर्ष के चार मास दन्तधावन करने के पश्चात् यह सब नियम ग्रहण करे। इन सब नियम ग्रहणकारियों को जो फल लाभ होता है, उसका वर्णन पृथक् पृथक् रूप से करता हूँ ॥१३०-१३१॥

चातुर्म्मास्य नियम धारण करके लवण वर्जन करने पर कण्ठस्वर मधुर होता है। तैल त्याग करने पर दीर्घायुः सन्तान लाभ होता है। हे पार्थ! तैलाभ्यङ्ग वर्जन करने से शरीर सुन्दर होता है। पक्व तैल वर्जन करने पर अराति ध्वंस होता है। मधुकतैल वर्जन करने से प्रचुर सौभाग्य का अधिकारी होता है। पुष्प सम्भोग वर्जन करने पर देवपुर में विद्याधर हो सकता है। जो योगाभ्यास में रत होते हैं, वे ब्रह्मपद प्राप्त करते हैं। कटु-अम्ल, तिक्त, मधुर, क्षार, एवं कषाय रससमूह वर्जन करने से कदाच कुरूपता नहीं होती है, और उसके अङ्ग में दुर्गन्ध भी उत्पन्न नहीं हो सकता है। ताम्बूल त्यागने पर योगी होता है, और जो मानव कच्चा अथात् अपक्व भोजन करता है, वह निर्म्मलता को प्राप्त करता है ॥१३२-१३६॥

हे भूप! पद में अथवा मस्तक में तैल मर्दन परित्याग करने से कान्तिमान् हो सकता है, मधु क्षौद्र त्यागने पर दीप्तिपद होता है, अर्थात् उसके चरणयुगल शोभा से युक्त होते हैं। दधि, दुग्ध और तक्र (मठा) त्यागने से गोलोक-धाम लाभ हो सकता है। स्थालीपाक परित्याग करने से अर्थात् (बटलोई का पका त्यागने से) इन्द्र का अतिथि होता है। अग्निपक्व द्रव्य परित्याग करने से दीर्घायुः सन्तान लाभ होता है। भूमि में अथवा प्रस्तर शय्या में शयन करने से सर्वदा मुनि एवं योगी होता है। सुरा मद्य परित्याग

एकान्तरोपवासेन ब्रह्मलोके महीयते। धारणान्नखलोमानां गङ्गास्नानं दिने दिने ॥१४१॥

मौनव्रती भवेद्यस्तु तस्याज्ञास्खलिता भवेत्।

भूमौ भुङ्क्ते सदा यस्तु स पृथिव्याः पतिर्भवेत् ॥१४२॥

नमो नारायणायेति जप्त्वा दानशतं फलम् ॥१४३॥

पादाभिवन्दनाद्विष्णोर्भवेद्गोदानजं फलम्। विष्णुपादाम्बुजस्पर्शात् कृतकृत्यो भवेन्नरः ॥१४४

विष्णोर्देवालये कुर्य्यादुपलेपनमार्ज्जने। कल्पस्थायी भवेद्राजा स नरो नात्र संशयः ॥१४५॥

प्रदक्षिणत्रयं कृत्वा यस्तु स्यात् स्तुतिपाठकः। हंसयुक्तविमानेन स च विष्णुपदं व्रजेत् ॥१४६

गीतवाद्यकरो विष्णोर्गन्धर्व्वलोकमाप्नुयात्। नित्यं शास्त्रविनोदेन लोकान् यस्तु प्रबोधयेत्।

स व्यासरूपी भगवानन्ते विष्णुपुरं व्रजेत् ॥१४७॥

पुष्पमालाकुलां पूजां कृत्वा विष्णोः पुरं व्रजेत् ॥१४८॥

कृत्वा प्रोक्षणिकं दिव्यं स्थानमप्सरसां लभेत्।

तीर्थादिषु कृतस्नानो निर्म्मलं देहमाप्नुयात् ॥१४९॥

पञ्चगव्याशनात् पार्थ चान्द्रायणफलं लभेत्। एकभक्ताशनान्नित्यमग्निहोत्रफलं लभेत् ॥१५०॥

नक्तभोजी समग्रन्तु तीर्थयात्राफलं लभेत्। अयाचितेन चाप्नोति वापीकूपप्रपाफलम् ॥१५१॥

षष्ठकालोऽन्नभोजी यः स्थायी स्वर्गे नरो भवेत्।

नित्यस्नायी नरो यस्तु नरकं स न पश्यति ॥१५२॥

---

दानशतं बहुलदानमित्यर्थः ॥१४३॥

---

करने से व्याधिहीन, रोगहीन, तेजस्वी होता है। एक दिन अन्तर उपवास करने से ब्रह्मलोक में सम्मानपात्र बन सकता है। मौनव्रत धारण करने से तदीय आज्ञा कदाच स्खलिता नहीं होती है। सर्वदा मृत्तिकोपरि आहार सामग्री रखकर भोजन करने से अर्थात् पात्र वर्जन करने से पृथिवी का आधिपत्य लाभ होता है। नखलोम धारण करने से प्रतिदिन गङ्गा स्नान का फल लाभ होता है। एवं नमो नारायणायेति जप करने से शतदान का फल लाभ होता है ॥१३७-१४३॥

श्रीविष्णु के चरणयुगलों की वन्दना करने से गोदान का फल लाभ होता है। श्रीविष्णु के चरण-कमलों को स्पर्श करने से कृतकृत्य हो जाता है। श्रीविष्णु मन्दिर में उपलेप प्रदान करने से वा मार्जन करने से मानव, आकल्प काल राजपद में अधिष्ठित हो सकते हैं, इसमें सन्देह नहीं है। स्तवपाठ के सहित तीन बार श्रीविष्णु-मन्दिर प्रदक्षिण करने से हंसयान में आरोहण पूर्वक विष्णुधाम में गमन होता है। विष्णु-मन्दिर में गीत वा वाद्यध्वनि करने से गन्धर्वलोक में निवास होता है। नित्य शास्त्रामोद द्वारा मानव को प्रबोध प्रदान करने से वह व्यासरूपी पुरुष अन्तिम में विष्णुधाम में गमन करता है। कुसुम मालिका के द्वारा पूजा करने पर विष्णुधाम में गति होती है। विष्णु-मन्दिर प्रोक्षण करने से अप्सरालोक में निवास होता है। तीर्थ प्रभृति में स्नान करने से देह निर्म्मल होता है ॥१४४-१४९॥

हे पार्थ! पञ्चगव्य सेवन करने से चान्द्रायण व्रत का फल लाभ होता है, नित्य एकाहारी होने से अग्निहोत्र का फल मिल जाता है। रात्रि में भोजन करने पर अखिल तीर्थ-यात्रा का फल लाभ होता है। अयाचित रूप से प्राप्त द्रव्य भोजन करने पर वापी, कूप, जल सत्र दान का फल लाभ होता है। दिन के

भाजनं वर्ज्जयेद्यस्तु स स्नानं पौष्करं लभेत् ॥१५३॥
पत्रेषु यो नरो भुङ्क्ते कुरुक्षेत्रफलं लभेत् ।
शिलायां भोजनं नित्यं भवेत् स्नानं प्रयागजम् ॥१५४॥
यामद्वयजलत्यागान्न रोगैः परिभूयते । एवमादिव्रतैः पार्थ तुष्टिमायाति तोषितः ॥१५५॥
किञ्च—
योगनिद्रां समालम्ब्य शेषाहिशयने स्वपन् । क्षीरोदतोयवीच्यग्रैर्धौतपादः समाहितः ॥१५६॥
लक्ष्मीकराम्बुजैः श्लक्ष्णैर्मृज्यमानपदद्वयः ॥१५७॥
तस्मिन् काले च मद्भक्तो यो मासांश्चतुरः क्षिपेत् । व्रतैरनेकैर्नियमैः पाण्डवश्रेष्ठ मानवः ।
कल्पस्थायी विष्णुलोके भवेन्नास्त्यत्र संशयः ॥१५८॥
सत्यां व्रतसमाप्तौ च श्रीकृष्णस्य प्रसादतः । यद्यद्दानादिकृत्यञ्च लेख्यं तत्तच्च कार्त्तिके ॥१५९॥
स्तुत्वाथ कृष्णमभ्यर्च्चर्य प्रसाद्य च पुनः पुनः । शेषं शङ्खोदतीर्थे च स्वीकुर्य्याद्वैष्णवैः सह ॥१६०
गीतनृत्यादिना देवं परितोष्याथ वैष्णवान् । सम्पूज्य नरयानेन देवं स्वालयमानयेत् ॥१६१॥
प्रभोर्नीराजनं कृत्वा विसर्ज्ज्य वत वैष्णवान् । निवेश्य स्वासने देवं शयीत भुवि तं स्मरन् ॥१६२

---

भाजनं – कांस्यपात्रम् ॥१५३॥
एवमादिव्रतैस्तोषितः सन् श्रीकेशव इति शेषः ॥१५५॥
तमेव विशिनष्टि— योगेति सार्द्धेन । समाहितः— योगनिद्रामास्थितः ॥१५६॥
कार्त्तिके—कार्त्तिककृत्यलिखने ॥१५९॥
स्तुत्वा श्रीब्रह्मस्तुत्यादिभिः स्तुतिं कृत्वा, अभ्यर्थ्य 'स्वस्त्यस्तु विश्वस्य' इत्यादिना सम्प्रार्थ्य, प्रसाद्य विचित्रार्थवचनैः प्रसन्नं कृत्वा, शेषं भगवदुच्छिष्ट-महाप्रसाद-पुष्पचन्दनादिकम्, शङ्खोदकं तीर्थञ्च श्रीचरणोदकम् ॥१६०॥

---

षष्ठ भाग में भोजन करने पर स्वर्ग में स्थिर होकर वास मिलता है । नित्यस्नायी मानव को कदापि निरय दर्शन नहीं करना पड़ता है । एवं कांस्यपात्र वर्ज्जन करने से पुष्कर स्नान का फल मिल जाता है । नित्य प्रस्तरोपरि भोजन करने से प्रयाग स्नान का फल लाभ होता है । यामद्वय जल वर्जन करने से रोगाक्रान्त होना नहीं पड़ता है । हे पार्थ ! इस प्रकार व्रतानुष्ठानपूर्वक केशव को सन्तुष्ट करने से, केशव प्रसन्न होते हैं । ॥१५०-१५५॥

और भी वर्णित है—भगवान् हरि योगनिन्द्रा अवलम्बन करके शेष शय्या में शयन करने पर क्षीर-सागर के जल तरङ्गों के द्वारा तदीय चरणयुगल प्रक्षालित एवं कमलदेवी के सुकोमल कर-कमलों के संमार्ज्जित होते हैं ॥१५६-१५७॥

हे पाण्डवश्रेष्ठ ! मेरे भक्तों के मध्य में जो मानव इस समय अनेक प्रकार व्रत नियम ग्रहण करके मास चतुष्टय अतिवाहित करते हैं, वे कल्पकाल विष्णुलोक में वास करते हैं । इसमें सन्देह नहीं है । श्रीकृष्ण की कृपा से व्रत समाप्त जो दानादि करना पड़ता है, कार्त्तिक व्रत प्रसङ्ग में उसका वर्णन किया जायेगा ॥१५८-१५९॥

अनन्तर श्रीहरि का स्तव एवं पूजन करके पुनः पुनः उसकी प्रसन्नता साधन पूर्वक वैष्णववृन्द के सहित मिलित होकर भगवदुच्छिष्ट महाप्रसाद-पुष्पचन्दनादि, शङ्खोदक एवं तीर्थ अर्थात् श्रीचरणामृत अङ्गीकार

एवञ्च कुर्व्वतो मासांश्चतुरो यान्ति वै सुखम । अन्यथा प्रभवेद्दुःखमनावृष्टिश्च जायते ॥१६३॥

तथा च भविष्ये—

मिथुनस्थे सहस्रांशौ न स्वापयति यो हरिम् । वैष्णवैः सह सम्भूय ह्यनावृष्टिस्तदा भवेत् ॥१६४

किञ्च भविष्योत्तरे—

यो देवशयनं पार्थ अनुमोद्य समाचरेत् । उत्थानं वापि कृष्णस्य स हरेर्लोकमाप्नुयात् ॥१६५

अथ श्रावणकृत्यम्

गौतमीये—

श्रावणे मासि कृष्णं तं पुष्पैः केतकसम्भवैः । चन्द्रचन्दनकस्तूरीकुङ्कुमादिसुवासितैः ।

एलालवङ्गकक्कोलफलानि बहुधार्पयेत् ॥१६६॥ इति ।

पवित्रारोपणं कुर्य्याद्द्वादश्यामृषितर्पणम् । पौर्णमास्यान्तु कुर्व्वीत तत्तदुक्तविधानतः ॥१६७॥

अथ पवित्रारोपणम्

श्रावणस्य सिते पक्षे द्वादश्यां वैष्णवैर्मुदा । कर्त्तव्यः कृष्णदेवस्य पवित्रारोपणोत्सवः ॥१६८॥

अथ तन्नित्यता

बह्वृचपरिशिष्टे—

स स्नातः सर्व्वतीर्थेषु सर्व्वयज्ञेषु दीक्षितः । हरिश्च प्रीतिमाप्नोति यः पवित्रं समाचरेत् ॥१६९

---

अनुमोद्य हृष्टो भूत्वेत्यर्थः, यद्वा, अनुमोदनद्वारापि यः कुर्य्यादिति ॥१६५॥

द्वादश्यां भगवतः पवित्रारोपणं कुर्य्यात्, पौर्णमास्याञ्च ऋषितर्पणं कुर्य्यात, तत्र तत्र पवित्रारोपणे ऋषि-तर्पणे च यत् शास्त्रोक्तं विधानं प्रकारस्तेन ॥१६७॥

प्रथमं श्रीभगवत्प्रीणनत्वान्नित्यतां दर्शयति— स स्नात इति ॥१६९॥

---

करना पड़ता है। गीत, नृत्य, प्रभृति द्वारा प्रभु का सन्तोष विधान एवं वैष्णववृन्द को सम्मान प्रदर्शन करके शिविका के द्वारा प्रभु को निज भवन में आनयन करना होता है। प्रभु की आरात्रिक का सम्पादन करने के पश्चात् वैष्णव वर्ग को विदा करके सिंहासन में प्रभु को विराजमान करे एवं स्वयं भूमि शय्या में शयन करे। इस प्रकार व्रतानुष्ठान करने से चार मास आनन्द से अतिवाहित होते हैं। अन्यथा दुःख एवं अनावृष्टि का सञ्चार होता है ॥१६०-१६३॥

उक्त विषय में भविष्यपुराण में लिखित है—दिवाकर, मिथुनराशिस्थ होने पर वैष्णववृन्द के सहित मिलित होकर श्रीहरि को शयन न कराने पर अनावृष्टि होती है ॥१६४॥

भविष्यपुराण में और भी लिखित है—हे पार्थ ! जो हृष्ट होकर, श्रीकृष्ण का शयन एवं उत्थापन कृत्य का अनुष्ठान सम्यक् अनुमोदन पूर्वक करते हैं, वे हरिधाम में प्रस्थान करते हैं ॥१६५॥

अथ श्रावणकृत्यम्

गौतमीय तन्त्र में लिखित है- श्रावण मास में श्रीकृष्ण को कर्पूर, चन्दन, कस्तूरी एवं कुङ्कुमादि द्वारा एवं सुरभीकृत केतकी कुसुम द्वारा पूजा करके एला (एलाच, इलायची), लवङ्ग (लौंग) कक्कोल प्रभृति फल निवेदन करे ॥१६६॥

यथाविधि श्रावण की द्वादशी तिथि में पवित्रारोपणोत्सव एवं पूर्णिमा में ऋषि तर्पण करना चाहिये ॥१६७

अथ पवित्रारोपणम्

श्रावणी शुक्ला द्वादशी तिथि में वैष्णववृन्द श्रीकृष्ण के उद्देश्य में आनन्द के सहित पवित्रारोपण करें ॥१६८

अथ तन्नित्यता

बह्वृच परिशिष्ट में लिखित है—जो मानव, पवित्रारोपण कार्य्य का अनुष्ठान सम्यक् रूप से करते हैं,

विधिना शास्त्रदृष्टेन यो न कुर्य्यात् पवित्रकम् । हरन्ति राक्षसास्तस्य वर्षपूजादिकं फलम् ।।१७०

योगसारे पवित्रोत्पत्त्युपाख्याने नागराज-पवित्रं प्रति रुद्रेण वरप्रदानम्—

ये त्वां न बहु मन्यन्ते यथा सम्भावितो मया । जपहोमादिकं तेषां फलं त्वामेतु निश्चयात् । १७१

विष्णुरहस्ये —

न करोति विधानेन पवित्रारोपणन्तु यः । तस्य सांवत्सरी पूजा निष्फला मुनिसत्तम ।।१७२।।

तस्माद्भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः । वर्षे वर्षे तु कर्त्तव्यं पवित्रारोपणं हरेः ।।१७३।।

अथ पवित्रारोपणमाहात्म्यम्

तत्र बौधायनः—

यावत् सूत्रं पवित्रस्य तावत् स्वर्गे महीयते । आयुरारोग्यमैश्वर्य्यं विपुलं तस्य वर्द्धते ।।१७४।।

महासंहितायाम्—

संवत्सरेण या पूजा कृता वै मन्त्रिणा द्विज ।
पवित्रदानात् पूर्णा स्यादित्याह भगवान् हरिः ।।१७५।।

---

अकरण-प्रत्यवायद्वारा नित्यतां लिखति—विधिनेति त्रिभिः । आदि-शब्देन जपहोमादि, फलमिति भगवत्पूजादेः, अतएव फलरूपत्वात् ।।१७०।।

पवित्रोपाख्यानं चेदम्—"नागराजस्य वासुकेर्भ्राता श्रीपवित्रनामा नागवरो भक्त्या श्रीशिवमाराध्य सन्तुष्टे च तस्मिन् वरमयाचत—'त्वत्कण्ठभूषणतां प्राप्नुयाम्' इति । ततश्च परमसन्तुष्टेन श्रीशिवेन तथा स्वीकृत्योक्तमिदम्—'एवं सर्व्वेषामेव देवानां कठभूषणतां व्रज, तत्तत्सेवकैः सर्व्वैरपि स्वस्वेष्टदेवे त्वदाकारत्वेन पवित्राणि निर्म्मायारोप्यन्तामन्यथा च महान् दोषोऽस्तु' इति ।" तदेव लिखति—ये त्वामिति ।।१७१।।

वर्षे वर्षे कर्त्तव्यमिति वीप्साविधिद्वारा नित्यता उक्ता; वसन्ते वसन्ते ज्योतिषा यजेतेतिवत् । तत्र च विष्णुपरायणैरिति वैष्णवानामावश्यकतममिति बोधितम् ।।१७३।।

महीयते पूज्यते पवित्रारोपकः ।।१७४।

---

वे सर्व तीर्थ स्नात, एवं सर्वयज्ञ में दीक्षित हुए हैं, ऐसा जानना चाहिये एवं श्रीहरि भी उन पर प्रसन्न होते हैं । शास्त्रदृष्ट विधानानुसार पवित्रारोपण न करने से राक्षस समूह तदीय वार्षिकी पूजा का फल ग्रहण करते हैं ।।१६९-१७०।।

योगसार के पवित्रोत्पत्ति उपाख्यान में नागराज पवित्र के प्रति रुद्र के वरदान प्रसङ्ग में लिखा है— मैंने जिस प्रकार तुमको सम्मानित किया हूँ, जो लोक तुमको तद्रूप बहुमान प्रदान नहीं करते, उनके द्वारा अनुष्ठित जप एवं होमादि का फल निश्चित रूप से तुमको मिलेगा।।१७१।।

विष्णुरहस्य में लिखा है - हे मुनिसत्तम ! शास्त्रविधि के अनुसार पवित्रारोपण न करने से संवत्सरकृत पूजा वृथा हो जाती है । सुतरां वर्ष वर्ष में भक्तिपूर्वक श्रीहरि का पवित्रारोपण करना चाहिये ।।१७२-१७३

अथ पवित्रारोपणमाहात्म्यम्

बौधायनोक्ति है—जब तक पवित्र का सूत्र विद्यमान रहता है, तब तक देवलोक में सम्मान लाभ होता है एवं दीर्घायुः नीरोगता, विपुल ऐश्वर्य्य लाभ भी होता है ।।१७४।।

महासंहिता में लिखित है - हे द्विज ! भगवान् श्रीहरि कहे हैं, पवित्र दान करने से साधक को संवत्सर कृत पूजा का फल सिद्ध होता है ।।१७५।।

विष्णुरहस्ये—

पवित्रारोपणं विष्णोर्भुक्तिमुक्तिप्रदायकम् । स्त्रीपुंकीर्त्तिप्रदं पुण्यं सुखसम्पद्धनावहम् ॥१७६॥

पुण्यानान्तु तथा पुण्यं सर्व्वपापहरं तु वै । पवित्रारोपणं तस्मात् पवित्रं परमं स्मृतम् ॥१७७॥

संवत्सरेण यो भक्त्या समभ्यर्च्चर्य जनार्द्दनम् ।

यत् फलं समवाप्नोति पवित्रारोपणेन तत् ॥१७८॥

किञ्च—

पावयत्येनसो नित्यं त्रायते भवबन्धनात् । पवित्रं तेन विख्यातं ब्राह्मं तेजोऽभिधीयते ॥१७९॥

विष्णवाख्यया तु विख्यातं तदा लोके विधीयते । स एव सूत्ररूपेण यज्ञेशः कर्म्मणां प्रभुः ॥१८०

तदेव त्रिगुणीसूत्रं ततं नारायणाख्यया । त्रिवेदात्मा त्र्यक्षरः प्रणवः स्मृतः ॥१८१॥

तत्र बौधायनाद्युक्तः पवित्रारोपणे विधिः ।

सम्मतो विदुषां कृष्णार्च्चने योऽत्र स लिख्यते ॥१८२॥

---

स्त्रीपुंसोः स्त्रीपुंसयोर्दम्पत्योः कीर्त्तिप्रदम्, यद्वा, स्त्रीणां पुंसाञ्च कीर्त्तिप्रदमिति, वैष्णवीभिः स्त्रीभिरपि विष्णोः पवित्रारोपणं कार्य्यमित्यभिप्रेतम् ॥१७६॥

पुण्यानां मध्ये पुण्यं परमश्रेष्ठमित्यर्थः । एवञ्च पवित्रं नाम निरुक्तम् ॥१७७॥

विशेषतस्तदेव निर्व्वक्ति—पावयतीति । यतः तद्ब्राह्मं परमब्रह्ममयं तेज इत्यभितो गीयते ॥१७९॥

एवं वनमालादिवच्छ्रीभगवतः प्रत्यङ्गरूपेण तदभेदतां दर्शयन् माहात्म्यविशेषमाह—विष्णवाख्ययेति द्वयेन । तत्र हेतुः—स एवेति ॥१८०॥

त्रयाणां गुणानां समाहारः त्रिगुणी, तन्मयं सूत्रम्; त्रिगुणत्वे कारणमाह— त्रिदेवेति । त्रयो देवा ब्रह्माद्या-स्तदात्मकः । एवं श्रीवैकुण्ठलोके भगवद्भूषणत्वेन नित्यसिद्धमेव पवित्रं श्रीमहेश्वरापेक्षया श्रीवैष्णवानां भक्तिविशेषेण त्रिगुणीकृतसूत्रनिर्म्मितपवित्रे श्रीमूर्त्तौ स्वयं भगवानिधिष्ठयात्रापि श्रीभगवन्मूर्त्तेर्भूषणतां प्रयातीति बोद्धव्यम् । अतएवावाहनमन्त्रे 'विष्णुलोकात् पवित्राद्य आगच्छ' इति ॥१८१॥

विदुषां सम्मत इति सम्प्रदायभेदेन विविधः स्यात्तत्र शास्त्राभिज्ञसम्प्रदायानुमतो विधिरत्र लिख्यत इत्यर्थः ॥१८२॥

---

विष्णुरहस्य में लिखित है—श्रीविष्णु का पवित्रारोपण भुक्ति, मुक्ति, प्रदायक, पुण्य स्वरूप एवं सुख, सम्पद् एवं धनवर्द्धक है । पवित्रारोपण पुण्यसमूह के मध्य में पुण्य एवं सर्वपाप हर है, एतज्जन्य परम पवित्र कहा गया है । भक्तिपूर्वक संवत्सर श्रीहरि की पूजा करने पर जो फल लाभ होता है, पवित्रारोपण करने से वही फल मिल जाता है ॥१७६-१७८॥

और भी लिखित है—पातक विशोधन पूर्वक पवित्रता विधान करते हैं, एवं संसार बन्धन से उद्धार करते हैं, तज्जन्य पवित्र नाम प्रख्यात है । वह परब्रह्म का तेज नाम से अभिहित है । सर्व कर्मों के प्रभु यज्ञेश सूत्र रूप धारण किये हैं, तज्जन्य पवित्र विष्णु नाम से प्रसिद्ध है । त्रिगुणित सूत्र नारायण नाम से कथित होने के कारण यह पवित्र, ब्रह्मादि देवत्रय, सामादि वेदत्रय एवं त्रिवर्णात्मक प्रणव नाम से प्रसिद्ध है । पवित्रारोपण के सम्बन्ध में बौधायन प्रभृति कर्त्तृक वर्णित जो सब विधान श्रीकृष्ण पूजा हेतु बुधगण द्वारा अनुमोदित हैं, यहाँ पर उन्हीं का वर्णन किया जाता है ॥१७९-१८२॥

अथ पवित्रारोपणविधिः

सौवर्णं राजतैस्ताम्रैः क्षौमैः सूत्रैस्तु पाद्मिकैः ।
कार्पासैर्वा पवित्राणीष्यन्ते काशैः कुशैरपि ।१८३॥

तत्र कार्पासिकं सूत्रं ब्राह्मणीकर्त्तितं शुभम् । आनीय त्रिगुणीकृत्य पुनस्त्रिगुणयेत् शुचिः ॥१८४
पञ्चगव्येन तत् प्रोक्ष्य प्रक्षाल्य शुचिनाम्बुना । मूलेनाष्टोत्तरशतं मन्त्रेणाथाभिमन्त्रयेत् ॥१८५
त्रीणि साष्टशतेनास्य तस्यार्द्धेनास्य चार्द्धतः । जानूरुनाभिदघ्नानि पवित्राण्याचरेत् प्रभोः ॥१८६
षट्त्रिंशद्ग्रन्थयस्तेषामाद्ये कार्य्यास्तु मध्यमे । चतुर्विंशतिरन्ते च द्वादश ग्रन्थयो बुधैः ॥१८७

---

सौवर्णादीनां सूत्राणां मध्ये पूर्व्वपूर्व्वाभावे परैः परैरिति ज्ञेयम् । तत्र क्षौमैः पट्टसूत्रैः, पाद्मिकैः पद्मसूत्रैः॥१८३

अत्र कार्पासिकेषु कश्चिद्विशेषं दर्शयन् आदौ पवित्रनिर्म्माणविधिं लिखति—तत्रेत्यादिना । ब्राह्मण्या ब्राह्मणकुमार्य्या सुशीलया वा विधवया, न तु शूद्रया दुःशीलया वा कर्त्तितं, शुभमुत्तमं लिखितन्यायेन कर्त्तितं स्वतश्च अनतिस्थौल्यादिना । शुचिः स्नानादिना पवित्रः सन् ॥१८४॥

तत् नवगुणीकृतसूत्रं शुचिना शुद्धेन जलेन प्रक्षाल्य, अथानन्तरं मूलेन मन्त्रेणाष्टोत्तरशतवारान् अभिमन्त्रयेत् ॥१८५॥

तेन च सूत्रेण ज्येष्ठ-मध्यम-कनिष्ठानि त्रीणि पवित्राणि क्रमेण शुचौ देशे वैष्णवैः सह यज्ञोपवीतवत् बध्नीयादिति लिखति—त्रिणीति । अस्य नवगुणीकृतसूत्रस्य साष्टशतेनाष्टोत्तरशतेन तावद्गुणितेनेत्यर्थः । एवमग्रेऽपि । तस्य साष्टशतस्यार्द्धेन चतुःपञ्चाशता, अस्य तदर्द्धस्य चार्द्धतः सप्तविंशत्येत्यर्थः । एवं स्थौल्य-परिमाणं लिखित्वा दैर्घ्यपरिमाणं लिखति—प्रभोः श्रीभगवन्मूर्त्तेः क्रमेण जान्वादिमात्राणीति, तत्राष्टोत्तरशत-नवसूत्रीभिर्जानुपर्य्यन्तं ज्येष्ठं, चतुःपञ्चाशता चोरुपर्य्यन्तं मध्यमं, सप्तविंशत्या च नाभि-पर्य्यन्तं कनिष्ठमिति ज्ञेयम् ॥१८६॥

पवित्राणां मध्ये मध्ये च समभागेन ग्रन्थीन् बध्नीयादिति लिखति—षट्त्रिंशदिति । तेषां त्रयाणां मध्ये आद्ये ज्येष्ठे, मध्यमे चतुर्विंशतिग्रन्थयः कार्य्याः, अन्ते कनिष्ठे ॥१८७॥

---

अथ पवित्रारोपणविधिः

विज्ञजन, स्वर्ण, रौप्य, ताम्र, पट्टसूत्र, पद्म, कार्पाससूत्र, काश एवं कुश निर्मित पवित्र को पवित्र कहते हैं । इन सबके क्रमान्वय में उत्तरोत्तर ग्राह्य है, अर्थात् सोने के अभाव में चाँदी, चाँदी के अभाव में ताँबा, ताँबे के अभाव में पट्टसूत्र, इस प्रकार ग्रहण करना चाहिये ॥१८३॥

उसमें पवित्र भाव से ब्राह्मण की कुमारी द्वारा कात्तित अथवा सुस्वभावा ब्राह्मणी के द्वारा कात्तित कार्पास सूत्र ही उत्तम है । उसको लाकर त्रिगुणी कृत करके उसको भी पुनर्वार त्रिगुणित करे । तत्पश्चात् पञ्चगव्य द्वारा प्रोक्षण पूर्वक विशुद्ध जल से धौत करके एकशत अष्टसंख्यक मूलमन्त्र का पाठ करके उसको अभिमन्त्रित करे ।१८४-१८५॥

अनन्तर उक्त त्रिगुणित सूत्र श्रेष्ठ से, श्रेष्ठ, मध्यम, एवं कनिष्ठ भेद से (१०८) अष्टोत्तरशत, किंवा (५४) चतुपञ्चाशत् अथवा सप्तविंशति (२७) सूत्र द्वारा यज्ञसूत्रवत् पवित्र निर्म्माण करे और देवमूर्त्ति के जानु, ऊरु, एवं नाभि पर्य्यन्त प्रमाण पूर्वक देवता को प्रदान करे ॥१८६॥

उत्तम पवित्र में षट्त्रिंशत् (छत्तीस) मध्यम पवित्र में चतुर्विंशति (२४) एवं कनिष्ठ पवित्र में द्वादश (१२) ग्रन्थि करना चाहिये । अर्थात् पवित्र के मध्य मध्य में समभाग से गाँठें देनी चाहिये । उत्कृष्ठ पवित्र

अङ्गुष्ठपर्व्वमात्रन्तु कुर्य्यादग्रन्थिमथोत्तमे । तदर्द्धं मध्यमे कुर्य्यात्तदर्द्धञ्च कनीयसि ॥१८८॥
ग्रन्थीन् कुर्व्वीत सर्व्वत्र सुवृत्तान् सुमनोहरान् ।
न वै विषमसंख्याकान् ग्रन्थीन् कुर्व्वीत कुत्रचित् ॥१८९॥
अष्टोत्तरसहस्रेण तत्सूत्रस्य पवित्रकम् । अष्टोत्तरशतग्रन्थिवनमालाख्यमाचरेत् ॥१९०॥
आरभ्य मुकुटं या तु सूत्रैर्विरचिता शुभा । आपादलम्बिनी माला वनमाला प्रकीर्त्तिता । १९१
कुर्य्याद्गन्धपवित्रञ्च सूत्रैर्द्व दशभिः शुभैः । अरत्निप्रमितं तच्च द्वादशग्रन्थिकं कृती ॥१९२॥
पवित्राणि परिवारदेवतानां समाचरेत् । सूत्रैस्तैरुडुसंख्याकैः कलासंख्यार्कसंख्यकैः ॥१९३॥
तेषु ग्रन्थीन् यथाशोभं बद्ध्वा वह्नेर्गुरोरपि । सप्तविंशतिभिः सूत्रैः षड्विंशतिभिरात्मनः ॥१९४
यथासम्भवमन्येषां पवित्राणि च कारयेत् । सम्पादयेच्च सर्व्वाणि शोभनान्येव यत्नतः ॥१९५॥

ग्रन्थिपरिमाणं लिखति—अङ्गुष्ठेति । तत्राङ्गुष्ठपर्व्व च श्रीभगवन्मूर्त्तेर्ग्राह्यम् अन्यथा ह्रस्वश्रीमूर्त्तेः पवित्रस्यापि ह्रस्वत्वे यजमानाङ्गुष्टपर्व्व-परिमिन तावद्ग्रन्थिसन्निवेशाभावात् । तदर्द्धमङ्गुष्ठपर्व्वार्द्धं तच्च मध्यमे, तदर्द्धं च अङ्गुष्ठपर्व्वपादमितं कनिष्ठे ग्रन्थिं कुर्य्यादित्यर्थः ॥१८८॥

सर्व्वत्र सर्व्वेष्वेव पवित्रेषु. वै प्रसिद्धौ. तत्रर्थे वा, विषमसंख्याकानयुग्मान् कुत्रचित् परिवारादिपवित्रेष्वपि न कुर्य्यात् ॥१८९॥

तस्य नवगुणीकृतस्य सूत्रस्य, अष्टोत्तरशतं ग्रन्थयो यस्मिन् तत् ॥१९०॥

वनमाला-पवित्रपरिमाणं लिखति— आरभ्येति । मुकुटाभावे सति श्रीमस्तकं ग्राह्यम् ॥१९१॥

तैर्नवगुणीकृतैः सूत्रैरधिवासनार्थं समर्प्यं पवित्रं यत, तद्गन्धपवित्रम् ॥१९२॥

उडूनि नक्षत्राणि, तत्संख्यादिगुणितैः तैर्नवगुणीकृतैः सूत्रैः क्रमेण ज्येष्ठ-मध्यम-कनिष्ठाणि त्रीणि पवित्राणि सम्यगाचरेत् । तत्र उडूनि सप्तविंशतिः, कलाः षोड़श, अर्का आदित्या द्वादश ॥१९३॥

गुरोरग्नेश्च द्वे पवित्रे सप्तविंशतिभिर्नवगुणीकृतसूत्रैरात्मनो यजमानस्य पवित्र षड्विंशतिभिः कुर्य्यात् ॥१९४

अन्येषां वैष्णवादीनां तत्र तत्राशक्तावपि लिखितानि सर्व्वाण्येव पवित्राणि सुन्दराण्येव कुर्य्यादिति लिखति – सम्पादयेदिति ॥१९५॥

में श्रीभगवान् के अङ्गुष्ठ पर्व परिमाण दूर दूर में ग्रन्थि प्रदान करे । उस प्रकार मध्यम पवित्र में अङ्गुष्ठ प्रमाण के अर्धमाण में एवं कनिष्ठ पवित्र में अङ्गुष्ठार्ध के अर्ध परिमाण में गाँठ देनी चाहिये । पवित्र के समस्त स्थानों में मनोहर गोलाकृति ग्रन्थि बन्धन करना पड़ता है, अयुग्म ग्रन्थि प्रदान करना कभी उचित नहीं है ॥१८७-१८९॥

अष्टाधिक सहस्र (१००८) सूत्र से पवित्र निर्म्माण करके उसमें अष्टोत्तरशत (१०८) ग्रन्थि प्रदान करे । इस प्रकार करने से उस पवित्र को 'वनमाला' कहा जाता है । सूत्र द्वारा प्रस्तुत पवित्र माला, यदि शिरः स्थित मुकुट से आरम्भ कर आपाद लम्बि होती है तो वह माला 'वनमाला' नाम से कही जाती है ॥

विचक्षण व्यक्ति, द्वादश संख्यक शुभद सूत्र द्वारा अरत्नि प्रमाण-(कनिष्ठाङ्गुलि भिन्न मुष्टि) अर्थात् विस्तृत कनिष्ठाङ्गुलि मुष्टि परिमत) द्वादश ग्रन्थि समन्वित सुरभित पवित्र प्रस्तुत करे । सप्तविंशति, षोड़श, अथवा द्वादश संख्यक सूत्र के द्वारा परिकर देववृन्दों का पवित्र निर्माण करना चाहिये । नवगुणित सप्तविंशति सूत्र से (यजमान) के निमित्त पवित्र प्रस्तुत पूर्वक, उसमें शोभा के अनुसार ग्रन्थि बन्धन करे । अन्यान्य वैष्णवों के निमित्त यथासम्भव पवित्र प्रस्तुत करे । सब पवित्रों को ही सुशोभन रूप से यत्नपूर्वक निष्पादन करे ॥१९०-१९५॥

तथा चोक्तम्—

विशोभसूत्रदानेन कर्त्तुः स्यादशुभं फलम्।

पवित्रं परया भक्त्या तस्मात् कुर्व्वीत शोभनम् ॥१९६॥ इति।

रञ्जयित्वाथ काश्मीरागुरुगोरोचनादिभिः। वस्त्रेणाच्छाद्य पटले स्थापयेत्तानि वैणवे ॥१९७

इति पवित्रनिर्म्माणम्।

कृत्वा कृत्यं दशम्याञ्च पवित्रारोपणाय हि। कृष्णं विज्ञाप्य तद्रात्रिं यथा प्राग्लिखितं नयेत् ॥१९८

एकादश्यां प्रभाते च नित्यकृत्यं समाप्य हि। देवालयमुपस्कृत्य मण्डलं रचयेत् शुभम् ॥१९९

---

विशोभस्य शोभारहितस्य सूत्रस्य पवित्रस्य दानेन कर्त्तुर्यजमानस्य, शोभनं सुन्दरम् ॥१९६॥

अथ निर्म्माणानन्तरं तानि सर्व्वाणि पवित्राणि काश्मीरादिना रञ्जयित्वा यथाशोभं सर्व्वत्र ग्रन्थिषु वा रङ्गं कारयित्वा वैणवपटलसम्पुटान्तः शुभ्रवस्त्रेणाच्छाद्य स्थापयेत्। आदि शब्देन कर्पूरादि, तत्राशक्तौ केवलकुङ्कुमेनापि, तत्राप्यशक्तौ हरिद्रादिनापीति ज्ञेयम् ॥१९७॥

इदानीं पवित्रारोपणोत्सवे दशम्यादिदिनत्रयकृत्यानि लिखन्नादौ दशमीकृत्यं लिखति—कृत्वेति। दशम्यां कृत्यञ्च यथा प्राग्लिखतं पूर्व्वं दशमीनियमे यल्लिखितं तदनुसारेण ज्ञेयम्। तच्च दशमीनियमेन कृतैकभक्तो विहितकाष्ठेन दन्तान् शोधयित्वा द्विराचम्य सन्ध्याकृत्यं निर्व्वर्त्त्य भगवन्तं पूजयेदिति। ततश्च पुष्पाञ्जलिं दत्त्वा भगवन्तं विज्ञाप्य 'तव यागं करिष्येऽहं पवित्रमयमच्युत। आमन्त्रितोऽसि भगवन् परिवारयुतो मया॥' इत्यादि संप्रार्थ्य, तस्या दशम्या रात्रिञ्च यथा प्राग्लिखितमेव ब्रह्मचर्य्य-भूशयनादिनियमेन नयेदतिवाहयेत्। तत्र च केषाञ्चिन्मते दशमीरात्रिमित्थं नीत्वा एकादश्यां प्रातः कृतनित्यकृत्यो भगवन्तमभ्यच्चर्य पवित्रारोपण-सङ्कल्पं यथावत् कृत्वा पवित्रारोपणोपकरणानि यथाशक्ति सम्भृत्य गुरुं प्रणम्य सन्निधौ च सतस्तस्यानुज्ञया पवित्राणि कुर्य्यादिति। तच्च तस्मिन्नेवैकादशीदिने पवित्रनिर्म्माणाद्यखिलकर्म्मसु शक्तस्य तथैव बोद्धव्यमिति दिक् ॥१९८॥

एकादशीदिनकृत्यं लिखति—एकादश्यामित्यादिना निशीत्यन्तेन। नित्यकृत्यं प्रातःस्नानादि, उपस्कृत्य लेपनादिना वितानबन्धनादिना चालङ्कृत्य, शुभं मण्डलं सर्व्वतोभद्रादि; अत्र केषाञ्चिन्मतेऽधिकमिदम्—आदौ द्वाराधिष्ठातृदेवतार्च्चनपूर्व्वकं यागमण्डपं प्रविश्य षट्त्रिंशद्दर्भदलैर्वेणीमरत्निसम्मितां निर्म्माय मूल-मन्त्रेण तां पञ्चगव्यविशुद्धां विधाय भूतशुद्धिं कृत्वा पञ्चगव्याक्तया तया वेण्या सर्व्वतो यागमण्डपाभ्यन्तरं प्रोक्षयेत्। ततो गुर्व्वादिनमस्कारपूर्व्वकं स्वागमोक्तप्रकारेण न्यासजालं कृत्वा नृसिंहवीजेन सर्षपानभिमन्त्र्य दिक्षु निक्षिपेत्। तांश्च प्राकाराकारेणावस्थितान् विचिन्तयेत्। ततश्च सुशीलं वेदवेदाङ्गपारगं वैष्णवमेकं होमार्थं विधिवद्वृणुयात्। स चागमोक्तप्रकारेण स्वगृह्योक्तविधिनाष्टोत्तरशतमष्टाविंशतिवारान् आज्याहुती-र्हुत्वा संस्रवपात्रे आहुतशेषाज्यं पवित्रसंस्कारार्थं निक्षिपेत्। यजमानस्तु यथाविधि न्यासान् कृत्वा, नैमित्तिकीं महापूजां कृत्वा पश्चात् पवित्रारोपणोत्सवहेतुकां महापूजां विधिवदारभेतेति ॥१९९॥

---

उक्त विषय में लिखित है—सुदृश्य न होने पर उस पवित्र से दानकर्त्ता का अमङ्गल होता है, अतएव परम भक्ति के सहित सुन्दर पवित्र प्रस्तुत करना चाहिये ॥१९६॥

कुङ्कुम, अगुरु, गोरोचना प्रभृति द्वारा पवित्र रञ्जित करके शुभ्र वस्त्र से आवृत कर वंशनिर्मित सम्पुट (पेटिका) में रखना चाहिये ॥१९७॥

इति पवित्रनिर्म्माणम्

पूर्वोक्त विधानानुसार दशमी के यावतीय नियम समापन पूर्वक पवित्रारोपण के निमित्त श्रीकृष्ण को विज्ञापित करके रात्रि अतिवाहित करे। दशमी के नियम से एक बार भोजन, विहित काष्ठ से दन्तशोधन,

कृत्वा कृष्णस्य नित्यार्च्चां पवित्रारोपणार्थकाम् ।
पूजां विशेषतः कृत्वा कृष्णं विज्ञापयेदिदम् ॥२००॥

क्रियालोपविघातार्थं यत्त्वया विहितं प्रभो । मयैतत् क्रियते देव तव तुष्ट्यै पवित्रकम् ॥२०१

न मे विघ्नो भवेत् त्वत्र कुरु नाथ दयां मयि ।
सर्व्वथा सर्व्वदा विष्णो मम त्वं परमा गतिः ॥२०२॥ इत्यादि ।

देवस्य सर्व्वतो न्यस्येद्दन्तकाष्ठं जलं कुशान् । मृत्तिकाञ्च हरिद्राञ्च कुङ्कुमं रोचनानि च ॥२०३

उपानहौ सितच्छत्रं चामरं व्यजनं तथा । यवव्रीह्यादिधान्यानि यथास्थानं पृथक् पृथक् ।२०४

कुम्भं शुद्धाम्बुनापूर्य्य सर्व्वतोभद्रमण्डले । देवाग्रतो निधायास्मिन् पवित्राण्यधिवासयेत् ।२०५

अथ पवित्राधिवासनम्

भगवत्पुरतस्तानि पटलस्थानि पूजयन् । आदावावाहयेन्मूलयुजा तन्मनुना बुधः ॥२०६॥

---

नित्यार्च्चां नित्यकरणीयपूजां कृत्वा पश्चात् पवित्रारोपणोत्सवहेतुकां पुनर्विशेषत आधिक्येन पूजां कृत्वा, इदं क्रियालोपेत्यादि ॥२००॥

क्रियाणां संवत्सरकृतपुण्यानां लोपस्य यो विघातः परिहारस्तदर्थं पवित्रकं पवित्रारोपणम् । आदिशब्दात् —'उपवासव्रतेन त्वां तोषयामि जगत्पते । कामक्रोधादयो ह्येते न मे स्युर्व्रतघातकाः ॥ अद्य प्रभृति देवेश यावद्वैशेषिकं दिनम् । तावद्रक्षा त्वया कार्य्या सर्व्वस्यास्य नमोऽस्तु ते' इति ग्राह्यम्, तच्च सर्व्वसाधारणत्वान्न स्पष्टं लिखितम् ॥२०१-२०२॥

इदानीमधिवाससम्भारासादनं लिखति– देवस्येति द्वाभ्याम् सर्व्वतः परितः दन्तकाष्ठादीनि यथास्थानं तत्तद्योग्यस्थले पृथक् पृथक् न्यस्येन्निदध्यादिति द्वयोरन्वयः ॥२०३-२०४॥

अधुनाधिवासप्रकारं लिखति—कुम्भमित्यादिना अवगुण्ठयेदित्यन्तेन । अस्मिन् कुम्भे, तदुपरि पवित्राणि वैणवपटलान्तर्निहितान्येव निधाय न्यास्याधिवासयेत् ॥२०५॥

तानि पवित्राणि मूलयुजा मूलमन्त्रयुक्तेन, तस्य पवित्रावाहनस्य मनुना मन्त्रेण ॥२०६॥

---

दो बार आचमन, सन्ध्या कृत्य, इन सबों का अनुष्ठान करके श्रीभगवान् की पूजा करनी चाहिये । एकादशी के दिन, प्रातःकाल में नित्यक्रिया समाप्त करके देवालय लेपन पूर्वक उसमें माङ्गलिक सर्वतोभद्रादि मण्डल अङ्कन करे । पश्चात् श्रीकृष्ण की नित्यपूजा समापन करके पवित्रारोपण के निमित्त विशेष पूजा सम्पादन पूर्वक श्रीकृष्ण को वक्ष्यमाण प्रकार से निवेदन करे ॥१९८-२००॥

हे प्रभो ! हे देव ! संवत्सरकृत पुण्य लोप के परिहारार्थ आपने जो विधान किया है, भवदीय प्रीति के निमित्त ही मैं वह पवित्र अर्पण करता हूँ । हे नाथ ! जिससे मेरे कार्य्य में कोई विघ्न उपस्थित न हो, आप मुझ पर वैसी ही कृपा प्रकाशित कीजिये । हे विष्णो ! सर्वथा सतत आप ही मेरी परमा गति हैं । इस प्रकार निवेदन करके प्रभु के चतुर्द्दिक में दन्तकाष्ठ, जल, मृत्तिका, कुश, हरिद्रा, कुङ्कुम, गोरोचन, पादुका-युगल, श्वेत छत्र, चामर, व्यजन, यव, व्रीहि एवं धान्य,- यह सब यथास्थान में भिन्न भिन्न पात्र में रखना चाहिये । प्रभु के सम्मुख भाग में सर्वतोभद्रमण्डल में पवित्र जलपूर्ण कुम्भ रखकर, उसमें पवित्र समूह का अधिवास करना चाहिये ॥२०१-२०५॥

अथ पवित्राधिवासनम्

प्रभु के सम्मुखवर्त्ती पटलस्थित पवित्र समूह को प्रथमतः मूलमन्त्र समन्वित आवाहन मन्त्र से आवाहन करना ही बुद्धिमान् मनुष्य का कर्त्तव्य है ॥२०६॥

अथ तन्मन्त्रः

ॐ सांवत्सरस्य यागस्य पवित्रीकरणाय भोः।
विष्णुलोकात् पवित्राद्य आगच्छेह नमोऽस्तु ते ॥२०७॥
तेष्वावाह्य यथास्थानं ब्रह्माद्या देवतास्ततः। तत्तन्मन्त्रैः सन्निधाप्याक्षतगन्धादिनार्च्चयेत् ॥२०८

अथ तत्र तत्र देवताः

ब्रह्मविष्णुमहादेवास्त्रिसूत्रीदेवताः स्मृताः। प्रणवो वायुवह्नी च ब्रह्मा नागः शशी रविः।
शिवश्च विश्वेदेवाश्च नवसूत्र्यधिदेवताः ॥२०९॥
क्रिया च पौरुषी वीरा चतुर्थी चापराजिता। जया च विजया चैव मुक्तिदा च सदाशिवा ॥२१०
मनोमयी तु नवमी दशमी सर्व्वतोमुखी। ग्रन्थीनां देवतास्त्वेतास्तत्र तत्र निवेदयेत् ॥२११॥
इति।

तन्मन्त्राः

ॐ सर्व्वाभरणचित्राङ्ग सर्व्वदेवनमस्कृत। लावण्यरूपविश्वात्मन् ज्येष्ठसूत्रं समाश्रय ॥२१२॥
ॐ सर्व्वलक्ष्मीकर श्रीश सर्व्वज्ञानरसात्मक। निवृत्तरूप विश्वात्मन् मध्यसूत्रं समाश्रय ॥२१३

---

अद्य आरोपणकाले, हे आद्येति वा ॥२०७॥

तेषु पवित्रेषु देवताः पवित्राधिष्ठात्रीः यथास्थानं स्वस्वस्थाने आवाहनमुद्रया तत्तन्मन्त्रैरावाह्य सन्निधाप्य, सन्निधीकरणमुद्रया सन्निधीकृत्य, चक्रमुद्रया संरक्ष्य, धेनुमुद्रया अमृतीकृत्य अक्षतादिना पूजयेत्। आदि-शब्देन पुष्पधूपदीपनैवेद्यताम्बूलादि ॥२०८॥

---

अथ तन्मन्त्रः

हे पवित्र! वार्षिक याग को पवित्र करने के निमित्त इस समय आप विष्णुधाम से यहाँ आइये, आपको नमस्कार करता हूँ ॥२०७॥

तत्पश्चात् इन सब पवित्रों में पवित्राधिष्ठात्री ब्रह्मा प्रभृति देववृन्द को तत्तन्मत्रों के द्वारा आवाहन मुद्रा द्वारा सन्निधीकरण मुद्रा द्वारा देवताओं को सन्निधापन (स्थापन) कर, चक्र मुद्रा से रक्षा एवं धेनु मुद्रा से अमृतीकरण करके अक्षत, गन्ध, पुष्प, धूप, दीप, नैवेद्य और ताम्बूल के द्वारा पूजा करे ॥२०८॥

अथ तत्र तत्र देवताः

ब्रह्मा, विष्णु, महेश्वर,–इन तीनों को त्रिगुणित सूत्र के देवता जानने चाहिये। प्रणव, वायु, अग्नि, ब्रह्मा, नाग, शशी, सूर्य्य, शिव एवं विश्वदेव, यह नव (९) देवता नवसूत्र के देवता कहे जाते हैं। क्रिया, पौरुषी, वीरा चतुर्थी, अपराजिता, जया, विजया, मुक्तिदा, सदाशिवा, एवं मनोमयी, नवमी एवं सर्वतोमुखी दशमी,– इन सबको ग्रन्थि देवता जानने चाहिये। उन उनकी ग्रन्थि में उन्हीं को स्थापन करना चाहिये ॥२०९-२११॥

तन्मन्त्राः

हे सर्वाभरण चित्राङ्ग! हे सर्वदेव नमस्कृत! हे लावण्य विश्वात्मन्! इस ज्येष्ठ सूत्र को आश्रय कीजिये। हे सर्वलक्ष्मीकर श्रीश! हे सर्वज्ञान रसात्मक! हे निवृत्तरूप विश्वात्मन्! इस मध्यसूत्र को आश्रय

ॐ अतिवेग मरुद्योने पुरुषात्मन् दिवस्पते ।
कनीयो हे प्रभा देव तेजसा सूत्रमाश्रय ॥२१४॥ इत्यादि ।

यत्र मन्त्रो न वर्त्तेत तत्तन्नाम्नैव तत्र च । नमोऽन्तः सचतुर्थीक ऊह्यः प्राग्लिखनान्मनुः ॥२१५

अथ कृष्णकराम्भोजे पट्टसूत्रेण निर्म्मितम् ।
वितस्तिमात्रं बध्नीयाद्डोरकं मङ्गलात्मकम् ॥२१६॥

अथ तत्र मन्त्रः

ॐ संवत्सरकृतार्च्चायाः सम्पूर्णफलदोऽसि यत् ।
पवित्रीकरणायतत् कौतुकं धर ते नमः ॥२१७॥ इति ।

ततो गन्धपवित्रञ्च गृहीत्वा धूपितं बुधः । भगवन्तं नमस्कृत्य भक्त्या सम्प्रार्थयेदिदम् ॥२१८
आमन्त्रितोऽसि देवेश सार्द्धं देवगणेश्वरैः । मन्त्रेशैर्लोकपालैश्च सहितः परिचारकैः ॥२१९॥
आगच्छ भगवन्नीश विधिसम्पूर्णकारक । प्रातस्त्वां पूजयिष्यामि सान्निध्यं कुरु केशव ॥२२०
इति ।

---

कनीयः कनिष्ठसूत्रमाश्रय । आदि-शब्दाद्वनमालायां तदधिष्ठात्र्याः प्रकृतेरावाहनमन्त्रादि, 'प्रकृते त्वं जगन्मूर्त्ते सर्व्वलावण्यदायिनि । श्रीसूत्रे नित्यकल्याणि सान्निध्यं कुरु ते नमः ॥' इति । एतच्च केषाञ्चिन्मतमिति व्यक्तं न लिखितम् ॥२१४॥

नन्वन्यत्र कतमे मन्त्राः ? तत्र लिखति—यत्रेति । नमोऽन्तं नमः-शब्दान्तकं सचतुर्थीकं चतुर्थीविभक्त्येकवचनसिद्धं तत्तन्नाम्नैव मनुर्मन्त्रे ऊह्यः । तच्च पूर्व्वमेव लिखितमस्तीति लिखति—प्रागिति । प्रयोगश्चायम् —'ॐ प्रणवाय नमः' इत्यादि ॥

धूपितमगुर्व्वादिधूपयुक्तं सद्गन्धपवित्रं हस्ताभ्यां गृहीत्वा ॥२१८॥

---

कीजिये । हे प्रभो ! आप ही वेगगामी वायु के उत्पत्ति स्थान हैं । आप ही पुरुषरूपी और दिवस के नायक हैं । हे देव ! आप तेज सहित इस कनिष्ठ सूत्र को आश्रय कीजिये ॥२१२-२१४॥

जिस स्थान में किसी प्रकार मन्त्र का उल्लेख नहीं है, वहाँ चतुर्थी विभक्त्यन्त उस देवता का नाम उच्चारण करके अन्त में 'नमः' योग करना चाहिये । यही मन्त्र रूप में परिगणित है । तत्पश्चात् श्रीकृष्ण करकमलों में यह सूत्रमय कल्याण स्वरूप वितस्ति परिमित डोर बन्धन करे ॥२१५-२१६॥

अथ तत्र मन्त्रः

उक्त डोर बाँधने का मन्त्रार्थ यह है । यह डोर, संवत्सरकृत पूजा का फल देने वाली है, पवित्र करने के निमित्त आनन्द सहित उसको धारण कीजिये, आपको प्रणाम करता हूँ । इस प्रकार मन्त्रार्थ की चिन्ता करके डोर बन्धन करे । अनन्तर करद्वय में गन्धपूर्ण धूपित पवित्र धारण पूर्वक भक्ति सहित प्रभु को प्रणाम करके वक्ष्यमाण प्रार्थना करे ॥२१७-२१८॥

हे देवेश ! देववृन्द के ईश्वर ! मन्त्रसमूह के ईश्वर ! लोकपालगण एवं परिचारकगण के सहित आपको आमन्त्रण करता हूँ । हे भगवन् ! हे ईश ! हे विधिपूर्ण कारिन् । प्रातःकाल में आपकी पूजा करूँगा । हे केशव ! आप सन्निहित हूजिये ॥२१९-२२०॥

ततश्च—

विष्णुतेजोद्भवं रम्यं सर्व्वपातकनाशनम् । सर्व्वकामप्रदं देव तवाङ्गं धारयाम्यहम् ॥२२१॥
अनेन मनुना विद्वान् मूलसम्पुटितेन हि । दद्याद्गन्धपवित्रन्तत् श्रीकृष्णचरणाब्जयोः ॥२२२॥
नीराज्य देवं स्तुत्वा च दत्त्वा पुष्पाञ्जलिं ततः । तत्पवित्राणि तत्कुम्भमध्यस्त्रमनुनाथवा ।
नृसिंहमनुना रक्षेत् कवचेनावगुण्ठयेत् ॥२२३॥
गीतनृत्यादिना कुर्य्याद्विधिवज्जागरं निशि । २२४॥

अथ पवित्रार्पणम्

प्रातःकृत्यानि निर्व्वर्त्य नित्यपूजां विधाय च । विशेषतोऽर्च्चयेद्देवं पवित्राणि च पूजयेत् ॥२२५
महावादित्रघोषेण नामसङ्कीर्त्तनोत्सवैः । मूलसम्पुटितेनैव पवित्राण्यर्पयेत् क्रमात् ॥२२६॥
वक्ष्यमाणेन मन्त्रेण भक्त्या कृष्णाय वैष्णवः । पूजां कृत्वा परीवारदेवानां तान्यथार्पयेत् ॥२२७

अथ अर्पणमन्त्रः

कृष्ण कृष्ण नमस्तुभ्यं गृहाणेदं पवित्रकम् । पवित्रीकरणार्थाय वर्षपूजाफलप्रद ॥२२८॥
पवित्रकं कुरुष्वाद्य यन्मया दुष्कृतं कृतम् । शुद्धो भवाम्यहं देव त्वत्प्रसादाज्जनार्द्दन॥२२९॥ इति ।

---

तद्धूपयित्वा गृहीतं गन्धपवित्रम् ॥२२२॥

अस्त्रमन्त्रेण नृसिंहमन्त्रेण वा रक्षेत् । आदि शब्देन पुराणपाठादि, विधिवदिति विधिश्च वाचके सत्यादौ पुराणपाठस्ततो गीतादि, तथा प्रतियामञ्च नीराजनादि, एतच्चादौ जागरणप्रकरणे लिखितमस्त्येव ॥२२३-२४

द्वादशीदिनकृत्यं लिखति—प्रातरित्यादिना वैष्णव इत्यन्तेन । विशेषत इति पवित्रार्पणार्थं नित्यपूजाऽधिकतयेत्यर्थः ॥२२५॥

क्रमादिति—ज्येष्ठादिक्रमेण, यतीनाञ्च कनिष्ठादिक्रमेण इति ज्ञेयम् ॥२२६॥

अथ परिवारदेवतानां पूजां कृत्वा तानि तदर्थकृतानि पवित्राणि तेभ्योऽर्पयेत् ॥२२७॥

---

तत्पश्चात्—हे देव ! भवदीय विष्णुतेज सम्भूत, सर्वपातकहर, सर्वकामप्रद शोभनतनु का ध्यान कर रहा हूँ । इस मन्त्र को मूलमन्त्र के द्वारा सम्पुटित करके तत् पाठ सहित श्रीकृष्ण के चरणकमलों में सुगन्ध पवित्र प्रदान करे । अनन्तर आरात्रिक, स्तुतिवाद, एवं पुष्पाञ्जलि अर्पण करके अस्त्र मन्त्र (फट्) का नृसिंहमन्त्र द्वारा उक्त पवित्र समूह को कुम्भ में स्थापन पूर्वक कवच मन्त्र (हुँ मन्त्र) द्वारा अवगुण्ठन करे । तदनन्तर गीत-नृत्यादि द्वारा यथाविधि निशा जागरण करना चाहिये ॥२२१-२२४॥

अथ पवित्रार्पणम्

प्रातः कृत्य एवं नित्य पूजा समापन के अनन्तर विशेष रूप से देवता की पूजा करके पवित्र की पूजा करनी चाहिये । महावाद्य-ध्वनि के सहित नाम-सङ्कीर्त्तन रूप उत्सव के सहित मूलमन्त्र पुटित करके क्रमशः पवित्र प्रदान करे । अनन्तर वैष्णव व्यक्ति, श्रीकृष्ण परिवारभुक्त देववृन्द की पूजा करके वक्ष्यमाण मन्त्र के द्वारा भक्ति पूर्वक श्रीकृष्ण को एवं उनके परिकरवृन्द को पवित्र प्रदान करे ॥२२५-२२७॥

अथ अर्पणमन्त्रः

हे कृष्ण ! हे कृष्ण ! हे वर्षपूजा फलप्रद ! आपको नमस्कार करता हूँ । आप पवित्र करन के निमित्त यह पवित्र ग्रहण कीजिये । हे आद्य ! मत्कृत दुष्कर्म्म पवित्र करें । हे देव ! जनार्दन ! आपको दया से मैं शुद्ध होऊँ ॥२२८-२२९॥

महापूजां ततः कृत्वा स्तुत्वा नत्वार्थयेत् प्रभुम् । वनमालां यथा देव कौस्तुभं सततं हृदि ।
तद्वत् पवित्रं तन्तुं च पूजाञ्च हृदये वह ॥२३०॥

जानताऽजानता वापि न कृतं यत्तवार्च्चनम् । केन वा विघ्नदोषेण परिपूर्णं तदस्तु मे ? २३१॥

तथाग्निं विधिनाभ्यर्च्चर्य पवित्रं तस्य चार्पयेत् ।
कृष्णे निवेदयन्मन्त्रहीनमित्यादिना कृतम् ॥२३२॥
गुरुञ्च भक्त्या सम्पूज्य पवित्रं गुरवेऽर्पयेत् ।
वैष्णवेभ्यः पवित्राणि दत्त्वैकं धारयेत् स्वयम् ॥२३३॥
सम्पूज्य वैष्णवान् विप्रान् शक्त्या संभोज्य बन्धुभिः ।
समं महाप्रसादान्नं सुखं भुञ्जीत वैष्णवः ॥२३४॥

अथ पवित्रविसर्ज्जनविधिः

तन्त्रे—

मासं पक्षमहोरात्रं त्रिरात्रं धारयेत्तथा । देवेशं सूत्रसन्दर्भं देशकालानुसारतः ।
प्रत्यहं स्नानकर्म्मादि सूत्राण्युत्सार्य्य कारयेत् ॥२३५॥
अभिषिच्याथ तोयेन पुनर्देवे निवेदयेत् ॥२३६॥

तथान्ते देवमभ्यर्च्चर्य विशेषाद् पुष्पचन्दनैः । नैवेद्यं विविधं दत्त्वा तत्सूत्रन्तु विसर्ज्जयेत् ॥२३७

---

ततस्तदनन्तरं भगवतो महापूजां कृत्वा प्रभुं प्रार्थयेदिति लिखितं; तत्प्रार्थनमेव लिखति— वनमालामिति द्वाभ्याम् । सततमिति पाठे वहसीत्यध्याहार्य्यम् ॥२३०॥

केनचिद्विघ्नदोषेण यन्न कृतं, आदि-शब्देन 'देवदेव जगन्नाथ' इत्यादि, तच्च पूर्व्वं लिखितमेव ॥२३१॥

विधिना अग्निसंस्कारादि-प्रकारेण, स चादावेव लिखितोऽस्ति । नित्यहोमनिवर्त्तनपूर्व्वकं पवित्रं मूल-मन्त्रेण तस्मै समर्पयेत्, ततश्च 'मन्त्रहीनं क्रियाहीनम्' इत्यादि लिखितप्रसिद्धवचनेन कृतं कर्म्म सर्व्वं कृष्णे निवेदयेत् ॥२३२॥

एकं पवित्रं स्वयं यजमानो धारयेत् ॥२३३॥

बन्धुभिः समं भुञ्जीत ॥२३४॥

सूत्रसन्दर्भं पवित्राणीत्यर्थः । देवस्य स्नानादिकर्म्म, सूत्राणि तोयेनाभिषिच्य तान्येव प्रोक्ष्य ॥२३५-२३६

---

अनन्तर महापूजा, स्तुति एवं प्रणाम करके प्रभु से प्रार्थना करे । हे देव ! आप जिस प्रकार सर्वदा वक्षःस्थल में वनमाला एवं कौस्तुभ धारण करते हैं, उस प्रकार पवित्र तन्तु और मत्कृत पूजा भी हृदय में धारण कीजिये । जानकर अथवा विना जाने, किसी विघ्न के कारण, यदि आपकी पूजा न करी हो, तो, मेरी वह भी परिपूर्ण हो । अनन्तर यथाविधि होम करके अग्नि में पवित्र अर्पण करे । पश्चात् 'मन्त्रहीनं क्रियाहीनं" प्रभृति मन्त्र के द्वारा समस्त कर्मार्पण श्रीकृष्ण को करे । तदनन्तर भक्तिमान् होकर गुरुपूजा करके उनको पवित्र अर्पण करे । तत्पश्चात् वैष्णववृन्द को पवित्र प्रदान करके स्वयं पवित्र धारण करे । अनन्तर वैष्णव व्यक्ति, वैष्णव विप्रवृन्द की पूजा करके एवं शक्त्यनुसार भगवत् प्रसाद भोजन कराकर बन्धु-बान्धवों के सहित स्वयं महाप्रसाद भोजन करे ॥२३०-२३४॥

अथ पवित्रविसर्ज्जनविधिः

देश काल के अनुसार एक मास, किंवा एक पक्ष, एक दिवारात्र, वा त्रिरात्र, प्रभु को पवित्र धारण

तत्र पवित्रविसर्ज्जनमन्त्रः

ॐ सांवत्सरीं शुभां पूजां सम्पाद्य विधिवन्मम ।
व्रजेदानीं पवित्र त्वं विष्णुलोकं विसर्ज्जितम् ॥२३८॥

यावद्देवे पवित्राणि तावत्तिष्ठेत् समाहितः । ब्रह्मचारी हविष्याशी देवपूजापरायणः ॥२३९॥

अथ तत्फलम्

उक्तञ्च बोधायनेन—

एवं यः कुरुते विद्वान् वर्षे वर्षे न संशयः ।
स याति परमं स्थानं यत्र देवो नृकेशरी ॥२४०॥ इति ।

अथ तत्र मुख्यगौणकालनिर्णयः

मुख्यकालस्य चैतस्य विघ्नतोऽपगमे सति । भाद्रादावपि कर्त्तव्यं पवित्रारोपणं प्रभोः ॥२४१

तथा च विष्णुरहस्ये —

श्रावणस्य सिते पक्षे कर्कटस्थे दिवाकरे । द्वादश्यां वासुदेवाय पवित्रारोपणं स्मृतम् ॥२४२॥

सिंहस्थे वा रवौ कार्य्यं कन्यामपि गतेऽथवा ।
तस्यामेव तिथौ सम्यक् तुलास्थे न कथञ्चन ॥२४३॥

---

विसर्ज्जनमन्त्रः—'ॐ सांवत्सरीम्' इत्यादि । यावत् पवित्राणि तिष्ठन्तीति शेषः ॥२३८-२३९॥
एतस्य श्रावणशुक्लद्वादशीलक्षणस्य मुख्य कालस्य ॥२४१॥
तस्यां द्वादश्यामेव ॥१४३॥

---

कराना चाहिये । प्रत्यह पवित्र उत्तारण पूर्वक स्नान कराना चाहिये । पुनर्वार यह सब पवित्र सलिलसिक्त करके पुनर्वार प्रभु को निवेदन करे । तत्पश्चात् प्रभु को पुष्प चन्दन द्वारा विशेषरूप से पूजा एवं विविध नैवेद्य अर्पण करके पवित्र सूत्र को विसर्ज्जन करे ॥२३५-२३७॥

तत्र पवित्रविसर्ज्जनमन्त्रः

हे पवित्र ! मैं आपको विसर्ज्जन करता हूँ, यथाविधि मत्कृत यह विशुद्ध वार्षिकी पूजा सम्पादनपूर्वक आप सम्प्रति विष्णुधाम में प्रस्थान कीजिये । मैंने आपको विसर्ज्जन किया ॥२३८॥

प्रभु के शरीर में यावत् काल पवित्र विद्यमान रहता है, तावत्काल संयतभाव से ब्रह्मचारी हविष्यान्न भोजी एवं देवपूजा रत होकर अवस्थान करना चाहिये ॥२३९॥

अथ तत्फलम्

बौधायन ऋषि ने कहा है—जो बुधव्यक्ति वर्ष-वर्ष में यह पवित्रदान रूप महोत्सव का अनुष्ठान करते हैं, वे नृसिंहाधिष्ठित परमपद में सुनिश्चित प्रस्थान कर सकते हैं ॥२४०॥

अथ तत्र मुख्यगौणकालनिर्णयः

यदि किसी विघ्न के कारण, श्रावणमास की शुक्ला द्वादशी रूप मुख्य काल की प्राप्ति न हो, तो, भाद्र प्रभृति मास में प्रभु का पवित्रारोपण अनुष्ठान करे ॥२४१॥

उस विषय का वर्णन विष्णुरहस्य में है—सूर्य्य कर्कटराशिस्थ होने पर श्रावण मास की शुक्ला द्वादशी में वासुदेव के पवित्रारोपण करे । सूर्य्य, सिंहराशिस्थ अथवा कन्याराशिगत होने से भी शुक्लाद्वादशी में सम्यक् विधान से पवित्रारोपण करे । किन्तु, तुलाराशिस्थ भास्कर में कभी भी पवित्रारोपण न करे ॥२४२-२४३

कर्कटकं गते सूर्य्ये तथा सिंहगतेऽपि वा । द्वादश्यां शुक्लपक्षस्य हरेर्दद्यात् पवित्रकम् ॥२४४॥
अथ चेद्विघ्नपातेन मुख्यकालो न लभ्यते । कन्यागतेऽपि कुर्व्वीत यावन्नोत्तिष्ठते हरिः ॥२४५
इति ।

❊ अथ पौर्णमास्यां रक्षाबन्धनम्

पौर्णमास्यां हरे रक्षा बन्धनम् विधिपूर्व्वकम् । व्रजराज कुमारत्वात् केचिदिच्छन्ति साधवः ॥
तत्र भद्रादि सद्भावे तामतिक्रम्यैव कुर्य्यात् ।

तथा स्मृत्यन्तरे—
भद्रायां द्वे न कर्त्तव्ये श्रावण फाल्गुनी तथा । श्रावणी नृपतिं हन्ति ग्रामान्दहति फाल्गुनी ॥
इति ।

विधिश्च भविष्योत्तरे—
उपाकर्म्मदिने प्रोक्त ऋषीणाञ्चैव तर्पणम् । ततोऽपराह्न समयं रक्षा पोटलिकां शुभाम् ॥
कारयेदक्षतैः शस्तैः सिद्धार्थैर्हेम भूषिताम् । वस्त्रैर्विचित्रैः कार्पासैः क्षौमैर्वामलवर्जितैः ॥
विचित्र ग्रन्थितं कृत्वा स्थापयेद्भाजनोपरि । उपलिप्ते गृहमध्ये दत्त चतुष्केऽन्यसेच्छुभं पीठम्॥
तत्रोपविशेद्राजा सामात्यः स पुरोहितः ससुहृत् । तदनु पुरोधा नृपते रक्षां बध्नीत मन्त्रेण ॥

---

कर्कटकः कर्कटराशिस्तं गते ॥२४४॥

श्रावण्यां पौर्णमास्यामृषितर्पणञ्च शाखाभेदादिना बहुविधं स्यात्, तच्च 'पिण्डदानं पितॄणाञ्च पितृपक्षे न वै कृतम् । व्रतं न कार्त्तिके मासि श्रावण्यामृषितर्पणम् ॥' इत्यादि-वचनतोऽकरणप्रत्यवायमध्ये स्कान्दादि-विधानाद्यद्यपि नित्यतां लभेत, तथापि महद्भिर्वैष्णवधर्म्मेष्वसंगृहीतत्वाद्वैष्णवानामादरविशेषाभावेनात्र विवृत्य न लिखितम् ॥२४५॥

---

मन्त्रतन्त्र प्रकाश में वर्णित है—सूर्य्य कर्कट राशिगत होने पर श्रावण में अथवा सिंहराशिगत होने पर भाद्र मास की शुक्ला द्वादशी तिथि में श्रीहरि को पवित्रार्पण करना चाहिये । विघ्न निबन्धन, मुख्य काल लाभ न होने पर कन्याराशिगत सूर्य्य में भी पवित्र प्रदान किया जा सकता है । किन्तु श्रीहरि के उत्थान में पवित्रार्पण न करे ।।२४४ २४५।।

❊ अथ पौर्णमास्यां रक्षाबन्धनम

कतिपय साधुगण—श्रीभगवान् व्रजराज कुमार हैं, इस हेतु पौर्णमासी में श्रीहरि की रक्षा बन्धन करते हैं । उसमें भद्रादि का सद्भाव होने से उसको अतिक्रम करके ही रक्षाबन्धन करें। इस प्रकार स्मृत्यन्तर में लिखित है—श्रावणी एवं फाल्गुनी पूर्णिमा, इन दोनों को भद्रा में न करे, क्योंकि श्रावणी पूर्णिमा राजा को नष्ट करती है । और फाल्गुनी पूर्णिमा ग्रामों को दग्ध करती है ।

भविष्योत्तर में इसकी विधि कही गई है । उपाकर्म दिन में ऋषियों का भी तर्पण करे । तदनन्तर अपराह्न के समय विचित्र धौत कार्पास अथवा क्षौम (रेशमी) वस्त्र से ग्रन्थित कर प्रशस्त अक्षत और श्वेत सर्षप के द्वारा स्वर्ण भूषित रक्षा पोटलिका (पोटरी) निर्म्माण करे, फिर उसको कोई पात्र में स्थापन करे । गोमयादि द्वारा उपलिप्त गृहमध्य में चतुष्कोण मण्डल के ऊपर उत्तम पीठ (आसन) रखकर उसमें पुरोहित, अमात्य और सुहृदगणों के सहित राजा उपवेशन करें । पुनः पुरोहित मूल में उक्त मन्त्र के द्वारा राजा की रक्षा बन्धन करें ।

मन्त्रश्च

"येन बद्धो बलीराजा दानवेन्द्रो महाबलः। तेन त्वां प्रतिबध्नामि रक्षे ! मा चल, मा चल"।

वैदिकश्च

"यदा बध्नन् दाक्षायणा हि बन्धं शतानिकाय सुमनस्य मालाः।
तन्मया बध्नामि शत शारदाया युष्मानजरदिष्टिर्यथासन् ॥"

ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चान्यैश्च मानवैः। कर्त्तव्यो रक्षणाचारो विप्रान् सम्पूज्य शक्तितः ॥
अनेन विधिना यस्तु रक्षिका बन्धमाचरेत्। स सर्वदोषरहितः सुखं संवत्सरं वसेत् ॥ इति।

अथ तद्दिननिर्णयार्थमुपाकर्म्मदिन निर्णयः क्रियते

यदाह स्मृत्यन्तरे—
उपाकर्म तु कुर्वन्ति क्रमात् सामर्ग्यजुर्व्विदः। ग्रहसंक्रान्ति युक्तेषु हस्त श्रवण पर्व्वसु ॥
तथाच—
सामवेदिनां भाद्रस्य हस्त नक्षत्रम्। ऋग्वेदिना श्रावणस्य श्रवण नक्षत्रम् ॥
यजुर्वेदिनां श्रावण पूर्णिमोपाकर्म कालः। उपक्रम काण्डिका कीर्त्तनरूपं कर्म्म उपाकर्म्मेति ॥

अथ करणाभावे भाद्रे श्रावणेऽपि विधेयम्

"अवृष्ट्यौषधयस्तस्मिन् मासे नहि भवन्ति चेत्। तदा भाद्रपदेमासि श्रावणेऽपि तदिष्यति ॥"
इति बह्वृच परिशिष्ट वचनात्।

श्रावण पञ्चम्यनुकल्पः

तदाह गार्ग्यः—
यदि स्यात् श्रावणं पर्व्वं ग्रहसंक्रान्ति दूषितम्। स्यादुपाकरणं शुक्ल पञ्चम्यां श्रावणस्य च ॥
इति।

---

मन्त्रश्च

मन्त्र का अर्थ—"महाबल दानवेन्द्र बलिराजा को जिससे बद्ध हुए, हे रक्षे ! मैं उसी से तुमको बन्धन करता हूँ। तुम स्थिर होके रहो।"

वैदिकश्च

एवं मूलोक्त वैदिक मन्त्रों से भी रक्षाबन्धन करें। इसी प्रकार ब्राह्मण, क्षत्रिय, वैश्य और शूद्र भी यथाशक्ति ब्राह्मणों की पूजा कर, रक्षा बन्धनाचार का प्रतिपालन करें। इस विधि से जो मनुष्य रक्षाबन्धन करें, वे सर्व दोष से मुक्त हो, एक वर्ष काल सुख से वास करते हैं।

अथ तद्दिननिर्णयार्थमुपाकर्मदिन निर्णयः

दिननिर्णय का विवरण स्मृत्यान्तर में लिखित है—सामवेदी एवं यजुर्वेदी ब्राह्मणगण, ग्रहसंक्रमण दिन परित्याग पूर्वक क्रम से हस्त नक्षत्र, श्रवण नक्षत्र एवं पर्वदिन में उपाकर्म करें। उसमें सामवेदियों के पक्ष में भाद्र मास की हस्ता नक्षत्र, ऋग्वेदियों के पक्ष में श्रावण मास की श्रवण नक्षत्र एवं यजुर्वेदी के निमित्त श्रावण मास की पूर्णिमा, उपाकर्म काल में प्रशस्त है। प्रथम वेदारम्भ विधि विशेष को ही उपाकर्म कहते हैं, इस कर्म में कारण के अभाव होने पर भाद्र और श्रावण में भी करे। बह्वृच परिशिष्ट में कहा है—यदि उस मास में वृष्टि के अभाव से औषधि उत्पन्न न हो, तो भाद्र और श्रावण मास में उस कर्म का अनुष्ठान करे।

श्रावण पञ्चम्यनुकल्पः

इसमें श्रावण की शुक्लापञ्चमी अनुकल्प (गौणविधि) है, इसके सम्बन्ध में गर्ग ने कहा है—यदि श्रावण

अथ भूतविद्धा पूर्णिमा च निषिद्धा

तथाच कालिकापुराणे—

चतुर्द्दश्यां समुत्पन्नावसुरो मधुकैटभौ। वेदान् स्वीकुर्व्वतः पद्मयोनेस्तौ जघ्नतुः श्रुतीः ॥
हत्वा तावसुरौ देवौ पातालवासिनौ। आहृत्य ताः श्रुतीस्तस्मै ददौ लोकगुरुः स्वयम् ॥
सम्प्राप्तवान् श्रुतीर्ब्रह्मा पर्व्वण्यौदयिके पुनः। अतो भूतयुते तस्मिन्नोपाकरणमिष्यते ॥
असुरं वर्ज्जयेत् कालं वेदाहरण शङ्कया ॥ इति।

व्यासोऽपि—

श्रावणेन तु यत्कर्म्म उत्तराषाढ़संयुतम्। संवत्सर कृतोऽध्यायस्तत् क्षणादेव नश्यति ॥
धनिष्ठा संयुतं कुर्य्यात् श्रावणं कर्म यद्भवेत्। तत् कर्म सफलं विद्यादुपाकरण संक्षितम् ॥
इति ।※

अथ भाद्रकृत्यम्

भाद्रे भगवतो जन्मदिने कार्य्यो महोत्सवः। विशेषेण महापूजां व्रतपूर्णेन वैष्णवैः ॥२४६॥

अथ श्रीजन्माष्टमीव्रतम्

सर्व्वैरवश्यं कर्त्तव्यं जन्माष्टमीव्रतं नरैः। नित्यत्वात् पापहारित्वात् सर्व्वार्थप्रापणादपि ॥२४७

---

भगवतो जन्मदिनं रोहिण्यष्टमी श्रवणद्वादशी च तस्मिन् ॥२४६॥

---

मास के पर्वदिन ग्रहसंक्रमण से दूषित हो, तो, श्रावण की शुक्लापञ्चमी में उपाकर्म की व्यवस्था है।

अथ भूतविद्धा पूर्णिमा च निषिद्धा

कालिका पुराण में लिखित है—इस कर्म में चतुर्दशीविद्धा पूर्णिमा निषिद्ध है। चतुर्दशी तिथि में ब्रह्मा वेदों का अध्ययन करते रहे। इस समय मधु कैटभ नामक असुरद्वय उत्पन्न होकर वेदों को हरणकर लेगये, तदनन्तर लोकगुरु श्रीहरि ने स्वयं पातालवासी उन दोनों असुरों को विनाश कर वेदों को ले आकर ब्रह्मा को प्रदान किये थे। ब्रह्मा ने भी चतुर्दशी रहित पूर्णिमा के दिन पुनर्वार वेदों का अध्ययन किया। अतएव पण्डितगण, चतुर्दशीयुक्त पूर्णिमा में उपाकर्म की इच्छा नहीं करते हैं। वेदों के हरण की आशङ्का से आसुरिक काल को वर्जन करना चाहिये। व्यास ने भी कहा है—उत्तराषाढ़ायुक्त श्रावण में उपाकर्म करने से तत्काल ही एक वर्षकृत अध्ययन नष्ट होता है, और धनिष्ठायुक्त श्रावण में उपाकर्म करने पर वह सफल होता है।※

※ चिह्न के मध्यस्थित जो रक्षाबन्धन का प्रकरण है, वह संवत् १९६६ में श्रीमदनगोपाल प्रेस, वृन्दावन उत्तर प्रदेश से हिन्दी अक्षरों में प्रकाशित सस्करण में है, तथा अपर मुद्रित पुस्तकों में नहीं है, किन्तु हस्तलिखित कतिपय पुस्तकों में रहने के कारण एवं मासकृत्य में उपयोग होने के कारण यहाँ सन्निवेशित हुआ है।

अथ भाद्रकृत्यम्

भाद्रमास में भगवान् के जन्मदिन, रोहिणी अष्टमी एवं श्रवणा द्वादशी में, महोत्सव करे। एवं व्रत पूर्ण करके विशेष रूप से महती पूजा करना वैष्णवों का कर्त्तव्य है ॥२४६॥

अथ जन्माष्टमीव्रतम्

नित्यत्व एवं पापहारित्व, सर्वार्थ प्राप्तकत्वहेतु जन्माष्टमी व्रत, मानव मात्र को अवश्य करना चाहिये। ॥२४७॥

अथ श्रीजन्माष्टमीव्रतोत्पत्तिः

भविष्योत्तरे श्रीयुधिष्ठिर उवाच—

जन्माष्टमीव्रतं ब्रूहि विस्तरेण ममाच्युत।
कस्मिन् काले समुत्पन्नं किं पुण्यं को विधिः स्मृतः ? ॥२४८॥

श्रीकृष्ण उवाच—

हते कंसासुरे दुष्टे मथुरायां युधिष्ठिर। देवकी मां परिष्वज्य कृत्वोत्सङ्गे रुरोद ह ॥२४९॥
तत्रैव रङ्गवाटे सा मञ्चारूढ़ा जनोत्सवे। मल्लयुद्धे पुरा वृत्ते संस्तुता कुकुरान्धकैः ॥२५०॥
स्वजनैर्बहुभिः स्निग्धैस्तेषां स्त्रीभिः समावृता। वसुदेवोऽपि तत्रैव वात्सल्यात् प्ररुरोद मे।
समागम्य परिष्वज्य पुत्र पुत्रेत्युवाच ह ॥२५१॥
स गद्गदस्वरो दीनो वाष्पपर्य्याकुलेक्षणः। बलभद्रञ्च माञ्चैव परिष्वज्येदमब्रवीत् ॥२५२॥
अद्य मे सफलं जन्म जीवितञ्च सुजीवितम्। यदुभाभ्यां सुताभ्यां मे समुद्भूतः समागमः ॥२५३
एवं हर्षेण दम्पत्योर्हृष्टं सर्व्वं तदा नृप। प्रणिपत्य जनाः सर्व्वे मामूचुस्ते प्रहर्षिताः ॥२५४॥
अद्य प्रहर्षो ह्यस्माकमद्य जातो जनार्द्दनः। अद्य मल्लाङ्गयुद्धेन दुष्टः कंसो निपातितः ॥२५५॥
एवं महोत्सवं दृष्ट्वा समाजे मधुसूदन। प्रसादः क्रियतामस्या लोकस्यान्योऽपि शीघ्रतः ॥२५६

---

तत्र किं पुण्यं, विधिश्च कः ? ॥२४८॥
मे मयि वात्सल्यात्, मे मामिति वा परार्द्धेनान्वयः। हेति पाठे स्फुटम् ॥२५१॥

---

अथ श्रीजन्माष्टमीव्रतोत्पत्तिः

भविष्योत्तर में श्रीयुधिष्ठिर श्रीकृष्ण को कहे थे—हे अच्युत ! मेरे निकट जन्माष्टमी व्रत का कीर्त्तन विशेष रूप से करो, किस समय इस व्रत को उत्पत्ति हुई है ? इसका साधन करने से क्या पुण्य प्राप्त होता है और उसकी विधि किस प्रकार है ? ॥२४८॥

श्रीकृष्ण ने कहा—हे युधिष्ठिर ! मथुरापुर में दुराचार कंस निहित होने पर एवं मल्लयुद्ध समाप्त होने के बाद तत्रस्थ रङ्गभूमि सर्वजनों के महोत्सव से पूर्ण होगई। उस समय देवकी देवी ने कुकुर, अन्धक प्रभृति स्नेह परायण आत्मीयगण एवं तत्तत् स्त्रीगणों के द्वारा परिवेष्टिता होकर मुझको आलिङ्गन किया, एवं अङ्क में लेकर रोदन करने लगी। पिता वसुदेव भी वहाँ मेरे समीप में आकर पुत्रवात्सल्य के कारण आनन्दाश्रु की वर्षा करते हुए दीनभाव और गदगद स्वर से आलिङ्गन पूर्वक 'पुत्र, पुत्र' कहकर रोदन करने लगे थे ॥२४९-२५१॥

वसुदेव गदगद स्वर से एवं दीन भाव से, वास्पपूरित नेत्र से बलभद्र एवं मुझको आलिङ्गन करके कहे थे, तुम दोनों हमारे पुत्र हो, यदुकुल में उत्पन्न हुए हो, तुम दोनों के सहित मिलने से मेरा जन्म सार्थक हुआ, और आज मैंने अपने जीवन को सुजीवन समझा ॥२५२-२५३॥

हे नृप ! उन दम्पती, वासुदेव-देवकी का इस प्रकार अतिशय आनन्द को देखकर सब व्यक्ति पुलकित हुए थे, वहाँ के सबने हर्ष के सहित मुझको प्रणामकर कहा,—हे जनार्दन ! आज हम सबों को आनन्द हुआ है, कारण, आज मल्लयुद्ध में दुरात्मा कंस निहत हुआ। हे मधुसूदन ! इस प्रकार महोत्सव को देखकर समाज के प्रति प्रसन्न हूजिये। अन्य सब मनुष्यों के प्रति भी आशु अनुग्रह दिखाइये। हे जनार्दन ! देवकी

यस्मिन् दिने प्रसूयेत देवकी त्वां जनार्द्दन । तद्दिनं देहि वैकुण्ठ कुर्म्मस्ते तत्र चोत्सवम् ।
सम्यग्भक्तिप्रपन्नानां प्रसादं कुरु केशव ॥२५७॥
एवमुक्ते जनौघेन वसुदेवोऽपि विस्मितः । विलोक्य बलभद्रं तं संप्रहृष्टतनूरुहः ॥२५८॥
एवमस्त्विति लोकानां कथयस्व यथातथम् ॥२५९॥
ततस्तातसमादेशान्मया जन्माष्टमीव्रतम् । मथुरायां जनौघाय पार्थ सम्यक् प्रकाशितम् ॥२६०
पौराश्च तज्जन्मदिनं वर्षे गर्भाष्टमे गते । पुनर्ज्जन्माष्टमीं लोकाः कुर्व्वन्तु ब्राह्मणादयः ।
क्षत्रिया वैश्यजातीयाः शूद्रा येऽन्येऽपि धर्म्मिणः ॥२६१॥
सिंहराशिगते सूर्य्ये गगने जलदागमे । मासि भाद्रपदेऽष्टम्यां कृष्णपक्षेऽर्द्धरात्रके ॥२६२॥
शशाङ्के वृषराशिस्थे प्राजापत्यर्क्षसंयुते । वसुदेवेन देवक्यामहं जातो जनाः स्वयम् ॥२६३॥
एवमेतत् समाख्यातं लोके जन्माष्टमीव्रतम् । भगवत्याश्च तत्रैव कुरुध्वं सुमहोत्सवम् ।
मथुरायां ततः पश्चाल्लोके ख्यातिं गमिष्यति ॥२६४॥

---

एवमस्त्वीत्यादि तातसमादेशाज्जनौघाय जनसमूहं प्रति प्रशासितं समादिष्टम् । पाठान्तरे पूर्व्वं गूढ़ं सत् मयाऽधुना प्रकटितम् ॥२५९-२६०॥

कथम् ? तदाह—पौराश्चेति । गर्भादष्टमे वर्षे गते सति, अष्टवर्षवय आरभ्येत्यर्थः । यथोक्तमेकादशी-व्रताधिकारिनिर्णये—'अष्टवर्षाधिको बालः' इत्यादि ॥२६१॥

हे जनाः ! स्वयं स्वेच्छया सम्पूर्णतया वेत्यर्थः । पाठान्तरे तु दुष्टजनसंहारार्थमित्यर्थः ॥२६३॥

भगवत्याः—श्रीदेवक्याः; अतस्तदुत्सङ्ग एव भगवत्पूजनविधिः । यद्वा, श्रीदुर्गादेव्याः 'प्रभाते नवमीदिने । यथा मम तथा कार्य्यो भगवत्या महोत्सवः ॥' इति विधिकथनात्तोक्तेः ॥२६४॥

---

देवी ने जिस दिन आपको प्रसव किया है, उसी दिन की विधि का उपदेश दीजिये, हम उत्सव सम्पादन करेंगे। हे केशव ! हमने भक्तिमान् होकर सब प्रकार से आपकी ही शरण ली है, हम पर कृपा प्रकाश कीजिये। सभास्थल में सबके मुख से यह वाक्य निकलने पर वसुदेव भी अत्यन्त विस्मयापन्न हो बलदेव की ओर देखकर आनन्द से रोमाञ्चित होकर मुझसे कहे थे,—"लोकसमूह की प्रार्थना पूर्ण हो" तुम यथारीति आज्ञा प्रदान करो ॥२५४-२५६॥

हे पार्थ ! अनन्तर पिता के अनुमति के अनुसार मानववृन्द के निमित्त मैंने मथुरा में जन्माष्टमी व्रत का सम्यक् प्रकाश किया। पौरगण, एवं अन्यान्य ब्राह्मण, क्षत्रिय, वैश्य, शूद्रादि अपरापर धर्मावलम्बी लोक-समूह अष्टम वर्ष वयः क्रम से आरम्भ कर अशीति वर्ष वयः क्रम यावत् जन्माष्टमी नामक मेरा व्रत साधन करें ॥२६०-२६१॥

हे मानवगण ! सूर्य्य सिंहराशिगत होने पर आकाश मेघाच्छन्न होने से भाद्रमासीय कृष्णाष्टमी की अर्द्ध निशा में वृषराशिस्थ चन्द्र में, रोहिणी नक्षत्र में वसुदेव से देवकी के पुत्र रूप में मैंने स्वेच्छा से जन्म ग्रहण किया। इस प्रकार यह जन्माष्टमी व्रत भुवन में विख्यात हुआ है। मथुरा नगरी में भगवती देवी की वा दुर्गादेवी का भी उस प्रकार महोत्सव का अनुष्ठान करो। अनन्तर जनसमाज में भी यह व्रत प्रसिद्ध होगा ॥२६२-२६४॥

इत्याकर्ण्य यथाख्यातं तथा लोकैरनुष्ठितम् ।
शान्तिरस्तु सुखञ्चास्तु लोकाः सन्तु निरामयाः ॥२६५॥ इति ।

नित्यत्वञ्च परन्तस्य भगवत्प्रीणनान्मतम् । विधिवाक्यविशेषाच्चाकरणे प्रत्यवायतः ॥२६६॥

अथ श्रीजन्माष्टमीव्रतनित्यत्वम्, तत्र
श्रीभगवत्प्रीणनं विधिश्च

स्कान्दे—

प्रह्लादाद्यैश्च भूपालैः कृता जन्माष्टमी शुभा । श्रद्धया परया विष्णोः प्रीतये कृष्णवल्लभा ॥२६७

किञ्च—

प्राजापत्यर्क्षसंयुक्ता श्रावणस्यासिताष्टमी । वर्षे वर्षे तु कर्त्तव्या तुष्टयर्थं चक्रपाणिनः ॥२६८॥

अथाकरणप्रत्यवाये प्रथमं भोजने प्रत्यवायः

विष्णुरहस्ये ब्रह्मनारदसंवादे—

शूद्रान्नेन तु यत् पापं शवहस्तस्थभोजने । तत् पापं लभते पुंभिर्जयन्त्यां भोजने कृते ॥२६९॥

---

एतनुष्ठानेन च सर्व्वेषां परमसुखं सर्व्वदुःखोपरमश्चेत्यभिप्रायेण व्रतफलमाह—शान्तिरिति ॥२६५॥

तस्य च नित्यतां त्रिधा लिखति—नित्यत्वञ्चेति । परं केवलं परमं वा, भगवत्प्रीतिहेतु-श्रवणेन वैष्णवानामवश्यं भक्त्या प्रवृत्तेः । विधिवाक्यविशेषश्चात्र—'वर्षे वर्षे तु कर्त्तव्या' इति । तस्मात् श्रावणस्येति मुख्यचान्द्रमासाभिप्रायेण, एवमग्रेऽपि ॥२६६॥

'विष्णोः प्रीतये' इति, 'कृष्णवल्लभा' इति, 'तुष्टयर्थं चक्रपाणिनः' इति भगवत्प्रीणनद्वारा, 'वर्षे वर्षे तु कर्त्तव्या' इति वीप्साविधिवाक्यद्वारा च 'वसन्ते ज्योतिषा यजेत' इतिवद्वीप्सया नित्यत्वं लिखित्वा इदानीमकरणप्रत्यवायद्वारा नित्यतां लिखति—शूद्रान्नेनेत्यादिना चतुर्द्दशेत्यन्तेन । अत्र च प्रत्यवायो द्विधा—भोजनेन शक्तौ पूजादिमहोत्सवाकरणेन च ईदृग्विधनियम एव व्रतशब्देनाभिधीयते, तत्रादौ परमं निन्द्यं भोजनप्रत्यवायं लिखति—शूद्रेति षड्भिः । शूद्रस्यावैष्णवस्यान्नेन, यद्वा, अनापदि ब्राह्मणस्य, तेन यत् पापं स्यात् ॥२६७-२६९॥

---

हे पार्थ ! मैंने जिस प्रकार कहा, यह कथा सुनकर मनुष्यों ने वैसा ही आचरण किया । शान्ति हो, आनन्दोदय हो, और लोकसमूह निरामय हों ॥२६५॥

श्रीभगवान् सन्तुष्ट होते हैं, प्रतिवर्ष में करणीय है, अतः शास्त्रीय विधि प्राप्त यह व्रत है, जन्माष्टमी व्रत पालन न करने पर अधोगति रूप अनिष्ट होता है । इन त्रिविध कारणों से ही जन्माष्टमी व्रत का नित्यत्व जानना चाहिये ॥२६६॥

अथ श्रीजन्माष्टमीव्रतनित्यत्वम्, तत्र
श्रीभगवत्प्रीणनं विधिश्च

स्कन्दपुराण में लिखित है—प्रह्लाद प्रभृति नृपतिवृन्द श्रीहरि की प्रीति के निमित्त महती श्रद्धा पूर्वक श्रीहरिप्रिय पवित्र जन्माष्टमी व्रत साधन किये हैं ॥२६७॥

और भी लिखा है—चक्रपाणि की प्रीति हेतु वर्ष वर्ष रोहिणी नक्षत्र समन्विता श्रावणी कृष्णाष्टमी में इस व्रत का अनुष्ठान करना चाहिये ॥२६८॥

अथाकरणप्रत्यवाये प्रथमं भोजने प्रत्यवायः

विष्णुरहस्य के ब्रह्म-नारद-संवाद में लिखित है—जन्माष्टमी में भोजन करने से शूद्रान्न भोजन जनित एवं शवहस्तस्थ द्रव्य भोजन जनित पाप में लिप्त होना पड़ता है ॥२६९॥

गृध्रमांसं खरं काकं श्येनं वा मुनिसत्तम। मांसञ्च द्विपदां भुक्तं भुक्तं जन्माष्टमीदिने ॥२७०॥

जन्माष्टमीदिने प्राप्ते येन भुक्तं द्विजोत्तम। त्रैलोक्यसम्भवं पापं भुक्तमेव न संशयः ॥२७१॥

किञ्च—

जयन्तीवासरे प्राप्ते करोत्युदरपूरणम्। पोड्यते तिलमात्रन्तु यमदूतैः कलेवरम् ॥२७२॥

यो भुङ्क्ते च विमूढ़ात्मा जयन्तीवासरे नृप। न तस्य नरकोत्तारो द्वादशीञ्च प्रकुर्व्वतः ॥२७३

अतीतानागतन्तेन कुलमेकोत्तरं शतम्। पातितं नरके घोरे भुञ्जता कृष्णवासरे ॥२७४॥

अथोपवासपूर्व्वकपूजाविशेषमहोत्सवादिव्रतत्यागप्रत्यवायः

तत्रैव—

ये न कुर्व्वन्ति जानन्तः कृष्णजन्माष्टमीव्रतम्। ते भवन्ति महाप्राज्ञ व्याला महति कानने ॥२७५

ब्रह्महत्या सुरापानं गोवधः स्त्रीबधोऽपि वा। न लोको मुनिशार्द्दूल जयन्तीविमुखस्य च। २७६

---

जन्माष्टमीदिने येन भुक्तं, तस्य गृध्रमांसाद्यभक्ष्यभक्षणपाप स्यादित्यर्थः ॥२७०॥

पापमेव भुक्तं, तद्दिनेऽन्नस्य सर्व्वपापमयत्वात् पापफलोपभोगस्य सद्यः प्रत्यासत्तेर्वा ॥२७१॥

यः करोति, तस्य कलेवरं तिलमात्रं तिलशः पीड्यते। तिलमात्रमित्यस्य पूर्व्वेणैवान्वयः। तिलमात्र-मल्पमप्युदरपूरणं य करोतीत्यर्थः ॥२७२॥

अप्यर्थे चकारः, द्वादशीमपि प्रकुर्व्वतः द्वादशीव्रतेनापि जन्माष्टमीव्रतोल्लङ्घनमहापराधानपगमात् ॥२७३

कृष्णवासरे—कृष्णजन्मदिने ॥२७४॥

जानन्तः जानन्तोऽपीत्यज्ञानेनाकरणान् पापमल्पमित्यभिप्रेतम्; यद्वा, ज्ञानवन्तोऽपि व्याला भवन्तीत्यर्थः। व्रतमित्यनेन यद्यप्यभोजनं पूजामहोत्सवादिकमपि सर्व्वं गृह्यते, तथाप्यत्र भोजनादि शब्दाभावात् पूजादि-महोत्सवादिकमपि सर्व्वं गृह्यते, तथाप्यत्र भोजनादि-शब्दाभावात् पूजादिमहोत्सवपरमेव तद्ग्राह्यम्, एवमग्रेऽप्यूह्यम् ॥२७५॥

तद्व्रतविमुखश्च ब्रह्मघ्नः सुरापश्च, तस्य गोबधः स्त्रीबधोऽपि जातः। पाठान्तरं सुगमम्। अतो लोक ऐहिकामुष्मिकसुखं सर्व्वमेव न भवतीत्यर्थः ॥२७६॥

---

हे ऋषिसत्तम ! जो मनुष्य, जन्माष्टमी में भोजन करता है, उसका वह भोजन, गृध्र, गर्दभ, काक, श्येन एवं मनुष्यादि द्विपदसमूह के मांस भोजन तुल्य होता है ॥२७०॥

हे द्विजोत्तम ! जन्माष्टमी वासर में भोजन करने से त्रिभुवनस्थ निखिल पातक सेवन किये जाते हैं। इसमें सन्देह नहीं है ॥२७१॥

और भी लिखित है—जयन्ती वासर में तिलमात्र उदर पूरण करने से अर्थात् स्वल्प मात्र भोजन करने पर भी शमन दूतगण कर्त्तृक उस व्यक्ति के शरीर, तिल तिल प्रमाण से पीड़ित होता है। हे नृप ! जो मूढ़मति व्यक्ति, जयन्ती में भोजन करता है, द्वादशी व्रतानुष्ठान करने पर भी उसको नरक वास से उद्धार नहीं होता है। श्रीकृष्ण-जन्मदिन में भोजन करने पर भोजनकारी के अतीत अनागत शतपुरुष भीषण नरक में निमग्न होते हैं ॥२७२-२७४॥

अथोपवासपूर्व्वकपूजाविशेषमहोत्सवादिव्रतत्यागप्रत्यवायः

उक्त पुराण में लिखित है—हे महाप्राज्ञ ! ज्ञानी होकर भी कृष्णजन्माष्टमी व्रत साधन न करने पर भीषण अरण्य में सर्प होकर वास करना पड़ता है ॥२७५॥

हे मुनिशार्दूल ! जयन्ती व्रत से विमुख होने पर, इस लोक, वा परलोक, किसी लोक में भी सुख की आशा नहीं है। अधिकन्तु ब्रह्म-हत्या, मद्यपान, गो बध, एवं स्त्री-बध के पाप में लिप्त होना पड़ता है ॥२७६

वर्षे वर्षे तु या नारी कृष्णजन्माष्टमीव्रतम् । न करोति महाप्राज्ञ व्याली भवति कानने ॥२७७॥

श्रावणे बहुले पक्षे कृष्णजन्माष्टमीव्रतम् । न करोति नरो यस्तु स भवेत् क्रूरराक्षसः ॥२७८॥

श्रावणे बहुले पक्षे न करोति यदाष्टमीम् । क्रूरायुधाः क्रूरमुखा हिंसन्ति यमकिङ्कराः ॥२७९

न करोति यदा विष्णोर्जयन्तीसम्भवं व्रतम् । यमस्य वशमापन्नः सहते नारकीं व्यथाम् ॥२८०

किञ्च तत्रैव—

कृष्णजन्माष्टमी त्यक्त्वा योऽन्यव्रतमुपासते । नाप्नोति सुकृतं किञ्चिद्दृष्टं श्रुतमथापि वा ॥२८१

किञ्च—

तुष्ट्यर्थं देवकीसूनोर्जयन्तीसम्भवं व्रतम् । कर्त्तव्यं वित्तशाठ्येन भक्त्या भक्तजनैरपि ।
अकुर्व्वन् याति निरयं यावदिन्द्राश्चतुर्द्दश ॥२८२॥

अथ श्रीजन्माष्टमीमाहात्म्यम्

भविष्योत्तरे श्रीकृष्णयुधिष्ठिर-संवादे जन्माष्टमीव्रतकथने—

एकेनैवोपवासेन कृतेन कुरुनन्दन । सप्तजन्मकृतात् पापान्मुच्यते नात्र संशयः ॥२८३॥

पुत्रसन्तानमारोग्यं सौभाग्यमतुलं लभेत् । सत्यधर्म्मरतो भूत्वा मृतो वैकुण्ठमाप्नुयात् ॥२८४

तत्र नित्यं विमानेन वर्षलक्षं युधिष्ठिर । भोगान्नानाविधान् भुक्त्वा पुण्यशेषादिहागतः ॥२८५

---

सभर्त्तृकापि योषित् कुर्य्यादिति लिखति— वर्षे वर्षे त्विति । अयं श्लोकः क्वचिन्न तिष्ठेदपि ॥२७७॥

वित्तशाठ्येनेति पाठे अल्पवित्तव्ययेनापि कर्त्तव्यं, न तु वित्तव्ययभयात् त्यक्तव्यमित्यर्थः । वित्तमानेनेति पाठे तु धनानुसारेणेत्यर्थः । भक्तजनैरकिञ्चनवैष्णवैरपि भक्त्या कर्त्तव्यमेव ॥२८२॥

---

हे महाप्राज्ञ ! जो नारी वर्ष वर्ष में कृष्णजन्माष्टम व्रत पालन नहीं करती है, वह सर्पिणी होकर वन में वास करती है ॥२७७॥

श्रावण मास में कृष्णजन्माष्टमी व्रतानुष्ठान न करने से उसको क्रूर राक्षस रूप धारण कर जन्म ग्रहण करना पड़ता है । श्रावणी कृष्णाष्टमी में व्रत न करने पर विकटानन भयङ्कर अस्त्रधारी शमनदूतगण तत् प्रति हिंसाचरण करते हैं । श्रीहरि के जयन्तीजनित व्रत न करने से यमराज के अधीन होकर निरय यातना भोगनी पड़ती है ॥२७८-२८०॥

उक्त स्थान में और भी लिखित है—कृष्णाष्टमी व्रत त्यागकर अन्य व्रत की उपासना करने पर, दृष्ट श्रुत किसी भी प्रकार का पुण्य भी प्राप्त नहीं हो सकता है ॥२८१॥

और भी लिखा है—अकिञ्चन वैष्णववृन्द का भी, भक्तवृन्द के सहित मिलित होकर अल्प वित्त व्यय के द्वारा भी देवकीसुत श्रीहरि के प्रीत्यर्थ भक्तिपूर्वक जयन्ती व्रत साधन करना कर्त्तव्य है ॥२८२॥

अथ श्रीजन्माष्टमीमाहात्म्यम्

भविष्योत्तर पुराण के श्रीकृष्ण-युधिष्ठिर-संवाद में जन्माष्टमी व्रत कथन प्रसङ्ग में लिखित है—हे कुरुनन्दन !एकमात्र जन्माष्टमी का उपवास करने से सप्तजन्मार्जित पातक विनष्ट होते हैं, इसमें सन्देह नहीं है, एवं पुत्र सन्तान, आरोग्य और अतुल सौभाग्य लाभ होता है । तथा सत्यधर्मनिष्ठ वह व्यक्ति देहान्त में वैकुण्ठ गमन करता है ॥२८३-२८४॥

हे युधिष्ठिर ! वह व्यक्ति वहाँ पर नित्य विमान के द्वारा भ्रमण पूर्वक लक्ष वर्ष पर्य्यन्त विविध भोगों को भोगता है, और पुण्य क्षय होने पर नरलोक में पुनरागमन करता है । हे पार्थ ! यहाँ सर्व काम पूर्ण,

सर्व्वकामसमृद्धे तु सर्व्वासुखविवर्ज्जिते । सर्व्वधर्म्मयुते पार्थ सर्व्वगोकुलसङ्कुले ॥२८६॥
तस्मिन् राष्ट्रे प्रभुर्भुङ्क्ते दीर्घायुर्मनसेप्सितान् । भोगानन्ते च परमं पदं यात्यपुनर्भवम् ॥२८७
तत्कुले रूपविख्याता जायन्ते हृदयङ्गमाः ॥२८८॥
यस्मिन् सदैव देशे तु लिखितं वापि चर्च्चितम् । मम जन्मदिनं पुण्य सर्व्वालङ्कार-शोभितम् ।
पूज्यते पाण्डवश्रेष्ठ जनैरुत्सव-संयुतम् ॥२८९॥
परचक्रभयन्तत्र न कदाचिद्भवत्युत । पर्ज्जन्यः कामवर्षी स्यादीतिभ्यो न भयं भवेत् ॥२९०॥
गृहे वा पूज्यते यस्मिन् देवक्याश्चरितं मम । तत्र सर्व्वसमृद्धिः स्यान्नोपसर्गादिकं भयम् ॥२९१॥
पशुतो नकुलाद्व्यालात् पापरोगाच्च पातकात् ।
राजतश्चौरतो वापि न कदाचिद्भयं भवेत् ॥२९२॥

किञ्च—

यस्मिन् गृहे पाण्डुपुत्र लिख्यते देवकीव्रतम् । न तत्र मृतनिष्क्रान्तिर्न गर्भपतनं तथा । २९३॥
न च व्याधिभयं तत्र भवेदिति मतं मम । न वैधव्यं न दौर्भाग्यं न दम्भः कलहो गृहे ॥२९४॥

---

लिखितं तत्तन्मूर्त्यादि-चित्रणेन पटादावङ्कितं, चर्च्चितं चन्दनचूर्णादिभूषितं सत्; यद्वा, पुस्तके लिखितं वर्णमयत्वेन, चर्च्चितं पटादिषु चित्रितं वापीत्यर्थः ॥२८९॥

ईतयश्चोक्ताः—'अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः । प्रत्यासन्नाश्च राजानः षड़ेता ईतयः स्मृताः ॥' इति ॥२९०॥

देवक्या मम चरितं तथैव लिखितं जन्मदिनवृत्तम्, उपसर्गा विविधोपद्रवाः, आदि-शब्दान्नरकादि, तद्रूपं भयम्, उपसर्गादिजमिति वा पाठः । उपसर्गानेवाभिव्यञ्जयति—पशुत इत्यादि ॥२९१-२९२॥

देवकीव्रतमिति, आत्मना सह तस्या अभेदाभिप्रायेण । यद्वा, तत्तपःफलरूपं मज्जन्मदिनव्रतमित्यर्थः । पाठान्तरं सुगमम्, मृतनिष्क्रान्तिर्न भवति, किन्तु जीवन्नेव गर्भान्निष्क्रामतीत्यर्थः । गर्भस्य पतनं स्रावश्च न भवति ॥२९३॥

---

सर्व दुःखहीन, सर्व धर्मपरायण, एवं दीघायु होकर सर्व गोकुलसङ्कुल साम्राज्य लाभ करता है । वह उस साम्राज्य के प्रभु रूप में विविध अभिलषित भोग सम्भोग पूर्वक अपुनर्भव परमपद में प्रस्थान कर सकता है । उसके वंश में रूपवान् एवं हृदयवान् महात्मागण की उत्पत्ति होती है ॥२८५-२८८॥

हे पाण्डवश्रेष्ठ ! जिस देश के मनुष्य, सतत चित्रपट में मेरा पवित्र जन्मदिन अङ्कित अथवा चन्दनादि से चर्चित, सब अलङ्कारों से विभूषित और उत्सवान्वित करके पूजा करते हैं, उनको कभी शत्रुसमूह से भय की आशङ्का नहीं रहती । उस देश में मेघ यथासमय वारि वर्षण करते हैं एवं वहाँ ईति भय नहीं होता । अर्थात् "अतिवृष्टिरनावृष्टिः शलभामूषिकाः खगाः । प्रत्यासन्नाश्च राजानः षड़ेते ईतयः स्मृताः" अतिवृष्टि अनावृष्टि, शलभ, मूषिक, पक्षी और सन्निहित राजा,–इन छः को ईति कहते हैं, इनसे भय नहीं होता है । देवकी चरित एवं मज्जन्मवृत्तान्त गृह में लिखित होने पर वहाँ समस्त समृद्धि समागत होती हैं, एवं उपसर्गादि भय, पशु, नकुल, सर्प, पापरोग, पाप, नृपति एवं चौर भय की कभी आशङ्का नहीं रहती । ॥२८९-२९१॥

और भी लिखित है – हे पाण्डुपुत्र ! मदीय जन्मवृत्तान्त लिखित होने से वहाँ मृत सन्तान प्रसूत नहीं होती, गर्भपात का भय नहीं रहता । व्याधि वैधव्य, एवं दौर्भाग्य उपस्थित नहीं होता, एवं गृह में दम्भ कलह की सृष्टि भी नहीं होती, यही मेरा अभिमत जानना चाहिये ॥२९२-२९४॥

सम्पर्केणापि यः कुर्य्यात् कश्चिज्जन्माष्टमीव्रतम् ।
विष्णुलोकमवाप्नोति सोऽपि पार्थ न संशय ।।२९५।।

जन्माष्टमीजनमनोनयनोत्सवाढ्या, पापापहा सपदि नन्दितनन्दगोपा ।
यो देवकीं सदयितां यजतीह तस्यां, पुत्त्रानवाप्य समुपैति पदं न विष्णोः ।।२९६।।

विष्णुधर्म्मे—

रोहिणी च यदा कृष्णपक्षेऽष्टम्यां द्विजोत्तम ।
जयन्ती नाम सा प्रोक्ता सर्व्वपापहरा तिथिः ।।२९७।।

यद्बाल्ये यच्च कौमारे यौवने वार्द्धकेऽपि यत् । सप्तजन्मकृतं पापं स्वल्पं वा यदि वा बहु ।
तत् क्षालयति गोविन्दं तस्यामभ्यर्च्च्य भक्तितः ।।२९८।।

होमयज्ञादिदानानां फलञ्च शतसम्मितम् । सम्प्राप्नोति न सन्देहो यच्चान्यन्मनसेप्सितम् ।।२९९
उपवासश्च तत्रोक्तो महापातकनाशनः ।।३००।।

विष्णुरहस्ये—

जयन्त्यामुपवासन्तु कृत्वा योऽर्च्चयते हरिम् ।
तस्य जन्मशतोद्भूतं पापं नश्यति सर्व्वथा ।।३०१।।
कौमारे यौवने बाल्ये वार्द्धक्ये यदुपार्ज्जितम् ।
तत् पापं शमयेत् कृष्णस्तिथावस्यां सुपूजितः ।।३०२।।
स्नानं दानं तथा होमः स्वाध्यायोऽथ जपस्तपः ।
सर्व्वं शतगुणं प्रोक्तं जयन्त्यां यत् कृतं हरेः ।।३०३।।

धनधान्यवहा पुण्या सर्व्वपापहरा शुभा । समुपोष्या नरैर्यत्नाज्जयन्ती कृष्णभक्तिदा ।।३०४

---

सम्पर्केण—प्रसङ्गेनापि केनचित् ।।२९५।।
सदयिताम्—श्रीवसुदेवयुक्ताम् ।।२९६।।
कौमारमत्र पौगण्डं कैशोरञ्च, तस्मिन् । एवमग्रेऽप्यूह्यम् ।।२९८।।

---

हे पार्थ ! प्रसङ्गतः जन्माष्टमी व्रतानुष्ठान करने पर निःसन्देह विष्णुलोक लाभ होता है । जन्माष्टमी, जनगण की मनोनयनोत्सव विधायिनी, सद्यः पातकहारिणी एवं श्रीनन्दगोप को आनन्द दायिनी है । इस दिन देवकी एवं वसुदेव की पूजा करने से पुण्यवान् होकर पुत्र प्राप्तकर अन्त में श्रीविष्णु के परमधाम में प्रस्थान कर सकता है ।।२९५-२९६।।

विष्णुधर्म में लिखित है—हे द्विजोत्तम ! कृष्णपक्ष की अष्टमी में रोहिणी नक्षत्र का योग होने से उसको जयन्ती कहते हैं । यह तिथि सर्व पाप हारिणी है । जयन्ती में भक्तिपूर्वक श्रीगोविन्द की पूजा करने पर बाल्य, कौमार, यौवन एवं वृद्धकाल में सञ्चित पाप, एवं सप्तजन्मकृत अल्पाधिक पापसमूह विनष्ट होते हैं । महापातक नाशिनी जयन्ती में उपवासी रहने से होम यज्ञ दानादि कार्य्य के शतगुणित फल एवं अन्य मनोऽभीष्ट समूह प्राप्त होते हैं, इसमें सन्देह नहीं है ।।२९७-३००।।

विष्णुरहस्य में लिखा है—जयन्ती के दिन उपवासी रहकर श्रीहरि की पूजा करने से शतजन्मकृत पाप विनष्ट हो जाता है । जयन्ती का उपवास करके श्रीकृष्ण की पूजा करने पर, भगवान् सुपूजित होकर बाल्य,

ब्रह्मपुराणे पूर्व्वखण्डे जन्माष्टमीमाहात्म्ये श्रीसूतोक्तौ—

या तु कृष्णाष्टमी नाम विश्रुता वैष्णवी तिथिः ।
तस्याः प्रभावमाश्रित्य पूताः सर्व्वे कलौ जनाः ।।३०५।।

श्रावणे मासि बहुला रोहिणीसंयुताष्टमी । जयन्तीति समाख्याता सर्व्वाघौघविनाशिनी ।।३०६

तस्यां विष्णुतिथौ केचिद्धन्याः कलियुगे जनाः ।
येऽभ्यर्च्चयन्ति देवेशं जाग्रतः समुपोषिताः ।।३०७।।

न तेषां विद्यते क्वापि संसारभयमुल्वणम् । यत्र तिष्ठन्ति ते देशे कलिस्तत्र न तिष्ठति ।।३०८

तत्रैव श्रीशुकजनमेजय-संवादे—

य एष भगवान् विष्णुर्देवक्यां वसुदेवतः । जातः कंसबधार्थं हि तद्दिनं मङ्गलालयम् ।।३०९।।

या सा प्रत्यब्दमायाति श्रावणे बहुलाष्टमी । सङ्गता रोहिण्यर्क्षेण नृणां मुक्तिफलप्रदा ।।३१०

यस्यां सनातनः साक्षात् पुराणः पुरुषोत्तमः ।
अवतीर्णः क्षितौ सैषा मुक्तिदेति किमद्भुतम् ? ।।३११।।

तत्रैवाग्रे व्रतविधिकथने —

इदमेव परं श्रेय इदमेव परन्तपः । इदमेव परो धर्म्मो यद्विष्णुव्रतधारणम् ।।३१२।।

---

श्रेय ऐहिकामुष्मिकसुखं, तपः स्वधर्म्माचरणं कृच्छ्रादि वा, धर्म्मो यज्ञादिजं पुण्यं, भक्तिलक्षणो वा ।।३१२

---

कौमार, यौवन एवं वार्द्धक्यकृत निखिल पातक को विनष्ट कर देते हैं । श्रीहरि के जयन्ती वासर में स्नान, दान, होम, स्वाध्याय, जप, तप, प्रभृति जिस किसी कार्य्य का अनुष्ठान किया जाय,—वह सब सौ गुणा फल प्रदान करता है । कृष्णभक्ति दायिनी शुभा जयन्ती में यत्नपूर्वक उपवास करने से उक्त तिथि उपवासी को धन, धान्य एवं पुण्य प्रदान और निखिल पाप को संहार कर देती है ।।३०१-३०४।।

ब्रह्मपुराण के पूर्वखण्ड के जन्माष्टमी व्रत माहात्म्य कथन प्रसङ्ग में श्रीसूतोक्ति है— कृष्णाष्टमी वैष्णवी तिथि नाम से अभिहिता है । इस तिथि की शरण लेने से कलियुग में मानव शुद्ध हो सकते हैं । श्रावणी कृष्णाष्टमी में रोहिणी का समावेश होने से उसको जयन्ती कहते हैं । यह तिथि सर्व पापहारिणी है । कलि-काल में जो धन्य मानव इस विष्णु तिथि में उपवासी एवं जाग्रत होकर श्रीहरिपूजा करते हैं, उनको कभी भी संसार भयभीत होना नहीं पड़ता है । वे सब जहाँ पर निवास करते हैं, कलि वहाँ पर रहने में अक्षम होता है ।।३०५-३०८।।

उक्त पुराण के श्रीशुक-जन्मेजय-संवाद में लिखित है—भगवान् श्रीविष्णु कंस को मारने के निमित्त वसुदेव देवकी से जिस प्रकार उत्पन्न हुए हैं, उनके जन्मदिन मङ्गलाधार है, प्रतिवर्ष श्रावणमास में रोहिणी विशिष्टा कृष्णाष्टमी का आगमन होता है, उक्त तिथि मानववृन्दों के पक्ष में मुक्तिफल प्रदान कारिणी है । जबकि साक्षात् सनातन पुराण पुरुषोत्तम श्रीकृष्ण, इस तिथि में भूतल में अवतीर्ण हुए हैं, तब जो वह तिथि मुक्तिदा है, इसमें आश्चर्य्य क्या है ? ।।३०९-३११।।

इसी स्थान में आगे व्रतविधि कथन प्रसङ्ग में लिखित है—श्रीहरि व्रतधारण को ही परम मङ्गल, परम तपस्या, एवं परम धर्म कहते हैं ।।३१२।।

स्कान्दे ब्रह्मनारदसंवादे—

कृष्णजन्माष्टमी लोके प्रसिद्धा पापनाशिनी । क्रतुकोटिसमा त्वेषा तीर्थायुतशतैः समाः ॥३१३

कपिलागोसहस्रन्तु यो ददाति दिने दिने । तत् फलं समवाप्नोति जयन्त्यां समुपोषणे ॥३१४॥

हेमभारसहस्रन्तु कुरुक्षेत्रे प्रयच्छति । तत्फलं समवाप्नोति जयन्त्यां समुपोषणे ॥३१५॥

रत्नकोटिसहस्राणि यो ददाति द्विजोत्तम । तत्फलं समवाप्नोति जयन्त्यां समुपोषणे ॥३१६॥

वापीकूपसहस्राणि देवतायतनानि च । कन्याकोटिप्रदानेन यत् फलं कविभिः स्मृतम् ।
मातापित्रोर्गुरूणाञ्च भक्तिमुद्वहतां फलम् ॥३१७॥

गुर्व्वर्थे ब्राह्मणार्थे वा स्वाम्यर्थे वा त्यजेत्तनुम् । परोपकारयुक्तानां तीर्थसेवारतात्मनाम् ।
सत्यव्रतानां यत् पुण्यं जयन्त्यां समुपोषणे ॥३१८॥

निराश्रयेषु वसतां तापसानान्तु यत् फलम् । राजसूयसहस्रेषु शतवर्षाग्निहोत्रतः ।
एकेनैवोपवासेन जयन्त्यां तत् फलं स्मृतम् ॥३१९॥

कृत्वा राज्यं महीं भुक्त्वा प्राप्य कीर्त्तिञ्च शाश्वतीम् ।
जयन्त्याश्चोपवासेनन विष्णोर्मूर्त्तौ लयं गताः ॥३२०॥

धर्म्ममर्थञ्च कामञ्च मुक्तिञ्च मुनिपुङ्गव ।
ददाति वाञ्छितान् कामान् श्रावणे मासि चाष्टमी ॥३२१॥

जन्माष्टमीव्रतं ये वै प्रकुर्व्वन्ति नरोत्तमाः । कारयन्ति च विप्रेन्द्र लक्ष्मीस्तेषां सदा स्थिरा ॥३२२

---

गुर्व्वाद्यर्थे यस्तनु त्यजेत्, तस्य यत् पुण्य स्यादित्यर्थः । जयन्त्यां सम्यगुपोषणे उपवासे सति तत् स्यादिति शेषः । तदुपोषणे इति वा पाठः ॥३१८॥

---

स्कन्द पुराण के ब्रह्म-नारद-सवाद में उक्त है—श्रीकृष्णजन्माष्टमी ही पापनाशिनी नाम से कीर्त्तित है, यह तिथि कोटि यज्ञ के अयुत तीर्थ के तुल्य है । जयन्ती में उपवासी होने पर प्रत्यह सहस्र कपिलादानज पुण्य लाभ होता है । कुरुक्षेत्र तीर्थ में सहस्र स्वर्ण भार अर्पण करने से जो पुण्य लाभ होता है, जयन्ती में उपवास करने पर वह फल लाभ होता है ॥३१३-३१५॥

हे द्विजोत्तम ! जयन्ती में उपवास करने पर सहस्रकोटि रत्नदान जनित फल लाभ हो सकता है । बहु सहस्र वापी, कूप, देवालय, एवं कोटि संख्य कन्यादान करने पर जो फल लाभ होता है, पिता माता के प्रति एवं गुरुवर्ग के प्रति भक्ति करने से जो फल प्राप्त होता है, परोपकारी तीर्थ सेवापरायण एवं सत्यव्रत-निष्ठ व्यक्तिगण जो फल लाभ करते हैं, श्रीकृष्ण जयन्ती में उपवास करने पर वह सब फल अर्जित होते हैं ॥३१६-३१८॥

हे द्विजोत्तम ! निराश्रयवासी तापसवृन्द जो फल लाभ करते हैं, बहु सहस्र राजसूययज्ञानुष्ठान से जो फल लाभ होता है, शतवार्षिक अग्निहोत्र अनुष्ठान से जो फल होता है, केवलमात्र कृष्णजयन्ती में उपवास करने से वह सब फल प्राप्त हो जाते हैं । बहुसंख्यक व्यक्ति जयन्ती में उपवास करके राज्य भोग को प्राप्त हुए हैं । एवं चिरकीर्त्ति लाभ पूर्वक श्रीविष्णुमूर्त्ति में लीन हुए हैं ॥३१९-३२०॥

हे मुनिपुङ्गव ! श्रावणी कृष्णाष्टमी धर्मार्थ काम मोक्षदायिका एवं वाञ्छित प्रदा है । हे विप्रेन्द्र ! जो लोक, जन्माष्टमी व्रतानुष्ठान करते हैं, अथवा दूसरे को कराते हैं, उन सब नरश्रेष्ठगण के निकट कमला अचला होकर निवास करती हैं ॥३२१-३२२॥

न वेदैर्न पुराणैश्च मया दृष्टं महामुने । यत्समश्चाधिकं वापि कृष्णजन्माष्टमीव्रतात् ॥३२३॥
नियमस्थं नरं दृष्ट्वा जन्माष्टम्यां द्विजोत्तम । विवर्णवदनो भूत्वा तल्लिपिं मार्ज्जयेद्यमः ॥३२४

किञ्च—

व्रतेनाराध्य तं देवं देवकीसहितं हरिम् ।
त्यक्त्वा यमपथं घोरं याति विष्णोः परं पदम् ॥३२५॥

स्मरणं वासुदेवस्य मृत्युकाले भवेन्मुने । सिध्यन्ति सर्व्वकार्य्याणि कृते जन्माष्टमी व्रते ।
ममाज्ञया कुरुध्वं तज्जयन्तीं मुक्तये तथा ॥३२६॥

ब्रह्माण्डे श्रीसूतोक्तौ च तद्व्रतमहिमानुवर्णनान्ते—

इत्येतत् कथितमशेषशास्त्रगुह्यं, श्रीकृष्णव्रतमहिमानुवर्णनं यत् ।
श्रुत्वैतत् सकृदपि पातकैर्विमुक्तो, देहान्ते व्रजति नरो मुरारिलोकम् ॥३२७॥

अथ श्रीजन्माष्टमीव्रतनिर्णयः

कृष्णोपास्याष्टमी भाद्रे रोहिण्याढ्या महाफला ।
निशीथेऽत्रापि किञ्चेन्दौ ज्ञे वापि नवमीयुता ॥३२८॥

---

तस्य लिपिम्—पापादिलिखनम् ॥३२४॥

तद्व्रताचरण-माहात्म्यं किं लेख्यम् ? तच्छ्रवणादपि परम्पदमिति पुनर्ब्रह्माण्डपुराणवचनं लिखति इतीति ॥३२७॥

भाद्रे मासि कृष्णाष्टमी उपोष्या, सा च रोहिणीनक्षत्रेण युता सती महाफला, केवलाष्टम्युपवासतो रोहिणीयुताष्टम्युपवासे फलातिशयो भवतीत्यर्थः । एवमयं पूर्व्वताऽपवादः, पूर्व्वदिने रोहिणीयुक्ताया अष्टम्या विद्धायाः सत्यास्तथा शुद्धाया अपि सत्याः परदिने बुधवारादि-योगप्राशस्त्यापेक्षया परित्याज्यत्वात् । अतो

---

हे महामुने ! जन्माष्टमी व्रत धारण करने से जो फल लाभ होता है, तत्तुल्य वा तदपेक्षा अधिक फल वेद वा पुराण में भी दृष्ट नहीं होता है ॥३२३॥

हे द्विजोत्तम ! जो मानव जन्माष्टमी में नियम धारण करते हैं, शमनराज उनको देखकर मलीन मुख से उनके पापों को मार्जना कर देते हैं। अर्थात् उनके द्वारा अनुष्ठित आजन्म जितने सञ्चित पाप यमराज की पत्रिका में लिखित हैं, उनको पोंछ देते हैं ॥३२४॥

और भी लिखा है—जो मानव, व्रत के द्वारा देवकी के सहित श्रीकृष्ण की पूजा करते हैं, वे भीषण यमपथ को वर्जन करके श्रीविष्णु के परमपद में प्रस्थान करते हैं। हे मुने ! जन्माष्टमी व्रत साधन करने से मरणकाल में वासुदेव का स्मरण होता है, एवं यावतीय कार्य्य सिद्ध होते हैं। यदि मुक्ति प्राप्त करने की इच्छा हो तो, मेरी आज्ञा से जयन्ती व्रत करो ॥३२५-३२६॥

ब्रह्माण्डपुराण की सूतोक्ति में जन्माष्टमी व्रतमहिमा वर्णन के अन्त में लिखित है—अशेष शास्त्रगुह्य श्रीकृष्ण व्रत महिमा का जो कीर्त्तन हुआ है, मनुष्य उसका सकृन्मात्र श्रवण करने पर सकल पातकों से मुक्त होकर देहावसान में श्रीहरि-धाम में प्रस्थान करते हैं ॥३२७॥

अथ श्रीजन्माष्टमीव्रतनिर्णयः

भाद्र मास की कृष्णाष्टमी उपवासी रहना कर्त्तव्य है, उस दिन अर्द्धरात्रि में यदि रोहिणी नक्षत्र का योग होता है, और यदि सोमवार वा बुधवार एवं नवमी का योग होता है तो वह अष्टमी महाफलदायिनी होती है ॥३२८॥

अथ तत्र रोहिणीयुक्ता जन्माष्टमी

विष्णुरहस्ये —

प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी। मुहूर्त्तमपि लभ्येत सैवोपोष्या महाफला ॥३२९

मुहूर्त्तमप्यहोरात्रे यस्मिन् युक्तन्तु लभ्यते । अष्टम्या रोहिणीऋक्षं तां सुपुण्यामुपावसेत् ॥३३०

किञ्च तत्रैव —

अष्टमी कृष्णपक्षस्य रोहिणीऋक्षसंयुता । भवेत् प्रौष्ठपदे मासि जयन्ती नाम सा स्मृता ॥३३१

विष्णुधर्म्मोत्तरे—

रोहिण्यृक्षं यदा कृष्णपक्षेऽष्टम्यां द्विजोत्तम ।
जयन्ती नाम सा प्रोक्ता सर्व्वपापहरा तिथिः ॥३३२॥

---

रोहिणीयोगे फलविशेष एव तात्पर्य्यम् । अतएव लिखितं महाफलेति, एवमग्रेऽपि ज्ञेयम् । अत्र रोहिणीयोगेऽपि निशीथेऽर्द्धरात्रे अष्टमी महाफला । किञ्चेति पूर्व्वसमुच्चये । इन्दौ सोमवारे, ज्ञे बुधवारे वा निशीथे रोहिण्याढ्याष्टमी यदा भवति, तदा महाफलेत्यर्थः । अत्र च व्रतद्वयोदाहरणं द्रष्टव्यम् । यद्यपि तस्मिन् वचने निशीथयोगो न श्रूयते, तथापि किं पुनर्नवमीयुक्तेत्यादि-कैमुतिकन्यायेन पृथगुक्तेर्निशीथयोगे व्रतापेक्षया तद्दिने व्रते सति परदिने तिथिनक्षत्रवृद्धिसम्भवात् 'तिथिभान्ते च पारणम्' इत्यस्यावकाशः स्यात्, तच्चाग्रे पारणलिखने व्यक्तं भावि । अपिशब्दोऽपि पूर्व्वसमुच्चये । सोमे बुधे वा रोहिण्याष्टमी युक्ता चेद्भवति, तदा च महाफलेत्यर्थः। अत्र च यद्यपि रात्रिशेषे नवमीयोगे सति निशीथयोगोऽपि घटते, तथापि 'उदये चाष्टमी किञ्चिन्नवमी सकला यदि' इति वचनापेक्षया निशीथयोगोऽत्र न प्रायेणादरणीयः । यदि च कदाचिन्निशीथे तत्तद्योगो वृत्तः, नवमी च रात्रिशेषे स्यात्तदा संयोगविशेषो मन्तव्यः, यतः केषाञ्चिन्मते किञ्चिदष्टमीवृद्धौ रोहिण्यां सत्यां नवमीदिन एव तत्तद्वारायोगे तत्तद्वचनबलान्महाफलतावगम्यते, नान्यत्रेति । तच्च 'तिथिभान्ते च पारणम्' इत्यस्यानवकाशान्नादरणीयमिति दिक् । एतच्चाशेषमग्रे लेख्य-तत्तद्वचनतः सविशेषं व्यक्तं भावि ॥३२८॥

'जन्माष्टमीदिने प्राप्ते येन भुक्तम्' इत्येतत्, तथा 'ये न कुर्व्वन्ति जानन्तः' इत्यादीनि च नित्यतालिखने पूर्व्वं लिखितानि वचनान्येव केवलभाद्रकृष्णाष्टम्युपवासोदाहरणानि वर्त्तन्त एव; इदानीं रोहिण्यादियोगवचनान्युदाहरणत्वेन लिखति—प्राजापत्येत्यादिना विशेषत इत्यन्तेन । नभसि—श्रावणे ॥३२९॥

अष्टम्या युक्तम् ॥३३०॥

किञ्च, या च रोहिणीयुक्ता, सा जयन्ती नाम, सैवोपवासादौ महाफलेत्यभिप्रायेण लिखति—अष्टमीत्यादि सार्द्धाष्टकेन ।प्रौष्ठपदे— भाद्रे ॥३३१॥

---

अथ तत्र रोहिणीयुक्ता जन्माष्टमी

विष्णुरहस्य में लिखित है— श्रावण मास की कृष्णाष्टमी मुहूर्त्तमात्र रोहिणीयुक्ता होने पर भी उस महाफलदायिनी तिथि में उपवास करना चाहिये ।।३२९।।

दिवा रात्रि के मध्य में जिस अष्टमी में मुहूर्त्तमात्र भी रोहिणी नक्षत्र का योग होता हो, तो, उसी सुपुण्य तिथि में उपवास करना चाहिये ।।३३०।।

उक्त स्थान में और भी लिखित है—भाद्रमास की कृष्णपक्षीय अष्टमी में यदि रोहिणी मिलित होती है तो, उस तिथि को जयन्ती कहते हैं, ऋषिगणों का यह अभिमत है ।।३३१।।

विष्णुधर्मोत्तर में उक्त है—हे द्विजोत्तम ! यदि कृष्णपक्ष की अष्टमी में रोहिणी नक्षत्र का संयोग होता है तो उस तिथि का नाम जयन्ती है, यह तिथि समस्त पाप हरण करती है । अनेकानेक जन्मों में बाल्य,

यद्बाल्ये यच्च कौमारे यौवने वार्द्धके तथा । बहुजन्मकृतं पापं हन्ति सोपोषिता तिथिः ॥३३३

स्कान्दे—

प्राजापत्येन संयुक्ता अष्टमो तु यदा भवेत् । श्रावणे बहुले पक्षे सर्व्वपापप्रणाशिनी ॥३३४॥
जयं पुण्यञ्च कुरुते जयन्तीं तेन तां विदुः ॥३३५॥

विष्णुपुराणे—

कृष्णाष्टम्यां भवेद्यत्र कलैका रोहिणी नृप ।
जयन्ती नाम सा ज्ञेया उपोष्या सा प्रयत्नतः ॥३३६॥
सप्तजन्मकृतं पापं राजन् यत्त्रिविधं नृणाम् ।
तत् फालयति गोविन्दस्तिथौ तस्यान्तु भावितः ॥३३७॥

उपवासश्च तत्रोक्तो महापातकनाशनः । जयन्त्यां जगतोपाल विधिनात्र न संशयः ॥३३८॥
त्रेतायां द्वापरे चैव राजन् कृतयुगे तथा । रोहिणीसंयुता चेयं विद्वद्भिः समुपोषिता ॥३३९॥

अग्निपुराणे—

अर्द्धरात्रादधश्चोर्द्धं कलया वा यदा भवेत् । जयन्ती नाम सा प्रोक्ता सर्व्वपापप्रणाशिनी ॥३४०

---

त्रिविधं कायिकादिभेदेन पातकोपपातकादिभेदेन वा । भावितः पूजितो, ध्यातोऽपि वा ॥३३७॥

विधिना उपवासः ॥३३८॥

नन्वष्टम्या रोहिणीयोगः कदा ग्राह्यः ? इत्यपेक्षायां लिखति—अर्द्धेति । अधः परस्तात्, ऊर्द्ध्वं वा पूर्व्वं कलामात्रेणापि योगो यदा भवेत्, अत्र च योगमात्रे तात्पर्य्यं न त्वर्द्धरात्रे । तथा विवक्षायाश्चायं श्लोकोऽर्द्धरात्र-योगप्रकरणे द्रष्टव्यः ॥३४०-३४१॥

---

कौमार, यौवन, और वार्द्धक्य में जिन सब पापों का कार्य्य होगया है, जयन्ती तिथि में उपवास करने पर, वे सब पाप, दूर हो जाते हैं ॥३३२-३३३॥

स्कन्दपुराण में लिखित है—श्रावणमास की कृष्णाष्टमी में यदि रोहिणी नक्षत्र का संयोग होता है तो, उस दिन उपवास करने पर, सकल पातक अष्टमी विनष्ट करती है। जयदान एवं पुण्यदान भी करती है, तज्जन्य बुधगण इसको जयन्ती कहते हैं ॥३३४-३३५॥

विष्णुपुराण में लिखित है—कृष्णाष्टमी में कलामात्र रोहिणी नक्षत्र का योग होने पर उसको जयन्ती कहते हैं। यत्नपूर्वक उसमें उपवास करना चाहिये ॥३३६॥

हे राजन् ! जयन्ती तिथि में गोविन्द पूजित होकर सात जन्म का दैहिक, वाचक और मानसिक, त्रिविध पातक विनष्ट होते हैं। अथवा त्रिविध शब्द से पातक, उपपातक, महापातक विनष्ट होते हैं ॥३३७

हे भूप ! जयन्ती तिथि में उपवासी रहने से महापातक नष्ट होता है, इस प्रकार कथित है। इसमें सन्देह नहीं है ॥३३८॥

अग्निपुराण में लिखित है—बुधव्यक्तिगण, सत्य, त्रेता, द्वापर,–इन तीनों युगों में ही रोहिणी नक्षत्र-युक्त अष्टमी तिथि में उपवास करते थे ॥३३९॥

अग्निपुराण में लिखित है—अर्द्धरात्रि के पूर्व में अथवा पश्चात् यदि एक कला रोहिणी हो तो, उसको जयन्ती कहते हैं। वह सर्व पातक प्रणाशिनी नाम से कीर्त्तित है ॥३४०॥

अथ अर्द्धरात्रयुता जन्माष्टमी

भविष्यविष्णुधर्म्मयोः—

रोहिण्यामर्द्धरात्रे च यदा कृष्णाष्टमी भवेत् ।
तस्यामभ्यर्च्चनं शौरे हन्ति पापं त्रिजन्मजम् ।।३४१।।

प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी । सोपवासो हरेः पूजां तत्र कृत्वा न सीदति ।
अर्द्धरात्रे च योगोऽयं तारापत्युदये सति ।।३४२।।

किञ्च—

रोहिणी-सहिता कृष्णा मासि भाद्रपदेऽष्टमी ।
अर्द्धरात्रादधश्चोर्द्ध्वं कलयापि यदा भवेत् ।।३४३।।

तत्र जातो जगन्नाथः कौस्तुभी हरिरव्ययः । तमेवोपवसेत् कालं कुर्य्यात् तत्रैव जागरम् ।।३४४।।

जयन्ती नाम सा रात्रिस्तत्र जातो जनार्द्दनः ।
नियतात्मा शुचिः स्नात्वा पूजां तत्र प्रवर्त्तयेत् ।।३४५।।

वह्निपुराणे—

समयोगे तु रोहिण्या निशीथे राजसत्तम । समजायत गोविन्दो बालरूपी चतुर्भुजः ।
तस्मात्तं पूजयेत्तत्र यथावित्तानुसारतः ।।३४६।।

भविष्योत्तरे—

मासि भाद्रपदेऽष्टम्यां कृष्णपक्षेऽर्द्धरात्रके । शशाङ्के वृषराशिस्थे प्राजापत्यर्क्षसंयुते ।
उपोषितोऽर्च्चयेत् कृष्णं यशोदां देवकीन्तथा ।।३४७।।

---

समयोग इति निशीथमात्रव्यापिनी रोहिणी चाष्टमी चेति बोधयति । अतएव शुद्धेति पर्य्यवस्यति ।।३४६

---

अथ अर्द्धरात्रयुता जन्माष्टमी

भविष्य एवं विष्णुधर्म में लिखित है—जब अर्द्धरात्र रोहिणी में कृष्णाष्टमी सप्तमी विद्धा होती है, उसमें श्रीकृष्ण की पूजा करने पर वह विनष्ट होती है, अर्थात् त्रि-जन्म-कृत पुण्य विनष्ट होता है । श्रावण मास के कृष्णपक्ष की रोहिणी नक्षत्र युक्त अष्टमी तिथि में उपवास एवं हरिपूजा करने से अवसन्न नहीं होना पड़ता है । अर्द्धरात्र में चन्द्रोदय होने पर यह योग होता है ।।३४१-३४२।।

और भी लिखा है—भाद्रमास की कृष्णाष्टमी में अर्द्धरात्रि के पीछे वा पहले कलामात्र रोहिणी नक्षत्र का योग होने पर ही उसमें कौस्तुभधारी अव्यय जगन्नाथ श्रीहरि, जन्म ग्रहण किये हैं, ऐसा जानना होगा। उस समय उपवासी रहना एवं जागरण करना चाहिये । जयन्ती नामक उस रात्रि में जनार्दन जन्म ग्रहण किये हैं, अतएव संयत चित्त, शुचि एवं कृतस्नान होकर उस तिथि में श्रीहरि की पूजा करे ।।३४३-३४५।।

वह्निपुराण में लिखित है—हे राजसत्तम ! निशीथ में रोहिणी नक्षत्र का संयोग होने से उसमें बालक रूपी चतुर्भुज गोविन्द जन्म ग्रहण किये हैं । तज्जन्य विभवानुसार उस तिथि में श्रीहरि की पूजा करनी चाहिये ।।३४६।।

भविष्योत्तर में कथित है—भाद्रमास की कृष्णाष्टमी की अर्द्धरात्रि में वृषराशिस्थ चन्द्र में रोहिणी नक्षत्र का संयोग होने पर उपवास करके कृष्ण, यशोदा, एवं देवकी की पूजा करे ।।३४७।।

किञ्च —

मासि भाद्रपदेऽष्टम्यां निशीथे कृष्णपक्षके । शशाङ्के वृषराशिस्थे ऋक्षे रोहिणीसंज्ञके ।
योगेऽस्मिन् वसुदेवाद्धि देवी देवमजीजनत् ॥३४८॥
तस्मात् सम्पूजयेदत्र शुचिः सम्यगुपोषितः ॥३४९॥

पाद्मे—

प्रेतयोनिं गतानान्तु प्रेतत्वं नाशितं नरैः । यैः कृता श्रावणे मासि अष्टमी रोहिणीयुता ॥३५०
किं पुनर्बुधवारेण सोमेनापि विशेषतः । किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा ॥३५१॥

स्कान्दे —

उदये चाष्टमी किञ्चिन्नवमी सकला यदि । भवते बुधसंयुक्ता प्राजापत्यर्क्षसंयुता ।
अपि वर्षशतेनापि लभ्यते वा न वा विभो ॥३५२॥

भविष्ये च—

नवम्यां योगनिद्राया जन्माष्टम्यां हरेस्ततः ।
नवम्या सहितोपोष्या रोहिणी बुधसंयुता ॥३५३॥ इति ।

इन्दुः पूर्व्वेऽहनि ज्ञे वा परे चेद्रोहिणीयुता । केवला चाष्टमी वृद्धा सोपोष्या नवमीयुता ॥३५४॥

---

लभ्यते वा न वेति परमदौर्लभ्योक्त्याऽस्य योगस्य महामहिमाभिप्रेतः ॥३५२॥

---

और भी वर्णित है—भाद्रमास की कृष्णपक्षीया अष्टमी में निशीथ काल में वृषराशिस्थ चन्द्र में रोहिणी नक्षत्र के योग में वसुदेव देवकी से श्रीकृष्ण आविर्भूत हुये हैं ॥३४८-३४९॥

पद्मपुराण में उक्त है—जो सब मनुष्य, श्रावण मास की रोहिणीयुक्त अष्टमी में व्रत करते हैं, वे सब प्रेतयोनिगत मनुष्यों का प्रेतत्व मोचन करते हैं ॥३५०॥

विशेषतः यह रोहिणीयुक्ता अष्टमी, यदि बुधवार वा सोमवार किंवा नवमीयुक्ता होती है, तो वह कोटि कुल को मुक्ति प्रदान करती है ॥३५१॥

स्कन्दपुराण में लिखा है—उदय समय में यत्किञ्चित् अष्टमी एवं समस्त दिवा-रात्रि नवमी, तथा बुधवार एवं रोहिणी नक्षत्र का योग अति दुर्लभ है। हे विभो ! इस प्रकार योग शतवर्ष में भी प्राप्त होना सम्भव नहीं है ॥३५२॥

भविष्य पुराण में कथित है—नवमी में योगनिद्रा एवं अष्टमी में श्रीहरि का जन्म ग्रहण होता है। अतएव बुधवार एवं रोहिणी संयुक्त नवमी सहित अष्टमी में उपवास करना चाहिये ॥३५३॥

पूर्व दिन यदि सोमवार किंवा बुधवार हो, और यदि अष्टमी वर्द्धित होकर अर्थात् षाट दण्ड के ऊपर होकर परदिन में रोहिणीयुक्त नवमी समन्वित हो तो, वृद्धिगामिनी अष्टमी में उपवास करना चाहिये। तात्पर्य्य यह है कि सूर्य्योदय से अष्टमी प्रवृत्ता होकर सम्पूर्ण षष्टि दण्ड रहकर परदिन यदि कुछ समय तक अवशेष रहती है तो, किस दिन व्रत करना होगा ? इस प्रकार संशय अपनोदन हेतु कहते हैं, पूर्व दिवस सप्तमी विद्धा रहित शुद्धा अष्टमी में बुधवार अथवा सोमवार हो तो पूर्व दिन व्रत करना चाहिये। और यदि परदिन वर्धिता अष्टमी के सहित रोहिणी नक्षत्र का योग होता है तो, पूर्व दिन को परित्याग करके नवमी युक्ता अष्टमी में व्रत करना चाहिये। और यदि उभय दिन में ही रोहिणी नक्षत्र का योग नहीं होता है तो सोमवार किंवा बुधवार संयुक्ता शुद्धा अष्टमी में व्रत करणीय है ॥३५४॥

तथा च पाद्मे—

मुहूर्त्तेनापि संयुक्ता सम्पूर्णा चाष्टमी भवेत् । किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा ॥३५५

सूतोक्तौ च—

मासि भाद्रपदे कृष्णा अष्टमी नवमी भवेत् । पूज्याष्टमी ततः पुंभिः स्त्रीभिश्चापि विशेषतः॥ ३५६

रोहिण्यादेर्वियुक्तापि सोपोष्या केवलाष्टमी ।
तत्तद्योगस्तु वैशिष्ट्ये व्रतलोपोऽन्यथा भवेत् ॥३५७॥
इत्थं शुद्धैव लिखिता योगाद्बहुविधाष्टमी ।
त्याज्या विद्धा च सप्तम्या सा विद्धैकादशी यथा ॥३५८॥

अथ सप्तमीविद्धजन्माष्टमीनिषेधः

ब्रह्मवैवर्त्ते—

वर्ज्जनीया प्रयत्नेन सप्तमीसहिताष्टमी । सऋक्षापि न कर्त्तव्या सप्तमीसंयुताष्टमी ॥३५९॥

---

नन्वेवं रोहिण्यर्द्धरात्रादियोगापेक्षया कदाचिद्विद्धोपवासप्रसङ्गः स्यात्, तथा तत्तद्योगाभावे व्रतलोपप्रसङ्गोऽपि भवेत्, तच्चायुक्तमग्रे विद्धावर्ज्जनात्, तथा व्रतस्य नित्यत्वाच्च । सत्यं, तत्तद्योगश्च फलविशेषार्थ एव ज्ञेयः, न तु व्रतेऽवश्यमपेक्षणीयः; अतस्तद्योगाभावेऽपि केवलाष्टम्यामेव व्रतं विधेयमिति लिखति—रोहिण्यादीति । आदि-शब्देन अर्द्धरात्र-नवम्यादि, सा भाद्रमासस्य कृष्णपक्षीया, विशिष्टनिमित्ते फलविशेषार्थमेवेत्यर्थः । एवञ्च रोहिण्यर्द्धरात्रादियोगानामवश्यापेक्षत्वाभावाद्विद्धावर्ज्जनमपि सिद्धमेव ॥३५७॥

एतदेवाभिव्यञ्जयन् विद्धाव्रतं त्याजयति—इत्थमिति । योगादिति रोहिण्यादियोगभेदेन बहुविधाऽपि जन्माष्टमीयं शुद्धैव सप्तमीवेधवर्ज्जितैव लिखिता, न तु रोहिण्यादियोगापेक्षया विद्धेत्यर्थः । अतो विशुद्धायामेव सत्यां तत्तद्योग आदरणीयः, न तु विद्धायामिति भावः; यतो विद्धा सर्व्वथैव त्याज्येति । सा जन्माष्टमी च सप्तम्या विद्धा सती त्याज्यैव, तत्र वैष्णवानां सर्व्वथा सर्व्वत्र विद्धात्यागं दृष्टान्तेन स्मारयति—विद्धेति । एतच्चैकादशीप्रकरणे स्पष्टं लिखितमेव ॥३५८॥

---

अतएव पद्मपुराण में लिखित है—सम्पूर्णा अष्टमी यदि मुहूर्त्त मात्र भी रोहिणी नक्षत्र युक्ता होती है तो और यदि वह नवमी के सहित मिलिता होती है तो वह कोटि कुल को मुक्तिदायिनी तिथि है ॥३५५॥

सूतोक्ति में प्रकाशित है—भाद्रमास की कृष्णाष्टमी यदि नवमी संयुक्ता होती है, तो पुरुषगण, विशेषतः स्त्रीगण के पक्ष में वह तिथि आदरणीया है ॥३५६॥

रोहिणी प्रभृति का योग न होने से केवल अष्टमी में उपवास करे, योग का वैशिष्ट्य अनुसन्धान करने पर कभी व्रत लोप की सम्भावना होगी । अभिप्राय यह है कि यदि अर्धरात्र योग के प्रति निष्ठा हो तो कभी सप्तमी विद्धा अष्टमी में उपवास हो सकता है । एतज्जन्य सप्तमी विद्धा अष्टमी में किंवा सोमवार वा बुधवार अथवा रोहिणी नक्षत्र का योग विद्यमान न होने पर भी कभी विद्धाव्रत नहीं करना चाहिये ।३५७-८

अथ सप्तमीविद्धजन्माष्टमीव्रतनिषेधः

ब्रह्मवैवर्त्त में लिखा है—यत्नपूर्वक सप्तमी रहिता अष्टमी को वर्जन करना चाहिये । जिस प्रकार विद्धा एकादशी परित्याज्या है, उस प्रकार सप्तमी विद्धा अष्टमी परित्याज्या है । उसमें रोहिणी नक्षत्र का योग होने पर भी उस दिन व्रत नहीं करना चाहिये ॥३५९॥

पाद्मे —

पञ्चगव्यं यथा शुद्धं न ग्राह्यं मद्यसंयुतम् । रविविद्धा तथा त्याज्या रोहिणीसहिता यदि ॥३६०

पूर्व्वविद्धा यथा नन्दा वर्ज्जिता श्रवणान्विता । तथाष्टमीं पूर्व्वविद्धां सऋक्षाञ्च विवर्ज्जयेत् ॥३६१

वर्ज्जनीया प्रयत्नेन सप्तमीसंयुताष्टमी । विना ऋक्षेण कर्त्तव्या नवमीसंयुताष्टमी ॥३६२॥

अविद्धायां सऋक्षायां जातो देवकिनन्दनः ॥३६३॥

वासरे वा निशार्द्धे वा सप्तम्याञ्च यदाष्टमी । पूर्व्वमिश्रा तदा त्याज्या प्राजापत्यर्क्षसंयुता ॥३६४

पाद्मे —

जन्माष्टमीं पूर्व्वविद्धां सऋक्षां सकलामपि । विहाय नवमीं शुद्धामुपोष्य व्रतमाचरेत् ॥३६५॥

सकलापि सऋक्षापि नवमीसंयुतापि च । जन्माष्टमी पूर्व्वविद्धा न कर्त्तव्या कदाचन ॥३६६॥

पलवेधे तु विप्रेन्द्र सप्तम्या चाष्टमीं त्यजेत् । सुराया विन्दुना स्पृष्टं गङ्गाम्भःकलसं यथा ॥३६७

विना ऋक्षेण कर्त्तव्या नवमी-संयुताष्टमी । सऋक्षापि न कर्त्तव्या सप्तमीसंयुताष्टमी ।३६८॥

तस्मात् सर्व्वप्रयत्नेन त्याज्यमेवाशुभं बुधैः । वेधे पुण्यक्षयं याति तमः सूर्य्योदये यथा ॥३६९॥

---

रविः सप्तमी, यद्यपि रोहिणीसहिता ॥३६०॥

नन्दा एकादशी श्रवणान्वितापि । अत्र च यथाशब्दबलात् केचिदेवं मन्यन्ते— अरुणोदये दशम्या विद्धा यथैकादशी वर्ज्जिता, तथा अरुणोदये सप्तम्या विद्धा जन्माष्टम्यपि त्याज्या । अतो रोहिणीं विनापि नवम्येवोपोष्या । अतएवोक्तं स्कान्दे --'जन्माष्टमीं पूर्व्वविद्धां सऋक्षां सकलामपि । विहाय शुद्धां नवमीमुपोष्य व्रतमाचरेत् ॥' इत्यादि । अनेनाभिप्रायेणैव पाद्म-स्कान्दादौ नवमीयुतापीति अष्टम्युपवासस्य प्राशस्त्यमुक्तमिति तच्च न सुसङ्गतम् । एकादशीतराशेषतिथीनां रव्युदयतः प्रवृत्तानामेव सम्पूर्णत्वेनारुणोदयवेधासिद्धेः । तच्च पूर्व्वं सम्पूर्णालक्षणे लिखितमेव ॥३६१॥

अप्यर्थे चकारः । सऋक्षां रोहिणीसहितामपि ॥३६४-३६५॥

प्राजापत्यर्क्षसयुतापि नवमीसंयुतापि नवमीसंयुतापीत्यष्टमीक्षयाभिप्रायेण ॥३६८॥

अशुभम्—वेधलक्षणम् ॥३६९॥

---

पद्मपुराण में लिखित है—जिस प्रकार पञ्चगव्य शुद्ध होने से भी मद्य संयुक्त होने पर ग्रहण योग्य नहीं होता है, ऐसे ही सप्तमी विद्धा अष्टमी में रोहिणी का योग होने पर भी, उस दिन व्रत न करे ॥३६०॥

श्रवणा का योग होने पर भी जिस प्रकार दशमी विद्धा एकादशी त्यागने योग्या है, ऐसे ही रोहिणी नक्षत्र का योग होने पर भी सप्तमी विद्धा अष्टमी त्यागने योग्या है ॥३६१॥

सप्तमी संयुक्ता अष्टमी को वर्जन यत्नपूर्वक करे, रोहिणी नक्षत्र का योग न होने पर भी केवल नवमी युक्ता अष्टमी में व्रत करना चाहिये । सप्तमीवेध रहित रोहिणी नक्षत्र सहित अष्टमी में देवकीनन्दन जन्म ग्रहण किये थे । दिवस में किंवा अर्धरात्रि में अष्टमी होने पर, उसमें नवमी एवं रोहिणी नक्षत्र मिलित होने पर भी पूर्वविद्धा अर्थात् सप्तमीविद्धा त्याज्या है ॥३६२-३६४॥

पद्मपुराण में लिखित है—सप्तमीविद्धा अष्टमी, सम्पूर्ण रोहिणी नक्षत्र समन्विता होने पर भी उसको वर्जन करके केवल नवमी में हो व्रत उपवासादि करना चाहिये । अहोरात्र रोहिणी एवं नवमी संयुक्त होने पर भी कदाच सप्तमीवेध युक्ता जन्माष्टमी ग्रहणीय नहीं है । हे विप्रेन्द्र ! गङ्गोदकपूर्ण कुम्भ जिस प्रकार बिन्दुमात्र सुरा के योग से अशुद्ध होकर वर्जनीय होता है, उस प्रकार एक पल मात्र सप्तमी विद्धा होने से

याज्ञवल्क्यस्मृतौ—

सम्पूर्णा चार्द्धरात्रे तु रोहिणी यदि लभ्यते ।
कर्त्तव्या सा प्रयत्नेन पूर्व्वविद्धां विवर्ज्जयेत् ।।३७०।। इति ।

यच्च वह्निपुराणादौ प्रोक्तं विद्धाष्टमीव्रतम् । अवैष्णवपरं तच्च कृतं तद्देवमायया ।।३७१।।

तथा च स्कान्दे—

पुरा देवैर्ऋषिगणैः स्वपदच्युतिशङ्कया । सप्तमीवेधजालेन गोपितं ह्यष्टमीव्रतम् ।।३७२।।

इयं प्रामाणिकैः कृष्णदेवाचार्य्यादिवैष्णवैः ।
व्यवस्थान्या च निर्णीता लिखिताचारतः सताम् ।।३७३।।

---

एवं जन्माष्टमी सर्व्वथा शुद्धैव कर्त्तव्या, न तु कथञ्चिद्विद्धेति निश्चितम् । तत्र यानि विद्धाव्रतपराणि वचनानि वर्त्तन्ते, तथा च वह्निपुराणे—'सप्तमीसंयुताष्टम्यां निशीथे रोहिणी यदि । भविता चाष्टमी पुण्या यावच्चन्द्रदिवाकरौ ।।' इति; अग्निपुराणे—'तस्मात् कृष्णाष्टमी पूज्या सप्तम्यां नृपसत्तम । रोहिणीसंयुतोपोष्या सर्व्वाघौघविनाशिनी ।।'; पाद्मे—'कार्य्या विद्धापि सप्तम्या रोहिणीसहिताष्टमी । तत्रोपवासं कुर्व्वीत तिथिभान्ते च पारणम् ।।' इति; विष्णुधर्म्मोत्तरे च—'जयन्ती शिवरात्रिश्च कार्य्ये भद्रजयन्विते । कृत्वोपवासं तिथ्यन्ते तथा कुर्व्वीत पारणम् ।।' इत्यादीनि । तानि विषयभेदव्यवस्थापनादिना परिहरति—यच्चेति । यच्चेति । अवैष्णवाः वैष्णवेतराः शैवसौरादयस्तत्परं तद्विषयकं, सर्व्वत्रैकादशी, रामनवमी, नृसिंहचतुर्द्दश्यादौ वैष्णवानां विद्धावर्ज्जनात् । नन्वत्र विद्धावर्ज्जनवचनेषु वैष्णव-शब्दो न प्रयुक्तः, दोषाश्च बहवः श्रूयन्ते, अतः सर्व्वेषामेव सामान्यतो विद्धावर्ज्जनं युक्तमित्यतः पक्षान्तरं लिखति—कृतं वेति ।।३७०-३७१।।

ऋषिगणैः कृत्वा, एवञ्च सति विद्धावर्ज्जनवचनानां स्थानं कल्पयित्वा विद्धाव्रतं ये व्यवस्थापयन्ति, तेऽपि देवमायाविमोहिता इति ज्ञेयम्, यतो वक्तृभेदेन पुराणादिभेदेन च पृथक् पृथग्वर्त्तमानानि तत्तद्वचनानि कथमेकाधिकारिपरतां लभन्ताम् ? अतो विषयभेदव्यवस्थैव युक्तेति दिक् ।।३७२।।

एतादृशी च व्यवस्था न मया निजबुद्धयैव कल्पितास्ति, किन्तु सर्व्वशास्त्रवेदिपुरातनवैष्णववरलिखितपद्धत्यादिदृष्ट्यैवात्र निबद्धेति लिखति—इयमिति । जन्माष्टमीव्रतविषया, प्रामाणिकैः सर्व्वलोकादरणीयैराप्ततमैरित्यर्थः । अन्या च शिवरात्र्यादिव्रतविषया निर्णीता वर्त्तते, किन्तु मया सतामाचारतः सतां

---

भी अष्टमी वर्जनीय है । नवमी युक्ता अष्टमी में रोहिणी नक्षत्र का योग न होने पर व्रत किया जा सकता है, किन्तु रोहिणी नक्षत्र युक्त सप्तमी विद्धा अष्टमी को वर्जन करना विद्वज्जनों का कर्त्तव्य है । आदित्योदय में जैसे तिमिर विनष्ट होता है, तद्रूप सप्तमी वेध से व्रतपुण्य विनष्ट होता है ।।३६५-३६९।।

याज्ञवल्क्यस्मृति में उक्त है—यदि सम्पूर्णा अष्टमी की अधरात्रि में रोहिणी नक्षत्र का योग होता है, तो उसमें व्रत करणीय है । परन्तु सप्तमी विद्धा को सर्वथा परित्याग करना चाहिये । वह्निपुराण में विद्धा अष्टमी में जो व्रत करने की विधि लिखी है, वह वैष्णवों के निमित्त नहीं है । उसको सौरादि विषयक जानना चाहिये । और वह देवमाया कृत है, इसमें सन्देह नहीं है ।।३७०-३७१।।

तद्विषय में स्कन्द पुराण में लिखित है—पूर्वकाल में देवतागण, एवं ऋषिवृन्द निज-निज पदच्युति की आशङ्का से सप्तमी वेध रूप जाल के द्वारा अष्टमी को गुप्त किये थे ।।३७२।।

सर्वजनादृत कृष्णदेवाचार्य्यादि वैष्णववृन्द, जन्माष्टम्यादि अन्यान्य व्रतों की जो विधि निरूपण कर गये हैं, शिष्टाचारानुसार उसी का वर्णन किया जाता है । किन्तु रोहिणी नक्षत्र युक्ता सप्तमीवेधहीना शुद्धाष्टमी

शुद्धा च रोहिणीयुक्ता पूर्व्वेऽहनि परत्र च। अष्टम्युपोष्या पूर्व्वैव तिथिभान्ते च पारणम् ॥३७४

केवलकृष्णोपासनाशास्त्रे गौतमीयतन्त्रे तन्त्रदीक्षामुद्दिश्य यथोक्तम्—

अथ भाद्रासिताष्टम्यां प्रादुरासीत् स्वयं हरिः।
ब्रह्मणा प्रार्थितः पूर्व्वं देवक्यां कृपया विभुः ॥३७५॥

रोहिण्यृक्षे शुभतिथौ दैत्यानां नाशहेतवे। महोत्सवं प्रकुर्व्वीत यत्नतस्तद्दिने शुभे ॥३७६॥

राजन्यैर्ब्राह्मणैर्वैश्यैः शूद्रैश्चैव स्वशक्तितः। उपवासः प्रकर्त्तव्यो न भोक्तव्यं कदाचन ॥३७७॥

कृष्णजन्मदिने यस्तु भुङ्क्ते स तु नराधमः। निवसेन्नरके घोरे यावदाहूतसंप्लवम् ॥३७८॥

अष्टमी रोहिणीयुक्ता चार्द्धरात्रं यदा स्पृशेत्।
उपोष्य तां तिथिं विद्वान् कोटियज्ञफलं लभेत् ॥३७९॥

सोमाह्नि बुधवारे वा चाष्टमी रोहिणीयुता।
जयन्ती नाम सा ख्याता तां लभेत् पुण्यसञ्चयैः ॥३८०॥

---

शास्त्रानुवर्त्तिनां वैष्णवानामाचारतः आचारदृष्ट्या निर्णीतेत्यन्वयः। यद्वा, न केवलं तत्तत्पद्धतिग्रन्थदृष्ट्या लिखिता, किन्तु सतामाचारतश्चेति, मध्यदेशीयानां वैष्णवानां विद्धावर्ज्जननियमेन प्रायः परदिने व्रताचरणात्। एवं श्रीवैष्णववर्गसम्मतैवात्र ग्रन्थे व्यवस्था लिख्यते, न तु वैष्णवेतर-स्मृतिपर-जनकल्पितेति भावः। इत्थञ्च 'उदये चाष्टमी किञ्चित्' इति वचनं पूर्व्वदिने सप्तमीवेधे रोहिण्यभावे वा सत्येव परदिने व्रतमिति। तथा प्रेतयोनिगतानां त्वित्यादि च रात्रिशेषे नवमीयुतत्वविषयं, एवमेव मुहूर्त्तेनापीति द्वयञ्च। तथा शिवरात्री विद्धात्यागवचनद्वयञ्च पूर्व्वदिने चतुर्द्दश्याः प्रदोषव्याप्त्यादाविति। तथा चाग्रे लेख्यश्रवणद्वादशीव्रतविषयिका वैष्णवेतरस्मार्त्तसम्मता सर्व्वा व्यवस्था निरस्तेति दिक्। अलमतिविस्तरेण ॥३७३॥

ननु तर्हि तिथिभान्ते च पारणमित्यस्य सर्व्वत्र प्रसिद्धस्य वाक्यस्य का गतिरस्तु? शुद्धोपवासे सति परदिनेऽष्टमीनिष्क्रमासम्भवात्। तत्र लिखति—शुद्धा चेति। यदा तिथिवृद्धिक्रमेणाष्टमी रोहिणी च साम्येन पूर्व्वदिनं व्याप्य परदिने निष्क्रमेत, तदा पूर्व्वदिने व्रतं कृत्वा परदिनेऽष्टमीरोहिण्योरन्ते सति पारणं कार्य्यमित्यर्थः, यद्यपि 'उदये चाष्टमी किञ्चिन्नवमी सकला यदि' इति वचनबलात् परस्मिन्नेव दिने व्रतमापद्येत, तथापि बुधे सोमे वा शुद्धाऽष्टम्यामर्द्धरात्रे रोहिणीप्राप्त्या योगबाहुल्यापेक्षातः तथा शुद्धाष्टमीपरित्यागवचनाश्रवणाच्च पूर्व्वस्मिन्नेव दिने व्रतमुपयुक्तम्। एवञ्च पूर्व्वदिनेऽर्द्धरात्रे रोहिण्यभावे नवम्यामेव रोहिणीयोगे च परस्मिन्नेव दिने व्रतं ज्ञेयम्। अतएव 'प्राजापत्यर्क्षसंयुक्ता नवमी सकला यदि' इत्युक्तम्, अन्यथा तत्तद्योगप्रशस्त शुद्धाष्टमीत्यागापत्तेः। यद्वा, 'भवते बुधवारेण' इत्याद्युक्तेर्बुधसोमवारयोरेकतरेण योगे सति सम्पूर्णामपि शुद्धामप्यर्द्धरात्रे रोहिणीयुक्तामप्यष्टमीं पूर्व्वां परित्यज्य तत्तद्वचनबलादुत्तरैवोपोष्या; अन्यथा तु पूर्व्वैव। तदानीमेव 'तिथिभान्ते च पारणम्' इति। केचिच्च वैष्णवा 'मुहूर्त्तेनापि' इति पद्यद्वयादरेण तत्तद्वाररोहिण्यभावेऽपि द्वादशीनिर्गमवत् परस्मिन्नेव दिने व्रतमिच्छन्ति, 'तिथिभान्ते च पारणम्' इत्यादिकञ्च वैष्णवविषयमिति मन्यन्ते। अत्र सम्प्रदायाचार एव गतिरिति दिक् ॥३७४॥

---

पूर्व एवं परदिन,–इन दोनों दिन व्यापिनी होने पर पूर्व दिवसीया अष्टमी तिथि में उपवास करके परदिन तिथि के अन्त में अथवा नक्षत्र के अन्त में पारण करना चाहिये ॥३७३-३७४॥

सम्प्रति केवल कृष्णोपासना शास्त्र गौतमीय तन्त्र में तन्त्र दीक्षा को उद्देश्य पूर्वक जो कुछ कहा गया है, उसका वर्णन करता हूँ। पुराकाल में स्वयं भगवान् हरि, प्रजापति की प्रार्थनानुसार देवकी के प्रति

तस्यामुपोष्य यत् पापं लोकः कोटिभवोद्भवम् ।
विमुच्य निवसेद्विप्र वैकुण्ठे विरजे पुरे ॥३८१॥
अष्टमी नवमी-विद्धा उमामाहेश्वरी तिथिः ।
सैवोपोष्या सदा पुण्यकाङ्क्षिभी रोहिणीं विना ॥३८२॥
परविद्धा सदा कार्य्या पूर्व्वविद्धान्तु वर्ज्जयेत् ।
अष्टमी सप्तमीविद्धा हन्यात् पुण्यं पुराकृतम् ॥३८३॥
ब्रह्महत्याफलं दद्याद्धरिवैमुख्यकारणात् । केवलस्त्वर्क्षयोगेन उपवासस्तिथिं विना ।
न यच्छति शुभं कार्य्यं मुनिभिः परिकीर्त्तितम् ॥३८४॥
परेऽह्नि पारणं कुर्य्यात् तिथ्यन्ते वाथ ऋक्षतः ॥३८५॥
यदृक्षं वा तिथिर्वापि रात्रिं व्याप्य व्यवस्थिता ।
दिवसे पारणं कुर्य्यादन्यथा पतनं भवेत् ॥३८६॥ इति ।
'उमामाहेश्वरी तिथिः' ॥३८७॥ इति तत्संज्ञेत्यर्थः ।

अत्र कारणम्

यथोक्तं भोजराजीये—

अष्टम्यां पूजयेच्छम्भुं नवम्यां शक्तिरिज्यते ।
तयोर्योगे तु सम्प्राप्ते द्वयोः पूजा महाफला ॥३८८॥ इति ।

---

कृपा प्रकाश पूर्वक दैत्यकुल विनष्ट करने के निमित्त रोहिणी नक्षत्र युक्ता शुभकरी भाद्र कृष्णाष्टमी में आविर्भूत हुये थे । सुतरां उस मङ्गलमय दिन में यत्नपूर्वक महोत्सव करना कर्त्तव्य है । उस दिन ब्राह्मण, क्षत्रिय, वैश्य, शूद्र, निज शक्त्यनुसार व्रत करें, कदाच भोजन न करें । श्रीहरि के जन्मदिवस में भोजन करने से उस नराधम को आप्रलय घोर नरक मध्य में वास करना पड़ता है । रोहिणी युक्ता अष्टमी यदि अर्ध रात्रि में स्पर्श करती है, तो उस तिथि में व्रत करना बुधजनों का कर्त्तव्य है । उस तिथि में व्रत करने से कोटि यज्ञफल लाभ होता है । रोहिणी विशिष्ट अष्टमी में सोम वा बुधवार का योग होने से उसको 'जयन्ती' कहते हैं । बहु पुण्य के फलोदय होने से 'जयन्ती' प्राप्त होती है ॥३७५-३८०॥

हे विप्र ! जयन्ती में उपवासी होने पर, कोटि जन्म कृत पातक से उत्तीर्ण होकर विमल वैकुण्ठधाम में अवस्थिति होती है । नवमी विद्धा अष्टमी को, उमा माहेश्वरी तिथि कहा गई है । रोहिणी योग व्यतीत भी उक्त तिथि में सर्वदा उपवासी रहना पुण्यार्थी व्यक्ति के पक्ष में उचित है । कारण, सप्तमी विद्धा अष्टमी द्वारा पूर्वार्जित निखिल पुण्य विनष्ट होते हैं । उक्त सप्तमी विद्धा अष्टमी में उपवास करने पर श्रीहरि वैमुख्य हेतु ब्रह्महत्या फल लाभ होता है । ऋषिगण कहे हैं—तिथि व्यतीत नक्षत्र में उपवास करने पर शुभ फल उत्पन्न नहीं होता है । परदिन तिथ्यन्त में किंवा नक्षत्रान्त में पारण करना पड़ता है । नक्षत्र किंवा तिथि रजनी व्यापिनी होने से दिवस में पारण करना चाहिये । अन्यथा अधोगति होती है । उमा माहेश्वरी तिथि सज्ञा का यही अभिप्राय है ॥३८१-३८७॥

अत्र कारणम्

भोजराजीय ग्रन्थ में उक्त है—अष्टमी में शम्भु, और नवमी में शक्ति की पूजा करे । उक्त उभय तिथि का योग दृष्ट होने पर तद्दिन में शम्भु एवं शक्ति, इन दोनों की पूजा से महाफल उत्पन्न होता है । यहाँ पर

अत्र केवलमित्यादावुमामाहेश्वरी तिथिः। तिथिः प्रोक्ता सैव यस्मादुपोष्यत्वेन निश्चिता ॥३८८
अपिशब्दश्च तत्र स्याद्यदुक्तं रोहिणीं विना। तस्मादत्रापि सप्तम्या विद्धाष्टम्येव वर्ज्जिता ॥३८०
यद्दृक्षञ्चेति यद्वाक्यं तत्तु सामान्यतद्युतौ। प्रसङ्गादुक्तमस्मिन् हि विद्धा त्यक्तैव साग्रहम् ॥३८१
श्रुतिलिङ्गादिकन्यायाच्छ्रुतेरेव हि मुख्यता। तदेवमष्टमीहानौ व्रतलोपः प्रसज्यते।
तन्निरस्तं पूर्व्वमेव स्कान्दवाक्यानुसारतः ॥३८२॥
जन्माष्टमीं पूर्व्वविद्धामित्याद्यं यदुदीरितम्। नृसिंहपरिचर्य्यायां दृष्टान्ताश्च प्रदर्शिताः ॥३८३
दशमीवेधयोगेन शुद्धं हि द्वादशीव्रतम्। सप्तम्यवेधवेधोक्तव्यवस्था या कृता परैः।
निरस्ता सा पुरा देवैरित्यादि-वचसो बलात् ॥३८४॥
वैष्णवावैष्णवद्वैधाद्वचस्थैव तदर्हति ॥३८५॥

यत उक्तमाग्नेयविष्णुधर्म्मयोः—

द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च। विष्णुभक्तिपरो दैव आसुरस्तद्विपर्य्ययः ॥३८६

अथ जन्माष्टमीपारणकालनिर्णयः

शुद्धायाः केवलायाश्चाष्टमीवृद्धौ तु पारणम्। तिथ्यन्ते भेऽधिके भान्ते द्विवृद्धौ चैकभेदतः ॥३८७

शुद्धायाः सप्तमीवेधरहितायाः केवलाया एकाकिन्याः रोहिणीं विनाभूताया इत्यर्थः। वृद्धौ सत्यां

"केवलम्" 'ऋक्ष योगेन" इत्यादि वचन में "उमामाहेश्वरी" तिथि को ही "तिथि" शब्द से कहा गया है। अतएव नवमी संयुक्ता अष्टमी ही उपोष्या है। अपि शब्द प्रयोग के द्वारा रोहिणी व्यतीत भी समझना होगा। अतएव यहाँ पर भी सप्तमी विद्धा वर्जनीय है। यदि नक्षत्र युक्ता होती है। इस प्रकार कथन से सामान्यतः योग विषयक को जानना होगा। वह वचन, प्रसङ्ग क्रम से इस स्थान में कहा गया है। किन्तु आग्रह के सहित विद्धा त्यागना ही उसका तात्पर्य्य है। श्रुतिलिङ्गादि न्याय निबन्धन श्रुति की मुख्यता जाननी होगी। अतएव इस प्रकार अष्टमी की हानि होने से जो व्रत लोप का प्रसङ्ग होता है, स्कन्द-पुराणोक्त वचनानुसार ( उदयेचाष्टमी किञ्चित् इत्यादि वचनानुसार ) वह प्रथम ही निरस्त हुई है। "जन्माष्टमीं पूर्वविद्धां" इत्यादि जो पद्मपुराण के वचन कथित हैं, उसके पक्ष में नृसिंह परिचर्य्या ग्रन्थ में दृष्टान्त को भी दिखा दिया है कि– दशमीवेध के योग में द्वादशी का व्रत ही शुद्ध व्रत होता है। 'निरस्तासा पुरादेवैः" इत्यादि वचन द्वारा अन्य को सप्तमीवेध समन्विता व्यवस्था निरस्त हुई। वह वैष्णव वैष्णवेतर भेद में समझनी चाहिये। अर्थात् वैष्णव और वैष्णवेतर भेद से, यह व्यवस्था दो प्रकार की है ॥३८८-३९५

अग्निपुराण एवं विष्णुधर्म में उक्त है— दैव एवं आसुर भेद से द्विविध भूतसृष्टि हैं, तन्मध्ये विष्णुभक्त-गण देव हैं, एवं विष्णु भक्तिहीन व्यक्तिगण आसुर संज्ञित हैं ॥३९६॥

अथ जन्माष्टमीपारणकालनिर्णयः

शुद्धा–सप्तमीवेध रहिता, एवं केवला–रोहिणी व्यतीत केवल अष्टमी वृद्धि प्राप्त होकर परदिन पर्य्यन्त विद्यमान होने से अष्टमी के अवसान में अर्थात् नवमी में पारण करना चाहिये। केवल मात्र नक्षत्र वृद्धि प्राप्त होकर परदिन पर्य्यन्त अवस्थित होने से रोहिणी नक्षत्र के अन्त में पारण करना उचित है। तिथि एवं नक्षत्र उभय की वृद्धि होने पर एवं परदिन पर्य्यन्त रहें तो उभय के मध्य में एक के अवसान में पारण करे। किन्तु पूर्व में "तिथिभान्ते च पारणम्" यह जो लिखा है, उसको ऐसा जानना चाहिये कि यह दोनों समपरिमाण अर्थात् बराबर की वृद्धि होने पर दोनों के ही अन्त में पारण करना चाहिये ॥३९७॥

तथा च वह्निपुराणे—

भान्ते कुर्य्यात् तिथेर्वापि शस्तं भारत पारणम् ॥३९८॥

किञ्च—

रोहिणीसंयुता चेयं विद्वद्भिः समुपोषिता। वियोगे पारणं कुर्य्युर्मुनयो ब्रह्मवादिनः। ३९९॥
सांयौगिके तु सम्प्राप्ते यत्रकोऽपि वियुज्यते। तत्रैव पारणं कुर्य्यादेवं वेदविदो विदुः ॥४००॥
यद्वा तिथ्यृक्षयोरेव द्वयोरन्ते तु पारणम्। समर्थानामशक्तानां द्वयोरेकवियोगतः ॥४०१॥

अतएवोक्तं याज्ञवल्क्येन—

याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रसंयुताः।
ऋक्षान्ते पारणं कुर्य्याद्विना श्रवणरोहिणी ॥४०२॥

---

तिथेरष्टम्या अन्ते विच्छेदे सति पारणम्, भे च रोहिणीनक्षत्रे केवले अधिके वृद्धे सति तस्य रोहिणीनक्षत्रस्यान्ते पारणम्। द्वयोश्च तिथिनक्षत्रयोर्वृद्धौ सत्यामेकस्य तयोर्मध्ये तिथेर्नक्षत्रस्य वा कस्यचिद्भेदतश्छेदे सति पारणं कार्य्यमित्यर्थः। पूर्व्वन्तु 'तिथिभान्ते च पारणम्' इति यल्लिखितं, तच्च द्वयोरेव साम्येन वृद्ध्यभिप्रायेण, किंवा अग्रे लेख्यपक्षान्तरादरेणेति ज्ञेयम्। 'सांयौगिके व्रते' इत्यनेन संयोगापेक्षया अष्टम्यां संयोगाभावे रोहिण्यामपि पारणं कार्य्यमेव ॥३९७-४००॥

अथवा द्वयोरेवान्ते पारणमिति केषाञ्चिन्मतमङ्गीकृत्याधिकारिभेदेन व्यवस्थापयन् पक्षान्तरं लिखति—यद्वेति। समर्थानामुपवासद्वयशक्तानां द्वयोरेवान्ते पारणम्, अशक्तानान्तु द्वयोर्मध्य एकविच्छेद एव पारणम्। ॥४०१॥

तासु च ऋक्षान्ते सत्येव पारणं कुर्य्यान्न तु तिथ्यन्तमपेक्षते इत्यर्थः। 'विना श्रवणरोहिणीम्' इति श्रवणद्वादश्यां रोहिण्यष्टम्याञ्च ऋक्षान्ते तिथ्यन्ते च सति पारणं कुर्य्यात् न तु केवल ऋक्षान्त इत्यर्थः। कुर्य्यादित्यत्र तासामिति क्वचित् पाठः, अर्थस्तु तथैव। भाद्रे श्रवणद्वादश्यां श्रीवामनप्रादुर्भावापेक्षया श्रवणान्तेऽपि न पारणं किन्तु तदहोरात्रान्त एव, अतएव समर्थानां तत्रोपवासद्वयम्। एतच्चाग्रे व्यक्तं भावि। केचिच्चैवं व्याचक्षते—तासु ऋक्षान्त एव पारणं, श्रवणरोहिण्योस्तु तिथ्यन्त एव पारणं, न त्वेतयोः ऋक्षान्तोऽपेक्षणीय इति। एवञ्च श्रवणद्वादशीव्रते पारणाया द्वादश्यतिक्रमदोषोऽप्येतद्विशेषवचनबलात् सोढ़व्यः। यद्वा, तिथ्यन्तरश्रवणव्रते एवं ज्ञेयमिति दिक् ॥४०२॥

---

वह्निपुराण में लिखा है—हे भारत! नक्षत्र किंवा तिथि के अवसान में पारण करना चाहिये ॥३९८॥

और भी लिखित है—सुधीगण रोहिणी संयुक्त अष्टमी में उपवास करते हैं, वेदविद मुनिगण, रोहिणी के अवसान में पारण करते हैं, एवं तिथि नक्षत्र के योग में व्रत होने पर एक के अन्त में पारण करना चाहिये। वेदज्ञगण का यही अभिमत है। अथवा तिथि नक्षत्र,—इन दोनों के अन्त में पारण करना उपवास-क्षम व्यक्ति के पक्ष में उचित है। किन्तु जो सब व्यक्ति, उपवास करने में अक्षम हैं, वे तिथि एवं नक्षत्र,—एतदुभय के मध्य में एक के अन्त में पारण कर सकते हैं ॥३९९-४०१॥

अतएव याज्ञवल्क्य का कथन यह है—जो कोई नक्षत्र युक्त पवित्र तिथि ही क्यों न हो, नक्षत्र के अन्त में ही पारण करना चाहिये। तिथि की अपेक्षा नहीं। किन्तु, श्रवणा एवं रोहिणी में वह व्यवस्था नहीं है, उक्त श्रवण द्वादशी एवं रोहिणीयुक्त अष्टमी तिथि में नक्षत्र एवं तिथि,—एतदुभय के अवसान में ही पारण करना चाहिये ॥४०२॥

अतएव ब्रह्मवैवर्त्ते—

अष्टम्यामथ रोहिण्यां न कुर्य्यात पारणं क्वचित् ।
हन्यात् पुराकृतं कर्म्म उपवासार्ज्जितं फलम् ॥४०३॥

तिथिरष्टगुणं हन्ति नक्षत्रञ्च चतुर्गुणम् । तस्मात् प्रयत्नतः कुर्य्यात्तिथिभान्ते च पारणम् ॥४०४

केचिच्च भगवज्जन्ममहोत्सवदिने शुभे । भक्त्योत्सवान्ते कुर्व्वन्ति वैष्णवा व्रतपारणम् ।।४०५

तथाचोक्तं गारुड़े—

तिथ्यन्ते चोत्सवान्ते वा व्रती कुर्व्वीत पारणम् ॥४०६॥

वायुपुराणे च—

यदीच्छेत् सर्व्वपापानि हन्तुं निरवशेषतः । उत्सवान्ते सदा विप्र जगन्नाथान्नमाशयेत् ॥४०७॥

इति ।

अथ जन्माष्टमीव्रतविधिः

व्रतसाधारणत्वाच्च सप्तम्यादि-दिनत्रये । कर्त्तव्या नियमाः सर्व्वे दशम्यादिदिनेष्विव ॥४०८॥

---

यतो हन्यात् पारणमेव कर्त्तुः ॥४०३॥

उत्सवान्ते अधिकाधिकभोगनृत्यकीर्त्तनादिना पूजाविशेषे वैष्णवकुलसम्माननविशेषे च समाप्ते सति । अत्र च शुभे परमोत्तमे महोत्सवदिने इति कायक्लेशायोग्यता सूचिता । तथा भक्त्येति नित्योच्छिष्टमहाप्रसादभोजननियमदास्य-विशेषोपेक्षया इति हेतुविशेषश्च दर्शित इति दिक् ॥४०४-४०६॥

आशयेदश्नीयात् ॥४०७॥

तत्रादौ व्रतसाधारणान् नियमानतिदिशति— व्रतेति । सप्तम्यादि-दिनत्रयं संयमदिनमुपवासदिनं पारणदिनञ्च तस्मिन्, दशम्यादिदिनेष्विव यथा दशम्येकादशीद्वादशीदिनत्रये, तथा सर्व्वे नियमाः कर्त्तव्याः । ते च पूर्व्वदशम्यादिविहिता अपि ते ते नियमाः सर्व्वव्रतसाधारणत्वादत्र सप्तम्यादिष्वपि कर्त्तव्या इत्यर्थः । ते च पूर्व्वमेकादशीव्रतप्रकरणे लिखिता एव सन्ति । 'तैलमत्यम्बुपानञ्च' इत्यादि-दशमीनियमाः । 'असकृज्जलपानाच्च' इत्याद्येकादशीनियमाः ; 'कांस्यामिषे सुरां क्षौद्रम्, इत्यादि-द्वादशीनियमाः । अतएव भविष्योत्तरे—'उपावृत्तस्य पापेभ्यः' इत्यादि । तच्चाग्रे लेख्यमेव ॥४०८॥

---

अतएव ब्रह्मवैवर्त्त पुराण में लिखित है—अष्टमी एवं रोहिणी में कभी भी पारण करना नहीं चाहिये । उसमें पारण करने से पूर्वानुष्ठित कर्म एवं उपवास का फल विनष्ट होता है । तिथि द्वारा अष्टगुण, एवं नक्षत्र द्वारा चतुर्गुण फल ध्वंस होता है । तज्जन्य तिथि एवं नक्षत्र के अन्त में ही पारणार्थ प्रयत्न करना चाहिये । कतिपय वैष्णव, परमश्रेष्ठ भगवज्जन्मरूप महोत्सव दिन में भक्तिमान् होकर उत्सवान्त में व्रत का पारण करते हैं ॥४०३-४०५॥

गरुड़पुराण में भी लिखित है—व्रती, तिथ्यन्त में किंवा उत्सवान्त में पारण कर सकते हैं ॥४०६॥

वायुपुराण में उक्त है—हे विप्र ! निःशेष से पातक विनष्ट करने की इच्छा हो तो उत्सव के अवसान में जगन्नाथ के प्रासादान्न सेवन करे ॥४०७॥

अथ श्रीजन्माष्टमीव्रतविधिः

साधारणतः व्रत के नियम के कारण दशम्यादि तीन दिन (दशमी, एकादशी और द्वादशी) में जिस प्रकार नियम वर्णित है, सप्तमी, अष्टमी, नवमी अर्थात् संयम दिन, उपवास दिन एवं पारण दिन,–इन तीनों दिन में भी वही नियम करे ॥४०८॥

अथ विधिविशेषः

भविष्योत्तरे श्रीयुधिष्ठिर उवाच—

तद्व्रतं कीदृशं देव लोकैः सर्व्वैरनुष्ठितम् । जन्माष्टमीव्रतं नाम पवित्रं पुरुषोत्तम ।।४०९।।
तेन त्वं तुष्टिमायासि लोकानां प्रभवाव्यय । एतन्मे भगवन् ब्रूहि प्रासादान्मधुसूदन ।।४१०।।

श्रीकृष्ण उवाच—

पार्थ तद्दिवसे प्राप्ते दन्तधावनपूर्व्वकम् । उपवासस्य नियमं गृह्णीयाद्यतमानसः ।।४११।।
एकेनैवोपवासेन कृतेन कुरुनन्दन । सप्तजन्मकृतात् पापान्मुच्यते नात्र संशयः ।।४१२।।
उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह । उपवासः स विज्ञेयो नोपवासस्तु लङ्घनम् ।।४१३।।

अथ तत्र मन्त्रः

अद्य स्थित्वा निराहारः सर्व्वभोगविवर्ज्जितः । भोक्ष्येऽहं पुण्डरीकाक्ष शरणं मे भवाच्युत ।।४१४।।

ततः स्नात्वा तु मध्याह्ने नद्यादौ विमले जले ।
देवक्याः शोभनं कुर्य्यात् सुगुप्तं सूतिकागृहम् ।।४१५।।

---

एवं सर्व्वव्रतसाधारणविधिमुल्लिख्याधुनात्र विशेषं लिखति—एकेनेत्यादिना । सप्तम्यामेकभक्तानन्तरं दन्तधावनपूर्व्वकं सङ्कल्पं कुर्य्यात्, अथवाष्टम्यां प्रातः कुर्य्यात् ।।४१२।।

तत्राष्टमी प्रातः सङ्कल्पमन्त्रं लिखति— अद्येति । यद्यपि सङ्कल्पमन्त्रे 'श्वोभूते परमेश्वर' इत्यादि पाठः क्वचिद्दृश्यते, तथापि 'सर्व्वभोगविवर्ज्जितः' इत्यादि-भविष्योत्तरोक्तपाठोऽत्र लिखितः । पाठान्तरे 'देवकीपुत्र' इत्यादि-विशेषनिर्द्देशेन शिष्टगणादृतत्वात् । भविष्योत्तरे च श्रीयुधिष्ठिरं प्रति श्रीभगवता स्वयन्तथा नोक्तं, परमलज्जागुणशीलत्वात्, एवमन्यत्राप्यूह्यम् ।।४१४।।

अथ लोके जन्मतिथिकृत्यवत् प्रातः श्रीभगवतोऽपि तिलस्नपनादिकं लौकिकभक्तिरीत्यपेक्षया कार्य्यमिति लिखति—कुर्व्वीतेति । प्रभोः श्रीकृष्णस्य स्नपनादि तिलैः कृष्णैः कुर्व्वीत, आदि-शब्दादुद्वर्त्तनादि । तथा

---

अथ विधिविशेषः

भविष्योत्तर में श्रीयुधिष्ठिर श्रीकृष्ण को कहे थे—हे देव ! हे पुरुषोत्तम ! हे भगवन् ! हे मधुसूदन ! हे सर्वलोकप्रभव ! जिस व्रतानुष्ठान करने से आप सन्तुष्ट होते हैं, जन्माष्टमी नामक वह व्रत किस प्रकार है ? एवं समस्त मानवों के पक्ष में वह पवित्र व्रत किस प्रकार सम्पादन करना चाहिये, मेरे ऊपर अनुग्रह करके इसका वर्णन कीजिये ।।४०९-४१०।।

श्रीकृष्ण ने कहा—हे युधिष्ठिर ! उस जन्माष्टमी दिन समागत होने पर दन्तधावनादि के पश्चात् संयत चित्त से उपवास का नियम ग्रहण करना चाहिये । अर्थात संकल्प करना चाहिये । हे कौरव ! केवल मात्र जन्माष्टमी के दिन उपवास करने पर ही सप्तजन्मार्जित पातकों से निःसन्देह मुक्त होता है । पापों से उत्तीर्ण होकर गुणों के सहित अवस्थिति को ही "उपवास" कहा गया है । किन्तु केवल भोजन वर्जन को उपवास नहीं कहा जाता है ।।४११-४१३।।

अथ तत्र मन्त्रः

हे पुण्डरीकाक्ष ! हे अच्युत ! अद्य सर्व भोगरहित होकर उपवासी रहकर कल्य भोजन करूँगा । आप मेरे शरणस्थान हूजिये ।।४१४।।

तत्पश्चात् मध्याह्न काल में नदी प्रभृति निर्मल जल में अवगाहन स्नान करके देवकी का सुन्दर गुप्त सूतिकागार (सोवर) बनावे ।।४१५।।

अथ सूतिकागृह-निर्म्माणविधिः

**पद्मरागैः पटैर्नेत्रैर्मण्डितं चर्च्चितं शुभैः। रम्यं वन्दनमालाभी रक्षामणिविभूषितम् ॥४१६॥**
**सर्व्वं गोकुलवत् कार्य्यं गोपीजनसमाकुलम्। घण्टामर्द्दलसङ्गीतं माङ्गल्यकलसान्वितम् ॥४१७**
**यवाद्रस्वस्तिकाब्जाद्यैः शङ्खवादित्रसङ्कुलम्। बन्धकरीलोहखड्गैर्दीपछागसमन्वितम् ॥४१८**
**मन्थानवारियूपैश्च भूतिसर्षपवह्निभिः। द्वारि विन्यस्तमूषलं रक्षितं रक्षपालकैः ॥४१९॥**
**षष्ठ्या देव्याश्च तत्रैव विधानं विधिवत्तथा। एवम्बिधं यथाशक्ति कर्त्तव्यं सूतिकागृहम् ॥४२०**
**तन्मध्ये प्रतिमा स्थाप्या सा चाप्यष्टविधा स्मृता। काञ्चनी राजती ताम्री पैत्तली मृण्मयी तथा।**
**वार्क्षी मणिमयी चैव वर्णिका लिखताथवा ॥४२१॥**
**सर्व्वलक्षणसम्पन्ना पर्य्यङ्के चार्द्धसुप्तिका। प्रतप्तकाञ्चनाभासा कृता सा तु तपस्विनी।**
**प्रसूता च प्रस्नुता च तत्क्षणाच्च प्रहर्षिता ॥४२२॥**

---

चोक्तम्—'तिलोद्वर्त्ती तिलस्नायी तिलहोता तिलप्रदः। तिलवापी तिलाशी च षट्तिली नावसीदति॥' इति। अत्र शिष्टाचारानुसारेणाष्टोत्तरशतदूर्व्वाग्रादियुक्तेन सहस्रच्छिद्रघटेन धारया स्नपनादिकमपि ज्ञेयम्। सर्व्वं वस्त्रादिकञ्च नवमेव भगवते अर्पयेच्च। 'शिष्टाचारानुसारतः' इति सर्व्वत्राग्रेऽप्यनुवर्त्तनीय सत्सम्प्रदायाचारानुसारेणैवात्राखिलविधिलिखनात्। शुभे तीर्थे श्रीकालिन्द्यादौ, तत्रापि श्रीविश्रान्त्यादौ, तदलाभे च अन्यत्र वा सज्जले पवित्रनिर्म्मलसलिले। तथा चाग्रे लेख्यं भविष्योत्तरवचनम्— नद्यादौ विमले जले' इति। व्रती उपवासपरो जनः, धात्रीफलं मूर्द्ध्नि दत्त्वा, तेन मस्तकं संमृज्य शुभैः श्रीभगवतः स्नानाद्यवशिष्टैर्महाप्रसादरूपैः कृष्णैस्तिलैः कृत्वा स्नानं कुर्य्यात्। तथा च भविष्ये—'उपोषितस्तु मध्याह्ने स्नात्वा कृष्णतिलैः शुभैः। धात्रीफलं शिरे दद्यान्महापुण्यविवृद्धये॥' इति। यद्यपि तद्वचनमग्रे मूले स्वयमेव लेख्यं, तथात्येतदत्र सुखार्थं लिखितम्, एवमग्रेऽप्यूह्यम्। अन्यद्दृष्टदेवपूजादि सुदेशे शोभनप्रदेशे दिव्यं परमोत्तमं तत्प्रकारं दर्शयन् तदेव विशिनष्टि—विभूषितमिति द्वाभ्याम्। तोरणादिना चात्र वासोदर्पणपल्लवादिविरचितानि वन्दनमालेति ख्यातान्येव। आबद्धैर्वितानादिषु स्थाने स्थाने सम्यग्बद्धैः कलसादिभिश्च भूषितम्। यवदूर्व्वाम्बुजैः। आदिशब्दान्मथनरज्जुस्वस्तिकादिभिश्चाढ्यं युक्तम्। द्वारि द्वारविन्यस्तैः शृङ्खलादिभिः संयुतम्। आदि-शब्दाच्चात्र

---

**अथ सूतिकागृह-निर्म्माणविधिः**

**पद्मरागमणि, एवं मनोहर सूक्ष्म वस्त्र द्वारा सूतिका गृह को शोभित एवं चर्चित करना चाहिये। उस गृह को, वन्दनमाला द्वारा सुन्दर, रक्षामणि द्वारा अलङ्कृत एवं सर्व प्रकार से गोकुलवत् गोपीजन समाकीर्ण करना चाहिये। इस गृह में घण्टा, मादल, सङ्गीत, मङ्गलघट, यवार्द्र, स्वतिक, पद्म, शङ्खादि वाद्य, शृङ्खला, लोह खड्ग, दीप, छाग, मन्थन दण्ड, जल, यूप, भस्म सर्षप, अग्नि,–यह सब सामग्री स्थापन करे। द्वारदेश में द्वारिगण, मुषल स्थापन कर द्वार की रक्षा करे। इस गृह में यथाविधि षष्ठीदेवी की भी स्थापना करनी चाहिये। इस रीति से शक्त्यनुसार सूतिकागृह प्रस्तुत करे। सूतिकागृह के अभ्यन्तर में प्रतिमा का स्थापन करना चाहिये। मुनिवृन्द ने इस प्रतिमा को अष्टविध निर्धारण किया है, सुवर्ण, रौप्य, ताम्र, पित्तल, मृत्तिका, काष्ठ, मणि, एवं वर्ण अथवा चित्रपट,–यह आठ प्रकार की प्रतिमा बना सकता है। प्रतिमूर्त्ति, सर्वसुलक्षणान्वित एवं पर्य्यङ्कोपरि अर्द्धशयित रूप में होनी चाहिये। परम सौभाग्यशालिनी देवकीदेवी की मूर्त्ति,–तप्त सुवर्ण सन्निभा, सद्यः प्रसूता, क्षरितपयोधरा एवं हर्षविह्वला होनी चाहिये। ॥४१६-४२२॥**

माञ्चापि बालकं सुप्तं पर्य्यङ्के स्तनपायिनम् । श्रीवत्सवक्षसं देवं नीलोत्पलदलप्रभम् ॥४२३॥
शङ्खचक्र-गदाशार्ङ्ग-वनमालाविभूषितम् । चतुर्भुजं महःपूर्णं स्थापयेत्तत्र भक्तितः ॥४२४॥
यशोदाञ्चापि तत्रैव प्रसूतवरकन्यकाम् ॥४२५॥
तत्र देवा ग्रहा नागा यक्षविद्याधरोरगाः । प्रणताः पुष्पमालाभिर्व्यग्रहस्ताः सुरासुराः ॥
सञ्चरन्त इवाकाशे प्रकारैर्मुदितोदितैः ॥४२६॥
वसुदेवोऽपि तत्रैव खड्गचर्म्मधर स्थितः ॥४२७॥

---

पूर्व्वलिखितमार्कण्डेयपुराणादिवचनानुसारेण मथनदण्ड-दीप-जल यूप-भस्मसर्षप-निम्बफलानि ज्ञेयानि । तत्र सूतिकागृहे तद्भित्त्यादौ गोपगोपीजनावृत श्रीगोकुलं श्रीनन्दवासं विशेषतो लिखेत् । गेहस्य तस्यैव सूतिकागृहस्य सर्व्वतः सर्व्वदिक्षु, तस्य सूतिकागृहस्य मध्ये सर्व्वतोभद्राख्यं मण्डलं विरचय्य तस्मिन् कुम्भं स्थापयेदित्यर्थः । तस्य घटस्योपरि हैमं स्वर्णनिर्म्मितं तदभावे वैणवञ्च पात्रं न्यस्येत् स्थापयेत् । भविष्यपुराणोक्तं 'तच्च पात्रं तिलपूरितम्' इति ज्ञेयम् । पात्रपरिमाणञ्च देवीपुराणोक्तं पूर्व्वं लिखितमेवास्ति । तत् पात्रं, तदुपरि देवकीं स्थापयेत्; कथम्भूताम् ? स्वर्णेनान्येन रूप्यादिना कृतां निर्म्मिताम्; स्वर्णादिमानं चोक्तम्—'सौवर्णी राजती ताम्री वृक्षजा मार्त्तिकी तथा । चित्रजा पिष्टलेपस्था निजवित्तानुसारतः । आ मासात् पलपर्य्यन्तं कर्त्तव्या शाठ्यवर्ज्जितैः ॥' इति । तत्र देवकीप्रतिमामाह—सर्व्वेति सार्द्धेन । सर्व्वेण दिव्यस्त्रीलक्षणविशेषेण सम्पन्ना सम्पूर्णा । लक्षणं चाग्रे लेख्यलक्ष्मीप्रतिमानुसारेण ज्ञेयम् । अर्द्धसुप्तिकेति, अर्द्धाङ्गेन सुप्तिकेत्यर्थः । एतच्च बालकस्तनदानार्थं शय्यायां कृता निर्म्मिता । पाठान्तरे मया सहेत्यस्य अर्द्धसुप्तिकेत्यनेन सम्बन्धः । तपस्विनी परमभाग्यवतीति पूर्व्वजन्मकृततपःस्मरणादेव । प्रस्नुता— क्षरितस्तनी ॥४१५ ४२२॥

निज-श्रीमूर्त्तिमाह—माञ्चेति द्वाभ्याम् । बालकं बालरूपं देवं द्योतमानं दिव्यरूपं वा । तदेवाह—शङ्खेति; महःपूर्णं तेजःस्वरूपम्; यद्वा, महो ब्रह्म तत्स्वरूपं सच्चिदानन्दघनं मां भक्त्या तत्र तथा स्थापयेदित्यर्थः ॥४२३-४२४॥

तत्र सूतिकागृहे, सुरासुरा इति पुनः सुरग्रहणं तेषां हर्षविशेषोदयात् । यद्वा, सुरवद्येऽसुरा असुरभावरहिता ये दैत्यास्ते श्रीप्रह्लादादयः । मुदितानि हर्षयुक्तानि उदितानि वचनानि येषु, यद्वा, मुदितानां ये उदिताः शास्त्राद्युक्ताः प्रकारा वेश व्यवहारादयस्तद्विशिष्टाः सन्तः, आकाशे सञ्चरन्त इव देवादयः स्थाप्या इति शेषः । तादृश्यस्तत्तत्प्रतिमाः कार्य्याः, पटादौ लेख्या इत्यर्थः ॥४२६॥

वसुदेवोऽपि खड्गचर्म्मधर कंसबधार्थमात्तखड्गचर्म्मा इव स्थितस्तत्रैव संस्थाप्यः । तादृशतत्प्रतिमा श्रीदेवकीनिकटे स्थापनीयेति ज्ञेयम् ॥४२७॥

---

हे पाण्डव ! मुझको पर्य्यङ्कोपरि शयान, स्तनपायी, श्रीवत्सलाञ्छित वक्षा, दीप्तिमान्, नीलोत्पलदलवत् प्रभावान्, शङ्ख चक्र गदा, शार्ङ्गपाणि, वनमाला शोभित चतुर्भुज एवं तेजः स्वरूप बालक मूर्त्ति करके भक्तिपूर्वक सूतिकागृह में स्थापन करना चाहिये। एतद् व्यतीत गृह के अभ्यन्तर में कन्यारत्न प्रसूता यशोदा की मूर्त्ति एवं नन्द, बलदेव, रोहिणी एवं गोपीवृन्द की प्रतिमा को भी स्थापन करे। चित्रपट में इस प्रकार अङ्कन करे कि,-देववृन्द, ग्रहगण, नागकुल, यक्षगण, विद्याधर, सर्प, एवं देवभावयुक्त असुरवृन्द, प्रणतशिरा होकर पुष्पमाल्य हस्त में धारण कर व्यग्रता के सहित गगन में परिभ्रमण कर रहे हैं। इस प्रकार अङ्कित करके सूतिका गृहाभ्यन्तर में स्थापन करना चाहिये। उस घर के भीतर देवकीदेवी के सन्निधान में वसुदेव की मूर्त्ति भी स्थावन करनी चाहिये। वे कंसबधार्थ असि, चर्म्म धारण पूर्वक अवस्थान कर रहे हैं ॥४२३-४२७॥

कश्यपो वसुदेवोऽयमदितिश्चापि देवकी। शेषनागो हली चात्र यशोदादितिरेव च ॥४२८॥
नन्दः प्रजापतिर्दक्षो गर्गश्चापि चतुर्मुखः। एषोऽवतारो राजेन्द्र कंसो वै कालनेमिजः ॥४२९॥
तत्र कंसनियुक्ता ये दानवा विविधायुधाः। ते च प्राहरिका सर्व्वे सुप्ता निद्राविमोहिताः।
अरिष्टो धेनुकः केशी दानवाः शस्त्रपाणयः ॥४३०॥
नृत्यन्त्योऽप्सरसो हृष्टाः गन्धर्व्वा गीततत्पराः। लेखनीयश्च तत्रैव कालियो यमुनाह्लदे ॥
नन्दगोपश्च गोपाश्च यशोदा च प्रसूतिका ॥४३१॥

ततः पूजोपक्रमः

रम्यामेवम्बिधां कृत्वा देवकीं नवसूतिकाम्। तां पार्थ पूजयेद्भक्त्या गन्धपुष्पाक्षतैः फलैः ॥४३२
कुष्माण्डैर्नारिकेलैश्च खर्ज्जूरैर्दाड़िमीफलैः। वीजपूरैः पूगफलैर्नारङ्गैः पनसैस्तथा ॥४३३॥
देशकालोद्भवैर्मिष्टैः पुष्पैश्चापि सुगन्धिभिः।
ध्यात्वावतारान् प्रागुक्तान् मन्त्रेणानेन पूजयेत् ॥४३४॥

---

श्रीवसुदेवादीनां ध्यानविशेषमाह—कश्यप इति सार्द्धद्वाभ्याम्। कालनेमिजः कालनेमेरवतार इत्यर्थः, पाठान्तरं चिन्त्यम्। एवं गर्गकंसादयोऽपि प्रतिमाद्वारा लिखनेन वा स्थाप्या इति ज्ञेयम् ॥४२८॥

प्राहरिका. प्रहरिणः, तानेव निर्द्दिशति— अरिष्ट इति। अन्ये च शस्त्रपाणयो दानवाश्चाणूरादयः।.४३०॥

नृत्यदप्सरादयश्च वामिन लेख्याः, तत्रैकदेशे यमुना लेखनीया, तस्यां ह्लदस्तत्र च कालियोपरि श्रीकृष्ण-नृत्यादिसर्व्वव्रजसम्बन्धिलीलारूपादिप्रतिमा स्थाप्येति वेदितव्यम्। प्रसूतिका प्रसूतकन्यका, यशोदायाः पुनरुक्तिस्तत्स्थापनेन श्रीनन्दादिस्थापनाभिप्रायेण प्राधान्यविशेषोपेक्षया वा, द्वितीयान्तपाठे कृत्वेत्यनेन परेण सम्बन्धः। पाठान्तरे कन्यकालिखनेन तल्लेखो ज्ञेयः, ततश्च प्रसूतिकामिति सद्यो जातामित्यर्थः ॥४३१॥

देवक्या नवसूतिकां नूतनसूतिकागृहं, तां देवकीं गन्धादिभिर्भक्त्या पूजयेदिति द्वाभ्यामन्वयः। अवताराश्च बहुविधा लेख्यास्ततश्च अवतारं ध्यात्वा अदितिरूपां देवकीं विचिन्त्य, अवतारानिति पाठे सर्व्वेषामेव तत्रैव

---

वसुदेव–कश्यप के, देवकी–अदिति के, बलदेव–शेषनाग के, यशोदा–दिति के, नन्द–दक्षप्रजापति के, गर्ग–चतुरानन ब्रह्मा के एवं कंस–कालनेमि के अवतार हैं। हे राजेन्द्र ! इनकी भी प्रतिमा निर्माण करके किंवा चित्रपट में मूर्त्ति अङ्कन पूर्वक सूतिगृह में स्थापन करनी चाहिये। अरिष्ट, धेनुक, केशी एवं चाणूरादि शस्त्रपाणि–दानवों का प्रतिमूर्त्ति भी चित्रित करे। उक्त विविध अस्त्रधारिगण, कंस के आदेश से प्रहरी कार्य्य में नियुक्त होकर सूतिकागार में निद्रामुग्ध एवं प्रसुप्त भाव से अवस्थित हैं। नृत्यरता अप्सरा, सङ्गीतरता गन्धर्वा, यमुनाह्लद में कालय, नन्दादि गोपगण एवं गोपीवृन्द एवं सद्यः प्रसूता यशोदा, इनको भी सूतिका भवन में अङ्कित करे ॥४२८-४३१॥

ततः पूजोपक्रमः

हे पार्थ ! इस प्रकार मूर्त्तिसमूह को स्थापित करके पूजा में प्रवृत्त होना चाहिये। सद्यः प्रसविणी मनोहर मूर्त्ति देवकी की प्रतिमा प्रस्तुत करके गन्ध, अक्षत, एवं माला द्वारा भक्ति पूर्वक पूजा करे। कुष्माण्ड, नारिकेल, खर्जुर, दाड़िम्ब, वीजपुर, पूगफल, नारङ्ग पनस, देशकालोद्भूत सुस्वादु फल एवं सुगन्धित पुष्प प्रभृति के द्वारा पूजा करनी चाहिये। अनन्तर पूर्व कथित अवतार वृन्द का ध्यान करके वक्ष्यमाण मन्त्र से पूजा करनी चाहिये ॥४३२-४३४॥

अथ पूजामन्त्राः

अदितिर्देवमाता त्वं सर्व्वपापप्रणाशिनी । अतस्त्वां पूजयिष्यामि भयभीतो भवस्य च ॥४३५॥
पूजितासि यदा देवैः प्रसन्ना त्वं वरानने । तथा मे पूजिता भक्त्या प्रसादं कुरु सुव्रते ॥४३६॥
यथा पुत्रं प्रियं लब्ध्वा प्राप्ता ते निर्वृतिः परा । तथा मे निर्वृतिं देवि सपुत्रा त्वं ददस्व मे ॥४३७

गायद्भिः किन्नराद्यैः सततपरिवृता वेणुवीणादिनादै-
र्भृङ्गारादर्शकुम्भप्रकरहृतकरैः किन्नरैः सेव्यमाना ।
पर्य्यङ्के त्वास्तृते या मुदिततरमुखी पुत्रिणी सम्यगास्ते
सा देवी देवमाता जयति सुवदना देवकी कान्तरूपा ॥४३८॥

पादावभ्यञ्जलन्ती श्रीर्देवक्याश्चरणान्तिके । निषण्णा पङ्कजे पूज्या नमो देव्यै श्रिये इति ॥४३९
अवतारसहस्रं वै कृतं ते मधुसूदन । न संख्यामवताराणां कश्चिज्जानाति वै भुवि ॥४४०॥
ब्रह्मा शिवादयो वापि स्वरूपं न विदुस्तव । अतस्त्वां पूजयाम्यद्य मातुरुत्सङ्गशायिनम् ॥४४१

---

तत्तत्पूजनार्थमेकत्रैव प्रसङ्गादुद्दिष्टमिति ज्ञेयम् । अदितिरित्यादिपूजामन्त्रः ॥४३२-४३५॥

पादौ श्रीभगवतः देवक्या एव वा अभ्यञ्जयन्ती श्रीर्गन्धादिभिः पूज्या । कथम्भूता ? देवक्याश्चरणान्तिके पङ्कजे निजासने निषण्णा उपविष्टा । तन्मन्त्रमाह—नम इति, केचिच्चावाहनादिपूर्व्वकं लक्ष्मीपूजनमिदं श्रीदेवकीपूजनात् पूर्व्वमिच्छन्ति ॥४३९॥

निजपूजामन्त्रमाह—अवतारेति द्वाभ्याम् । 'न ते संख्यावताराणाम्' इति पाठे विसर्गलोपेऽपि पुनः सन्धिः; संख्यायाजानाति क्रियान्वयश्चान्यथा न स्यादिति भावः । अतः ब्रह्मादिभिरपि तव स्वरूपाज्ञानाद्धेतोः केवलमद्य मातुरुत्सङ्गशायिनमेव त्वां पूजयामीत्यर्थः । यद्वा, यस्य स्वरूपं तेऽपि न विदुः, तमद्य साक्षान्मातुरुत्सङ्गशायिनं सन्तं पूजयामीत्यर्थः ॥४४०-४४१॥

---

अथ पूजामन्त्राः

आप सर्व पापहरा देवमाता अदिति हैं, अतएव भवभय से वित्रस्त होकर आपकी पूजा करता हूँ,अतएव हे वरानने ! हे सुव्रते ! देवगण के द्वारा कृत पूजा में जिस प्रकार आप प्रसन्नता को प्राप्त होती हो, इसी प्रकार भक्तिसहित मत्कर्त्तृक पूजा से भी सन्तुष्ट होकर अनुग्रह प्रदर्शन करें । हे देवि ! आपने जिस प्रकार प्रिय तनय को प्राप्त करके परमानन्द प्राप्त किया है, तद्रूप आप पुत्र समन्वित होकर मुझको परमानन्दित कीजिये । किन्नरादि गायकवृन्द वेणु वीणा झङ्कार पूर्वक सतत जिनको परिवेष्टन कर अवस्थित हैं, किन्नरगण, भृङ्गार, आदर्श एवं घट हस्त में लेकर निरन्तर जिनकी सेवा करते रहते हैं, एवं जो तनय को अङ्क में लेकर मुदिततर मुखी होकर आस्तृत पर्य्यङ्कोपरि संस्थिता हैं, वह देवजननी सुमुखी कमनीयरूपा देवकी देवी जय युक्ता हों । देवकी के चरणप्रान्त में तदोय चरणसेबा निरता, कमलालया लक्ष्मी को 'नमो देव्यै श्रिये' मन्त्र द्वारा पूजा करनी चाहिये ॥४३५-४३९॥

हे मधुसूदन ! आपने सहस्र-सहस्र अवतार ग्रहण किया है । धरातल में कोई भी व्यक्ति आपके उन अवतारों की गणना करके शेष करने में सक्षम नहीं होता । आपके स्वरूप को जानने में ब्रह्मा एवं शिवादि देवगण भी समर्थ नहीं हैं । अतएव आप आज मातृक्रोड में शयन करके हैं, आपकी पूजा करता हूँ॥४४०-४१

स्वनामभिश्चतुर्थ्यन्तैः प्रणवादिनमोऽन्तकैः । पूजयेयुर्द्विजाः सर्व्वे स्त्री-शूद्रा मन्त्रवर्ज्जिताः ॥४४२

विध्यन्तरमपीच्छन्ति केचिदत्र द्विजोत्तमाः । चन्द्रोदये शशाङ्काय दद्यादर्घ्यं हरिं स्मरन् ॥४४३

अनघं वामनं सौरिं वैकुण्ठं पुरुषोत्तमम् । अपराजितं वासुदेवं माधवं मधुसूदनम् ॥४४४॥

वराहं पुण्डरीकाक्षं नृसिंहं धरणीधरम् । दामोदरं पद्मनाभं केशवं गरुड़ध्वजम् ॥४४५॥

गोविन्दमच्युतं कृष्णमनन्तं पुरुषोत्तमम् । अधोक्षजं जगद्वीज सर्गस्थित्यन्तकारणम् ॥४४६॥

अनादिनिधनं विष्णुं त्रिलोकेशं त्रिविक्रमम् । नारायणं चतुर्बाहुं शङ्खचक्रगदाधरम् ॥४४७॥

पीताम्बरधरं नित्यं वनमालाविभूषितम् । श्रीवत्साङ्कं जगत्सेतुं श्रीपतिं श्रीधरं हरिम् ॥४४८

देवकीगर्भसम्भूतं दैत्यसैन्यविनाशनम् । गृहाणार्घ्यमिदं देव गोविन्दाय नमो नमः ॥४४९॥

इत्यर्घ्यमन्त्रः ।

अथ स्नानमन्त्रः

योगेश्वराय योगसम्भवाय योगपतये गोविन्दाय नमो नमः ॥४५०॥इति ।

---

श्रीवसुदेवादीनां पूजामन्त्रमुद्दिशति- स्वनामभिरिति । तत्र प्रयोगः—'ॐ वसुदेवाय नमः' इति । मन्त्र-विवर्ज्जिताः प्रणवरहिताः, तत्तन्मन्त्रास्तैरप्रणवा उच्चारणीया इत्यर्थः । अत्र चानुक्तोऽपि विशेषतः पूजायाः क्रमो विधिश्च बहुलपुराणवचनाद्युक्तितः सम्प्रदायानुसाराच्चाग्रे लेख्य एव ॥४४२॥

क्वचिच्च यज्ञेश्वरायेत्यादि, पाद्यादि-दीपान्तोपचारमन्त्रः, विश्वेश्वरायेत्यादि नैवेद्यमन्त्रः, धर्म्मेश्वरायेत्यादि शयनमन्त्र इति । अधुना तत्रैव मन्त्रादिभेदेन परमतमाह—विध्यन्तरमिति । स्मरन् लघु लघु कीर्त्तयन् इत्यर्थः, अग्रे अनघादिनामोक्तेः । स्मरणप्रकारमेवाह—अनघमिति ॥४४३-४४४॥

---

वसुदेव की पूजा में प्रथमतः प्रणव तत्पश्चात् चतुर्थी विभक्त्यन्त नाम एवं अन्त में नमः शब्द प्रयोग करना आवश्यक है । अर्थात् 'ॐ वसुदेवाय नमः' इत्यादि रूप में द्विजगण पूजा करें । स्त्री जाति एवं शूद्रगण, प्रणव रूप मन्त्र को छोड़कर "नमः वसुदेवाय नमः" इत्यादि मन्त्र से पूजा करें । कोई कोई द्विज इस स्थान में अन्य प्रकार की विधि देते हैं । अर्थात् पाद्यादि दीप पर्य्यन्त यज्ञेश्वराय यज्ञसम्भवाय यज्ञपतये गोविन्दाय नमो नमः' इस मन्त्र; नैवेद्य में "विश्वेश्वराय विश्वसम्भवाय विश्वपतये गोविन्दाय नमो नमः" इस मन्त्र और शयन में "धर्मेश्वराय धर्मसम्भवाय धर्मपतये गोविन्दाय नमो नमः" इस मन्त्र का प्रयोग करते हैं । चन्द्रोदय होने पर धीरे धीरे श्रीहरि का स्मरण करते करते चन्द्रदेव को अर्घ्य प्रदान करना चाहिये । अनन्तर अनघ, वामन, शौरि, वैकुण्ठ, पुरुषोत्तम, अपराजित, वासुदेव, दामोदर, पद्मनाभ, केशव गरुड़ध्वज, गोविन्द, अच्युत, कृष्ण, अनन्त, पुरुषोत्तम, अधोक्षज, जगद्वीज, सर्गस्थित्यन्त कारण, अनादि निधन, विष्णु, त्रिलोकेश, त्रिविक्रम, नारायण, चतुर्बाहु, शङ्ख चक्र गदाधर, पीताम्बर, नित्य वनमाला विभूषित, श्रीवत्साङ्क, जगत्सेतु, श्रीपति, श्रीधर, श्रीहरि, देवकी गर्भसम्भूत, दैत्यसैन्य निसूदन, इन सब नामों को स्मरण करके—हे देव ! मद्दत्त यह अर्घ्य आप ग्रहण कीजिये । आप गोविन्द हैं, आपको प्रणाम प्रणाम ॥४४२-४४९॥

इत्यर्घ्यमन्त्रः ।

अथ स्नानमन्त्रः

यज्ञेश्वर, योगसम्भव, योगपति, गोविन्द को नमस्कार नमस्कार । इस मन्त्र के द्वारा श्रीकृष्ण को स्नान कराना चाहिये ॥४५०॥

अथ वस्त्रदानमन्त्रः

यज्ञेश्वराय यज्ञसम्भवाय यज्ञपतये गोविन्दाय नमो नमः ।।४५१।।इति ।

अथ धूपदानमन्त्रः

विश्वेश्वराय विश्वसम्भवाय विश्वपतये गोविन्दाय नमो नमः ।।४५२।।

अथ नैवेद्यार्पणमन्त्रः

धर्म्मेश्वराय धर्म्मसम्भवाय धर्म्मपतये गोविन्दाय नमो नमः ।।४५३।।

अथ चन्द्रार्घ्यदानमन्त्रः

क्षीरोदार्णवसम्भूत अत्रिनेत्रसमुद्भव । गृहाणार्घ्यं शशाङ्केमं रोहिणीसहितो मम ।।४५४।।
स्थण्डिले स्थापयेद्देवं शशाङ्कं रोहिणीन्तथा । देवकीं वसुदेवञ्च यशोदां नन्दमेव च ।।४५५।।
बलभद्रं तथा गोपान् गोपीगोकुलमेव च । एवं कृते न सन्देहो नरः पापात् प्रमुच्यते ।।४५६।।
अर्द्धरात्रे वसोर्धारां पातयेद्गुड़सर्पिषा । ततो वर्द्धापनं षष्ठी नामादिकरणन्ततः ।।४५७।।
कर्त्तव्यं तत्क्षणाद्रात्रौ प्रभाते नवमीदिने । यथा मम तथा कार्य्यो भगवत्या महोत्सवः ।।४५८

स्थण्डिले मन्त्रसंस्कृतभूमौ स्थापयेत्, आवाहनादिकं कृत्वाऽर्च्चयेदित्यर्थः । ४५५।।
गुड़सर्पिषा वसोर्धारां पातयेत् । वर्द्धापनं नाड़ीच्छेदनम्, आदौ षष्ठीं संपूज्य पश्चान्नाड़ीच्छेदः कार्य्य इति सदाचारतो ज्ञेयम् । ततः षष्ठीनिःसारणमित्यर्थः, ततो नामकरणम्, आदि-शब्दात् जातकर्म्मारभ्य कंसबधान्तं सर्व्वमेव चरितं यथाक्रममनुकर्त्तव्यमित्यर्थः । तच्च रात्रौ तत्क्षणादेव कर्त्तव्यमिति वर्द्धापनवसुधारापातनाद्यभिप्रायेण भगवत्या श्रीदुर्गादेव्या महापूजा नवमीदिने प्रभाते कर्त्तव्येत्यर्थः ।।४५७-४५८।।

अथ वस्त्रदानमन्त्रः

यज्ञेश्वर, यज्ञसम्भव, यज्ञपति गोविन्द को नमस्कार नमस्कार । इस मन्त्र से श्रीकृष्ण को वस्त्र प्रदान करना चाहिये ।।४५१।।

अथ धूपदानमन्त्रः

विश्वेश्वर, विश्वसम्भव, विश्वपति गोविन्द को नमस्कार नमस्कार । इस मन्त्र से धूपदान करना चाहिये ।।४५२।।

अथ नैवेद्यार्पणमन्त्रः

धर्मेश्वर, धर्मसम्भव, धर्मपति गोविन्द को नमस्कार नमस्कार । इस मन्त्र से नैवेद्य अर्पण करे ।।४५३

अथ चन्द्रार्घ्यदानमन्त्रः

हे क्षीरोदार्णवसम्भूत ! हे अत्रिनेत्र समुद्भव ! हे शशाङ्क ! रोहिणी समन्वित होकर मत् प्रदत्त यह अर्घ्य ग्रहण कीजिये । इस मन्त्र से चन्द्रार्घ्य प्रदान करे ।।४५४।।

अनन्तर संस्कृत स्थान में चन्द्र, रोहिणी, देवकी, वसुदेव, यशोदा, नन्द, बलभद्र, गोपकुल, गोपीगण एवं गोसमूह को स्थापन करना चाहिये । इस प्रकार करने से निःसन्देह मनुष्य पापों से परित्राण प्राप्त कर सकते हैं । अर्धरात्रि में गुड़ एवं घृत के द्वारा वसुधारा प्रदान करना पड़ता है । अनन्तर उस रात्रि में ही षष्ठीदेवी की पूजा, वर्धापन अर्थात् नाड़ीच्छेदन इसके बाद नामकरण करे । नवमी के दिन प्रभात काल में जिस प्रकार मेरा महोत्सव करना चाहिये, उसी प्रकार नवमी के दिन प्रभात काल में श्रीदुर्गादेवी के उद्देश में भी महोत्सव सम्पादन करे । अनन्तर भक्तिपूर्वक ब्राह्मण भोजन कराकर उन सबको स्वर्ण, रौप्य, गो

ब्राह्मणान् भोजयेद्भक्त्या तेभ्यो दद्याच्च दक्षिणाम् ।
हिरण्यं रजतं गावो वासांसि विविधानि च ।।४५९।।
यद्यदिष्टतमं तेन कृष्णो मे प्रीयतामिति ।।३६०।।

यं देवं देवकी देवी वसुदेवादजीजनत् । भौमस्य ब्रह्मणो गुप्त्यै तस्मै ब्रह्मात्मने नमः ।।४६१।।
सुजन्म-वासुदेवाय गोब्राह्मण-हिताय च । शान्तिरस्तु शिवश्चास्तु इत्युक्त्वा तं विसर्ज्जयेत् ।।४६२
एवं यः कुरुते देव्या देवक्याः सुमहोत्सवम् । वर्षे वर्षे तु मद्भक्तो धर्म्मार्थी धर्म्मनन्दन ।
नरो वा यदि वा नारी यथोक्तं फलमाप्नुयात् ।।४६३।।

भविष्ये—

गृह्णीयान्नियमं पूर्व्वं दन्तधावनपूर्व्वकम् । नियमात् फलमाप्नोति न श्रेयो नियमं विना ।।४६४

नियममन्त्रः

अद्य स्थित्वा निराहारः श्वोभूते परमेश्वर । भोक्ष्यामि देवकीपुत्र अस्मिन् जन्माष्टमीव्रते ।।४६५

---

यद्यत्तेषामभिमतं, तच्च दद्यात् । तत्र सङ्कल्पप्रकारमाह—तेन दानेन मे कृष्णः प्रीयतामित्येवम् । ब्राह्मण-भोजनादिकञ्चेदं विसर्ज्जनानन्तरं द्रष्टव्यम् ।।४५९-४६०।।

विसर्ज्जनप्रकारमाह—यमिति द्वाभ्याम् । भौमस्य प्रपञ्चरूपस्येत्यर्थः । भूमेश्चेति पाठे भूमिमारभ्य ब्रह्म-पर्य्यन्तस्य सु शोभनं जन्म यस्य वासुदेवस्य तस्मै नम इति पूर्व्वेणैवान्वयः, यद्वा, वासुदेवाय तत्प्रीत्यर्थं मम सर्व्वेषामपि वा सुजन्मास्तु ।।४६१-४६२।।

धर्म्मार्थी चान्यः कश्चन, यद्वा, धर्म्मो भगवद्भक्तिलक्षणस्तदर्थी सन् यो मद्भक्तः कुरुते । यद्वा, स मद्भक्तो भवति, अतएव भक्तिलक्षणधर्म्मार्थी च भवति । किं बहुना, सकामो यथोक्तं फलं चाप्नुयात् । पाठान्तरे भागवतो वैष्णवः, गृहीतविष्णुदीक्षाक इत्यर्थः । तादृशो यो मद्भक्तः सः ; यद्वा, अकारप्रश्लेषेण अभागवतोऽपि मद्भक्तः सन्नित्यर्थः ।।४६३।।

नियमं—सङ्कल्पम् ।।४६४।।

---

एवं विविध वसन दानरूप दक्षिणा प्रदान कर उन सबको प्रसन्न करे। ब्राह्मणवृन्द को अभीष्ट द्रव्य प्रदान पूर्वक 'श्रीकृष्ण मुझ पर प्रसन्न हों' इस प्रकार प्रार्थना करे। तत्पश्चात् दित्यादि ब्रह्मा पर्य्यन्त सबकी रक्षा हेतु जो प्रभु वसुदेव-देवकी से उत्पन्न हुए हैं, उन ब्रह्ममय प्रभु को नमस्कार है। गो ब्राह्मण हितार्थ जिनका आविर्भाव है, उन शोभन जन्मा वासुदेव को प्रणाम है। शान्ति हो, मङ्गल हो, इस प्रकार पाठ करके उनको विसर्जन करना चाहिये।।४५५-४६२।।

हे धर्मनन्दन! मदीय जो भक्त वा धर्मेच्छु व्यक्ति, प्रतिवर्ष इस प्रकार देवकीदेवी के उद्देश्य में सुमहोत्सव का अनुष्ठान करता है, वह व्यक्ति, पुरुष वा नारी जो भी हो, यथाविहित फल प्राप्त करता है।।४६३।।

भविष्य पुराण में लिखित है—दन्तधावनान्त में संकल्प (नियम) ग्रहण करे। सङ्कल्प के द्वारा ही फल लाभ होता है। सङ्कल्प के बिना फल लाभ की कोई आशा नहीं है।४६४।।

नियममन्त्रः

हे परमेश्वर! हे देवकीपुत्र! मैं अद्य इस जन्माष्टमी व्रत में भोजन न करके आगामी कल्य भोजन करूँगा।।४६५।।

उपोषितस्तु मध्याह्ने स्नात्वा कृष्णतिलैः शुभैः। धात्रीफलं शिरे दद्यान्महापुण्यविवृद्धये ॥४६६
कृत्वा माध्याह्निकं कर्म्म स्थापयेदव्रणं घटम्। पञ्चरत्नसमायुक्तं पवित्रोदकपूरितम् ॥४६७॥
तस्योपरि न्यसेत् पात्रं कर्पूरागुरुवासितम्। सुधूपवासितं शुभ्रं पुष्पमालाभिशोभितम्।
सौवर्णं वित्तवान् भक्त्या तदभावेऽथ वैणवम् ॥४६८॥
तस्योपरि न्यसेद्देवीं हैमीं लक्षणसंयुताम्। ददमानान्तु पुत्रस्य स्तनं वै विस्मिताननाम् ॥४६९
पीयमानः स्तनं सोऽथ कुचाग्रे पाणिना स्पृशन्। अवलोकमानः प्रेम्णा वै मुखं मातुर्मुहुर्मुहुः ॥४७०
कृत्वा चैवन्तु वैकुण्ठं मात्रा सह जगत्प्रभुम्। क्षीरादिस्नपनं कृत्वा चन्दनेन विलेपयेत् ॥४७१
कुङ्कुमेन महाभाग कर्पूरागुरुचर्च्चितम्। पद्मकोषीरगन्धैश्च मृगनाभिर्विमिश्रितम् ॥४७२॥
श्वेतवस्त्रयुगच्छन्नं पुष्पमालासुशोभितम्। मालतीमल्लिकापुष्पैश्चम्पकैः केतकीदलैः ॥४७३॥
विल्वपत्रैरखण्डैश्च तुलसीपत्रकोमलैः। अन्यैर्नानाविधैः पुष्पैः करवीरैः सितासितैः ॥४७४॥
यूथिकाशतपत्रैश्च तथान्यैः कालसम्भवैः। पूजनीयो महाभाग महाभक्त्या जनार्द्दनः ॥४७५॥
कुष्माण्डैर्नारिकेलैश्च खर्ज्जूरैर्दाड़िमीफलैः। चूतवृक्षसमुद्भूतैः फलै रम्भासमुद्भवैः ॥४७६॥

---

शिरे शिरसि महापुण्यं भगवद्भक्तिस्तस्य विशेषेण वृद्धये, धात्रीफलस्य भगवत्प्रियत्वात् ॥४६६॥
अव्रणं—निश्छिद्रम् ॥४६७॥
देवीं देवकीं, हैमीं हेमनिर्म्मिताम् ॥४६८॥
पीयमानः पिबन् ॥४७०॥
कर्पूरागुरुचर्च्चितमित्यादीनि जगत्प्रभुमित्यस्य पूजनीय इति क्रियाया विशेषणानि। मृगनाभिना विमिश्रितं लेपितम्। क्वचिच्च सर्व्वत्रात्र प्रथमान्तः पाठः ॥४७२॥

---

उपवास पूर्वक मध्याह्नकाल में विशुद्ध कृष्ण तिल को मिलाकर स्नान करके महापुण्य वर्द्धन के निमित्त शिरोदेश में आमलकी फल रखना चाहिये। मध्याह्न कृत्य सम्पादन पूर्वक शुद्धोदक पूर्ण पञ्चरत्न समन्वित अच्छिद्रघट स्थापन करे। धनाढ्य व्यक्ति तदुपरि भक्तिपूर्वक कर्पूर, अगुरु, एवं उत्तम धूपवासित तथा शुभ्र पुष्पमाल्य शोभित सुवर्णपात्र उसके अभाव में वेणुपात्र स्थापन करे। अतःपर सर्वसुलक्षण संयुक्ता स्वर्णमयी देव की मूर्त्ति को उक्त पात्रोपरि स्थापन करना चाहिये। देव की मूर्त्ति का निर्माण इस प्रकार रीति से करे-जिस प्रकार देवकीदेवी, सहास्यवदन से तनय को स्तन पान करा रही हैं। पुत्र प्रतिमा का निर्माण इस भाव से करे कि—श्रीहरि, जननी के स्तनाग्र में कर प्रदान पूर्वक स्तनपान करते करते पुन पुनः प्रेमातिशय्य से जननी के मुखावलोकन कर रहे हैं। इस प्रकार माता के सहित जगत्प्रभु की प्रतिमा स्थापन पूर्वक दुग्धादि द्वारा स्नान कराकर चन्दानुलेपन करे ॥४६६-४७१॥

हे महाभाग! अनन्तर पद्मक, उशीरगन्ध, एवं मृगनाभि संमिश्रित कुङ्कुम, कर्पूर एवं अगुरु द्वारा उन मूर्त्ति को चर्च्चित करना चाहिये। तत्पश्चात् प्रभु को शुक्ल वसनद्वय के द्वारा आवृत एवं पुष्प माल्य से अलङ्कृत करके मालती, मल्लिका चम्पक, केतकीदल, अखण्ड विल्वपत्र, कोमल तुलसीदल, विविध श्वेत कृष्ण करवीर कुसुम द्वारा एवं हे महाभाग! यूथिका, शतपत्र, एवं यथाकालोद्भव अन्यान्य विविध पुष्प द्वारा भी महाभक्ति पूर्वक जनार्दन की पूजा करे। हे मुने! कुष्माण्ड, नारिकेल, खर्जूर, दाड़िम्ब, आम्र, रम्भा, तत्तत् कालोत्पन्न नानाविध फल एवं अशेषविध सुपरिष्कृत घृत पक्व नैवेद्य अर्पण करे। तत्पश्चात्

तत्कालसम्भवैर्दिव्यैः फलैर्नानाविधैर्मुने । नैवेद्यैर्विविधैः शुभ्रैर्घृतपक्वैरनेकधा ॥४७७॥
दीपान् वै कारयेच्चाग्रे तथा कुसुममण्डपम् । गीतं वाद्यं तथा नृत्यं स्तोत्रपाठश्च कारयेत् ।
बालस्य चरितं विष्णोः पठनीयं पुनः पुनः ॥४७८॥
स्वगुरुं पूज्य शक्त्या वै पूजनीयस्ततो हरिः । निशि पूजा विधातव्या देवक्याः केशवस्य च ।
मन्त्रेणानेन विप्रेन्द्र पुराणविहितेन वै ॥४७९॥

अथ देवकीपूजामन्त्रः

अदिते देवमातस्त्वं सर्व्वपापप्रणाशिनी । अतस्त्वां पूजयिष्यामि भीतो भवभयस्य च ॥४८०
पूजिता तु यथा देवैः प्रसन्ना त्वं वरानने । पूजिता तु मया भक्त्या प्रसादं कुरु सुव्रते ॥४८१॥
यथा पुत्रं हरिं लब्ध्वा प्राप्ता ते निर्वृतिः परा । निर्वृतिं देवि तामेव सपुत्रा त्वं प्रयच्छ मे ॥४८२

श्रीकृष्णपूजामन्त्रः

अवतारान् सहस्राणि करोषि मधुसूदन । न ते संख्याऽवताराणां कश्चिज्जानाति वै भुवि ॥४८३
देवा ब्रह्मादयो वापि स्वरूपं न विदुस्तव । अतस्त्वां पूजयिष्यामि मातुरुत्सङ्गसंस्थितम् ॥४८४
वाञ्छितं कुरु मे देव दुष्कृतं चैव नाशय । कुरुष्व मे दयां देव संसारार्त्तिभयापह ॥४८५॥
एवं सम्पूज्य गोविन्दं पात्रे तिलमये स्थितम् । ततश्च दापयेद्दर्घ्यमिन्दोरुदयतः शुचिः ॥४८६॥
कृष्णाय प्रथमं दद्याद्देवकीसहिताय वै । अर्घ्यं ऋषिवरश्रेष्ठ सर्व्वकामफलप्रदम् ॥४८७॥

---

अग्रे—भगवत्पुरतः ॥४७८॥
पूज्य—पूजयित्वा ॥४७९॥
तिलमये तिलपूरिते, अन्यच्च सर्व्वं स्पष्टार्थमेव ॥४८६॥

---

प्रथमतः दीपमाला के द्वारा कुसुम मण्डप प्रस्तुत करके गीत, वाद्य, नृत्य एवं स्तव करना चाहिये एवं मुहुर्मुहुः श्रीहरि के बाल्यचरित का पाठ करे। तदनन्तर शक्त्यनुसार निज गुरुदेव की पूजा करके अनन्तर श्रीहरि की पूजा करनी चाहिये। हे विप्रेन्द्र ! पुराण में वर्णित वक्ष्यमाण मन्त्र से रात्रि में देवकीदेवी की एवं श्रीकृष्ण की पूजा करें ॥४७२ ४७९॥

अथ देवकीपूजामन्त्रः

हे अदिते ! हे सुरमातः ! आप सर्वपाप प्रणाशिनी हैं, सुतरां मैं भवभय से वित्रस्त होकर आपकी पूजा करता हूँ। हे वरानने ! देवगणकृत पूजा में आप जिस प्रकार प्रसन्नता को प्राप्त होती हो, भक्ति सहित मैं भी आपकी उस प्रकार पूजा करता हूँ। हे सुव्रते ! मेरे प्रति उस प्रकार सन्तुष्ट होकर अनुग्रह प्रदर्शन कीजिये। हे देवि ! आपने जिस प्रकार प्रिय तनय प्राप्त करके परमानन्द लाभ किया है, ऐसे ही आप पुत्र समन्वित होकर मुझको परमानन्द प्रदान करो ॥४८०-४८२॥

श्रीकृष्णपूजामन्त्रः

हे मधुसूदन ! आपने बहुसहस्र अवतार ग्रहण किया है। जगत् में कोई भी व्यक्ति आपके उन अवतारों की गणना करके शेष करने में सक्षम नहीं होता। विरिञ्चि प्रमुख देववृन्द भी आपके स्वरूप को विदित होने में सक्षम नहीं हैं। आप मातृक्रोड़ में शयित हैं। मैं आपकी पूजा करूँगा। हे देव ! मदभीष्ट सफल करो, मत्कृत पातक राशि को विनष्ट करो। हे देव ! हे संसारार्त्ति भयापह ! मेरे प्रति दया करो। इस

अथ अर्घ्यदानमन्त्रः

जातः कंसबधार्थाय भूभारोत्तारणाय च । देवतानां हितार्थाय धर्म्मसंस्थापनाय च ।
कौरवाणां विनाशाय दैत्यानां निधनाय च ॥४८८॥
गृहाणार्घ्यं मया दत्तं देवकीसहितो मम ॥४८९॥
श्रीकृष्णाय देवकीसहिताय सपरिवाराय लक्ष्मीसहिताय अर्घ्यं नमः ॥४९०॥

अथ चन्द्रार्घ्यदानमन्त्रः

दधिपुष्पाक्षतैर्मिश्रं ततोऽर्घ्यं शशिने मुदा । क्षीरोदार्णवसम्भूत अत्रिनेत्रसमुद्भव ।
अर्घ्यमिन्दो गृहाण त्वं रोहिण्या सहितो मम ॥४९१॥

नारिकेलेन शुभ्रेण दद्यादर्घ्यं विचक्षणः । कृष्णाय परया भक्त्या शङ्खे कृत्वा विधानतः ॥४९२
दद्याद्भूमण्डलं कृत्स्नं ससागरनगान्वितम् । अर्घ्यदानेन तत् पुण्यं लभते मानवो भुवि ॥४९३
गीतशास्त्रकथालापैः कुर्य्याज्जागरणं निशि । धूपदीपश्च नैवेद्यं ताम्बूलं दापयेद्धरेः ॥४९४॥
एवं जन्माष्टमीं कृत्वा कर्त्तव्यं नावशिष्यते । सर्व्वं पुण्यफलं प्राप्य अन्ते याति पदं हरेः ॥४९५॥

ब्रह्मपुराणे च—

अथ भाद्रपदे मासि कृष्णाष्टम्यां कलौ युगे । अष्टाविंशतिमे जातः कृष्णोऽसौ देवकीसुतः ॥४९६
भारावतारणार्थाय क्षत्रियाणां क्षयाय च । तस्मात् स तत्र सम्पूज्यो यशोदा देवकी तथा ॥४९७

---

प्रकार तिल पात्रस्थ श्रीगोविन्द की पूजा करनी चाहिये। पश्चात् चन्द्रोदय होने पर पवित्र होकर अर्घ्य अर्पण करे। हे ऋषिवर श्रेष्ठ! प्रथम देवकी समन्वित श्रीकृष्ण को अर्पण करना चाहिये। अर्घ्यार्पण द्वारा सर्व काम फल लाभ कर सकते हैं ॥४८३-४८७॥

अथ अर्घ्यदानमन्त्रः

हे देव! कंस बध, भूभारोत्तरण, सुरवृन्द के हितसाधन, धर्म्म स्थापन, कौरव संहार एवं दैत्यकुल विनाश हेतु आपका आविर्भाव हुआ है। मैं अर्घ्य अर्पण कर रहा हूँ। आप देवकीदेवी के सहित मद्दत्त यह अर्घ्य ग्रहण कीजिये। देवकी के सहित, परिवार के सहित, एवं लक्ष्मी देवी सहित श्रीकृष्ण को यह अर्घ्य समर्पण मैंने किया ॥४८८-४९०॥

अथ चन्द्रार्घ्यदानमन्त्रः

अनन्तर आनन्द पूर्वक दधि, पुष्प, अक्षतयुक्त अर्घ्य अर्पण, चन्द्रदेव को करे। हे क्षीरोद समुद्र समुद्भव अत्रिनयन सञ्जात इन्दो आप रोहिणी के सहित मद्दत्त अर्घ्य ग्रहण कीजिये ॥४९१॥

विचक्षण व्यक्ति के पक्ष में शुभ्र नारिकेल के द्वारा अर्घ्य प्रदान करना उचित है। पश्चात् भक्तिमान् होकर यथाविधि शङ्ख में अर्घ्य संस्थापन पूर्वक कृष्ण को अर्घ्य अर्पण करे। मानव इस प्रकार अर्घ्य अर्पण करने से पृथिवी में ससागरा सपर्वत महीदान का फल लाभ कर सकते हैं। गीत, शास्त्र कथालाप द्वारा रात्रि जागरण करना चाहिये एवं कृष्ण को धूप, दीप, नैवेद्य एवं ताम्बूल अर्पण करे। इस प्रकार जन्माष्टमी व्रत करने पर उस व्यक्ति के पक्ष में कुछ भी करणीय अवशिष्ट नहीं रहता है। वह व्यक्ति, सर्व पुण्यफल लाभ करके अन्त में हरिपद में प्रस्थान करता है ॥४९२-४९५॥

ब्रह्मपुराण में लिखित है— अष्टाविंश चतुर्युग के कलि की भाद्रमासीया अष्टमी तिथि में देवकीनन्दन हरि,-भूभार हरण, क्षत्रिय संहार हेतु अवतीर्ण हुए हैं। सुतरां उस रात्रि में श्रीकृष्ण की एवं यशोदा,

गन्धमाल्यैस्तथा यावैर्यवगोधूमसम्भवैः । घृतगोरसैर्भक्ष्यभोज्यैः फलैश्च विविधैरपि ।
रात्रौ प्रजागरः कार्य्यो नृत्यगीतसमाकुलः ।।४९८।। इति ।
यो भविष्योत्तराद्युक्तो विधिस्तदनुसारतः । सर्व्वं जन्माष्टमीकृत्यमेकीकृत्यात्र लिख्यते ।।४९९
एकभक्तानन्तरन्तु दन्तधावनपूर्व्वकम् । सप्तम्यामथवाष्टम्यां प्रातः सङ्कल्पमाचरेत् ।।५००।।

अथ तत्र मन्त्रः

अद्य स्थित्वा निराहारः सर्व्वभोगविवर्ज्जितः । भोक्ष्येऽहं पुण्डरीकाक्ष शरणं मे भवाच्युत ।।५०१
कुर्व्वीत प्रातरष्टम्यां स्नपनादि तिलैः प्रभोः । अर्पयेच्च नरं सर्व्वं शिष्टाचारानुसारतः ।।५०२।।

---

भक्ष्यभोज्यानाञ्च चर्व्वाचर्व्व्यत्वेन भेदः ।।४९८।।

भविष्योत्तरोक्तः, आदि-शब्दात् भविष्यपुराणाद्युक्तो यो विधिस्तस्यानुसारतः । एकीकृत्य क्रमेण संयोज्य, एवं भविष्योत्तर-भविष्याद्युक्तदृष्ट्या, तत्रापि तत्पद्धतिकारपरमप्रामाणिक-श्रीकृष्णदेवाचार्य्यादिलिखनदृष्ट्या च तत्तदेकवाक्यतयाऽत्रेदं लिख्यते, न च केवलमेकग्रन्थदृष्ट्येति भावः ।।४९९।।

एवं सर्व्वव्रतसाधारणविधिमुल्लिख्याधुनात्र विशेषं लिखति—एकेत्यादिना । सप्तम्यामेकभक्तानन्तरं दन्तधावनपूर्व्वकं सङ्कल्पं कुर्य्यात्, अथवाऽष्टम्यां प्रातः कुर्य्यात् ।।५००।।

तत्राष्टमीप्रातः सङ्कल्पमन्त्रं लिखति—अद्येति । यद्यपि सङ्कल्पमन्त्रे 'श्वोभूते परमेश्वर' इत्यादि क्वचित् पाठः, तथापि सर्व्वभोगविवर्ज्जित इत्यादिः भविष्योक्तः पाठोऽत्र लिखितः, पाठान्तरे देवकीपुत्रेत्यादिविशेषण-निर्द्देशेन शिष्टगणादृतत्वात् । भविष्योत्तरे च श्रीयुधिष्ठिरं प्रति श्रीभगवता स्वयं तथा नोक्तं परमलज्जागुण-शीलत्वात् । एवन्यत्राप्यूह्यम् ।।५०१।।

अथ लोके जन्मतिथिकृत्यवत् प्रातः श्रीभगवतोऽपि तिलस्नपनादिकं लौकिकभक्तिरीत्यपेक्षया कार्य्यमिति लिखति—कुर्व्वीतेति । प्रभोः श्रीकृष्णस्य स्नपनादि तिलैः कृष्णैः कुर्व्वीत आदि-शब्दात् उद्वर्त्तनादि तथा चोक्तम्—'तिलोद्वर्त्ती तिलस्नायी तिलहोता तिलप्रदः । तिलवापी तिलाशी च षट्तिली नावसीदति ।।' इति; अत्र च शिष्टाचारानुसारेणाष्टोत्तरशतदूर्व्वाग्रादियुक्तेन सहस्रच्छिद्रघटेन धारया स्नापनादिकमपि ज्ञेयम् । सर्व्वं वस्त्रादिकं नवमेव भगवतेऽर्पयेच्च । शिष्टाचारानुसारत इति सर्व्वत्राप्यग्रेऽप्यनुवर्त्तनीयम् । सत्-सम्प्रदाया-चारानुसारेणैवात्राखिलविधिलिखनात् ।।५०२।।

---

देवकी की विशेष रूप से पूजा करनी चाहिये । उस रात्रि में गन्ध, पुष्प, यव, गोधूमकृत याव, घृत दुग्धादि द्वारा निर्म्मित भक्ष भोज्यसमूह एवं विविध फल द्वारा पूजा करके नृत्य-गीत के सहित रात्रि जागरण करना कर्त्तव्य है ।।४९६-४९८।।

भविष्योत्तरादि में जो विधान वर्णित है, उस विधान के अनुसार विभिन्नग्रन्थोक्त जन्माष्टमी विषयक यावतीय कृत्य को एकत्र सम्मिलित करके यहाँ पर लिखा गया है ।।४९९।।

सप्तमी तिथि में दन्तधावन करने के पश्चात् एकभक्तरूप संयम के सहित अष्टमी के प्रभात काल में सङ्कल्प करना चाहिये ।।५००।।

अथ तत्र मन्त्रः

हे पुण्डरीकाक्ष ! हे अच्युत ! अद्य जन्माष्टमी दिन में सर्वभोग परित्याग पूर्वक उपवासी होकर परदिन भोजन करूँगा । आप मेरी शरण हूजिये ।।५०१।।

अष्टमी तिथि के प्रातःकाल में व्रती व्यक्ति, प्रभु श्रीकृष्ण के स्नपनादि कार्य्य सम्पादन कृष्णतिल के द्वारा करे । आदि शब्द से उद्वर्त्तनादि को भी जानना होगा । शिष्टाचार के अनुसार अष्टोत्तरशत दूर्वाग्रादि

मध्याह्ने च शुभे तीर्थेऽन्यत्र वा सज्जले व्रती ।
मूर्द्धिन धात्रीफलं दत्त्वा स्नायात् कृष्णतिलैः शुभैः ॥५०३॥

अथ माध्याह्निकं नित्यकृत्यमन्यत् समाप्य हि । सुदेशे रचयेद्दिव्यं देवक्याः सूतिकागृहम् ॥५०४

भूषितं मणिभिर्वस्त्रवितानैस्तोरणैरपि । आबद्धैः फलपुष्पैश्च घृतपक्वादिभिस्तथा ॥५०५॥

यवदूर्व्वाम्बुजाद्याढ्यं वाद्यगीतादिसङ्कुलम् ।
द्वारे च शृङ्खलालोहखड्गच्छागादिसंयुतम् ॥५०६॥

गोकुलं विलिखेत्तत्र गोपगोपीजनावृतम् । रक्षपालांश्च गेहस्य सर्व्वतोऽवस्थितान् लिखेत् ॥५०७

तन्मध्ये सर्व्वतोभद्रमण्डले स्थापयेद्घटम् । पात्रं तदुपरि न्यसेद्धैमं वैणवमेव वा ॥५०८॥

देवकीं स्थापयेत्तत्र स्वर्णेनान्येन वा कृताम् । सल्लक्षणां सुपर्य्यङ्के सुप्तां स्नुतपयोधराम् ॥५०९

तथैव भगवन्तञ्च तदुत्सङ्गे स्तनन्धयम् । निजलक्षणसम्पन्नं स्थापयेच्छायितं सुखम् ॥५१०॥

तथा क्वचित् प्रदेशे च श्रीयशोदां सकन्यकाम् ।
श्रीनन्दं रोहिणीं रामं गोपान् गोपीश्च गा अपि ॥५११॥

वसुदेवञ्च देवक्याः समीपे मुदिताननम् । खड्गपाणिं स्तुवन्तञ्च विस्मयोत्फुल्ललोचनम् ॥५१२

देवान् मुनींश्च तत्रोद्ध्वें प्रणतान् पुष्पवर्षिणः । गन्धर्व्वाप्सरसादींश्च गीतनृत्यादितत्परान् ॥५१३

कंसञ्च तत्परीवारान् गृहीतास्त्रांश्च निद्रया ।
मोहितान् स्थापयेत् क्वापि कृष्णायां कालियं लिखेत् ॥५१४॥
इत्थं कृत्वा यथाशोभं स्वशक्त्या सूतिकागृहम् ।
तत्तन्मूर्त्तीश्च विन्यस्य प्रारभेतार्च्चनं निशि ॥५१५॥

---

शुभे तीर्थे श्रीकालिन्द्यादौ, तत्रापि श्रीविश्रान्त्यादौ, तदलाभे च अन्यत्र सज्जले पवित्रनिर्म्मलसलिले तथा चाग्रे लेख्यं भविष्योत्तरवचनं 'नद्यादौ विमल जले' इति । व्रती उपवासपरो जनः । धात्रीफलं मूर्द्धिन दत्त्वा तेन मस्तकं संमृज्य शुभैः श्रीभगवत्स्नानाद्यवशिष्टैर्महाप्रसादरूपैः कृष्णैस्तिलैः कृत्वा स्नानं कुर्य्यात् । तथा च भविष्ये—'उपोषितस्तु मध्याह्ने कृत्वा कृष्णतिलैः शुभैः । धात्रीफलं शिरे दद्यान्महापुण्यविवृद्धये ॥' इति ॥ ॥५०३॥

अन्यत् इष्टदेवपूजादि, सुदेशे शोभनप्रदेशे, दिव्यं परमशोभनम् ॥५०४॥

तत्प्रकारं दर्शयन् तदेव विशिनष्टि—भूषितमिति द्वाभ्याम् । तोरणादिभिश्च भूषितं कृत्वा गोकुलादि सर्व्वं लिखित्वा स्वस्वयोग्यस्थाने तत्तन्मूर्त्तीश्च संस्थाप्यार्च्चनं प्रारभेत, पूजारम्भं कुर्य्यात् । निशीति—'निशि पूजा विधातव्या देवक्याः केशवस्य च' इति भविष्योक्तेः । अत्र च चन्द्रोदये चन्द्रार्घ्यदानात् पूर्व्वं देवक्या भगवतश्च भविष्ये पूजोक्तेः, शिष्टवर्गाचारानुसाराच्च प्रथमरात्र एव पूजारम्भो ज्ञेय इति दिक् ॥५०५-५१५॥

---

युक्त सहस्रच्छिद्रयुक्त घटधारा के द्वारा भी स्नान कराना कर्त्तव्य है । अनन्तर नूतन वस्त्रादि का अर्पण भी श्रीकृष्ण को करना चाहिये ॥५०२॥

उपवास निष्ठ व्रती व्यक्ति, मध्याह्न काल में यमुनादि शुद्ध तीर्थ में अथवा अन्य विशुद्ध जल में मस्तक में आमलकी फल स्थापन पूर्वक पवित्र कृष्णतिल के सहित स्नान करे । तत्पश्चात् अन्यान्य माध्याह्निक

गन्धपुष्पाक्षतादीनि वस्त्रालङ्करणानि च। नैवेद्यानि विचित्राणि फलानि स्थापयेत्तथा ॥५१६

ततः शास्त्रोक्तमन्त्रेण विधिनावाह्य देवकीम्। प्रतिष्ठाप्य च तस्यै प्राक् पुष्पाञ्जलिमथार्पयेत् ॥५१७

अथ देवकीध्यानम्

गायद्भिः किन्नराद्यैः सततपरिवृता वेणुवीणादिनादै-
र्भृङ्गारादर्शकुम्भप्रकरकृतकरैः किन्नरैः सेव्यमाना।
पर्य्यङ्के स्वास्तृते या मुदिततरमुखी पुत्रिणी सम्यगास्ते
सा देवी देवमाता जयति सुतनया देवकी कान्तरूपा ॥५१८॥ इति।

---

पूजारम्भप्रकारमेव लिखति—गन्धेति। आदि-शब्देन पञ्चामृतोद्वर्त्तन-सुगन्धि-शुद्धोदकादीनि, चन्द्रार्घ्यार्थं नारिकेलादि च। वस्त्रञ्च श्रीभगवदर्थं परिधानोत्तरीयं शुक्लवस्त्रयुग्मं ज्ञेयम्, 'शुक्लवस्त्रयुगच्छन्नम्' इति भविष्योक्तेः। नैवेद्यानि घृतशर्करासहितपायसघृतपक्वदध्यादीनि। तथेति समुच्चयात्, विचित्राणीत्यस्य फलानीत्यनेनापि सम्बन्धः, तानि च स्पष्टं तत्र तत्रैवोक्तानि। अर्घ्यपाद्यादिद्रव्याणि च सर्व्वपूजासाधारणान्ये-वेत्यत्र विशेषतो नोल्लिखितानि। यद्यपि गन्धपुष्पादीन्यपि पूजोपकरणानि सर्व्वपूजासाधारणान्येव, तथापि महोत्सव-विशेषेऽस्मिन् विशेषतस्तत्तद्द्रव्यसमाहरणार्थं द्रव्यविशेषोपाहरणार्थञ्च तान्युल्लिखितानीति दिक्॥ ॥५१६॥

देवक्यावाहने शास्त्रोक्तमन्त्रश्च 'नमो देव्यै श्रियै' इति लक्ष्मीमन्त्र एव। पुष्पाञ्जलिसमर्पणे च गायद्भि-रित्यादिश्लोक एव शिष्टसम्मतो मन्त्रः। विधिनेति—आवाहनमुद्रादि गीतवादनृत्यपुराणपठनादि च सर्व्वपूजा-साधारणो विधिर्ज्ञेयः। भृङ्गारः—सौवर्ण-लघुजल-पानपात्रं, भृङ्गारादीनां प्रकरे समूहे कृत्वा न्यस्ताः करा

---

नित्य क्रिया सम्पन्न करके मनोहर स्थान में देवकी के दिव्य सूतिकागार की रचना करनी चाहिये। उक्त सूतिका गृह को मणि, वसन, वितान, तोरण एव फल पुष्पादि द्वारा शोभित करे। घृतपक्वादि द्रव्य-समन्वित, यव, दूर्वा एवं पद्मयुक्त, गन्धवाद्यादि द्वारा पूर्ण एवं द्वार स्थान श्रृङ्खल, लौह खड्ग एवं छागादि समन्वित करे। उक्त गृहमध्य में गोप गोपीकुल विशिष्ट गोकुल एवं गृह के चतुर्दिक में रक्षिसमूह को अङ्कित करे। गृहाभ्यान्तर में सर्वतोभद्रमण्डल अङ्कनपूर्वक तदुपरि घट स्थापन करना चाहिये। तत्पश्चात् उक्त घटोपरि सुवर्ण वा वेणु निर्मित पात्र स्थापन करके उस पात्र में सर्व सुलक्षण समन्विता पर्य्यङ्क शायिनी देवकीदेवी के अङ्क में स्तन्यपानरत निज लक्षणयुक्त, सुख पूर्वक शायित श्रीकृष्ण की मूर्त्ति को स्थापन करे सूतिकालय के एक देश में कन्यका के सहित यशोदा, नन्द, रोहिणी, बलभद्र, गोप, गोपी, गोगण, एवं देवकीदेवी के सन्निधान में प्रफुल्लवदन, खड्गहस्त, स्तुति परायण, विस्मय विकसित नयन वसुदेव की मूर्त्ति का अङ्कन करे। एवं सूतिकागृह के ऊर्द्ध्व भाग में नतशिराः पुष्पवर्षणकारी देववृन्द, मुनिगण, नृत्य-गीतादि परायण गन्धर्वसमूह, अप्सरावर्ग, अस्त्रधारी निद्रामग्न कंस एवं कंसानुचरसमूह की मूर्त्ति चित्रित करके स्थापन पूर्वक एक देश में कालिन्दी मध्यगत कालीयनाग की मूर्त्ति अङ्कन करे। निज शक्त्यनुसार उक्त मूर्त्तिसमूह को स्थापन पूर्वक रात्रिकाल में अर्च्चन कार्य्य में प्रवृत्त होना चाहिये ॥५०३ ५१५॥

पूजा स्थल में गन्ध, कुसुम, अक्षत, वस्त्र, भूषण, विविध नैवेद्य एवं विविध फल स्थापन करना चाहिये ॥५१६॥

तत्पश्चात् शास्त्रोक्त मन्त्र द्वारा यथाविधि देवकी देवी का आवाहन एवं प्रतिष्ठा करके उनको कुसुमाञ्जलि अर्पण करे ॥५१७॥

अथ श्रीदेवकीदेवीध्यानम्

सङ्गीत परायण किन्नरादिगण, वेणुवीणा झङ्कार के सहित जिनको सतत परिवेष्टन कर विद्यमान हैं,

तथा श्रीकृष्णदेवस्य प्राग्वदावाहनं बुधः। प्रतिष्ठाञ्च विधायास्मै दद्यात् पुष्पाञ्जलिं ततः ॥५१९
चन्द्रोदये वहिर्गेहात् संमार्ज्याब्जोपरीन्दवे। नारिकेलादिकं शङ्खे कृत्वा तेनार्घ्यमर्पयेत् ॥५२०

अथ तत्र मन्त्रः

क्षीरोदार्णवसम्भूत अत्रिनेत्रसमुद्भव। गृहाणार्घ्यं शशाङ्केश रोहिण्या सहितो मम ॥५२१॥
ज्योत्स्नापते नमस्तुभ्यं नमस्ते ज्योतिषां पते।
नमस्ते रोहिणीकान्त अर्घ्यं मे प्रतिगृह्यताम् ॥५२२॥ इति।
ततो गृहान्तरागत्य कृत्वा जय-जयध्वनिम्।
ध्यात्वा श्रीभगवज्जन्म कृष्णायार्घ्यं निवेदयेत् ॥५२३॥

---

यैस्तैर्भृङ्गारादिपाणिभिरित्यर्थः। 'पादावभ्यञ्जयन्ती श्रीर्देवक्याश्चरणान्तिके, निषण्णा पङ्कजे पूज्या' इति भविष्योत्तरोक्तं यद्देवकीपूजानन्तरं लक्ष्मीपूजनं, प्रायः शिष्टवर्गानादृतत्वात्, तथाग्रे नवम्यां प्रातः श्रीदुर्गा-पूजनमपि नात्र लिखितम् ॥५१७-५१८॥

प्राग्वदिति—नित्यपूजायां यथावाहनादिकं लिखितमस्ति, तथेत्यर्थः। तथा जयन्तीव्रते च मन्त्रविशेषो लिखितोऽस्ति, सोऽप्यत्र सर्व्वो ज्ञेयः। रोहिणीयोगेन द्वयोरप्यनयोरभेदात्। तत्र 'एहि एहि जगन्नाथ' इत्यादि-रावाहनमन्त्रः, 'मनोज्योतिः' इति प्रतिष्ठामन्त्रः। पुष्पाञ्जलिसमर्पणे च 'विश्वेश्वराय' इत्यादि-मन्त्र एव शिष्टवर्गसम्मतः ॥५१९॥

नारिकेलं तस्य शुभ्रशस्यमादि-शब्दाद्दधिपुष्पाक्षतानि, 'दधिपुष्पाक्षतैर्मिश्रं ततोऽर्घ्यं शशिने मुने' इति भविष्योक्तेः। तच्च सर्व्वं शङ्खे निधाय तेन नारिकेलादिना कमलोपरि चन्द्रायार्घ्यं दद्यात्। यद्यपि देवक्यै श्रीभगवते चार्घ्यार्पणानन्तरमेव चन्द्रार्घ्यार्पणं भविष्योत्तरे भविष्ये चोक्तमस्ति, तथापि प्रामाणिकशिष्ट-लिखितपद्धत्यनुसारेण व्युत्क्रमेणात्र लिखितमिति ज्ञेयम्। गृहान्तः पूजामन्दिराभ्यन्तरे आगत्य श्रीभगवतो जन्म प्रादुर्भावं 'तमद्भुतं बालकमम्बुजेक्षणम्' (३।९) इत्यादिना श्रीदशमस्कन्धाद्युक्तप्रकारं ध्यात्वा शिष्टा-चारानुसारेण 'तमद्भुतम्' इत्यादिश्लोकांश्च पठन्। शुभ्रनारिकेलशस्येनैव शङ्खनिहितेनार्घ्यमर्पयेत्। 'नारिकेलेन शुभ्रेण दद्यादर्घ्यं विचक्षणः। कृष्णाय परया भक्त्या शङ्खे कृत्वा विधानतः॥' इति भविष्योक्तेः। 'जातः कंसवधार्थाय' इत्यस्य परभागोऽत्र न संगृहीतः, भविष्यपुराणवचनमध्ये तथा पूर्व्वं जयन्तीव्रते च लिखितत्वात्,

---

किन्नरगण, हस्त में भृङ्गार, आदर्श एवं घट लेकर जिनकी शुश्रूषा में नियुक्त हैं, एवं जो पुत्र के सहित प्रफुल्ल मुख से आस्तृत पर्य्यङ्कोपरि संस्थिता हैं, कमनीयरूपा उन सत्पुत्रवती देवमाता जययुक्त हों ॥५१८

अनन्तर विचक्षण व्यक्ति, श्रीकृष्णदेव को पूर्ववत् आवाहन एवं प्रतिष्ठा करके पुष्पाञ्जलि प्रदान करे। तदनन्तर चन्द्रोदय होने से गृह के बहिर्देश में आगमन करके स्थान मार्जन पूर्वक, शङ्खस्थ नारिकेलादि द्वारा चन्द्रमा को पद्मोपरि अर्घ्य अर्पण करे ॥५१९-५२०॥

अथ तत्र मन्त्रः

हे क्षीरोदार्णव सम्भूत! हे अत्रिनेत्र समुद्भव! हे शशाङ्क! आप रोहिणीयुक्त होकर मेरा दिया यह अर्घ्य ग्रहण कीजिये। हे ज्योत्स्नापते! आपको नमस्कार करता हूँ। हे ज्योतिस्पते! आपको नमस्कार। हे रोहिणीकान्त! आपको नमस्कार। आप मद्दत्त यह अर्घ्य ग्रहण कीजिये ॥५२१-५२२॥

अनन्तर जय जय शब्दोच्चारण करते करते घर के भीतर आकर कृष्णजन्म चिन्तन करके उनको अर्घ्य निवेदन करना चाहिये ॥५२३॥

अथ तत्र मन्त्रः

जातः कंसबधार्थाय ॥५२४॥ इत्यादि ।

ततः क्षीरादिना शुद्धोदकेन तु यथाविधि । देवकीसहितं भक्त्या श्रीकृष्णं स्नापयेत् कृती । ५२५

अथ तत्र मन्त्रः

योगेश्वराय योगसम्भवाय योगपतये गोविन्दाय नमो नमः ॥५२६॥ इति ।

क्वचिच्च—

योगेश्वराय देवाय देवकीनन्दनाय च । योगोद्भवाय नित्याय गोविन्दाय नमो नमः ॥५२७॥ इति ।

अदिते देवमातस्त्वमित्यादि प्रार्थ्य देवकीम् । गन्धादीन्यर्पयेत्तस्यै नमो देव्यै श्रिये इति ॥५२८॥

अवतारसहस्राणीत्यादिनाभ्यर्थ्य च प्रभुम् । पाद्यादि वस्त्रभूषादि धूपदीपादि चार्पयेत् ॥५२९॥

अथ तत्र पाद्यादिदीपान्तमन्त्रः

ॐ यज्ञेश्वराय यज्ञसम्भवाय यज्ञपतये गोविन्दाय नमो नमः ॥५३०॥ इति ।

---

एवमग्रेप्यूह्यम् ॥५२०-५२४॥

यथाविधीति नित्यपूजायां स्नपनविधिर्नृत्यगीतवाद्यादिपूर्व्वको यो लिखितस्तदनुसारेणेत्यर्थः । कृती तत्तत्प्रकारकुशलः ॥५२५॥

'अदिते देवमातस्त्वम्' इत्यादि च प्रार्थनामन्त्रः, 'नमो देव्यै श्रिये' इति च गन्धाद्यर्पणमन्त्र इति विवेचनीयम् । एवमग्रेऽप्यूह्यम्, आदि-शब्दात् पुष्पधूपनैवेद्यादीनि । ५२८॥

पाद्यादीति प्रथमेनादि-शब्देन मधुपर्काचमनीयादि, द्वितीयेन गन्धपुष्पादि, तृतीयेन नैवेद्यादि, तत्तद्विशेषश्च सर्व्वपूजासाधारणत्वादत्र नोल्लिखितः । एवमत्रोल्लिखितोऽन्योऽप्युपचारः पूजासाधारणत्वादशेष एवोह्यः, यतोऽत्र प्रायो विशेषभाग एव दर्शित इति, अतएव लिखितम्—कृतीति ॥५२९॥

---

अथ तत्र मन्त्रः

'कंस को बध करने के निमित्त आप जन्म ग्रहण किये हैं' इत्यादि पूर्वोक्त मन्त्र द्रष्टव्य ॥५२४॥

पश्चात् कृती व्यक्ति, भक्ति पूर्वक यथा विधि दुग्ध एवं पवित्रोदक द्वारा देवकी के सहित श्रीकृष्ण को स्नान करावे ।॥५२५॥

अथ तत्र मन्त्रः

योगेश्वर, योगसम्भव, योगपति गोविन्द को नमस्कार नमस्कार ॥५२६॥

वहीं पर इस प्रकार मन्त्र है,-योगेश्वराय देवाय देवकीनन्दनाय च । योगोद्भवाय नित्याय गोविन्दाय नमो नमः ॥' योगेश्वर, देव, देवकी तनय, योगोद्भव, नित्य गोविन्द को नमस्कार नमस्कार ॥५२७॥

अनन्तर, 'अदिते ! देवमातः ! इत्यादि पूर्वोक्त मन्त्र द्वारा देवकी को प्रार्थना करके 'नमो देव्यै श्रिये' इस मन्त्र से उनको गन्धादि अर्पण करे । तदनन्तर, 'अवतार सहस्राणि' प्रभृति मन्त्र से प्रभु की पूजा करके पाद्यादि, वस्त्र, अलङ्कार, धूप एवं दीपादि प्रदान करना चाहिये ॥५२८-५२९॥

अथ तत्र पाद्यादिदीपान्तमन्त्रः

'ॐ यज्ञेश्वराय' इत्यादि मूल मन्त्र द्वारा पाद्यादि प्रदान करना चाहिये ॥५३०॥

अथ नैवेद्यमन्त्रः

ॐ विश्वेश्वराय विश्वसम्भवाय विश्वपतये गोविन्दाय नमो नमः ॥५३१॥ इति ।

वसुदेवं यशोदाञ्च नन्दं रामञ्च रोहिणीम् । अन्यांश्च पूजयेत्तत्तन्नाममन्त्रैर्यथाविधि ॥५३२॥

पक्वान्नानि विचित्राणि खाद्यानि विविधानि च ।
तत्कालीनफलान्यत्र ताम्बूलञ्च समर्पयेत् ॥५३३॥

अथ तत्र मन्त्रः

धर्म्मेश्वराय धर्म्मसम्भवाय धर्म्मपतये गोविन्दाय नमो नमः ॥५३४॥ इति ।

निशीथे गुड़सर्पिभ्यां वसोर्धाराञ्च पातयेत् ॥५३५॥

अथ कुर्य्याद्भगवतो जातकर्म्म-महोत्सवम् । श्रीनालवर्द्धनं कुर्य्यात् षष्ठीनिःसारणं ततः ॥५३६
श्रीनामकरण तत्तल्लीलानुकरणन्तथा । अथाचार्य्यं समभ्यर्च्च्य कुर्य्याज्जागरणं मुदा ।
गीतनृत्यादिना बाल्यक्रीड़ाश्रवणपूर्व्वकम् ॥५३७॥

---

रामं श्रीबलदेवम्, अन्यान् गोपगोपीगवादीन् देवादींश्च, तत्तन्मूर्त्तिनिर्म्माणाशक्तौ च स्थण्डिले आवाहनादिकं कृत्वा पूजयेदिति लिखितभविष्योत्तर वचनतो बोद्धव्यम् । 'स्थण्डिले स्थापयेद्देवं शशाङ्कं रोहिणीन्तथा । देवकीं वसुदेवञ्च यशोदां नन्दमेव च । बलभद्रं तथा गोपान् गोपीर्गोकुलमेव वा ॥' इति भविष्योत्तरोक्तेः । तस्य तस्य वसुदेवादेर्नामात्मकैर्मन्त्रैः, तत्प्रकारश्च पूर्व्वं सर्व्वत्र लिखितोऽस्त्येव । अत्र भविष्ये भविष्योत्तरे चोक्तः—'स्वनामभिश्चतुर्थ्यन्तैः प्रणवादिर्नमोऽन्तकैः । पूजयेयुर्द्विजाः सर्व्वे स्त्रीशूद्रा मन्त्रवर्ज्जिताः ॥' इति । अतोऽयं प्रयोगः—'ॐ वसुदेवाय नमः' इत्यादि । यथाविधीति आवाहनादिकं कृत्वा । 'कश्यपो वसुदेवोऽयम्' इत्यादि,तथा 'ध्यात्वावतारं प्रागुक्तम्' इत्यादेश्च भविष्योत्तरोक्तस्यानुसारतस्तत्तद्ध्यानं कृत्वा पाद्यादिनैवेद्यान्तोपचारान् समर्पयेदित्येवं सर्व्वपूजासाधारणविध्यनुसारेण पूजयेदित्यर्थः ॥५३२॥

अथ महोत्सवविशेषस्यास्य लक्षणं पुनर्द्रव्यविशेषसमर्पणं लिखति—पक्वान्नानीति । खाद्यानि चर्व्व्य-वीजेक्षुकुडुकादीनि । तत्कालीनानि जन्माष्टमीसमयोद्भवानि फलानि कुष्माण्डवदलकादीनि च ॥५३३॥

निशीथे अर्द्धरात्रे गुड़युक्तेन गव्यघृतेन वसोर्धाराः पातयेत् । तत्र मन्त्रः—'वसोः पवित्रमसि' इति; एतच्च लोकजन्मानन्तरसाधारणकृत्यम् ॥५३५॥

किञ्च श्रीनालस्य श्रीनाभिनाड्या वर्द्धनं छेदनम्, तच्च हैरण्यक्षुरेण कुर्य्यात् । यथोपचारैः 'षष्ठिकायै नमः'

---

अथ नैवेद्यमन्त्रः

'ॐ विश्वेश्वराय' इत्यादि मूलस्थ मन्त्र के द्वारा नैवेद्य प्रदान करना चाहिये ॥५३१॥

पश्चात् वसुदेव, यशोदा, नन्द, बलदेव, रोहिणी एवं अन्यान्य समस्त व्यक्ति की पूजा उन उनके नाम मन्त्र के द्वारा यथा विधि करे । विचित्र पक्वान्न, विविध खाद्य, तत्कालोत्पन्न फल एवं ताम्बूल समर्पण करना चाहिये ॥५३२-५३३॥

अथ तत्र मन्त्रः

धर्मेश्वर ! धर्मसम्भव ! हे धर्मपति ! गोविन्द को नमस्कार, नमस्कार ॥५३४॥

रात्रि में गुड़ एवं घृत के द्वारा वसुधारा प्रदान करना चाहिये ॥५३५॥

अतःपर प्रभु के जातक्रियोत्सव, सुवर्ण क्षुर के द्वारा नाड़ीच्छेद, षष्ठीदेवी की पूजा करके, यथाविधि तदीय निष्क्रामण, नामकरण, एवं पूतनाबधादि कंसबधान्त यावतीय क्रीड़ानुकरण करे । तत्पश्चात् वसन भूषणादि द्वारा आचार्य्य की यथाविधि पूजा करके आनन्द पूर्वक श्रीहरि की बाल्यक्रीड़ा श्रवण पूर्वक नृत्य गीतादि द्वारा रात्रि जागरण करना चाहिये ॥५३६-५३७॥

स्कान्दे ब्रह्मनारदसंवादे --

आजन्मोपार्ज्जितं पापं तत्क्षणादेव लीयते। रात्रौ जागरणे विप्र दृष्टे नश्यति देहिनाम् ॥५३८॥

प्रभाते सति निर्वर्त्त्य नित्यकर्म्माणि वैष्णवः।

देवमभ्यर्च्च्य सम्प्रार्थ्य प्रणम्य च विसर्ज्जयेत् ॥५३९॥

अथ प्रणाममन्त्रः

'यं देवम्' ॥५४०॥ इत्यादि सार्द्धपद्यम्।

अथ प्रार्थनामन्त्रः

'शान्तिरस्तु' ॥५४१॥ इत्यादि।

अथाचार्य्याय तत् सर्व्वं श्रीमूर्त्त्यादि सदक्षिणम्।

प्रदाय विप्रान् सम्भोज्य विदध्यात् पारणोत्सवम् ॥५४२॥

---

इति षष्ठीं सम्पूज्य विधिवन्निःसारणं कुर्य्यादिति ज्ञेयम्। सर्व्वञ्च भगवन्निवेदितशेषेणैव सिध्यतीति स्थापने पृथक् न लिखितम्। तस्यास्तस्याः सुप्रसिद्धायाः लीलायाः पूतनाबधादि-कंसबधान्तक्रीड़ायाः अनुकरणम्। आचार्य्यं निजगुरुं, यद्वा, व्रतार्थे गुरुत्वेन वृतं विप्रं समभ्यर्च्च्य वस्त्रालङ्करणादिना सम्यक् पूजयित्वा बाल्य-क्रीड़ा श्रीभगवतः पूतनाबधादिचरितं तच्छ्रवणपूर्व्वकं जागरणं कुर्य्यात्। जागरणविधिश्च सर्व्वव्रतसाधारण एवेत्यत्र विशेषतो नोल्लिखितः ॥५३६-५३७॥

कथं लीयते इत्यपेक्षायामुक्तपोषन्यायेनाह— रात्राविति। हे विप्र दृष्टे तम इति पाठे च तमोऽज्ञानम् ॥५३८

नित्यकर्म्माणि स्नानादीनि, संप्रार्थ्य क्षमस्वेत्यादिकमभ्यर्थ्य विसर्ज्जयेदिति जन्माष्टमीव्रतार्थनिर्म्मित-श्रीमूर्त्तिविशेषस्य व्रतान्ते गुरौ समर्पणार्थमित्येषा दिक् ॥५३९॥

तत् सूतिकागृहोपकरणं तत्तद्भगवदादिप्रतिमाः, आदि-शब्देन पूजोपकरणादिकञ्च सर्व्वं दक्षिणासहितं, प्रकर्षेण श्रीकृष्णः प्रीयतामित्येवं दत्त्वा, तथैव विप्रान् सम्यग् भोजयित्वा, व्रतसमाप्तिरूपमहोत्सवं कुर्य्यात्, परमहर्षेण बन्धुभिः समं भगवन्महाप्रसादान्नादिकं भुञ्जीतेत्यर्थः ॥५४२॥

---

स्कन्द पुराण के ब्रह्म-नारद-संवाद में उक्त है—हे विप्र! रात्रि जागरण दर्शन करने से देहिगण के आजन्म सञ्चित पातक सद्यः विनष्ट होता है ॥५३८॥

प्रभातकाल में वैष्णव, नित्यक्रिया समापन पूर्वक प्रभु की पूजा एवं प्रार्थना करे अनन्तर प्रणाम करके उनको विसर्ज्जन करे ॥५३९॥

अथ प्रणाममन्त्र:

"यं देवम्" इत्यादि सार्ध कविता द्वारा प्रणाम करना चाहिये ॥५४०॥

अथ प्रार्थनामन्त्रः

'शान्तिरस्तु" इत्यादि पूर्वोक्त मन्त्र के द्वारा प्रार्थना करनी चाहिये ॥५४१॥

अनन्तर आचार्य्य को दक्षिणा के सहित सूतिकालयस्थ उपकरण समूह एवं भगवन्मूर्त्तादि अर्पण पूर्वक विप्रवृन्द को भोजन कराकर पारणोत्सव सम्पन्न करे ॥५४२॥

अथ पार्श्वपरिवर्त्तनोत्सवः

भाद्रस्य शुक्लैकादश्यां शयनोत्सववत् प्रभोः। कटिदानोत्सवं कुर्य्याद्वैष्णवैः सह वैष्णवः ॥५४३

भविष्योत्तरे—

प्राप्ते भाद्रपदे मासि एकादश्यां सितेऽहनि। कटिदानं भवेद्विष्णोर्महापातकनाशनम् ॥५४४॥

जलाशयान्तिकं नीत्वा सम्यगभ्यच्चर्य प्रभुम्। कर्णिकापरिवृत्तिश्च दक्षिणाङ्गे प्रकल्पयेत् ॥५४५

अथ अभ्यर्थनमन्त्रः

देव देव जगन्नाथ योगिगम्य निरञ्जन। कटिदानं कुरुष्वाद्य मासि भाद्रपदे शुभे ॥५४६॥

महापूजां ततः कृत्वा वैष्णवान् परितोष्य च। देवं स्वमन्दिरे नीत्वा यथापूर्व्वं निवेशयेत् ॥५४७

अथ श्रवणद्वादशीव्रतम्

भाद्रस्य शुक्लद्वादश्यां युक्तायां श्रवणेन हि। उपोष्य सङ्गमे स्नात्वा देवं वामनमर्च्चयेत् ॥५४८

अथ तन्माहात्म्यम्

मासि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता। महती द्वादशी ज्ञेया उपवासे महाफला।
अर्च्चयित्वाऽच्युतं भक्त्या लभेत् पुण्यं दशाब्दिकम् ॥५४९॥

---

शयनोत्सववदिति यथा शयने क्षीराब्धिमहोत्सवप्रकारो लिखितस्तथेत्यर्थः। तत्र यद्यपि भविष्योत्तरे एकादश्यामित्युक्तं, तथापिपूर्व्वलिखितशयनादिकालनिर्णयानुसारेण द्वादश्यामिति लिखितम्। तद्विशेषश्च पूर्व्वमेव शयनोत्सवप्रकरणे लिखितोऽस्ति। भविष्योत्तरे चैकादशीद्वादश्योरभेदाभिप्रायेणोक्तमिति बोद्धव्यम्। ॥५४३॥

शयनोत्सवात् कश्चिद्विशेषमनुवादपूर्व्वकं लिखति—जलेति त्रिभिः। कर्णिकायाः कट्याः परिवृत्तिं दक्षिणाङ्गे प्रकल्पयेदिति पूर्व्वं वामाङ्गेन सुप्तस्याधुना दक्षिणाङ्गेन स्वापयेदित्यर्थः। तत्कालविशेषश्च पूर्व्वमेव निर्णीतोऽस्ति ॥५४५॥

दशाब्दिकं दशाब्दभगवदर्च्चनजं पुण्यम्, तस्यामर्च्चयित्वा लभेत् ॥५४९॥

---

अथ पार्श्वपरिवर्त्तनोत्सवः

वैष्णव, भाद्रमास की शुक्ला एकादशी तिथि में वैष्णववृन्द के सहित मिलित होकर, शयनोत्सव के समान प्रभु के कटिदानोत्सव सम्पन्न करें ॥५४३॥

भविष्योत्तर में वर्णित है—भाद्रमास समागत होने पर शुक्ला एकादशी तिथि में श्रीविष्णु को कटिदान करने से अर्थात् कोढ़नी प्रदान करने से महापातक विध्वंस होता है। भगवान् की प्रतिमा जलाशय के समीप में ले जाकर उनकी पूजा सम्यक् विधान से करके कर्णिका- कटि परिवर्त्तन की भावना करे। प्रथम वामाङ्ग में शयन कराया गया था, सम्प्रति दक्षिणाङ्ग में शयन करावे ॥५४४-५४५॥

अथ अभ्यर्थनमन्त्रः

हे देवदेव ! हे जगन्नाथ ! हे योगिगम्य ! हे निरञ्जन ! शुभ भाद्रमास में अद्य कटिदान कीजिये। तत् पश्चात् महापूजा करके वैष्णवों को सन्तुष्ट करे एवं प्रभु को निजमन्दिर में पूर्वविधि के अनुसार स्थापन करना चाहिये ॥५४६-५४७॥

अथ श्रवणद्वादशीव्रतम्

भाद्रमास की शुक्ला द्वादशी तिथि में श्रवणा नक्षत्र का योग होने से उपवासी रहकर नदी सङ्गम में स्नान करके श्रीवामनदेव की पूजा करनी चाहिये ॥५४८॥

अथ तन्माहात्म्यम्

भाद्रमास की शुक्लपक्षीया द्वादशी तिथि में श्रवणा नक्षत्र का योग होने से, उसको 'महाद्वादशी' कहते

फलं दत्त-हुतानाञ्च तस्यां लक्षगुणं भवेत् ॥५५०॥

स्कान्दे —

मासि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता । महती द्वादशी ज्ञेया उपवासे महाफला ॥५५१॥

सङ्गमे सरितः पुण्ये द्वादशीं तामुपोषित । आप्लवादेव चाप्नोति द्वादशद्वादशीफलम् ॥५५२

बुधश्रवणसंयुक्ता सैव चेद्द्वादशी भवेत् । अत्यन्तमहती तस्यां दत्तं भवति चाक्षयम् ॥५५३॥

अर्च्चयित्वाऽच्युतं भक्त्या लभेत् पुण्यं दशाब्दिकम् ।

फलं दत्तहुतानाञ्च तस्यां लक्षगुणं भवेत् ॥५५४॥

ब्रह्मवैवर्त्ते पितापुत्रसंवादे—

मासि भाद्रपदे शुक्लपक्षे यदि हरेर्दिने । बुधश्रवणसंयोगः प्राप्यते तत्र पूजितः ॥५५५॥

प्रयच्छति शुभान् कामान् वामनो मनसि स्थितान् ।

विजया नाम सा प्रोक्ता तिथिः प्रीतिकरी हरेः ॥५५६॥

सङ्गमे सर्व्वतीर्थानां सङ्गमस्तत्र जायते । शुक्ला भाद्रपदे स्वर्गं कृष्णा कलुषसंक्षयम् ॥५५७॥

फाल्गुने कुरुते मोक्षमपि ब्रह्मबधान्नृणाम् । महापुण्यप्रदा ह्येषा सङ्गमे विजया तिथिः ।

सर्व्वपापक्षयो नून जायते तदुपोषिणाम् ॥५५८॥

---

आप्लवात्—सङ्गम एव स्नानात् ॥५५२॥

भाद्रमासे शुक्ला श्रवणद्वादशी स्वर्गं कुरुते, फाल्गुने कृष्णा कलुषसंक्षयं कुरुते । पूज्य—पूजयित्वा ॥५५७-५६०

---

हैं । इस तिथि में उपवास करने पर महाफल लाभ होता है । उस दिन भक्ति पूर्वक अच्युत की पूजा करने से दश वर्ष कृत भगवत् पूजाजनित पुण्य लाभ होता है । उक्त तिथि में दान, होम, इत्यादि जिस किसी कार्य्य का अनुष्ठान किया जाता है, वह लक्षगुण फलद होता है ॥५४९-५५०॥

स्कन्द पुराण में लिखित है— भाद्रमासीय शुक्ला द्वादशी तिथि में श्रवणा का योग होने पर उसको 'महाद्वादशी' कहते हैं । उसमें उपवास करने से महाफल लाभ होता है । द्वादशी में उपवासी रहकर पवित्र नदी सङ्गम में स्नान करने से द्वादश द्वादशी का फल लाभ होता है । उक्त द्वादशी, बुधवार एवं श्रवणा नक्षत्र विशिष्टा होने से वह अत्यन्त महती तिथि नाम से कीर्त्तिता होती है । उस तिथि जो कुछ दान किया जाता है, वह अक्षयबान होता है, एवं उक्त तिथि में भक्तिपूर्वक श्रीहरि पूजा करने से दश वर्ष कृत पूजा का पुण्य फल लाभ होता है । एवं दान व होम करने से लक्षगुण फल होता है ॥५५१-५५४॥

ब्रह्मवैवर्त्त पुराण के पिता-पुत्र-संवाद में लिखित है—भाद्रमास की शुक्ला एकादशी में बुधवार एवं श्रवणा नक्षत्र होने से उस दिन श्रीवामनदेव की पूजा करने पर अभीप्सित शुभ कामना समूह को भगवान् परिपूर्ण कर देते हैं । उक्त तिथि विजया नाम से अभिहिता है । वह तिथि श्रीहरि की प्रीतिविधायिनी है । उस दिन नदी सङ्गम में सर्व तीर्थ का समागम होता है । भाद्रमास की श्रवणा नक्षत्रयुक्ता शुक्ला द्वादशी स्वर्गप्रदा एवं श्रवणा नक्षत्र संयुक्ता कृष्णा द्वादशी पापनाशिनी है । फाल्गुनी शुक्ला द्वादशी श्रवणा नक्षत्र संयुक्ता होने से उक्त तिथि, मानव समूह को ब्रह्म-हत्या जनित पातक से मुक्त करती है । यह विजया, तिथि सङ्गम में महापुण्य प्रदायिनी होती है । इस दिन उपवास करने से समस्त पापों से तत्काल मनुष्य मुक्त हो जाता है ॥५५५-५५८॥

किञ्च —

सर्व्वतीर्थानि भूपृष्ठे सङ्गमे यान्ति सङ्गमम् । विजयावासरे सर्व्वेदेवानां सङ्गमो भुवि ॥५५९
इदं सर्व्वपुराणेषु रहस्यं परिगीयते । सङ्गमे वामनं पूज्य प्रेतयोनौ न जायते ॥५६०॥

विष्णुधर्म्मोत्तरे श्रीपरशुराम उवाच—

उपवासासमर्थानां किं स्यादेकमुपोषितम् । महाफलं महादेव तन्ममाचक्ष्व सुव्रत ॥५६१॥

श्रीशङ्कर उवाच—

या रामश्रवणोपेता द्वादशी महती तु सा । तस्यामुपोषितः स्नातः पूजयित्वा जनार्द्दनम् ।
प्राप्नोत्ययत्नाद्धर्म्मज्ञ द्वादशद्वादशीफलम् ॥५६२॥

किञ्च—

श्रवणद्वादशीयोगे बुधवारो भवेद्यदि । अत्यन्तमहती राम द्वादशी सा प्रकीर्त्तिता ॥५६३॥
स्नानं जप्यं तथा होमो दानं श्राद्धं सुरार्च्चनम् । सर्व्वमक्षयमाप्नोति तस्यां भृगुकुलोद्वह ॥५६४
तस्मिन् दिने तथा स्नातो योऽपि क्वचन सङ्गमे ।
स गङ्गास्नानजं राम फलं प्राप्नोत्यसंशयम् ॥५६५॥
श्रवणे सङ्गमाः सर्व्वे परिपुष्टिप्रदाः सदा । विशेषाद्द्वादशीयुक्ते बुधयुक्ते विशेषतः ॥५६६॥

भविष्योत्तरे श्रीयुधिष्ठिर उवाच—

उपवासासमर्थानां सदैव पुरुषोत्तम । एका या द्वादशी पुण्या तां वदस्व ममानघ ॥५६७॥

---

उपोषितमुपोषणम् ॥५६१॥
परिपुष्टिप्रदाः—पुण्यातिशयकरा. ॥५६६॥

---

और भी वर्णित है—विजया वासर में धरातल में समस्त तीर्थों का समागम होता है, एवं उस दिन पृथिवी में अखिल देववृन्द समवेत होते हैं। इस दिन सङ्गम में वामनदेव की पूजा करने पर, पुनर्बार प्रेत-योनि में जन्म लेना नहीं पड़ता है। इस रहस्य का वर्णन समस्त पुराणों में है ॥५५९-५६०॥

विष्णुधर्मोत्तर में श्रीपरशुराम कहे हैं— हे महादेव ! हे सुव्रत ! जो उपवास करने में असमर्थ हैं, एक मात्र कैसे उपवास से वे महाफल प्राप्त कर सकते हैं, यह मेरे समीप में वर्णन कीजिये ॥५६१॥

महादेव ने कहा—हे भृगुराम ! श्रवणा नक्षत्र विशिष्टा द्वादशी महती नाम से विख्यात है। हे धर्मज्ञ ! उसमें उपवास, स्नान, एवं श्रीहरि की पूजा करने से बिना यत्न के द्वादश द्वादशी का फल लाभ होता है। ॥५६२॥

और भी कथित है—हे भृगुराम ! यदि श्रवणा द्वादशी में बुधवार का योग होता है, वह तिथि अत्यन्त महती कही जाती है। हे भृगुकुलोद्वह ! उस तिथि में स्नान, जप, होम, दान, श्राद्ध एवं देवपूजादि,–जो कुछ अनुष्ठित होते हैं, वह सब ही अक्षय होते हैं। हे राम ! इस तिथि में जिस किसी नदी के सङ्गम में स्नान करने पर, निःसन्देह गङ्गास्नान जनित पुण्य प्राप्त हो जाता है। श्रवणा नक्षत्र के योग में निखिल नदी सङ्गम ही सर्वदा पुण्यातिशयप्रद होता है ॥५६३-५६६॥

भविष्योत्तर में श्रीयुधिष्ठिर कहे थे— हे पुरुषोत्तम ! हे अनघ ! सर्वदा उपवासी होने में अक्षम होने पर उनके पक्ष में ऐसी पुण्य स्वरूप कौनसी एकमात्र द्वादशी करने की विधि है, वह मुझसे वर्णन कीजिये ॥५६७

श्रीकृष्ण उवाच—

मासि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता । सर्व्वकामप्रदा पुण्या उपवासे महाफला ॥५६८

सङ्गमे सरितां स्नात्वा गङ्गास्नानादिजं फलम् ।
सोपवासः समाप्नोति नात्र कार्य्या विचारणा ॥५६९॥

कञ्च—

बुधश्रवणसंयुक्ता सैव चेद्द्वादशी भवेत् । अतीव महती तस्यां सर्व्वं दत्तमिहाक्षयम् ॥५७०॥

किञ्च तत्रैव वणिगुपाख्याने—

श्रवणद्वादशीयोगे पूजयित्वा जनार्द्दनम् । दानञ्च दत्त्वा विप्रेभ्यः सोपवासो जितेन्द्रियः । ५७१

महानदीसङ्गमे च स्नात्वा दिष्टान्तमागतः । अवाप परमं स्थानं दुर्ल्लभं सर्व्वमानवैः ॥५७२

यत्र कामफला वृक्षा नद्यः पायसकर्द्दमाः । शीतलामलपानीयाः पुष्करिण्यो मनोहराः ॥५७३

तं देशमासाद्य वणिङ्महात्मा, सुमृष्टजाम्बूनदभूषिताङ्गः ।
कल्पं समग्रं सुरसुन्दरीभिः, साकं स रेमे मुदितः सदैव ॥५७४॥

किञ्चान्ते—

बुधश्रवणसंयुक्त-द्वादश्यां सङ्गमोदकम् । दानं बह्वोदनं शस्तमुपवासः परो विधिः ॥५७५॥

सगरेण ककुत्स्थेन धुन्धुमारेण गाधिना । एतैश्चान्यैश्च राजेन्द्र कामदा द्वादशी कृता ॥५७६॥

---

बहव ओदना यस्मिन् तत्, शस्तं मङ्गलम् ॥५७५॥

---

श्रीकृष्ण कहे थे—भाद्रमास की शुक्लपक्षीया द्वादशी में श्रवणा का योग होने से वह तिथि ही सर्व-कामदायिनी, एवं पुण्य स्वरूपिणी है। उसमें उपवासी होने से महाफल लाभ होता है उस तिथि में उपवास परायण व्यक्ति, नदी सङ्गम में स्नान करने पर गङ्गास्नान जनित फल लाभ कर सकते हैं। इसमें सन्देह नहीं है ॥५६८-५६९॥

और भी उक्त है—उस द्वादशी में बुधवार एवं श्रवणा नक्षत्र का योग होने से वह अतीव महती तिथि होती है। उस तिथि में दान करने पर, वह अक्षय होता है ॥५७०॥

उक्त स्थान के वणिक उपाख्यान में वर्णित है—एक जितेन्द्रिय वणिक श्रावणी द्वादशी योग में उपवासी होकर श्रीहरि की पूजा एवं विप्रवृन्द को दान देकर महानदी सङ्गम में स्नान पूर्वक देह त्याग किया था। उससे उसको लोक दुलभ परमपद लाभ हुआ था। एवं जहाँ वृक्षगण कल्पतरु के सदृश कामफल प्रदान करते हैं, पायस ही जहाँ नदीसमूह की कीचड़ (कर्दम) है, जहाँ मनोहर पुष्करिणी समूह शीतल विशुद्ध पानीय से परिपूर्ण हैं, उस महात्मा वणिक ने तादृश दिव्य स्नान प्राप्त कर समुद्भासित काञ्चनभूषण से भूषित होकर सर्वदा आनन्द से निखिल कल्प यावत् सुरनारीगण के सहित विहार किया था ॥५७१-५७४॥

इस प्रसङ्ग के अवशेष में और भी वर्णित है—उक्त द्वादशी में बुधवार एवं श्रवणा नक्षत्र का संयोग होने से नदी सङ्गम में जल एवं भूरिपरिमित अन्नदान, मङ्गलस्वरूप होता है, यह जानना चाहिये। किन्तु उक्त तिथि में उपवास करना ही परम विधि है। हे राजेन्द्र! सगर, ककुत्स्थ, धुन्धुमार एवं गाधि, यह सब नरपति एवं अन्यान्य व्यक्तिगण, कामदायिनी द्वादशी का व्रत साधन किये थे। भाद्रमास की शुक्ला द्वादशी

या द्वादशी बुधयुता श्रवणेन सार्द्धं, स्यात् सा जयेति कथिता मुनिभिर्नभस्ये।
तामादरेण समुपोष्य नरो हि सम्यक्, प्राप्नोति सिद्धिमणिमादिगुणोपपन्नः। ५७७॥इति।

अथ श्रवणद्वादशीव्रतनिर्णयः

द्वादश्येकादशी वा स्यादुपोष्या श्रवणान्विता। विष्णुशृङ्खलयोगश्च तत्त्रयं मिश्रितं यदि ॥५७८

अथ श्रवणद्वादश्युपवासः

श्रीमार्कण्डेयः—

श्रवणर्क्षसमायुक्ता द्वादशी यदि लभ्यते। उपोष्या द्वादशी तत्र त्रयोदश्यान्तु पारणम् ॥५७९

यमश्च—

यदा तु शुक्लद्वादश्यां नक्षत्रं श्रवणं भवेत्। तदाऽसौ तु महापुण्या द्वादशी विजया स्मृता ॥५८०
तत्र दानोपवासाद्यमक्षयं परिकीर्त्तितम्। एकादश्या विशुद्धत्वे द्वादश्यान्तु परेऽहनि।
श्रवणे सति शक्तस्य व्रतयुग्मं विधीयते ॥५८१॥

---

नभस्ये भाद्रे, सिद्धिं मोक्षं श्रीवैकुण्ठलोकं वा ॥५७७॥

द्वादशीति—श्रवणनक्षत्रयुक्ता यदि द्वादशी स्यात्, तदा शक्तैरशक्तैश्च सर्व्वैरेव द्वादश्येवोपोष्या; यदि वैकादशी श्रवणान्विता स्याद्द्वादश्यां श्रवणं नास्ति, तदा सर्व्वैरेकादश्येवोपोष्या; यदि च तिथिक्षयात्तत्त्रयं द्वादश्येकादशीश्रवणश्च मिश्रितमेकस्मिन्नेव दिने अन्योऽन्यमिलितं स्यात्तदा विष्णुशृङ्खलो नाम योगः। विष्णुदैवत्यानां त्रयाणामेव तेषामेकत्र शृङ्खलावत् ग्रथितत्वात् ततश्च स एवोपोष्य इत्यर्थः। तत्तद्विशेषश्चोदाहरिष्यमाणवचनतोऽग्रे व्यक्तो भावी ॥५७८॥

---

में बुधवार एवं श्रवणा नक्षत्र का योग होने से उसको 'जया' कहते हैं। उक्त जया तिथि में मानव, यत्नपूर्वक उपवासी होने पर अणिमादि गुणयुक्त होकर सिद्धि अर्थात वैकुण्ठपद को प्राप्त कर सकते हैं।।५७५-७७

अथ श्रवणद्वादशीव्रतनिर्णयः

द्वादशी अथवा एकादशी तिथि में श्रवणानक्षत्र का योग होने पर उसमें उपवास करना चाहिये। तीनों का एकत्र अर्थात् एक दिन में मिलन होने पर "विष्णुशृङ्खल योग" कहते हैं। अर्थात् तिथि क्षय होने से द्वादशी एकादशी एवं श्रवणा नक्षत्र का योग एक दिन में शृङ्खलावत् अन्योन्य मिलित होकर होने से वह विष्णु शृङ्खल योग होता है। द्वादशी में श्रवणा का योग होने पर-समर्थ-असमर्थ व्यक्ति के पक्ष में इस द्वादशी में उपवास करना चाहिये। एकादशी में श्रवणा नक्षत्र का योग होने पर और द्वादशी में श्रवणा का योग न होने पर, समर्थ-असमर्थ सबको एकादशी में उपवास करना चाहिये। तिथि क्षय के कारण एकदिन में ही द्वादशी, एकादशी और श्रवण नक्षत्र होने पर, उसको 'विष्णु शृङ्खला योग' कहते हैं। कारण, विष्णु ही इन तीनों के देवता कहे गये हैं। अतएव इन तीनों के एकत्र शृङ्खलावत् ग्रथित होने के कारण 'विष्णु शृङ्खला योग' होता है ॥५७८॥

अथ श्रवणद्वादश्युपवासः

श्रीमार्कण्डेय ने कहा है—द्वादशी तिथि में श्रवणा नक्षत्र का योग होने से उस तिथि में उपवास करके त्रयोदशी में पारण करना चाहिये। ५७९।

यमोक्ति इस प्रकार है—शुक्लपक्ष की द्वादशी में श्रवण नक्षत्र का योग होने से वह द्वादशी महापुण्यस्वरूपिणी विजया नाम से कथित होती है। उस तिथि में दान वा उपवासादि अनुष्ठित होने से वे सब अक्षय होते हैं। पूर्वदिन एकादशी शुद्ध होकर परदिन द्वादशी में श्रवणा होने से दोनों व्रतों का करना उचित है ॥५८०-५८१॥

किञ्च—

असमाप्ते व्रते पूर्व्वे नैवकुर्य्याद्व्रतान्तरम् । इत्यादि वचनस्यात्र बाधक वं न विद्यते ।।५८२।।

तथाहि भविष्योत्तरे—

एकादशीमुपोष्यैव द्वादशीं समुपोषयेत् ।
न चात्र विधिलोपः स्यादुभयोर्देवता हरिः ।।५८३।। इति ।

अशक्तस्तु व्रतद्वन्द्वे भुङ्क्ते वैकादशी-दिने । उपवासं बुधः कुर्य्याच्छ्रवणद्वादशीदिने ।।५८४।।

तथा च नारदीये—

उपोष्य द्वादशीं पुण्यां विष्णुऋक्षेण संयुताम् । एकादश्युद्भवं पुण्यं नरः प्राप्नोत्यसंशयम् ।।५८५

वाजपेये यथा यज्ञे कर्म्महीनोऽपि दीक्षितः ।
सर्व्वं फलमवाप्नोति अस्नातोऽप्यहुतोऽपि सन् ।।५८६।।
एवमेकादशीं त्यक्त्वा द्वादश्यां समुपोषणात् ।
पूर्व्ववासरजं पुण्यं सर्व्वं प्राप्नोत्यसंशयम् ।।५८७।। इति ।

अत्यल्पोऽप्यनयोर्योगो भवेत्तिथिभयोर्यदि । उपादेयः स एव स्यादित्यत्रोपवसेद्बुधः ।।५८८।।

तथा च श्रवणद्वादशीं प्रकृत्य तत्रैवोक्तम्—

तिथिनक्षत्रयोर्योगे योगश्चैव नराधिप । द्विकलो यदि लभ्येत स ज्ञेयो ह्यष्टयामिकः ।।५८९।।

---

न चैवं शुद्धैकादशीत्यागेन दोषः स्यादितिलिखति—उपोष्येति त्रिभिः । विष्णुऋक्षेण श्रवणेन । केचिच्चेदमुपवासद्वये प्राप्ते सत्यसमर्थविषयकमिति व्यवस्थापयन्ति । तदयुक्तं, वैष्णवानां द्वादश्यां श्रवणयोगे महाद्वादशीत्वेन तत्रोपवासात् । तथा नारदीयादिवचनेष्वत्र शक्ताशक्तादिविशेषपरित्यागेन नर इत्यादि-सामान्यनिर्द्देशाच्च ।।५८५।।

---

और भी वर्णित है—पूर्व व्रत सम्पूर्ण न होने से अन्यव्रताचरण करना उचित नहीं है। इत्यादि जो वचन है, यहाँ उनकी बाधकता नहीं होगी। अर्थात् वह वचन श्रवण द्वादशी का बाधक नहीं है ।।५८२।।

कारण, भविष्योतर में लिखित है--एकादशी में उपवासी होकर भी द्वादशी में उपवास करना चाहिये इसमें विधिहानि नहीं होती है। क्योंकि उभय तिथि के देवता श्रीहरि ही हैं। यदि दोनों उपवास करने में असमर्थ हो, तो, एकादशी में भोजन कर श्रवण द्वादशी में उपवासी रहना चाहिये ।।५८३-५८४।।

श्रवण महाद्वादशी के अनुरोध से शुद्धा एकादशी को परित्याग कर द्वादशी में व्रत करने पर दोष नहीं होता है, उसको कहते हैं। नारदीय में कथित है—मानव, श्रवणान्विता द्वादशी में उपवास करने पर एकादश्युपवास जनित फल प्राप्त कर सकते हैं, इसमें सन्देह नहीं है। जिस प्रकार वाजपेय यज्ञ में दीक्षित होने पर स्नान होम न करके भी कर्महीन व्यक्ति को समस्त फल मिलता है। उस प्रकार एकादशी वर्जन पूर्वक, द्वादशी में उपवास करने पर एकादश्युपवास जनित समस्त पुण्य लाभ होता है। इसमें सन्देह नहीं है ।।५८५-५८७।।

तिथि एवं नक्षत्र का योग अत्यल्पकाल होने से भी वह प्रशस्त है, उसमें ही उपवास करना अत्यावश्यक है ।।५८८।।

अतएव श्रवण द्वादश को लक्ष्य करके उक्त पुराण में कथित है—हे नराधिप ! तिथि नक्षत्र के योग में दो कलामात्र योग उपस्थित होने पर उसको "अष्टयामिक" अहोरात्र व्यापी जानना चाहिये ।।५८९।।

तथैव मात्स्ये—

द्वादशी श्रवणायुक्ता कृत्स्ना पुण्यतमा तिथिः। न तु सा तेन युक्ता च तावत्येव प्रशस्यते ॥५६०

अथ श्रवणानक्षत्रयुक्तैकादश्युपवासः

नारदीये—

यदि न प्राप्यते ऋक्षं द्वादश्यां वैष्णवं क्वचित्।
एकादशी तदोपोष्या पापघ्नी श्रवणान्विता ॥५६१॥

उभयोर्देवता विष्णुः पुराणः पुरुषोत्तमः। विभेदोऽत्र न कर्त्तव्यो विभेदात् पतते नरः ॥५६२॥

अतएव भविष्योत्तरे—

एकादशी यदा च स्यात् श्रवणेन समन्विता।
विजया सा तिथिः प्रोक्ता भक्तानां विजयप्रदा ॥५६३॥

विष्णुपुराणे—

याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रयोगतः।
तास्वेव तद्व्रतं कुर्य्याच्छ्रवणद्वादशीं विना ॥५६४॥ इति ।

---

वैष्णवमृक्षं श्रवणं क्वचिदिति रात्र्यादौ कस्मिंश्चित् समयेऽपीत्यर्थः। अतएवोक्तं मात्स्ये—'द्वादशी श्रवण-स्पृष्टा' इति, नारदीये चैतत्प्रकरण एव। तिथिनक्षत्रयोगानां योगश्चैव नराधिप। द्विकलो यदि लभ्येत स ज्ञेयो ह्यष्टयामिकः॥' इति ॥५६१॥

याः काश्चिदिति—येन केनचिन्नक्षत्रविशेषयोगेन याः काश्चित्तिथयः पुण्याः प्रोक्ताः, तासु यद्विहितं व्रतं, तत्तास्वेव कुर्य्यात्, न तिथ्यन्तरे तत्तन्नक्षत्रयुक्ते। यथा फाल्गुनी शुक्ला द्वादशी पुष्यर्क्षेण युक्ता गोविन्दद्वादशी नाम, तस्यामुपवासव्रतं विहितं, तस्यामेव कुर्य्यान्न च पुष्यान्वितायामेकादश्याम्, एवं नियमश्च श्रवणद्वादशीं विना श्रवणद्वादशीव्रतन्तु श्रवणैकादश्यामपि भवतीत्यर्थः ॥५६४॥

---

मत्स्यपुराण में भी लिखित है—श्रवणायुक्ता द्वादशी ही महापुण्यतमा तिथि कही गई है। किन्तु सबही द्वादशी श्रवण नक्षत्रयुक्ता होने से ऐसी होगी,—यह नहीं है। यथाविधि योग होने से ही उस प्रकार प्रशस्त होगी ॥५६०॥

अथ श्रवणानक्षत्रयुक्तैकादश्युपवासः

नारदीयपुराण में लिखित है—द्वादशी की रात्रि आदि किसी समय में ही श्रवणा नक्षत्र का योग न होने पर श्रवणान्विता एकादशी में उपवास करना चाहिये। पुराणपुरुष श्रीहरि एकादशी एवं द्वादशी,—तिथिद्वय के ही देवता हैं। इसमें भेद ज्ञान करना उचित नहीं है। भेद ज्ञान करने पर नरक में पतित होना पड़ेगा ॥५६१-५६२॥

अतएव भविष्योत्तर में लिखित है—एकादशी श्रवणा नक्षत्रयुक्ता होने पर उस एकादशी को 'विजया' कहते हैं। यह तिथि भक्तवृन्द के पक्ष में विजयदात्री है ॥५६३॥

विष्णुपुराण में लिखित है—जो कोई तिथि नक्षत्र के योग से 'पुण्य पवित्र' कही गई है, श्रवण द्वादशी के बिना उन सब तिथियों में व्रत करना चाहिये। नक्षत्र योग में जो सब द्वादशी कही गई है, उसमें ही व्रत करना उचित है। किन्तु श्रवण द्वादशी में ऐसा नहीं है। कारण, श्रवण द्वादशी का व्रत-श्रवण नक्षत्रयुक्त एकादशी में भी होता है ॥५६४॥

एकादश्युपवासे च द्वादश्यां कृष्णमर्च्चयेत् । प्रादुर्भूतो हि भगवान् द्वादश्यामेव वामनः ॥५९५

तथा च मत्स्यपुराणे—

उपोष्यैकादशीं तत्र द्वादश्यां पूजयेद्धरिम् ॥५९६॥ इति ।

अतो यदि न लभ्येत मध्याह्ने द्वादशी तदा ।

द्वादशीमध्य एवाच्चर्यो वामनस्तर्हि सूरिभिः ॥५९७॥ इति ।

अथ श्रीविष्णुश्रृङ्खलयोगः

मात्स्ये —

द्वादशीश्रवणस्पृष्टा स्पृशेदेकादशीं यदा । स एष वैष्णवो योगो विष्णुश्रृङ्खलसंज्ञितः ॥५९८॥

तस्मिन्नुपोष्य विधिवन्नरः संक्षीणकल्मषः । प्राप्नोत्वनुत्तमां सिद्धि पुनरावृत्तिदुर्लभाम् ॥५९९ इति ।

एकादशीपदेनात्र तदहोरात्र उच्यते । अन्यथा द्वादशीस्पर्शस्तस्यां नित्यं हि विद्यते ॥६००॥

तिथिनक्षत्रयोर्योग इत्याद्यं यत्तु दर्शितम् । तेनाल्पकालसंयोगेऽप्यष्टयामिकतेष्यते ॥६०१॥

अत्रैव द्वादशीमध्ये पारणं श्रवणेऽधिके । वक्ष्यमाणञ्च घटतेऽन्यथा प्राग्वद्द्विधा व्रतम् ॥६०२

द्वादशी श्रवणर्क्षञ्चेत्यस्मिन् पाठे भवेदिदम् । द्वादशीश्रवणस्पृष्टेत्यस्मिंश्च स्पृष्टता खलु ।

तत्तत्साहित्यमेवाह पूर्व्वस्मादेव हेतुतः ॥६०३॥

---

ननु तर्हि भगवतो वामनस्याच्चर्चनमपि तथैव प्रसज्येत नेति लिखति—एकेति । कृष्णं श्रीवामनरूपमवतारत्वेनाभेदात्, हि यतः भगवान् श्रीकृष्णो द्वादश्यामेव वामनरूपेण जातः । तथा चाष्टमस्कन्धे (१८।५)—'श्रोणायां श्रवण-द्वादश्यां मुहूर्त्तेऽभिजिति प्रभुः' इत्यादि । श्रोणायां श्रवणस्थचन्द्र इत्यर्थः ॥५९५॥

---

एकादशी में उपवास होने पर द्वादशी में ही वामनदेव की पूजा करनी चाहिये । कारण, द्वादशी में ही भगवान् वामनदेव आविर्भूत हुए थे ॥५९५॥

मत्स्यपुराण में कथित है—एकादशी में उपवास रहकर द्वादशी में श्रीहरि की पूजा करनी चाहिये ॥५९६

सुतरां मध्याह्नकाल में द्वादशी की प्राप्ति न होने से द्वादशी के मध्य में ही श्रीवामनदेव की पूजा करनी चाहिये ॥५९७॥

अथ श्रीविष्णुश्रृङ्खलयोगः

मत्स्य पुराण में लिखित है—श्रवण स्पृष्टा द्वादशी–श्रवणनक्षत्रयुक्ता द्वादशी, एकादशी को स्पर्श करने पर उस वैष्णव योग को 'विष्णु श्रृङ्खलयोग' कहते हैं । यही प्रथम विष्णु श्रृङ्खल योग है । उस दिन विधि पूर्वक उपवास करने से सब पातकों से उत्तीर्ण होकर अपुनर्भव परमासिद्धि प्राप्त करता है, अर्थात् उपवासी व्यक्ति को पुनर्वार संसार में शरीर ग्रहण नहीं करना पड़ता है ॥५९८-५९९॥

यहाँ पर एकादशी शब्द से एकादशी की दिन रात अहोरात्र को जाननी चाहिये । अर्थात् एकादशी अल्प परिमाण में होने पर भी वह अष्टप्रहरात्मक कही गई है । नहीं तो एकादशी में द्वादशी का स्पर्श नित्य ही दिखाई देता है । यहाँ पर जो तिथि नक्षत्र के योगादि का विषय प्रदर्शित हुआ है, यह अल्पकाल मात्र होने पर भी अष्टयामिकत्व रूप, अर्थात् आठ प्रहर व्यापित्व गृहीत होता है । इस विष्णु श्रृङ्खल योग में श्रवण नक्षत्र का आधिक्य होने पर द्वादशी में ही पारण करना चाहिये । ऐसे होने पर आगे लिखी हुई पारण विधि की भी सङ्गति होती है । नहीं तो पूर्ववत् दो व्रत करने पड़ते हैं । "द्वादशी श्रवणर्क्षञ्च" मत्स्य

अथ तस्मादयन्तु तत्रैव विशेषः,
द्वितीयविष्णुशृङ्खलयोगः

यथा विष्णुधर्मोत्तरे—

**एकादशी द्वादशी च वैष्णव्यमपि तद्भवेत् । तद्विष्णुशृङ्खलं नाम विष्णुसायुज्यकृद्भवेत् ।**
**तस्मिन्नुपोषणाद्गच्छेच्छ्वेतद्वीपपुरं ध्रुवम् ॥६०४॥**

**द्वादश्यामुपवासोऽत्र त्रयोदश्यान्तु पारणम् । निषिद्धमपि कर्त्तव्यमित्याज्ञा पारमेश्वरी ॥६०५॥**

इति ।

**योगोऽयमन्यो द्वादश्याः क्षय एवेति लक्ष्यते । द्वादश्यामुपवासाच्च त्रयोदश्याञ्च पारणात् ।**
**त्रयोदश्यां पारणं हि श्रवणेऽपि निषेत्स्यते ॥६०६॥**

---

निषिद्धमपीति—'एकादशीमुपोष्यैव द्वादश्यां पारणं स्मृतम् । त्रयोदश्यां न तत् कुर्य्याद्द्वादशद्वादशी-क्षयात् ॥' इत्यादिमत्स्यपुराणादिवचनैस्त्रयोदश्यां पारणनिषेधात् । एतच्च स्थूलदृष्ट्या वैष्णवेतर-विषयक-व्यवस्थापेक्षया चेति ज्ञेयम् । अत्रैव श्रवणर्क्षेत्यादिना त्रयोदश्यामेव श्रीमार्कण्डेयादिभिः पारणोक्तेः, तथा प्रायो वैष्णवानां द्वादश्युपवासेन सर्व्वत्र त्रयोदश्यामेव पारणापत्तेः । अत एवं व्याख्येयम्—श्रीविष्णुसायुज्याद्यपेक्षया सर्व्वकर्माद्यनादरेण निषिद्धमपि कर्त्तुमुचितमित्येषा च परमेश्वरस्याज्ञैव, द्वादशीवल्लभस्य भगवतो द्वादशीव्रतप्रियत्वात् । अतएव सर्व्वत्र वैष्णवानां द्वादशीव्रतग्रहणादि श्रूयत इति दिक् ॥६०५॥

---

पुराणीय वचनस्थ "द्वादशी स्पृष्टा" के स्थान में पाठ से उक्तार्थ सुस्पष्ट हुआ है । अर्थात् श्रवणा नक्षत्र ही शृङ्खलावत् एकादशी एवं द्वादशी को अवलम्बन कर स्थित होने से ही प्रथम विष्णुशृङ्खल योग होगा । 'द्वादशी श्रवण स्पृष्टा' कथन से सुस्पष्ट प्रतीत होती है कि, श्रवणा द्वादशी को स्पर्श करके ही एकादशी को स्पर्श करेगी तभी प्रथम विष्णुशृङ्खल योग होगा । "श्रवण द्वादशी व्रत निर्णय प्रसङ्ग में उक्त है—"द्वादश्येकादशी वा स्यादुपोष्या श्रवणान्विता । विष्णुशृङ्खलयोगश्च तत्त्रयं मिश्रितं यदि ॥" अहोरात्र में एकादशी श्रवणा द्वादशी का मिश्रण होने से ही प्रथम विष्णुशृङ्खल योग होगा । इस हेतु को अवलम्बन करके 'द्वादशी श्रवणस्पृष्टा' इस पाठ में भी 'स्पृष्टता' शब्द से उसी साहित्य अर्थात् एकादशी दिन में श्रवणा एवं द्वादशी का स्पर्श को ही कहा गया है ।६००-६०३॥

अथ तस्मादयन्तु तत्रैव विशेषः,
द्वितीयविष्णुशृङ्खलयोगः

अतएव उक्त विष्णुशृङ्खला योग में ही वक्ष्यमाण विशेष विधि है । जिसका वर्णन विष्णुधर्मोत्तर में इस प्रकार है—एक दिन में एकादशी, द्वादशी, एवं श्रवणानक्षत्र,–यह तीन उपस्थित होने पर उसको भी 'विष्णुशृङ्खल' कहते हैं । उसके द्वारा श्रीविष्णु सायुज्य की प्राप्ति होती है । उक्त विष्णुशृङ्खल योग में उपवास करने से निश्चय ही श्वेत द्वीप में जन्म होता है । उस विष्णुशृङ्खल योग में अर्थात् द्वादशी तिथि में उपवास करके त्रयोदशी में पारण करना पड़ता है । यद्यपि त्रयोदशी में पारण करना निषिद्ध है, तथापि श्रीभगवदादेश निबन्धन महाद्वादशी रूप वैष्णव व्रत में त्रयोदशी में पारण करना अनुचित नहीं है ॥६०४-६०५॥

द्वादशी तिथि में उपवास करके त्रयोदशी तिथि में पारण करने के कारण, द्वादशी के क्षय में यह द्वितीय विष्णुशृङ्खल योग हुआ है । किन्तु एकादशी संयुक्ता श्रवणा में जो व्रत होता है, उसमें त्रयोदशी में पारण करना निषिद्ध है ॥६०६॥

अथ विष्णुश्रृङ्खल एव विशेषान्तरम्

द्वादश्येकादशी सौम्यः श्रवणश्च चतुष्टयम् । देवदुन्दुभियोगोऽयं यज्ञायुतफलप्रदः ।।६०७।। इति।

पारणाहे तु द्वादश्याः श्रवणायाश्च वृद्धितः । रात्रौ तु पारणाभावाद्युक्तं कर्त्तुं व्रतद्वयम् ।।६०८

न चात्र विधिलोपः स्यादुभयोर्देवता हरिः ।।६०९।।

द्वादश्यामुपवासोऽत्र त्रयोदश्यान्तु पारणम् ।।६१०।।

दिनद्वयेऽपि श्रवणाभावे तद्योगहानितः । एकादश्यामुपोष्यैव द्वादश्यां वामनं यजेत् ।।६११।।

विष्णुश्रृङ्खलकेऽपि स्याद्वृत्तिर्निशि परत्र चेत् ।
यदाधिक्यं तिथिभयोः शक्तः कुर्य्याद्व्रतद्वयम् ।।६१२।।
पारणाया अनौचित्यं तावत्यां निशि चेद्भवेत् ।
अशक्तस्तूत्तरं कुर्य्याद्योगस्यैवास्य गौरवात् ।।६१३।।

---

पारणाहे व्रतपारणादिने द्वादश्याः श्रवणायाश्च वृद्धौ सत्यां शक्तश्चेत् तर्हि व्रतद्वयं कुर्य्यात् ।।६०८।।

ननु पारणान्तं व्रतं ज्ञेयं व्रतान्ते द्विजभोजनम् । असमाप्ते व्रते पूर्व्वे नैव कुर्य्याद्व्रतान्तरम् ।।' इति विष्णुधर्म्मोत्तरोक्तेरपारणे दोषः स्यात, तत्राह—न चात्रेति । उभयोः एकादशी-द्वादश्योः ।।६०९।।

एवमसमर्थो व्रतमेकमेव कुर्य्यादित्यायातं, तत्र च 'श्रवणेन सिता यत्र द्वादशी लभ्यते क्वचित् । उपोष्यैकादशीं तत्र द्वादश्यामर्च्चयेद्धरिम् ।।' इत्यादि-श्रीयमाद्युक्तेरशक्तस्यैकादश्यामेवोपवासशङ्का स्यात, अतो लिखति—द्वादश्यामिति । वैष्णवेष्वष्टमहाद्वादशीव्रतस्य नित्यत्वात् । तच्च पूर्व्वमेव तत्रैव लिखितमस्ति ।।६१०

ननु यथा जन्माष्टम्यां रोहिण्यादि-योगाभावेप्युपवासः, तथात्र श्रवणयोगाभावेऽपि श्रीवामनदेवप्रादुर्भावापेक्षया समर्थेनोपवासद्वयपक्षे द्वादश्यामुपवासः कर्त्तव्यो न वेत्याशङ्क्य लिखति—दिनेति । तस्य द्वादश्यां श्रवणयोगस्य हानित अभावात् । यतस्तद्योगापेक्षयैवात्र द्वादश्यामुपवास-विधानमिति दिक् । यजेत् पूजयेत् ।।६११।।

---

अथ विष्णुश्रृङ्खल एवं विशेषान्तरम्

एक दिन में एकादशी, द्वादशी, सौम्य, अर्थात् बुधवार एवं श्रवणानक्षत्र,–यह चतुष्टय योग होने पर उसको 'देवदुन्दुभि योग' कहते हैं । वह दश सहस्र यज्ञ का फल प्रद न करता है ।।६०७।।

यदि पारण दिन में द्वादशी एवं श्रवणानक्षत्र की वृद्धि होती है, एवं वह रात्रि व्यापिनी होती है, तो, रात्रिकाल में पारण की निषिद्धता वशतः व्रतद्वय करना ही समर्थ व्यक्ति को उचित है । भगवान् श्रीहरि हा उभय तिथि के देवता हैं । सुतरां व्रतद्वय के पालन से विधिलोप होने की सम्भावना नहीं है । उसमें द्वादशी में उपवास करके त्रयोदशी में पारण करना पड़ता है । किन्तु त्रयोदशी के दिन भी श्रवण नक्षत्र में पारण न करे । एकादशी एवं द्वादशी, उभय दिन में श्रवणा की अप्राप्ति होने पर उक्त योग हानि निबन्धन एकादशी में उपवासी होकर द्वादशी में वामनदेव की पूजा करनी चाहिये ।।६०८-६११।।

विष्णुश्रृङ्खल योग में परदिन रात्रि पर्य्यन्त तिथि नक्षत्र आधिक्य होने पर तिथिद्वय में उपवास करना समर्थ व्यक्ति के पक्ष में कर्त्तव्य है । निशाभाग में पारण करना निषिद्ध है । सुतरां योग के गौरव हेतु द्वादशी में व्रत करके व्रत के परदिन पारण करना ही अक्षम व्यक्ति के पक्ष में कर्त्तव्य है ।।६१२-६१३।।

अथ तत्र पारणकालनिर्णयः

स च व्रतविकल्पे द्वितीये विष्णुश्रृङ्खले च स्पष्ट एव, केवलश्रवणनिष्कर्षे तु न तदादरः; 'तिथि-नक्षत्रसंयोगे' ।।६१४।। इत्यादि-वक्ष्यमाणेभ्यः।

प्रथमविष्णुश्रृङ्खले पारणनिर्णयः

अनुवृत्तिर्द्वयोरेव पारणाहे भवेद्यदि। तत्राधिक्ये तिथेर्वृत्ते भान्ते सत्येव पारणम् ।।६१५।।

यदुक्तं नारदीये—

तिथिनक्षत्रयोर्योगे उपवासो भवेद्यदा। पारणन्तु न कर्त्तव्यं यावन्नैकस्य संक्षयः ।।६१६।।इति।

ऋक्षस्य सति चाधिक्ये तिथिमध्ये हि पारणम्। द्वादशीलङ्घने दोषो बहुशो लिखितो यतः।।६१७

तथा चोक्तम्—

तिथिनक्षत्रसंयोगे उपवासो यदा भवेत्। तावदेव न भोक्तव्यं यावन्नैकस्य संक्षयः ।।६१८।।

विशेषेण महीपाल श्रवणं वर्द्धते यदि। तिथिक्षयेण भोक्तव्यं द्वादशीं नैव लङ्घयेत् ।।६१९।।इति।

एवं द्वयोर्निशाव्याप्तौ चाह्नि पारणमीरितम्। न रात्रौ पारणं कुर्य्यादिति ह्यन्यत्र सम्मतम् ।।६२०

---

द्वयोस्तिथ्यक्षयोः द्वादशीश्रवणयोः पारणाहे अनुवृत्तिः वृद्धिक्रमेणागमः। तिथेर्द्वादश्या आधिक्ये वृद्धौ वृत्ते सति भान्ते श्रवणान्ते पारणम्। एतच्च विष्णुश्रृङ्खलयोगापेक्षया पूर्व्वदिनोपवासाभिप्रायेणेत्यूह्यम् ।।६१५।।

ऋक्षस्य श्रवणनक्षत्रस्याधिक्ये द्वादशीतो वृद्धौ सत्यामपि द्वादशीमध्य एव पारणं स्यात्; अत्र न ऋक्षान्तोऽपेक्षणीय इत्यर्थः। ननु ऋक्षान्ते पारणं कुर्य्यादित्युक्तं, तत्र लिखति—द्वादशीति। लिखितः पूर्व्वं द्वादशीपारणनिर्णये ।।६१७।।

तावदिति तिथिनक्षत्रसंयोगं यावन्न भोक्तव्यं, एकवियोगेन पारणं कर्त्तव्यं, तत्र च द्वादश्यां सत्यां तस्यामेव पारणं, न तु तदतिक्रमेणेत्यर्थः ।।६१८।।

---

अथ तत्र पारणकालनिर्णयः

अनन्तर विष्णुश्रृङ्खल योग का पारण का वर्णन करते हैं—व्रत विकल्प के कारण, द्वितीय विष्णुश्रृङ्खल योग में पारण काल सुस्पष्ट प्रकाशित हुआ है। अर्थात् द्वादशी में उपवास करके त्रयोदशी में पारण करना चाहिये। केवल श्रवणा नक्षत्र का निष्क्रमण होने पर व्रत में उसका आदर नहीं है। क्योंकि 'तिथि नक्षत्र संयोगे' इत्यादि वचन से ज्ञात होता है कि द्वादशी तिथि के सहित श्रवणा नक्षत्र का योग होने से व्रत विषय में वह आदरणीय है, किन्तु द्वादशी को छोड़कर केवल श्रवणा की वृद्धि होने से व्रत विषय में वह आदरणीय नहीं है ।।६१४।।

प्रथमविष्णुश्रृङ्खले पारणनिर्णयः

प्रथम विष्णुश्रृङ्खल योग—पारण दिन में द्वादशी एवं श्रवणा नक्षत्र, दोनों की वृद्धि अर्थात् उभय की अनुवृत्ति का आधिक्य होने पर तिथि के आधिक्य स्थल में नक्षत्र के अन्त में पारण करना चाहिये ।।६१५।।

इस विषय में नारदीय में उक्त है—तिथि नक्षत्र के योग में उपवास होने पर जब तक एक का क्षय नहीं होता है तब तक पारण न करे ।।६१६।।

नक्षत्र का आधिक्य होने पर तिथिमध्य में ही पारण करना चाहिये। कारण, द्वादशी लङ्घन कभी न करे। द्वादशी लङ्घन करने पर विविध दोष होते हैं ।।६१७।।

तद्विषय में उक्त है—जिस समय तिथि एवं नक्षत्र के योग से व्रत होता है, उस समय, तिथि एवं नक्षत्र उभय के मध्य में एक का अवसान न होने से भोजन नहीं करना चाहिये। विशेषतः हे राजन्! यदि

यतो रात्रावृक्षलब्धावपि द्वादश्यतिक्रमः । अतः कृतं पौनरुक्त्यं द्वादशीं नैव लङ्घयेत् ॥६२१
एवकारेण च पुनस्तदेव निरधारि यत् । द्वादश्यनादरो नातः कार्य्यो भस्य तु स स्मृतः ॥६२२

तथा च स्कान्दे—

याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रयोगतः ।
ऋक्षान्ते पारणं कुर्य्याद्विना श्रवण-रोहिणीम् ॥६२३॥ इति ।

यतो रात्रिगतो द्वादश्यंशो नात्र विचार्य्यते । अतो वर्द्धत इत्याह पारणासमयात्ययम् ॥६२४
त्रयोदश्यां पारणन्तु नैतद्विषयमिष्यते । त्रयोदश्यामपीत्येतदनुक्तेर्द्विधा ततः ॥६२५॥

प्रत्युतात्र तु-शब्देन तस्यैकध्यं प्रदर्शितम् ।
पर्य्यवस्येदतो युक्त्या द्वादशीक्षय एव तत् ॥६२६॥
तथापि सन्दिहानश्चेद्गृह्णीयाच्चरणामृतम् ।
पारणायाः परं सम्यक् पूरकं तद्धवेद्यतः ॥६२७॥

गौतमीये तु स्फुटमेवोक्तम्—

यदृक्षं वा तिथिर्वापि रात्रिं व्याप्य व्यवस्थिता ।
दिवसे पारणं कुर्य्यादन्यथा पतनं भवेत् ॥६२८॥ इति ।

---

श्रवणा नक्षत्र की वृद्धि होती है तो तिथि क्षय होने पर ही पारण करे । किन्तु द्वादशी का लङ्घन कभी भी न करे । इस प्रकार तिथि एवं नक्षत्र की वृद्धि रात्रिकाल पर्य्यन्त होने से दिन में ही पारण करना विहित है । रात्रि में पारण करना निषिद्ध है । इसका कथन अन्यत्र भी हुआ है । कारण, द्वादशी को अतिक्रम करके रात्रिकाल में नक्षत्र होने से भी उसका आदर न करे । कारण, द्वादशी लङ्घन कभी भी न करे । मूल श्लोक में भी 'एव' शब्द प्रयोग के द्वारा निर्धारित हुआ है, कभी भी द्वादशी का अनादर न करे । अतएव यहाँ पर नक्षत्र का अनादर करना सङ्गत है ॥६१८-६२२॥

तद्विषय में स्कन्दपुराण में लिखित है—जो सब तिथि नक्षत्र के योग से पुण्य कही गई हैं, वहाँ श्रवणा एवं रोहिणी नक्षत्र को छोड़कर अर्थात् अन्य, पुष्या एवं पुनर्वसु नक्षत्र के क्षय में पारण करे । अर्थात् रोहिणी और श्रवणा नक्षत्र में वह व्यवस्था नहीं है । वहाँ नक्षत्र में ही पारण करना चाहिये ।६२३॥

कारण यहाँ पर रात्रिगत द्वादशी के अंश का विचार नहीं करना पड़ता है । तज्जन्य 'अतोवर्धते' कथन से पारण समप अत्यय-अर्थात् पारण समय का अतिक्रमण को ही कहा गया है ॥६२४॥

बुधगण, विष्णुशृङ्खल योग में त्रयोदशी में पारण करने के पक्ष में मत प्रकाश नहीं करते हैं । किन्तु दो दिन पारण की व्यवस्था नहीं हो सकती है । प्रत्युत 'तु' शब्द के द्वारा पारण का काल एक प्रकार ही निश्चित हुआ है, अतएव द्वादशी के क्षय में ही यह पारण घटित होता है, अर्थात् द्वादशी के अन्त में उक्त विधि पर्य्यवसित हुई है, अतएव द्वादशी के शेष रूप त्रयोदशी में पारण करना विहित है । तथापि सन्देह उत्पन्न होने पर द्वादशी में श्रीचरणामृत ग्रहण करे । कारण, चरणामृत पान करने से पारण सम्पूर्ण होता है ॥६२५-६२७॥

गौतमीय तन्त्र में स्पष्ट ही उक्त है—नक्षत्र एवं तिथि रात्रि व्यापिनी होने पर दिन में ही पारण करना चाहिये । अन्यथा पतन होता है ॥६२८॥

अथ श्रीवामनव्रतविधिः

नत्वा गुरुमनुज्ञाप्य पश्चान्नियममाचरेत् । न हि सिध्येद्गुरोर्भक्तिं नियमञ्च विना फलम् ॥६२९

तत्र नियममन्त्रः

एकादश्यां निराहारः स्थित्वा चैवापरेऽहनि । भोक्ष्ये श्रीवामनानन्त शरणागतवत्सल ॥६३०
इति ।

एकादश्या रजन्यां वा द्वादश्यां चार्च्चयेत् प्रभुम् ॥६३१॥

स्वर्णरूप्यमये पात्रे ताम्रवंशमयेऽपि वा । कुण्डिकां स्थापयेत् पार्श्वे छत्रिकापादुकास्तथा ।
शुभाञ्च वैणवीं यष्टिमक्षसूत्रं पवित्रकम् ॥६३२॥

पुष्पैर्गन्धैः फलैर्धूपैर्वामनं चार्च्चयेद्धरिम् । नानाविधैश्च नैवेद्यैर्भक्ष्यभोज्यैर्गुड़ौदनैः ।
जागरं निशि कुर्व्वीत गीतवाद्यादिनर्त्तनैः ॥६३३॥

एवमाराध्य देवेशं प्रभाते विमले सति । आदावर्घ्यं प्रदातव्यं पश्चाद्देवं प्रपूजयेत् ।
नारिकेलेन शुभ्रेण दद्यादर्घ्यञ्च पूर्व्ववत् ॥६३४॥

---

गुरुमिति— निजगुरुर्यदि सन्निहितः स्यात्तर्हि तं, तदभावे आचार्य्यत्वेन वृतं विप्रमेकम् । पश्चादिति— 'आदौ गुरुगृहे गत्वा पश्चान्नियममाचरेत् । शिरस्तत्पादयोः कृत्वा पादौ स्पृष्ट्वा च मौलिना । कृताञ्जलिपुटो भूत्वा प्रार्थयित्वा गुरुन्ततः ॥' इति स्कान्दे जयन्तीव्रतप्रसङ्गोक्तेः । नियमं सङ्कल्पादिकं, तथा च तत्रैव— 'नियमात् फलमाप्नोति न श्रेयो नियमं विना' इति ॥६२९-६३०॥

एकादश्या रजन्यामिति द्वादशीक्षयाभिप्रायेण, कदाचिच्च स्वल्पायां वृद्धायामपि तस्यां पारणापेक्षयेति दिक् ॥६३१॥

स्वर्णमये रूप्यमये ताम्रमये वंशमये पूर्व्वपूर्व्वाभावे उत्तरोत्तरस्मिन्निति ज्ञेयम् । अत्र कुम्भस्थापनादिकं सर्व्वं पूर्व्वलिखितविजयादि-व्रतानुसारेण द्रष्टव्यमेव । अत्र च क्वचिद्विशेष एव किञ्चिदनुवादपूर्व्वकं लिखितमिति ज्ञेयम् ॥६३२॥

गुड़ौदनैर्गुड़पाचितौदनैर्मिष्टान्नैर्वा ॥६३३॥

पूर्व्ववदिति पुष्पादि-सहितेन शङ्खनिहितेनेत्यर्थः ॥६३४॥

---

अथ श्रीवामनव्रतविधिः

श्रीगुरुदेव को प्रणाम पूर्वक तदीय आदेश ग्रहण करके नियम ग्रहण करना चाहिये । कारण, गुरुभक्ति एवं तत्प्रदत्त नियम ग्रहण व्यतीत फल सिद्धि की आशा नहीं है ॥६२९॥

तत्र नियममन्त्रः

हे श्रीवामन ! हे अनन्त ! हे शरणागत वत्सल ! मैं एकादशी में उपवास करके परदिन (अगले दिन) भोजन करूँगा ॥६३०॥

द्वादशी का क्षय होने पर एकादशी की रात्रि में वा परदिन द्वादशी में श्रीवामनदेव की पूजा करे । स्वर्ण, रौप्य, ताम्र वा वंश,–इनमें से जिस किसी एक के द्वारा पात्र निर्माण करके कुण्ड स्थापन करे, एवं पार्श्व भाग में छत्र, पादुका, उत्कृष्ट वेणुदण्ड, जपमाला एवं उपवीत स्थापन करे । पुष्प, गन्ध, फल, धूप, दीप, विविध नैवेद्य, भक्ष्य, भोज्य, गुड़, ओदन, अर्थात् सिद्धान्त इत्यादि द्वारा श्रीवामनदेव की पूजा एवं गीत, वाद्य, नृत्य परायण होकर रात्रि जागरण करे । पूर्ववत् श्वेत नारिकेल के द्वारा अर्घ्य प्रदान करना चाहिये ॥६३१-६३४॥

अथ अर्घ्यदानमन्त्रः

वामनाय नमस्तुभ्यं क्रान्तत्रिभुवनाय च । गृहाणार्घ्यं मया दत्तं वामनाय नमोऽस्तु ते ।
वामनाय अर्घ्यं नमः ॥६३५॥

मत्स्यं कूर्म्मं वराहञ्च नरसिंहञ्च वामनम् । रामं रामञ्च कृष्णञ्च क्रमाद्द्वौ बुद्धकल्किनौ ॥६३६

पादयोर्जानुनोर्गुह्ये नाभ्यामुरसि कक्षयोः । भुजयोर्मूद्‌ध्नि सर्व्वाङ्गेष्वर्च्चयेदायुधानि च ॥६३७

महापूजान्तः कृत्वा गो-महीं काञ्चनादिकम् ।
शक्त्याचार्य्याय दातव्यं ब्राह्मणेभ्यश्च मन्त्रतः ॥६३८॥

ब्राह्मणश्चापि मन्त्रेण प्रतिगृह्णाति मन्त्रवित् । ददाति मन्त्रतो ह्येव दाता भक्तिसमन्वित ॥६३९

तत्र दानमन्त्रः

वामनो बुद्धिदो दाता द्रव्यस्थो वामनः स्वयम् ।
वामनश्च प्रतिग्राही तेन मे वामने रतिः ॥६४०॥

प्रतिग्रहमन्त्रः

वामनः प्रतिगृह्णाति वामनोऽपि ददाति च । वामनस्तारको द्वाभ्यां तेनेदं वामने नमः ॥६४१
इति ।

---

मन्त्रविशेषे पूजाविशेषं लिखति—मत्स्यमिति द्वाभ्याम् । मत्स्यादीन् पादद्वयादिष्वङ्गेषु क्रमादर्च्चयेत । तत्र बुद्धकल्किनौ द्वौ सर्व्वाङ्गेष्वेवकत्रैव पूजयेदिति बोद्धव्यम्, पार्थक्येन नरकलिखनात् । अतएव समस्तत्वेन तौ लिखितौ तथा द्वाविति च । कस्यचिन्मते च रामद्वयमेकत्र । एवमादिर्विविधोऽर्च्चाविधिः, तत्र यथा-सम्प्रदायमनुसर्त्तव्यः । प्रयोगः—'ॐ मत्स्याय नमः पादयोः' इत्यादि मन्त्राश्चेत्तत एव पूर्व्ववज्ज्ञेयम् । आयुधानि च पूजयेत्—'ॐ सर्व्वेभ्य आयुधेभ्यो नमः' इति ॥६३६-६३७॥

ब्राह्मणेभ्यश्च दातव्यम् ॥६३८॥ ब्राह्मणोऽत्राचार्य्योऽन्वेष्यः । द्वाभ्यां—द्वयोर्दातृ-प्रतिग्राहिणोः ॥६३९-६४१॥

---

अथ अर्घ्यदानमन्त्रः

हे प्रभो ! आपने वामन रूप धारण करके त्रिभुवन को आक्रमण किया है । आप मत्प्रदत्त यह अर्घ्य ग्रहण कीजिये । वामन मूर्त्ति रूपी आपको प्रणाम करता हूँ । इस प्रकार मन्त्र पाठ पूर्वक 'वामनाय अर्घ्यं नमः' कहकर अर्घ्य प्रदान करना चाहिये ॥६३५॥

अनन्तर पदद्वय में मत्स्य की, जानुद्वय में कूर्म्म की, गुह्य में वराह की, नाभि में नरसिंह की, वक्षःस्थल में वामन की, कक्षद्वय में राम की, भुजद्वय में राम की, मस्तक में कृष्ण की, एवं सर्वाङ्ग में बुद्ध तथा कल्की की पूजा करे । प्रयोग इस प्रकार है,–'ॐ मत्स्याय नमः पादयोः' इत्यादि । 'ॐ सर्वेभ्य आयुधेभ्यो नमः' कहकर अस्त्र समूह की पूजा करे । अनन्तर महापूजा सम्पन्न करके निज शक्त्यनुसार आचार्य्य को एवं ब्राह्मणवृन्द को, गो, भूमि, सुवर्णादि दान करे । मन्त्रवित् ब्राह्मण भी देय पदार्थ को मन्त्रोच्चारण पूर्वक करें । एवं दाता भी मन्त्रोच्चारण पूर्वक देय पदार्थ प्रदान करे ॥६३३-६३९॥

तत्र दानमन्त्रः

वामनदेव ही बुद्धिद, वामनदेव ही दाता, वामनदेव ही स्वयं द्रव्यरूपी एवं वामनदेव ही प्रतिग्राही हैं । सुतरां उन्हीं देव में मेरी प्रीति हो ॥६४०॥

प्रतिग्रहमन्त्रः

वामनदेव प्रतिग्रह कर रहे हैं, वामनदेव ही दान कर रहे हैं । वामनदेव ही दाता एवं प्रतिग्रहीता इन दोनों के उद्धार कर्त्ता हैं । सुतरां वामनदेव को प्रणाम करता हूँ ॥६४१॥

एवं कृत्वा विधानेन भोजनं पृषदाज्यकम् ।
पूर्व्वं दद्याद्ब्राह्मणेभ्यः पश्चाद्भुञ्जीत बन्धुभिः ॥६४२॥ इति ।
यद्वामनपुराणे च यद्भविष्योत्तरे व्रतम् । वामनस्योदितं तस्यानुसाराल्लिखितं त्विदम् ॥६४३

ब्रह्मवैवर्त्ते—

गृहीत्वा नियमं प्रातर्गत्वा नद्योश्च सङ्गमे । सौवर्णं वामनं कृत्वा सौवर्णमाषकेण वा ॥६४४॥
यथाशक्त्याथ वित्तस्य कुम्भोपरि जगत्पतिम् । स्वर्णपात्रे स्नापयित्वा मन्त्रैरेतैश्च पूजयेत् ।६४५

तत्र वामनपूजामन्त्रः

ॐ वामनाय नमः पादौ कटिं दामोदराय च । ऊरू श्रीपतये गुह्यं कामदेवाय पूजयेत् ।६४६
पूजयेज्जगतां पत्युरुदरं विश्वधारिणे । हृदयं योगनाथाय कण्ठं श्रीपतये नमः ॥६४७॥
मुखञ्च पङ्कजाक्षाय शिरः सर्व्वात्मने नमः । इत्थं सम्पूज्य वासोभिराच्छाद्य च जगद्गुरुम् ।
दद्यात् सुश्रद्धया चार्घ्यं नारिकेलादिभिः फलैः ॥६४८॥

तत्र अर्घ्यदानमन्त्रः

ॐ नमो नमस्ते गोविन्द बुधश्रवणसंज्ञक । अघौघसंक्षयं कृत्वा प्रेतमोक्षप्रदो भव ॥६४९॥ इति ।

---

पृषदाज्यकं—दधिमिश्रं घृतम् ॥६४२॥

वामनपुराणे प्रेतेन श्रवणद्वादशीव्रतमुक्तं, भविष्योत्तरे च स्वयंभगवता श्रीयुधिष्ठिरं प्रति वामनव्रतं श्रवण-द्वादशीव्रतञ्च पृथङ्निरूपितम् । तदनुसारतश्च वामनस्य व्रतमिदं लिखितम्, अतोऽत्र ग्रन्थैकमात्रदृष्ट्याऽनादरो न कार्य्य इति भावः ॥६४३॥

---

उक्त रीति से यथाविधि अनुष्ठान करके दधि संयुक्त घृत भोजन करना पड़ता है । किन्तु सर्वप्रथम ब्राह्मणवृन्द को भोजन कराना चाहिये । पश्चात् बन्धुगण के सहित स्वयं भोजन करे ॥६४२॥

वामनपुराण एवं भविष्योत्तर पुराण में जो वामन व्रत लिखित है, तदनुसार यह व्रत लिखित हुआ ॥६४३

ब्रह्मवैवर्त्त पुराण में लिखित है—प्रत्यूष में नदी के सङ्गम में गमन करके सङ्कल्प पूर्वक एक मासे सुवर्ण द्वारा अथवा निज शक्ति के अनुसार जगत्पति वामनदेव की मूर्त्ति प्रस्तुत करे एवं उनकी मूर्त्ति की पूजा कुम्भोपरि सुवर्णपात्र में स्नान कराकर वक्ष्यमाण मन्त्र समूह के द्वारा करे ॥६४४-६४५॥

तत्र वामनपूजामन्त्रः

पाद युगल में ॐ वामनाय नमः, कटि में ॐ दामोदराय नमः, ऊरुद्वय में ॐ श्रीपतये नमः, गुह्य में ॐ कामदेवाय नमः, उदर में विश्वधारिणे नमः, हृदय में ॐ योगनाथाय नमः, कण्ठ में ॐ श्रीपतये नमः, मुखे ॐ पङ्कजाक्षाय नमः, मस्तक में ॐ सर्वात्मने नमः, कहकर पूजा करनी चाहिये । इस प्रकार जगत्पति भगवान् की पूजा करके जगद्गुरु को वसनाच्छादित करके श्रद्धा सहित नारिकेलादि फलसमूह द्वारा अर्घ्य प्रदान करे ॥६४६-६४८॥

तत्र अर्घ्यदानमन्त्रः

हे गोविन्द ! हे बुध श्रवण संज्ञक ! मेरे पापों को क्षय करके परलोक में मोक्ष प्रदायक हूजिये । सप्रणव इस मन्त्र से अर्घ्य अर्पण करना चाहिये ॥६४९॥

छत्रोपानहगोदानं दद्यादत्र कमण्डलुम् । विशेषेण द्विजाग्रयाय वामनः प्रीयतामिति ॥६५०॥
यथाशक्त्या च दानानि द्विजाग्रेभ्यः प्रदापयेत् । कुर्य्याज्जागरणं रात्रौ गीतशास्त्रसमन्वितम् ॥६५१
श्रद्धया परया युक्तो निशामनिमिषेक्षणः । प्रभाते भोजयेद्विप्रान् द्वादश्यां पारणं ततः ॥६५२॥
कुर्य्यात् स्वयं श्रद्धया तत् सर्व्वं सफलतां व्रजेत् ॥६५३॥

तन्माहात्म्यम्

तत्रैव—

एवं कृते तु कालेय व्रतेऽस्मिन् विजयादिने । न दुल्लभतरं किञ्चिदिहलोकेऽथवा परे ॥६५४॥
फलमस्य व्रतस्योक्तं दत्त्वा पित्रोर्नरोत्तमः । वंशोद्धारकरो मुक्तिं याति पैत्र्यादृणादपि ॥६५५
न पावनतरं किञ्चिदतः परमिहोच्यते । विजयाव्रततुल्यश्च न परं परिपठ्यते ॥६५६॥

भविष्योत्तरे च—

समाप्ते तु व्रते तस्मिन् यत् पुण्यं तन्निबोध मे । चतुर्युगानि राजेन्द्र सप्तसप्तति-संख्यया ॥६५७॥
प्राप्य विष्णुपुरं राजन् क्रीड़ते कालमक्षयम् । इहागत्य भवेद्राजा प्रतिपक्षभयङ्करः ॥६५८॥
हस्त्यश्वरथयानानां दाता भोक्ता विमत्सरः । रूपसौभाग्यसम्पन्नो दीर्घायुर्नीरुजो भवेत् ॥६५६
पुत्रपौत्रैः परिवृतो जीवेच्च शरदां शतम् ॥६६०॥

अथाश्विनकृत्यम्

आश्विनस्य सिते पक्षे दशम्यां विजयोत्सवः । कर्त्तव्यो वैष्णवैः सार्द्धं सर्व्वत्र विजयार्थिना ॥६६१

---

सर्व्वत्र अस्मिन् लोके परस्मिंश्च, विजयार्थिना उत्कर्षेच्छुना ॥६६१॥

---

"वामनदेव प्रसन्न हों" यह कहकर वेदविद् ब्राह्मणवृन्द को छत्र, पादुका, गो, एवं कमण्डलु दान करे एवं अन्यान्य द्विजवृन्द को यथाशक्ति दान करे। अनन्तर रात्रि में महाश्रद्धालु होकर गीत वाद्य के सहित अनिमेष नयनों से जागरण करे। तत्पश्चात् प्रातःकाल में विप्रवृन्द को भोजन कराकर द्वादशी के मध्य में ही पारण करे। यह सब कर्म श्रद्धा सहित अनुष्ठित होने पर अवश्य ही सफल होते हैं ॥६५०-६५३॥

तन्माहात्म्यम्

उक्त पुराण में उक्त है— हे कालेय ! विजयाव्रत के दिन में इस प्रकार अनुष्ठान करने पर, उस व्रती के पक्ष में इह काल पर काल में कुछ भी दुष्प्राप्य नहीं होता है। जो मानव, माता पिता के उद्देश्य में यह व्रत फल अर्पण करते हैं वे कुलोद्धारक होकर पितृऋण से उत्तीर्ण होते हैं। अपर कोई भी व्रत इस विजया व्रत की अपेक्षा पवित्रतर नहीं है। अपर कोई भी व्रत इसके तुल्य श्रेष्ठ नाम से अभिहित नहीं है ।।६५४-५६

भविष्योत्तर में लिखित है— हे राजेन्द्र ! यह व्रत समाप्त होने से जो पुण्य लाभ होता है, उसका वर्णन करता हूँ, श्रवण करो। इस व्रतकारी व्यक्ति, श्रीहरिधाम में जाकर सप्त सप्तति चतुर्युग रूप अक्षयकाल वहाँ विहार करके वहाँ से इस जगत् में आकर शत्रुभयङ्कर नृपति पद में प्रतिष्ठित होता है। जो इस व्रत का अनुष्ठान करते हैं, वे अश्व, गज, रथ एवं यानादि का दाता, भोक्ता, निर्मत्सर, रूपवान्, सौभाग्यान्वित, दीर्घायुः, नीरोग एवं पुत्र पौत्रवान् होकर शतवर्ष जीवित रहते हैं ॥६५७-६६०॥

अथाश्विनकृत्यम्

आश्विनमासीया शुक्ल दशमी तिथि में वैष्णववृन्द के सहित मिलित होकर विजयोत्सव करना विजयाभिलाषी व्यक्ति के पक्ष में कर्त्तव्य है ॥६६१॥

अथ विजयोत्सवविधिः

रथमारोप्य देवेशं सर्व्वालङ्कारशोभितम् । सासितूणधनुर्व्वाणपाणिं नक्तञ्चरान्तकम् ।।६६२।।
स्वलीलया जगत्त्रातुमाविर्भूतं रघूद्वहम् । राजोपचारैः श्रीरामं शमीवृक्षतलं नयेत् ।।६६३।।
सीताकान्तं शमीयुक्तं भक्तानामभयङ्करम् । अर्च्चयित्वा शमीवृक्षमर्च्चयेद्विजयाप्तये ।।६६४।।

अथ तन्मन्त्रः

शमी शमयते पापं शमी लोहितकण्टका । धरित्र्यर्ज्जुनवाणानां रामस्य प्रियवादिनी ।।६६५।।
करिष्यमाणा या यात्रा यथाकालं सुखं मया । तत्र निर्व्विघ्नकर्त्री त्वं भव श्रीरामपूजिते ।।६६६
इति ।।

गृहीत्वा साक्षतामार्द्रां शमीमूलगतां मृदम् । गीतवादित्रनिर्घोषैस्ततो देवं गृहे नयेत् ।।६६७।।
कैश्चिदृक्षैस्तत्र भाव्यं कैश्चिद्भाव्यश्च वानरैः । कैश्चिद्रक्तमुखैर्भाव्यं कोशलेन्द्रस्य तुष्टये ।।६६८।।
निर्ज्जिता राक्षसा दैत्या वैरिणो जगतीतले । रामराज्यं रामराज्यं रामराज्यमिति ध्रुवन् ।।६६९

आनीय स्थापयेद्देवं निजसिंहासने सुखम् । ततो नीराज्य देवेशं प्रणमेद्दण्डवद्भुवि ।
महाप्रसादवस्त्रादि धारयेद्वैष्णवैः सह ।।६७०।।
इति श्रीविष्णुधर्म्मोक्तानुसारेण व्यलेख्ययम् ।
विधिः श्रीरामविजयोत्सवस्योत्सवकृत सताम् ।।६७१।।
सीता दृष्टेति हनूमद्वाक्यं श्रुत्वाऽकरोत् प्रभुः ।
विजयं वानरैः सार्द्धं वासरेऽस्मिन् शमीतलात् ।।६७२।।

इति श्री गोपालभट्ट-विलिखिते श्रीमद्भगवद्भक्तिविलासे दिव्याविर्भावो नाम पञ्चदशो विलासः ।

---

ऋक्षादिभिर्भाव्यमिति तच्चेष्टादिकमनुसर्त्तव्यमित्यर्थः ।।६६२।।
श्रीरामविजयोत्सवस्य विधिः, उत्सवकृदानन्दजनकः ।।६७१।।
तस्मिन् दिने शमीवृक्षतले तत्पूजादिकारणं लिखति—सीतेति ।।६७२।।

इति पञ्चदशो विलासः ।।

---

अथ विजयोत्सवविधिः

लीलावश से जगत् त्राण हेतु रघुवंश में आविर्भूत देवेश्वर, सर्वाभरण भूषित, असि तूण धनुर्वाणधारी, रक्षःकुल नाशक रामचन्द्र को राजोपचार से रथ में स्थापन करके शमीवृक्ष के नीचे ले जाय, फिर भक्तवृन्द के अभयद, शमीयुक्त सीताकान्त की पूजा करके विजय प्राप्त होने के निमित्त शमीतरु की पूजा करे ।।६६४

अथ तन्मन्त्रः

शमी पाप हरण करते हैं, शमी लोहित कण्टकपूर्णा, शमी अर्जुन वाणसमूह के चारित्री एवं राम के प्रियवादी हैं । मैं यथाकाल सुख से यात्रा करूँगा, हे श्रीराम पूजिते ! आप मेरे सम्बन्ध में निर्विघ्नकारी होओ ।।६६६।।

अनन्तर शमीवृक्ष मूलस्थ आर्द्र मृत्तिका अक्षत के सहित ग्रहण करके गीत-वाद्य सहित प्रभु को भवन में ले जाना चाहिये । कोई कोई व्यक्ति इस समय रघुवर की प्रसन्नता हेतु भल्लुक, एवं कोई कोई व्यक्ति

लोहित मुख वानर की चिन्ता करते हैं, अर्थात् वानरों के पूर्वकृत तत्तत् कर्मादि की भावना करते हैं। पुनर्वार पृथिवी में राक्षस, दैत्य एवं शत्रुसमूह दमित होगये हैं. एवं रामराज्य, रामराज्य, रामराज्य, इस प्रकार वाक्य उच्चारण करते करते रघुवर की प्रतिमा को लाकर तदीय सिंहासन में सुखपूर्वक स्थापन करे। तदनन्तर नीराजन करके दण्डवत् पतित होकर प्रभु को प्रणाम करके वैष्णवों के सहित महाप्रसाद वसनादि धारण करे। श्रीरामचन्द्र का यह विजयोत्सव विधि विष्णुधर्म में वर्णित के अनुसार वर्णित की गई है। इसके द्वारा साधुवृन्द को हर्षोत्पन्न होता है। "मैंने सीता का दर्शन किया है" हनूमान् का यह वाक्य सुनकर उसी दिन श्रीराम, वानरवृन्द के सहित मिलित होकर शमीतरु के मूल में विजयोत्सव किये थे ॥६६७-६७२॥

इति श्रीगोपालभट्ट-विलिखिते श्रीमद्भगवद्भक्तिविलासे दिव्याविर्भावो नाम पञ्चदशो विलासः।

---

# षोड़श-विलासः

## अथ कार्त्तिककृत्यम्

दामोदरं प्रपद्येऽहं श्रीराधारमणं प्रभुम्। प्रभावाद्यस्य तत्प्रेष्ठः कार्त्तिकः सेवितो भवेत् ॥१॥
भाति कार्त्तिककृत्यादि स्कान्द-पाद्मादिसु स्फुटम्। तथाप्येकत्र संगृह्य सारतोऽत्र विलिख्यते ॥२
कार्त्तिकेऽस्मिन् विशेषेण नित्यं कुर्व्वीत वैष्णवः। दामोदरार्च्चनं प्रातः स्नानदानव्रतादिकम् ॥३
तथा दिनविशेषे यद्भगवत्पूजनादिकम्। कुर्य्याद्विधिविशेषेण लेख्यमग्रे विविच्य तत् ॥४॥

---

श्रीभगवत्प्रियतमकार्त्तिकमासकृत्यं लिखन् तदधिष्ठातृदेवं श्रीराधिकासहितं श्रीदामोदरं शरणं याति—दामोदरमिति। सेवितः कृत्यलिखनादिद्वारा ॥१॥

तत्कृत्यादिकञ्च सर्व्वत्रैव प्रसिद्धमिति लिखति—भातीति। आदि शब्दात् तन्माहात्म्यादि। ननु तर्हि किमत्र तल्लिखनेन? तत्र लिखति--तथापीति। सारत इति—तत्र तत्र विविधकर्म्ममिश्रितं साधारणञ्च वर्त्तते, अत्र च केवलं तदेव विशिष्टं लेख्यमिति ॥२॥

तत्रादौ कार्त्तिककृत्यनियमनित्यतां लिखिष्यन् तदर्थं संक्षेपेण तत्र नित्यकृत्यं दिनविशेषकृत्यञ्च लिखति कार्त्तिक इति द्वाभ्याम्। आदि-शब्देन दीपदान-रात्रिशेषजागरणादि, तच्च सर्व्वं सविशेषमग्रे व्यक्तं भावि ॥३

तथेति समुच्चये। दिनविशेषे कृष्णाष्टम्यादौ, आदि-शब्देन स्नानादि ॥४॥

---

### अथ कार्त्तिककृत्यम्

मैं श्रीराधारमण प्रभु दामोदर की शरण ग्रहण करता हूँ, जिनके प्रभाव से तत्प्रेष्ठ कार्त्तिक मास सेवित होगा ॥१॥

स्कन्द पुराण एवं पद्मपुराणादि में कार्त्तिक कृत्यादि का वर्णन सुस्पष्ट रूप से उपलब्ध होने पर भी मैं एकत्र सार संग्रह पूर्वक उसको यहाँ प्रकाशित करता हूँ ॥२॥

इस कार्त्तिक मास में विशेष रूप से नित्य दामोदर की पूजा, प्रातःस्नान, दान, एवं व्रतादि क्रिया का अनुष्ठान करना वैष्णवों का कर्त्तव्य है ॥३॥

इस मास में दिन विशेष में विशेष प्रकार से श्रीभगवदर्च्चनादि का अनुष्ठान करना कर्त्तव्य है, उसका वर्णन विशेष विवेचना पूर्वक अग्रिम ग्रन्थ में करेंगे ॥४॥

अथ कार्त्तिक-व्रत-नित्यता

स्कान्दे ब्रह्मनारद-संवादे—

दुष्प्राप्यं प्राप्य मानुष्यं कार्त्तिकोक्तं चरेन्न हि । धर्म्मं धर्म्मभृतां श्रेष्ठ स मातृपितृघातकः ॥५॥
अव्रतेन क्षिपेद्यस्तु मासं दामोदरप्रियम् । तिर्य्यग्योनिमवाप्नोति सर्व्वधर्म्मवहिष्कृतः ॥६॥
स ब्रह्महा स गोघ्नश्च स्वर्णस्तेयी सदानृती । न करोति मुनिश्रेष्ठ यो नरः कार्त्तिके व्रतम् ॥७
विधवा च विशेषेण व्रतं यदि न कार्त्तिके । करोति मुनिशार्द्दूल नरकं याति सा ध्रुवम् ॥८
व्रतन्तु कार्त्तिके मासे यदा न कुरुते गृही । इष्टापूर्त्तं वृथा तस्य यावदाहूतनारकी ॥९॥

सम्प्राप्ते कार्त्तिके मासे द्विजो व्रतपराङ्मुखः ।
भवन्ति विमुखाः सर्व्वे तस्य देवाः सवासराः ॥१०॥
इष्ट्वा च बहुभिर्यज्ञैः कृत्वा श्राद्धशतानि च ।
स्वर्गं नाप्नोति विप्रेन्द्र अकृत्वा कार्त्तिके व्रतम् ॥११॥

यतिश्च विधवा चैव विशेषेण वनाश्रमी । कार्त्तिके नरकं यान्ति अकृत्वा वैष्णवं व्रतम् ॥१२

---

कार्त्तिके उक्तं कृत्यत्वेनाभिमतं धर्म्मं व्रतादिकं यो नाचरेत्, अव्रतेन व्रतं विना, व्रतं चात्रानुदयस्नानादि-नियमः किञ्चिद्भक्ष्यत्यागरूपानियमो वा; तत्र च सदानुदयस्नानादिपराणामन्यमासतोऽत्र कश्चित्तत्तद्विशेषो भैक्ष्याहारिणां तत्र तत्रोक्तानां यतिप्रभृतीनां नामसङ्कीर्त्तनादिनियमविशेषो ज्ञेय इति दिक् ॥५-६॥

अनृती—मिथ्यावादी ॥७॥

वैष्णवमिति, स्वरूपनिर्द्देशः, सर्व्वस्यापि कार्त्तिकव्रतस्य विष्णुपरत्वात् ॥१२॥

---

अथ कार्त्तिक-व्रत-नित्यता

स्कन्द पुराण के ब्रह्म-नारद-संवाद में लिखित है—हे धार्मिकवर ! दुर्ल्लभ मानव शरीर प्राप्त करके जो व्यक्ति कार्त्तिकोक्त धर्माचरण नहीं करता है, उसको पितृ-मातृ बधजनित पातक में लिप्त होना पड़ता है। किसी प्रकार व्रतादि आचरण न करके दामोदर प्रिय कार्त्तिक मास अतिवाहित करने से सर्व धर्म वहिष्कृत होकर तिर्य्यक् योनि ग्रहण करनी पड़ती है ॥५-६॥

हे मुनिश्रेष्ठ ! कार्त्तिक मास में व्रत न करने पर ब्रह्मघाती, गो-घाती, स्वर्णस्तेयी, एवं सवंदा मिथ्या-भाषी रूप में परिगणित होना पड़ता है ॥७॥

हे मुनिशार्दूल ! विशेषतः विधवा होकर कार्त्तिक मास में व्रतानुष्ठान न करने पर निश्चय नरक गमन होता है ॥८॥

गृहस्थ होकर कार्त्तिक व्रत पालन न करने से इष्टापूर्त्त क्रिया निष्फल होती है। एवं उस व्यक्ति को महाप्रलय यावत् नरक में निवास करना पड़ता है ॥९॥

द्विज होकर कार्त्तिक व्रत पराङ्मुख होने पर इन्द्र प्रभृति देववृन्द उसके प्रति पराङ्मुख होते हैं ॥१०॥

हे विप्रेन्द्र ! कार्त्तिकमासीय व्रत वर्जन पूर्वक असंख्य यज्ञ एवं शत-शत श्राद्धानुष्ठान करने पर भी स्वर्ग लाभ की आशा नहीं है। यति, विधवा, विशेषकर वानप्रस्थाश्रमी व्यक्ति, कार्त्तिक मास में वैष्णव व्रत न करे तो उनको नरक गमन करना पड़ता है ॥११-१२॥

वेदैरधीतैः किन्तस्य पुराणपठनैश्च किम् ? कृतं यदि न विप्रेन्द्र कार्त्तिके वैष्णवं व्रतम् ।।१३

जन्मप्रभृति यत् पुण्यं विधिवत् समुपार्ज्जितम् । भस्मीभवति तत्सर्व्वमकृत्वा कार्त्तिकव्रतम् ।।१४

यद्दत्तञ्च परं जप्तं कृतञ्च सुमहत्तपः । सर्व्वं विफलतामेति अकृत्वा कार्त्तिके व्रतम् ।।१५।।

सप्तजन्मार्ज्जितं पुण्यं वृथा भवति नारद । अकृत्वा कार्त्तिके मासि वैष्णवं व्रतमुत्तमम् ।।१६।।

पापभूतास्तु ते ज्ञेया लोके मर्त्त्या महामुने । वैष्णवाख्यं व्रतं यैस्तु न कृतं कार्त्तिके शुभम् ।।१७

किञ्च—

अकृत्वा नियमं विष्णोः कार्त्तिकं यः क्षिपेन्नरः ।
जन्मार्ज्जितस्य पुण्यस्य फलं नाप्नोति नारद ।।१८।।

किञ्च—

नियमेन विना चैव यो नयेत् कार्त्तिकं मुने । चातुर्म्मास्यं तथा चैव ब्रह्महा स कुलाधमः ।।१९

किञ्च—

पिण्डदानं पितॄणाञ्च पितृपक्षे न वै कृतम् । व्रतं न कार्त्तिके मासि श्रावण्यामृषितर्पणम् ।।२०

चैत्रे नान्दोलितो विष्णुर्माघस्नानं न सज्जले । न कृतामर्द्दकी पुष्ये श्रावणे रौहिणाष्टमी ।।२१

सङ्गमे न कृता येन द्वादशी श्रवणान्विता । कुत्र यास्यन्ति ते मूढ़ा नाहं वेद्मि कलिप्रिय ।।२२

---

तथा चातुर्म्मास्यमिति चातुर्म्मास्यव्रतस्यापि नित्यत्वं दर्शयित्वा दृष्टान्तत्वेनात्रोदाहृतमिति । एवमग्रेऽपि ।।१९।।

आमर्द्दकी—आमर्द्दकीव्रतम्; एवमग्रेऽपि ।।२१।।

---

हे विप्रेन्द्र ! कार्त्तिक मास में वैष्णव व्रत न करने पर, वेदाध्ययन वा पुराण पठन से क्या फल है ? कार्त्तिक व्रत न करने से विधानानुसार आजन्म सञ्चित यावतीय पुण्य भस्मीभूत होते हैं । कार्त्तिक मास में व्रत न करने से तत्कृत दान, जप एवं सुमहत्तपः समस्त ही निष्फल होते हैं ।।१३-१५।।

हे नारद ! कार्त्तिक मास में उत्कृष्ट वैष्णव व्रत न करने से उसका सप्त-जन्मार्जित पुण्य व्यर्थ होता है । हे महामुने ! कार्त्तिकमास में पवित्र वैष्णव व्रत न करने से संसार में वह व्यक्ति पापिष्ठ में परिगणित होता है ।।१६-१७।।

और भी कथित है— हे नारद ! विष्णु व्रत धारण न करके कार्त्तिक मास अतिवाहित करने से आजन्म सञ्चित पुण्यफल विनष्ट होता है ।।१८।।

और भी लिखा है—हे महामुने ! बिना नियम से कार्त्तिक मास किंवा चातुर्मास्य अतिवाहित करने पर वह मानव कुलाधम एवं ब्रह्मघ्न शब्द से अभिहित होता है ।।१९।।

और भी कथित है—जो मानव, पितृपक्ष में पितृगण को पिण्डदान, कार्त्तिक मास में व्रत, श्रावण मास में ऋषि तर्पण, चैत्र मास में श्रीहरि का दोलोत्सव, माघ मास में पवित्र जल में स्नान, पुष्यानक्षत्र में आमर्दकी व्रत, श्रावण में रोहिण्यष्टमी एवं सङ्गम में श्रवण संयुक्ता द्वादशी में व्रताचरण नहीं करते हैं, हे नारद ! उन सब मूढ़ व्यक्ति की गति कहाँ होगी, यह मैं नहीं जानता हूँ ।।२०-२२।।

पाद्मे च श्रीनारदशौनकादि-मुनिगणसंवादे—

मानुषः कर्म्मभूमौ यः कार्त्तिकं नयते मुधा। चिन्तामणिं करे प्राप्य क्षिप्यते कर्द्दमाम्बुनि ॥२३

नियमेन विना विप्राः कार्त्तिकं यः क्षिपेन्नरः।
कृष्णः पराङ्मुखस्तस्य यस्मादूर्ज्जोऽस्य वल्लभः ॥२४॥

अथ तत्र विशेषेण स्नानदानादि-सत्कर्म्मनित्यता

स्कान्दे तत्रैव—

यैर्न दत्तं हुतं जप्तं न स्नानं न हरेर्व्रतम्। न कृतं कार्त्तिके पुत्र द्विजास्ते वै नराधमाः ॥२५

किञ्च—

यैर्न दत्तं हुतं जप्तं कार्त्तिके न व्रतं कृतम्।
तेनात्मा हारितो नूनं न प्राप्तं प्रार्थितं फलम् ॥२६॥

किञ्च—

सम्प्राप्ते कार्त्तिके मासि ये रता न जनार्द्दने।
तेषां सौरिपुरे वासः पितृभिः सह नारद ॥२७॥

किञ्च—

कार्त्तिके नार्च्चितो यैस्तु भक्तिभावेन केशवः। नरकं ते गमिष्यन्ति यमदूतैस्तु यन्त्रिताः ॥२८

---

मुधेति नियमं विनेत्यर्थः ॥२३॥

एवं सामान्यतो व्रतस्य नित्यतां लिखित्वेदानीं दानादिकर्म्मविशेषष्य लिखति—यैर्न दत्तमित्यादि-षड्भिः। स्नानमिति पाठे स्नपनमित्यर्थः, तेनापि पूजैव लक्ष्यते। व्रतं कृच्छ्रादि किञ्चिद्भक्ष्यत्यागादि वा, किंवा, दत्तादिरूपमेतद्धरेर्व्रतं, पुत्र हे श्रीनारद ॥२५॥

न रताः पूजादिना न भक्ताः, प्रीतिं न कृतवन्तो वा ॥२७॥

भक्तौ भाव एकाग्रता, तेनेत्यर्थः ॥२८॥

---

पद्मपुराण के श्रीनारद-शौनकादि मुनिगण संवाद में वर्णित है—जो व्यक्ति, कर्मक्षेत्र में कार्त्तिक मास को निरर्थक अतिवाहित करते हैं, वह हस्तस्थ चिन्तामणि को कर्दम जल में निक्षेप करता है ॥२३॥

हे विप्रवृन्द ! बिना नियम से जो मानव, कार्त्तिक मास यापन करते हैं, श्रीकृष्ण, उनके प्रति पराङ्मुख होते हैं, कारण, यह मास, श्रीहरि को प्रसन्न करने वाला है ॥२४॥

अथ तत्र विशेषेण स्नानदानादि-सत्कर्म्मनित्यता

स्कन्दपुराण के उक्त स्थान में लिखित है—हे पुत्र नारद ! जो सब द्विज, कार्त्तिक मास में दान, होम, जप, स्नान, एवं श्रीहरि व्रत नहीं करते हैं, उन सबको नराधम कहा जाता है ॥२५॥

और भी लिखा है—जो लोक, कार्त्तिक मास में दान, होम, जप वा व्रतानुष्ठान नहीं करते हैं, वे सब, निश्चय ही वञ्चित होते हैं। एवं कदाच वाञ्छित फल प्राप्त नहीं करते हैं ॥२६॥

और भी कथित है—कार्त्तिक मास समागत होने पर जो लोक श्रीहरि में रत नहीं होते हैं, वे पितृपुरुषों के सहित यमपुरी में निवास करते हैं ॥२७॥

और भी कथित है—जो लोक, कार्त्तिक मास में भक्तिपूर्वक जनार्द्दन की पूजा नहीं करते हैं, वे सब यमदूतवृन्द के द्वारा प्रपीड़ित होकर नरक में प्रस्थान करते हैं। कोटि-कोटि जन्म के अनन्तर दुष्प्राप्य नर-जन्म प्राप्त करके कार्त्तिक मास में श्रीहरि की पूजा न करने पर तदीय जन्म निष्फल होता है। कार्त्तिक

जन्मकोटिसहस्रैस्तु मानुष्यं प्राप्य दुर्ल्लभम्। कार्त्तिके नार्च्चितो विष्णुर्हारितं तेन जन्म वै ॥२९

विष्णोः पूजा कथा विष्णोर्वैष्णवानाञ्च दर्शनम्।

न भवेत् कार्त्तिके यस्य हन्ति पुण्यं दशाब्दिकम् ॥३०॥

अथ कार्त्तिकमाहात्म्यम्

कार्त्तिकस्य तु माहात्म्यं प्राक् सामान्येन लिख्यते। ततो विशेषतस्तत्र कर्म्मदेशादिभेदतः ॥३१

अथ सामान्यतः कार्त्तिकमाहात्म्यम्

स्कान्दे तत्रैव—

कार्त्तिकस्य तु मासस्य कोटच्यंशेनापि नार्हति।

सर्व्वतीर्थेषु यत् स्नानं सर्व्वदानेषु यत् फलम् ॥३२॥

एकतः सर्व्वतीर्थानि सर्व्वे यज्ञाः सदक्षिणाः। एकतः पुष्करे वासः कुरुक्षेत्रे हिमाचले ॥३३॥

मेरुतुल्यसुवर्णानि सर्व्वदानानि चैकतः। एकतः कार्त्तिको वत्स सर्व्वदा केशवप्रियः ॥३४॥

यत् किञ्चित् क्रियते पुण्यं विष्णुमुद्दिश्य कार्त्तिके। तदक्षयं भवेत् सर्व्वं सत्योक्तं तव नारद ॥३५

का ि त्त क मु त्त मं मासं सर्व्वमासेषु चोत्तमम्। पुण्यानां परमं पुण्यं पावनानाञ्च पावनम् ॥३६॥

---

तत्र कार्त्तिके कर्म्मादिभेदेन यो विशेषस्तेन, आदि-शब्दात्तीर्थादि ॥३१॥

कार्त्तिकस्य कार्त्तिककृत्यमाहात्म्यस्य कोटच‌ंशानामेवैनाप्यंशेन सर्व्वतीर्थस्नानादिफलं समतां नार्हतीत्यर्थः ॥३२॥

सर्व्वदा कलिकालादावपि ॥३४॥

सत्योक्तं—सत्यमुक्तम् ॥३५॥

कार्त्तिकमुत्तमं विद्धीति शेषः ॥३६॥

---

मास में हरिपूजा, हरिकथा श्रवण, एवं वैष्णव दर्शन जिसके भाग्य में नहीं होता है, उसके द्वारा अर्जित दश वर्ष का पुण्य विनष्ट होता है ॥२८-३०॥

अथ कार्त्तिकमाहात्म्यम्

प्रथमतः सामान्य रूप से कार्त्तिक माहात्म्य का वर्णन करते हैं, तत्पश्चात् कार्य्य भेद से एवं देशादि भेद से विस्तृत रूप से वर्णन किया जायगा ॥३१॥

स्कन्दपुराण के उक्त स्थान में ही उक्त है—सर्वतीर्थ स्नान जनित एवं यावतीय दान जनित फल भी कार्त्तिक के फल के कोटच‌ंश एकांश के समान नहीं है ॥३२॥

एक ओर निखिल तीर्थ, सदक्षिण सर्वयज्ञ, पुष्कर में, कुरुक्षेत्र में, हिमाचल में निवास, मेरुतुल्य सुवर्ण-दान एवं अखिल दान, अन्य दिक् में कार्त्तिक मास स्थापित होने पर भी हे वत्स ! कार्त्तिक मास ही केशव प्रिय होता है ॥३३-३४॥

हे नारद ! यह सत्य कथन है, श्रीहरि के उद्देश्य में कार्त्तिक मास में जो कुछ पुण्याचरण किया जाता हैं, तत्समुदाय ही अक्षय होते हैं। कार्त्तिक मास ही यावतीय मास के मध्य में उत्कृष्ट है, परम पुण्य स्वरूप एवं पवित्र समूह के मध्य में भी पवित्र है ॥३५-३६॥

किञ्च—

यथा नदीनां विप्रेन्द्र शैलानाञ्चैव नारद। उदधीनाञ्च विप्रर्षे क्षयो नैवोपपद्यते ॥३७॥

पुण्यं कार्त्तिकमासे तु यत् किञ्चित् क्रियते मुने।
न तस्यास्ति क्षयो ब्रह्मन् पापस्याप्येवमेव च ॥३८॥

न कार्त्तिकसमो मासो न कृतेन समं युगम्। न वेदसदृशं शास्त्रं न तीर्थं गङ्गया समम् ॥३९

कार्त्तिकः प्रवरो मासो वैष्णवानां प्रियः सदा। कार्त्तिकं सकलं यस्तु भक्त्या सेवेत वैष्णवः।
पितॄनुद्धरते सर्व्वान् नरकस्थान् महामुने ॥४०॥

पाद्मे च तत्रैव—

द्वादशस्वपि मासेषु कार्त्तिकः कृष्णवल्लभः। तस्मिन् सम्पूजितो विष्णुरल्पकैरप्युपायनैः।
ददाति वैष्णवं लोकमित्येवं निश्चितं मया ॥४१॥

यथा दामोदरो भक्तवत्सलो विदितो जनैः। तस्यायन्तादृशो मासः स्वल्पमप्युरुकारकः ॥४२॥

दुर्ल्लभो मानुषो देहो देहिनां क्षणभङ्गुरः। तत्रापि दुर्ल्लभः कालः कार्त्तिको हरिवल्लभः ॥४३॥

दीपेनापि हि यत्रासौ प्रीयते हरिरीश्वरः। सुगतिश्च ददात्येव परदीपप्रबोधनात् ॥४४॥

अथ तत्र व्रत-माहात्म्यम्

स्कान्दे तत्रैव—

व्रतानामिह सर्व्वेषामेकजन्मानुगं फलम्। कार्त्तिके तु व्रतस्योक्तं फलं जन्मशतानुगम् ॥४५॥

---

पापस्याप्येवमिति—कार्त्तिके कृतस्य पापस्य क्षयो नास्तीत्यर्थः। अतः कार्त्तिके यत्नतः सर्व्वथा पापं परिहरणीयमिति भावः ॥३८॥ तत्र श्रीनारदशौनकादिसंवाद एव; उपायनैः—उपचारैः ॥४१॥

व्रतं कार्त्तिककृत्यनियमस्तस्य यत् फलं कार्त्तिकव्रतोत्पन्नं पुण्यं तज्जन्मशतान्यनुगच्छतीत्यर्थः। पाठान्तरे तु तथैवार्थः ॥४५॥

---

और भी लिखित है—हे विप्रेन्द्र नारद! हे मुने! हे ब्रह्मन्! जिस प्रकार नदी, शैल एवं सागर का क्षय नहीं है, तद्रूप कार्त्तिक मास में जो कुछ पुण्य किंवा पापार्जन होता है, उसका क्षय नहीं है। कार्त्तिक मास के सदृश मास नहीं है, सत्ययुग के समान, युग नहीं है, वेद के सदृश शास्त्र नहीं है, जाह्नवी के तुल्य तीर्थ नहीं है, अतएव कार्त्तिक मास, वैष्णवों का सर्वदा प्रिय है। हे महामुने! जो वैष्णव, भक्तिपूर्वक कार्त्तिक मास में उत्पन्न वस्तुसमूह के द्वारा श्रीहरि की उपासना करते हैं, वे निरयस्थ पितृवृन्द को उद्धार करते हैं ॥३७-४०॥

पद्मपुराण के उक्त स्थल में उक्त है—द्वादश मास के मध्य में कार्त्तिक मास ही श्रीकृष्ण प्रिय है। उस मास में अल्पमात्र उपचार से भी श्रीहरि अर्च्चित होने पर अर्च्चक को श्रीहरि निज धामार्पण करते हैं। मैं निश्चित रूप से यह कहता हूँ। जिस प्रकार दामोदर सर्वजन समीप में भक्तवत्सल नाम से अभिहित हैं, तदीय कार्त्तिक मास भी उस प्रकार है। यह मास स्वल्प को भी अधिक करता है। देहिवृन्द के मध्य में क्षणभङ्गुर नृदेह ही दुर्लभतर है। तन्मध्ये हरिप्रिय कार्त्तिक मास और भी दुर्ल्लभ है। इस कार्त्तिक मास में श्रीहरि के उद्देश्य में प्रदीप अर्पण करने पर भी श्रीहरि प्रीत होते हैं, एवं परदत्त दीप उज्ज्वली करने पर भी सुगति लाभ होता है ॥४१-४४॥

अथ तत्र व्रत-माहात्म्यम्

स्कन्दपुराण के उक्त स्थान में उक्त है—इस जगत् में समस्त व्रतों का फल, एक जन्म मात्र अनुगमन

अक्रूरतीर्थे विप्रेन्द्र कार्त्तिक्यां समुपोष्य च।
स्नात्वा यत् फलमाप्नोति तच्छ्रुत्वा वैष्णवं व्रतम् ॥४६॥
वाराणस्यां कुरुक्षेत्रे नैमिषे पुष्करेऽर्व्वुदे।
गत्वा यत् फलमाप्नोति व्रतं कृत्वा तु कार्त्तिके ॥४७॥
अनिष्ट्वा च सदा यज्ञैर्न कृत्वा पितृभिः स्वधाम्।
व्रतेन कार्त्तिके मासि वैष्णवन्तु पदं व्रजेत् ॥४८॥

प्रवृत्तानाञ्च भक्ष्याणां कार्त्तिके नियमे कृते। अवश्यं कृष्णरूपत्वं प्राप्यते मुक्तिदं शुभम् ॥४९

किञ्च—

ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा मुनिसत्तम। वियोनिं न व्रजेत्येव व्रतं कृत्वा तु कार्त्तिके। ५०

किञ्च—

कार्त्तिके मुनिशार्द्दूल स्वशक्त्या वैष्णवं व्रतम्।
यः करोति यथोक्तन्तु मुक्तिस्तस्य करे स्थिता। ५१॥

सुपुण्ये कार्त्तिके मासि देवर्षिपितृसेविते। क्रियमाणे व्रते नृणां स्वल्पेऽपि स्यान्महाफलम् ॥५२॥

---

वैष्णवं व्रतं कार्त्तिकनियमं श्रुत्वापि तदाप्नोति ॥४६॥

पितृभिः पितृभ्यः, यद्यकरणादिना पातित्यं सूचितं, तथापि कार्त्तिकव्रतेन वैष्णवं पदं याति ॥४८॥

प्रवृत्तानां नित्यं भक्ष्यमाणानामित्यर्थः, नियमे सङ्कोचे किञ्चित्त्यागे कृते सतीत्यर्थः। कृष्णरूपत्व कृष्ण-सारूप्य, मुक्तिदं संसारदुःखमोचनं, शुभं परममङ्गलं सुखघनमित्यर्थः। तत्रैव श्रीरुक्माङ्गद मोहिनीसंवादे तु मुक्ति-साधकमिति पाठे मुक्तिः साधिका यस्य तत्। यद्वा, अकारप्रश्लेषेण अमुक्तिः कृष्णे न त्यागस्तत्-साधकम् ॥४९॥

वियोनिं कुजन्म पापैरर्जितैरपि न प्राप्नोति ॥५०॥

---

करता है। अर्थात् एक जन्म तक रहता है। किन्तु कार्त्तिक मास कृत व्रत फल, शत जन्म पर्य्यन्त अनुगामी होता है। हे विप्रेन्द्र! कार्त्तिक की पूर्णिमा में उपवासी रहकर अक्रूर तीर्थ में स्नान करने से जो फल होता है, कार्त्तिक मास में वैष्णव व्रत श्रवण करने से भी अर्थात् कार्त्तिक के नियम श्रवण करने पर भी वह प्राप्त हो सकता है ॥४५-४६॥

वाराणसी, कुरुक्षेत्र, नैमिषारण्य, पुष्कर, अर्वुद तीर्थ में जाने से पुण्य सञ्चय होता है, कार्त्तिक मास में व्रत करने से वह पुण्य प्राप्त कर सकता है। जो मानव कभी भी यज्ञानुष्ठान नहीं करता है, एवं जो व्यक्ति कदाच पितृपुरुषों के उद्देश में पिण्डार्पण नहीं करता है, कार्त्तिक व्रत करने से वह व्यक्ति भी वैष्णव व्रत को प्राप्त करता है। नित्य जो भोजन किया जाता है, कार्त्तिक मास में तन्मध्य में कुछ त्यागने से परम मङ्गलमय कृष्णसारूप्य प्राप्त कर सकता है। इसमें सन्देह नहीं है ॥४७-४९॥

और भी कथित है—हे मुनिसत्तम! कार्त्तिक व्रत करने से ब्राह्मण, क्षत्रिय, वैश्य, शूद्र,– किसी को भी कुयोनि में देह धारण करना नहीं पड़ता है ॥५०॥

और भी लिखा है—हे मुनिशार्दूल! जो कार्त्तिक मास में स्वशक्त्यनुसार यथारीति वैष्णव व्रत करते हैं, मुक्ति उनके करतलगत होती है। देवर्षि पितृगण निषेवित सुपवित्र कार्त्तिक व्रत का अनुष्ठान स्वल्पमात्र करके भी मानवगण महाफल लाभ कर सकते हैं ॥५१-५२॥

अथ तत्र कर्म्म विशेषमाहात्म्यम्

स्कान्दे तत्रैव—

दानं दत्तं हुतं जप्तं तपश्चैव तथा कृतम्। तदक्षयफलं प्रोक्तं कार्त्तिके च द्विजोत्तम ॥५३

किञ्च—

यत् किञ्चित् कार्त्तिके दत्तं विष्णुमुद्दिश्य मानवैः। तदक्षयं लभ्यते वै अन्नदानं विशेषतः ॥५४॥

किञ्च—

यस्तु संवत्सरं पूर्णमग्निहोत्रमुपासते। कार्त्तिके स्वस्तिकं कृत्वा सममेतन्न संशयः ॥५५॥

कार्त्तिके या करोत्येवं केशवाऽयमण्डलम्।
स्वर्गस्था शोभते सा तु कपोती पक्षिणी यथा ॥५६॥

यः करोति नरो नित्यं कार्त्तिके पत्रभोजनम। न स दुर्गतिमाप्नोति यावदिन्द्राश्चतुर्द्दश ॥५७॥

जन्मप्रभृति यत् पापं मानवैश्च कृतं भवेत्। तत् सर्व्वं नाशमाप्नोति ब्रह्मपत्रेषु भोजनात् ॥५८

सर्व्वकामफलं तस्य सर्व्वतीर्थफलं लभेत्। ना वापि नरकं पश्येद्ब्रह्मपत्रेषु भोजनात् ॥५९॥

ब्रह्म चैष स्मृतः साक्षात् पलाशः सर्व्वकामदः। मध्यमं वर्ज्जितं पत्रं शूद्रस्य मुनिसत्तम।
भुञ्जन्नरकमाप्नोति यावदिन्द्राश्चतुर्द्दश ॥६०॥

तिलदानं नदीस्नानं सत्कथा साधुसेवनम्। भोजन ब्रह्मपत्रेषु कार्त्तिके मुक्तिदायकम् ॥६१॥

जागरं कार्त्तिके मासि यः करोत्यरुणोदये। दामोदराग्रे विप्रेन्द्र गोसहस्रफलं लभेत् ॥६२॥

जागरं पश्चिमे यामे यः करोति महामुने। कार्त्तिके सन्निधौ विष्णोस्तत्पदं करसंस्थितम् ॥६३॥

साधुसेवा गवां ग्रासः कथा विष्णोस्तथार्च्चनम्।
जागरः पश्चिमे यामे दुर्ल्लभः कार्त्तिके कलौ ॥६४॥

---

दीयत इति दानमन्नादि ॥५३॥
यश्च कार्त्तिके स्वस्तिकं कृत्वा स्थितः; कुर्य्यादिति वा पाठः ॥५५॥
ब्रह्म पलाशवृक्षस्तस्य पत्रेषु ॥५८॥
पश्चिमे अन्त्ये तस्य विष्णोः पदं, तस्य करसंस्थितम् ॥६३।
दुर्ल्लभः महाभाग्येनैव सिध्यतीत्यर्थः ॥६४॥

---

अथ तत्र कर्म्मविशेषमाहात्म्यम्

स्कन्द पुराण के उक्त स्थान में लिखित है—हे द्विजोत्तम ! कार्त्तिक मास में अन्नादि दान, होम, जप, एवं तपस्या,–जो कुछ किया जाय, विशेषकर, जो अन्नदान किया जाय, वह अक्षय फल का देने वाला होता है ॥५३॥

और भी लिखा है—कार्त्तिक मास में श्रीहरि के उद्देश में मानवगण को जो कुछ दान किया जाय, विशेषतः अन्नदान, जो अन्नदान किया जाय वह अक्षय फलद होता है ॥५४॥

और भी लिखित है—कार्त्तिक मास में स्वस्तिक प्रस्तुत करने से संवत्सरकृत अग्निहोत्र याग का फल लाभ होता है, इसमें संशय नहीं है। जो नारी, कार्त्तिकमास में केशव-मन्दिर में मण्डल निर्म्माण करती है, वह गगनचारिणी कपोती के समान देवलोक में विराजित होती है। कार्त्तिक मास में जो मानव अन्न प्रदान

किञ्च—

जलधेनुसहस्रञ्च वृषसंस्थे दिवाकरे। तोयं दत्वा यदाप्नोति स्नानं कृत्वा तु कार्त्तिके ॥६५

सन्निहत्यां कुरुक्षेत्रे राहुग्रस्ते दिवाकरे। सूर्य्यवारेण यत् स्नानं तदेकाहेन कार्त्तिके ॥६६॥

पितॄनुद्दिश्य यद्दत्तं कार्त्तिके कृष्णवल्लभे। अन्नोदकं मुनिश्रेष्ठ अक्षयं जायते नृणाम् ॥६७॥

किञ्च —

गीतशास्त्रविनोदेन कार्त्तिकं यो नयेन्नरः। न तस्य पुनरावृत्तिर्मया दृष्टा कलिप्रिय। ६८॥

किञ्च—

प्रदक्षिणञ्च यः कुर्य्यात् कार्त्तिके विष्णुसद्मनि। पदे पदेऽश्वमेधस्य फलभागी भवेन्नरः ॥६९

गीतं वाद्यञ्च नृत्यञ्च कार्त्तिके पुरतो हरेः।
यः करोति नरो भक्त्या लभते चाक्षयं पदम् ॥७०॥

हरेर्नामसहस्राख्यं गजेन्द्रस्य च मोक्षणम्। कार्त्तिके पठते यस्तु पुनर्जन्म न विन्दते ॥७१॥

कार्त्तिके पश्चिमे यामे स्तवं गानं करोति यः। वसते श्वेतद्वीपे तु पितृभिः सह नारद ॥७२॥

---

सन्निहत्या नाम ह्रदस्तां प्राप्येत्यर्थः ॥६६॥

---

विष्णु को करते हैं, वे चतुर्दश इन्द्रपात पर्य्यन्त दुर्गति को प्राप्त नहीं करते हैं। कार्त्तिक मास में पलाश-पत्र में भोजन करने पर आजन्मार्ज्जित पातकसमूह विनष्ट होते हैं। समस्त कामना सिद्ध होती हैं, सब तीर्थों का फल लाभ होता है,एवं कदाच नरक दर्शन नहीं करना पड़ता है। हे मुनिसत्तम! पलाशतरु साक्षात् ब्रह्म-स्वरूप है, एवं समस्त कामद है। पलाश का मध्यम पत्र को त्याग करना शूद्र का कर्त्तव्य है। इस पत्र में भोजन करने से चतुर्दश इन्द्रपात पर्य्यन्त नरक में निवास करना पड़ता है। कार्त्तिकमास में तिल दान, नदी स्नान, सत्कथा श्रवण, साधुवृन्द की परिचर्य्या एवं पलाशपत्र में भोजन,- यह सब मुक्तिदायक हैं। हे विप्रेन्द्र! कार्त्तिक मास में दामोदर के सम्मुख में अरुणोदय काल में जागरण करने से श्रीहरिपद लाभ होता है। साधु-सेवा, गोग्रास, विष्णुकथा श्रवण, विष्णु पूजा एवं रात्रि के शेष याम में जागरण, कलिकाल में—कार्त्तिकमास में यह सब दुर्लभ हैं ॥५५-६४॥

और भी लिखित है—वृषराशिस्थ भास्कर में सहस्र जलधेनु दान के निमित्त कृत्रिम धेनु' एवं जलदान करने से जो पुण्य होता है, कार्त्तिकमास में स्नान करने से वही फल मिल जाता है। रविवार में सूर्य्यग्रहण होने से उस समय कुरुक्षेत्र के सन्निहत्या नामक ह्रद में स्नान करने से जो फल होता है, कार्त्तिक मास में एक दिन स्नान से ही वह फल मिल जाता है। हे मुनिश्रेष्ठ! कृष्णप्रिय कार्त्तिक मास में पितृवृन्द के उद्देश्य से जल अन्नादि जो कुछ दान किया जाय, वह सभी अक्षय होता है ॥६५-६७॥

और भी लिखा है - हे कलिप्रिय नारद! सङ्गीतशास्त्र चर्च्चा द्वारा प्रभु को आनन्ददान पूर्वक कार्त्तिक मास यापन करने पर और पुनर्जन्म लेना नहीं पड़ता है। यह मैंने देखा है ॥६८।

और भी लिखित है—जो मानव, कार्त्तिक मास में विष्णु मन्दिर प्रदक्षिण करते हैं, उनको प्रति पद में अश्वमेध फल लाभ होता है। कार्त्तिक मास में विष्णु समीप में भक्ति के सहित नृत्य-गीत एवं वाद्य करने से अक्षय पद लाभ होता है। कार्त्तिक मास में जो व्यक्ति, श्रीहरि के सहस्रनाम स्तोत्र एवं गजेन्द्रमोक्ष पाठ करते हैं, उनको पुनर्वार संसार में आना नहीं पड़ता है। हे नारद! कार्त्तिक मास में शेष याम में श्रीहरि की स्तुति वा श्रीहरि के गुणगान करने पर पितृगण के सहित श्वेतद्वीप में निवास होता है। हे मुनिसत्तम!

नैवेद्यदानेन तु हरेः कार्त्तिके यवसंख्यया । युगानि वसते स्वर्गे तावन्ति मुनिसत्तम ॥७३॥
अगुरुन्तु सकर्पूरं यो दहेत् केशवाग्रतः । कार्त्तिके तु मुनिश्रेष्ठ युगान्ते न पुनर्भवः ॥७४॥
किञ्च—

नियमेन कथां विष्णोर्ये शृण्वन्ति च भाविताः ।
श्लोकार्द्धं श्लोकपादं वा कार्त्तिके गोशतं फलम् ॥७५॥

सर्व्वधर्म्मान् परित्यज्य कार्त्तिके केशवाग्रतः । शास्त्रावतरणं पुण्यं श्रोतव्यञ्च महामुने ॥७६॥

श्रेयसा लोभबुद्धचा वा यः करोति हरेः कथाम् ।
कार्त्तिके मुनिशार्द्दूल कुलानां तारयेच्छतम् ॥७७॥

नित्यं शास्त्रविनोदेन कार्त्तिकं यः क्षिपेन्नरः । निर्दहेत् सर्व्वपापानि यज्ञायुतफलं लभेत् ॥७८॥
न तथा तुष्यते दानैर्न यज्ञैर्गोगजादिकैः । यथा शास्त्रकथालापैः कार्त्तिके मधुसूदनः ॥७९॥

कार्त्तिके मुनिशार्द्दूल यः शृणोति हरेः कथाम् ।
स निस्तरति दुर्गाणि जन्मकोटिशतानि च ॥८०॥

यः पठेत् प्रयतो नित्यं श्लोकं भागवतं मुने । अष्टादशपुराणानां कार्त्तिके फलमाप्नुयात् ॥८१॥

---

यवमात्रसंख्यया यावन्ति नैवेद्यानि, तावन्ति युगानि । सिक्थेति पाठेऽपि तथैवार्थः ॥७३॥
युगान्तेऽपि सति ॥७४॥
भाविता भावयुक्ताः, तेषां गोशतदानफलं स्यात् ॥७५॥
विशेषतः कार्त्तिके सद्भिः सह भगवत्कथामाहात्म्यमाह—सर्व्वेति पञ्चभिः ॥७६॥
दुर्गानि—आपदः ॥८०॥
भागवतं भगवत्परं भागवतीयं वेत्यर्थः ॥८१॥

---

कार्त्तिक मास में श्रीहरि को यव नैवेद्य अर्पण करने पर उस नैवेद्य में जितने संख्यक यव होते हैं, उतने युग देवलोक में निवास होता है । हे मुनिश्रेष्ठ ! जो, श्रीहरि के सम्मुख में कर्पूर सयुक्त अगुरु दग्ध करते हैं, युगान्त में उनको पुनर्बार संसार में शरीर धारण नहीं करना पड़ता है ॥६९-७४

और भी कथित है—जो मानव, कार्त्तिक मास में भक्तिपूर्वक नियम से श्रीहरि-कथा श्रवण करते हैं, वह कथा श्लोकार्द्ध का पादमात्र होने पर भी शत गोदान का फल मिल जाता है । हे महामुने ! सर्व धर्म परित्याग पूर्वक कार्त्तिक मास में श्रीहरि के सम्मुख में श्रीहरिकथा श्रवण करना कर्त्तव्य है । हे मुनिशार्दूल! श्रेयबुद्धि से वा लोभबुद्धि से जिस किसी प्रकार से हो,—कार्त्तिक माह में श्रीहरि-कथा कीर्त्तन करने से शत-कुल का उद्धार हो जाता है । जो मानव, नित्य हरि-कथा चर्च्चा के द्वारा कार्त्तिक मास यापन करते हैं, वे निखिल पातकों से मुक्त होकर अयुत यज्ञ का फल लाभ करते हैं, कार्त्तिकमास में शास्त्रकथा आलोचित होने से मधुसूदन जिस प्रकार सन्तुष्ट होते हैं, गो, गजादि दान एवं यज्ञादि द्वारा भी उस प्रकार प्रीत नहीं होते हैं । हे मुनिशार्दूल ! जो व्यक्ति, कार्त्तिक मास में हरि-कथा श्रवण करते हैं, वे शतकोटि जन्म में अर्जित दुर्गति से परित्राण प्राप्त होते हैं । हे मुने ! जो कार्त्तिक मास में यत्नपूर्वक नित्य भागवत श्लोक पाठ करते हैं, वे अष्टादश पुराण पाठ का फल प्राप्त करते हैं ॥७५-८१॥

किञ्च—

सर्व्वान् धर्म्मान् परित्यज्य इष्टापूर्त्तादिकान्नरः ।
कार्त्तिके परया भक्त्या वैष्णवैः सह संवसेत् ॥८२॥

पाद्मे च तत्रैव—

कार्त्तिके भूमिशायी यो ब्रह्मचारी हविष्यभुक् । पलाशपत्रं भुञ्जानो दामोदरमथार्च्चयेत् ॥८३॥
स सर्व्वपातकं हित्वा वैकुण्ठे हरिसन्निधौ । मोदते विष्णुसदृशो भजनानन्दनिर्वृतः ॥८४॥

किञ्च—

कार्त्तिकं सकलं मासं प्रातःस्नायी जितेन्द्रियः । जपन् हविष्यभुग्दान्तः सर्व्वपापैः प्रमुच्यते ॥८५
कार्त्तिकन्तु नरो मासं यः कुर्य्यादेकभोजनम् । शूरश्च बहुवीर्य्यश्च कीर्त्तिमांश्च स जायते ॥८६॥

किञ्च—

पलाशपत्रभोजी च कार्त्तिके पुरुषो नरः । निष्पापः स्यात्तु नैवेद्यं हरेर्भुक्त्वा विमुच्यते ।
मध्यस्थमैश्वरं पत्रं वर्ज्जयेद्ब्राह्मणेतरः ॥८७॥

किञ्च—

अपराधसहस्राणि पातकानि महान्त्यपि । क्षमतेऽस्य हरिर्देवः पूजिते कार्त्तिके प्रभुः ॥८८॥
नैवेद्यं पायसं विष्णोः प्रियं खण्डं घृतान्वितम् ।
विभज्य तच्च भुञ्जानो यज्ञसाम्यं दिने दिने ॥८९॥

---

अतएव विशेषतः सत्सङ्ग-माहात्म्यमाह- सर्व्वानिति ॥८२॥
विष्णुसदृशः सारूप्यादिप्राप्तेः ॥८४॥
दान्तः जितक्रोधादिः । शान्त इति वा पाठः ॥८५॥
शूरः—सर्व्वशक्तिमान्; बहुवीर्य्यः—महापराक्रमः ॥८६॥
यज्ञसाम्यं यज्ञसमफलं लभत इति शेषः ॥८९॥

---

और भी लिखा है—कार्त्तिक मास में इष्टापूर्त्तादि सर्व धर्म परित्याग पूर्वक परम भक्ति के सहित वैष्णववृन्द के सहित काल यापन करना कर्त्तव्य है ॥८२॥

पद्मपुराण के उस स्थान में लिखित है—जो व्यक्ति, कार्त्तिक मास में भू-शय्याशायी, ब्रह्मचारी एवं हविष्य भोजी होकर पलाशपत्र में भोजन पूर्वक दामोदर की पूजा करते हैं, वे समस्त पापों से मुक्त होकर विष्णु सदृश एवं भजनानन्द से पूर्ण होकर वैकुण्ठधाम में श्रीहरि के सन्निधान में आनन्द भोग करते हैं ॥

और भी उक्त है—समग्र कार्त्तिक मास में प्रातःस्नायी, जितेन्द्रिय, जितरिपु, जयनिष्ठ एवं हविष्याशी होकर रहने से समस्त पातक विनष्ट होते हैं। जो मानव, सम्पूर्ण कार्त्तिक मास एकभक्त होकर अतिवाहित करते हैं, वे सर्वशक्तिमान्, महापराक्रमशाली, एवं कीर्त्तिशाली होते हैं ॥८३-८६॥

और भी लिखा है—जो मानव, कार्त्तिक मास में पलाश-पत्र में श्रीहरि के प्रसादान्न सेवन करते हैं, वे निष्पाप होकर मुक्ति लाभ करते हैं, ब्राह्मण भिन्न अपर के पक्ष में पलाश-पत्र के मध्यपत्र में भोजन करना निषिद्ध है, वह पत्र ईश्वर-पत्र नाम से अभिहित है ॥८७॥

और भी वर्णित है—कार्त्तिक मास में श्रीहरि पूजित होने पर प्रभु श्रीहरि, बहुसहस्र अपराध एवं महापातकसमूह को क्षमा करते हैं। जो कार्त्तिक मास में विष्णुप्रिय खण्ड एवं सघृत पायस नैवेद्य श्रीहरि को निवेदन करके सेवन करते हैं, वे प्रतिदिन यज्ञ के समान फल को प्राप्त करते हैं ॥८८-८९॥

तत्रैव श्रीकृष्णसत्यासंवादे—

स्नानं जागरणं दीपं तुलसीवनपालनम् । कार्त्तिके ये प्रकुर्व्वन्ति ते नरा विष्णुमूर्त्तयः ॥९०॥

इत्थं दिनत्रयमपि कार्त्तिके ये प्रकुर्व्वते । देवानामपि ते वन्द्याः किं यैराजन्म तत् कृतम् ? ९१

तत्रैव कार्त्तिकव्रताङ्गानि

हरिजागरणं प्रातःस्नानं तुलसिसेवनम् । उद्यापनं दीपदानं व्रतान्येतानि कार्त्तिके ॥९२॥

पञ्चभिर्व्रतकैरेभिः सम्पूर्णं कार्त्तिके व्रती । फलमाप्नोति तत् प्रोक्तं भुक्तिमुक्तिफलप्रदम् ॥९३॥

विष्णोः शिवस्य वा कुर्य्यादालये हरिजागरम् । कुर्य्यादश्वत्थमूले वा तुलसीनां वनेषु च ॥९४॥

आपद्गतो यदाप्यम्भो न लभेत् सवनाय सः ।

व्याधितो वा पुनः कुर्य्याद्विष्णोर्नामापमार्ज्जनम् ॥९५॥

उद्यापनं विधिं कर्त्तुमशक्तो यो व्रते स्थितः । ब्राह्मणान् भोजयेच्छक्त्या व्रतसम्पूर्णहेतवे ॥९६

अशक्तो दीपदानस्य परदीपान् प्रबोधयेत् । तेषां वा रक्षणं कुर्य्याद्वातादिभ्यः प्रयत्नतः ॥९७॥

अभावे तुलसीनाञ्च पूजयेद्वैष्णवं द्विजम् । सर्व्वाभावे व्रती कुर्य्याद्ब्राह्मणानां गवामपि ।

सेवां वा बोधिवटयोर्व्रतसम्पूर्णहेतवे ॥९८॥

अथ तत्र दीपदानमाहात्म्यम्

स्कान्दे तत्रैव—

कल्पकोटिसहस्राणि पातकानि बहून्यपि । निमेषार्द्धेन दीपस्य विलयं यान्ति कार्त्तिके ॥९९

---

स्नानं जागरणं नित्यं रात्र्यन्तर्यामविषयकम् । विष्णुमूर्त्तयो विष्णुसारूप्यं प्राप्नुवन्तीत्यर्थः ॥९०॥

कल्पकोटिसहस्राणि व्याप्य यानि पातकानि । कृत्वा इति पाठे स्थितानीति शेषः । बहूनि महान्त्यपि विविधान्यपीति वा ॥९९॥

---

उक्त पुराण के श्रीकृष्ण-सत्या-संवाद में उक्त है—जो मानव, कार्त्तिक मास में स्नान, जागरण, दीप-दान, एवं तुलसीवन पालन प्रभृति कार्य्य करते हैं, वे विष्णु सारूप्य लाभ करते हैं ॥९०॥

जो व्यक्ति, कार्त्तिक मास में दिवसत्रय मात्र भी इस प्रकार नियम पालन करते हैं, वे देवगण के वन्दनीय होते हैं, और आजन्म नियम अनुष्ठानकारिगण के सौभाग्य की कथा तो अवर्णनीय ही है ॥९१॥

तत्रैव कार्त्तिकव्रताङ्गानि

कार्त्तिक मास में श्रीहरि के निमित्त जागरण, प्रातःस्नान, तुलसी सेवन, उद्यापन, एवं दीपार्पण यह सब व्रत करना चाहिये । व्रती व्यक्ति, कार्त्तिक मास में यह पाँच व्रत पालन करने से भुक्ति मुक्ति प्राप्त कर सकते हैं । श्रीहरि मन्दिर में, शिव मन्दिर में, अश्वत्थमूल में किंवा तुलसीवन में श्रीहरि-जागरण करे । आपन्न होकर स्नान हेतु जल प्राप्त न होने पर किंवा रोग-ग्रस्त होने पर श्रीहरिनाम के द्वारा आपोमार्जन करना चाहिये । व्रतस्थ होकर उद्यापन करने में अक्षम होने से व्रत सम्पूर्णार्थ शक्ति के अनुसार ब्राह्मण-भोजन करावे । कार्त्तिक मास में दीपदान में अक्षम व्यक्ति अन्य प्रदत्त दीप उद्दीपित करे, अथवा यत्नपूर्वक समीर प्रभृति से दीप की रक्षा करे । तुलसी वृक्ष के अभाव होने पर वैष्णव एवं द्विज की पूजा करे । यदि उन सबका अभाव हो तो व्रत सम्पूर्ण हेतु द्विज, गो, अश्वत्थ एवं वटवृक्ष की सेवा करे ॥९२-९८॥

अथ तत्र दीपदानमाहात्म्यम्

स्कन्दपुराण के उक्त स्थान में लिखित है—कार्त्तिक मास में श्रीहरि के मन्दिर में निमेषार्द्धकाल हेतु दीपदान करने से बहुसहस्र कोटि कल्प सञ्चित पातक समूह विनष्ट होते हैं ॥९९॥

किञ्च—

श्रृणु दीपस्य माहात्म्यं कार्त्तिके केशवप्रियम् । दीपदानेन विप्रेन्द्र न पुनर्जायते भुवि ॥१००॥

रविग्रहे कुरुक्षेत्रे नर्म्मदायां शशिग्रहे । तत् फलं कोटिगुणितं दीपदानेन कार्त्तिके ॥१०१॥

घृतेन दीपको यस्य तिलतैलेन वा पुनः । ज्वलते मुनिशार्द्दूल अश्वमेधेन तस्य किम् ? १०२

मन्त्रहीनं क्रियाहीनं शौचहीनं जनार्द्दने । सर्व्वं सम्पूर्णतां याति कार्त्तिके दीपदानतः ॥१०३॥

तेनेष्टं क्रतुभिः सर्व्वैः कृतं तीर्थावगाहनम् । दीपदानं कृतं येन कार्त्तिके केशवाग्रतः ॥१०४॥

तावद्‌गर्ज्जन्ति पुण्यानि स्वर्गे मर्त्ये रसातले ।
यावान्न ज्वलते ज्योतिः कार्त्तिके केशवाग्रतः ॥१०५॥

श्रूयते चापि पितृभिर्गाथा गीता पुरा द्विज । भविष्यति कुलेऽस्माकं पितृभक्तः सुतो भुवि ॥१०६

कार्त्तिके दीपदानेन यस्तोषयति केशवम् । मुक्तिं प्राप्स्यामहे नूनं प्रसादाच्चक्रपाणिनः ॥१०७॥

किञ्च—

मेरुमन्दरमात्राणि कृत्वा पापान्यशेषतः । दहते नात्र सन्देहो दीपदानात्तु कार्त्तिके ॥१०८॥

गृहे वायतने वापि दीपं दद्याच्च कार्त्तिके । पुरतो वासुदेवस्य महाफलविधायिनः ॥१०९॥

स जातो मानुषे लोके स धन्यः स च कीर्त्तिमान् ।
प्रदत्तः कार्त्तिके मासि दीपो वै मधुहाग्रतः ॥११०॥

---

कुरुक्षेत्रादौ विषये रविग्रहणादौ दानादिना यत् फलम् ॥१०१॥

मन्त्रादिहीनं जनार्द्दने यत् कर्म्म तत्, यद्वा, जनार्द्दने दीपदानत इति सम्बन्धः ॥१०३॥

ज्योतिः - दीपः ॥१०५॥

आयतने देवालये, वासुदेवस्य पुरतो दीपं दद्यात् । महाफलं वैकुण्ठलोकप्राप्तिलक्षणं तद्विधायिन इति दीपदानमाहात्म्यं सूचितम् ॥१०९॥

---

और भी लिखित है – हे विप्रेन्द्र ! कार्त्तिक मास में केशवप्रिय दीपदान का माहात्म्य कीर्त्तन कर रहा हूँ । श्रवण करो । इस मास में श्रीहरि-मन्दिर में दीपदान करने से जगत् में पुनर्वार जन्म ग्रहण नहीं करना पड़ता है । सूर्य्यग्रहण के समय कुरुक्षेत्र में एवं चन्द्रग्रहण के समय नर्मदा तीर में दानादि करने से जो पुण्य होता है, कार्त्तिक मास में दीपदान करने से तदपेक्षा कोटिगुण पुण्य होता है । हे मुनिवर ! जिनके द्वारा प्रदत्त घृतदीप किंवा तैलदीप प्रज्वलित होता है, उनको अश्वमेध यज्ञ का क्या प्रयोजन है ? कार्त्तिक मास में जनार्दन को दीपदान करने से मन्त्र वर्जित, क्रिया वर्जित एवं शौचरहित कर्मसमूह भी सम्पूर्ण होते हैं । जो व्यक्ति कार्त्तिक मास में केशव के समीप में दीपदान करते हैं, वे सर्वतीर्थ स्नान एवं सर्वयज्ञ का अनुष्ठान सम्पन्न करते हैं । जब तक कार्त्तिक मास में केशव के सम्मुख में दीप प्रज्वलित नहीं होता है, तब तक ही स्वर्ग मर्त्य एवं पातालस्थ पुण्यसमूह गर्जन करते रहते हैं । हे द्विज ! प्राचीन काल से ही पितृगण, इस प्रकार कहते रहते हैं । यदि मेरे वंश में इस प्रकार पितृभक्त पुत्र उत्पन्न हो, जो कार्त्तिक मास में दीपदान करके केशव को सन्तुष्ट करेगा, ऐसा होने पर हम सब चक्रपाणि की प्रसन्नता से निश्चय ही मुक्त हो जायेंगे ॥१००-१०७॥

और भी लिखा है – मेरु पर्वत के तुल्य असंख्य पातक करके भी कार्त्तिक मास में दीपदान करने से समस्त पाप विनष्ट होते हैं, इसमें सन्देह नहीं है । कार्त्तिक मास में श्रीकेशव के सम्मुख में दीपदान, श्रीहरि-

निमिषार्द्धार्द्धमात्रेण दीपदानेन कार्त्तिके । न तत् क्रतुशतैः प्राप्यं फलं तीर्थशतैरपि ॥१११॥
सर्व्वानुष्ठानहीनोऽपि सर्व्वपापरतोऽपि सन् । पूयते नात्र सन्देहो दीपं दत्त्वा तु कार्त्तिके ॥११२
तन्नास्ति पातकं किञ्चित्त्रिषु लोकेषु नारद । यन्न शोधयते दीपः कार्त्तिके केशवाग्रतः ॥११३

पुरतो वासुदेवस्य दीपं दत्त्वा तु कार्त्तिके ।
प्राप्नोति शाश्वतं स्थानं सर्व्वबाधाविवर्ज्जितम् ॥११४॥
यः कुर्य्यात् कार्त्तिके मासि कर्पूरेण तु दीपकम् ।
द्वादश्याञ्च विशेषेण तस्य पुण्यं वदामि ते ॥११५॥

कुले तस्य प्रसूता ये ये भविष्यन्ति नारद । समतीताश्च ये केचिद्येषां संख्या न विद्यते ॥११६॥
क्रीड़ित्वा सुचिरं कालं देवलोके यदृच्छया । ते सर्व्वे मुक्तिमायान्ति प्रसादाच्चक्रपाणिनः ॥११७

किञ्च—

द्यूतव्याजेन विप्रेन्द्र कार्त्तिके केशवालयम् । द्योतयेद्यो महाभाग पुनात्यासप्तमं कुलम् ॥११८॥
कार्त्तिके दीपदानन्तु कुर्य्याद्यो वैष्णवालये । धनं पुत्त्रो यशः कीर्त्तिर्भवेत्तस्य च सर्व्वदा ॥११९
यथा च मथनाद्वह्निः सर्व्वकाष्ठेषु दृश्यते । तथा च दृश्यते धर्म्मो दीपदाने न संशयः ॥१२०

---

निमिषार्द्धार्द्धमात्रेण यत् स्यात् ॥१११॥

इदानीं माहात्म्यद्वारैव नित्यतामभिप्रैति— यथेति त्रिभिः । सर्व्वकाष्ठेषु स्थितोऽपि वह्निर्यथा मथनादेव दृश्यते, प्रकटो भवति, तथा सर्व्वकर्म्मसु स्थितोऽपि धर्म्मो दीपदाने सत्येव दृश्यते, नान्यथा अत्र च संशयो नास्ति; अतो दीपदानं विना सर्व्वधर्म्मो विफलः स्यादित्यर्थः ॥१२०॥

---

मन्दिर में दीपदान एवं तदीय आयतन में दीपदान करने से महाफल लाभ होता है । जो व्यक्ति, कार्त्तिक मास में श्रीमधुसूदन के सम्मुख में दीपदान करते हैं, जगत् में मानवकुल में उत्पन्न वे कीर्त्तिशाली एवं कृत-कृतार्थ होते हैं ॥१०८-११०॥

कार्त्तिक मास में निमिषार्द्ध के अर्द्धनिमेष काल यावत् श्रीहरि-मन्दिर में दीपदान करने से जो फल लाभ होता है, शत-शत यज्ञ के द्वारा वा शत-शत तीर्थ-स्नान के द्वारा भी उस फल को प्राप्त होने की सम्भावना नहीं है । सर्वानुष्ठान शून्य, एवं सर्व पातक से पातकी होकर भी कार्त्तिक मास में दीपदान करने पर पवित्र हो सकता है, इसमें सन्देह नहीं है ॥१११-११२॥

हे नारद ! त्रिभुवन में ऐसा कोई पाप नहीं है, जिसका विनाश, कार्त्तिक मास में दीपदान करने से नहीं होता है । कार्त्तिक मास में केशव के सन्निधान में दीपदान करने से सर्व बाधारहित नित्यपद लाभ होता है । जो, सम्पूर्ण कार्त्तिक मास में अथवा केवलमात्र द्वादशी तिथि में सकर्पूर दीपदान करते हैं, उनका जो पुण्य सञ्चय होता है, वह कहता हूँ, सुनो । हे नारद ! सकर्पूर दीपदान करने से, उस दीपदाता के कुल में जो पुरुष उत्पन्न हुए हैं, भविष्य में जो पुरुष उत्पन्न होंगे, एवं जो सब व्यक्ति अतीत होगये हैं, एवं जिनकी संख्या नहीं है, वे सब ही सुदीर्घकाल स्वेच्छा से सुरलोक में विहार पूर्वक चक्रपाणि श्रीहरि की कृपा से मोक्ष प्राप्त करते हैं ॥११३-११७॥

और भी लिखा है—हे विप्रेन्द्र ! हे महाभाग ! कार्त्तिक मास में द्यूतक्रीड़ा के छल से भी केशव-मन्दिर को आलोकित करने पर उसके द्वारा स्वीय सप्तकुल पवित्र होते हैं । जो, कार्त्तिक मास में श्रीहरि-मन्दिर में दीप अर्पण करते हैं, वे सर्वदा धन, सन्तान, यशः एवं कीर्त्ति भागी होते हैं । काष्ठ घर्षण करने से जिस

किञ्च—

निर्धनेनापि विप्रेन्द्र कृत्वा चैवात्मविक्रयम् । कर्त्तव्यं दीपदानन्तु यावत् कार्त्तिक-पूर्णिमा ॥१२१

वैष्णवो न स मन्तव्यः सम्प्राप्ते कार्त्तिके मुने ।
यो न यच्छति मूढ़ात्मा दीपं केशवसद्मनि ॥१२२॥

नारदीये श्रीरुक्माङ्गदमोहिनी-संवादे—

एकतः सर्व्वदानानि दीपदानानि चैकतः । कार्त्तिके न समं प्रोक्तं दीपदो ह्यधिकः स्मृतः ॥१२३

पाद्मे च तत्रैव—

कार्त्तिकेऽखण्डदीपं यो ददाति हरिसन्निधौ । दिव्यकान्तिविमानाग्रे रमते स हरेः पुरे ॥१२४

अथ यत्र प्रदीपप्रबोधन-माहात्म्यम्

स्कान्दे तत्रैव—

पितृपक्षेऽन्नदानेन ज्यैष्ठाषाढ़े च वारिणा । कार्त्तिके तत् फलं पुंसां परदीपप्रबोधनात् ॥१२५

बोधनात् परदीपस्य वैष्णवानाञ्च सेवनात् । कार्त्तिके फलमाप्नोति राजसूयाश्वमेधयोः ॥१२६

---

आत्मविक्रयं कृत्वा वेतनादिकं कृत्वापि ॥१२१॥

वैष्णवानां चैतदावश्यकमित्याह—वैष्णव इति ॥१२२॥

एतत् कर्म्मद्वयं समं न प्रोक्तं ब्रह्मादिभिः ॥१२३॥

अखण्डदीपो रात्रिं दिनमविच्छेदेन यो ज्वलति तम् ॥१२४॥

अस्तु तावद्दीपदानमाहात्म्यं, कार्त्तिके परदीपप्रबोधनेनापि कृतार्थता स्यादित्याह—पितृपक्ष इति पञ्चभिः ॥१२५॥

---

प्रकार अग्नि दृष्ट होता है, उस प्रकार दीपदान करने पर भी धर्म दृष्ट होता है, इसमें सन्देह नहीं है ॥११८-१२०॥

और भी लिखित है—हे विप्रेन्द्र ! धनहीन व्यक्तिगण को चाहिये कि वे वेतनादि से धन संग्रह करके कार्त्तिकी पूर्णिमा में दीपदान करें । हे मुने ! कार्त्तिक मास में श्रीकेशव-भवन में दीपदान न करने से वह मूर्ख वैष्णव नाम से अभिहित नहीं हो सकता है । १२१-१२२॥

नारदपुराण के श्रीरुक्माङ्गद-मोहिनी-संवाद में लिखित है – एक ओर समस्त दान, अपर ओर कार्त्तिक दीपदान,–यह उभय समान नहीं होते हैं, किन्तु दीपदान ही सर्वाधिक होता है ॥१२३॥

पद्मपुराण के पूर्वोक्त स्थान में ही लिखित है—जो, कार्त्तिक मास में श्रीहरि के समक्ष में अखण्ड अहोरात्रव्यापी दीपदान करते हैं, वे दिव्यकान्ति युक्त विमान में आरोहण पूर्वक श्रीहरि-धाम में जाकर क्रीड़ा करते हैं ॥१२४॥

अथ तत्र परदीपप्रबोधन-माहात्म्यम्

स्कन्द पुराण के ब्रह्म-नारद-संवाद में उक्त है— पितृपक्ष में अन्नदान करने से एवं ज्यैष्ठ वा आषाढ़ मास में जलदान करने से जो फल लाभ होता है, कार्त्तिक मास में परदत्त दीप उद्दीपित करने से एवं वैष्णववृन्द की शुश्रूषा करने से राजसूय यज्ञानुष्ठान का फल एवं अश्वमेधयज्ञानुष्ठान जनित फल लाभ होता है ॥१२५-१२६॥

दीयमानन्तु ये दीपं बोधयन्ति हरेर्गृहे । परेण नृपशार्द्दूल निस्तीर्णा यमयातना ॥१२७॥
न तद्भवति विप्रेन्द्र इष्टैरपि महामखैः । कार्त्तिके यत् फलं प्रोक्तं परदीपप्रबोधनात् ॥१२८
एकादश्यां परैर्दत्तं दीपं प्रज्वाल्य मूषिका । मानुष्यं दुर्लभं प्राप्य परां गतिमवाप सा ॥१२९

अथ शिखरदीपमाहात्म्यम्

स्कान्दे तत्रैव —

यदा यदा भासयते दीपकः कलसोपरि । तदा तदा मुनिश्रेष्ठ द्रवते पापसञ्चयः ॥१३०॥

यो ददाति द्विजातिभ्यो महीमुदधिमेखलाम् ।
हरेः शिखरदीपस्य कलां नार्हति षोड़शीम् ॥१३१॥
यो ददाति गवां कोटिं सवत्सां क्षीरसंयुताम् ।
हरेः शिखरदीपस्य कलां नार्हति षोड़शीम् ॥१३२॥

सर्व्वस्वदानं कुरुते वैष्णवानां महामुने । केशवोपरि दीपस्य कलां नार्हति षोड़शीम् ॥१३३

किञ्च—

यः करोति परं दीपं मूल्येनापि महामुने । शिखरोपरि मध्ये च कुलानां तारयेच्छतम् ॥१३४

---

परेण दीयमानम् ॥१२७॥

तत् फलं साक्षाद्दृष्टमेवास्तीत्याह— एकादश्यामिति । अयमितिहासश्च पाद्मे कार्त्तिकमाहात्म्ये प्रसिद्ध एव ॥१२९॥

कलसो यः प्रासादोपरि वर्त्तते, तस्योपरि भासयते, दिशः प्रकाशयति, स्वार्थे वा इन् भासत इत्यर्थः ॥१३०

कलाम् अंशं नार्हति, तत्सहस्रमपि फलं नाप्नोतीत्यर्थः । एवमग्रेऽपि ॥१३१॥

वैष्णवानां वैष्णवेभ्यः ॥१३३॥

---

हे नृपशार्दूल ! कार्त्तिक मास में श्रीहरि-मन्दिर में परदत्त दीप प्रज्वालित करने से पुनर्वार यमयातना भोगनी नहीं पड़ती है ॥१२७॥

हे विप्रवर्य्य ! कार्त्तिक मास में अन्य कर्त्तृक प्रदत्त दीप को उद्बोधित करने से जो फल होता है, इष्टादि महायाग साधन से भी उस प्रकार फल प्राप्ति की आशा नहीं है । एक मूषिका ने एकादशी के दिन अन्य के दिये दीप को जलाया था, तज्जन्य उसको दुर्ल्लभ मनुष्य जन्म प्राप्त हुआ और अन्त में परम गति प्राप्त की थी। यह इतिहास पद्मपुराण के कार्त्तिक-माहात्म्य में प्रसिद्ध है ॥१२८-१२९॥

अथ शिखरदीपमाहात्म्यम्

स्कन्दपुराण के उक्त स्थान में लिखित है—हे मुनिश्रेष्ठ ! मन्दिर के उपरिस्थित कुम्भ के ऊपर दीप जतना दिशाओं को प्रकाशित करता है, उतनी ही पातकराशि द्रवीभूत हो जाती हैं । ब्राह्मणों को समुद्र-वेष्टित धरा दान करने से जो फल होता है, वह फल, श्रीहरि के शिखर दीपदान जनित फल के षोड़शांश के अंश के समान नहीं है ॥१३०-१३२॥

हे महामुने ! वैष्णववृन्द को सर्वस्व दान करने से जो फल होता है, वह केशव के शिखर दीपदानज फल के सोलहवें भाग के एक भाग के समान नहीं है ॥१३३॥

और भी वर्णित है—हे महामुने ! मूल्य ग्रहणपूर्वक शिखर-दीप किंवा श्रीहरिमन्दिर-दीप दान करने से भी शतकुल उद्धार हो सकता है । कार्त्तिक मास में भक्ति पूर्वक ज्योतिः द्वारा समुद्भाषित विमा तुल्यन

विमानं ज्योतिषा दीप्तं ये निरीक्षन्ति कार्त्तिके ।
केशवस्य महाभक्त्या कुले तेषां न नारको ॥१३५॥
दिवि देवा निरीक्षन्ते विष्णुदीपप्रदं नरम् । कदा भविष्यत्यस्माकं सङ्गमः पुण्यकर्म्मणा ?१३६
कार्त्तिके कार्त्तिकीं यावत् प्रासादोपरि दीपकम् ।
यो ददाति मुनिश्रेष्ठ तस्येन्द्रत्वं न दुर्ल्लभम् ॥१३७॥

अथ तत्र दीपमालामाहात्म्यम्

स्कान्दे तत्रैव—

दीपपङ्क्तेश्च रचनां सवाह्याभ्यन्तरे हरेः । विष्णोर्विमाने कुरुते स नरः शङ्खचक्रधृक् । १३८
दीपपङ्क्तेश्च रचनां कुरुते केशवालये । तस्यान्वये प्रसूतानां लक्षाणां नरकं न हि ॥१३९॥
विष्णोर्विमानं दीपाढ्यं सवाह्याभ्यन्तरे मुने ।
दीपोद्यतकरे मार्गे तेन प्राप्तं परं पदम् ॥१४०॥

भविष्ये च—

यः कुर्य्यात् कार्त्तिके मासि शोभनां दीपमालिकाम् ।
प्रबोधे चैव द्वादश्यामेकादश्यां विशेषतः ॥१४१॥
सूर्य्यायुतप्रकाशस्तु तेजसा भासयन् दिशः । तेजोराशि-विमानस्थो जगदुद्द्योतयंस्त्विषा ॥१४२
यावत् प्रदीपसंख्या तु घृतेनापूर्य्य बोधिता । तावद्वर्षसहस्राणि विष्णुलोके महीयते ॥१४३॥

---

अस्तु तावच्छिखरदीपस्य दानमाहात्म्यं, तद्दर्शनादपि कृतार्थता स्यादित्याह— विमानमिति । केशवस्य विमानं विमानवदाकाशगमुच्चतरं प्रासादमित्यर्थः ॥१३५॥
अतएव दिवि स्थिता निरीक्षन्ते । पुण्यकर्म्मणा दीपदानेन नरेण सह ॥१३६॥
सवाह्याभ्यन्तरे विमानस्य वहिरन्तश्चेत्यर्थः । शङ्खचक्रधृक् सारूप्यं प्राप्नोतीत्यर्थ ॥१३८॥
दीपाढ्यं येन कृतमिति शेषः ॥१४०॥
बोधिता प्रज्वालिता, बोधितानां प्रदीपानां यावती संख्या इत्यर्थः ॥१४३॥

---

श्रीहरि निकेतन दर्शन करने से ही उस दर्शक के वंश में किसी को भी नरक में जाना नहीं पड़ता । विष्णु-भवन में दीपदानकारी को स्वर्गस्थ देवगण, इस प्रकार मानकर दर्शन करते हैं कि, कब इन पुण्यवान् दीपदाता के सहित हमारा मिलन होगा ? हे मुनिश्रेष्ठ ! कार्त्तिक मास में पौर्णमासी यावत् मन्दिर के उपरि भाग में दीपदान करने से उन दाता के पक्ष में इन्द्रत्व प्राप्ति भी दुर्ल्लभ नहीं है ॥१३४-१३७ ।

अथ तत्र दीपमालामाहात्म्यम्

स्कन्दपुराण के उक्त स्थान में ही उक्त है—विष्णु-मन्दिर के वहिर्भाग में एवं अभ्यन्तर में दीपमाला रचना करने पर हरिसारूप्य लाभ होता है । श्रीहरि-मन्दिर में दीपमाला रचना करने से दीपमालरचक के वंश के शतलक्ष व्यक्ति को नरक में जाना नहीं पड़ता । हे मुने ! जो, विष्णु विमान के वहिर्भाग में एवं अभ्यन्तर में दीपमाला अर्पण करते हैं, वे उस दीप के प्रकाश से आलोकित पथ से श्रीहरि के परम पद में प्रस्थान करते हैं ॥१३८-१४०॥

भविष्य पुराण में लिखत है— जो, कार्त्तिक मास मैं विशेषतः श्रीहरि के उत्थान के समय द्वादशी में किंवा एकादशी में मनोहर दीपमाला की रचना करते हैं, वे अयुत सूर्य्यप्रभ होकर तेज से चतुर्द्दिक उद्-

अथ आकाशदीपमाहात्म्यम्

पाद्मे तत्रैव--

उच्चैः प्रदीपमाकाशे यो दद्यात् कार्त्तिके नरः ।
सर्व्वं कुलं समुद्धृत्य विष्णुलोकमवाप्नुयात् ॥१४४॥

विष्णुकेशवमुद्दिश्य दीपं दद्यातु कार्त्तिके । आकाशस्थं जलस्थञ्च शृणुतास्यापि यत् फलम् ॥१४५

धनं धान्यं समृद्धिश्च पुत्रवानीश्वरो गृहे । लोचने च शुभे तस्य विद्वानपि च जायते ॥१४६॥

किञ्च—

विप्रवेश्मनि यो दद्यात् कार्त्तिके मासि दीपकम् । अग्निष्टोमफलं तस्य प्रवदन्ति मनीषिणः ॥१४७

चतुष्पथेषु रथ्यासु ब्राह्मणावसथेषु च । वृक्षमूलेषु गोष्ठेषु कान्तारे गहनेषु च ।
दीपदानाद्धि सर्व्वत्र महाफलमवाप्नुयात् ॥१४८॥

आकाशदीपदानमन्त्रः

तत्रैव —

दामोदराय नभसि तुलायां लोलया सह । प्रदीपन्ते प्रयच्छामि नमोऽनन्ताय वेधसे ॥१४९॥

इति ।

---

अस्यापि यत् फलं तत् शृणुत, भो विप्राः ॥१४५॥

एवमाकाशे ज्वलद्दीपदानमाहात्म्यं लिखित्वा आदि-शब्दलिखनेन गृहीतं ब्राह्मणगृहादौ दीपदानमाहात्म्यं लिखति—विप्रेति द्वाभ्याम् ॥१४७॥

रथ्यासु—राजमार्गेषु ॥१४८॥

तुलायां कार्त्तिके इत्यर्थः । लोलया लक्ष्म्या, यद्वा, लक्ष्म्यंशकत्वाभिप्रायेण प्रेमविशेषेण वा चञ्चलया, अकारप्रश्लेषेण वा धीरया श्रीराधया सह सहिताय ॥१४९॥

---

भासित करके तेजः पुञ्जवान् विमान में अधिष्ठित होकर निज कान्तिराशि द्वारा जगत् को समुद्भासित करते हैं। वे घृत प्रदीप जितनी संख्या में प्रज्वालित करते हैं, दीप संख्या के अनुसार उतने वर्ष यावत् वे विष्णुलोक में विराजित होते हैं ॥१४१-१४३॥

अथ आकाशदीपमाहात्म्यम्

पद्मपुराण के उसी स्थान में लिखा है—कार्त्तिक मास में आकाश में उच्च भाव से दीपदान करने से अपने निखिल कुलों का परित्राण होता है। एवं विष्णुलोक प्राप्त होता है। कार्त्तिक मास में श्रीहरि के उद्देश्य में आकाश में किंवा जल में दीपदान करने पर जो फल लाभ होता है, उसका श्रवण करो। इस प्रकार जो दीपदान करते हैं, वे धन, धान्य एवं समृद्धिशाली, पुत्रवान् एवं सर्वैश्वर्य्यवान् होते हैं, उनके नयनयुगल कल्याणमय होते हैं, एवं वे विद्वान् होकर भूमण्डल में अवतीर्ण होते हैं ॥१४४-१४६॥

और भी उक्त है—मनीषिवृन्द कहे हैं, कि कार्त्तिक मास में जो व्यक्ति, विप्रभवन में दीपदान करते हैं, उनको अग्निष्टोम अनुष्ठान जनित फल मिल जाता है, चतुष्पथ, राजपथ, ब्राह्मण निकेतन, तरुमूल, गोष्ठ कान्तार एवं गहनस्थल, यह सब स्थान में दीपार्पण करने से महाफल होता है ॥१४७-१४८॥

आकाशदीपदानमन्त्रः

उक्त स्थान में उक्त है—कार्त्तिक मास में गगनस्थ लक्ष्मी समन्वित दामोदर को प्रदीप प्रदान कर रहा हूँ। हे अनन्त ! हे विधातः ! आपको नमस्कार ॥१४९॥

अथ देशविशेषे कार्त्तिकमाहात्म्यविशेषः

पाद्मे तत्रैव—

यत्र कुत्रापि देशे यः कार्त्तिकस्नानदानतः । अग्निहोत्रसमफलः पूजायाञ्च विशेषतः ।।१५०।।

कुरुक्षेत्रे कोटिगुणो गङ्गायाञ्चापि तत्समः । ततोऽधिकः पुष्करे स्याद्द्वारकायाञ्च भार्गव ।

कृष्णसालोक्यदो मासः पूजास्नानैश्च कार्त्तिकः ।।१५१।।

अन्याः पुर्य्यस्तत्समाना मुनयो मथुरां विना । दामोदरत्वं हि हरेस्तत्रैवासीद्यतः किल ।।१५२

मथुरायां ततश्चोर्ज्जे वैकुण्ठप्रीतिवर्द्धनः । कार्त्तिके मथुरायां वै परमावधिरिष्यते ।।१५३।।

यथा माघे प्रयागः स्याद्वैशाखे जाह्नवी यथा । कार्त्तिके मथुरा सेव्या ततोत्कर्षः परो नहि ।।१५४

मथुरायां नरैरूर्ज्जे स्नात्वा दामोदरोऽर्च्चितः ।

कृष्णरूपा हि ते ज्ञेया नात्र कार्य्या विचारणा ।।१५५।।

दुर्लभः कार्त्तिको विप्र मथुरायां नृणामिह । यत्रार्च्चितः स्वकं रूपं भक्तेभ्यः संप्रयच्छति ।।१५६

भुक्तिं मुक्तिं हरिर्दद्यादर्च्चितोऽन्यत्र सेविनाम् । भक्तिञ्च न ददात्येष यतो वश्यकरी हरेः ।।१५७

---

भार्गव हे शौनक, द्वारकायाञ्च कृष्णसालोक्यदः ।।१५१।।

हे मुनयः, अन्या अयोध्यादयः, तत्र मथुरायां कार्त्तिके च ।।१५२।।

वैकुण्ठे श्रीकृष्णे प्रीतिः प्रेमा, तस्य वर्द्धनः अतिशयेनोत्पादकः । अत एव परमावधिः फले परमकाष्ठां प्राप्त इत्यर्थः ।।१५३।।

ततः कार्त्तिके मथुरासेवनात्, विसर्गलोपेऽपि सन्धिरार्षः, तथेति पाठेऽपि स एवार्थः ।।१५४।।

नरैर्यैः, कृष्णं रूपयन्ति पश्यन्तीति तथा ते, यद्वा, कृष्णवत् पूज्या इति भावः । यद्वा, तत्सारूप्यं प्राप्ता इति ज्ञेया इत्यर्थः ।।१५५।।

अन्यत्र श्रीमथुराव्यतिरिक्त-स्थाने, सेविनामर्च्चनादिकारिणां तेभ्यः ।।१५७।।

---

अथ देशविशेषे कार्त्तिकमाहात्म्यविशेषः

पद्मपुराण के उक्त स्थान में लिखित है—जिस किसी स्थान में क्यों न हो, कार्त्तिक मास में स्नान एवं दान करने से अग्निष्टोम के समान फल होता है । विशेषतः पूजा करने से उससे भी अधिक फल होता है । साधारण स्थान की अपेक्षा, कुरुक्षेत्र में कोटिगुण अधिक फल होता है । गङ्गा में स्नान करने से उसके समान फल लाभ होता है, एव पुष्कर में स्नान करने से उससे भी अधिक फल लाभ होता है । हे भार्गव ! कार्त्तिक मास में द्वारका में पूजा एवं स्नान करने से कृष्ण सलोक्य लाभ होता है ।।१५०-१५१।।

हे मुनिगण ! मथुरा व्यतीत अयोध्यादि अन्यान्य पुरी उक्त फल के समान फल देती हैं । किन्तु मथुरा के समान फल को देने वाली पुरी नहीं हैं । कारण, इस मथुरा में ही श्रीहरि का दामोदरत्व प्रकाशित होता है । कार्त्तिक मास में मथुरा में स्नान एवं पूजादि करने से श्रीहरि परमप्रीत होते हैं । अतएव कार्त्तिक मास में मथुरा में फल का आधिक्य है । जिस प्रकार माघमास में प्रयाग एवं वैशाखमास में जाह्नवी आराधनीया है, उस प्रकार कार्त्तिक मास में मथुरा की आराधना करनी चाहिये । इससे ही अत्युत्कर्ष होता है । जो लोक, मथुरा में कार्त्तिक मास में स्नान करके दामोदर की पूजा करते हैं, वे नि सन्देह कृष्ण सारूप्य लाभ करते हैं ।।१५२-१५५।।

हे विप्र ! जहाँ पर श्रीहरि पूजित होकर भक्तवृन्द को निज रूप प्रदान करते हैं, उस मथुरापुरी मानव

सा त्वञ्जसा हरेर्भक्तिर्लभ्यते कार्त्तिके नरैः। मथुरायां सकृदपि श्रीदामोदरपूजनात् ॥१५८॥
मन्त्रद्रव्यविहीनञ्च विधिहीनञ्च पूजनम्। मन्यते कार्त्तिके देवो मथुरायां यदर्च्चनम् ॥१५९॥
यस्य पापस्य युज्येत मरणान्ता विनिष्कृतिः। तच्छुद्ध्यर्थमिदं प्रोक्तं प्रायश्चित्तं सुनिश्चितम्।
कार्त्तिके मथुरायां वै श्रीदामोदरपूजनम् ॥१६०॥
कार्त्तिके मथुरायां वै पूजनाद्दर्शनाद्ध्रुवः। शीघ्रं सम्प्राप्तवान् बालो दुर्ल्लभं योगतत्परैः ॥१६१
सुलभा मथुरा भूमौ प्रत्यब्दं कार्त्तिकस्तथा। तथापि संसरन्तीह नरा मूढ़ा भवाम्बुधौ ॥१६२
किं यज्ञैः किन्तपोभिश्च तीर्थैरन्यैश्च सेवितैः।
कार्त्तिके मथुरायाञ्चेदर्च्च्यते राधिकाप्रियः ? ॥१६३॥
यानि सर्व्वाणि तीर्थानि नदा नद्यः सरांसि च।
कार्त्तिके निवसन्त्यत्र माथुरे सर्व्वमण्डले ॥१६४॥
कार्त्तिके जन्मसदने केशवस्य च ये नराः। सकृत् प्रविष्टाः श्रीकृष्णं ते यान्ति परमव्ययम् ॥१६५

---

तच्च यथाकथञ्चित् पूजनेन सिध्येदित्याह— मन्त्रेति ॥१५९॥

न चात्र कथञ्चित् पापे जातेऽपि प्रायश्चित्तान्तरापेक्षेत्याह—यस्येति सार्द्धेन ॥१६०॥

तत् फलञ्च न केवलं शास्त्रप्रमाणकं, किन्तु साक्षादनुभवप्रमाणकञ्चेत्याह— कार्त्तिक इति। वै प्रसिद्धौ, योगतत्परैः सनकादिभिरपि दुर्ल्लभं श्रीभगवद्दर्शनं बालोऽपि शीघ्रमेव मासपञ्चकेन सम्यक् प्रकर्षेण आप्तवान् लेभे ॥१६१॥

कृपया तद्विमुखान् शोचन्निवाह— सुलभेति पञ्चभिः। भूमौ भारतवर्षे, मध्यदेशान्तर्वर्त्तित्वात् ॥१६२॥

यज्ञादिफलञ्च तेनैव सिध्येदित्याह—किमिति। राधिकाप्रियः—श्रीदामोदरः ॥१६३॥

कार्त्तिकेऽन्यत्र गमनञ्च विफलमेवेत्याशयेनाह—यानीति ॥१६४॥

अस्तु तावत् समस्तमथुरासेवनं श्रीदामोदरपूजनं वा, श्रीभगवज्जन्मस्थानप्रवेशमात्रेणैव श्रीवैकुण्ठलोकप्राप्तिरित्याह—कार्त्तिक इति ॥१६५॥

---

वृन्द के पक्ष अतीव दुष्प्राप्य है। श्रीहरि, मथुरा व्यतीत अन्यत्र पूजित होकर सेवकगण को भुक्ति मुक्ति फल अर्पण करते हैं, यह सत्य है, किन्तु भक्ति अर्पण नहीं करते हैं। कारण, श्रीहरि, भक्ति के वशीभूत हैं, किन्तु जो लोक, कार्त्तिक मास में मथुरा में एक बार मात्र श्रीदामोदर की पूजा करते हैं, वे सब ही सुख पूर्वक श्रीहरि-भक्ति लाभ कर सकते हैं ॥१५६-१५८॥

कार्त्तिक मास में मथुरा में, मन्त्र रहित, द्रव्य रहित, एवं विधि रहित पूजा को भी श्रीहरि उत्तम अर्चन मानकर ग्रहण करते हैं। मृत्यु के पश्चात् जिस पाप का प्रायश्चित्त है, उसको शुद्ध करने के निमित्त कार्त्तिक मास में मथुरा में श्रीहरि की पूजा ही सुनिश्चित प्रायश्चित्त है। ध्रुव, शिशु होकर भी कार्त्तिक मास में प्रसिद्ध मथुरा में श्रीदामोदर का अर्चन कर सत्वर योगनिष्ठ सनकादि महात्मागण के पक्ष में अति दुर्लभ श्रीभगवान् का दर्शन पाया था ॥१५९-१६१॥

भारतवर्ष में मथुरा सुलभ है, और कार्त्तिक मास भी सुलभ है। किन्तु हाय ! तथापि मूढ़ नरगण, भवसागर में निपतित हो रहे हैं। कार्त्तिकमास में मथुरा में राधिकाप्रिय श्रीहरि की पूजा करने से पुनर्वार यज्ञ, तप एवं अन्यान्य तीर्थ सेवन का प्रयोजन ही क्या है ? ॥१६२-१६३॥

कार्त्तिक मास में समस्त मथुरा मण्डल के नद, नदी, सरोवरादि में समस्त तीर्थ समागत होते हैं। कार्त्तिक मास में श्रीहरि के जन्म-स्थान मथुरापुरी में एक बार मात्र प्रवेश करने से ही परम अव्यय

परोपहासमुद्दिश्य कार्त्तिके हरिपूजया । मथुरायां लभेद्भक्त्या किं पुनः श्रद्धया नरः ?।।१६६ इति ।

इत्थं कार्त्तिककृत्यानि व्यक्तान्येव स्वतोऽभवन् । तत्र किञ्चिद्विशेषेण तद्विधिर्लिख्यतेऽधुना ।।१६७

अथ कार्त्तिककृत्यविधि.

तत्रोपक्रमकालः

श्रीकृष्णसत्यासंवादीय-कार्त्तिकमाहात्म्ये—

आश्विनस्य तु मासस्य या शुक्लैकादशी भवेत् ।
कार्त्तिकस्य व्रतानीह तस्यां कुर्य्यादतन्द्रितः ।।१६८।।
नित्यं जागरणायान्त्ये यामे रात्रेः समुत्थितः ।
शुचिर्भूत्वा प्रबोध्याथ स्तोत्रैर्नीराजयेत् प्रभुम् ।।१६९।।

---

तत्राशक्तौ च यत्र कुत्रापि श्रीमथुरामध्ये श्रीकृष्णपूजाभासेनापि दुर्लभं लभत इत्याह—परोपेति । अत्र चेतिहासस्तत्रैव ख्यातः, यथा 'धूम्रकेशनामा महापातकी राजकुमारः पित्रा विवासितो दस्युवृत्त्या क्रमेण वृन्दावनं गतो मथुरापुर्य्यां चौर्य्यार्थं गतो वेश्यारतस्तत्प्रीत्यै वृन्दावनान्तर्वर्त्तिभगवत्परसत्यव्रताख्यविप्रचेष्टित-मुपहसन् प्रभाते राजपुरुषैः प्राप्य हतो धर्म्मराजेन बहुसत्कृतस्तस्माद्धर्म्मतत्त्वं प्राप्य वैकुण्ठलोकं गतः' इति ।।१६६।।

इत्थं – माहात्म्यादिलिखन-प्रकारेण । अतश्च पूर्व्वलिखितान्यन्यान्यपि कार्त्तिककृत्यानि ज्ञेयानीति भावः ।।१६७।।

कार्त्तिके शेषयामजागरणस्य माहात्म्यविशेषोक्तेरतदत्र विशेषतो लिखितम् । एवमग्रेऽप्यूह्यम्, उत्थानादिकं चान्यत् साधारणमेवेति दिक् ।।१६९।।

---

श्रीकृष्ण को प्राप्त कर सकता है । कार्त्तिक मास में मथुरा में श्रीहरि की पूजा करना दूसरी बात है, वहाँ उस मास में श्रीहरि पूजक को देखकर उपहास करने पर भी जब दुर्लभ पद लाभ होता है, तब भक्तिपूर्वक पूजा करने से जो फल होता है, वह वर्णनातीत है । पद्मपुराण में वर्णित है,– धुम्रकेश नामक महापातकी राजकुमार था, पिता कर्त्तृक निर्वासित होकर वह दस्युवृत्ति को अवलम्बन कर क्रमशः वृन्दावन आगया था, चोरी करने के निमित्त वह मथुरा जाया करता था एवं वेश्यासक्त भी होगया । एक दिन वह वृन्दावन में भगवद्भक्तिपरायण सत्यव्रत विप्र के आचरण को देखकर उपहास करने लगा, इधर राजपुरुषों ने उसका अन्वेषण कर दिया, वृन्दावन में राजपुरुषों ने उसको पकड़ लिया, एवं मार डाला । धर्मराज ने उसको सम्मान किया, अनन्तर वह धर्मतत्त्व को प्रकाश कर वैकुण्ठ चला गया ।।१६४-१६६।।

इस प्रकार कार्त्तिक कृत्यसमूह स्वतः ही सुव्यक्त है, अधुना तन्मध्ये जो कुछ विशेष है, उसका वर्णन किया जाता है ।।१६७।।

अथ कार्तिककृत्यविधिः

तत्रोपक्रमकालः

श्रीकृष्णसत्यासंवादीय कार्त्तिक माहात्म्य में लिखित है—आश्विन मास के शुक्लपक्ष की एकादशी तिथि में अनलस होकर कार्त्तिक व्रत ग्रहण करना चाहिये । कार्त्तिकमास में प्रतिदिन रात्रि के शेष याम में जाग्रत होकर एवं पवित्र होकर स्तव पाठ करते करते श्रीप्रभु को जागरित करे । अनन्तर नीराजन करना चाहिये ।।१६८-१६९।।

निशम्य वैष्णवान् धर्म्मान् वैष्णवैः सह हर्षितः ।
कृत्वा गीतादिकं प्रातर्देवं नीराजयेत् प्रभुम् ॥१७०॥

नद्यादौ च ततो गत्वाचम्य सङ्कल्पमाचरेत् । प्रभुं प्रार्थ्याथ तस्मै च दद्यादर्घ्यं यथाविधि ॥१७१

तत्र सङ्कल्पमन्त्रः

कार्त्तिकेऽहं करिष्यामि प्रातःस्नानं जनार्द्दन । प्रीत्यर्थं तव देवेश दामोदर मया सह ॥१७२॥ इति ।

अथ प्रार्थनामन्त्रः

तव ध्यानेन देवेश जलेऽस्मिन् स्नातुमुद्यतः ।
त्वत्प्रसादाच्च मे पापं दामोदर विनश्यतु ॥१७३॥ इति।

अथ अर्घ्यमन्त्रः

व्रतिनः कार्त्तिके मासि स्नातस्य विधिवन्मम । दामोदर गृहाणार्घ्यं दनुजेन्द्रनिसूदन ॥१७४॥
नित्ये नैमित्तिके कृत्स्ने कार्त्तिके पापशोषणे ।
गृहाणार्घ्यं मया दत्तं राधया सहितो हरे ॥१७५॥ इति ।

तिलैरालिप्य देहं स्वं नामोच्चारणपूर्व्वकम् । स्नात्वा सविधिना सन्ध्यामुपास्य गृहमाव्रजेत्॥१७६

पुनर्न्नीराजयेदिति मङ्गलनीराजनं लिखितम् ॥१७०॥

यथाविधीत्यस्य पूर्व्वत्रापि सर्व्वत्रैवानुषङ्गः, प्रातरुत्थानादिविधिश्च पूर्व्वमेव लिखितोऽस्ति । अपेक्ष्यस्तद्विशेषस्तु तत्र एव ज्ञेयः, अत्र च मध्ये मध्ये किञ्चिद्विशेषलिखनाय पुनस्तत् किञ्चिदुल्लिखितम् ॥१७१॥

मा लक्ष्मीः श्रीराधारूपा, तया सहितस्य तव प्रीत्यर्थम् ॥१७२॥

स्वं स्वकीयं देहं, नाम श्रीकृष्ण-नारायणेत्यादि, तदुच्चारणपूर्व्वकम् ॥१७६॥

वैष्णव धर्म श्रवण पूर्वक वैष्णववृन्द के सहित आनन्द से सङ्गीतादि करके प्रभात काल में भगवान् की मङ्गल आरात्रिक करे ॥१७०॥

अनन्तर नदी प्रभृति में जाकर आचमन पूर्वक सङ्कल्प करके प्रभु समीप में प्रार्थना एवं विधानानुसार अर्घ्य समर्पण करे ॥१७१॥

तत्र सङ्कल्पमन्त्रः

हे जनार्दन ! हे देवेश ! हे दामोदर ! श्रीमती राधिका एवं आपकी प्रसन्नता हेतु मैं कार्त्तिक मास में प्रातः स्नान करूँगा ॥१७२॥

अथ प्रार्थनामन्त्रः

हे देवेश ! तुम्हारी चिन्ता करते करते इस जगत में स्नान का उद्योग कर रहा हूँ । हे दामोदर ! तुम्हारे प्रसाद से मदीय पाप विनष्ट हो ॥१७३॥

अथ अर्घ्यमन्त्रः

हे दामोदर ! मैंने कार्त्तिक मास में व्रत धारण पूर्वक यथा विधि प्रातः स्नान किया है । हे दनुजेन्द्र निसूदन ! मद्दत्त यह अर्घ्य ग्रहण करो । हे हरे ! कार्त्तिक मास में नित्य नैमित्तिक समस्त क्रिया ही पापहर हैं, अतः मैंने आपको यह अर्घ्य समर्पण किया है । आप श्रीराधिका के सहित इसको ग्रहण कीजिये ॥१७४-१७५॥

अनन्तर तिल द्वारा स्वीय अङ्ग लेपनपूर्वक श्रीकृष्ण नारायण इत्यादि नामोच्चारण करते करते यथा विधि स्नान और सन्ध्योपासना करके गृह में प्रत्यावर्त्तन करे ॥१७६॥

उपलिप्याथ देवाग्रे निर्म्माय स्वस्तिकं प्रभुम् । तुलसी-मालती-पद्मागस्त्यपुष्पादिनार्च्चयेत् ।।१७७
नित्यं वैष्णवसङ्गत्या सेवेत भगवत्कथाम् । सर्पिषाहर्निशं दीपं तिलतैलेन चार्च्चयेत् ।।१७८।।
विशेषतश्च नैवेद्यान्यर्पयेदाचरेत्तथा । प्रणामांश्च यथाशक्त्या एकभक्तादिकं व्रतम् ।।१७९।।

तथा च पाद्मे तत्रैव—

प्रातरुत्थाय शौचादि कृत्वा गत्वा जलाशये ।
कृत्वा च विधिवत् स्नानं ततो दामोदरार्च्चनम् ।।१८०।।

किञ्च—

मौनेन भोजनं कार्य्यं कार्त्तिके व्रतधारिणा । घृतेन दीपदानं स्यात्तिलतैलेन वा पुनः ।।१८१।।
दिनञ्च कृष्णकथया वैष्णवानाञ्च सङ्गमैः । नीयतां कार्त्तिके मासि सङ्कल्पव्रतपालनम् ।।१८२
आश्विने शुक्लपक्षस्य प्रारम्भे हरिवासरे । अथवा पौर्णमासीतः संक्रान्तौ वा तुलागमे ।।१८३
दीपदानमखण्डञ्च दद्याद्वै विष्णुसन्निधौ । देवालये तुलस्यां वा आकाशे वा तदुत्तमम् ।।१८४

किञ्च—

रजतं कनकं दीपान्मणिमुक्ताफलादिकम् । दामोदरस्य प्रीत्यर्थं प्रदद्यात् कार्त्तिके नरः ।।१८५

---

आदि-शब्देन केतकीविल्वपत्रादि ।।१७७।।

विशेषतः अन्यमासतः किञ्चिदाधिक्येनोत्तमतया चेत्यर्थः । तथा विशेषत प्रणामांश्चाचरेत् । यथाशक्तीत्यस्य पूर्व्वे परेऽपि सर्व्वत्रैव सम्बन्धः । एकभक्तचादिकं व्रतमप्याचरेत् । आदि-शब्देन एकान्तरोपवासादि ।।१७९।।

स्वलिखितं पुराणोक्तिभिः प्रमाणयन् परं कृत्यावधि दर्शयति—प्रातरित्यादिना भाविनीत्यन्तेन ।।१८०।।

सङ्कल्पस्य व्रतस्य च, यद्वा, सङ्कल्पेन यद्गृहीतं व्रतं, तस्य पालनम् ।।१८२।

व्रतग्रहणकालमाह—आश्विने इति । हरिवासरे एकादश्यां, तस्य वैष्णवपक्षत्वादादौ निर्द्देशः । अशक्तचापेक्षया विकल्प उक्तः ।।१८३।।

---

तत्पश्चात् देवता के समीप में उपलेपन पूर्वक स्वस्तिक निर्म्माण करके तुलसी, मालती, पद्म एवं अगस्त्य प्रभृति पुष्प के द्वारा हृषीकेश की पूजा करे । कार्त्तिक मास में प्रत्यह वैष्णववृन्द के सहित मिलित होकर भगवत् कथा सेवन करे एवं दिवा रात्र धूप एवं तिल तैल की दीप के द्वारा पूजा करे । अन्यान्य मास की अपेक्षा कार्त्तिक मास में विशेष नैवेद्य प्रभृति अर्पण एवं नमस्कारादि करके शक्तचनुसार एकभक्त आदि व्रत करना चाहिये ।।१७७-१७९।।

उस विषय में पद्मपुराण के उक्त स्थान में लिखित है—प्रातःकाल में शय्या से उठकर शौचादि क्रिया समापन करे । अनन्तर जलाशय में जाकर स्नान पूर्वक दामोदर की पूजा करे ।।१८०।।

और भी लिखा है—कार्त्तिक मास में मौनी रहकर भोजन करना एव घृत दीप अथवा तिल तैल दीप प्रदान करना अतीव कर्त्तव्य है । कार्त्तिक मास में वैष्णववृन्द के सहित मिलित होकर श्रीकृष्ण-कथा द्वारा दिनातिवाहित करके सङ्कल्पित व्रत रक्षा करे । आश्विन मास के शुक्लपक्ष की एकादशी, पूर्णिमा, वा तुला संक्रमण में कार्त्तिक व्रतारम्भ करे । कार्त्तिक मास में श्रीहरि सन्निधान में अथवा तुलसी समीप में किंवा गगन में यथारीति उत्तम दीपदान करे ।।१८१-१८४।।

और भी लिखा है—कार्त्तिक मास में दामोदर की प्रसन्नता निबन्धन स्वर्ण, रौप्य, दीप, मणि, मुक्ता एवं फल प्रभृति प्रदान दामोदर को करे ।।१८५।।

स्कान्दे च श्रीरुक्माङ्गदमोहिनीसंवादे—

न गृहे कार्त्तिके कुर्य्याद्विशेषेण तु कार्त्तिकम् ।
तीर्थे तु कार्त्तिकीं कुर्य्यात् सर्व्वयत्नेन भाविनि ॥१८६॥ इति ।

अथ कार्त्तिके वर्ज्ज्यानि

तत्रैव ब्रह्मनारदसंवादे —

कार्त्तिके तु विशेषेण राजमाषांश्च भक्षयन् । निष्पावान् मुनिशार्द्दूल यावदाहूतनारकी ॥१८७
कलिङ्गानि पटोलानि वृन्ताकं सन्धितानि च । न त्यजेत् कार्त्तिके मासि यावदाहूतनारकी ॥१८८

कार्त्तिके मासि धर्म्मात्मा मत्स्यं मांसं न भक्षयेत् ।
तत्रैव यत्नतस्त्याज्य शाशकं शौकरं तथा ॥१८९॥

किञ्च—

परान्नं परशय्याञ्च परदायं पराङ्गनाम् । सर्व्वदा वर्ज्जयेत् प्राज्ञो विशेषेण तु कार्त्तिके ॥१९०
तैलाभ्यङ्गं तथा शय्यां परान्नं कांस्यभोजनम् । कार्त्तिके वर्ज्जयेद्यस्तु परिपूर्णव्रती भवेत् ॥१९१

सम्प्राप्ते कार्त्तिके दृष्ट्वा परान्नं यस्तु वर्ज्जयेत् ।
दिने दिने तु कृच्छ्रस्य फलं प्राप्नोति मानवः ॥१९२॥

---

विशेषेणेति अन्यदापि भक्षयन् नारक्येव, कार्त्तिके तु भक्षयन् विशेषतो यावदाहूतनारकीत्यर्थः ॥१८७॥

तत्रैवेति धर्म्मापेक्षया मांसञ्च न भक्षयेदेव, यदि वा कश्चिन्महारोगग्रस्तस्तदभावाद्वा रोगी स्यात्तदा तेनापि यत्नतः शशशूकरयोर्मांसं वर्ज्जनीयमेवेत्यर्थः ॥१८९॥

कार्त्तिके तु विशेषेण वर्ज्जयेदिति तत् सङ्कल्पादिकमपि न कुर्य्यादित्यर्थः ॥१९०॥

---

स्कन्द पुराण के श्रीरुक्माङ्गद-मोहिनी-संवाद में उक्त है—हे भाविनी ! विशेषतः कार्त्तिक मास में घर में कार्त्तिक व्रत का अनुष्ठान नहीं करना चाहिये । सर्वथा यत्न पूर्वक तीर्थ स्थान में ही उसका अनुष्ठान करना चाहिये ॥१८६॥

अथ कार्त्तिके वर्ज्ज्यानि

उक्त पुराण के ब्रह्म-नारद-संवाद में उक्त है—हे मुनिशार्दूल ! कार्त्तिक मास में शतमाष (बरबटी) निष्पाव (सिम, शिम्बी) भोजन करने से आप्रलय नरक में निवास होता है । जो व्यक्ति, कार्त्तिक मास में कलिङ्ग (इन्द्रयव) पटोल, वृन्ताक (बैंगन) और सन्धित (आसव, अचार दो चार राशि से बना हुआ एक व्यञ्जन) वर्जन नहीं करता है, उसको प्रलय काल तक नरक में वास करना पड़ता है । धार्मिक व्यक्ति के पक्ष में कार्त्तिक मास में मत्स्य, मांस भोजन नहीं करना चाहिये । भयङ्कर पीड़ित अवस्था में मांस व्यतीत प्राणनाश की सम्भावना हो तो उस स्थान में शशक (खरगोश) और शूकर मांस यत्नपूर्वक वर्जन करे । ॥१८७-१८९॥

और भी लिखा है—परान्न, पराई शय्या, और परदार (पर से विवाहिता स्त्री), परधन, वेश्यादि,- यह सब कार्त्तिक मास में सर्वदा त्यागना बुद्धिमान् मानव का कर्त्तव्य है । कार्त्तिक मास में तैलाभ्यङ्ग, शय्या, परान्न, कांस्यपात्र में भोजन, यह सब वर्जन करने से व्रत सम्पूर्ण होता है । कार्त्तिक मास समागत देखकर जो मानव परान्न वर्जन करता है, उसको दिनों दिन कृच्छ्र व्रतानुष्ठान का फल मिल जाता है । ॥१९०-१९२॥

तत्रैव रुक्माङ्गदमोहिनीसंवादे—

कार्त्तिके वर्ज्जयेत्तैलं कार्त्तिके वर्ज्जयेन्तधु ।
कार्त्तिके वर्ज्जयेत् कांस्यं कार्त्तिके शुक्लसन्धितम् ॥१९३॥
न मत्स्यं भक्षयेन्मांसं न कौर्म्मं नान्यदेव हि ।
चाण्डालः स भवेत् सुभ्रु कार्त्तिके मांसभक्षणात् ॥१९४॥

अथ श्रीराधादामोदरपूजाविधिः

पाद्मे तत्रैव—

ततः प्रियतमा विष्णो राधिका गोपिकासु च । कार्त्तिके पूजनीया च श्रीदामोदरसन्निधौ ॥१९५

द्विजं दामोदरं कृत्वा तत्पत्नीं राधिकां तथा ।
कार्त्तिके पूजनीयौ तौ वासोऽलङ्कारभोजनैः ॥१९६॥
राधिकाप्रतिमां विप्राः पूजयेत् कार्त्तिके तु यः ।
तस्य तुष्यति तत्प्रीत्यै श्रीमान् दामोदरो हरिः । १९७॥ इति ।
दामोदराष्टकं नाम स्तोत्रं दामोदरार्च्चनम् ।
नित्यं दामोदराकर्षि पठेत् सत्यव्रतोदितम् ॥१९८॥

---

शुक्लं काञ्जिकादिपर्य्युषिताम्लद्रव्यं सन्धितञ्च वर्ज्जयेत् ॥१९३॥

ततः पूर्व्वजन्मकृताराधनाद्धेतोः, गोपिकासु मध्ये प्रियतमा, तद्वृत्तञ्च तत्रैव प्रथितम् । यथा श्रीगोपाल-देवस्य श्रीमूर्त्तेः सौन्दर्य्यविशेषं विलोक्य तेन सह क्रीड़ितुकामांशेनावतीर्य्य योषिद्विशेषेण प्रेमनृत्यादिना तमाराध्य तदीप्सया तद्योग्य-तद्दिव्यरूपा भूत्वा तदेकभक्तश्रीब्राह्मणमादाय तेन सह स्वयमेव सर्व्वांशैरवतीर्य्य गोपश्रीवृषभानुकन्याऽभूदिति ॥१९५॥

तस्याः—श्रीराधिकायाः, प्रीत्यै – सन्तोषार्थम् ॥१९७॥

नित्यं पठेत्, दाम दरमाकृष्टुं वशीकर्त्तुं शीलमस्य, सत्यव्रतनाममुनिना उदितं प्रोक्तम् । यद्वा, तस्मादुदितं पूर्व्वसिद्धमेवास्मात् प्रकटतां गतमित्यर्थः ॥१९८॥

---

उक्त पुराण में श्रीरुक्माङ्गद-मोहिनी-संवाद में लिखा है – कार्तिक मास में तैल, मधु, कांस्य, शुक्ल (काञ्जिक प्रभृति पर्य्युषित अम्ल द्रव्य) सन्धित, मत्स्य एवं कूर्म्मादि सर्वविध मांस वर्जन करे । हे सुभ्रु ! कार्तिक मास में मांस भक्षणकारी व्यक्ति चण्डालत्व को प्राप्त करता है ॥१९३-१९४॥

अथ श्रीराधादामोदरपूजाविधिः

पद्मपुराण के उक्त स्थल में लिखित है— समस्त गोपिकागण के मध्य में श्रीमती राधिका ही श्रीहरि की प्रियतमा हैं । अतएव कार्तिक मास में श्रीदामोदर के समीप में श्रीराधिका की पूजा करनी चाहिये । कार्तिक मास में किसी विप्र को दामोदर स्वरूप एवं तदीय पत्नी को राधिका स्वरूपिणी कल्पना करके वस्त्र, अलङ्कार एवं भोज्य पदार्थ के द्वारा उनकी पूजा करे । हे विप्रगण ! कार्तिक मास में श्रीराधिका की प्रसन्नता हेतु जो व्यक्ति श्रीराधिका की मूर्त्ति की पूजा करता है, श्रीमान् दामोदर हरि उसके प्रति प्रसन्न होते हैं ॥१९५-१९७॥

कार्तिक मास में प्रत्यह दामोदर की पूजा करे एवं सत्यव्रत संज्ञ ऋषिप्रोक्त दामोदराकर्षि दामोदराष्टक स्तोत्र पाठ करे ॥१९८॥

अथ श्रीदामोदराष्टकम्

तत्रैव—

नमामीश्वरं सच्चिदानन्दरूपं, लसत्कुण्डलं गोकुले भ्राजमानम् ।
यशोदाभियोलूखलाद्धावमानं, परामृष्टमत्यन्ततो द्रुत्य गोप्या ॥१९९॥

---

श्रीराधासहितं नत्वा श्रीदामोदरमीश्वरम् । दामोदराष्टकव्याख्यादिरेषा दर्श्यतेऽधुना ॥

तत्राग्रे किमपि प्रार्थयितुमादौ तस्य तत्त्वरूपलीलागुणादिविशेषेणोत्कर्ष-विशेषं गोकुलप्रकटितनिज-भगवत्तासारसर्व्वस्वभूतं वर्णयन् भक्त्यादौ नमस्करोति नमामीति । तच्च मङ्गलार्थं सर्व्वकर्म्मसु प्रागेव दास्यविशेषेण विधानादादौ निर्दिष्टम् । कम् ? ईश्वरं सर्व्वशक्तिमन्तं जगदेकनाथं निजप्रभुं वा । तत्राद्यः पक्षः स्तुत्यादिशक्त्यर्थः, द्वितीयः परमानन्यतार्थः, अन्त्यश्च भक्तिविशेषेणेति दिक् । कथम्भूतम् ? सच्चिदानन्दरूपं सच्चिदानन्दघनविग्रहमित्यर्थः; इति तत्त्वविशेषेणोत्कर्षविशेष उक्तः । सौन्दर्य्यविशेषेणोत्कर्षविशेषमाह— लसन्ती श्रीयशोदाभिया धावमानात् सततबाल्यक्रीड़ाविशेषपरत्वादा निरन्तरं लोलतया गण्डयोः क्रीड़न्ती कुण्डले यस्य तम् ; इति श्रीमुखेशोभाविशेष उक्त ; यद्वा, श्रीगण्डचुम्बन हासीभाग्यतः कुण्डलयोः सर्व्व-विभूषणेषु मुख्यत्वात्ताभ्यां तानि सर्व्वाण्येवोपलक्ष्यन्ते ; ततश्च लसन्ती शोभमाने कुण्डले यस्मात् तं भूषण-भूषणाङ्गमित्यर्थः । अतएवोक्तं श्रीगोपीभिर्दशमस्कन्धे (२९।४०)—'त्रैलोक्यसौभगमिदञ्च निरीक्ष्य रूपं, यद्गोद्विजद्रुममृगाः पुलकान्यविभ्रन्' इति, उद्धवेन च तृतीयस्कन्धे (२।१२)—'विस्मापनं स्वस्य च सौभगर्द्धेः, परं पदं भूषणभूषणाङ्गम्' इति । परिवारविशेषेणोत्कर्षविशेषमाह—गोकुले गोपगोपीगोवत्सादिनिवासे भ्राजमानं, योग्यस्थानविशेषे पूर्व्वतोऽप्युत्कर्षविशेषप्रकटनेन गोकुलस्य स्वाभाविकशोभाविशेषेण वा शोभमानम्; तच्च श्रीदशमस्कन्धादौ (३२।१४)—'चकास गोपी-परिषद्गतोऽर्च्चित,-स्त्रैलोक्यलक्ष्म्येकपदं वपुर्दधत्' इत्यादिनोक्तम् । लीलाविशेषेणोत्कर्षविशेषमाह—यशं देति सार्द्धेन । यशोदाया मातुःसकाशाद्भिया दधिभाण्डभेदनाद्यपराधकृतभीत्या उदूखलात् शिक्यस्थितनवनीतचौर्य्यार्थमुद्वर्त्त्य तले समारूढ़ादुदूखलतः धावमान त्वयापसरन्तम् । अत च विशेषापेक्षकैर्दशमस्कन्ध-नवमाध्यायोक्तम् (८-९)—'उदूखलाङ्घ्रेरुपरि व्यवस्थितं,मर्काय कामं ददतं शिचि स्थितम् । हैयङ्गवं चौर्य्यविशङ्कितेक्षणं, निरीक्ष्य पश्चात् सुतमागमच्छनैः॥ तामात्तयष्टिं प्रसमीक्ष्य सत्वर,-स्ततोऽवरुह्यापससार भीतवत् । गोप्यन्वधावन्न यमाप योगिनां, क्षमं प्रवेष्टुं तपसेरितं मनः ॥' इत्याद्यनुसन्धेयम् । ततश्च अत्यन्ततो द्रुत्य वेगेन धावित्वा, समासैकपद्येन यथादेशः, गोप्या श्रीयशोदया परा आमृष्टं पृष्ठतो धृतम्;अत्र च अत्यन्ततो द्रुत्येत्यनेन श्रीयशोदाया अपि स्तननितम्बगौरवादि-सौन्दर्य्यविशेषः स्नेहविशेषश्च सूचितः । गोप्येति प्रेमोक्तिपरिपाट्या गोपजातीनामेव तादृशं महासौभाग्यमिति ध्वनितम् । परामृष्टमित्यनेन तस्यां भगवतः स्नेहविशेषो ध्वनित इति दिक् । अत्र च (श्रीभा १०।९।१०)— 'अन्वञ्चमाना जननी वृहच्चल,-च्छ्रोणीभराक्रान्तगतिः सुमध्यमा । जवेन विस्रंसितकेशबन्धन,-च्युतप्रसूनानुगतिः परामृशत् ॥' इत्यर्थो ऽनुसन्धेय ॥१९९॥

---

अथ श्रीदामोदराष्टकम्

**उक्त स्थान में ही वर्णित है - जिनके कर्णद्वय दोदुल्यमान कुण्डलद्वय के द्वारा शोभित हैं, जो गोकुल-धाम में सदा विराजमान हैं, जो नवनीत हरण अपराध के कारण मा यशोदा के भय से उदूखल से लम्फ प्रदान पूर्वक (छलाँग मारकर) धावमान हैं, एवं यशोदा ने भी पीछे भागकर जिनकी पीठ पकड़ी थी, उन सच्चिदानन्द रूप ईश्वर को मैं प्रणाम करता हूँ ।।१९९।।**

रुदन्तं मुहुर्नेत्रयुग्मं मृजन्तं, कराम्भोजयुग्मेन सातङ्कनेत्रम् ।
मुहुःश्वासकम्पत्रिरेखाङ्ककण्ठ,-स्थितग्रैवदामोदरं भक्तिबद्धम् ॥२००॥
इतीदृक्स्वलीलाभिरानन्दकुण्डे, स्वघोषं निमज्जन्तमाख्यापयन्तम् ।
तदीयेशितज्ञेषु भक्तैर्जितत्व, पुनः प्रेमतस्तं शतावृत्ति वन्दे ॥२०१॥

---

तदनन्तरलीलाविशेषं वदन् (श्रीभा १०।९।११) 'कृतागसं तं प्ररुदन्तमक्षिणी, कषन्तमञ्जन्मषिणी, स्वपाणिना । उद्वीक्षमाणा भयविह्वलेक्षणं, हस्ते गृहीत्वा भिषयन्त्यवागुरत् ॥' इत्यर्थमाह— रुदन्तमिति । मातृहस्ते यष्टिं दृष्ट्वा तया ताड़नमाशङ्क्य भीतत्वादि-प्रदर्शनेन तत्परिहरणाय क्रन्दन्तम्, अतएव कराम्भोज-युग्मेन नेत्रयुग्मं मृजन्तं युगपन्मार्ज्जयन्तम्, एतच्च बाल्यलीलाविशेषस्वभावतः; यद्वा, भयावेशेन सद्योऽनुगच्छतोऽश्रुणो निष्कासनार्थं, यद्वा, अश्रुधारापसरणार्थमिति दिक् । यतः सातङ्के सशङ्के नेत्रे अपि, किं पुनर्मनो यस्य तं, यद्वा, सभयनिरीक्षणनेत्रयुगमित्यर्थः । ततश्च ताड़नपरिहारार्थमिदमपि लीलान्तरमूह्यम् । किञ्च, मुहुःश्वासेन रोदनावेशकृतेन कम्पात् कम्पमानं, त्रिरेखाङ्के कम्बुवद्रेखात्रयचिह्ने कण्ठे स्थितं ग्रैवं ग्रैवेयकं सर्व्वं ग्रीवाभूषणं मुक्ताहारादि यस्य; दाम उदरे यस्य; अनेन च (श्रीभा १०।९।१४)—'गोपिकोलूखले दाम्ना बबन्ध प्राकृतं यथा' इत्युक्तम् । दाम्नोदरे उलूखले चोभयतो बन्धनमुक्तं, तदेवाभिव्यञ्जयन् भक्तवश्यता-विशेषेणोत्कर्षविशेषमाह- उक्तयैव मातुः स्वविषयकया तस्य वा मातृविषयकया बद्धं स्वीकृतबन्धनं, न तु पाशवर्गबलात्, सर्व्वतः समुच्चितैरप्यनन्तैः पाशैर्न्यूनद्वयङ्गुलापूरणात् । तच्चोक्तं (श्रीभा १०।९।१५-१७)— तद्दाम बध्यमानस्य स्वार्भकस्य कृतागसः । द्वयङ्गुलोनमभूत्तेन सन्दधेऽन्यच्च गोपिका ॥ यदासीत्तदपि न्यूनं तेनान्यदपि सन्दधे । तदपि द्वयङ्गुलं न्यूनं यद्यदादत्त बन्धनम् ॥ एव स्वगेहदामानि यशोदा सन्दधत्यपि' इत्यादि । यद्वा, दामोदरत्वे हेतुः—भक्तयैव बद्धं वशीकृतं, तथापि स एवार्थः पर्य्यवस्यति । किञ्च, (श्रीभा १०।९।१८-२१)—'स्वमातुः स्विन्नगात्राया विस्रस्तकवरस्रजः । दृष्ट्वा परिश्रमं कृष्णः कृपयासीत् स्वबन्धने ॥ एवं सन्दर्शिता ह्यङ्ग हरिणा भक्तवश्यता । स्ववशेनापि कृष्णेन यस्येदं सेश्वरं वशे ॥ नेमं विरिञ्चो न भवो न श्रीरप्यङ्गसंश्रया । प्रसादं लेभिरे गोपी यत्तत् प्राप विमुक्तिदात् ॥ नायं सुखापो भगवान् देहिनां गोपिका-सुतः । ज्ञानिनाञ्चात्मभूतानां यथा भक्तिमतामिह ॥' इति एषामर्थः, तथा (श्रीभा १०।१०।२५)- 'देवर्षिर्मे प्रियतमो यदिमौ धनदात्मजौ । तत्तथा साधयिष्यामि यद्गीतं तन्महात्मना ॥' इत्यादेरर्थोऽपि श्रीनारद-भक्तयपेक्षया यमलार्ज्जुनभञ्जनादि-तत्तल्लीलारूपोऽनेन सूचितः ॥२००॥

गुणविशेषेणोत्कर्षविशेषमाह—इतीति । एवं भक्तवशतया, यद्वा, इत्यनया दामोदरलीलया ईदृशीभिश्च दामोदरलीलासदृशीभिः परममनोहराभिः शैशवीभिः स्वस्य स्वाभिर्वा असाधारणीभिः लीलाभिः क्रीड़ाभिः । 'गोपीभिः स्तोभितोऽनृत्यद्भगवान् बालवत् क्वचित् । उद्गायति क्वचिन्मुग्धस्तद्वशो दारुयन्त्रवत् ॥ बिभर्त्ति क्वचिदाज्ञप्तः पीठकोन्मानपादुकम् । बाहुक्षेपञ्च कुरुते स्वानां प्रीतिं समुद्वहन् ॥' (श्रीभा १०।११।७-८) इत्याद्युक्ताभिः स्वघोषं निजगोकुलवासिप्राणिजातं सर्व्वमेव आनन्दकुण्डे आनन्दरसमयगभीरजलाशयविशेषे

---

मा यशोदा के हाथ में यष्टि को देखकर जो भय से रोते रोते दोनों हस्तकमलों के द्वारा पुनः पुनः नयन युगल को मार्जन किये थे, एवं जिनके नयनयुगल भय विह्वल थे, पुनः पुनः श्वास ग्रहण से कम्पमान त्रिरेखाङ्कित कण्ठ में जिनके मुक्ताहार दोदुल्यमान हैं, भक्तवश्यता हेतु स्वीकृत बन्धन उन श्रीदामोदरदेव को मैं प्रणाम करता हूँ । २००॥

जिन्होंने इस प्रकार निज बाल्य-लीला द्वारा गोकुलवासिगण को आनन्द सरोवर में निमज्जित किया है, जिन्होंने निज ज्ञाननिष्ठ भक्तों के प्रति "मैं भक्तों से पराजित हूँ" ऐसा भाव प्रकट किया है । मैं पुनर्वार प्रेम पूर्वक उन ईश्वर की शतशत बार वन्दना करता हूँ ॥२०१॥

वरं देव मोक्षं न मोक्षावधिं वा, न चान्यं वृणेऽहं वरेशादपीह।
इदन्ते वपुर्नाथ गोपालबाल, सदा मे मनस्याविरास्तां किमन्यैः? ॥२०२॥
इदन्ते मुखाम्भोजमव्यक्तनीलै,-र्वृत कुन्तलैः स्निग्धरक्तैश्च गोप्या।
मुहुश्चुम्बितं बिम्बरक्ताधरं मे, मनस्याविरास्तामल लक्षलाभैः ॥२०३॥

नितरां मज्जन्तं मज्जयन्तम्. एतदेवोक्तम् — 'स्वानां प्रीतिं समुद्वहन्' इति। यद्वा, घोषः कीर्त्तिर्माहात्म्योत्कीर्त्तनं वा, स्वस्य स्वानां वा गोपगोप्यादीनां घोषो यथा स्यात्तथा स्वयमेवानन्दकुण्डे निमज्जन्तं परमसुखविशेषमनुभवन्तमित्यर्थः। किञ्च, ताभिरेव तदीयेशितज्ञेषु भगवदैश्वर्य्यज्ञानपरेषु भक्तैर्जितत्वमात्मनो भक्तवश्यतामाख्यापयन्तम्; भक्तिपराणामेव वश्योऽहं, न तु ज्ञानपराणामिति प्रथयन्तम्, अनेन च 'दर्शयंस्तद्विदां लोके आत्मनो भक्तवश्यताम्, (श्रीभा १०।११।९) इत्यस्यार्थो दर्शितः। तस्यार्थः— तं भगवन्तं विदन्तीति तथा तेषां तज्ज्ञानपराणामित्यर्थः। तान् प्रति दर्शयन्निति, यद्वा, तदीयानां भागवतानां प्रभावाभिज्ञेष्वेव, न चान्येष्वाख्यापयन्तं, वैष्णवमाहात्म्यविशेषानभिज्ञेषु केवलज्ञानपरेषु भक्तेर्विशेषतस्तन्माहात्म्यस्य च परमगोप्यत्वेन प्रकाशनायोग्यत्वात्। एवञ्च 'तद्विदाम्' इति भृत्यवश्यताविदामित्यर्थो द्रष्टव्यः। अतः प्रेमतः भक्तिविशेषेण शतावृत्ति यथा स्यात्तथा शतशतवारान् तमीश्वरं पुनर्वन्दे। अतो भक्तानामवश्यकृत्यं भक्तिप्रकारविशेषरूपं वन्दनमेव मम प्रार्थ्यं; न त्वैश्वर्य्यज्ञानादीति भावः ॥२०१॥

एवमुत्कर्षविशेषवर्णनेन स्तुत्वा प्रार्थयते— वरमिति द्वाभ्याम्। देव, हे परमद्योतमान! हे मधुरक्रीड़ाविशेषपरेति वा, वरेशात् सकलवरप्रदानसमर्थादपि त्वत्तः मोक्षं चतुर्थपुरुषार्थं मोक्षस्यावधिं वा परमकाष्ठारूपं घनसुखविशेषात्मकं श्रीवैकुण्ठलोकम्, अन्यञ्च श्रवणादिभक्ति प्रकारमहं वरं प्रार्थ्यं, यद्वा, अन्यैर्वरणीयमपि, यद्वा, वरतया इह वृन्दावने न वृणे। इहेत्यस्य परेणापि सम्बन्धः, अत्र च मोक्षादित्रयस्य यथोत्तरश्रैष्ठ्यमुह्यम्। तत्र मोक्षाद्वैकुण्ठलोकस्य श्रैष्ठ्यं श्रीभागवतामृतं त्तरखण्डे व्यक्तमेवास्ति। वैकुण्ठलोकाच्छ्रवणादिप्रकारस्य च श्रैष्ठ्यं, 'कामं भवः स्ववृजनैर्निरयेषु नः स्यात्' (श्रीभा ३।१५।४९) इत्यादिवचनतः श्रवणादि-सिद्ध्या नरकादिष्वपि यत्र तत्र सर्व्वत्रैव वैकुण्ठवाससिद्धेरिति दिक्। तर्हि किं वृणुषे? तदाह—हे नाथ! इह वृन्दावने इदं वर्णितं गोपाल-बालरूपं ते वपुः सदा मे मनसि आविरास्ताम्; अन्तर्यामित्वादिना स्थितमपि साक्षादिव सर्व्वाङ्गसौन्दर्य्यादि-प्रकाशनेन प्रकटं भूयात्। ननु मोक्षादयोऽपि परमोपादेयास्तानपि वृणु, तत्राह— किमन्यैरिति; अन्यैर्मोक्षादिभिर्मम प्रयोजनं नास्तीत्यर्थः, तस्य सर्व्वानन्दकदम्बात्मकत्वात्तत्सिद्ध्यैव सर्व्वसिद्धेः। तथा तदलाभे निजेप्सितासिद्ध्या विशेषतश्च तुच्छलाभेन शोकविशेषोत्पादनादन्यैरपि किमिति भावः। यद्वा, ननु मोक्षादयो न व्रियन्तां नाम, परमापेक्ष्याणि मदीयश्रीचतुर्भुजादिमूर्त्तिदर्शनसम्भाषणादीनि व्रियतां, तत्राह— किमन्यैरिति। चित्ते त्वदेतच्छ्रीमद्वपुः सदा स्फूर्त्तावेव ममात्यन्तप्रीतिर्नान्यत्रेति भावः। अन्तर्दर्शनमाहात्म्यञ्च श्रीभागवतामृतोत्तरखण्डे तपोलोके श्रीपिप्पलायनेन विवृत्योक्तमस्ति। एवं तस्य प्रार्थनापि स्तुतावेव पर्य्यवस्यति, तस्यैव सर्व्वोत्कृष्टत्वेन प्रार्थनात्, एवमग्रेऽपि ॥२०२॥

तत्र च तव श्रीमुखं परममनोहरं विशेषेण दिदृक्षे, इत्याह— इदमिति। कदाचिद्ध्यानेऽनुभूयमान-

हे देव! सर्वविध वर प्रदान में समर्थ, आपके निकट से मोक्ष, मोक्षावधि वैकुण्ठलोक, किंवा अन्य कुछ भी वर लेने का इच्छुक मैं नहीं हूँ। हे नाथ! मेरे मन में इस प्रकार वर्णित भवदीय बालगोपाल मूर्त्ति साक्षाद्भाव से सर्वदा जागरित रहे, अन्य मोक्षादि की मुझे आवश्यकता ही क्या है? ॥२०२॥

हे नाथ! स्निग्ध, अत्यन्त श्यामल कुञ्चित अलकावली वेष्टित, मुहुर्मुहुः यशोदा-चुम्बित एवं बिम्बरक्ताधर शोभित भवदीय वदनकमल सदा मेरे मन में प्रकाशित रहे। अन्य किसी प्रकार लक्ष लाभ की आवश्यकता मुझको नहीं है ॥२०३॥

**नमो देव दामोदरानन्त विष्णो, प्रसीद प्रभो दुःखजालाब्धिमग्नम् ।**
**कृपादृष्टिवृष्ट्यातिदीनं बतानु,-गृहाणेश मामज्ञमेध्यक्षिदृश्यः ॥२०४॥**
**कुवेरात्मजौ बद्धमूर्त्यैव यद्व,-त्त्वया मोचितौ भक्तिभाजौ कृतौ च ।**
**तथा प्रेमभक्तिं स्वकां मे प्रयच्छ, न मोक्षे ग्रहो मेऽस्ति दामोदरेह ॥२०५॥**

---

मनिर्व्वचनीयसौन्दर्य्यादिकं, तदेव निर्द्दिशति—मुखमेवाम्भोजं प्रफुल्लकमलाकरत्वं-निखिलसन्तापहारित्व-परमानन्दरसवत्त्वादिना, तन्मे मनसि मुहुराविरास्ताम् । कथम्भूतम् ? अत्यन्तनीलैः परमश्यामलैः स्निग्धैश्च रक्तैश्च कुन्तलैः केशैरलकैर्वा वृतं कमलं भ्रमरैरिवोपरि वेष्टितम्; गोप्या श्रीयशोदया श्रीराधया वा चुम्बितं, मुहुरित्यस्यात्रापि सम्बन्धः, यद्वा, पाठक्रमादत्रैव सम्बन्धः, ततश्च तया महाधन्यया मुहुश्चुम्बितमपि मम मनसि सकृदप्याविरास्तामित्यर्थः । यद्वा, सदेति पूर्व्वगतस्यात्राप्यर्थबलादन्वय एव स्यात् । बिम्बवद्रक्तौ अधरौ यस्मिन् तत, ततश्च लक्षलाभैः, अन्यैर्लक्षसंख्यैर्लब्धैरपि प्रयोजनं नास्तीत्यर्थः । निखिलार्थमेवैतत् ॥२०३

एवं स्तुतिप्रभावात् सद्यः समुदितेन प्रेमविशेषेण साक्षाद्दिदृक्षमाणस्तत्र चैकं नामसंकीर्त्तनमेव परमसाधनं मन्यमानस्तथैव सकातर्य्यं प्रार्थयते—नम इति । तुभ्यमित्यध्याहार्य्यमेव, तच्च भयगौरवादिना प्रेमवैकल्येन वा साक्षान्न प्रयुक्तम् । हे प्रभो, हे मदीश्वर ! प्रसीद । प्रसादमेवाह—दुःखं सांसारिकं तद्दर्शनजं वा, तस्य जालं परम्परा, तदेवाब्धिः आनन्त्यादिना, तस्मिन् मग्नं माम्, अतएव अतिदीनं परमार्त्तं, यद्वा, तत्र सत्सहायसाधनादिहीनत्वात् परमाकिञ्चनं, यद्वा, मुमूर्षुं जीवन्मृतं वा, तत्र चाज्ञं तत्प्रतीकाराद्यनभिज्ञं, कृपया दृष्टिनिरीक्षणं, तस्या वृष्ट्या परम्परया, कृपादृष्टिरूपामृतवृष्ट्या वा अनुगृहाण, समुद्धृत्य जीवयेत्यर्थः । तदेवाभिव्यञ्जयति—अक्षिदृश्यो मल्लोचनगोचर एधि भव । एवं प्रार्थनाक्रमेण प्रार्थनं कृत, प्रार्थ्यस्य परम-दौर्लभ्येन, सहसा प्रागेव निर्द्देशानर्हत्वात् । अन्तर्दर्शनात् साक्षाद्दर्शनमाहात्म्यञ्च श्रीभगवत्पार्षदैः सन्याय-मुक्तं, श्रीभागवतामृतोत्तरखण्डतो विशेषतो ज्ञेयम । तत्र देव हे दिव्यरूपेति दिदृक्षायां हेतुः, दामोदरेति भक्तवात्सल्यविशेषेणाक्षिदर्शनयोग्यतायाम् ; अतो नान्तो यस्मादित्यनन्तेति कृपादृष्ट्यनुग्रहेण । प्रभो ! हे अचिन्त्यानन्ताद्भुतमहाशक्तियुक्तेति इन्द्रियाग्राह्यस्याप्यक्षिदृश्यतासम्भावनायाम्; ईश ! हे परमस्वतन्त्रेति अयोग्यं प्रति तादृशानुग्रहकरणे कस्यचिदप्यनपेक्षतायां ज्ञेयम् । किञ्च, विष्णो ! हे सर्व्वव्यापक ! यद्वा, हे श्रीवृन्दावननिकुञ्जकुहरादिप्रवेशशील, इति चाक्षिदृश्यतार्थं दूरागमनश्रमादिकं नास्तीति । अथवा हे अनन्त, अपरिच्छिन्न ! विष्णो सर्व्वव्यापिन् ! तथापि हे दामोदरेत्येवं परमवात्सल्यविशेषेण तवाकृतं किमपि नास्तीति ध्वनितम् । अन्यत् समानमित्येषा दिक् २०४॥

इत्थं प्रेमविशेषेण परमोत्कण्ठया सह साक्षाद्दर्शनं प्रार्थ्य तत एव सद्योजातप्रेमभक्तिविशेषेण तस्य परमदौर्ल्लभ्यं मन्यमानस्तत्र च परमोपायभूतां प्रेमभक्तिमभिज्ञाय, यद्वा, सकृद्दर्शने मनोऽतृप्तिं विरहदुःखो-त्पत्तिं चाशङ्क्य सदा तद्वशीकरणाय प्रेमभक्तिमेवैकमुपायमभिज्ञाय; अत्र च परमापराधिनो मम कथं सा सम्भवेदित्याशङ्क्य श्रीभगवद्वात्सल्यमहिम्ना चासम्भाव्यमपि सर्व्वमेव सम्भवेदिति निश्चित्य मोक्ष-त्यागेन प्रेमभक्तिमेव प्रार्थयते—कुवेरेति । बद्धया गोप्या पाशैरुदूखले शृङ्खलितया मूर्त्त्या श्रीविग्रहेणैवेति तयोर्मध्ये

---

हे देव ! हे दामोदर ! हे अनन्त ! हे विष्णो ! मुझ पर प्रसन्न होओ । हे प्रभो ! हे ईश ! मैं दुःख परम्परा समुद्र निमग्न हूँ । मैं अज्ञ हूँ । करुणादृष्टि रूप वर्षा के द्वारा मेरी रक्षा कीजिये । मेरे नयन पथ में उदित हूजिये ॥२०४॥

हे दामोदर ! आपने जिस प्रकार उदूखल में पाशबद्ध होकर भी नलकुवर मणिग्रीव नामक कुवेर के पुत्रद्वय को मुक्त किया, और भक्ति का अधिकारी किया है, मुझको भी उसी प्रकार प्रेम-भक्ति प्रदान कीजिये । इसमें ही मेरा आग्रह है । मोक्ष में मेरा आग्रह नहीं है ॥२०५॥

**नमस्तेऽस्तु दाम्ने स्फुरद्दीप्तिधाम्ने, त्वदीयोदरायाथ विश्वस्य धाम्ने ।**
**नमो राधिकायै त्वदीयप्रियायै, नमोऽनन्तलीलाय देवाय तुभ्यम् ॥२०६॥**

स्वयं प्रवेशात् परमसुन्दरलीलादिविशिष्टस्य भगवतः साक्षाद्दर्शन-स्पर्शनादिकं सूचितम् । मोचितौ श्रीनारद-शापात् संसाराच्च, न केवलं तावदेव, परमभक्तिश्च ताभ्यां दत्तेत्याह—भक्ति भजतः परमसाध्यत्वेनाश्रयतः, न कथञ्चिदपि त्यजत इति तथा तौ। एवञ्च प्रेमभक्तिरेव दत्तेत्यभिप्रेतम् । तथा च श्रीभगवद्वचनम् (श्रीभा १०।१०।४२)—'सञ्जातो मयि भावो वामीप्सितः परमोऽभवः' इति । अस्यार्थः— वां युवयोरीप्सितोऽपेक्षितः परमो भावः प्रेमा मयि सम्यग्जात एव, न भवः पुनर्जन्म संसारदुःखं वा यस्मात् स इति । हे दामोदर ! तथा तद्वत् स्वकां त्वच्चरणारविन्दैकाश्रयामेतद्रूपैकविषयां वा मे मह्यं प्रकर्षेण यच्छ देहि । ननु किमत्राग्रहेण ? कुवेरात्मजवन्मोक्षोऽपि गृह्यतामन्यथा जन्ममरणादिसंसारापत्तेः । तत्राह—नेति । इह अस्यां प्रेमभक्तावेव मम ग्रह आग्रेहोऽस्ति, न च मोक्षे ग्रहोऽस्ति । अयमर्थः—प्रेमभक्त्या संसारध्वंसो भवति चेत्तर्हि भवतु नाम, न स्याच्चेत्तर्हि माऽस्तु नाम; तत्र ममापेक्षा नास्तीति । अत्र गूढ़ोऽयं भावः— चिन्तामणौ करस्थे सर्व्वमेव स्वयं सेत्स्यति, किन्तदेकमात्रतुच्छद्रव्यग्रहणेनेति । यद्वा, 'हे दामोदर स्वकां प्रेमभक्तिं प्रयच्छ' इत्येवं पाशबद्धोदरभगवद्विषयकप्रेमभक्तिप्रार्थनया नित्यमुदरे पाशबन्धनाग्रहमाशङ्क्याह—मोक्षे पाशबन्धनात्तव मोचने ममाग्रहो नास्ति किम् ? काक्वा अस्त्येवेत्यर्थः । किन्तु इह अस्मिन्नेव रूपे स्वकामसाधारणानां प्रेमभक्तिं प्रयच्छेति । यद्वा, इह वृन्दावने प्रेमभक्तिं प्रयच्छेत्यन्वयः । ततश्च तत्रैव तस्याः सुखविशेषाविर्भाव-कत्वात् प्रादुर्भावविशेषाच्च, तथा तस्य साक्षाद्दर्शनविशेषाकारत्वाच्च, तथा तत्रैव तद्विहारिश्रीभगवद्दिदृक्षा-विशेषाच्च, तत्र सदानिवासोऽपि प्रार्थित इत्यूह्यम्; अन्यच्च पूर्व्ववदेव ॥२०५॥

एवं स्तुतिं समापयन् स्वप्रार्थितसिद्धये भक्तिविशेषेण वा तदीयासाधारणपरिकरावयवपरिवारादीनपि प्रत्येकं पृथक् प्रणमति—नमस्तेऽस्त्विति । ते तव दाम्ने उदरबन्धनमहापाशाय नमोऽस्तु; कथम्भूताय ? स्फुरन्त्या दीप्तेस्तेजसो धाम्ने आश्रयाय, एवं तस्यापि ब्रह्मघनरूपताभिप्रेता । अथानन्तरं त्वदीयाय उदराय नमाऽस्तु, पाशबन्धेन तेनैव सौन्दर्य्यादेर्वात्सल्यादेर्बाल्यलीलादेश्च विशेषतः प्रकाशनात्; कथम्भूताय? विश्वस्य चराचरप्रपञ्चजातस्य धाम्ने आधाराय, तत एव चतुर्द्दशभुवनात्मक-कमलोत्पत्तेः; तत्रैव च मातरं प्रति वारद्वयं विश्वरूपप्रदर्शनादिति दिक् । एवमुदरबन्धनेन विश्वस्यापि बन्धनापत्तेः श्रीयशोदया विश्वमपि वशीकृतमिति ध्वनितम्; तथा ईशस्य बन्धनासम्भवेऽपि बन्धनस्वीकारेण भक्तवात्सल्यविशेषस्तथा बन्धनेन प्रपञ्चासङ्कोचावस्थित्यादिसमावेश्य तर्कागोचरत्वादैश्वर्य्यविशेषश्च ध्वनित इति दिक् । दामनमस्कारानन्तर-मुदरनमस्कारश्चोदरोपरि दाम्नां वर्त्तमानत्वात् यथोत्तरमुत्कर्षविवक्षया वा; इदानीं तदीयप्रियतमजनकृपयैव वाञ्छातीतमपि सर्व्वमेव सुसिध्येदित्याशयेन भगवतीं श्रीराधां प्रणमति—नम इति । तया च सर्व्वा एव गोपिका उपलक्ष्यन्ते, किंवा तासु मुख्यतमात्र सैवैकोक्ता । श्रीराधिकेति— सर्व्वदैव श्रीभगवदाराधनविशेषा-दन्वर्थसंज्ञा, अतएव त्वदीयप्रियेति । यद्वा, राधिकेति रूढ़िसंज्ञा । ततश्चाराधनाद्यनपेक्षया सा नित्यप्रियैवेति । तत्र च त्वदीया अपि सर्व्वे जनाः प्रियास्त्वत्प्रीत्या यस्याः, किमुत वक्तव्यं त्वमिति । एवं तस्यास्तस्मिन् प्रेमविशेषः सूचितः । तस्यै नमः, यद्वा, त्वत्प्रियायै इति । ततश्च यस्य त्वं प्रियोऽसि, सोऽपि जगद्वन्द्यः स्यात् । एषा च तवैव प्रिया, अतस्तस्यै नमोऽस्तु । ततश्च तया सह रासक्रीड़ादिकं परमस्तुतित्वेनान्ते वर्णयितुमिच्छन् तच्च परमगोप्यत्वेनानभिव्यञ्जयन् 'मधुरेण समापयेत्' इतिन्यायेन किञ्चिदेव सङ्केतेनोद्दिशन् प्रणमति— देवाय लोकोत्तरायेति, लीलानामपि लोकोत्तराभिप्रेता । यद्वा, श्रीराधिकया सह निरन्तरक्रीड़ापराय,

---

**निखिल प्रकाशमान तेज का आश्रय भवदीय उदरबन्धन महापाश को एवं विश्व के आधार स्वरूप आपके उदर को मैं प्रणाम करता हूँ । आपकी प्रियतमा राधा को भी मैं प्रणाम करता हूँ । हे अनन्त लीला-मय देव ! आपको प्रणाम करता हूँ ॥२०६॥**

अथ तत्र श्रीकृष्णाष्टमीकृत्यम्

पाद्मे तत्रैव—

गोवर्द्धनगिरौ रम्ये राधाकुण्डं प्रियं हरेः। कार्त्तिके बहुलाष्टम्यां तत्र स्नात्वा हरेः प्रियः।

नरो भक्तो भवेद्विप्रास्तद्धि तस्य प्रतोषणम् ॥२०७॥

यथा राधा प्रिया विष्णोस्तस्याः कुण्डं प्रियन्तथा।

सर्व्वगोपीषु सैवैका विष्णोरत्यन्तवल्लभा ॥२०८॥

किञ्च तत्रैव श्रीराधिकोपाख्यानान्ते—

वृन्दावनाधिपत्यञ्च दत्तं तस्याः प्रतुष्यता। कृष्णेनान्यत्र देवी तु राधा वृन्दावने वने ॥२०९॥

तत्कुण्डे कार्त्तिकाष्टम्यां स्नात्वा पूज्यो जनार्द्दनः।

सुबोधन्यां यथा प्रीतस्तथा प्रीतस्ततो भवेत् ॥२१०॥

अथ कृष्णत्रयोदशीकृत्यम्

पाद्मे च तत्रैव—

कार्त्तिके कृष्णपक्षे तु त्रयोदश्यां निशामुखे। यमदीपं वहिर्दद्यादपमृत्युर्विनश्यति ॥२११॥

---

अतएवानन्तलीलाय तुभ्यं नम इति। एवं गोकुलविषयिका सर्व्वापि लीलोद्दिष्टा, तस्यै च नम इति भाव इत्येषा दिक् ॥२०६॥

श्रीराधाप्राणनाथाय श्रीमद्दामोदराय ते। सर्व्वं चैतन्यदेवाय गुरवेऽर्पितमेव मे ॥

तत्र कुण्डे नरः स्नात्वा हरेः प्रियतमो भवेत्। हि यतः तत्र तत्र स्नानं तस्य हरेः प्रतोषणं, प्रकर्षेण तोषयतीत्यर्थः ॥२०७॥

तत्र हेतुमाह—यथेति। न च साधारणप्रियेत्याह— सर्व्वासु गोपीष्वपि मध्ये ॥२०८॥

तस्याः तस्यै श्रीराधायै। अन्यत्र वृन्दावनेतरस्थान सा देवी लक्ष्म्यादिरूपा; वृन्दावनाख्ये च वने राधैव स्वयं स्वनामादिनैव प्रसिद्धेत्यर्थः ॥२०९॥

सुबोधन्याम् उत्थानैकादश्यां, एतच्चाग्रे तत्प्रसङ्गे व्यक्तं भावि ॥२१०॥

निशामुखे— प्रदोषे ॥२११॥

---

अथ तत्र श्रीकृष्णाष्टमीकृत्यम्

पद्मपुराण के उक्त स्थान में लिखित है—हे विप्रवृन्द! मनोरम गोवर्धन गिरि में श्रीहरिप्रिय राधाकुण्ड विराजित है, कार्त्तिक की कृष्णाष्टमी के दिन इस कुण्ड में स्नान करने पर वह मानव श्रीहरि का प्रिय भक्त हो सकता है। कारण, इस कुण्ड में स्नान करने से ही श्रीहरि प्रसन्न होते हैं। राधिका जिस प्रकार श्रीहरि को प्रियतमा हैं, उनका कुण्ड भी श्रीहरि का उसी प्रकार प्यारा है। कारण, एकमात्र श्रीराधिका ही समस्त गोपिकागणों के मध्य में परम वल्लभा हैं ॥२०७-२०८॥

उसी पुराण के श्रीराधिका उपाख्यान के अन्त में और भी लिखा है— श्रीकृष्ण ने श्रीराधिका से प्रसन्न होकर उनको श्रीवृन्दावनाधिपत्य प्रदान किया है। इसी कारण, श्रीराधिका अन्यत्र लक्ष्म्यादि रूप में एवं वृन्दावन में स्वयं श्रीराधा रूप में विराजित हैं ॥२०९॥

कार्त्तिक मास की उत्थान एकादशी में पूजा करने से श्रीभगवान् जिस प्रकार प्रीत होते हैं, कार्त्तिक कृष्णाष्टमी में उस कुण्ड में स्नान करके श्रीहरि की पूजा करने पर उसी प्रकार सन्तुष्ट होते हैं ॥२१०॥

अथ कृष्णत्रयोदशीकृत्यम्

पद्मपुराण के उक्त स्थान में लिखित है— कार्त्तिक मास की कृष्णा त्रयोदशी में सायंकाल में घर के बाहर यम दीपदान करने पर अपमृत्यु भय विनष्ट होता है ॥२११॥

अथ तत्र मन्त्रः

मृत्युना पाशदण्डाभ्यां कालः श्यामलया सह।
त्रयोदश्यां दीपदानात् सूर्य्यजः प्रीयतामिति ॥२१२॥

अथ कृष्णचतुर्द्दशीकृत्यम्

तत्रैव—

चतुर्द्दश्यां धर्म्मराज-पूजा कार्य्या प्रयत्नतः। स्नानमावश्यकं कार्य्यं नरैर्नरकभीरुभिः ॥२१३

अरुणोदयतोऽन्यत्र रिक्तायां स्नाति यो नरः।
तस्याब्दिकभवो धर्म्मो नश्यत्येव न संशयः ॥२१४॥

स्कान्दे च तत्रैव—

कार्त्तिके कृष्णपक्षे तु चतुर्द्दश्यां विधूदये। अवश्यमेव कर्त्तव्यं स्नानं नरकभीरुभिः ॥२१५॥

किञ्च पाद्मे तत्रैव—

ततश्च तर्पणं कार्य्यं धर्म्मराजस्य नामभिः। जीवत्पिता न कुर्व्वीत तर्पणं यमभीष्मयोः ॥२१६

यज्ञोपवीतिना कार्य्यं प्राचीनावीतिना तथा। देवत्वञ्च पितृत्वञ्च यमस्यास्ति द्विरूपता ॥२१७

नक्तं यमचतुर्द्दश्यां यः कुर्य्याच्छिवसन्निधौ। न तत् क्रतुशतेनापि प्राप्यते पुण्यमीदृशम् ॥२१८॥

कुमारी वटुकान् पूज्य तथा शैवतपोधनान्। राजसूयफलं तेन प्राप्यते नात्र संशयः ॥२१९॥

---

चतुर्द्दश्यां स्नानं चारुणोदये सत्येव कार्य्यं, नित्यत्वादित्याह—अरुणेति ॥२१४॥

चतुर्द्दशीकृत्यमन्यदपि लिखति—ततश्चेति; षड्भिर्नामभिः 'यमाय धर्म्मराजाय' इत्यादिनोक्तैः ॥२१६॥

द्विरूपता—देवरूपता पितृरूपता च ॥२१७॥

नक्तं—नक्तंभोजनव्रतम् ॥२१८॥

पूज्य—पूजयित्वा ॥२१९॥

---

अथ तत्र मन्त्रः

त्रयोदशी में दीपदान हेतु पाश, दण्ड, एवं श्यामला के सहित सूर्य्य-तनय काल सन्तुष्ट हों ॥१३२॥

अथ कृष्णचतुर्द्दशीकृत्यम्

उक्त पुराण में ही लिखित है—कार्त्तिक की कृष्णा चतुर्दशी तिथि में यत्नपूर्वक धर्मराज की पूजा करना नरकभीरु नरवृन्द का कर्त्तव्य है। जो मानव, अरुणोदय व्यतीत रिक्ता में स्नान करता है, उसके द्वारा अनुष्ठित एक वर्ष कृत धर्म निःसन्देह विनष्ट होता है ॥२१३-२१४॥

स्कन्दपुराण के उक्त स्थान में लिखित है—कार्त्तिक मास की कृष्णा चतुर्दशी में चन्द्रोदय के समय स्नान करना नरकभीरु व्यक्ति का अवश्य कर्त्तव्य है ॥२१५॥

पद्मपुराण के उक्त स्थान में लिखा है-तत्पश्चात् 'यमायधर्मराजाय' इत्यादि मन्त्रोच्चारणपूर्वक धर्मराज के उद्देश्य में तर्पण करे। किन्तु जीवत् पितृक व्यक्ति के पक्ष में यम तर्पण एवं भीष्म तर्पण करना निषिद्ध है। प्राचीनावीति होकर यम तर्पण करना चाहिये। कारण, यमराज में देवत्व एवं पितृत्व उभय रूप ही हैं। यम चतुर्दशी में शिव सन्निधान में नक्त भोजन करने पर जो पुण्य लाभ होता है, शत-शत यज्ञानुष्ठान से भी उस प्रकार फल लाभ नहीं होता है। उस दिन कुमारी, बालक एवं शिवभक्त तपस्वी की पूजा करने से राजसूय यज्ञानुष्ठान जनित फल लाभ होता है। इसमें सन्देह नहीं है ॥२१६-२१९॥

कार्त्तिके भौमवारेण चित्रा कृष्णा चतुर्द्दशी । तस्यां भूतेशमभ्यर्च्च्य गच्छेच्छिवपुरं नरः ॥२२०

किञ्च—

अमावस्या-चतुर्द्दश्योः प्रदोषे दीपदानतः । यममार्गान्धकारेभ्यो मुच्यते कार्त्तिके नरः ॥२२१॥

अथामावास्याकृत्यम्

पाद्मे तत्रैव —

दिवा तत्र न भोक्तव्यं विना बालातुरान् जनान् । प्रदोषसमये लक्ष्मीं पूजयेच्च यथाक्रमम् ॥२२२

किञ्च—

प्रदोषसमये विप्राः कर्त्तव्या दीपमालिकाः । दीपदानात्ततः पश्चाल्लक्ष्मीं सुप्तां प्रबोधयेत् । २२३

अत्र मन्त्रः

त्वं ज्योतिः श्रीरविश्चन्द्रो विद्युत्सौवर्णतारकाः ।

सर्व्वेषां ज्योतिषां ज्योतिर्दीपज्योतिःस्थिते नमः ॥२२४॥

मन्त्रेणानेन कमलां दीपहस्ताः स्त्रियो द्विजाः । देवीं प्रबोधयेयुश्च ततः कुर्य्युश्च भोजनम् ॥२२५

प्रदोष-समये लक्ष्मीं भोजयित्वा भुनक्ति यः । पुमान् संवत्सरं यावल्लक्ष्मीस्तं नैव मुञ्चति ॥२२६

अथामावस्यानिर्णयः

यथा निर्णयामृते—

उपवासादिष्वमावास्या प्रतिपद्युता ग्राह्या ॥२२७॥

---

तत्र—आमावस्यायाम् ॥२२२॥

हे विप्राः ॥२२३॥

विद्युच्च सौवर्णश्च सुवर्णजातं तारकाश्च ॥२२४॥

---

कार्त्तिक मास की कृष्णा चतुर्दशी में मङ्गलवार का योग होने से उसको अतिशय विचित्र जानना होगा। उस दिन भूतेश्वर शिव की पूजा करने से मानव शिवपुर में प्रस्थान कर सकता है ॥२२०॥

और भी लिखा है—मानव, कार्त्तिक मास की अमावस्या में एवं चतुर्दशी में प्रदोष काल में दीपदान करने पर शमनमार्ग की अन्धकारराशि से मुक्ति लाभ करने में सक्षम होते हैं ॥२२१॥

अथामावास्याकृत्यम्

पद्मपुराण के उक्त स्थान में लिखित है—बालक एवं आतुर व्यक्ति व्यतीत कार्त्तिकी अमावस्या के दिन में भोजन करना अपर के पक्ष में निषिद्ध है। उस दिन प्रदोष में लक्ष्मी पूजन करना चाहिये ॥२२२॥

और भी लिखा है—हे विप्रवृन्द ! उस दिन प्रदोष में दीपमाला प्रदान करना चाहिये। दीपदान पूर्वक प्रसुप्त लक्ष्मीदेवी को जागरण कराना चाहिये ॥२२३॥

अत्र मन्त्रः

इस विषय का मन्त्र यह है—आप ही ज्योतिः, आप ही भास्कर, आप ही चन्द्र, आप ही विद्युत, आप ही सुवर्णवर्ण, आप ही तारा, और समस्त ज्योतिः पदार्थों की ज्योतिः भी आप ही हैं। आप ही दीपज्योति में स्थित हैं, आपको नमस्कार करता हूँ। हे द्विजगण ! यह मन्त्र-पाठ पूर्वक नारीवृन्द हस्त में दीप लेकर लक्ष्मीदेवी को प्रबोधन कराकर पश्चात् भोजन करें। प्रदोष काल में लक्ष्मीदेवी को भोजन कराकर भोजन करने से कमला संवत्सर उसको वर्जन नहीं करतीं ॥२२४-२२६॥

अथामावस्यानिर्णयः

अमावस्या का निर्णय करते हैं। निर्णयामृत में लिखित है—उपवासादि स्थल में प्रतिपद् युक्ता अमावस्या ग्रहण करनी चाहिये ॥२२७॥

तदुक्तम् —

अमावास्या तृतीया च ता उपास्याः परान्विताः ॥२२८॥ इति ।

अथ चतुर्द्दशीविद्धानिषेधः

निगमे—

भूतविद्धा त्वमावास्या निष्फलं स्यात्त्रयन्त्विदम् ॥२२९॥ इति ।

क्वचित् स्कान्देऽपि—

भूतविद्धा त्वमावास्या न ग्राह्या मुनिपुङ्गवैः ॥२३०॥ इति ।

अथ शुक्लप्रतिपत्

स्कान्दे—

प्रातर्गोवर्द्धनं पूज्य द्यूतञ्चैव समाचरेत् । भूषणीयास्तथा गावः पूज्याश्च दोहवाहनाः ॥२३१

श्रीकृष्णदासवर्य्योऽयं श्रीगोवर्द्धनभूधरः । शुक्लप्रतिपदि प्रातः कार्त्तिकेऽच्चर्योऽत्र वैष्णवैः ॥२३२

प्रातर्गोवर्द्धनं पूज्य रात्रौ जागरणं चरेत् ॥२३३॥ इति क्वचित् पाठः ।

तस्मात्तदिदं कर्म्म गोवर्द्धनप्राधान्येन गोप्राधान्येन च स्यातमप्येवं ज्ञेयम् ।

अथ तत्र दिननिर्णयः

यदाह देवलः—

प्रतिपद्दर्शसंयोगे क्रीड़नन्तु गवां मतम् । परविद्धान्तु यः कुर्य्यात् पुत्रदारधनक्षयः ॥२३४॥

---

दोहो दोहनपात्रादि, वाहनञ्च शकटादि, तत्सहिता इत्यर्थः । यद्वा, न विद्यते दोहो दोहनं वाहनं च यासां ताः ; तस्मिन् दिने गावो न दोह्याः, वृषाश्च न वाह्या इत्यर्थः । पाठान्तरेऽपि तथैवार्थः ॥२३१॥

श्रीगोवर्द्धनपूजा च शुक्लप्रतिपत्प्रभाते वैष्णवै रवश्यं कार्य्येति लिखति—श्रीकृष्णेति । 'हन्तायमद्रिरबला हरिदासवर्य्यः' (श्रीभा १०।२१।१८) इत्याद्युक्तेः ॥२३२॥

---

इस विषय में कथित है—अमावस्या एवं तृतीया परयुक्ता होने से अर्थात् परतिथि के सहित युक्ता होने पर उसी में उपवास करना चाहिये ॥२२८॥

अथ चतुर्द्दशीविद्धानिषेधः

निगम में उक्त है—चतुर्दशी विद्धा अमावस्या फल प्रसू नहीं होती है । यह त्रिसत्य है ॥२२९॥

स्कन्द पुराण के किसी किसी स्थान में लिखित है—चतुर्दशी विद्धा अमावस्या ग्रहण करना श्रेष्ठ मुनि-वृन्द का सम्मत नहीं है ॥२३०॥

अथ शुक्लप्रतिपत्

स्कन्द पुराण में लिखित है—प्रातःकाल में गोवर्द्धन की पूजा करके द्यूत क्रीड़ा करनी चाहिये । एवं गो-गण को भूषित करके पूजा करे एवं दोहन पात्रादि तथा शकटादि की भी पूजा करनी चाहिये ॥२३१॥

कार्त्तिक मास की शुक्ल प्रतिपत् तिथि में श्रीकृष्णदासवर्य्य गोवर्द्धन गिरि की पूजा करना वैष्णवों का कर्त्तव्य है । किंवा प्रातःकाल में गोवर्द्धन की पूजा करके रात्रि में जागरण करे । इस प्रकार पाठान्तर भी दिखाई देता है ॥२३२-२३३॥

अतएव गोवर्द्धन प्राधान्य एवं गो प्राधान्य रूप में ही यह कार्य्य प्रसिद्ध है ।

अथ तत्रदिननिर्णय

देवल ने कहा है—प्रतिपत् समन्वित अमावस्या में ही गो क्रीड़ा प्रशस्त है । द्वितीया संयुक्त प्रतिपद् में गो क्रीड़ा का अनुष्ठान करने से पुत्र, भार्य्या और धन का नाश होता है ॥२३४॥

निर्णयामृतधृतं पुराणान्तरवचनम्—

या कुहुः प्रतिपन्मिश्रा तत्र गाः पूजयेन्नृप । पूजामात्रेण वर्द्धन्ते प्रजा गावो महीपतिः ॥२३५

ततः 'प्रातर्गोवर्द्धनं पूज्य' ॥२३६॥ इति पूर्व्वाह्नतात्पर्य्यकं, द्वितीयासमये तु सर्व्वथा निषिद्धम् ।

तद्यथा—

नन्दाया दर्शने रक्षा बलिदानं दशासु च । भद्रायां गोकुलक्रीड़ा देशनाशाय जायते ॥२३७॥

पुराणसमुच्चये तु सम्भावितचन्द्रोदय-द्वितीयासंयोग एव निषिध्यते ।

गवां क्रीड़ा दिने यत्र रात्रौ दृश्येत चन्द्रमाः । सोमो राजा प्रशून् हन्ति सुरभिपूजकांस्तथा ॥१३८

तदुदयसम्भावनञ्च निर्णयामृते निर्णीतम्—

प्रतिपद्यापराह्निकत्रिमूहूर्त्तव्यापिन्यां द्वितीयायां चन्द्रदर्शनं सम्भाव्यते ॥२३९॥

तदुक्तमग्न्याधानविषये वृद्धशातातपेन—

द्वितीया त्रिमुहूर्त्ता चेत् प्रतिपद्यापराह्निकी । अग्न्याधानश्चतुर्द्दश्यां परतः सोमदर्शनात् ॥२४०

इति ।

अथ अपराह्ननिर्णयः

अपराह्नश्च पञ्चधा विभक्तस्याह्नश्चतुर्थो भागः । ततश्च यत्र प्रतिपदि यण्मुहूर्त्तव्यापिनी द्वितीया, तत्र चन्द्रदर्शनसम्भावनम् ॥२४१॥ इति ।

अन्यदा तु पुरैव प्रतिपत्तत्र गृहीता ॥२४२॥

---

निर्णयामृतधृत पुराणान्तर वचन यह है—हे नृप ! प्रातपद् युक्त अमावस्या में गो-पूजा करनी चाहिये । उसी प्रकार पूजा करने पर प्रजा, गो और राजा की वृद्धि होती है । अतएव प्रातः शब्द से पूर्वाह्नकाल को जानना चाहिये । द्वितीया विद्धा प्रतिपद् में पूजा करना कर्त्तव्य नहीं है । द्वितीया में गो क्रीड़ा सर्वथा निषिद्ध ही है ॥२३५-२३६॥

इस विषय का उल्लेख शास्त्र में है—प्रतिपद् में रक्षा-बन्धन, दशमी में बलिदान एवं द्वितीया में गो-क्रीड़ा करने से देश ध्वंस होता है ॥२३७॥

पुराण समुच्चय में भी वर्णित है—जिस द्वितीया में चन्द्रोदय की सम्भावना है, उसमें प्रतिपद् का योग होने पर भी उस दिन गो क्रीड़ा निषिद्ध है । गो कीड़नदिन में रात्रि में चन्द्र दृष्ट होने पर सोमराज शशाङ्क देव पशुगण को एवं गो-पूजकगण को ध्वंस करते हैं ॥२३८॥

अथ तदुदयसम्भावनञ्च

निर्णयामृत ग्रन्थ में निर्णीत है—यदि प्रतिपद् दिन में उपराह्न काल से आरम्भ कर मुहूर्त्तत्रय व्यापिनी द्वितीया हो तो, उस दिन में ही चन्द्रोदय होने की सम्भावना है ॥२३९॥

अग्न्याधान के विषय में वृद्ध शातातप की उक्ति है—यदि प्रतिपद के अपराह्न काल में मुहूर्त्तत्रय (६ दण्ड) द्वितीया हो तो चन्द्रोदय की सम्भावना है । अतएव अमावस्या एवं पौर्णमासी में कथित अग्न्याधान चतुर्दशी में करना उचित है ॥२४०॥

अथ अपराह्ननिर्णयः

दिन को पाँच भाग में विभक्त करने पर चतुर्थ भाग को अपराह्न कहा जाता है । अर्थात् तीस दण्डात्मक दिन के पाँच भाग करने पर एक एक भाग में ६ दण्ड होते हैं । इसका चौथा भाग ही,– अठारह दण्ड के पीछे जो छे दण्ड हैं वही अपराह्न कहा गया है, सुतरां प्रतिपद् में अष्टादश दण्ड के पश्चात् द्वादश दण्ड

तथैव पुराणसमुच्चये—

वर्द्धमानतिथौ नन्दा यदा सार्द्धत्रियामिका। द्वितीयावृद्धिगामित्वादुत्तरा तत्र चोद्यते ॥२४३

किञ्च —

यदा पूर्णप्रतिपत् परत्र निष्क्रामति, तदाप्युत्तरैव कार्य्या ॥२४४॥

यथोक्तं भविष्योत्तरे—

यथा द्वादशभिर्मासो वृद्धो मलिम्लुचः। तथैवाहोरात्रवृद्धया तिथिः प्रोक्ता मलिम्लुचा ॥२४५

यथा मलिम्लुचः पूर्व्वमासो दैवस्तथापरः।

त्याज्या तिथिस्तथा पूर्व्वा ग्राह्या चैव तथोत्तरा। २४६॥ इति।

निर्णयामृतमतम्—

किन्तु वञ्जुलीन्यायेन पूर्व्वैव मन्तुं शक्यते। तद्वदत्रापि देवलादिवचनप्रामाण्यमस्तीति ॥२४७

अथ गोवर्द्धनपूजाविधिः

पाद्मे तत्रैव—

मथुरायास्तथान्यत्र कृत्वा गोवर्द्धनं गिरिम्। गोमयेन महास्थूलं तत्र पूज्यो गिरिर्यथा ॥२४८

मथुरायां तथा साक्षात् कृत्वा चैव प्रदक्षिणम्। वैष्णवं धाम सम्प्राप्य मोदते हरिसन्निधौ ॥२४९

---

मथुरायाः अन्यत्र मथुरामण्डलव्यतिरिक्तदेशे, यथा यथावत् ॥२४८॥

साक्षात् पूजयित्वेति शेषः ॥२४९॥

---

व्यापिनी द्वितीया होने से ही उसमें चन्द्रोदय सम्भव होता है। अन्य कार्य्य में पूर्व प्रतिपत् तिथि हो गृहीत होती है ॥२४१-२४२॥

उस विषय में पुराण समुच्चय में लिखित है—तिथि की वृद्धिगामित्व अवस्था में प्रतिपत् तिथि सार्द्ध तीन प्रहर होने पर एवं द्वितीया वृद्धिगामिनी होने से प्रतिपत् ही ग्रहण करनी चाहिये ॥२४३॥

और भी लिखित है—पूर्ण प्रतिपत् वृद्धिगामित्व परदिन अवस्थित होने पर प्रतिपत् तिथि ही ग्रहण योग्य है ॥२४४॥

भविष्योत्तर में लिखित है—जिस प्रकार द्वादश मास द्वारा एक मास वृद्धि होकर एक मलमास की उत्पत्ति होती है, उस प्रकार दिन रात्रि की वृद्धि होने पर तिथि भी मलविशिष्ट होती है, उस प्रकार पूर्व मलमास वर्जन करना उचित है। एवं उत्तर मलमास ही धर्मादि अनुष्ठान हेतु पवित्र है, उस प्रकार पूर्व तिथि परित्याग पूर्वक परतिथि ही ग्रहणीय है ॥२४५-२४६॥

निर्णयामृत ग्रन्थ में लिखा है—जिस प्रकार वञ्जुली व्रत में पूर्व तिथि ही ग्रहणीय है, उस प्रकार यहाँ पर भी देवलादि के वचन प्रामाण्य हुए हैं ॥२४७॥

अथ गोवर्द्धनपूजाविधिः

पद्मपुराण के उक्त स्थान में लिखित है—मथुरा-मण्डल व्यतीत अन्यत्र पूजन करना हो तो गो-मय के द्वारा पर्वत प्रस्तुत करके प्रत्यक्ष गोवर्द्धन पूजावत् उसमें गिरिराज की पूजा करे ॥२४८॥

मथुरा में साक्षात् श्रीगोवर्द्धन की पूजा करके प्रदक्षिण करने पर श्रीहरि-धाम में गमन पूर्वक श्रीहरि के सम्मुख में जाकर आनन्द प्राप्त करता है ॥२४९॥

अथ पूजामन्त्रः

गोवर्द्धन धराधार गोकुलत्राणकारक। विष्णुबाहुकृतोच्छ्राय गवां कोटिप्रदो भव ॥२५०॥ इति।

अथ गोपूजामन्त्रः

स्कान्दे तत्रैव—

लक्ष्मीर्या लोकपालानां धेनुरूपेण संस्थिता। घृतं वहति यज्ञार्थे यमपाशं व्यपोहतु ॥२५१॥

अग्रतः सन्तु मे गावो गावो मे सन्तु पृष्ठतः।

गावो मे पार्श्वतः सन्तु गवां मध्ये वसाम्यहम् ॥२५२॥ इति।

अथ गोक्रीड़ा

तत्रैव—

क्रोधापयेद्धावयेच्च गोमहिष्यादिकं ततः। वृषां कर्षापयेद्गोपैरुक्तिप्रत्युक्तिवादनात् ॥२५३॥

पाद्मे च तत्रैव—

महिष्यादेस्तथा भूषा क्रीड़नं रावणन्तथा ॥२५४॥

अथ तन्माहात्म्यम्

तत्रैव—

एवं गोवर्द्धनं गाश्च पूजनीया विधानतः। गोवर्द्धनमखो रम्यः कृष्णसन्तोषकारकः ॥२५५॥

---

क्रोधापयेदित्यार्षं, क्रोधं कारयेदित्यर्थः। गोपैः कृत्वा कर्षापयेत् आकर्षयेत ॥२५३॥
क्रीड़नम्—आकर्षादिक्रीड़ां कारयेदित्यर्थः। रावणं—रवं कारयेदित्यर्थः ॥२५४॥
गा गावः ॥२५५॥

---

अथ पूजामन्त्रः

हे गोवर्द्धन ! हे धराधर ! हे गोकुलत्राण कारक ! तुमने श्रीविष्णु की बाहु में अधिष्ठित होकर छाया प्रदान की थी। मुझको कोटि गो प्रदान करो ॥२५०॥

अथ गोपूजामन्त्रः

स्कन्द पुराण में उक्त स्थान में उक्त है—जो लोकपालकवृन्द की लक्ष्मी स्वरूपिणी हैं, जो धेनु रूप में अवस्थिता हैं, जो यज्ञ के निमित्त घृत वहन करती हैं, वे यमपाश से मुक्त कर देवें। मदीय पुरोभाग में गो समूह अवस्थान करें, मेरे पश्चात् भाग में गो-गण अधिष्ठित रहें, मदीय पार्श्व भाग में गो समूह अवस्थान करें, मैं गो-गण के मध्य में अधिष्ठित रहूँ ॥२५१-२५२॥

अथ गोक्रीड़ा

उक्त पुराण में लिखित है—तत्पश्चात् गो, महिष इत्यादि को परस्पर प्रकुपित करावे, दौड़ावे और उक्ति प्रयुक्ति प्रयोग पूर्वक गोओं के द्वारा गोपगणों के द्वारा वृषसमूह को आकर्षण करावे। अर्थात् हाँक देकर गाय और बैल आदि की क्रीड़ा करावे ॥२५३॥

पद्मपुराण के उक्त स्थान में लिखित है—महिषी प्रभृति को आकर्षणादि की क्रीड़ा करावे, उनको भूषित करे, एवं शब्द भी कराना चाहिये ॥२५४॥

अथ तन्माहात्म्यम्

उक्त पुराण में लिखित है—यथारीति गोवर्द्धन एवं गोगण की पूजा करे। यह रमणीय गोवर्द्धन यज्ञ श्रीकृष्ण को प्रसन्न करने वाला है ॥२५५॥

अथ श्रीबलिदैत्यराजपूजा

लिखित्वा श्रीबलिं पट्टे विन्ध्यावल्यान्वितं मुदा। प्रदोषे तत्प्रतिपदो भगवद्भक्तमर्च्चयेत् ॥२५६

तथा च स्कान्दे—

बलिमालिख्य दैत्येन्द्रं वर्णकैः पञ्चरङ्गकैः। सर्व्वाभरणसम्पूर्णं विन्ध्यावल्या सहासितम् ॥२५७

कुष्माण्ड-मय-जम्भोरु-मुरदानवसंवृतम्। सम्पूर्णहृष्टवदनं किरीटोत्कटकुण्डलम्।

द्विभुजं दैत्यराजानं कारयित्वार्च्चयेन्नृप ॥२५८॥

अथ तत्पूजाप्रकरणम्

पाद्मे तत्रैव—

यथार्पितं देहमनेन विष्णवे, भीतेन मिथ्यावचसो महात्मना।

दैत्येन तेनाथ कठोरचेष्टया, बद्धो बलिर्वामनमूर्त्तिना बत ॥२५९॥

बद्ध्वानीतोऽथ पातालं विमनाः खिन्नमानसः। नाभ्यसूयद्धरिं दैत्यस्त्यक्त्वाहंममते सुधीः।

तदोवाच हरिः प्रीतस्तस्मै दैत्याय भागकृत् ॥२६०॥

अश्रोत्रिये दत्तममन्त्रकं हुतं, जप्तं तथा व्यग्रधिया जनेन यत्।

तथोर्ज्जशुक्लप्रतिपद्दिने न तु, त्वामर्च्चयेत्तत सुकृतं तवास्तु ॥२६१॥

---

तस्या गोवर्द्धनादिपूजासम्बन्धिन्याः शुक्लायाः प्रतिपत्तिथेः प्रदोषे, यतो भगवतो भक्तम् ॥२५६॥

आसितम्—आसीनम् ॥२५७॥

नृप इत्यनेन एतच्च राजकृत्यमिति बोधितम्। स्वयमिति पाठे च सर्व्वो जनः स्वयमेव, न त्वन्य-हस्तेनार्च्चयेदित्यर्थः ॥२५८॥

यस्त्वां नार्च्चयेत्तस्य यावत् सुकृतं, तत् सर्व्वं तवास्तु ॥२६१॥

---

अथ श्रीबलिदैत्यराजपूजा

जिस प्रतिपद् में गोवर्द्धन पूजा की जाती है, उसी तिथि के प्रदोष काल में बिन्ध्यावली एवं हरिभक्त बलिराज,–उभय की प्रतिमूर्त्ति पट्ट में चित्रित करके आनन्द से पूजा करे ॥२५६॥

उस विषय का वर्णन स्कन्दपुराण लिखित है—बिन्ध्यावली के सहित एकत्र समासीन विविध अलङ्कारों से अलङ्कृत दैत्यराज बलि को पञ्चवर्ण द्वारा पट्ट में चित्रित करके पूजा करे। हे नृप! उनकी मूर्त्ति इस प्रकार अङ्कित करे कि वे कुष्माण्ड, मय, जम्भ, उरु, मुर,–इन सब दानवों से परिवेष्टित हैं, प्रफुल्ल वदन, किरीट कुण्डलधारी एवं द्विभुज हैं ॥२५७-२५८॥

अथ तत्पूजाप्रकरणम्

पद्मपुराण के उक्त स्थान में लिखित है—इस महापुरुष बलि ने निज वाक्य मिथ्या होने के भय से श्रीहरि को आत्मदेह अर्पण किया था। किन्तु हाय! भगवान् वामनदेव ने, कठिन व्यवहार प्रदर्शन पूर्वक उसको बाँध लिया। महाज्ञानी बलि, वामनदेव कर्त्तृक बन्धनग्रस्त एवं पाताल में नीत होने पर विमना एवं खिन्न चित्त होकर भी अहं ममता ज्ञान परित्यागपूर्वक श्रीहरि के प्रति असूया नहीं किये थे। उस समय भागकृत् हरि सन्तुष्ट होकर कहे थे—हे दैत्यपते! जो व्यक्ति, अश्रोत्रिय को दान, मन्त्रहीन होम, एवं उद्विग्न भाव से जप करता है, जो व्यक्ति, कार्त्तिक मास के शुक्लपक्ष की प्रतिपत् तिथि में त्वदीय पूजा नहीं करता है, उस व्यक्ति का जो कुछ पूर्व सञ्चित पुण्य है, उन सबको तुम प्राप्त होओ ॥२५९-२६१॥

इति तस्मै वरो दत्तो हरिणा दितिजाय च। ततोऽवश्यं प्रपूज्योऽसौ बलिराजो दिने मुदा।
कृष्णसान्निध्यतश्चापि पूजनीयः प्रयत्नतः ॥२६२॥

अथ बलिपूजाविधिः

स्कान्दे तत्रैव—

गृहस्य मध्ये शालायां विशालायां ततोऽर्च्चयेत्।
भ्रातृमातृजनैः सार्द्धं सन्तुष्टा बन्धुभिस्तथा ॥२६३॥

कमलैः कुमुदैः पुष्पैः कह्लारं रक्तकोत्पलैः। गन्धपुष्पादिनैवेद्यैरक्षतैर्गुड़पूपकैः ॥२६४॥

अथ तत्र पूजामन्त्रः

बलिराज नमस्तुभ्यं विरोचनसुत प्रभो। भविष्येन्द्र सुराराते पूजेयं प्रतिगृह्यताम् ॥२६५॥

दीपोत्सवैर्जनितसर्व्वजनप्रमोदैः, कुर्व्वन्ति ये सुमतयो बलिराजपूजाम्।
दानोपभोगसुखवृद्धिशताकुलानां, नूनं प्रयाति सकलं प्रमुदैव वर्षम् ॥२६६॥

अथ यमद्वितीयकृत्यम्

स्कान्दे पाद्मे च—

ऊर्ज्जे शुक्लद्वितीयायां मध्याह्ने यममर्च्चयेत्। स्नानं कृत्वा भानुजायां यमलोकं न पश्यति ॥२६७

---

एवं श्रीभगवदाज्ञयावश्यं पूज्य एव, कृष्णसमीपवर्त्तित्वाच्चावश्यं भक्त्या पूज्य इत्याह— कृष्णेति ॥२६२
शालायामायतनविशेषे, यद्वा, शालायां गृहे, तत्र गृह-मध्य एवेत्यर्थः। सन्तुष्टः—हर्षयुक्तः सन् ॥२६३॥
कह्लारैः - सौगन्धिकैः ॥२६४॥
भानुजायां—श्रीयमुनायाम् ॥२६७॥

---

श्रीभगवान् ने जब, इस प्रकार बलि दैत्यराज को वर दिया, तब उस दिन हर्ष के साथ बलिराज की पूजा करनी चाहिये। श्रीहरि के सन्निधान में यत्नपूर्वक इनकी पूजा करनी चाहिये ॥२६२॥

अथ बलिपूजाविधिः

स्कन्द पुराण के उक्त स्थान में लिखित है—गृहाभ्यान्तर के विस्तृत स्थान में भ्राता, माता, एवं बन्धु बान्धववृन्दों के सहित मिलित होकर पद्म, कुमुद, सौगन्धिक, रक्तोत्पल, गन्ध, पुष्प, नैवेद्य, अक्षत एवं गुड़ पिष्टक द्वारा सन्तुष्ट चित्त से बलिराज की पूजा करनी चाहिये ॥२६३-२६४॥

अथ तत्र पूजामन्त्रः

हे बलिराज! आपको नमस्कार। हे विरोचन सुत! हे प्रभो! हे भविष्येन्द्र! हे सुराराते! यह पूजा ग्रहण कीजिये ॥२६५॥

जो सब बुद्धिमान् व्यक्ति, दीपोत्सवार्थ मुदित चित्त व्यक्तिवृन्द के सहित मिलित होकर बलिराज की पूजा करते हैं, वे सब व्यक्ति, शतपुरुष पर्य्यन्त, दान, उपभोग एवं सुखसमृद्धि को प्राप्त करते हैं एवं सुख पूर्वक वर्ष यापन करते हैं ॥२६६॥

अथ यमद्वितीयाकृत्यम्

स्कन्दपुराण एवं पद्मपुराण में लिखित है—कार्त्तिकी शुक्ला द्वादशी में मध्याह्न काल में यमराज की पूजा करे। उसी दिन यमुना में स्नान करने पर यमपुरी का दर्शन नहीं करना पड़ता है ॥२६७॥

किञ्च—

तस्यां निजगृहे विप्र न भोक्तव्यं ततो बुधैः। स्नेहेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनम् ॥२६८॥
दानानि च प्रदेयानि भगिनीभ्यो विधानतः।
सर्व्वा भगिन्यः सम्पूज्या अभावे प्रतिपत्नजाः ॥२६९॥

किञ्च—

यस्यां तिथौ यमुनया यमराजदेवः, सम्भोजितस्त्वतिशयस्वसृसौहृदेन।
तस्यां स्वसुः करतलादिह यो भुनक्ति, प्राप्नोति वित्तसुभगं धनमुत्तमं सः ॥२७०॥

अथ शुक्लाष्टमीकृत्यम्

पाद्मे तत्रैव, कूर्म्मपुराणे च—

शुक्लाष्टमी कार्त्तिके तु स्मृता गोपाष्टमी बुधैः। तद्दिने वासुदेवोऽभूद्गोपः पूर्व्वन्तु वत्सपः ॥२७१॥
तत्र कुर्य्याद्गवां पूजां गोग्रासं गो-प्रदक्षिणम् गवानुगमनं कार्य्यं सर्व्वान् कामानभीप्सता ॥२७२॥

अथ प्रबोधनीकृत्यम्

शयन्यामिव कृत्वास्यां क्षीराम्भोधिमहोत्सवम्।
प्रबोध्य कृष्णं सम्पूज्य विधिनारोहयेद्रथम् ॥२७३॥

---

तच्च पुष्टिं वर्द्धयतीत्यर्थः ॥२६८॥
प्रतिपत्नजाः- वैमात्रेयाः ॥२६९॥
वित्तसुभगं शोभनैश्वर्य्यम्, उत्तमं धनं धर्म्मलक्षणम्; 'धर्म्मं इष्टं धनं पुंसाम्' (११।३१) इत्येकादश-स्कन्धोक्तेः ॥२७०॥
यतः पूर्व्वं वत्सपः सन् तद्दिनमारभ्य गोपोऽभूत् ॥२७१॥
गवामनुगमनम् ॥२७२॥ अस्यां—प्रबोधन्याम् ॥२७३॥

---

और भी वर्णित है— हे विप्र! इस दिन अपने घर में भोजन करना बुद्धिमान् मनुष्यों को उचित नहीं है। स्नेह सहित भगिनी के हाथ से भोजन करना चाहिये। भगिनी के हाथ का दिया हुआ भोजन पुष्टिवर्द्धक है। इस दिन यथा विधि भगिनीओं को वस्तु दान करे। जितनी भगिनी हों सबकी ही पूजा करे। यदि सहोदरा भगिनी न हो तो वैमात्रेयी (सौतेली) भगिनीवृन्द की पूजा करनी चाहिये ॥२६८-२६९॥

और भी लिखा है—इस तिथि में भगिनी यमुना ने अतिशय सौहार्द्य के सहित यमराज को भोजन कराया था। इस तिथि में भगिनी के हस्त से भोजन करने पर विपुल ऐश्वर्य्य एवं उत्तम धर्म लाभ होता है ॥२७०॥

अथ शुक्लाष्टमीकृत्यम्

पद्मपुराण के उक्त स्थान में एवं कूर्मपुराण में उक्त है—कार्त्तिक मास की शुक्लाष्टमी ही गोपाष्टमी नाम से अभिहित है। वसुदेव श्रीकृष्ण, इसी दिन 'गोप' आख्या प्राप्त किये थे। अर्थात् इसके पहले श्रीकृष्ण, 'वत्सप' वत्स पालक थे। इस दिन से 'गोप' कहलाये ॥२७१॥

सर्वकामनाभिलाषी व्यक्ति, इस तिथि में गो-गण की पूजा, गो-ग्रासदान, गो प्रदक्षिण, एवं गवानुगमन इत्यादि कार्य्य सम्पादन करे ॥२७२॥

अथ प्रबोधनीकृत्यम्

शयनीवत् प्रबोधनी में भी क्षीराम्बोधि महोत्सव समाधान पूर्वक श्रीकृष्ण को प्रबोधित करे एवं यथा-विधि पूजा करके रथारोहण करावे ॥२७३॥

### अथ प्रबोधनीकृत्यनित्यता

स्कान्दे तत्रैव—

जन्म प्रभृति यत् पुण्यं नरेणोपार्ज्जितं भुवि । वृथा भवति तत् सर्व्वं न कृत्वा बोधवासरम् ॥२७४

### अथ प्रबोधनीमाहात्म्यम्

तत्रैव—

प्रबोधन्याश्च माहात्म्यं पापघ्नं पुण्यवर्द्धनम् । मुक्तिदं कृतबुद्धीनां शृणु त्वं मुनिसत्तम ॥२७५

तावद्गर्ज्जति विप्रेन्द्र गङ्गा भागीरथी क्षितौ ।
यावन्नायाति पापघ्नी कार्त्तिके हरिबोधनी ॥२७६॥
तावद्गर्ज्जति तीर्थानि आसमुद्रसरांसि च ।
यावत् प्रबोधनी विष्णोस्तिथिर्नायाति कार्त्तिके ॥२७७॥

वाजपेयसहस्राणि अश्वमेधशतानि च । एकेनैवोपवासेन प्रबोधन्या लभेन्नरः ॥२७८॥
दुर्ल्लभं चैव दुष्प्राप्यं त्रैलोक्ये सचराचरे । तदपि प्रार्थितं विप्र ददाति हरिबोधनी ॥२७९॥
ऐश्वर्य्यं सन्ततिं पूजां राज्यञ्च सुखसम्पदः । ददात्युपोषिता विप्र हेलया हरिबोधनी ॥२८०॥
मेरुमन्दरतुल्यानि पापान्यर्ज्जितान्यपि । एकेनैवोपवासेन दहते हरिबोधनी ॥२८१॥
पृथिव्यां यानि दानानि दत्त्वा यत् फलमाप्नुते । एकेनैवोपवासेन ददाति हरिबोधनी ॥२८२

---

अस्यां—प्रबोधन्याम् ॥२७३॥
बोधवासरं प्रबोधन्युक्तकृत्यमित्यर्थः, एवं रथयात्रादेर्नित्यत्वमायातम् ॥२७४॥
दुर्ल्लभं दुःखेन प्राप्यं, दुष्प्राप्यञ्च; अप्राप्यं यत् तदपि प्रार्थितं सत् ॥२७९॥
सन्ततिं—पुत्रादीन् ॥२८०॥
दहते दहति ॥२८१॥

---

### अथ प्रबोधनीकृत्यनित्यता

स्कन्दपुराण के उक्त स्थान में लिखित है—प्रबोधनी कृत्य का अनुष्ठान न करने से आजन्मोपार्ज्जित पुण्यराशि विनष्ट होती हैं ॥२७४॥

### अथ प्रबोधनीमाहात्म्यम्

उक्त पुराण में लिखित है—हे मुनिसत्तम ! कृतबुद्धिवृन्द के पातक नाशक, पुण्य वृद्धिकारक एवं मुक्ति दायक प्रबोधनी माहात्म्य का वर्णन तुम्हारे समीप में करता हूँ, श्रवण करो ॥२७५॥

हे विप्रेन्द्र ! यावत् पापनाशिनी कार्त्तिकी हरिबोधनी का आगमन नहीं होता है, तावत् काल ही भागीरथी भूलोक में गर्जन करती है, यावत् कार्त्तिकी विष्णु प्रबोधनी तिथि का आगमन नहीं होता है, तावत् काल आसमुद्र सरोवर यावतीय तीर्थ गर्जन करते रहते हैं। एकमात्र प्रबोधनी तिथि में उपवास करने पर सहस्र वाजपेय एवं शत अश्वमेध यज्ञानुष्ठान का फल लाभ होता है ॥२७६-२७८॥

हे विप्र ! हरिबोधनी, सचराचर त्रिलोक दुर्लभ दुष्प्राप्य एवं प्रार्थित विषय प्रदान करती है ॥२७९॥

हे विप्र ! प्रबोधनी में उपवास करने पर अनायास, ऐश्वर्य्य, सन्तति, सम्मान, राज्य, सुख, सम्पद सब ही मिल जाती हैं। केवलमात्र हरिबोधनी में उपवास करने पर मेरुमन्दर सदृश अर्ज्जित पापसमूह भी भस्मीभूत होते हैं। एकमात्र हरिबोधनी में उपवास करने पर पृथिवी में समस्त दान का फल मिल जाता है ॥२८०-२८२॥

किञ्च—

जातः स एव सुकृती कुलं तेनैव पावितम् । कार्त्तिके मुनिशार्द्दूल कृता येन प्रवोधनी ।।२८३

यानि कानि च तीर्थानि त्रैलोक्ये सम्भवन्ति च ।

तानि तस्य गृहे सम्यग् यः करोति प्रबोधनीम् ।।२८४।।

सर्व्वकृत्यं परित्यज्य तुष्ट्यर्थं चक्रपाणिनः । उपोष्यैकादशी सम्यक् कार्त्तिके हरिबोधनी ।।२८५

किन्तस्य बहुभिः कृत्यैः परलोकप्रदैर्मुने । सकृच्चोपोषिता येन कार्त्तिके हरिबोधनी ।।२८६।।

स ज्ञानी स हि योगी च स तपस्वी जितेन्द्रियः ।

स्वर्गमोक्षौ च तस्यास्तामुपास्ते हरिबोधनीम् ।।२८७।।

विष्णोः प्रियतरा ह्येषा धर्म्मसारस्य दायिनी । इमां सकृदुपोष्यैव मुक्तिभागी भवेन्नरः ।।२८८

प्रबोधनीमुपोष्यैव न गर्भे विशते नरः । सर्व्वधर्म्मान् परित्यज्य तस्मात् कुर्व्वीत नारद ।।२८९

स्नानं दानं तपो होमः समुद्दिश्य जनार्द्दनम् । नरैर्यत् क्रियते विप्र प्रबोधन्यां तदक्षयम् ।।२९०

महाव्रतमिदं पुत्र महापापौघनाशनम् । प्रबोधवासरं विष्णोर्विधिवत् समुपोषयेत् ।२९१।।

व्रतेनानेन देवेशं परितोष्य जनार्द्दनम् । विराजयन् दिशो दीप्त्या प्रयाति भुवनं हरेः ।।२९२

---

परलोकप्रदैरिति तेषां संसारदुःखावहत्वमुक्तम् ।।२८६।।

आस्ताम्—आसातां भवत इत्यर्थः ।।२८७।।

प्रबोधनीत्यादि-शब्देन सामान्येन तत्र सर्व्वेषामेव कृत्यानां माहात्म्यमुक्त्वेदानीं विशेषतस्तानि निर्द्दिशन्नाह—स्नानमिति ।।२८९-२९०।।

---

और भी लिखा है—हे मुनिशार्दूल ! कार्तिक मास में जो सुकृती मनुष्य प्रबोधनी कृत्य करता है, उसी पुण्यवान् का जन्म सार्थक है एवं उसी के द्वारा कुल पवित्र होता है । कार्त्तिकी प्रबोधनी का कृत्य करने पर त्रिलोकस्थ निखिल तीर्थ उसके घर में समागत होते हैं । सर्वकृत्य विसर्जनपूर्वक श्रीहरि के प्रीत्यर्थ कार्त्तिक मास में यथाविधि हरिबोधनी में उपासना करनी चाहिये । हे मुने ! जो मानव एकमात्र कार्त्तिकी हरिबोधनी में उपवास करता है, परलोकप्रद बहुसंख्यक क्रियानुष्ठान से उनको क्या प्रयोजन है? जो हरिबोधनी में उपवास करते हैं, वे ज्ञानी, योगी, तपस्वी, एवं जितेन्द्रिय नाम से कथित होते हैं, एवं स्वर्ग, मोक्षलाभ का अधिकारी होते हैं । यह हरिबोधनी, श्रीविष्णु की प्रियतरा है, एवं धर्मसार दायिका है, इसमें सुकृत् उपवास करने पर मोक्ष लाभ होता है ।।२८३-२८८।।

हे नारद ! प्रबोधनी में उपवास करने से उपवासकारी मानव को पुनर्बार जननी जठर में प्रवेश करना नहीं पड़ता है । सुतरां सर्वधर्म विसर्जन पूर्वक उक्त तिथि में उपवास करना चाहिये ।।२८९।।

हे विप्र ! नरगण प्रबोधनी में श्रीहरि के उद्देश्य में स्नान, दान, तप, वा होम जो कुछ अनुष्ठान करते हैं, वे सब अक्षय होते हैं । हे वत्स ! हरि प्रबोधनी में यथाविधि उपवास करना कर्त्तव्य है, यह महाव्रत है, और इससे महापातकसमूह विनष्ट होते हैं, इस व्रतानुष्ठान के द्वारा सुरेश हरि को सन्तुष्ट करने से तेजो द्वारा दशदिक् को समुद्भासित करके हरिलोक में गमन कर सकते हैं ।।२९०-२९२।।

पाद्मे च तत्रैव—

दुग्धाब्धिभोगिशयने भगवाननन्तो, यस्मिन् दिने स्वपिति चाथ विबुध्यते च ।
तस्मिन्ननन्यमनसामुपवासभाजां, कामं ददात्यभिमतं गरुड़ाङ्कशायी ।।१९३।।

वाराहे च—

उपवासासमर्थानां सदैव पृथुलोचने । एका सा द्वादशी पुण्या समुपोष्या प्रबोधनी ।।२९४।।
तस्यामाराध्य विश्वेशं जगतामीश्वरेश्वरम् । प्राप्नोति सकलं तद्धि द्वादश-द्वादशीव्रतम् ।।२९५।।
उत्तराङ्गारकयुता यदि सा भवति प्रिये । तदा सा महती पुण्या कोटिकोटिगुणोत्तरा ।।२९६
शयने बोधने चैव कोटिदानेन सुन्दरि । उपोष्यैव विधानेन यान्ति मल्लयतां नराः ।।२९७।।
एकादशी सोमयुता कार्त्तिके मासि भाविनि । उत्तराभाद्रसंयोगे अनन्ता सा प्रकीर्त्तिता ।।२९८
तस्यां यत् क्रियते भद्रे सर्व्वमानन्त्यमश्नुते । अनन्तपुण्यफलदा तेनानन्ता स्मृता फले ।।२९९

तत्रैव श्रीयमनारदसंवादे—

अन्यच्च ते प्रवक्ष्यामि गुह्याद्गुह्यतरं मुने । कार्त्तिकेऽमलपक्षे तु साक्षादेकादशी स्मृता ।
भक्तिप्रदा हरेः सा तु नाम्ना ख्याता प्रबोधनी ।।३००।।
या सा विष्णोः परा मूर्त्तिरव्यक्तानेकरूपिणी । सा क्षिप्ता मानुषे लोके द्वादशी मुनिपुङ्गव ।।३०१

दुग्धाब्धौ यद्भोगिशयनं शेषपर्य्यङ्कस्तस्मिन् एतच्च तद्दिने क्षीराब्धिकल्पनाभिप्रायेण साक्षाद्वा, तदानीं तत्रैव शयनादिति ।।२९३।।

उत्तरा उत्तरभाद्रपदनक्षत्रम्, अङ्गारको भौमवारः, ताभ्यां युक्ता सा प्रबोधनी यदि भवेत् ।।२९६।।

सोमवारयुताऽपि परम-महापुण्येत्याह— एकादशीति ।।२९८।।

साक्षाद्धरेर्भक्तिप्रदा ।।३००।।

तत्सेवया च साक्षाद्धरिसेवैव सम्पद्यत इत्याशयेनाह— या सेति, द्वादशीरूपेण क्षिप्ता न्यस्ता ।।३०१।।

पद्मपुराण के उक्त स्थान में वर्णित है— जिस दिन भगवान् अनन्त, क्षीरसमुद्र में शेषपर्य्यङ्क में गमन करते हैं, जिस दिन जागरण करते हैं, उस दिन एकाग्रचित्त से उपवास करने पर गरुड़ाङ्कशायी श्रीहरि, उनका वाञ्छित अभिलाष पूर्ण कर देते हैं ।।२९३।।

वराह पुराण में उक्त है—हे पृथुलोचने । जो सदा उपवास करने में अक्षम हैं, केवलमात्र पुण्याप्रबोधनी द्वादशी में उपवासी रहना उन सबका कर्त्तव्य है । उस दिन जगदीश्वरेश्वर विश्वेश की आराधना करने से द्वादश द्वादशी व्रत का फल लाभ होता है । हे प्रिये ! प्रबोधनी में उत्तर भाद्रपद नक्षत्र एवं मङ्गलवार युक्त होने से वह कोटि कोटि गुणाधिका महापुण्य स्वरूपिणी होती है । हे सुन्दरि ! शयनी एवं बोधनी में यथा-विधि उपवास करने पर कोटिदानजनित फल लाभ होता है, एवं मुझमें विलीन हो सकता है । हे भाविनि ! कार्त्तिक मास की एकादशी, सोमवार एव उत्तर भाद्रपद नक्षत्र विशिष्टा होने पर वह अनन्ता नाम से अभिहिता होती है । हे भद्रे ! उस तिथि में जो भी कर्मानुष्ठान होता है, वह अनन्त पुण्य फलद होता है । वह अनन्त पुण्य फलदायिनी नाम से अभिहिता होने के कारण उस तिथि को अनन्ता कहते हैं ।।२९४-२९९

हे मुने ! त्वत् सकाशे गुह्य से भी गुह्यतर अन्य विषय कहता हूँ । कार्त्तिकमास के शुक्लपक्ष की प्रबोधनी नाम्नी एकादशी साक्षात् हरिभक्ति प्रदायिनी है ।।३००।।

हे मुनिपुङ्गव ! श्रीहरि की अव्यक्ता अनेक रूपिणी परमामूर्त्ति ही मर्त्यलोक में द्वादशी के रूप में स्थित है ।।३०१।।

अथ श्रीमथुरायाञ्च विशेषतो माहात्म्यम्

पाद्मे तत्रैव—

तावद्गर्ज्जन्ति तीर्थानि वाजिमेधादयो मखाः ।

मथुरायां प्रिया विष्णोर्यावन्नायाति बोधनी ।।३०२।।

संसारदावतप्तानां कामसौख्ये पिपासिनाम् । श्रीकृष्णपादपद्मस्य साान्निध्यं शीतलं गृहम् ।।३०३

भवपान्थजनानां वै प्रापिकेयं प्रबोधनी । कथं न सेव्यते मूढ़ मथुरायां किमन्यतः ? ।।३०४।।

अथ विशेषतः प्रबोधन्यां श्रीभगवत्पूजादिमाहात्म्यम्

स्कान्दे तत्रैव प्रबोधनीमाहात्म्ये—

येऽच्चर्चयन्ति नरास्तस्यां भक्त्या देवन्तु माधवम् ।

समुपोष्य प्रमुच्यन्ते पापैस्ते समुपार्ज्जितैः ।।३०५।।

बाल्ये यच्चार्ज्जितं वत्स यौवने वार्द्धके च यत् । सप्तजन्मकृतं पापं स्वल्पं वा यदि वा बहु ।।३०६।।

शुष्कार्द्रं मुनिशार्द्दूल सुगुह्यमपि नारद । तत् क्षालयति गोविन्दस्तिथौ तस्यां सुपूजितः ।।३०७

किञ्च —

प्रबोधवासरे विष्णोः कुरुते च हरेः कथाम् । सप्तद्वीपावनीदाने यत् फलं तद्भवेन्मुने ।।३०८।।

---

श्रीकृष्णपादपद्मसान्निध्यरूपं शीतलं त्रितापहरं गृहम् ।।३०३।।

भवपान्थजनानां संसारमार्गभ्रमणपरिश्रान्तजनान् प्रति प्रापिका प्रापयेदित्यर्थ ; अन्यतः तीर्थान्तरेण कर्म्मान्तरेण च किं प्रयोजनम् ? श्रीमथुरायां तत्सेवने सत्यसति च इत्यर्थः ।।३०४।।

तत्र च विशेषतो भगवतः पूजां कीर्त्तनञ्च कुर्य्यादित्युपदिशन्नादौ पूजामाहात्म्यमाह—ये इति त्रिभिः ।।३०५

शुष्कं—चिरकृतम्, आर्द्रञ्च—साम्प्रतिकम् ।।३०७।।

कीर्त्तनमाहात्म्यमाह— प्रबोधेति । कथामित्युपलक्षणं सर्व्वकीर्त्तनप्रकारस्य ।।३०८।।

---

अथ मथुरायाञ्च विशेषतो माहात्म्यम्

पद्मपुराण के उक्त स्थान में लिखित है—यावत् मथुरा में प्रबोधनी का आगमन नहीं होता है, तावत् काल ही यावतीय तीर्थ एवं अश्वमेधादि यज्ञसमूह गर्जन करते रहते हैं। जो मनुष्य, भवानल से दग्धविदग्ध एवं कामसौख्य पिपासार्त्त हैं, एकमात्र श्रीकृष्ण के पादपद्म सान्निध्य ही उनके पक्ष में त्रितापहर शीतल गृह स्वरूप है। संसार पथ के पथिक प्रबोधनी के प्रसाद से उस घर को प्राप्त कर सकते हैं, अतएव अन्य तीर्थ वा अन्य क्रिया के अनुष्ठान की उनको क्या आवश्यकता है ? रे मूढ़ ! तो फिर क्यों मथुरा की आराधना नहीं करता ? ।।३०२-३०४।।

अथ विशेषतः प्रबोधन्यां श्रीभगवत्पूजादिमाहात्म्यम्

स्कन्द पुराण के उक्त स्थान में प्रबोधनी माहात्म्य प्रसङ्ग में लिखित है—जो,प्रबोधनी में उपवास करके भक्तिपूर्बक श्रीमाधव की पूजा करते हैं, वे अर्जित पातकसमूह से परित्राण प्राप्त होते हैं। हे वत्स ! हे मुनिशार्दूल नारद ! सप्त जन्म में बाल्य, यौवन एवं वार्धक्य अवस्था में जो सब पाप सञ्चित हुये हैं, वह सब चिरकृत हों, अथवा साम्प्रतिक ही हों, भूरिकृत हों अथवा स्वल्प हों, प्रबोधनी में श्रीहरि की पूजा करने से वे उन सबको नष्ट कर देते हैं ।।३०५-३०७।।

और भी उक्त है—हे मुने ! हरि प्रबोधनी में हरिकथा कीर्त्तन करने से सप्तद्वीपान्वित वसुमती दान जनित फल लाभ होता है ।।३०८।।

वाराहे च—

कौमुदस्य तु मासस्य या सिता द्वादशी भवेत् । अर्च्चयेद्यस्तु मां तत्र तस्य पुण्यफलं शृणु ।।३०९

यावल्लोका हि वर्त्तन्ते यावत्त्वञ्चैव माधवि । मद्भक्तो जायते तावदन्यभक्तो न जायते ।।३१०

अथ प्रबोधकालनिर्णयः

भविष्ये—

आ-भा-का-सितपक्षेषु मैत्रश्रवणरेवती । आदिमध्यावसानेषु प्रस्वापावर्त्तनादिकम् ।।३११।।

पाद्मे—

पौषशेषपदेनाह्नि मैत्राद्यमपि नो निशि । द्वादश्यामपि तत् कुर्य्यादुत्थानं शयनं हरेः ।।३१२।।

निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्तनम् । अन्यत्र पादयोगेऽपि द्वादश्यामेव कारयेत्।।३१३

वाराहे च—

अपादनियमस्तत्र स्वापो वा परिवर्त्तने । पादयोगो यदा न स्यादृक्षेणापि तदा भवेत् । ३१४।।

---

अन्यस्य भक्तो न जायते न स्यादिति एकान्तितां प्राप्नोतीत्यर्थः ।।३१०।।

आभाकेति-सङ्केतेन आषाढ़ भाद्र-कार्त्तिकमासास्तेषां सितपक्षेषु शुक्लद्वादशीषु अनुराधाश्रवणा-रेवती-नक्षत्राणामाद्यमध्यान्त्यपादेषु शयन-पार्श्वपरिवर्त्तनोत्थानानि क्रमेण भवन्तीत्यर्थः ।।३११।।

तत्तद्योगाभावे च द्वादश्यामेवोत्थानादिकं कुर्य्यादिति लिखति— पौष्णेति, पौष्णं रेवती, तस्य शेषोऽन्त्य-पादो यदि दिनमध्ये न स्यात्, मैत्राद्यमपि अनुराधाद्यपादो निशि न स्यात्, तदा केवलायामपि द्वादश्यां हरेरुत्थानादिकं कुर्य्यात् ।।३१२।।

पादयोगे ततोऽन्यत्रापि पादयोगाभावेऽपि द्वादश्यामेव कारयेत् ।।३१३।।

अपादनियमः पादयोगनियमो नास्तीत्यर्थः ।।३१४।।

---

वराह पुराण में उक्त है—हे माधवि ! कार्त्तिक मास के शुक्लपक्ष की द्वादशी में मेरी पूजा करने से जो फल होता है उसको कहता हूँ । सुनो, जब तक तुम और यह दृश्यमान लोक विद्यमान रहेंगे, तब तक वही पूजक मेरा एकान्त भक्त होगा, दूसरा कोई नहीं हो सकेगा ।।३०९-३१०।।

अथ प्रबोधकालनिर्णयः

भविष्य पुराण में लिखित है- आषाढ़, भाद्र, कार्त्तिक,- इन मासत्रय के शुक्लपक्ष की द्वादशी तिथि में अनुराधा, श्रवणा, एवं रेवती नक्षत्र के आदि, मध्य एवं शेषपाद में शयन, पार्श्वपरिवर्त्तन एवं उत्थान यथाक्रम से होता है ।।३११।।

पद्मपुराण में लिखित है—दिन में रेवती नक्षत्र का शेषपाद प्राप्त न होने से एवं अनुराधा का आद्यपाद का योग रात्रि में न होने से केवल मात्र द्वादशी में ही भगवान् का उत्थान, शयन सम्पादन करें ।।३१२।।

समस्त नक्षत्रों का पाद योग उपस्थित होने से रात्रि भाग में शयन, दिवा भाग में उत्थान, एवं सन्ध्या काल में पार्श्व परिवर्त्तन कराना चाहिये । उस उस नक्षत्रों का पाद योग के अभाव होने पर केवल मात्र द्वादशी में ही उक्तानुष्ठान करना कर्त्तव्य है ।।३१३।।

वराह पुराण में लिखित है—शयन किंवा पार्श्वपरिवर्त्तन में पादयोग के किसी नियम की आवश्यकता नहीं है । पादयोग न होने पर केवलमात्र नक्षत्र में ही अनुष्ठान करे ।।३१४।।

किञ्च स्कान्दे—

रेवत्यन्तो यदा रात्रौ द्वादश्या च समन्वितः। तदा विबुध्यते विष्णुर्दिनान्ते प्राप्य रेवतीम्। ३१५

रेवत्यादिरथान्तो वा द्वादश्या च विना भवेत्। उभयोरप्यभावे तु सन्ध्यायाञ्च महोत्सवः॥ ३१६

वाराहे च—

द्वादश्यां सन्धिसमये नक्षत्राणामसम्भवे। आ-भा-का-सितपक्षे तु शयनावर्त्तनादिकम् ॥३१७॥

अतएव पुष्करपुराणे—

यस्य यस्य तु देवस्य यन्नक्षत्रं तिथिश्च या। तस्य देवस्य तस्मिंश्च शयनावर्त्तनादिकम् ॥३१८

एवं सामान्येन शयनादिकालत्रिकं निर्णीयेदानीं विशेषतः प्रबोधनकालं लिखति रेवतीति द्वाभ्याम्। द्वादश्या समन्वितः सहितो रेवत्यन्त्यपादो यदा रात्रौ भवेत्, तदा दिनान्ते अपराह्णे। तथा चोक्तम्—'रेवत्यन्तो यदा रात्रौ गतः पादान्तरेऽपि च। अपराह्णे तदा विष्णुर्योगनिद्रां विमुञ्चति॥' इति॥

तदभावे च सन्ध्यायां प्रबोधयेदित्याह— रेवत्यादिरिति। रेवत्या आदि आद्यपादः, अन्तो वा अन्त्यपादः द्वादश्या विना भवेत्; एवमुभयोरप्यभावे सति यदि द्वादश्यां कथञ्चिद्रेवत्या योगो न स्यादित्यर्थः, तदा सन्ध्यायामेव प्रबोधन-महोत्सवः स्यात्। तच्चोक्तमन्यत्रापि—'रेवत्यन्तो यदा रात्रौ द्वादश्या च विना भवेत्। उभयोरप्यभावे स्यात् सन्ध्यायान्तु महोत्सवः॥' इति॥३१६॥

एतदेव वराहपुराणवचनेन सम्वादयति— द्वादश्यामिति। आषाढ़-भाद्र-कार्त्तिकानां सितपक्षेषु या द्वादशी, तस्यां नक्षत्राणां मैत्रादीनामसम्भवे सर्व्वथा अभावे सति सन्धिसमये सन्ध्यायां शयनादिकं स्यात्। एतदुक्तं भवति—भगवच्छयनादौ आषाढ़ादीनां शुक्लद्वादशीक्रमेणानुराधादीनामाद्यमध्यान्त्यपादयुक्ता रात्रिसन्ध्यादिना युक्ता च सती परमप्रशस्ता। यदा च तत्र तत्र पादयोगो न लभ्येत, तदा द्वादशीनक्षत्रयोग आदरणीयः। पादयोगे च तत्रायं विधिविशेषः। दिवा रेवतीद्वादश्योर्योगे तत्र च रात्रिगामिनि नक्षत्रशेषे सति दिनान्ते प्रबोधन दिनोत्थानमित्याद्युक्तेः। यदा च रेवतीद्वादश्योर्योगो न स्यात्तदा सन्ध्यायामेव प्रबोधनं सन्ध्यायान्तु महोत्सव इत्याद्युक्तेः॥३१७॥

एवं द्वादश्यामेव प्रबोधनं निर्णीतं, तत्र च 'कार्त्तिके शुक्लपक्षस्य एकादश्यां समाहितः। मन्त्रेण चैव राजेन्द्र देवमुत्थापयेद्द्विजः॥' इत्यादिभिर्भविष्योत्तरादिवचनैः सह विरोधमाशङ्क्य परिहरति—यस्येति। अतो विष्णुतिथौ द्वादश्यामेव उत्थानं भवेदित्यर्थः। इत्थं 'इयन्तु द्वादशी देव' इति, 'प्राप्ता तवेयं द्वादशी कौमुद्याख्या' इति मन्त्रलिङ्गानुगृहीतत्वात् शिष्टाचारदर्शनाच्च सर्व्वदा द्वादश्यामेव प्रबोधनं सिद्धम्। यच्च भविष्योत्तरादौ 'एकादश्यामुत्थापयेन' इत्याद्युक्तं, तच्च एकादशीद्वादश्योरभेदापेक्षया उपवासाद्यभिप्रायेण चेति ज्ञेयम्। यदि वैकादशीदिन एवोपवासः स्यात्तर्हि तस्मिन्नुपवासादिना समाहितत्वं प्रबोधनञ्च द्वादश्यामेवेति बोद्धव्यम्। अतएवोक्तम्—'एकादश्यां समाहितः' इत्येषा दिक्॥३१८॥

स्कन्द पुराण में लिखित है—रात्रि में द्वादशी के सहित रेवती नक्षत्र का शेष पादयुक्त होने पर उस दिन अपराह्न काल में श्रीहरि का जागरण सम्पादन करे। द्वादशी में रेवती नक्षत्र का प्रथम पाद एवं शेष पाद का योग न होने पर उभय के अभाव से सन्ध्या काल में श्रीहरि का प्रबोधन महोत्सव सम्पादन करे। ॥३१५-३१६॥

वराह पुराण में लिखित है—आषाढ़, भाद्र एवं कार्त्तिक के शुक्लपक्ष की द्वादशी तिथि में नक्षत्र का योग न होने से सायंकाल में शयन एवं पार्श्वपरिवर्त्तन करना कर्त्तव्य है ॥३१७॥

अतएव पुष्कर पुराण में लिखित है—जिस जिस देवता का जो जो नक्षत्र एवं जो जो तिथि विहित हैं, उस उस नक्षत्र में ही उन उन देवताओं के शयन पार्श्वपरिवर्त्तनादि का सम्पादन करे ॥३१८॥

अथ भगवत्प्रबोधन-विधिः

शयन्यामिव निष्पाद्य महापूजां जलाशये । कृष्णं नीत्वाथ सङ्कल्पं कृत्वा तञ्च प्रबोधयेत् ।।३१९

अथ तत्र मन्त्राः

ब्रह्मेन्द्र-रुद्राग्नि-कुबेर-सूर्य्य,-सोमादिभिर्वन्दितपादपद्म ।

बुध्यस्व देवेश जगन्निवास, मन्त्रप्रभावेण सुखेन देव ।।३२०।।

इयन्तु द्वादशी देव प्रबोधार्थं विनिर्म्मिता । त्वयैव सर्व्वलोकानां हितार्थं शेषशायिना ।।३२१

उत्तिष्ठोत्तिष्ठ गोविन्द त्यज निद्रां जगत्पते ।।३२२।।

त्वयि सुप्ते जगन्नाथे जगत् सुप्तं भवेदिदम् । उत्थिते चेष्टते सर्व्वमुत्तिष्ठोत्तिष्ठ माधव ।।३२३।।

इति ।

वाराहे च—

ब्रह्मेन्द्र-रुद्रैरवितर्क्यभावो, भवानृषिर्वन्दिताङ्घ्रिः ।

प्राप्ता तवेयं द्वादशी कौमुदाख्या, जागृष्व जागृष्व च लोकनाथ ।।३२४।।

मेघा गता निर्म्मलपूर्णचन्द्रः, शारद्यपुष्पाणि च लोकनाथ ।

अहं ददानीति च भक्तिहेतो,-र्जागृष्व जागृष्व च लोकनाथ ।।३२५।।

श्रुतिश्च—

इदं विष्णुर्विचक्रमे, त्रेधा निदधे पदं, समूढ़मस्य पांशुलेत्यादि ।।३२६।।

---

शयन्यामिवेति—तत्र लिखितप्रकारानुसारेणात्रापि पूजादिकं कार्य्यमित्यर्थः । 'जलाशये नीत्वा' इत्यादिकं विशेषलिखनायानुस्मरणमात्रम् ।।३१९।।

वन्दनीयेति पाठे ब्रह्मादिभिर्वन्दिता एकान्तभक्तास्तैर्वन्दनीयेति । ऋषिः—मन्त्रद्रष्टा ।।३२४।।

---

अथ भगवत्प्रबोधन-विधिः

शयनी द्वादशी के लिखित विधानानुसार श्रीहरि को जलाशय में ले जाकर जलाशय के सन्निधान में महापूजा समापन पूर्वक सङ्कल्प करके प्रभु को प्रबोधित करे ।।३१९।।

अथ तत्र मन्त्राः

हे देवेश ! हे जगन्निवास ! विरिञ्चि, इन्द्र, रुद्र, वह्नि कुबेर, सूर्य्य, एवं चन्द्र प्रभृति सुरवृन्द भवदीय चरणपद्म की वन्दना करते हैं । हे देव ! आप, मन्त्र प्रभाव निबन्धन जागरित हूजिये । आप शेषशायी हैं, निखिल लोक मङ्गल के निमित्त जागरणार्थ इस द्वादशी की सृष्टि आपने की है । हे गोविन्द ! उठिये, उठिये । हे जगत्पते ! निद्रा त्याग दीजिये । आप जगन्नाथ हैं, आप निद्रित रहने से सब जगत् सोता रहेगा, और आपके उठने से सब ब्रह्माण्ड सचेष्ट होगा । हे माधव ! आप उठिये, उठिये ।।३२०-३२३।।

वराह पुराण में लिखित है—विधि, इन्द्र, रुद्रादि देवगण तर्क द्वारा भी आपका भाव जानने में सक्षम नहीं हैं । आप मन्त्र द्रष्टा हैं, एवं पूजनीय व्यक्ति समूह के भी पूजनीय हैं । आपकी प्रीतिकरी कौमुदाख्या द्वादशी समागता है । हे लोकपते ! आप जागिये, जागिये । हे लोकनाथ ! मेघसमूह अपगत हुये हैं, पूर्णचन्द्र भी विमल हो गया है । मैं भक्तिपूर्वक शारदीय कुसुमसमूह अर्पण कर रहा हूँ । हे लोकनाथ ! आप जागिये, जागिये ।।३२४-३२५।।

अनन्तर श्रुत्युक्त—"इदं विष्णुं विचक्रमे" इत्यादि मन्त्र पठनीय हैं । तत्पश्चात् घण्टादि वाद्यपूर्वक प्रभु

ततस्तल्पात् समुत्थाप्य कृष्णं घण्टादिनिस्वनैः। तीरे सुखं निवेश्याथ प्रार्थयेत्तदनुग्रहम् ॥३२७

अथ तत्र प्रार्थनामन्त्रः

तथाहि तृतीयस्कन्धे श्रीब्रह्मस्तुतौ (९।२५)—

सोऽसावदभ्रकरुणो भगवान् विवृद्ध,-प्रेमस्मितेन नयनाम्बुरुहं विजृम्भन्।
उत्थाय विश्वविजयाय च नो विषादं, माध्व्या गिरापनयतात् पुरुषः पुराणः ॥३२८॥ इति।

ततः पुष्पाञ्जलिं दत्वा संस्थाप्य विधिवत् प्रभुम्। नीराज्य न्यासपूर्व्वश्च वस्त्रादीनि समर्पयेत्॥३२९

तथा च ब्राह्मे—

एकादश्यान्तु शुक्लायां कार्त्तिके मासि केशवम्। प्रसुप्तं बोधयेद्रात्रौ श्रद्धाभक्तिसमन्वितः॥३३०
नृत्यैर्गीतैस्तथा वाद्यैर्ऋग्यजुःसाममङ्गलैः। वीणापणवशब्दैश्च पुराणश्रवणेन च॥३३१॥
वासुदेवकथाभिश्च स्तोत्रैरन्यैश्च वैष्णवैः। सुभाषितैरिन्द्रजालैर्भूमिशोभाभिरेव च॥३३२॥
पुष्पैर्धूपैश्च नैवेद्यैर्दीपवृक्षैः सुशोभनैः।
होमैर्भक्ष्यैरपूपैश्च फलैः शाकैश्च पायसैः॥३३३॥
इक्षोर्विकारैर्मधुना द्राक्षाक्षौद्रैः सदाड़िमैः। कुचेरकस्य मञ्जर्य्या मालत्या नवनेन च।
हृद्याभ्यां श्वेतरक्ताभ्यां चन्दनाभ्याञ्च सर्व्वदा॥३३४॥
कुङ्कुमालक्तकाभ्याञ्च रक्तसूत्रैः सकुङ्कुमैः। तथा नानाविधैः पुष्पैर्द्रव्यैर्वीरक्रयाहृतैः॥३३५॥

---

अदभ्रकरुणः महादयालुः, अतः विवृद्धप्रेम्णा यत् स्मितं तेन, विजृम्भन् विजृम्भयन् उन्मीलयन्, विश्वस्य विजयाय उद्भवाय, यद्वा, निजभक्तिप्रचारणेन विश्ववशीकरणाय, यद्वा, जगन्महोत्सवाय; च-शब्दाद्विशेषतोऽनुग्रहाय चेति। नोऽस्माकं भक्तानां विषादं प्रलयात् चिरवागमृतपानाभावतो वा शकदुःखं माध्व्या मधुरया गिरा अपनयतात्। श्लोकश्चायं शिष्टाचारानुसारेणात्र लिखितः, किन्त्वन्येऽपि यथेष्टं पठनीयाः॥३२८॥

एकादश्यामिति पूर्व्वं लिखिताभिप्रायमेव। रात्राविति पाठे च दिनान्ताद्यभिप्रायेण रात्रि-शब्दः। श्रद्धा विश्वासः, भक्तिः प्रीतिस्ताभ्यां समन्वितः॥३३०॥

ऋगादि-मङ्गलशब्दैः॥३३१॥

भूमिशोभाभिः—स्वस्तिकरचनादिभिः॥३३२।

कुचेरकः कृष्णतुलसी, पर्णास इति केचित्। नवनं पुष्पविशेषः॥३३४॥

वीरक्रयो नाम विक्रेतुरुपन्यस्तमूल्यप्रदानेन क्रयस्तेनाहृतैः॥३३५॥

---

को शय्या से समुत्थापित करके जलाशय तट में सुख पूर्वक उपवेशन कराकर अनुग्रह की प्रार्थना करें।
॥३२६-३२७॥

श्रीमद्भागवत के तृतीय स्कन्ध की श्रीब्रह्म-स्तुति में लिखित है—परम दयालु, पुराण पुरुष भगवान् श्रीहरि, विवृद्ध सप्रेम हास्य के सहित नयन कमल विकसित करके विश्वविजय हेतु एवं मेरे प्रति अनुग्रह करने के निमित्त उत्थित होकर मधुर वाक्य द्वारा मदीय विषाद विदूरित करें॥३२८॥

अनन्तर श्रीप्रभु को पुष्पाञ्जलि समर्पण, विधानानुसार स्थापन, न्यास साधन एवं नीराजन,—इन सब कार्य्यों को सम्पादन करने के पश्चात् वसनादि समर्पण करे॥३२९॥

उक्त विषय में ब्रह्मपुराण में लिखा है—कार्त्तिक शुक्लपक्ष की एकादशी में श्रद्धा भक्ति पूर्वक, नृत्य, गीत वाद्य, ऋक् यजुः सामादि मङ्गलध्वनि, वीणा पणवशब्द, पुराण श्रुति, हरिकथा, अन्यान्य वैष्णव-स्तोत्र,

एवमेव प्रायः पाद्मे च, तथा स्कान्दे च—

बहुपुष्पैर्बहुफलैः कर्पूरागुरुकुङ्कुमैः । हरेः पूजा विधातव्या कार्त्तिके बुधवासरे ।३३६॥ इति।

इत्थं कृत्वा महापूजां महानीराजनं तथा । स्वव्रतान्यर्पयेत् कृष्णे सपुष्पाक्षतवारिणा ॥३३७

वेदस्तुत्यादिना स्तुत्वा स्वस्त्यस्त्वित्यादिना प्रभुम् ।
सम्प्रार्थ्य गीतवाद्यादिघोषैरारोहयेद्रथम् ॥३३८॥

तथा च भविष्योत्तरे श्रीकृष्णयुधिष्ठिरसंवादे—

महातुर्य्यरवै रात्रौ भ्रामयेत् स्यन्दने स्थितम् । उत्थितं देवदेवेशं नगरे पार्थिवः स्वयम् ।
दीपोद्योतकरे मार्गे नृत्यगीतसमाकुले ॥३३९॥

अथ रथयात्रामाहात्म्यम्

भविष्योत्तरे तत्रैव—

यं यं दामोदरः पश्येदुत्थितो धरणीधरः । तं तं प्रदेशं राजेन्द्र सर्व्वं स्वर्गाय कल्पयेत् ॥३४०॥

किञ्च—

यावत् पदानि कृष्णस्य रथस्याकर्षणं नरः । करोति क्रतुभिस्तानि तुल्यानि नरनायक ॥३४१

रथस्थं ये निरीक्षन्ते कौतुकेनापि केशवम् । देवतानां गणाः सर्व्वे भवन्ति श्वपचादयः ॥३४२॥

---

इत्थं ब्रह्मपुराणाद्युक्तप्रकारेण, स्वस्य व्रतानि चातुर्म्मास्यादि-विहितानि ॥३३७॥

'स्वस्त्यस्तु विश्वस्य मनः प्रसीदताम्' इत्यादिना प्रभुं संप्रार्थ्य ।॥३३८॥

ते श्वपचादयोऽपि देवगणा भवन्ति ॥३४२॥

---

सुकथा प्रयोग, इन्द्रजाल, स्वस्तिक रचन, पुष्प, धूप, नैवेद्य, मनोहर दीपवृक्ष, होम, भक्ष्य, पिष्टक, फल, शाक, पायस, इक्षुविकार, मधु, द्राक्षा, क्षौद्र, (मधु विशेष) दाड़िम्ब, कृष्ण तुलसी मञ्जरी, मालती, नवन (पुष्प विशेष) सुन्दर श्वेत चन्दन, सुन्दर लोहित चन्दन, कुङ्कुम, अलक्त, कुङ्कुमाक्त लाल सूत्र, विविध पुष्प, एवं विक्रेता के निकट से एक मूल्य से क्रय किया हुआ द्रव्य,–इन सबके द्वारा निशा भाग में निद्रित श्रीहरि को जागरित करे ॥३३०-३३५॥

पद्मपुराण एवं स्कन्द पुराण में प्रायः उस प्रकार ही वर्णित है—कार्त्तिकी प्रबोधनी में विविध पुष्प, विविध फल, कर्पूर, अगुरु, एवं कुङ्कुमादि द्वारा श्रीहरि की पूजा करनी चाहिये ॥३३६॥

इस प्रकार महापूजा समापन पूर्वक महानीराजन करके पुष्प, अक्षत एवं जल के द्वारा श्रीहरि को व्रत समर्पण करे। वेद, स्तोत्रादिपूर्णा स्तुति एवं स्वस्त्यस्तु इत्यादि श्लोक द्वारा प्रार्थना करके गीत-वाद्य के सहित श्रीप्रभु को रथारोहण करावे ॥३३७-३३८॥

उस विषय में भविष्योत्तर के श्रीकृष्ण-युधिष्ठिर-संवाद में लिखित है—नृपतिवृन्द स्वयं रात्रिकाल में महा तुर्य्यध्वनि के सहित रथारूढ़ प्रबुद्ध देव देव हरि को नगर के नृत्य-गीत समाकुल दीपालोक से उद्भासित पथ में भ्रमण करावें ॥३३९॥

अथ रथयात्रामाहात्म्यम्

भविष्योत्तर पुराण के उक्त स्थान में लिखित है– हे राजेन्द्र ! धरणीधर दामोदर, जागरण के पश्चात् रथारूढ़ होकर जिस जिस स्थान को देखते हैं, वह स्थान स्वर्ग सदृश होता है, इस प्रकार कथित है ।३४०

और भी लिखा है—हे नरनायक ! श्रीहरि के रथ की रज्जु को धारणकर जितने पद आकर्षण किया जाता है, उतने पद स्थान यज्ञायतन तुल्य होता है। कौतुक से भी रथोपरिस्थ श्रीहरि को दर्शन करने से

स्त्रियोऽपि मुक्तिमायान्ति रथयात्रापरायणाः । पितृमातृभर्त्तृकुलं नयन्ति हरिमन्दिरम् ॥३४३
कुर्व्वन्ति नर्त्तकीरूपं रथाग्रे कौतुकान्वितम् । अप्सरोभिः सह क्रीड़ां कुर्व्वन्तीन्द्राश्चतुर्द्दश ॥३४४
ये रथाग्रे प्रकुर्व्वन्ति गीतवाद्यादि मानवाः । देवलोकात् परिभ्रष्टा जायन्ते मण्डलेश्वराः ॥३४५
मौल्येन स्यन्दनस्याग्रे गायमानाश्च गायकाः । वादकैः सह राजेन्द्र प्रयान्ति हरिमन्दिरम् ॥३४६
रथोत्सवे मुकुन्दस्य येषां हर्षोऽपि जायते । तेषां न नारकी पीड़ा यावदिन्द्राश्चतुर्द्दश ॥३४७॥
रथोत्सवस्य माहात्म्यं कलौ वितनुते हि यः । पुण्यबुद्धचा विशेषेण लोभेनाप्यथवा नरः ॥३४८
सप्तद्वीपसमुद्रान्ता रत्नधान्य-समन्विता । सशैलवनपुष्पाढ्या तेन दत्ता मही भवेत् ॥३४९॥

अन्यत्र च—

बोधनी जागराधारा कार्त्तिके शुक्लपक्षतः । रथस्थो यत्र भगवांस्तुष्टो यच्छति वाञ्छितम् ॥३५०
भजन्ते ये रथारूढं देवं सर्व्वेश्वरेश्वरम् । तेषां यात्राकृतां नृणां कामानिष्टान् प्रयच्छति ॥३५१
श्रीकृष्णरथशोभां ये प्रकुर्व्वन्ति प्रहर्षिताः । तेषां मनोरथावाप्तिं यच्छते पुरुषोत्तमः ॥३५२॥

श्रीकृष्णरथसंशोभां यः करोति स्वशक्तितः ।
वाञ्छितं तस्य यच्छन्ति नित्यं सूर्य्यादयो ग्रहाः ॥३५३॥

---

नर्त्तक्या इव रूपं वेशं कुर्व्वन्ति ॥३४४॥

देवलोकात् परिभ्रष्टा इति— प्राग्देवलोके यथेष्ट भोगान् भुक्त्वा ततः परिभ्रष्टाः सन्त इत्यर्थः ॥३४५॥

मौल्येन वेतनेनापि गृहीतेन ॥३४६॥

अस्तु तावद्रथयात्रानिष्पादनं, तत्रोत्साहादिनापि महाफलं स्यादित्याह— रथेति त्रिभिः । हर्षोऽनुमोदन-मुत्साहो वा ॥३४७॥

यत्र—यस्यां बोधन्याम् ॥३५०॥

मनोरथावाप्तिं— वाञ्छितफलम् ॥३५२।

---

भी श्वपचादि जनगण देवता हो सकते हैं। रथयात्रा परायण नारीगण को भी मुक्ति प्राप्त होती है। एवं पितृकुल, मातृकुल, एवं पतिकुल को श्रीहरिलोक में ले जा सकती हैं। जो,कौतुक करके भी रथ के अग्रभाग में,नर्त्तकी रूप धारण करते हैं, वे चतुर्द्दश इन्द्रपात यावत् अप्सरोगण के सहित विहार कर सकते हैं। जो रथाग्र में गीत-वाद्यादि करते हैं, वे अनेक दिन देवलोक में रहकर मण्डलेश्वर नरपति रूप में धराधाम में अवतीर्ण होते हैं। हे राजेन्द्र ! वेतन ग्रहण करके भी जो गायकगण, रथ के समीप में गान करते हैं, वह सब गायकगण, वादकवृन्द के सहित हरिलोक गमन करते हैं। श्रीहरि के रथोत्सव दर्शन करके जो आनन्दित होते हैं, चतुर्दश इन्द्र के राजत्व पर्य्यन्त उन सबको नरक यातना भोगनी नहीं पड़ेगी। जो, कलिकाल में पुण्य बुद्धि से अर्थात् पुण्य लाभेच्छु होकर, अथवा लोभनिबन्धन रथोत्सव महिमा प्रचार करते हैं, वे रत्नधातु समन्विता, वन पुष्प विराजिता, ससागरा, सप्तद्वीपा पृथिवी दान करते हैं। अर्थात् वे उस प्रकार दान का फल लाभ करते हैं ॥३४१-३४९॥

अन्य स्थान में भी लिखित है—जहाँ पर कार्त्तिकी शुक्लपक्षीया जागराधार रूपिणी बोधनी में भगवान् हरि रथ रूढ़ होते हैं, वहाँ अभिलषित फल अर्पण करते हैं। जो सब व्यक्ति रथारूढ़ सर्वेश्वर हरि को देख कर आराधना करते हैं, भगवान, उन सब यात्रा उत्सवकारी को वाञ्छित फल प्रदान करते हैं। जो लोक, अतिशय आनन्द के सहित श्रीकृष्ण की रथशोभा निष्पादन करते हैं, पुरुषोत्तम उन सबको उनके मनोभीष्ट

कृष्णस्य रथशोभां यः पताकादिसमन्विताम् ।
करोति वरनारीणां भोक्ता मन्वन्तराणि षट् ॥३५४॥

कृष्णस्य रथशोभां ये प्रकुर्व्वन्ति प्रहर्षिताः। पदे पदे तथा पुत्र तेषां पुण्यं प्रयागजम् ॥३५५॥
रथयात्रास्थिते कृष्णे जयेति प्रवदन्ति ये। जयेति च पुनर्ये वै शृणु पुण्यं वदाम्यहम् ॥३५६॥
गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे। वाराणस्यादितीर्थेषु देवानञ्चैव दर्शने ॥३५७॥

यत् फलं कविभिः प्रोक्तं कात्स्र्येन च नरेश्वर ।
जय-शब्दे कृते विष्णौ रथस्थे तत् फलं स्मृतम् ॥३५८॥

रथस्थितो नरैर्यैस्तु पूजितो धरणीधरः। यथालाभोपपन्नैश्च पुष्पैर्भक्त्या समर्च्चितः।
ददाति वाञ्छितान् कामानन्ते च परमं पदम् ॥३५९॥

मङ्गलं ये प्रकुर्व्वन्ति धूपदीपांस्तथा स्तवम् ।
नैवेद्यं वस्तुपूजाञ्च भक्त्या नीराजनं हरेः ॥३६०॥

रथारूढ़स्य कृष्णस्य सम्प्राप्ते हरिवासरे। फलं न तन्मया ज्ञातं जानाति यदि केशवः ॥३६१
ब्रह्मस्वहारी गोघ्नश्च भ्रूणहा ब्रह्मनिन्दकः। महापातकयुक्तोऽपि ब्रह्महा गुरुतल्पगः ॥३६२॥
मद्यपः सर्व्वपापोऽपि कलिकालेन मोहितः। रथाग्रतः पदैकेन मुच्यते सर्व्वपातकैः ॥३६३॥

---

यदीति संशयश्चानन्त्याभिप्रायेण ॥३६१॥
सर्व्वाणि पापानि यस्मिन् सोऽपि ॥३६३॥

---

पूर्ण करते हैं, जो स्वीय शक्त्यनुसार श्रीकृष्ण के रथ को अलङ्कृत करते हैं, सूर्य्यादि ग्रहगण तदीय मनोवाञ्छा पूर्ण करते हैं। जो पातकादि द्वारा भगवान् के रथ को अलङ्कृत करते हैं, षट् मन्वन्तर यावत् वे उत्तम नारीगण के सहित विहार करते हैं ॥३५०-३५४॥

हे वत्स ! जो अतिशय हर्षान्वित होकर श्रीकृष्ण के रथ की शोभा सम्पादन करते हैं, पद पद में वे सब प्रयाग जनित पुण्य लाभ करते हैं। श्रीहरि, रथारोहण करने पर जो लोक जयध्वनि करते हैं, उनको जो पुण्य लाभ होता है, कहता हूँ—सुनो ॥३५५-३५६॥

हे नरेश्वर ! गङ्गाद्वार, प्रयाग, गङ्गासागर सङ्गम, वाराणसी प्रभृति तीर्थ एवं देवतागण को दर्शन करने से जो पुण्योदय होता है, सुधीगण कहे हैं, श्रीहरि, रथोपरि आरूढ़ होने पर जो जयध्वनि करते हैं, वे, इन सब पुण्यसमूह को सम्यक् प्रकार से प्राप्त होते हैं ॥३५७-३५८॥

रथारूढ़ धरणीधर हरि को भक्तिपूर्वक यथा प्राप्त पुष्प द्वारा पूजा करने पर भगवान् पूजित होकर सर्वाभीष्ट पूरणपूर्वक अन्तिम में परमपद प्रदान करते हैं। हरिवासर समागत होने पर जो सब व्यक्ति, भक्तिपूर्वक रथारूढ़ हरि की उपासना मङ्गल द्रव्य, धूप, दीप, स्तुति, नैवेद्य, वस्त्र, पूजा एवं नीराजन प्रभृति के द्वारा करते हैं, वह सब किस प्रकार फल लाभ करते हैं, उसको मैं नहीं जानता हूँ। श्रीहरि स्वयं ही ज्ञात हो सकते हैं। ब्रह्मस्वहारी, गोहन्ता, भ्रूणहन्ता, ब्रह्मनिन्दक, महापातकी, ब्रह्मघ्न, गुरुदारगामी, मद्यपायी, विमुग्ध एवं सर्व पातकों से पातकी होकर भी रथ के पुरोभाग में पादमात्र गमन करने पर यावतीय पातकों से मुक्त होने में सक्षम होते हैं ॥३५९-३६३॥

किञ्चान्यत्र —

रथारूढ़े महाविष्णौ ये कुर्व्वन्ति जयस्वनम् । पूजाश्चाखिलपापेभ्यो मुक्ता यान्ति हरेः पदम् ॥३६४

किञ्च—

रथस्याकर्षणं पूर्व्वं कुरुते दैत्यनायकः । ततः सुराः सिद्धसङ्घा यक्षगन्धर्व्वमानवाः ॥३६५॥इति।

इत्थञ्च रथयात्राया विधिर्व्यक्तः स्वतोऽभवत् । तथापि कश्चित्तत्रान्यो विशेषोऽपि वितन्यते॥ ३६६

अथ रथयात्राविधिः

श्रीकृष्णे तु रथारूढ़े कृत्वा जयजयध्वनिम् । निष्पाद्य च महापूजामाशीर्वाक्यानि कीर्त्तयेत् ॥३६७

तथा च विष्णुधर्म्मे—

वक्त्रं नीलोत्पलरुचिलसत्कुण्डलाभ्यां प्रमृष्टं, चन्द्राकारं रचिततिलकं चन्दनेनाक्षतैश्च ।
गत्या लीलाञ्जनसुखकरीं प्रेक्षणेनामृतौघं, पद्मावासां सततमुरसा धारयन् पातु विष्णुः ॥३६८

---

पूजाश्च कुर्व्वन्ति ॥३६४॥

न चायं रथो मनुष्यमात्रशक्त्या चलति, किन्तु भगवद्भक्तानां महतामेवेत्याशयेनाह— रथस्येति । दैत्यनायकः —श्रीप्रह्लादः ॥३६५॥

इत्थं—माहात्म्यलिखनद्वारेत्यर्थः । स्वतएव व्यक्तः प्रकटोऽभवत्, अनस्तद्विस्तारणेनालमित्यर्थः । विशेष आशीर्वाक्यकीर्त्तनादिः ॥३६६॥

विशेषमेव लिखन् तत्पूर्व्वकृत्यमनुस्मारयति—श्रीकृष्णे त्विति ॥३६७॥

चन्द्राकारं पूर्णेन्दुमण्डलसदृशाकृतिवक्त्रं धारयन् प्रकटयन्; वक्त्रमेव विशिनष्टि—नीलेत्यादि प्रथमार्द्धेन । नीलोत्पलस्येव रुचिः श्यामकान्तिर्यस्मिन्, लसद्भ्यां गण्डयोः क्रीड़द्भ्यां शोभमानाभ्यां वा कुण्डलाभ्यां प्रमृष्टं परमोज्ज्वलम्; लसदित्यस्य पूर्व्वणैव वा सम्बन्धः । चन्दनेनाक्षतैश्च रचितं भाले निर्म्मितं तिलकं यस्मिन् । पुनर्विष्णुं विशिनष्टि—गत्या रथयात्रया जनसुखकरीं सर्व्वलोकानन्दवहां लीलां कौतुकविशेषं धारयन्; किञ्च, प्रेक्षणेन कृपावलोकेन अमृतौघं सुधापूरं धारयन्; किञ्च, उरसा पद्मावासां लक्ष्मीं धारयन् सततं पातु जगदिति शेषः । व इत्युत्तरश्लोकस्थस्य वा सम्बन्धः ॥३६८॥

---

अन्यत्र और भी कथित है— महाविष्णु रथारूढ़ होने से जो लोक, जयध्वनि पूर्वक उनकी पूजा करते हैं वे सब अखिल पापों से उत्तीर्ण होकर हरिधाम में प्रस्थान करते हैं ॥३६४॥

और भी कथित है—पूर्व में दैत्यपति प्रह्लाद, तत्पश्चात् देवगण, सिद्ध, यक्ष, गन्धर्व एवं मानवगण रथाकर्षण करते हैं ॥३६५॥

इस प्रकार रथयात्रा की विधि स्वतः ही प्रकाशित है, तथापि उस विषय में अन्य विशेषविधि का वर्णन कर रहा हूँ ॥३६६॥

अथ रथयात्राविधिः

श्रीकृष्ण, रथारूढ़ होने पर मुहुर्मुहुः जय शब्द के सहित महापूजा करके आशीर्वाक्य कीर्त्तन करना चाहिये ॥३६७॥

विष्णुधर्म में कीर्तित है—जिनकी वदनकान्ति नीलोत्पल सदृश श्यामल, एवं श्रवणपुट में समुज्ज्वल कुण्डल धारण करने से अतिशय दीप्तिमती हो रही है, जिनका पूर्णचन्द्र सदृश मुखमण्डल चन्दन तण्डुल विरचित तिलक से समलङ्कृत है, जो, रथयात्रा की गति से सर्वजनानन्दकरी लीलाधारण एवं कृपाकटाक्ष द्वारा अमृतराशि धारण कर रहे हैं। और लक्ष्मीदेवी जिनके हृदय में निरन्तर विराजमान हैं, वे श्रीविष्णु जगत् की रक्षा करें ॥३६८॥

युक्तः शैव्यादिवाहैर्मधुरतररणत्किङ्किणीजालमालै
रत्नौघैर्मौक्तिकानामविरतमणिभिः संभृतैश्चैव हारैः ।
हैमैः कुम्भैः पताकाशिवतररुचिभिर्भूषितः केतुमुख्यै-
श्छत्रैर्ब्रह्मेशवन्द्यो दुरितहरहरेः पातु जैत्रो रथो वः ॥३६९॥

मोदन्तां सुजना ह्यनिन्दितधियः त्रस्ताखिलोपद्रवाः
स्वस्थाः सुस्थिरबुद्धयः प्रतिहतामित्रा रमन्तां सुखम् ।
रे दैत्या गिरिगह्वराणि गहनान्याशु व्रजध्वं भया-
द्दैत्यारिर्भगवानयं यदुपतिर्यानं समारोहति ॥३७०॥

पलायध्वं पलायध्वं रे रे दितिजदानवाः । संरक्षणाय लोकानां रथारूढ़ो नृकेशरी ॥३७१॥
इति ।

ततो विचित्रगद्यानि पठित्वाथ महाप्रभोः । महाप्रसादमालाञ्च स्वीकुर्य्यात् परया मुदा ॥३७२

अथ तन्माहात्म्यम्

भक्त्या गृह्णाति यो मालां वैष्णवीं मङ्गलाश्रयाम् ।
न तेषां दुर्ल्लभं किञ्चिदिह लोके परत्र च ॥३७३॥

---

शैव्य आदि-शब्देन सुग्रीव मेघपुष्पवलाहकाः, तत्तत्संज्ञकैर्वाहैरश्वैश्चतुर्भिर्युक्तः, एवमस्याप रथस्य भगवदारूढ़त्वात्तन्नित्यरथसादृश्यमभिप्रेतम् । कथम्भूतर्वाहैः ? मधुरतरं यथा स्यात्तथा रणन्तीनां शब्दायमानानां, यद्वा, मधुराणाञ्च परमसुन्दरीणां रणन्तीनाञ्च किङ्किणीनां जालस्य माला येषु तैः । पुनः कथम्भूतैः ? अविरता निरन्तरा मणयो येषु तैर्मौक्तिकानां हारैः रत्नौघैश्चान्यैः सम्भृतैः परिपूर्णैः; यद्वा, रथस्यैव विशेषणम्। ततश्च मणयो मौक्तिकगुणकानि यथा जपमालादिमणयः; मौक्तिकानामविरतैर्मणिभि रत्नौघैश्च सम्भृतैग्रंथितैर्हारैर्भूषित इत्यन्वयः । पताकानां शिवतराभिः परमोत्तमाभिः रुचिभिर्दीप्तिभिः छत्रैश्च भूषितः, दुरितहरस्य हरेर्जैत्रः जयशीलः ॥३६९॥

---

जो विविध रत्नखचित किङ्किण माला एवं तन्मध्ये घन सन्निविष्ट मणि द्वारा ग्रथित मुक्ताहार से समलङ्कृत है, शैव्य, सुग्रीव, मेघपुष्प, बलाहक नामक अश्वचतुष्टय संयोजित हैं, एवं सुवर्णकुम्भ, दीप्तिमती पताका, अत्युत्तम केतु, छत्रादि द्वारा सज्जित है, जो ब्रह्मरुद्रादि वन्द्य है । वह पापहारी श्रीहरि के जयशील रथ तुम्हारी रक्षा करे ॥३६९॥

हे सुजनवृन्द ! आप सब अनिन्दित बुद्धि सम्पन्न हैं, आप सबके उपद्रव समूह विनष्ट हो गये हैं, आप हर्षान्वित हों । हे सुस्थ जनगण ! आप सब सुस्थिरबुद्धि सम्पन्न हैं, आपके अरिसमूह दमित होगये हैं, आप सब सुख से विचरण करें । रे दैत्यगण ! भीतमन से शीघ्र गिरिगह्वर में प्रविष्ट हो जाओ । दैत्यनिसूदन भगवान् यदुपति रथोपरि आरूढ़ हो रहे हैं । रे दैत्यदानव ! आशु पलायन करो । श्रीनृसिंहदेव, मनुष्यों की रक्षाहेतु रथारूढ़ हो गये ॥३७०-३७१॥

अनन्तर विचित्र गद्यपाठ पूर्वक विपुल हर्ष के सहित महाप्रभु की प्रसादमाला धारण करे ॥३७२॥

अथ तन्माहात्म्यम्

जो भक्तिमान् होकर कल्याण के आधारस्वरूप श्रीहरि सम्बन्धिनी माला ग्रहण करते हैं, उनको क्या इस लोक में और क्या परलोक में,-कहीं भी कुछ वस्तु दुर्लभ नहीं रहती । सुतरां सम्यक् यत्नवान् होकर

तस्मात् सर्व्वप्रयत्नेन सर्व्वकामसमृद्धये । मालामेतां प्रगृह्लीयात् सौख्यमोक्षप्रदायिनीम् ॥३७४

इति ।

सञ्चिन्त्याकृष्यमाणञ्च श्रीप्रह्लादादिभी रथम् । आकर्षयेद्राजपुर्य्यां भ्रामयेद्वैष्णवैः समम् । ३७५

तथा च भविष्योत्तरे तत्रैव —

नृत्यमानैर्भागवतर्गीतवादित्रनिस्वनैः । भ्रामयेत् स्यन्दनं विष्णोः पुरमध्ये समन्ततः ॥३७६॥

किञ्च —

प्रबोधवासरे प्राप्ते कार्त्तिके पाण्डुनन्दन । देवालयेषु सर्व्वेषु पुरमध्ये समन्ततः ।
भ्रामयेत्तूर्य्यनिर्घोषे रथस्थं धरणीधरम् ॥३७७॥

रथागमे मुकुन्दस्य पुरशोभान्तु कारयेत् । सर्व्वतो रमणीयन्तु पताकैरुपशोभितम् ॥३७८॥

तोरणैर्बहुभिर्युक्तं रम्भास्तम्भैः सुशोभितम् । स्थाने स्थाने महीपाल कर्त्तव्यं पुण्यसंयुतम् ।
विचित्ररथशोभा च कर्त्तव्या भावितैर्नरैः ॥३७९॥ इति ।

रथेन गच्छन् भगवाननुगम्योऽखिलैर्जनैः ।
स्वस्वगेहाग्रतश्चार्च्चर्योऽन्यथा दोषो महान् भवेत् ॥३८०॥

---

रथश्च तं श्रीप्रह्लादादिभिराकृष्यमाणं, सञ्चिन्त्य परिभाव्य स्वयं भ्रामयेत् । प्रेरयन्निति पाठे पश्चाच्चालयन् ॥३७५॥ नृत्यमानैर्नृत्यद्भिर्भागवतैर्भगवद्भक्तैः सह ॥३७६॥

रथस्यागमे यत्र यत्र रथो याति, तत्र तत्रैवेत्यर्थः । एवं पुरशोभाकर्म्मणस्तात्कालिकत्वमुक्तं, पूर्व्वमपि सर्व्वमहायात्रासाधारण्यात् कार्य्यमेवेति ज्ञेयम् । पुरशोभामेव विवृत्याह- सर्व्वत इति सार्द्धेन । रमणीयं पुरमिति शेषः ॥३७८॥

पुण्यसंयुतं—मङ्गलतमम् । भावितैः—भाव युक्तैः । सद्भिर्विचित्रा रथशोभा च स्थाने स्थाने कर्त्तव्या ॥

अखिलैरात्मारामादिभिरपि, स्वस्वगेहाग्रतो निजनिजालयाग्रतः प्राप्तः सन्नच्चर्यः पूज्यः । अन्यथा— अनुगमनार्च्चने न कृते सतीत्यर्थः ॥३७९-३८०॥

---

कामसमृद्धि लाभ हेतु सुख मोक्षदा इस माला को ग्रहण करना चाहिये ॥३७३-३७४॥

श्रीप्रह्लादादि महात्मावृन्द, रथाकर्षण कर रहे हैं, इस प्रकार भावना करके वैष्णववृन्द के सहित स्वयं राजपुरी के मध्य में रथ को घुमावे ॥३७५॥

तद्विषय में भविष्योत्तर पुराण के उक्त स्थान में लिखित है—नृत्यपरायण वैष्णववृन्द के सहित मिलित होकर गीत-वाद्य के सहित पुरमध्य के चतुर्द्दिक में रथ भ्रमण करावे ॥३७६॥

और भी लिखित है—हे पाण्डव ! कार्त्तिकमासकी उत्थानैकादशी में पुर के मध्य में चतुर्द्दिक में समस्त देवालय में तूर्य्य निनाद के सहित रथारूढ़ धरणीधर श्रीहरि को भ्रमण करावे । हे राजन् ! मुकुन्द के रथ के गमनपथ में पुरशोभा रचना करनी चाहिये । सर्वस्थान को पताका द्वारा अलङ्कृत करे । बहुविध तोरण विशिष्ट रम्भ स्तम्भ द्वारा पथ को सुशोभित करे । हे राजन् ! भावयुक्त होकर स्थान स्थान में पुर को मङ्गलमय करना चाहिये एवं रथ की भी विचित्र शोभा बढ़ावे ॥३७७-३७९॥

श्रीभगवान् जिस समय रथारूढ़ होकर गमन करते हैं, उस समय निखिल व्यक्ति और आत्मारामजन भी अनुगमन पूर्वक निज निज घर के समीप रथ का आगमन होने पर प्रभु की पूजा करें, नहीं तो महादोष उत्पन्न होता है ॥३८०॥

## अथ रथानुगमनादि-नित्यता

तत्रैव—

रथेन सह गच्छन्ति पुरतः पृष्ठतोऽग्रतः। विष्णुनैव समाः सर्व्वे भवन्ति श्वपचादयः ॥३८१॥

रथस्थं ये न गच्छन्ति भ्रममाणं जनार्द्दनम्। विप्राध्ययनसम्पन्ना भवन्ति श्वपचाधमाः ॥३८२

किञ्च—

येषां गृहाग्रतो याति रथस्थो मधुसूदनः। पूजा तैस्तैः प्रकर्त्तव्या वित्तशाठ्यविवर्ज्जितैः ॥३८३

अनर्च्चितो यदा याति गृहाग्रस्य महीधरः। पितरस्तस्य विमुखा वर्षाणां दश पञ्च च ॥३८४॥

यः पुनः कुरुते पूजां गृहायाते तु माधवे। वसते श्वेतद्वीपे तु यावदिन्द्राश्चतुर्द्दश ॥३८५॥

अन्यत्र च—

नानुव्रजति यो मोहाद्व्रजन्तं परमेश्वरम्। ज्ञानाग्निदग्धकर्म्मापि स भवेद्ब्रह्मराक्षसः ॥३८६

अथ स्वमन्दिरं नीत्वा पूर्व्ववत् पूजयेत् प्रभुम्। रात्रौ जागरणं कुर्य्याद्विधिवद्वैष्णवैः समम् ॥३८७

---

अकरणे प्रत्यवायद्वारा नित्यत्वं लिखितुमादौ करणेन परमगुणं लिखति—रथेनेति। महाविप्रेति पाठे महाविप्रा ज्ञाननिष्ठा मुनयस्तैः समास्तुल्याः। यद्यपि महाब्राह्मण-शब्देन चाण्डालोऽभिधीयते, तथापि विप्र-शब्दप्रयोगात्तत्परिहारो ज्ञेयः ॥३८१॥

अध्ययनसम्पन्नाः अधीतशास्त्रा अपि विप्राः। विसर्गलोपेऽपि सन्धिरार्षः। पश्यन्तीति पाठे दर्शनस्यापि नित्यत्वं ज्ञेयम्। ततश्चानुगमनस्य नित्यत्वं नानुव्रततीति श्लोकादवगन्तव्यम् ॥३८२॥

न च केवलमकरणप्रत्यवायपरिहारार्थमेव पूजा कार्य्या, किन्तु तया महाफलञ्च स्यादित्याह—य इति ॥ ॥३८५॥

ज्ञानाग्निना दग्धानि कर्म्माणि यस्य जीवन्मुक्तस्य, सोऽपि भगवद्विषयक-महापराधबलेन परमदुष्कर्म्मोत्पत्ते-स्तद्भोगार्थं दुर्जन्म लभत इत्यर्थः ॥३८६॥

पूर्व्ववदिति शयन्यादौ यथालिखितं, तद्वदित्यर्थः। विधिवद् यथाविधीत्यर्थः। रथयात्रारात्रौ जागरण-मुन्मीलनीत्यादिना द्वादश्यामुपवासवत्। अन्यथा पूर्व्वस्मिन्नुपवासदिने जागरणं, पारणादिने उत्थानानन्तरं रथयात्रेति ज्ञेयम् ॥३८७॥

---

### अथ रथानुगमनादि-नित्यता

उक्त पुराण में लिखित है—जो मानव, रथ के अनुगामी होते हैं, अथवा रथ के अग्रगामी होते हैं, अर्थात् रथ के आगे पीछे चलते हैं, वे चण्डाल होने पर भी श्रीविष्णु के समान होते हैं। जो मानव, रथारूढ़ भ्रममाण जनार्दन के अनुगामी नहीं होते हैं, अध्ययननिष्ठ ब्राह्मण होने पर भी वह चाण्डाल से अधम हैं ॥ ॥३८१-३८२॥

और भी लिखा है—मधुसूदन रथारूढ़ होकर जिसके घर के समीप होकर गमन करते हैं, धन की कृपणता त्यागकर वे श्रीहरि की पूजा करें। महीधर श्रीभगवान् गृह के सम्मुख में अपूजित होकर गमन करने से उस गृही के पितृगण पञ्चदशवर्ष पर्य्यन्त विमुख रहते हैं। श्रीहरि, गृहागत होने से जो उनकी अर्च्चना करते हैं, चतुर्दश इन्द्र के राजत्व काल यावत् वे श्वेतद्वीप में निवास करते हैं ॥३८३-३८५॥

अन्यत्र भी लिखित है- जो व्यक्ति मोहनिबन्धन गमनरत श्रीहरि के अनुगामी नहीं होता है, वह, ज्ञानाग्नि द्वारा दग्धकर्मा होने पर भी, ब्रह्मराक्षस होगा ॥३८६॥

अनन्तर श्रीभगवान् को निज मन्दिर में आनयनपूर्वक पूर्ववत् पूजा एवं वैष्णववृन्द के सहित मिलित होकर रात्रि जागरण करे ॥३८७॥

अथ प्रबोधनीजागरण-माहात्म्यम्

स्कान्दे तत्रैव—

पूर्व्वजन्मसहस्रेषु पापं यत् समुपार्ज्जितम् । जागरणे प्रबोधन्यां दहते तूलराशिवत् ॥३८८॥
कृत्वापि पातकं घोरं ब्रह्महत्यादिकं नरः । कृत्वा जागरणं विष्णोर्धूतपापो भवेन्मुने ॥३८९॥
कर्म्मणा मनसा वाचा पापं यत् समुपार्ज्जितम् । क्षालयेत्तच्च गोविन्दः प्रबोधन्यान्तु जागरे ॥३९०
दुष्प्राप्यं यत् फलं विप्रैरश्वमेधादिभिर्मखैः । प्राप्यते तत् सुखेनैव प्रबोधन्यान्तु जागरे ॥३९१॥

आप्लुत्य सर्व्वतीर्थानि दत्त्वा च काञ्चनं महीम् ।
न तत् फलमवाप्नोति यत् कृत्वा जागरं हरेः ॥३९२॥

चन्द्रसूर्य्योपरागे तु यत् फलं परिकीर्त्तितम् । तत्सहस्रगुणं पुण्यं प्रबोधन्यान्तु जागरे ॥३९३॥

स्नानं दानं तपो होमः स्वाध्यायश्चार्च्चनं हरेः ।
तत् सर्व्वं कोटिगुणितं प्रबोधन्यान्तु जागरे ॥३९४॥

समतीतं भविष्यञ्च वर्त्तमानं कुलायुतम् । विष्णुलोकं नयत्याशु जागरेण प्रबोधनी ॥३९५॥
चलन्ति पितरो हृष्टा विष्णुलोकमलङ्कृताः । विमुक्ता नारकैर्दुखैः कर्त्तुः कृष्णप्रजागरम् ॥३९६
भार्य्यापक्षे तु ये जाता मातृतः पितृतस्तथा । तारयेन्नात्र सन्देहः प्रबोधन्यान्तु जागरः ॥३९७॥

---

तत्र जागरणतः प्रथमं पापक्षयमाह—पूर्व्वेति त्रिभिः ॥३८८॥
यज्ञतीर्थदानादितोऽप्याधिक्यमाह—दुष्प्राप्यमिति त्रिभिः ॥३९१॥
किञ्च स्नानमिति ॥३९४॥
सर्व्वकुलसमेतस्य श्रीवैकुण्ठलोकप्रापकत्वञ्चाह—समतीतमिति त्रिभिः ॥३९५॥
कृष्णस्य जागरणं कर्त्तुः, यः करोति तस्य, ये पितरस्ते इत्यर्थः ॥३९६॥

---

अथ प्रबोधनीजागरण-माहात्म्यम्

स्कन्दपुराण के उक्त स्थान में लिखित है—प्रबोधनी में जागरण करने पर पूर्व सहस्रजन्मार्जित पातक तुलाराशि के समान भस्मीभूत होता है। हे मुने! ब्रह्महत्यादि घोर पातकों से पातकी भी प्रबोधनीरात्रि जागरण करने पर अखिल पातकों से मुक्त हो सकता है। प्रबोधनी में जागरण करने से श्रीगोविन्द, कर्मज, मनोज, वाक्यज, पापसमूह ध्वंस करते हैं। प्रबोधनी में जागरण करने से विप्रगण, अनायास अश्वमेधजनित दुर्लभ फल प्राप्त कर सकते हैं ॥३८८-३९१॥

प्रबोधनी जागरण करने से जो फल लाभ होता है, उस प्रकार फल लाभ सर्व तीर्थ में स्नान, स्वर्णदान एवं पृथिवीदान से भी नहीं होता है। प्रबोधनी में जागरण करने पर चन्द्र सूर्य्य ग्रहणजनित फल की अपेक्षा सहस्रगुण फल लाभ होता है। स्नान, दान, तपः, होम, स्वाध्याय एवं श्रीहरि की पूजा करने से जो फल होता है, प्रबोधनी में जागरण करने से उससे कोटिगुण फल लाभ होता है ॥३९२-३९४॥

जागरण करने से प्रबोधनी, अतीत, भविष्यत् एवं वर्त्तमान के अयुत कुल को आशु विष्णुलोक में ले जाती है। प्रबोधनी में जागरण करने पर, जागरणकारी के पितृकुल यावतीय निरय क्लेश से उत्तीर्ण होते हैं, एवं अलङ्कृत होकर हृष्ट मन से विष्णुलोक गमन करते हैं। प्रबोधनी में जागरणकारी, निज भार्य्या पक्ष में, पितृपक्ष में एवं मातृपक्ष में उत्पन्न सबको परित्राण करता है ॥३९५-३९७॥

किञ्च—

फलैर्नानाविधैर्द्रव्यैः प्रबोधन्यान्तु जागरे । शङ्खे तोयं समादाय अर्घ्यं दद्याज्जनार्द्दने ॥३९८

यत् फलं सर्व्वदानेषु सर्व्वतीर्थेषु यत् फलम् ।
तत् सर्व्वं कोटिगुणितं दत्त्वार्घ्यं बोधवासरे ॥३९९॥

पाद्मे च तत्रैव—

अन्यत्रापि प्रिया विष्णोर्जागरे स्यात् प्रबोधनी ।
किं पुनर्मथुरायां सा ततो वै जन्मसद्मनि ॥४००॥

एकैवैकादशी कृष्णजन्मगेहे कृता नरैः । ततोऽधिकं न कर्त्तव्यं लोके किञ्च न विद्यते ॥४०१॥

रात्रौ जागरणं तत्र प्रीत्या कुर्व्वन्ति ये नराः ।
संसारमोहस्वप्नान्ते सदा जाग्रति जाग्रति ॥४०२॥

किञ्च तत्रैव श्रीराधिकोपाख्यानान्ते—

प्रबोधनीजागरपुण्यवैभवात्, प्रसन्न ईशो विधिवाक्यसत्यकृत् ।
चकार रासोत्सवनर्त्तनं सह, वृन्दावनेऽन्याभिरपीह राधया ॥४०३॥

---

जागरे अर्घ्यदानमाहात्म्यं लिखति—फलैरिति द्वाभ्याम् ॥३९८॥

अन्यत्र—मथुराव्यतिरिक्तस्थानेऽपि ॥४००॥

संसारे यो मोहः अज्ञानं, स एव स्वप्नस्तस्य अन्ते नाशे निमित्ते सदा जाग्रति संसारमोहस्तस्य कदाचिदपि न तिष्ठेदित्यर्थः । वीप्सा निश्चयार्था ॥४०२॥

विधिवाक्यम्—'सर्व्वासु गोपीषु मध्ये अहं श्रीकृष्णस्य परमप्रेयसी भवामि' इति स्वर्गचन्द्रकान्तिनामाप्सरसः प्रार्थनया 'तथास्तु' इति ब्रह्मा यदाह, तत् सत्यं करोतीति सः । एतच्च पाद्मे कार्त्तिकमाहात्म्ये सविस्तरं वर्त्तत एव । तत्र यद्यपि भगवती श्रीराधा स्वतएव तस्य नित्यपरमप्रेयसी, तथापि विधिवाक्यसत्यतार्थं कृतमित्यन्यजनेर्षापरिहारार्थमुक्तमिति दिक् । राधया सह, अन्याभिरपि गोपीभिः सह ॥४०३॥

---

और भी लिखित है—प्रबोधनी जागरण में शङ्ख में जल लेकर फल एवं विविध वस्त्र द्वारा श्रीहरि को अर्घ्य प्रदान करे । प्रबोधनी में श्रीहरि को अर्घ्य प्रदान करने से समस्त दानजनित एवं समस्त तीर्थ सेवन जनित फल के कोटिगुण फल होता है ॥३९८-३९९॥

पद्मपुराण के उक्त स्थान में लिखित है—मथुराव्यतीत अन्य स्थान में भी जब प्रबोधनी श्रीहरि की प्रीतिकरी है, तब श्रीहरि की जन्मभूमि मथुरा में जागरण करने से जो कितना फल होता है, उसका और क्या वर्णन करूँ ? श्रीहरि की जन्मभूमि मथुरा में एक ही एकादशी उपवास करने से ही पुनर्वार जगत् में उस मनुष्य का कुछ भी कर्त्तव्य अवशेष नहीं रह जाता है । मथुरा में प्रीतिपूर्वक जागरण करने से जागरणकारी संसार मोहरूप स्वप्न िदूरित करके सर्वदा जागरूक रह सकता है, अर्थात उसको संसार मोह से अभिभूत नहीं होना पड़ता है ॥४००-४०२॥

और भी उक्त पुराण के राधिकोपाख्यान के अन्त में लिखित है—प्रबोधनी जागरण रूप पुण्य वैभव निबन्धन ब्रह्मा के वाक्य को सत्य करने के निमित्त श्रीकृष्ण ने श्रीवृन्दावनधाम में श्रीमती राधिका एवं अपरापर गोपियों के सहित रासोत्सव सम्बन्धी नृत्य किया था ॥४०३॥

सा नृत्यमानाद्भुतगोपरूपिणा, कृष्णेन जन्मान्तरवाञ्छितेन ।
राधा महाप्रेमजवाकुलेन्द्रिया, निन्येऽन्यलोकं कथया कृतार्थताम् ॥४०४॥
तस्मात् प्रबोधनीं कृत्वा रात्रौ कृत्वा च जागरम् ।
सुप्तोत्थितं हरिं दृष्ट्वा का भीः संसारजा द्विजाः ? ॥४०५॥
मथुरायान्तु किं वाच्यं जागरे हरिसन्निधौ ।
कार्त्तिके बोधनीं प्राप्य ततः श्रेयः परं न हि ॥४०६॥
मथुरायां प्रबोधन्यां कृतजागरणस्य हि । क्षणार्द्धादन्यतो वैश्योऽमोचयद्ब्रह्मराक्षसम् ॥४०७॥
जागरस्य च माहात्म्यं गीतवादित्रकीर्त्तनम् । हरेः प्रीतिकरं रात्रौ वक्तुं मे नैव शक्यते ॥४०८
यस्तु गायति कृष्णाग्रे कौमुदीं द्वादशीं क्षणम् ।
सर्व्वलोकान् परित्यज्य विष्णुलोकं स गच्छति ॥४०९॥

---

अन्यलोकं परमपि जनं सर्व्वं कथया निजचरितादिवार्त्तया कृतार्थतां श्रीकृष्णप्रियतमतां निन्ये । तत्र हेतुः—महान् प्रेम्णो जवः वेगस्तेनाकुलानीन्द्रियाणि यस्याः सा । अतस्तद्वार्त्ताश्रवणमात्रेणैव स्वतः प्रेमभरोत्पत्तेरित्यर्थः ॥४०४॥

ब्रह्मराक्षसञ्च वैश्योऽमोचयदित्यत्रेतिहासो मथुरामाहात्म्ये व्यक्तं वर्त्तत एव । यथा—'सुधननामा वणिक् जागरणार्थमक्रूरतीर्थं गच्छन् पथि ब्रह्मराक्षसेन गृहीतः, पुनरागमनार्थं शपथे कृते सति परित्यक्तो जागरणं कृत्वा पुनरायातस्तं दृष्ट्वा राक्षसेन सकाकु प्रार्थितो जागरणकृतनृत्यलेशमात्रदानेन तं मोचयामास' इति।।४०७

माहात्म्यं वक्तुं नैव शक्यते, यतो रात्रौ गानादिकं प्रत्येकं हरेः प्रीतिकरमिति ॥४०८॥

कौमुदीं प्रबोधनीमित्यर्थः ॥४०९॥

---

विचित्र गोपवंशधारी जन्मान्तर वाञ्छित कृष्ण के सहित नृत्यमाना महाप्रेम वेग से व्याकुलेन्द्रिया श्रीराधिका ने निज चरित कथा के द्वारा अन्य व्यक्ति को धन्य अर्थात् श्रीकृष्ण का प्रिय पात्र किया था। इसका विवरण इस प्रकार है—चन्द्रकान्ति नाम्नी किसी स्वर्ग की अप्सरा ने ब्रह्मा की आराधना करके यह वर माँगा कि,—"हे विधातः ! सब गोपियों में मैं ही श्रीकृष्ण की अधिक प्यारी हूँ" 'तथास्तु' कहकर उसको उन्हीं ने वर दिया । वस्तुतः श्रीराधिका श्रीकृष्ण की नित्य परमप्रिया हैं, किन्तु ब्रह्मवाक्य को सत्य करने के निमित्त ऐसा किया ॥४०४॥

अतएव हे द्विजवृन्द ! प्रबोधनी करने के पश्चात् रात्रि में जागरण पूर्व निद्रोत्थित श्रीहरि का दर्शन करने पर पुनर्बार भवभय की सम्भावना कहाँ ? ॥४०५॥

कार्त्तिक मास में बोधनी समागत होने पर मथुरा में जागरण की अपेक्षा और श्रेष्ठ श्रेयः है ही नहीं । किसी ब्रह्मराक्षस ने सुधन नामक एक वैश्य से दीनता प्रकाश की, तब उसने जो मथुरापुरी में प्रबोधनी में जागरण किया था, उसका क्षणार्द्ध दान करके उसको मुक्ति प्रदान की थी ॥४०६-४०७॥

प्रबोधनी में रात्रि जागरण का माहात्म्य का वर्णन सम्यक्रूप से करने में सक्षम नहीं हूँ । कारण, गीत, वाद्य, कीर्त्तनादि समस्त ही श्रीहरि सन्तोषकर हैं । प्रबोधनीद्वादशी में श्रीहरि के सम्मुख में क्षणकाल मात्र गान करने से भी सब लोकों को त्यागकर श्रीविष्णुधाम में गमन कर सकता है ॥४०८-४०९॥

अतएवोक्तं तत्रैव —

राज्यमन्यत्र सन्त्यज्य स्फीतं निहतकण्टकम् । कार्त्तिके मथुरायां वै कौमुद्यां जागरञ्चरेत् ॥४१०

अथ पारणादिकृत्यम्

पाद्मे कार्त्तिकमाहात्म्ये—

पारणं कार्त्तिके शुक्ले द्वादश्यान्तु ततश्चरेत् । कृष्णस्याग्रे निवेद्याथ व्रतं कृच्छ्राग्र्यमुत्तमम् ।
विष्णुलोकमवाप्नोति भक्त्याभ्यर्च्य जनार्द्दनम् ॥४११॥

महाभारते—

चतुर्द्धा गृह्य वै चीर्णं चातुर्म्मास्यव्रतं नरः । कार्त्तिके शुक्लपक्षे तु द्वादश्यां तत् समाचरेत् ॥४१२
प्रातर्नित्यक्रियां कृत्वा शक्त्या संभोज्य भूसुरान् ।
गृह्णन् कृतव्रताच्छिद्र्यं प्रदद्यात् दक्षिणादिकम् ॥४१३॥

दानं यथाव्रतं तेभ्यो दत्त्वा पारणमाचरेत् । प्रवर्त्तयेच्च सन्त्यक्त चातुर्म्मास्यव्रतेषु यत् । ४१४

भविष्योत्तरे तत्रैव—

प्रभाते विमले स्नात्वा भोजयेदन्नविस्तरैः । घृतक्षीरदधिक्षौद्रकासारगुड़मोदकैः ।
अर्च्चयेच्चन्दनैश्चूर्णैः पुष्पगन्धैर्द्विजोत्तमान् ॥४१५॥

आचान्तेभ्यस्ततो दद्यात्त्यक्तं यत् किञ्चिदेव हि । सुवाचा सुमनोऽभीष्टपत्रपुष्पफलादिकम् ॥४१६

---

कृतानाञ्चतुर्मासेषु विशेषतः कार्त्तिके च विहितानां व्रतानामच्छिद्र्यमच्छिद्रतां गृह्णन् ॥४१०॥

यथाव्रतमिति यद्व्रते यद्दानमुक्तं, तदनुसारेणेत्यर्थः । तच्चाग्रे विशेषतो व्यक्तं भावि । चातुर्म्मास्यव्रतेषु यत् सन्त्यक्तं, तत् प्रवर्त्तयेदभक्षणादिकं कुर्य्यात् ॥४१४॥

विमले जल इति शेषः; यद्वा, प्रभात इत्यस्यैव विशेषणं—विमल इति । कासारो मधुरतरपक्वान्नविशेषः चूर्णैः पटवासैः बुक्कावन्दनेत्यादि-प्रसिद्धैः ॥४१५॥

त्यक्तं चातुर्म्मास्यादि-नियमे वर्जितम्; सुवाचा विनयपूर्व्वकमधुरोक्त्या दद्यात् ॥४१६॥

---

अतएव उक्त स्थान में ही उक्त है—अन्यत्र सुविशाल निष्कण्टक राज्य परित्याग करके भी मथुरा में कार्त्तिक मास की प्रबोधनी में जागरण करना चाहिये ॥४१०॥

अथ पारणादिकृत्यम्

पद्मपुराण के कार्त्तिक माहात्म्य में लिखित है—कार्त्तिकी शुक्ला द्वादशी में पारण करके श्रीकृष्ण के समीप में अतिशय श्रेष्ठ व्रतोत्तम समर्पण पूर्वक भक्ति सहित प्रभु की पूजा करने पर श्रीहरि का धाम प्राप्त होता है ॥४११॥

महाभारत में वर्णित है—मानव, चतुर्विध अनुष्ठित चातुर्म्मास्य व्रत लेकर कार्त्तिकी शुक्ला द्वादशी में समापन करे ॥४१२॥

प्रातःकाल में नित्यकर्म समापन पूर्वक शक्त्यनुसार ब्राह्मण भोजन करकर अनुष्ठित पारण करना चाहिये । चातुर्म्मास्य व्रत में जो सब सामग्री त्याग दी गई थीं उसको पुनर्वार भोजन करना प्रारम्भ करें । एवं व्रत की अच्छिद्रता सम्पादन हेतु ब्राह्मणवृन्द को दक्षिणा प्रदान करे ॥४१२-४१३॥

भविष्योत्तर के पूर्वोक्त स्थान में लिखित है—प्रातःकाल में निर्म्मल जल में स्नान करके घृत, दुग्ध, दधि, मधु, कासार (मधुरतर परमान्न विशेष) गुड़ एवं मोदकादि द्वारा द्विजोत्तमवृन्द को भोजन कराकर चन्दन, पट्टवस्त्र, पुष्प, एवं गन्धादि द्वारा पूजा करे । जो सब वस्तु चातुर्म्मास्य व्रत में त्याग दी गई थीं,

चतुरो वार्षिकान् मासान् नियमं यस्य यत् कृतम् ।
कथयित्वा द्विजेभ्यस्तद्दद्याद्भक्त्या सुदक्षिणाम् ॥४१७॥

एकमेव पाद्मे तत्रैव किञ्चाधिकम्—

चातुर्म्मास्यव्रते विप्राः पश्चादच्छिद्रवाचनम् ॥४१८॥ इति ।

अथ व्रतेषु दानानि

कृच्छ्रयुग्मे तु गोयुग्मं दद्याद्विप्रांश्च भोजयेत् । त्रिरात्रे मणिकं छत्रमजां चोपानहौ तथा ॥४१९॥
एकान्तरोपवासे च दद्याद्गां समलङ्कृताम् । विभवे च हलान्यष्टौ बलीवर्द्दयुतानि तु ॥४२०॥
भोजयेदेकभक्ते तु विप्रान्नक्ते तु षड्रसान् ।
वस्त्रे चायाचिते दद्याद्वृषं सस्वर्णचन्दनम् ॥४२१॥
शालीन् दद्यात् फलाहारे गाश्च दद्यात् पयोव्रते । शाकाहारे तु वितरेद्घृतं राजतभाजनैः ॥४२२
तैले त्यक्ते घृतं दद्याद् घृते तु वितरेत् पयः । वर्ज्जिते दधिन तु स्वर्णं क्षीरे च रजतं बुधः ॥४२३
अपूपे स्वर्णगोधूमवस्त्राणि व्रीहिषु प्रियान् ।
शालीन् स्वर्णं च धान्ये तु शालीन् वा धान्यमेव च ॥४२४॥
लवणे लावणीं धेनुं स्वर्णं चाभ्यञ्जने त्वथ । तैलपूर्णं घटं किञ्च साज्यपायसभोजनम् ॥४२५॥

---

हे विप्राः ! पश्चाद्विप्रभाजन-दक्षिणादानानन्तरं चातुर्म्मास्यव्रतेऽच्छिद्रवाचनम् 'अच्छिद्रमस्तु' इति ब्राह्मणान् वाचयेदित्यर्थः ॥४१८॥

मणिकं—बृहज्जलभाण्डविशेषम्, अजामेकां छागीम् ॥४१९॥

नक्ते नक्तव्रते, षड्रसान् मधुरादीन्, वस्त्रे वस्त्रयुगमञ्च दद्यात् । अथायाचितव्रते तु स्वर्णेन चन्दनेन च सहितं वृषमनड्वाहं दद्यात् ॥४२१॥

घृते च त्यक्ते वर्ज्जित इति तच्चाग्रे पञ्चमश्लोकं यावत् सप्तम्यन्तेष्वनुवर्त्तनीयम् । तथा वितरेदिति यथास्थानमग्रेऽप्यनुवर्त्तनीयम् ॥४२३॥

प्रियान्—अभीष्टान् उत्तमानित्यर्थः ॥४२४॥

लावणीं लवणनिर्म्मितां धेनुं, तद्विशेषश्च तिलधेन्वादिप्रसङ्गे भविष्योत्तराद्युक्तो ज्ञेयः । अथ अभ्यञ्जने तैलेन शिरोऽभ्यङ्गे तैलपूर्णघटं साज्यपायसभोजनञ्च वितरेत् । किञ्चेति समुच्चये ॥४२५॥

---

ब्राह्मणों का आचमन शेष होने पर विनयपूर्वक मधुर वचनों से तत्तत् वस्तु एवं उनके मनोवाञ्छित पत्र, पुष्प एवं फलादि उनको अर्पण करे ॥४१५-४१६॥

प्रथम चातुर्म्मास्य व्रत के समय जिस विषय में जिस प्रकार नियम किया था, उसको उल्लेख करके भक्तिपूर्वक दक्षिणा के सहित ब्राह्मणों को प्रदान करे ॥४१७॥

इस प्रकार पद्मपुराण के उक्त स्थान में और कुछ अधिक वर्णित है—हे विप्रगण ! ब्राह्मण भोजन एवं दक्षिणा दान के पश्चात् चातुर्म्मास्य व्रत में अच्छिद्रवाचन कराना चाहिये । अर्थात् ब्राह्मणगण, अच्छिद्रमस्तु (अच्छिद्र हो) इस प्रकार कहें ॥४१८॥

अथ व्रतेषु दानानि

कृच्छ्र युग्मे अर्थात् सान्तपनादि व्रतद्वय में धेनुद्वय दान एवं विप्रवृन्द को भोजन कराना चाहिये । त्रिरात्र व्रत में मणिक (बृहत् जल भाण्ड विशेष) छत्र, एक छागी (बकरी) और पादुका द्वय अर्पण करे ।

पादाभ्यङ्गे तु सम्पूज्य विप्रान् संवाह्य तत्पदौ । दक्षिणामथ ताम्बूलैर्वितरेदम्बरद्वयम् ॥४२६

पुष्पे च पुष्पं सौवर्णमुपानहमुपानहि । खट्टायां शयनं कांस्ये सघृतं कांस्यभाजनम् ॥४२७॥

त्यक्ते मधुनि संदद्यात् पायसं ससिताघृतम् । मौनी च घण्टां सतिलां दद्यात् कनकसंयुताम् ॥४२८

भूमिभोजी कांस्यपात्रं गाञ्च दीपस्य दानतः । सघृतं ताम्रपात्रञ्चादर्शं केशादिरक्षणे ॥४२९॥

दद्यात् सुवर्णप्रतिमां दम्पत्योर्ब्रह्मचर्य्यतः ।
सर्व्वाभावे च सन्तोष्याच्छिद्रं विप्रांस्तु वाचयेत् ॥४३०॥

तथा च स्कान्दे—

सर्व्वेषामप्यभावे तु यथोपकरणं विना । विप्रवाक्यं स्मृतं सम्यक् व्रतस्य परिपूर्त्तये ॥४३१॥

---

अम्बरद्वयं—वस्त्रयुग्मम् ॥४२६॥

शयनं—शय्याम् ॥४२७॥

सितया शर्करया घृतेन च सहितं पायसं दद्यादित्यग्रेऽप्यनुवर्त्तते ॥४२८॥

दीपस्य दाने धृतसहितं ताम्रपात्रम्; आदि-शब्देन नखश्मश्र्वादि ॥४२९॥

ब्रह्मचर्य्ये—ग्रामधर्म्मत्यागे; ननु तत्तदलाभे किं कार्य्यम् ? तत्र लिखति—सर्व्वेषां लिखितानां गोयुग्मादि-द्रव्याणामभावे सति विप्रान् सन्तोष्य दक्षिणादिना प्रीणयित्वाऽच्छिद्रयम् अच्छिद्रमस्त्विति वाचयेत्; 'व्रतं सम्पूर्णमस्तु' इति तद्वचनं गृह्णीयात्तेनैव सर्व्वं सम्पूर्णं स्यादित्यर्थः ॥४३०॥

यथोपकरणं, यत्र व्रते यद्विहितं दानद्रव्यं, तद्विना च ॥४३१॥

---

एकान्तरोपवास व्रत में विभूषित गोदान करना चाहिये । एकभक्त व्रत में सम्पत्ति विद्यमान होने पर बलीवर्द (बैलों) के सहित आठ हल प्रदान करे । नक्त व्रत में मधुरादि षड्विध रस द्वारा ब्राह्मण को भोजन कराना कर्त्तव्य है । वस्त्रव्रत में वस्त्र, अयाचित व्रत में स्वर्ण, चन्दन सहित वृष, फलाहार व्रत में शालिधान्य, पयोव्रत में धेनु, शाकाहार व्रत में, रौप्याधार में घृत, तैलत्याग व्रत में घृत, एवं घृतव्रत में दुग्धदान करे । विचक्षण व्यक्ति, दधित्याग व्रत में स्वर्ण, क्षीरत्याग व्रत में रौप्य, अपूप व्रत में काञ्चन, गोधूम एवं वस्त्र, व्रीहि व्रत में उत्तम शालि अथवा स्वर्ण, धान्य व्रत में शालि वा धान्य, लवणव्रत में लवण, धेनु वा स्वर्ण, अभ्यञ्जन व्रत में तैलपूर्ण घट वा सघृत पायसान्न दान करे ॥४१९-४२५॥

पादाभ्यङ्ग व्रत में, विप्रवृन्द की पूजा करके उनके चरणयुगल संवाहन पूर्वक दक्षिणा प्रदान करे एवं ताम्बूल के सहित वस्त्रद्वय अर्पण करे । पुष्प त्याग में सुवर्ण पुष्प, पादुका त्याग में पादुका, खट्टा त्याग में शय्या एवं कांस्य त्याग में सघृत कांस्यपात्र प्रदान करे । मधु त्याग में शर्करा, एवं घृत मिश्रित पायस देना चाहिये । मौनी, तिल स्वर्णयुक्त घण्टा, भूमि भोजी कांस्यपात्र एवं धेनु, दीपदान में सघृत ताम्रपात्र एवं केशादि रक्षण रूप व्रत में दर्पण प्रदान करे । दम्पति के ब्रह्मचर्य्य धारण रूप व्रत में सुवर्ण प्रतिमा देनी पड़ती है । पूर्वोक्त द्रव्यसमूह का अभाव होने पर दक्षिणादि द्वारा विप्रवृन्द को सन्तुष्ट करके अच्छिद्रवाचन कराना चाहिये ॥४२६-४३०॥

तद्विषय में स्कन्द पुराण में वर्णित है - समस्त द्रव्यों के अभाव होने पर यथाविधि उपकरण व्यतीत (जिस व्रत में जो दान करना पड़ता है अथवा अभाव होने पर) सुष्ठु व्रत परिपूरणार्थ विप्र वाक्य ही प्रशस्त है ॥४३१॥

वृथा विप्रवचो यस्तु गृह्णाति मनुजोऽबुधः। अदत्त्वा दक्षिणां पापो यात्यसौ नरकं ध्रुवम्।
व्रतवैफल्यमासाद्य कुष्ठी अन्धश्च जायते ॥४३२॥

अथ सामान्यतः तन्माहात्म्यम्

भविष्योत्तरे, तत्रैव विशेषः—

एवं य आचरेत् पार्थ शोभनं धर्म्ममाप्नुयात्। अवसाने तु राजेन्द्र वासुदेवपुरं व्रजेत् ॥४३३॥

अथ भीष्मपञ्चकादि

आरभ्यैकादशीं पञ्च दिनानि व्रतमाचरेत्। भगवत्प्रीतये भीष्मपञ्चकं यदि शक्नुयात् ॥४३४॥

तथा धात्रीव्रतं पौर्णमास्यां कुर्व्वीत कार्त्तिके। तथा नवम्यां शुक्लायामक्षयं नवमीव्रतम् ॥४३५

पैतामहादिकृच्छ्राणि मासोपोषणमेव च।
समर्थः कार्त्तिके कुर्य्यात् ज्ञात्वा पाद्मादितो विधिम् ॥४३६॥

---

वृथेत्येव विवृणोति—अदत्त्वा दक्षिणामिति। अतएवाबुधः पापश्च नरकभोगानन्तरं कुष्ठी अन्धश्च सन् दुर्योनिषु जायते। श्रावणादौ शाकादि-वर्ज्जनव्रते च सर्व्वपाप क्षयात्, तथा ब्रह्म-विष्णु-शिवानां प्रत्येकं समुच्चयेन च श्रावणादौ शाकादिषु संक्रमणात्तान्यवश्यवर्ज्ज्यान्येवेति शाकादिवर्ज्जनव्रतदानं विशेषतो नोद्दिष्टं, किन्तु सर्व्वव्रतसाधारणत्वाद्ब्राह्मणभोजनं न तद्व्रतसमाप्तौ तत्तद्द्रव्यदानप्रधानकं कर्त्तव्यमित्यूह्य 'त्यक्तं यत्किञ्चिदेव हि' इत्युक्तेः। किञ्च, पूर्व्वं शयनीप्रकरणेऽलिखितं व्रतमत्रलिखितानुसारेण परममपि तत्रोह्यमिति दिक् ॥४३२॥

शोभनं धर्म्मं, तत्फलं चिरं ब्रह्मलोकादिभोगमित्यर्थः। यद्वा, भगवद्धर्म्मं प्रेमभक्तिलक्षणम् ॥४३३॥

इदानीं संक्षेपेण पौर्णमासीकृत्यं लिखन् परमप्यलिखितं कार्त्तिककृत्यं संगृह्णाति—आरभ्येति त्रिभिः। यदि शक्नुयादिति काम्यत्वमभिप्रेतम्। यद्यपि भगवत्प्रीणनत्वान्नित्यत्वमेव सुसिध्यति, तथाप्यकरणप्रत्यवायाभावात् सर्व्वेषामशक्यत्वाच्च तथा लिखितमिति दिक्। एवमग्रेऽप्यूह्यम् ॥४३४॥

तथाद्वयं समुच्चये ॥४३५॥

पैतामहं नाम कृच्छ्रं चोक्तं पाद्मे—'अपः क्षीरं दधि घृतं सप्तम्यादि चतुर्दिनम्। कार्त्तिकस्य सिते पीत्वा एकादश्यामुपोषितः। कृच्छ्रं पैतामहं कुर्व्वन् दिनं सम्पूजयेद्धरिम् ॥' इति। आदि-शब्देन वैष्णवमाहेन्द्रादीनि, समर्थश्चेत्तर्हि कुर्य्यात्। ननु भीष्मपञ्चकादीनां व्रतानामेषां विधिः समर्थैरपेक्ष्यः, कुतो ज्ञातव्यः ? तत्राह—ज्ञात्वेति। पद्मपुराणस्य व्रतखण्डं कार्त्तिकमाहात्म्यं च, आदि-शब्दात् स्कन्दपुराणविष्णुरहस्यादि, ततो विधिं ज्ञात्वा। तत्र चावश्यकत्वाभावेनासौ विस्तार्य्य न लिखित इति ज्ञेयम् ॥४३६॥

---

बिना दक्षिणा से वृथा विप्रवाक्य ग्रहण करने पर वह मूर्ख पापस्वरूप व्यक्ति निश्चय ही नरक गमन करता है, व्रत निष्फल होने पर कुष्ठी एवं अन्ध होकर शरीर धारण करना पड़ता है ॥४३२॥

अथ सामान्यतः तन्माहात्म्यम्

भविष्योत्तर में उसी स्थान में लिखित है—हे पार्थ! हे राजेन्द्र! जो इस प्रकार अनुष्ठान करते हैं, उनको परम धर्म लाभ होता है एवं अन्तिम में हरिधाम लाभ होता है ॥४३३॥

अथ भीष्मपञ्चकादि

सक्षम होने पर एकादशी से आरम्भ कर पाँच दिन यावत् भगवत् प्रीति हेतु भीष्मपञ्चक व्रतानुष्ठान करे ॥४३४॥

इस प्रकार कार्त्तिक मास की पूर्णिमा में धात्रीव्रत एवं शुक्ला नवमी में अक्षय नवमी व्रत करना चाहिये

अथाधिमासकृत्यम्

भविष्योत्तरे—

अधिमासे तु सम्प्राप्ते स्मृत्वा गोपीप्रियं हरिम् । सुवर्णं चाज्यसंयुक्तं त्रयस्त्रिंशदपूपकम् ।।४३७

दद्याच्च वेदविदुषे श्रोत्रियाय कुटुम्बिने । नश्यत्यकरणे शीघ्रं पुण्यं द्वादशमासजम् ।।४३८।।

इति श्रीगोपालभट्ट-विलिखिते श्रीमद्भगवद्भक्तिविलासे श्रीदामोदरप्रियो नाम षोड़शो विलासः ।

---

अधिमासो नाम मलमासस्तस्मिन् ।।४३७।।

तत्र सुवर्णादिदानस्य नित्यत्वमाह— नश्यतीति । एतदपि शक्तविषयमेव, सर्व्वेषां नित्यकर्म्मणां स्वत एव समर्थविषयकत्वादित्येषा दिक् ।।४३८।।

इति षोड़शो विलासः ।

---

सक्षम होने पर पद्मपुराणादि में वर्णित विधि को जानकर कार्त्तिकमास में पैतामहादिकृच्छ्र एवं मासोपवास व्रत करना चाहिये ।।४३५-४३६।।

अथाधिमासकृत्यम्

भविष्योत्तर में लिखित है—अधिकमास समागत होने से गोपीप्रिय श्रीहरि को स्मरण करके स्वर्ण एवं घृत युक्त त्रयस्त्रिंशत् पिष्टक वेदवित् कुटुम्बी श्रोत्रिय को अर्पण करना कर्त्तव्य है। अन्यथा शीघ्र द्वादश मास सञ्चित पुण्य ध्वंस होता है ।।४३७-४३८।।

इति श्रीगोपालभट्ट-विलिखिते श्रीमद्भगवद्भक्तिविलासे श्रीदामोदरप्रियो नाम षोड़शो विलासः ।

# सप्तदश-विलासः

नमो भगवते वासुदेवाय

कस्माच्चिदाश्रयाद्यस्य प्रोद्यद्भक्तिविलासतः । दीनोऽपि रक्षयेद्विश्वं तं श्रीचैतन्यमाश्रये ।।१।।

प्रत्यहं प्रतिपक्षञ्च प्रतिमासमपि क्रमात् । विलिख्य कृत्यमधुना कादाचित्कं विलिख्यते ।।२।।

---

इदानीं पुरश्चरणं लिखिष्यन् तत्र सर्व्वशक्तिविहीनस्याप्यात्मनो भगवति भक्तिप्रयत्नाभासेनापि जगद्-रक्षकतामपि सम्भाव्य तं शरणं याति— कस्माच्चिदिति । यस्य श्रीचैतन्यस्य कस्माच्चिदप्याश्रयात् प्रवर्त्तेयः प्रकर्षेण उद्यन् उदयं प्राप्नुवन् भक्तेविलासस्तेन दीनः सर्व्वशक्तिरहितोऽपि जनो विश्वं जगदपि रक्षयेत्, तम् आश्रये, शरणत्वेन प्रपद्ये ।।१।।

एवमभीष्टसुसिद्धये परमगुरुं भगवन्तमाश्रित्य इदानीं विलासचतुष्केण लेख्यं प्रतिजानीते— प्रत्यहमिति । प्रत्यहं यत् कृत्यं, प्रतिपक्षञ्च यत् कृत्यं, प्रतिमासमपि यत् कृत्यं, तत् क्रमात् यथाक्रमं विलिख्याधुना कादाचित्कं कदाचित् करणीयं कृत्यं कर्म्म लिख्यते ।।२।।

---

जिनके किञ्चिन्मात्र आश्रय से सम्यक् उदयशील भक्तिविलास द्वारा दीन व्यक्ति भी विश्वरक्षण करने में समर्थ होता है, मैं उन्हीं श्रीचैतन्यदेव का आश्रय ग्रहण करता हूँ ।।१।।

यथाक्रम से प्रात्यहिक कृत्य, पक्ष कृत्य एवं मास कृत्य लिखकर अधुना विलास चतुष्टय में कदाचित् करने योग्य अर्थात् समय विशेष में कर्त्तव्य कार्य्य लिखे जाते हैं ।।२।।

अथ पुरश्चरणम्

श्रीगुरोर्मन्त्रमासाद्य पुरश्चरणकर्म्मणि । दीक्षां कृत्वा पुनस्तेनाऽनुज्ञातः प्रारभेत तत् ॥३॥

अथ पुरश्चरणावश्यकता

आगमे—

विना येन न सिद्धः स्यान्मन्त्रो वर्षशतैरपि । कृतेन येन लभते साधको वाञ्छितं फलम् ॥४

पुरश्चरणसम्पन्नो मन्त्रो हि फलदायकः । अतः पुरस्क्रियां कुर्य्यान्मन्त्रवित् सिद्धिकाङ्क्षया ॥५

किं होमैः किं जपैश्चैव किं मन्त्रायासविस्तरैः ?

रहस्यानां हि मन्त्राणां यदि न स्यात् पुरस्क्रिया ॥६॥

पुरस्क्रिया हि मन्त्राणां प्रधानं वीर्य्यमुच्यते । वीर्य्यहीनो यथा देही सर्व्वकर्म्मसु न क्षमः ।

पुरश्चरणहीनो हि तथा मन्त्रः प्रकीर्त्तितः ॥७॥

अथ पुरश्चरणमाहात्म्यम्

अगस्त्यसंहितायाम्—

संसारे दुःखभूयिष्ठे य इच्छेत् सुखमात्मनः । पञ्चाङ्गोपासनेनैव रामं भजतु भक्तितः ॥८॥

पञ्चाङ्गोपासनं भक्तैः पुरश्चरणमुच्यते । एतद्धि विदुषां श्रेष्ठ संसारच्छेदकारणम् ॥९॥

---

श्रीगुरोः सकाशात् पुरश्चरणकर्म्मणि निमित्ते पुनर्दीक्षां कृत्वा तेन श्रीगुरुणानुज्ञातः सन् तत् पुरश्चरण-कर्म्म प्रकर्षेणारभेत । तथा च क्रमदीपिकायाम्—'चैत्रे कृत्वैतन्मासि कर्म्मांच्छ क्षे, पुण्यर्क्षे भूयो देशिकात् प्राप्य दीक्षाम् । तेनानुज्ञातः पूर्व्वसेवां द्वितीये, मासि द्वादश्यामारभेतामलायाम् ।' इति ॥३॥

येन—पुरश्चरणेन ॥४॥

मन्त्रेषु आयासविस्तरैरन्यैरपि बहुलश्रमैः किम् ? ॥६॥

वीर्य्यं शक्तिः, वीजमिति पाठे कारणं मूलमित्यर्थः ॥७॥

विदुषां श्रेष्ठ हे सुतीक्ष्ण ॥९॥

---

अथ पुरश्चरणम्

श्रीगुरु के समीप से मन्त्र ग्रहण पूर्बक पुरश्चरण के विषय में पुनर्बार दीक्षा ग्रहण पूर्बक तदीय अनुज्ञा लेकर पुरश्चरण में प्रवृत्त होना चाहिये ॥३॥

अथ पुरश्चरणावश्यकता

आगम में वर्णित है—जिसके विना शतवर्ष जप करने से भी मन्त्रसिद्धि की सम्भावना नहीं है । जिसके द्वारा साधक अभिलषित फल लाभ कर सकता है । वह पुरश्चरण सम्पन्न मन्त्र ही फलदायक है, अतएव पुरश्चरण करना मन्त्रविद् सिद्धिकामी साधक का कर्त्तव्य है, पुरश्चरण सम्पन्न न होने से होम, जप, मन्त्र विषयक महापरिश्रम,-इन सबकी क्या आवश्यकता है ? पुरश्चरण न करने से मन्त्र-रहस्य अज्ञात ही रहता है ॥४-६॥

पुरश्चरण ही मन्त्र का प्रधान वीर्य्य कहा जाता है । निर्वीर्य्य देही जिस प्रकार कोई कार्य्य करने में सक्षम नहीं होता है, कथित है-उस प्रकार पुरश्चरण रहित मन्त्र भी शक्तिहीन होता है ॥७॥

अथ पुरश्चरणमाहात्म्यम्

अगस्त्य संहिता में लिखित है—दुःख सङ्कुल संसार में जो स्वीय सुख कामना करते हैं, वे भक्तिसहित पञ्चाङ्ग उपासना द्वारा रघुपति श्रीराम का भजन करें । भक्तगण पञ्चोपासना को ही पुरश्चरण कहते हैं । हे विद्वद्गण श्रेष्ठ सुतीक्ष्ण ! पुरश्चरण ही संसार बन्धन मोचन का उपाय है ॥८-९॥

नानेन सदृशो धर्म्मो नानेन सदृशन्तपः। नानेन साधनं किञ्चिदिष्टार्थस्य तपोधन ॥१०॥

पूजा त्रैकालिकी नित्यं जपस्तर्पणमेव च। होमो ब्राह्मणभुक्तिश्च पुरश्चरणमुच्यते ॥११॥

गुरोर्लब्धस्य मन्त्रस्य प्रसादेन यथाविधि। पञ्चाङ्गोपासनासिद्धयै पुरश्चैतद्विधीयते ॥१२॥

निष्कामाणामनेनैव साक्षात्कारो भविष्यति।

अर्थ-सिद्धिः सकामानां सर्व्वां वै भक्तिमालभेत् ॥१३॥

पञ्चाङ्गमेतत् कुर्व्वीत यः पुरश्चरणं बुधः। स वै विजयते लोके विद्यैश्वर्य्यसुतादिभिः ॥१४॥

क्रमदीपिकायाञ्च—

य इमं भजते विधिं नरो, भवितासौ दयितः शरीरिणाम्।

अचिरात् कमलैकमन्दिरं, परमं ते समुपैति तन्महः ॥१५॥ इति।

गोपालोपासनाग्रन्थसार-श्रीक्रमदीपिकाम्। प्रायोऽनुसृत्य लिख्येत पौरश्चरणिको विधिः ॥१६

---

अनेन पुरश्चरणेन ॥१०॥

पञ्चाङ्गोपासनमेव विशिष्याह पूजेति ॥११॥

पञ्चाङ्गोपासनस्यास्य पुरश्चरणमिति नाम निर्व्वक्ति- गुरोरिति। गुरोः प्रसादेन लब्धस्य मन्त्रस्य, एतत्पञ्चाङ्गोपासनं पुरः प्रथमं विधीयत इति पुरश्चरणमुच्यत इति पूर्व्वेणैवान्वयः। प्रसन्नेनेति पाठे प्रसन्न-चित्तेन सता विधीयते। यद्वा, भावे क्त-प्रत्ययः, अर्थः पूर्व्ववदेव ॥१२॥

विद्यादिभिर्लोके विजयते परमोत्कृष्टा भवति ॥१४॥

विधिं विधानं पुरश्चरणलक्षणम्, अचिरात् शीघ्रं कमलायाः सर्व्वसम्पत्तेरेकं मुख्यं मन्दिरञ्च भाजनं भवति। अपि वाक्कमलैकमन्दिरम्' इति पाठान्तरे वाचः सरस्वत्याः कमलायाश्चैकमन्दिरमपि भवति ॥१५

तत्र च बहुविधेषु पुरश्चरणविधिषु मध्ये क्रमदीपिकोक्तानुसारेण पुरश्चरणविधिलिखनं प्रतिजानीते—गोपालेति। गोपालोपासनाया ग्रन्थेषु मध्ये सारं श्रेष्ठभूता या श्रीमती क्रमदीपिका तामनुसृत्य तत्रोक्तानु-सारेणेत्यर्थः। प्रायो बाहुल्येनेति तत्तद्विशेषज्ञानार्थमन्याकरग्रन्थोक्तमपि किञ्चिदनुसृत्य लेख्यमित्यर्थः ॥१६॥

---

हे तपोधन! पुरश्चरण सदृश धम, तपः वा अभीष्ट विषयक अपर कोई साधना नहीं है। त्रिकालीन पूजा ( ) नित्य जप (२) नित्य तपण (३) नित्य होम (४) एवं नित्य ब्राह्मण भोजन (५) यह पञ्चाङ्ग ही पुरश्चरण कहा गया है। श्रीगुरुकृपा से जो मन्त्र लाभ हुआ है, उसकी सिद्धि हेतु प्रथम यथारीति पञ्चाङ्गोपासना करनी चाहिये। एतज्जन्य यह 'पुरश्चरण' नाम से ख्यात है। इस पुरश्चरण के प्रभाव से निष्कामी व्यक्ति देवता का दर्शन प्राप्त करते हैं, और सकामी व्यक्ति, अर्थसिद्धि तथा भक्तिमान्, सब प्रकार की वस्तु प्राप्त होते हैं। १०-१३॥

जो विचक्षण व्यक्ति यह पञ्चाङ्ग पुरश्चरण करते हैं वे इस लोक में विद्या, ऐश्वर्य्य एवं सन्तानादि के सहित परम उन्नति को प्राप्त करते हैं। १४॥

क्रमदीपिका में लिखित है—जो मानव, इस पुरश्चरण विधि का भजन करते हैं, वे देहधारियों के प्रिय पात्र होते हैं, एवं आशु निखिल ऐश्वर्य्य प्राप्त करते हैं। एवं अन्तम में परमार्थ लाभ करते हैं ॥१५॥

गोपालोपासना के ग्रन्थों में 'क्रमदीपिका' उत्कृष्ट ग्रन्थ है। इस स्थान में प्रायशः उसमें लिखित नियम के अनुसार ही पुरश्चरण विधि लिखी जायेगी ॥१६॥

अथ तत्र स्थाननियमः

गिरिशृङ्गं सरित्तीरं विल्वमूलं जलान्तरम् । गोष्ठं विष्णवालयोऽश्वत्थतलं वाथाम्बुधेस्तटम् ।।१७

क्वचिच्च—

पुण्यक्षेत्रं नदीतीरं गुहापर्व्वतमस्तकम् । पुण्यप्रदेश-सिन्धूनां सङ्गमः पावनं वनम् ।।१८।।
उद्यानानि विविक्तानि विल्वमूलं तटं गिरेः । तुलसीकाननं गोष्ठं वृषशून्यः शिवालयः ।।१९
अश्वत्थामलकीमूलं गोशालाजलमध्यतः । देवतायतनं कूलं समुद्रस्य निजं गृहम् ।।२०।।
गुरुणां सन्निधानञ्च चित्तैकाग्र्यस्थलं तथा । प्रेतभूम्यादिकञ्चैव तत्तत्कल्पप्रकाशितम् ।
एषामन्यतमस्थानमाश्रित्य जपमाचरेत् ।।२१।।

अन्यत्र च—

समुद्रगायाः सरितः सङ्गमः पापनाशनः । पश्चिमाभिमुखं लिङ्गं पुराणोक्तं स्वयम्भुवम् ।।२२
सर्व्वोत्कृष्टं महाविष्णोः स्थानं चान्यत् मनोरमम् ।
गृहं वा शुचि संस्कार-स्वभावाभ्यां प्रसिद्धिकृत् ।।२३।।

अथ स्थानविशेषे फलविशेषः

उक्तश्च श्रीयाज्ञवल्क्येन—

गृहे त्वेकगुणं जप्यं नद्यान्तु द्विगुणं स्मृतम् । गवां गोष्ठे दशगुणं अग्न्यागारे दशाधिकम् ।।२४।।

---

जलस्य अन्तरं मध्यम् ।।१७।।

अश्वत्थस्य आमलक्याश्च मूलम् ।।२०।।

तस्य तस्य मन्त्रसाधनस्य कल्पेन कल्पाख्येन शास्त्रेण प्रकाशितम्, एषां मध्ये अन्यतममेकम् ।।२१।।

शुचि पवित्रं गृहं वा, संस्कारेण स्थानादिशोधनेन, स्वभावेन च निजसौशील्येन, प्रकृष्टां सिद्धिं करोतीति तथा; एतच्च सर्व्वेषामेव विशेषणम् ।।२३।।

जप्यं जपः, जपफलं वा ।।२४।।

---

अथ तत्र स्थाननियमः

गिरिशृङ्ग, नदीकूल, विल्वमूल, जल के भीतर, गोष्ठ, हरिमन्दिर, अश्वत्थतल, आमलकीमूल, समुद्रकूल इन सब स्थानों में जहाँ अनुकूल हो वहाँ पुरश्चरण करना चाहिये ।।१७।।

ग्रन्थान्तर में लिखित है– पुण्य क्षेत्र, नदी तट, गुहा, पर्वत शृङ्ग, पुण्य प्रदेश, सागर सङ्गम, पवित्र वन, निर्जन उद्यान, विल्वमूल, पर्वत तट, तुलसी कानन, गोष्ठ, वृषशून्य शिवालय, अश्वत्थमूल, आमलकी मूल, गोशाला, सलिल मध्य, देवालय, सागरकूल, निज गृह, गुरुसन्निधान, प्रेतभूमि, किंवा जिस स्थान में मन की एकाग्रता होती है, उस उस मन्त्र साधन फल के उपयुक्त कल्पाख्य शास्त्र प्रकाशित स्थान में जिस किसी स्थान को आश्रय करके जप करे ।।१८-२१।।

अन्यत्र भी उक्त है—समुद्र गामिनी नदी का पातक नाशन सङ्गम, पुराण वर्णित पश्चिमाभिमुखी स्वयम्भुलिङ्ग के समीप, महाविष्णु का सर्वोत्तम मन्दिर, अन्य मनोहर स्थान, पवित्र आलय, संस्कार द्वारा शुद्ध स्थान, किंवा स्वभावतः सिद्धिप्रद स्थान, इन सब स्थानों के मध्य में अनुकूल स्थान को आश्रय करे। ।।२२-२३।।

अथ स्थानविशेषे फलविशेषः

श्रीयाज्ञवल्क्य का कथन है—गृह में एकगुण, नदी तीर में द्विगुण, गोष्ठ में दशगुण, एवं अग्निगृह में जप

सिद्धक्षेत्रेषु तीर्थेषु देवतानाञ्च सन्निधौ । सहस्रं शतकोटीनामनन्तं विष्णुसन्निधौ ॥२५॥

अथ तत्र भूमिपरिग्रहः

शुभे दिने च सङ्कल्प्य स्वविहारादिहेतवे । क्रोशमेकमुभौ वा तौ स्वक्षेत्रं परिकल्पयेत् ॥२६॥

क्षीरिवृक्षभवानष्ट कीलकान् द्वादशाङ्गुलान् । दशकृत्वोऽस्त्रमन्त्रेण प्रत्येकमभिमन्त्रयेत् ।२७॥

ततोऽभ्यर्च्याष्टदिक्पालान् क्षेत्रपालञ्च मध्यतः ।

बलिं दत्वा च निखनेत् कीलकानष्टदिक्षु तान् ॥२८॥

तथा चागमे—

ग्रामे क्रोशमितं स्थानं नद्यादौ स्वेच्छया मितम् । नगरादावथ क्रोशं क्रोशयुग्ममथापि वा ।

आहारादिविहारार्थं तावतीं भूमिमाक्रमेत् ॥२९॥

क्षीरिवृक्षोद्भवान् कीलानस्त्रमन्त्राभिमन्त्रितान् । निखनेद्दशदिग्भागे तेष्वस्त्रञ्च प्रपूजयेत् ॥३०

क्षेत्रे च कीलिते मन्त्री न विघ्नैः परिभूयते । क्षेत्रपालादिकं तत्र पूजयेद्विधिवत्ततः ॥३१॥

दिक्पतिभ्यो बलिं दत्वा ततः क्षेत्रं समाश्रयेत् । क्षेत्रमध्यं समाश्रित्य कूर्मचक्रं विचिन्तयेत् ।३२

किञ्च—

कूर्म्मचक्रेण संशोध्य दीपस्थाने कुटीं श्रयेत् । चतुरस्रचतुर्हस्तां हस्तोन्नतसुवेदिकाम् ॥३३॥

---

देवतानां—श्रीरुद्रादीनाम् ॥२५॥

आदि-शब्देन आहारादिचेष्टा, तौ क्रोशौ व्याप्य ॥२६॥

कुटीं विशिनष्टि—चतुरस्रेति सार्द्धेन ॥३३॥

---

करने से दशगुण अधिक फल लाभ होता है । सिद्धक्षेत्र, तीर्थस्थान, रुद्रादि देव सन्निधान में जप करने पर सहस्रशत कोटिगुण फल लाभ होता है, एवं विष्णु सन्निधान में जप करने से अनन्त फल प्राप्त किया जाता है ॥२४-२५॥

अथ तत्र भूमिपरिग्रहः

शुभ दिन में सङ्कल्प करके निज परिभ्रमणादि हेतु एक क्रोश अथवा दो क्रोश यावत् अपने क्षेत्र की कल्पना करनी चाहिये । क्षीरिवृक्षोत्थ द्वादशाङ्गुल कीलकाष्टक करके अस्त्रमन्त्र (अस्त्रायफट्) जप द्वारा प्रत्येक को दश बार अभिमन्त्रित करे । पश्चात् इन आठ कीलकों में आठ दिक्पालों की और मध्य में क्षेत्र-पाल की पूजा करके बलिदान पूर्वक (पूजोपहार प्रदान पूर्वक) अष्टदिक् में कीलकाष्टक को गाड़ना चाहिये । ॥२६-२८॥

अतएव आगम में लिखित है—ग्राम में क्रोशपरिमित स्थान, नद्यादि में निज इच्छानुसार परिमित स्थान, नगर प्रभृति में एक क्रोश, अथवा क्रोशद्वय परिमित स्थान आहार-विहारादि के निमित्त निर्दिष्ट करे । अस्त्रमन्त्राभिमन्त्रित आठ क्षीरि कीलक प्रोथित करके उसमें अस्त्र की पूजा करे ॥२९-३०॥

इस प्रकार पुरश्चरण क्षेत्र को कीलित करने पर विघ्नसमूह मन्त्रों को पराभूत करने में सक्षम नहीं होते हैं । उसमें यथारीति क्षेत्रपालक प्रभृति की पूजा करके दिक्पालगण के उद्देश्य में पूजोपहार (बलि प्रदान) पूर्वक क्षेत्र को आश्रय करना चाहिये । क्षेत्र के मध्य में आश्रय ग्रहण करके कूर्म चक्र को भावना करे ॥३१-३२॥

और भी लिखित है—कूर्मचक्र द्वारा शोधन करके दीप स्थान में (मुख देश में) कुटी को आश्रय करना

चन्द्रातपपताकाभ्यां तोरणैरप्यलङ्कृताम् ।
विविक्तामभिलिप्ताञ्च प्राकारेणाभिवेष्टिताम् ॥३४॥ इति ।

अथ कूर्म्मचक्रम्

तदुक्तम्—

वर्त्तुलं नवकोष्ठं तत् कृत्वा कूर्म्माकृतिं लिखेत् । कूर्म्मस्याङ्गानि चाष्टौ स्युर्मुखं हस्तौ च पार्श्वकौ
पादौ पुच्छमिति प्रोक्तं प्रशस्तं मुखमेव तु ॥३५॥
स्वरद्वन्द्वं क्रमाद्दिक्षु पूर्व्वादिष्वष्टसु न्यसेत् ।
तथा कादीन् सप्तवर्गान् न्यसेच्छिवदिशं विना ॥३६॥
ग्रामनामाद्यवर्णस्तु यस्यां दिशि च तिष्ठति । तत्र कूर्म्ममुखं ज्ञेयमन्याङ्गानीतरत्र च ॥३७॥

क्वचिच्च—

स्वरयुग्मं क्रमेणैव ऐन्द्राद्यष्टसु दिक्षु च । कादीन् वर्गान् क्षमैशान्यान्तथा मध्यस्थलाधिपम् ॥३८

यथा कूर्म्मस्याङ्गानि, तथात्राष्ट कोष्ठानीत्येवं कूर्म्माकृतित्वे हेतुमाह—कूर्म्मस्येति ॥३५॥

स्वराणाम् अकारादीनां षोड़शानां द्वन्द्वम् अ आ-इत्येवमष्टयुगलं पूर्व्वादिषु अष्टसु दिक्षु तत्रत्यकोष्ठेषु न्यसेत् । कादयः पञ्चवर्गाः, यादयोऽन्त्यस्था एको वर्गः । शादय उष्माणश्चैको वर्गः । एवं सप्तवर्गान् न्यसेत् । शिवदिशं विनेति—ऐशान्यां न किञ्चिन्न्यसेदित्यर्थः ॥३६॥

ग्राम-शब्देन कृत्यजपक्षेत्रं, तस्य यन्नाम मथुरादि, तस्याद्यो वर्णः मकारादिरित्यर्थः । तथा च शारदातिलके —'चतुरस्रां भुवं भित्त्वा कोष्ठानां नवकं लिखेत् । पूर्व्वकोष्ठादि विलिखेत् सप्तवर्गाननुक्रमात् ॥ लक्षमीशे मध्यकोष्ठे स्वरयुग्मं क्रमाल्लिखेत् । दिक्षु पूर्व्वादितो यत्र क्षेत्राख्याद्याक्षरं स्थितम् ॥ मुखं तत्तस्य जानीयात्' इति ॥३७॥

केषाञ्चिन्मते क्षेत्राधिपस्य नामाद्याक्षरमिति मतान्तरं दर्शयन् हस्तादिविभागं तत्तत्फलादिकञ्च लिखति स्वरयुग्ममिति पञ्चभिः । कादींश्च वर्गान् क्रमेणैवेन्द्राद्यष्टदिक्षु लिखेत् । क्षकारञ्च ऐशान्यां दिशि । स्थलाधिपञ्चाधिष्ठातारं मध्ये कोष्ठे लिखेत् ॥३८॥

चाहिये । कुटी चतुष्कोण बिशिष्ट चतुर्हस्त परिमित, एक हस्त उच्च, सुन्दर वेदिका विशिष्ट, चन्द्रातप पताका तोरण द्वारा समलङ्कृत, जनशून्य, अभिलिप्त (लिपी हुई) एवं प्राकार वेष्टित होवे ॥३३-३४॥

अथ कूर्म्मचक्र

उस विषय में कथित है—गोलकाकार नौ कोठे करके कूर्म्माकृति अङ्कन करनी चाहिये । मुख, दोनों हाथ, पार्श्वद्वय, चरणद्वय, एवं पुच्छ (पूँछ) इन आठ कूर्म्म के अङ्ग होंगे परन्तु कूर्म का मुखदेश प्रशस्त है । स्वर द्वन्द्व अ, आ इत्यादि क्रम से दो दो वर्ण, पूर्वादि क्रम से कूर्म्म के आट कोठों में अङ्कित करे, और ईशान कोण के अतिरिक्त अन्य सात दिक् में क कारादि सात वर्ग, (१) क वर्ग, (२) च वर्ग, (३) ट वर्ग, (४) त वर्ग, (५) प वर्ग, (६) अन्तस्थ वर्ग और (७) उष्म वर्ग का अङ्कन करे । जिस ओर ग्राम (जप करने के निमित्त अधिष्ठित स्थान) का नाम का प्रथम वर्ण रहे, उसी ओर कूर्म का मुख जानना चाहिये । अपर अङ्गों को अन्य दिशाओं में जाने ॥३५-३७॥

अन्यत्र भी लिखा है—पूर्वादि अष्ट दिक् में यथा क्रम से अ आ आदि दो दो स्वर वर्ण सप्तदिक् में क कारादि सात वर्ग ईशान कोण में क्ष-यह वर्ण, और मध्य कोष्ठ में भूमध्यधिपति के नाम का आदि वर्ण लिखे । जिस ओर यह आद्य अक्षरपतित होगा, वही कूर्म का मुख और उसी को दीपस्थान जानना

तन्नामाद्याक्षरं यत्र कूर्म्मास्यं तच्च दीपकम् । तत्पार्श्वकोष्ठौ हस्तौ द्वावधोधः कुक्षिपादकौ ॥३९

शेषकोष्ठं भवेत् पुच्छं मुखे सिद्धिरनुत्तमा । करस्थाने महाक्लेशः कुक्षौ दुःखमवाप्नुयात् ॥४०

पादे हानिस्तथा पुच्छे पीड़ा स्याद्बन्धनानि च ।

दीपस्थाने जपः कार्य्यः सर्व्वकार्य्यमभीप्सुभिः ॥४१॥

कूर्म्मचक्रमविज्ञाय यः कुर्य्याज्जपसंज्ञकम् । तस्य जप्यफलं नास्ति सर्व्वानर्थाय कल्पते ॥४२॥

अथ भक्ष्यनियमः

तन्त्रे—

शाकं मूलं फलं वापि गव्यं क्षीरञ्च वा दधि । साधुभ्यो भक्ष्यमन्नं वा शक्तवः पायसं हि वा ॥४३

क्वचिच्च—

वैदिकाचारयुक्तानां शुचीनां श्रीमतां सताम् ।

सत्कुलस्थानजातानां भिक्षाशीलोऽग्रजन्मनाम् ॥४४॥

भुञ्जानो वा हविष्यान्नं शाकं यावकमेव वा । पयो मूलं फलं वापि यद्यद्यत्रोपपद्यते ॥४५॥

नारदपञ्चरात्रे—

मृदु कोष्णं सुपक्वञ्च कुर्य्याद्वै लघुभोजनम् । नेन्द्रियाणां यथा वृद्धिस्तथा भुञ्जीत साधकः ॥४६

---

तस्य स्थलाधिपस्य यन्नाम, तदाद्यक्षरं यत् स्यात्तत् कूर्म्मस्यास्यं, तच्च दीपकं दीपस्थानमित्यर्थः । तथा चोक्तम् —'युग्मं स्वराणां क्रमतो विलिख्य, कादींश्च वर्गान् क्रमतः क्षमीशे । स्थानाधिपस्याक्षरमेति यत्र, तं दीपदेशं मुनयो वदन्ति ॥' इति ॥३९॥

शक्तवो यवनिर्म्मिता ज्ञेयाः । तथा च शारदातिलके—'भक्ष्यं हविष्यं शाकानि विहितानि फलं पयः । मूलं शक्तुर्यवोत्पन्नो भक्ष्याण्येतानि मन्त्रिणाम् ॥' इति ॥४३॥

उक्तानां मध्ये यद्यद्द्रव्यमनायासेन यत्रोपपद्यते, तदेव वा भुञ्जानः ॥४५॥

---

चाहिये। उसके पार्श्व के कोष्ठद्वय कूर्म के करद्वय, उसके नीचे को दोनों कोठे कुक्षि एवं उसके नीचे के दोनों कोठे कूर्म्म दोनों चरण तथा शेष कोठे को कूर्म्म की पूँछ जानना चाहिये, कूर्म के मुख में उपवेशन पूर्वक जप, परम सिद्धि दायक है, हस्त में जप महा दुःखद है, कुक्षि में दुःख, चरण में हानि, एवं पुच्छ में जप रोग एवं बन्धनादि प्रदान करता है। जो साधक सब प्रकार सिद्धि की कामना करते हैं, उनको दीप-स्थान मुख में बैठकर ही जप करना चाहिये। कूर्म चक्र को बिना जाने जप करने से वह जप निष्फल होता है एवं वह यावतीय अनर्थ का कारण होता है ॥३८-४२॥

अथ भक्ष्यनियमः

तन्त्र में लिखित है—शाक, मूल, फल, गव्य, दुग्ध वा दधि, साधुवृन्द के निकट से प्राप्त भिक्षान्न, यवचूर्ण एवं पायस भोजन कर सकता है। ४३॥

अन्यत्र भी लिखा है—वैदिकाचारनिष्ठ, शौचवान्, श्रीमान्, सत् स्वभाव, सत्कुलज, सत् स्थानजात ब्राह्मणवृन्द के निकट से भिक्षा लब्ध हविष्यान्न, शाक, यावक, दुग्ध, मूल एवं फलादि,—इन सबके मध्य में जो जो द्रव्य अनायास उपलब्ध है वही भोजन करे ।.४४-४५।।

नारदपञ्चरात्र में लिखित है—मृदु, ईषदुष्ण, एवं सुपक्व द्रव्य का लघु भोजन करना ही साधक का कर्त्तव्य है। इन्द्रियोत्तेजक द्रव्यसमूह सेवन करना निषिद्ध है ॥४६॥

किञ्च—

ब्रह्मपत्रे च भुञ्जीत मध्यपत्र-विवर्ज्जिते । दक्षं ब्रह्मोत्तरं विष्णुर्मध्यपत्रं महेश्वरः ॥४७॥

अथावश्यवर्ज्ज्यानि

संहितासु —

मधु मांसं तथा क्षारलवणं तैलमेव च । स्विन्नं पर्य्युषितञ्चैव निःस्नेहं कीटदूषितम् ॥४८॥

काञ्जिकं गृञ्जनं विल्वं कलञ्जं लशुनं विसम् । मसूरं कोद्रवं माषं मण्डुकञ्चणकादिकम् ।

ताम्बूलं कांस्यपात्रञ्च दिवाभोजनमेव च ॥४९॥

किञ्च—

असत्सङ्गं परान्नञ्च वर्ज्जयेदन्यपूजनम् । विना कर्म्मोचितं नित्यमथ नैमित्तिकञ्चरेत् ॥५०॥

स्त्रीशूद्रपतितव्रात्यनास्तिकोच्छिष्टभाषणम् । असत्यभाषणं जैह्म्यभाषणञ्च परित्यजेत् ॥५१॥

सत्येनापि न भाषेत जपहोमार्च्चनादिषु । वर्ज्जयेद्गीतवाद्यादिश्रवणं नृत्य-दर्शनम् ॥५२॥

अभ्यङ्गं गन्धलेपञ्च पुष्पधारणमेव च । मैथुनं तत्कथालापं तद्गोष्ठीं परिवर्ज्जयेत् ॥५३॥

आस्नातांश्च द्विजान् शूद्रान् स्त्रियो नैव स्पृशेत्तथा ।

त्यजेदुष्णोदकस्नानमनिवेदितभोजनम् ॥५४॥

---

ब्रह्म पलाशवृक्षस्तस्य पत्रे, पत्रेष्विति पाठे मध्यपत्रं विवर्ज्जयेदिति पाठः । दक्षं दक्षिणपत्रम्, उत्तरं वामपत्रम् ॥४७॥

निःस्नेहं—रुक्षम् ॥४८॥

विषमिति मूर्द्धन्यन्तपाठे औषधादिप्रयुक्तमपि । आदि-शब्देन राजमाषादि ॥४९॥

उचितं निजवर्णाश्रमयोग्यं, नित्यम् नैमित्तिकञ्च यत् कर्म्म, तद्विनाऽन्यत् काम्यं वर्ज्जयेदित्यर्थः ॥५०॥

---

और भी लिखा है—पलाश तरु के मध्य पत्र को परित्याग कर अन्य पत्र पर भोजन करे । पलाश पत्र के दक्षिण पत्र ब्रह्मा, वाम पत्र विष्णु एवं मध्य पत्र शिव स्वरूप हैं ॥४७॥

अथावश्यवर्ज्ज्यानि

संहितासमूह में उक्त है—मधु, मांस, क्षार लवण, तैल, सिद्ध तण्डुल, पर्य्युसित द्रव्य, एवं कीटदुष्ट द्रव्य त्याग करे । काञ्जिक (काँजी), गृञ्जन (गाजर), विल्व, कलञ्ज (लहशन), मृणाल वा औषधादि प्रयुक्त विष, मसूर, कोद्रव धान्य, मास, मण्डूक (शाक विशेष), चणक, राजमाष, ताम्बूल, कांस्यपात्र में भोजन, दिवा भोजन,-यह सब निषिद्ध है ॥४८-४९॥

और भी लिखित है—असत्सङ्ग, परान्न, अन्य देवार्चन, निज वर्णाश्रमोचित नित्य नैमित्तिक धर्म व्यतीत अन्य काम्य कर्म एवं नारी, शूद्र, पतित, संस्कार शून्य, नास्तिक एवं उच्छिष्ट व्यक्ति के सहित सम्भाषण, कुटिल वाक्य, असत्य भाषण,-यह सब परित्याग करे । जप, होम, एवं पूजादि के समय सत्य वाक्य भी उच्चारण करना निषिद्ध है । गीत वाद्यादि श्रवण एवं नृत्य दर्शन परित्याग करे । तैल मर्दन, गन्धलेपन, पुष्प धारण, मैथुन, मैथुन सम्बन्धी वार्त्तालाप एवं मैथुन गोष्ठी को परित्याग करना चाहिये । अस्न त द्विज, शूद्र वा नारी को स्पर्श न करे, उष्णजल में स्नान एवं अनिवेदित द्रव्य भोजन न करे ॥५०-५४

किञ्च—

विहाय वह्निं न हि वस्तु किञ्चिद्,.ग्राह्यं परेभ्यः सति सम्भवे च।
असम्भवे तीर्थवहिर्विशुद्धात्, पर्व्वातिरिक्ते प्रतिगृह्य जप्यात् ॥५५॥
तत्रासमर्थोऽनुदिनं विशुद्धाद्,-याचेत यावद्दिनमात्रभक्ष्यम्।
गृह्णाति रागाद‌धिकं न सिद्धिः, प्रजायते कल्पशतैरमुष्य।५६॥

अथ कृत्यानि

वैशम्पायनसंहितायाम्—

स्नानं त्रिसवनं प्रोक्तमशक्तौ द्विः सकृत्तथा। अस्नातस्य फलं नास्ति न वा तर्पयतः पितॄन्। ५७
शयीत दर्भशय्यायां शुचिः प्रयतमानसः। तद्वासः क्षालयेन्नित्यमन्यथा विघ्नमावहेत्। ५८॥

किञ्चान्यत्र—

मन्त्रं साधयमानस्तु त्रिसन्ध्यं देवमर्च्चयेत्। द्विसन्ध्यमेकसन्ध्यं वा न मन्त्रं केवलं जपेत् ॥५९

एकग्रामस्थितो नित्यं गत्वा वन्देत स्वं गुरुम्।
नित्यं नैमित्तिकं कुर्य्यात् सङ्गमं साधुभिः सदा ॥६०॥

स्नायाच्च पञ्चगव्येन केवलामलकेन वा। श्रुतिस्मृतिपुराणोक्तमन्त्रैः स्नायादनन्तरम् ॥६१॥

किञ्च—

ग्रासदानादिना कुर्व्वन् गवां शुश्रूषणं सदा। भूतानुकम्पी प्रजपेत् शुभ्रपद्माक्षमालया ॥६२॥

---

तद्वासः शयनवासः, यद्वा, येन वाससा जप्तं तत् ॥५८।

---

और भी कथित है—सम्भावना विद्यमान होने पर साधकजन, अपर के निकट से अग्नि व्यतीत अन्य द्रव्य ग्रहण न करे। अभाव होने पर तीर्थ के वहिर्भाग में पर्वभिन्न अन्य समय पवित्र व्यक्ति के निकट से प्रतिग्रह करके जप करे, इसमें असमर्थ होने पर पवित्र व्यक्ति के निकट से उस दिन के निमित्त भोजनोचित द्रव्य ग्रहण करे। लोभवशतः अधिक द्रव्य ग्रहण करने पर शतकल्प में भी मन्त्र सिद्धि की सम्भावना नहीं है ॥५५-५६॥

अथ कृत्यानि

वैशम्पायन संहिता में लिखित है—जो मानव, अस्नात है, अथवा पितृगण के उद्देश्य में तर्पण नहीं करता है, उसके फल की सिद्धि नहीं होती है, तज्जन्य त्रिकालीन स्नान करना उचित है। अक्षम होने पर दो बार वा एक बार मन्त्र स्नान करे। पवित्र होकर चित्त संयत करके कुशासन में शयन करे एवं प्रत्यह रात्रिधृत वस्त्र धौत करे, नहीं तो विघ्न उपस्थित होता है ॥५७-५८॥

और भी अन्यत्र उक्त है—त्रिसन्ध्या वा एक सन्ध्या देवपूजा करना मन्त्र साधक का कर्त्तव्य है, पूजा व्यतीत केवलमात्र मन्त्र-जप करना निषिद्ध है। एक ग्राम में निज श्रीगुरुदेव का निवास होने पर प्रत्यह तत्सन्निधान में उपस्थित होकर उनकी वन्दना करनी चाहिये। एवं नित्य नैमित्तिक कर्म सम्पादन एवं सतत साधु-सङ्ग करना कर्त्तव्य है। पञ्चगव्य वा आमलक द्वारा स्नान करना विहित है, तत्पश्चात् श्रुति-स्मृति पुराण कथित मन्त्र-पाठ पूर्वक स्नान करना कर्त्तव्य है।५९-६१॥

और भी लिखित है—ग्रास प्रदानादि द्वारा सर्वदा गोगण की सेवा करे एवं भूतानुकम्पी होकर श्वेत पद्मबीज ग्रथित माला द्वारा जप करे। विचक्षण व्यक्ति, मन्त्र द्वारा जल को पञ्चविंशति बार अभिमन्त्रित

पञ्चविंशतिवारांश्च प्रजप्तेन स्वमन्त्रतः । शिरोऽम्भसाभिषिञ्चेत्त्रिः स्नानकाले निजं बुधः ॥६३

तथैवाचमनं कुर्य्याद्भोजनादसरेऽपि च । अन्नञ्च सप्तकृत्वस्तन्मन्त्रजप्तं हि भक्षयेत् ॥६४॥

किञ्च—

यस्य देवे च मन्त्रे च गुरौ त्रिष्वपि निश्चला । न व्यवच्छिद्यते बुद्धिस्तस्य सिद्धिरदूरतः ॥६५

मन्त्रात्मा देवता ज्ञेया देवता गुरुरूपिणी । तेषां भेदो न कर्त्तव्यो यदीच्छेदिष्टमात्मनः ॥६६॥

अथासननियमः

सर्व्वसिद्ध्यै व्याघ्रचर्म्म ज्ञानसिद्ध्यै मृगाजिनम् । वस्त्रासनं रोगहरं वेत्रजं श्रीविवर्द्धनम् ।

कौशेयं पौष्टिकं प्रोक्तं कम्बलं दुःखमोचनम् ॥६७॥

अभिचारे कृष्णवस्त्रं रक्तं वश्यादिकर्म्मणि । शान्तिके धवलं प्रोक्तं विचित्रं सर्व्वकर्म्मसु ॥६८

किञ्च—

कुशाजिनाम्बरेणाढ्यं चतुरस्रं समन्ततः । एकहस्तं द्विहस्तं वा चतुरङ्गुलमुच्छ्रितम् ॥६९॥

---

पञ्चविंशतिवारान् स्वमन्त्रतो निजमन्त्रेण जप्तमभिमन्त्रितं यदम्भो जलं, तेन निजशिरो वारत्रयमभिषिञ्चेत् ॥६३॥

तथैवेति—पञ्चविंशतिवार-स्वमन्त्रजप्तेन जलेन स्नानकाले भोजनकाले चाचमनं कुर्य्यादित्यर्थः । तेन स्वकीयेन मन्त्रेण जप्तम् । तथा च क्रमदीपिकायाम्—'कुर्व्वन्नात्मीयं कर्म्म वर्णाश्रमस्थं, मन्त्रं जप्त्वाम्भः स्नानकालेऽभिषिञ्चेत् । आचामपाथस्तत्त्वसंख्यं प्रजप्तं, भुञ्जानश्चान्नं सप्तजप्ताम्बुनाचर्य्यम् ॥' इति ॥६४॥

न व्यवच्छिद्यते, न भिद्यते ॥६५॥

मन्त्रात्मा—मन्त्रात्मिका ॥६६॥

कर्म्मविशेषे वस्त्रादीनां वर्णविशेषं लिखति—अभिचार इति । विचित्रं—विविधवर्णम् ॥६८॥

---

करके तद्द्वारा स्नान के समय अपने मस्तक को तीन बार सिञ्चन करे । भोजन के पश्चात् भी उस प्रकार अभिमन्त्रित वारि के द्वारा आचमन करना चाहिये । अन्नोपरि सप्तधा मन्त्र जप करके वह अन्न भोजन करे ॥६२-६४॥

और भी लिखा है—देव, गुरु, एवं मन्त्र,– इन तीनों में अचला बुद्धि रहने से भेद-ज्ञान विदूरित होना है, और तत्काल सिद्धि लाभ किया जाता है । मन्त्र स्वरूप देवता एवं देवता ही गुरु स्वरूप हैं,–यह जानना चाहिये । सुतरां जो निज मङ्गल कामना करते हैं, गुरु, देव, एवं मन्त्र,–इन तीनों में भेद ज्ञान करना कभी भी उनको उचित नहीं है ॥६५-६६॥

अथासननियमः

सर्वसिद्धि लाभ हेतु व्याघ्र-चर्म्मासन एवं ज्ञान सिद्धि हेतु मृग-चर्म्मासन प्रशस्त है । वस्त्रासन रोग-निवारक है, वेत्रासन श्री वृद्धि दायक है, पट्टासन पुष्टिकर है एवं कम्बलासन दुःख नाशक है । अभिचार कार्य्य में कृष्णवर्ण वस्त्र द्वारा आसन, वशीकरण कार्य्य में लोहितवर्ण वस्त्र द्वारा आसन, शान्ति कार्य्य में शुक्ल वस्त्र द्वारा आसन, एवं समस्त कार्य्यों में नानावर्ण वस्त्र द्वारा आसन निर्म्माण करना चाहिये॥६७-६८

और भी उक्त है—चतुर्द्दिक में चतुष्कोण, एक हस्त वा दो हस्त प्रमाण एवं अङ्गुलि चतुष्टय प्रमाण, उच्च आसन निर्म्माण, कुश, अजिन वस्त्र द्वारा करना चाहिये । अर्थात् प्रथम कुश, उसके ऊपर मृगचर्म, और सबके ऊपर वसन देकर आसन प्रस्तुत करना चाहिये ॥६९॥

अथ जपमाला, तन्नित्यता च

वाराहे—

यस्तु भागवतो भूत्वा न गृह्णाति गणित्रिकाम् ।
आसुरो तस्य दीक्षा तु न सा धर्म्माय विद्यते ॥७०॥
गणित्रिकां गृहीत्वा यो मन्त्रं चिन्तयते बुधः । जन्मान्तरसहस्राणि चिन्तितोऽहञ्च तेन वै ।
माङ्गल्या कुशला सिद्धा सर्व्वसंसारमोक्षणी ॥७१॥

अथ मालामणिनिर्णयस्तत्परिमाणादि च

तत्रैव—

परिमाणन्तु वक्ष्यामि शृणु तत्त्वेन माधवि । उत्तमा मध्यमा चैव कन्यसी तु गणित्रिका ॥७२
अष्टोत्तरशतैः पूर्व्वा पञ्चाशद्भिस्तु मध्यमा । कन्यसी पञ्चविंशत्या परिमाणं विधीयते ॥७३
रुद्राक्षैश्चोत्तमां ताञ्च पुत्रजीवैश्च मध्यमाम् । कुशैः कनीयसीं विद्यादेतत्ते कथितं मया ॥७४

श्रीनारदपञ्चरात्रे —

अष्टोत्तरशतं पूर्णं तदर्द्धं पादमेव वा । कुर्य्यात्तत्र विधानोक्तं विधिना सर्व्वकर्म्मसु ॥७५॥

हारीतस्मृतौ—

शङ्खरूप्यमयी माला काञ्चनी नीरजोत्पलैः । पद्माक्षैश्चापि रुद्राक्षैर्विद्रुमैर्मणिमौक्तिकैः ॥७६

---

गण्यतेऽनयेति गणित्रिका जपमाला, ताम् ॥७०॥
तेनाहं चिन्तितो भवामि, सिद्धा सिद्धकरीत्यर्थः ॥७१॥
माधवि हे धरणि, कन्यसी कनीयसी ॥७२॥
अष्टोत्तरशतैर्मणिभिः पूर्व्वा उत्तमा ॥७३॥
तत्रापि मणिभेदेन त्रिविधत्वमाह—रुद्राक्षैरिति । पुत्रञ्जीवैरिति सानुनासिकश्च क्वचित् ॥७४॥
नीरजानि पद्मानि, उत्पलानि च कुमुदानि, तैः । तथा चोक्तम्—'रुद्राक्ष-शङ्खपद्माक्ष-पुत्त्रजीवक-मौक्तिकैः । स्फटिकैर्मणिरत्नैश्च सौवर्णैर्विद्रुमैस्तथा । कुशैः पद्मैर्द्वादश स्युर्गृहस्थस्याक्षमालिका ।' इति ॥७६

---

अथ जपमाला, तन्नित्यता च

वराहपुराण में लिखित है—भगवद्भक्ति परायण होकर माला ग्रहण न करने से वह दीक्षा आसुरी दीक्षा नाम से अभिहित होती है। तादृशी दीक्षा धर्म के निमित्त हितकारी नहीं है। माला ग्रहण पूर्वक मन्त्र की चिन्ता करने से, उस बुद्धिमान के द्वारा मैं सहस्र जन्म पर्य्यन्त चिन्तित होता हूँ। उसकी यह माला मङ्गलकारिणी, कुशला, सिद्धिदात्री और संसार-पाश मोचनी है ॥७०-७१॥

अथ मालामणिनिर्णयस्तत्परिमाणादि च

उक्त पुराण में कथित है—हे माधवि ! मैं माला का परिमाण यथारीति वर्णन कर रहा हूँ। श्रवण करो। माला तीन प्रकार की हैं। उत्तम, मध्यम, कनिष्ठ। अष्टोत्तरशत माला उत्तम, पञ्चाशत् मध्यम, एवं विंशति कनिष्ठ है। रुद्राक्ष माला उत्तम है, पुत्रजीव (जीयापोता) की माला मध्यम एवं कुश की माला कनिष्ठ है। तुमसे उन तीन प्रकार की मालाओं का विषय मैंने वर्णन किया ॥७२-७४॥

श्रीनारदपञ्चरात्र में लिखित है—अष्टोत्तरशत् संख्य माला पूर्ण रूप से अभिहिता है, समस्त कर्मों में तदर्ध किंवा तत्पाद माला का विधान विधि ने किया है ॥७५॥

हारीतस्मृति में उक्त है—शङ्ख, रजत, सुवर्ण, पद्म, कुमुद, पद्मवीज, रुद्राक्ष, प्रवाल, मणि, मुक्ता एवं

निर्म्मितेन्द्राक्षकैर्माला तथैवाङ्गुलिपर्व्वभिः । पुत्त्रजीवमयी माला सा शस्ता जपकर्म्मणि ॥७७

गौतमीये —

अथामलकसम्भूतैस्तुलसीकाष्ठनिर्म्मितैः ॥७८॥ इति ।

आगमे च—

आदिक्षान्तार्णयोगत्वादक्षमालेति कीर्त्तिता । तद्वर्णसंख्यैर्मणिभिर्जपमालां प्रकल्पयेत् ॥७९॥

किञ्च—

अनुलोमविलोमार्णैर्मातृकायाः सबिन्दुकैः । क्षमेरुकैः काष्टवर्गैर्माला स्याद्योगिनां शुभा ॥८०॥

अथ मालानां मणिविशेषेण वैशिष्टयम्

आग्नेये—

हिरण्यशङ्खमणिभिर्जप्यं शतगुणं भवेत् । सहस्रगुणमिन्द्राक्षैः पद्माक्षैरयुतं भवेत् ॥८१॥

नियुतं चापि रुद्राक्षैर्भद्राक्षैश्च न संशयः । पुत्त्रजीवकजप्यस्य परिसंख्या न विद्यते ॥८२॥

---

आदिक्षान्तानामकारादि-क्षकारावसानानाम्, अर्णानां मातृकावर्णानां योगत्वात् नियोजनीयत्वात् गणनीयत्वाद्वा (गणनोपायत्वाद्वा) । तद्वर्णसंख्यैः पञ्चाशद्भिरित्यर्थः, क्षकारस्य मेरुत्वेन कल्पनीयत्वात् ॥७९॥

मुख्यतमामक्षमालामाह— अनुलोमेति ॥८०॥

हिरण्यशङ्खयोर्मणिभिर्जप्यं जप इत्यर्थः ॥८१॥

भद्राक्षैरिति रुद्राक्षविशेषणं फलविशेषैर्वा ॥८२॥

---

इन्द्राक्ष द्वारा गठिता माला, अङ्गुलि पर्व रचिता माला एवं पुत्त्रजींवमयी माला, जप कार्य्यसमूह में प्रशस्ता है ॥७६-७७॥

गौतमीय में उक्त है – धात्रीमाला समूह एवं तुलसी मालासमूह भी प्रशस्त हैं ॥७८॥

आगम में लिखित है— अकारादि क्ष कारान्त मातृका वर्ण भी अक्ष माला नाम से परिगणित है । जप-माला पञ्चाशद्वर्ण संख्यक मणि द्वारा कल्पना करनी चाहिये ॥७९॥

और भी लिखा है—'क्ष' वर्ण को मेरु मानकर, अनुस्वारयुक्त मातृका वर्ण के अनुलोम विलोम के क्रम से वर्गाष्टक में जो माला होती है, वह योगिगण के पक्ष में शुभदा है । अर्थात् इन पञ्चाशत् वर्णों के द्वारा 'अ-क्ष' माला का विषय कहा है । यह 'अ-क्ष' माला मानसिक जप में ही शास्त्रों में ग्रहीत है । यहाँ अ-कारादि क्ष-कारान्त वर्णों के मध्य में दो 'ल' कार लेकर एक पञ्चाशत् होते हैं । उनमें 'म' कार को मेरु कल्पना कर अकारादि 'ल' कारान्त पञ्चाशद् वर्णों में बिन्दु योग करके अनुलोम (सूची) क्रम से अर्थात् (अं आं इं ईं) इत्यादि क्रम से एक एक वर्णों को मन मन में उच्चारण करके और विलोम (उल्टे) क्रम से अर्थात् (लं हं षं शं) इत्यादि क्रम से एक एक वर्ण मन मन में उच्चारण कर मन मन में मूल-मन्त्र को भी उच्चारण करे । इस प्रकार करने से ही एकसो बार मूल-मन्त्र का जप होता है । पुनर्वार उन सब वर्णों को आट वर्ग,-अ वर्ग, क वर्ग, च वर्ग, ट वर्ग, त वर्ग, प वर्ग, य वर्ग और श वर्ग में विभाग करके उन आट वर्गों के अन्त वर्णों (अः ङं ञं णं नं मं वं लं) को पूर्ववत् उच्चारण कर आट बार जप करे ॥८०॥

अथ मालानां मणिविशेषेण वैशिष्टयम्

अग्निपुराण में उक्त—शङ्ख एवं सुवर्णमणी माला द्वारा जप करने से शतगुण फल लाभ होता है, तद्रूप इन्द्राक्ष माला द्वारा जप करने से सहस्रगुण, पद्माक्ष द्वारा जप करने से दशसहस्र गुण एवं रुद्राक्ष द्वारा तथा भद्राक्ष द्वारा नियुतगुण फल लाभ होता है । पुत्त्रजीव मणी माला द्वारा जप करने से जो फल लाभ होता है उसकी संख्या नहीं होती है ॥८१-८२॥

शिवपुराणे—

अङ्गुल्या परिसंख्यानमेवमेवमुदाहृतम् । रेखयाष्टगुणं विद्यात् पुत्रजीवैर्दशाधिकम् ।८३॥
शतं स्याच्छङ्खमणिभिः प्रवालैश्च सहस्रकम् । स्फाटिकैर्दशसाहस्रं मौक्तिकैर्लक्षमुच्यते ॥८४॥
पद्माक्षैर्दशलक्षन्तु राजतैः कोटिरुच्यते । सौवर्णैः सा दशगुणा सर्व्वैर्दशगुणा स्मृता ।८५॥
कुशग्रन्थ्या च रुद्राक्षैरनन्तगुणितं फलम् । श्वेतपद्माक्षमालाभिरपि स्यादमितं फलम् ।
मातृकं वर्णसम्भूतमालायान्तु तदेव हि ॥८६॥

अथ मालानिर्म्माणविधिः

शिवागमे—

मुखे मुखं प्रकर्त्तव्यं मुखं मूले विवर्ज्जयेत् । धात्रीफलप्रमाणेन श्रेष्ठमेतदुदाहृतम् ॥८७॥
वदराण्डप्रमाणेन गद्यते मध्यमाधमे । नवत्रितन्तुना चैतद् ग्रन्थनीयमसंस्पृशत् ।
ऊर्द्ध्ववक्त्रञ्च मेर्व्वाख्यं कर्त्तव्यं तच्च लङ्घयेत् ॥८८॥

---

रेखया रेखान्तरिताङ्गुलिपर्व्वणेत्यर्थः । भूमिलिखिताङ्केन वा । अङ्गुलीभिर्जपस्य सङ्ख्यानं गणनम् ॥८३

सा कोटिर्दशगुणा दशकोटय इत्यर्थः । सर्व्वैः पुत्र-जीवादिभिः सौवर्णान्तैर्दश गुणा दशकोटिगुणिता । यद्वा, सौवर्णेभ्यो दशगुणेति दशकोटिगुणेति ज्ञेयम् । एवं मतभेदश्च मन्त्रभेदेन कामफलादिभेदेन वा । एवमन्यत्रा-प्यूह्यमिति पूर्व्वं लिखितमेव ॥८५॥

एतत् मालाया अक्षम् ॥८७॥

वदरस्याण्डं वीजं तत्प्रमाणेन चेत्यर्थः । क्रमान्मध्यममधमञ्चोदाहृतम् । पाठान्तरे—वदरफलस्य तदण्डस्य च प्रमाणेन क्रमान्मध्यमाधमे गणिते । नवेन नूतनेन, त्रितन्तुना त्रिगुणीकृतसूत्रेणेत्यर्थः; यद्वा, नवेति नव-संख्याप्राप्तेन तन्तुत्रयेण, प्रथमं त्रिगुणीकृत्य पश्चाच्च त्रिगुणीकृत्य नवगुणीकृतेन सूत्रेणेत्यर्थः । त्रिगुणं त्रिगुणीकृत्येत्यग्रे लेख्यत्वात् । असंस्पृशत् अन्योऽन्यं स्पर्शमप्राप्नुवत् सत्, एतत् अक्षं ग्रन्थनीयं, प्रत्येकमध्ये ब्रह्मग्रन्थिर्विरचनीय इत्यर्थः ॥८८॥

---

शिवपुराण में लिखित है—अङ्गुली की संख्या इस प्रकार उक्त है- यदि अङ्गुली के रेखान्तरित पर्व द्वारा जप किया जाय तो, अष्टगुण फल होता है । पुत्रजीव माला से जप करने पर उससे दशगुण फल होता है । यद्रूप शङ्खमणी माला द्वारा शत गुण, प्रवाल माला से सहस्त्रगुण, स्फटिक माला द्वारा अयुतगुण, मुक्तावली माला से लक्षगुण, पद्मबीज माला द्वारा नियुतगुण, रजतमयी माला से कोटिगुण, एवं काञ्चन-मयी माला से जप करने से दशकोटि गुण फल लाभ होता है । पुत्रजीवादि सौवर्णान्ता जितनी मालाओं का वर्णन हुआ है, उन सबसे जप करने पर दशकोटि गुणित फल लाभ होता है । कुशग्रन्थि एवं रुद्राक्ष द्वारा जप करने पर अनन्तगुण फल लाभ होता है । श्वेत पद्मबीजमयी माला द्वारा एवं मातृका माला से जप करने पर अगणनीय फल होता है ॥८३-८६॥

अथ मालानिर्म्माणविधिः

शिवागम में लिखित है— माला के मुख के ओर मुख करना चाहिये । मूल की ओर मुख न करे । धात्रीफल परिमित माला प्रकरण कही गई है । वदर प्रमाण माला मध्यम और बेर की गुठली के समान माला अधम कही गई है । माला में ग्रन्थी प्रदान करना हो तो, सूत्र को प्रथमतः त्रिगुण करके पश्चात् पुनर्वार त्रिगुण करके नवगुण सूत्र द्वारा ग्रन्थन करना चाहिये । किन्तु परस्पर संस्पृष्ट न हो । इस रीति से प्रति माला युगल के मध्य में ब्रह्मग्रन्थी देनी चाहिये । मेरु को ऊर्द्ध्व मुख में स्थापन करे । एवं जप के समय मेरुलङ्घन करना दोषावह है ॥८७-८८॥

श्रीनारदपञ्चरात्रे च—

अक्षास्थिमात्रैर्मणिभिर्ज्येष्ठं कुर्य्यात्तु वर्त्तुलम् । धात्रीफलानां गर्भेण प्रमाणं मध्यमं स्मृतम् ।
बदरास्थिप्रमाणेन कन्यसं समुदाहृतम् ॥८९॥

किञ्च—

ग्रन्थिबन्धावधौ तत्र मणिसंख्याधिकं द्विजाः । मेरुं प्रकल्पयेन्मध्ये एकेन गुणकेन तु ॥९०॥

शिवागमे तत्रैव रुद्राक्षानुद्दिश्य—

एकवक्त्रैस्त्रिवक्त्रैश्च चतुर्वक्त्रैश्च पञ्चभिः ।
षड्वक्त्रैर्वाथ कर्त्तव्यं मिथो मिश्रांस्तु वर्ज्जयेत् ॥९१॥

किञ्चान्यत्र—

कृतनित्यक्रियः शुद्ध उक्तेष्वक्षेषु मन्त्रवित् । यथाकामं यथालाभमक्षाण्यानीय यत्नतः ॥९२॥
अन्योऽन्यसमरूपाणि नातिस्थूलकृशानि च । कीटादिभिरदुष्टानि अजीर्णानि नवानि च ॥९३
गव्यैस्तु पञ्चभिस्तानि प्रक्षाल्य तु पृथक् पृथक् ।
ततो द्विजेन्द्रपुण्यस्त्रीनिर्म्मितं ग्रन्थिवर्ज्जितम् ॥९४॥
त्रिगुणं त्रिगुणीकृत्य सूत्रं प्रक्षाल्य पूर्व्ववत् ।
शुक्लं रक्तं तथा कृष्णं शान्तिवश्याभिचारिके ॥९५॥

---

अक्षं रुद्राक्षं विभीतकं वा तदस्थिप्रमाणैः, कन्यसं कनिष्ठम् ॥८९॥
ग्रन्थिबन्धस्यावधौ अन्ते ॥९०॥

---

श्रीनारदपञ्चरात्र में वर्णित है—रुद्राक्ष बीज प्रमाण से गोलाकार माला उत्तम, धात्रीबीज परिमित माला मध्यम, एवं कदम्ब बीज प्रमाण माला अधम कही गई है ॥८९॥

और भी लिखा है—हे द्विजवृन्द ! ग्रन्थिबन्धन के पश्चात् माला संख्या की अपेक्षा एक अधिक माला को मेरु रूप में कल्पना करनी चाहिये ॥९०॥

शिवागम के पूर्वोक्त स्थान में ही रुद्राक्ष को लक्ष्य करके कहा गया है—एकमुख, त्रिमुख, चतुर्मुख, पञ्चमुख, किंवा छःमुख रुद्राक्ष के मध्य में दोषहीन जिस किसी को लेकर माला गूँथनी चाहिये । परस्पर समजातीय माला ग्रन्थन करे । अर्थात् अन्य मुख के सहित असम जातीय त्रिमुखादि मिश्रण करके ग्रन्थन न करे ॥९१॥

मन्त्रविद् व्यक्ति, नित्यकर्म समापन करने के पश्चात् पवित्र होकर उक्त रुद्राक्षसमूह के मध्य में इच्छानुसार यथालब्ध रुद्राक्ष का आनयन यत्नपूर्वक करे । मणिसमूह, परस्पर समान होना आवश्यक है । अधिक स्थूल वा अधिक सूक्ष्म नहीं होना चाहिये । एवं कीटादि दूषित, जीर्ण, वा पुरातन न हों । इन सब मालाओं में प्रत्येक को पृथक् पृथक् रूप से पञ्चगव्य में धौत करे । तत्पश्चात् द्विजश्रेष्ठ की पतिव्रता नारी द्वारा निर्मित ग्रन्थिरहित नवगुणित सूत्र को पूर्वोक्त रीति से धौत करके उक्त सूत्रमणि समूह को एवं पद्माकार से कल्पित अश्वत्थ पत्रसमूह को गन्ध जल से प्रक्षालनपूर्वक सूत्र एवं मणिसमूह को अश्वत्थ पत्रसमूह के ऊपर स्थापन करना विज्ञ व्यक्ति का कर्त्तव्य है, शान्तिकर्म में वह सूत्र श्वेत वर्ण, वश्य कर्म्म में लोहित वर्ण एवं अभिचार कर्म में कृष्ण वर्ण होता है । अथवा सर्वत्र पट्टसूत्र ग्रहणीय है । अनन्तर सूत्र एवं मणिसमूह में तार (प्रणव) शक्ति (मायाबीज) एवं मातृका वर्णसमूह विन्यास पूर्वक प्रथमतः पूजा

सूत्रं संस्थापयेद्विद्वान् पट्टसूत्रमथापि वा। अश्वत्थपत्रैर्नवकैः पद्माकारेण कल्पितैः।
सूत्रं मणींश्च गन्धाद्भिः क्षालितांस्तत्र निक्षिपेत् ॥९६॥
तारं शक्तिं मातृकाञ्च सूत्रे चैव मणिष्वथ। विन्यस्य पूजयेदादौ जुहुयाच्चैव शक्तितः ॥९७॥
होमकर्म्मण्यशक्तश्चेद्द्विगुणं जपमाचरेत्। मणिमेकैकमादाय सूत्रे च योजयेत् सुधीः ॥९८॥
मुखे मुखन्तु संयोज्य पुच्छे पुच्छन्तु योजयेत्।
गोपुच्छसदृशो कार्य्या यद्वा सर्पाकृतिः शुभा ॥९९॥
तत्सजातीयमेकाक्षं मेरुत्वेनाग्रतो न्यसेत्। एकैकमणिमध्ये तु ब्रह्मग्रन्थिं प्रकल्पयेत्।
जपमालां विधायेत्थं तत्संस्कारान् समाचरेत् ॥१००॥

अथ मालासंस्कारः

शिवागमे—

क्षालयेत् सद्योजातेन वामदेवेन घर्षयेत्। धूपयेदप्यघोरेण लेपयेत् पुरुषेण तु ॥१०१॥

---

नवकैर्नूतनैरश्वत्थपत्रैः सहितम्, गन्धाद्भिरश्वत्थस्य पत्राण्यपि क्षालयेदित्यर्थः। तत्र पद्माकारकल्पिताश्वत्थपत्रेषु ॥९६॥

तारं—प्रणवं, शक्तिं—मायावीजम् ॥९७॥

क्षालयेत् पञ्चगव्येनोत्तमजलेन च प्रक्षालयेत्। तदुक्तम्—'क्षालयेत् पञ्चगव्येन सद्योजातेन सज्जलैः' इति। सद्योजातादिकं प्रायो मन्त्राद्यवर्णैर्मन्त्रनाम—'ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमः। भवे भवे नाभिभवे भजस्व मां भवोद्भवाय नमः।' घर्षयेच्चन्दनादिभिः। तथा चोक्तम्—'चन्दनागुरुगन्धाद्यैर्वामदेवेन घर्षयेत्। ॐ वामदेवाय नमो ज्येष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्व्वभूतदमनाय नमो मनोन्मनाय नमः। ॐ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः सर्व्वतः सर्व्वसर्व्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः शिवेभ्यः।' लेपयेच्चन्दनादिना—'ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात्' ॥१०१॥

---

करके तत्पश्चात् शक्त्यनुसार होम करे। होम कार्य्य करने में सक्षम न होने से द्विगुण जप करना कर्त्तव्य है। अनन्तर एक एक मणि लेकर सूत्र द्वारा ग्रन्थन करना विज्ञ व्यक्ति का कर्त्तव्य है। मुख में मुख एवं पुच्छ में पुच्छ संयोजित करनी चाहिये। माला, गोपुच्छ तुल्य अथवा मनोहर भुजगाकार से गूँथनी चाहिये। इन समान जातीय मालाओं में एक माला को अग्रभाग में मेरु रूप में विन्यास करे। एक एक मणि के मध्य में ब्रह्मग्रन्थि की रचना करनी चाहिये। इस प्रकार जपमाला प्रस्तुत करके उसका संस्कार करना चाहिये ॥९२-१००॥

अथ मालासंस्कारः

शिवागम में लिखित है—'सद्योजात" मन्त्र द्वारा पञ्चगव्य और उत्तम जल से माला को प्रक्षालन 'वामदेव" मन्त्र से, चन्दन एवं अगुरु गन्धादि द्वारा घर्षण, "अघोर" मन्त्र से धूपन, तत्पुरुष" मन्त्र से, चन्दनादि द्वारा लेपन एवं पञ्चम ईशानादि मन्त्र के द्वारा प्रत्येक मणि को एकशत बार अभिमन्त्रित करना कर्त्तव्य है। तथा मेरु को पञ्चम मन्त्र एवं अघोर मन्त्र द्वारा मन्त्रित करना चाहिये। सद्योजात मन्त्र "ॐ सद्योजातं प्रपद्यामि सद्योजाताय वं नमः। भवे भवे नाभिभवे भजस्व मां भवोद्भवाय नमः।" वामदेव मन्त्र "ॐ वामदेवाय नमो ज्येष्ठाय नमः, श्रेष्ठाय नमः, रुद्राय नमः, कालाय नमः, कलविकरणाय नमो

मन्त्रयेत् पञ्चमेनैव प्रत्येकन्तु शतं शतम् । मेरुञ्च पञ्चमेनैव तथाघोरेण मन्त्रयेत् ॥१०२॥

मुद्राष्टकं दर्शयित्वा प्रत्येकं पूजयेत् क्रमात् । ग्रथितं पञ्चभिः पूज्य पूर्व्ववच्च यथाशिरः ॥१०३

अथ मालाभेदेनाधिकारिभेदः

नारदपञ्चरात्रे—

कुशपत्रैर्जपेद्विप्रः सुवर्णमणिभिर्नृपः । पुत्त्रजीवफलैर्वैश्यः पद्माक्षैः सर्व्व एव च ॥१०४॥

मोक्षार्थी पञ्चविंशत्या धनार्थी त्रिंशता जपेत् ।
पुष्टयर्थी सप्तविंशत्या न पञ्चदशभिः क्वचित् ॥१०५॥

जपस्य गणनाञ्चाहुः पद्माक्षैर्भक्तिवर्द्धनैः । अथाङ्गुलीभिरेवापि जपमन्वहमाचरेत् ॥१०६॥

---

पञ्चममध्यायम् – 'ॐ ईशानः सर्व्वविद्यानामीश्वरः, सर्व्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मेऽस्तु सदाशिवोम्' इति । ननु मन्त्रेण द्रव्याभिमन्त्रणस्य संख्यादिनियमः सर्व्वत्र श्रूयते, तदत्र कथं मन्त्रयेदित्यपेक्षायामाह—प्रत्येकमेकैकं मणिं शतं शतं वारान्मन्त्रयेदिति । केचिच्च क्षालनादिकमपि तत्तन्मन्त्रेण प्रत्येकं मणिं शतं वारान् कुर्य्यादित्याहुः । केचित्तु सद्योजातादिमन्त्राणामेकैकं मन्त्रं क्षालनादिकर्म्मणि वारशतं पठेदिति व्याचक्षते । अत्र च यथासम्प्रदायं व्यवहर्त्तव्यमिति दिक् ॥१०२॥

मुद्राष्टकम् आवाहनादिकम्, संस्कृत्यैवं बुधो मालां तत्प्राणान् स्थापयेत्ततः' इत्युक्तेः । पूजा पूजयित्वा, यथाशिरः मस्तकक्रमेण ग्रथितम् । माला च प्रथमं स्वगुरुहस्तादेव ग्राह्या, 'गुरुं संपूज्य तद्धस्ताद्गृह्णीयात् सर्व्वसिद्धये' इति तन्त्रोक्तेः ॥१०३॥

भक्तिवर्द्धनैरिति भगवद्भक्त्यर्थी पद्माक्षैर्जपेदित्यर्थः ॥१०६॥

---

बलविकरणाय नमो बलाय नमो बल प्रमथनाय नमः, सर्वभूत दमनाय नमो मनोन्मनाय नमः । ॐ अघोरेभ्योऽथघोरेभ्यो घोरघोरतरेभ्यः सर्वतः सर्वेभ्यो नमस्ते अस्तु रुद्र रूपेभ्यः शिवेभ्यः । तत्पुरुष मन्त्रः । ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नोरुद्रः प्रचोदयात् । पञ्चम ईशान मन्त्र । ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिब्रह्मा शिवो मेऽस्तु सदाशिवोम् । कतिपय पण्डित, प्रत्येक मणि में शतबार उस उस मन्त्र पाठ करके प्रक्षालनादि करते हैं । और कोई कोई पण्डित प्रक्षालनादि कर्म में उक्त मन्त्रों के एक एक मन्त्र को सबके ऊपर एकशत बार पाठ करने की व्यवस्था देते हैं । इस विषय में सम्प्रदाय के अनुसार व्यवहार करना चाहिये । प्रथम श्रीगुरुदेव की पूजा करके उनके हस्त से ही माला ग्रहण करनी चाहिये । 'गुरुं सम्पूज्य तद्धस्ताद् गृह्णीयात् सर्वसिद्धये' इति तन्त्रोक्तेः ॥१०१-०२॥

पूर्व में पञ्चम मन्त्र के द्वारा पूजा करके मस्तकादि क्रम से माला ग्रन्थन करना जिस प्रकार विहित हुआ है, उस प्रकार आवाहनादि अष्टमुद्रा प्रदर्शन पूर्वक क्रमशः प्रत्येक की पूजा करनी चाहिये ॥१०३॥

अथ मालाभेदेनाधिकारिभेदः

नारदपञ्चरात्र में लिखित है, विप्र को कुश-पत्र माला से जप करना चाहिये । क्षत्रिय, सुवर्णमणिमाला से एवं वैश्य पुत्त्रजीव फल की माला से जप करे । एवं विप्रादि समस्त व्यक्ति पद्मबीज की माला से जप कर सकते हैं ॥१०४॥

मोक्षार्थी पञ्चविंशति, धनार्थी त्रिंशत् एवं पुष्टिकामी सप्तविंशति संख्यक माला से जप करे । किन्तु पञ्चदश संख्यक माला से जप करना कभी उचित नहीं है ॥१०५॥

बुधगण पद्मबीज के द्वारा जप की गणना करने की व्यवस्था प्रदान करते हैं । उससे भगवद्भक्ति वृद्धि होती है, किंवा अङ्गुलि के द्वारा प्रत्यह जप करना उचित है ॥१०६॥

किञ्चान्यत्र—

रुद्राक्षमालिकासूत्रे जपेन स्वमनोरथान् । पद्माक्षैर्विहिता माला शत्रूणां नाशिनी मता ॥१०७
कुशग्रन्थमयी माला सर्व्वपापविनाशिनी । पुत्त्रजीवफलैः कल्प्ता कुरुते पुत्त्रसम्पदः ॥१०८॥
निर्म्मिता रूप्यमणिभिर्जपमालेप्सितप्रदा । हिरण्मयैर्विरचिता माला कामान् प्रयच्छति ॥१०९

प्रवालैर्विहिता माला प्रयच्छेत् पुष्कलं धनम् ।
सौभाग्यं स्फाटिकी माला मौक्तिकैर्विहिता श्रियम् ॥११०॥
निर्म्मिता शङ्खमणिभिः कुरुते कीर्त्तिमक्षयाम् ।
सर्व्वैरेतैर्विरचिता माला स्यान्मुक्तये नृणाम् ॥१११॥

किञ्च—

तुलसीकाष्ठघटितैर्मणिभिर्जपमालिका । सर्व्वकर्म्मणि सर्व्वेषामीप्सितार्थफलप्रदा ॥११२॥

गौतमीये—

पुण्डरीकभवा माला गोपालमनुसिद्धिदा । आमलक्या भवा माला सर्व्वसिद्धिप्रदा मता ।
तुलसीसम्भवा या तु सा मोक्षं तनुतेऽचिरात् ॥११३॥

अथ जपाङ्गुल्यादिनिर्णयः

शिवागमे—

अनामामध्यमाक्रम्य जपं कुर्य्यात्तु मानसम् । मध्यमामध्यमाक्रम्य जपं कुर्य्यादुपांशुकम् ।
तर्ज्जनीं तु समाक्रम्य जपं नैव तु कारयेत् ॥११४॥
एकैकमणिमङ्गुष्ठेनाकर्षन् प्रजपेन्मनुम् । मेरौ तु लङ्घिते देवि न मन्त्रफलभाग्भवेत् ॥११५॥

---

कल्प्ता रचिता ॥१०८॥

---

और भी अन्यत्र लिखित है—रुद्राक्षमालिका सूत्र से जप करने से स्वीय मनोरथ सिद्ध होता है, पद्म-बीज रचिता माला शत्रुनाशिनी है, कुशग्रन्थिमयी माला सर्व पातक विनाशिनी एवं पुत्त्रजीवफल रचिता माला पुत्र सम्पद् प्रदान करने वाली है ॥१०७-१०८॥

रौप्यमणि निर्मिता जप माला ईप्सितप्रदा, सुवर्ण विरचिता माला कामप्रदा, प्रबाल निर्मिता माला यथेष्ट धनप्रदा, स्फटि की माला सौभाग्यवर्द्धिनी, मुक्तामाला श्री दायिनी, एवं शङ्खमणि निर्मिता माला अक्षयकीर्त्ति प्रदात्री है । इन सब द्रव्यों की माला से जप करने से मुक्ति प्राप्त होती है ॥१०९-१११॥

और भी लिखित है—तुलसी काष्ठ मणि रचित जपमाला को समस्त कर्मो में ही सबका अभिलाष पूर्ण करने वाली जानना चाहिये ॥११२॥

गौतमीय में उक्त है—शुक्ल पद्मबीज रचिता माला गोपाल मन्त्र की सिद्धि प्रदान करती है, आमलकी की निर्मिता माला सर्वसिद्धि प्रदायिनी है, एवं तुलसी सम्भूता माला आशु मोक्ष प्रदान करती है ॥११३॥

अथ जपाङ्गुल्यादिनिर्णयः

शिवागम में लिखित है—अनामिका अङ्गुलि को स्पर्श करके मानस जप करे । मध्यमा के मध्यभाग को स्पर्श करके उपांशु जप करे । किन्तु तर्जनी को आक्रमण करके जप करना निषिद्ध है । एक एक मणि को अङ्गुष्ठ के द्वारा आकर्षण पूर्वक मन्त्र जप करना चाहिये । हे देवि ! मेरु लङ्घित होने से मन्त्र जप का फल लाभ नहीं होता है ॥११४-११५॥

अन्यत्र च—

तत्राङ्गुलिजपं कुर्व्वन् साङ्गुष्ठाङ्गुलिभिर्जपेत् । अङ्गुष्ठेन विना कर्म्म कृतं तदफलं भवेत्॥११६

कनिष्ठानामिका मध्या चतुर्थी तर्ज्जनी मता ।

तिस्रोऽङ्गुल्यस्त्रिपर्व्वाः स्युर्मध्यमा चैकपर्व्विका ॥११७॥

पर्व्वद्वयं मध्यमाया जपकाले विवर्ज्जयेत् । एवं मेरुं विजानीयाद्ब्रह्मणा दूषितं स्वयम् ॥११८

आरभ्यानामिकामध्यात् प्रदक्षिणमनुक्रमात् । तर्ज्जनीमूलपर्य्यन्तं क्रमाद्दशसु पर्व्वसु ॥११९॥

अङ्गुलीर्न वियुञ्जीत किञ्चित् सङ्कोचयेत्तलम् । अङ्गुलीनां वियोगे तु छिद्रेषु स्रवते जपः ॥१२०

क्वचिच्च—

आरभ्यानामिकामूलात् प्रादक्षिण्येन वै क्रमात् । मध्यमामूलपर्य्यन्तं जपेद्दशसु पर्व्वसु ॥१२१

गौतमीये—

आरभ्यानामिकामूलात् परिवर्त्तेत वै क्रमात् । तर्ज्जनीमध्यपर्य्यन्तं जपेद्दशसु पर्व्वसु ॥१२२॥

अथ मालाया नियमान्तरम्

तर्ज्जन्या न स्पृशेत् सूत्रं कम्पयेन्न विधूनयेत् । अङ्गुष्ठपर्व्वमध्यस्थं परिवर्त्तं समाचरेत् ॥१२३

---

साङ्गुष्ठाभिरङ्गुलीभिः, अत्र हेतुः—अङ्गुष्ठेनेति ॥११६॥

तिस्रः—कनिष्ठानामिकातर्ज्जन्यः ॥११७॥

एवं मध्यमापर्व्वद्वयम् ॥११८॥

दशसु पर्व्वसु गणयेदिति शेषः ॥११९॥

आरभ्यानामिकामध्यादित्यत्र मतान्तरमारभ्यानामिकामूलादिति ॥१२२॥

सूत्रमिति मालामित्यर्थः । न कम्पयेत्, नो विधूनयेच्च न प्रक्षिपेत् ॥१२३॥

---

अन्यत्र भी लिखा है—अङ्गुलि जप में अङ्गुष्ठ के सहित अङ्गुष्ठ द्वारा जप करना चाहिये। अङ्गुष्ठ के बिना जप करने से वह कभी सफल नहीं होता। कनिष्ठिका, अनामिका मध्यमा, एवं चतुर्थी तर्जनी,–जपकर्म में प्रशस्ता है, इनमें तीनों अङ्गुली के तीन तीन पर्व और मध्यमा का एक पर्व,–इन दश पर्व में जप करना चाहिये। जप के समय मध्यमा के अन्य (नीचे के) पर्व द्वय को परित्याग करे। इस प्रकार मध्यमा के निम्नस्थित पर्वद्वय को मेरु जानना चाहिये। ब्रह्मा स्वयं उन पर्वद्वय को दूषित किये हैं। अनामिका के मध्य भाग से आरम्भ कर दक्षिणावर्त्त क्रम से तर्जनी का मूलदेश पर्य्यन्त दश पर्व में जप करे। अङ्गुली समूह को परस्पर पृथक् न करे। तलदेश को किञ्चित सङ्कुचित करना चाहिये। अङ्गुली समूह को वियुक्त करने से उनके मध्य से जप स्त्रावित हो (टपक) जाता हैं।॥११६-१२०॥

अन्यत्र वर्णित है—अनामिका के मूलदेश से जप आरम्भ करके दक्षिणावर्त्त क्रमानुसार मध्यमा के मूलदेश पर्य्यन्त दश पर्व में जप करना चाहिये ॥१२१॥

गौतमीयतन्त्र में उक्त है—अनामिका के मूलदेश से आरम्भ करके क्रमशः तर्जनी के मध्य पर्व पर्य्यन्त दश पर्व में जप करे ॥१२२॥

अथ मालाया नियमान्तरम्

तर्जनी द्वारा सूत्र अर्थात् माला को स्पर्श न करे, और माला को अङ्गुली के मध्यपर्व में रखकर माला को अङ्गुष्ठ से फिरावे ॥१२३॥

किञ्च—

न स्पृशेद्वामहस्तेन करभ्रष्टां न कारयेत् ॥१२४॥

किञ्च—

अशुचिर्न स्पृशेदेनां करभ्रष्टां न कारयेत् । अङ्गुष्ठस्थामक्षमालां चालयेन्मध्यमग्रतः ॥१२५॥
तर्ज्जन्या न स्पृशेत् सोऽयं मुक्तिदो गणनक्रमात् ।
भुक्तौ मुक्तौ तथा कृष्टौ मध्यमायां जपेत् सुधीः ॥१२६॥

अङ्गुष्ठानामिकभ्यान्तु जपेदुत्तमकर्म्मणि । तर्ज्जन्यङ्गुष्ठसंयोगाद्विद्वेषोच्चाटने जपेत् ।
कनिष्ठाङ्गुष्ठसंयोगाज्जपेन्मारणकर्म्मणि ॥१२७॥

क्वचिच्च—

अङ्गुष्ठं मोक्षदं विद्यात्तर्ज्जनीं शत्रुनाशिनीम् । मध्यमा धनसिद्ध्यै स्याच्छान्तिकर्म्मण्यनामिका
कनिष्ठाकर्षणे ज्ञेया जपकर्म्मणि सिद्धिदा ॥१२८॥

अथ जपे गुणाः

मन्त्रार्णवे—

मनःसंहरणं शौचं मौनं मन्त्रार्थचिन्तनम् । अव्यग्रत्वमनिर्व्वेदो जपसम्पत्तिहेतवः ॥१२९॥

अन्यत्र च—

जपान्यकाले मालान्तु पूजयित्वा सुगोपयेत् । गुरुं प्रकाशयेद्विद्वान् मन्त्रं नैव प्रकाशयेत् ॥१३०

---

उत्तमकर्म्मणि शान्ति-स्वस्त्ययनादौ, विद्वेषे उच्चाटने च ॥१२७॥
तत्रैव मतान्तरं लिखति—अङ्गुष्ठमिति । आकर्षणे आकृष्टिकर्म्मणि ॥१२८॥
मनसः संहरणं विषयेभ्यः प्रत्याहारः ॥१२९॥
जपादन्यस्मिन् काले, गुरुमपि प्रकाशयेत् ॥१३०॥

---

और भी लिखा है—माला को वाम कर से स्पर्श न करे, एवं हस्त से भ्रष्ट भी न करे ॥१२४॥

अन्यत्र भी उक्त है—अशुचि अवस्था में माला को स्पर्श न करे । हस्त भ्रष्ट न करे, मध्यमा के मध्य में अक्षमाला को स्थापन कर अङ्गुष्ठ के अग्रभाग के द्वारा सञ्चालन करे । तर्ज्जनी अङ्गुली के द्वारा माला को स्पर्श करना निषिद्ध है । इस प्रकार नियम से जप करने पर मोक्ष लाभ होता है । विचक्षण व्यक्ति भुक्ति, मुक्ति एवं आकर्षण विषय में मध्यमा में रखकर जप करें । उत्तम कर्म में अर्थात् शान्ति स्वस्त्ययन आदि कर्म में अङ्गुष्ठ एवं अनामिका अङ्गुली के द्वारा जप करें, विद्वेष एवं उच्चाटन कर्म में तर्ज्जनी एवं अङ्गुष्ठ सहयोग से जप करना चाहिये, मारण कर्म में कनिष्ठा अङ्गुष्ठ के संयोग से जप करना कर्त्तव्य है ॥१२५-१२७॥

स्थान विशेष में लिखित है—अङ्गुष्ठ को मोक्षद तर्जनी को अरिनाशिनी कही गई है । धर्मसिद्धि हेतु मध्यमा, शान्ति कर्म में अनामिका एवं आकर्षण विषयक जप कर्म में कनिष्ठा को सिद्धिदात्री जाननी चाहिये ॥१२८॥

अथ जपे गुणाः

मन्त्रार्णव में लिखित है—मन का संहरण अर्थात् विषय से प्रत्याहार करने का नाम शौच, मन्त्रार्थ चिन्ता का नाम मौन, अव्यग्रता का नाम अनिर्वेद यह सभी जप सम्पत्ति के कारण स्वरूप हैं ॥१२९॥

अन्यत्र भी लिखा है—जपभिन्न काल में माला की पूजा करके गुप्त स्थान में रखें । विज्ञ व्यक्ति गुरु को प्रकाशित करें, तथापि कभी भी मन्त्र को प्रकाशित न करें ॥१३०॥

अक्षमालाञ्च मुद्राञ्च गुरोरपि न दर्शयेत् । भूतराक्षसवेतालाः सिद्धगन्धर्व्वचारणाः ।
हरन्ति प्रकटं यस्मात्तस्माद्गुप्तं जपेत् सुधीः ॥१३१॥

अथ जपे दोषाः

नारदपञ्चरात्रे—

अपवित्रकरो नग्नः शिरसि प्रावृतोऽपि वा । प्रलपन् वा जपेद्यावत्तावन्निष्फलमुच्यते ॥१३२॥

किञ्च—

वदन्न गच्छन्न स्वपन्नान्यत् किमपि संस्मरन् । न क्षुज्जृम्भणहिक्कादिविकलीकृतमानसः ।
मन्त्रसिद्धिमवाप्नोति तस्माद्यत्नपरो भवेत् ॥१३३॥

किञ्च—

स्त्रीशूद्राभ्यां न भाषेत रात्रौ जपपरो न च ॥१३४॥

व्यासस्मृतौ—

अङ्गुल्यग्रेषु यज्जप्तं यज्जप्तं मेरुलङ्घने । असंख्यातञ्च यज्जप्तं तत् सर्व्वं निष्फलं भवेत् ॥१३५

वैशम्पायनसंहितायाम्—

नैकवासा जपेन्मन्त्रं बहुवस्त्राकुलो न च । उपर्य्यधो वहिर्वस्त्रे पुरश्चरणकृत्त्यजेत् ॥१३६॥

अतएव मन्त्रार्णवे—

उष्णीषी कञ्चुकी नग्नो मुक्तकेशो गलावृतः । अपवित्रकरोऽशुद्धः प्रलपन्न जपेत् क्वचित् ॥१३७

---

गुरोः गुरु प्रत्यपि ॥१३१।
अपवित्रः कुशहीनः करो यस्य सः ॥१३२॥
उपरि अधश्च ये वहिर्वस्त्रे परिधानोत्तरीयव्यतिरिक्तं वस्त्रद्वयं ते त्यजेत ॥१३६॥
गले आवृतः वस्त्रादिप्रावृतः, अशुद्धः शौचादिरहितः ॥१३७॥

---

अक्षमाला एवं मुद्रा,–यह दो गुरु को भी न दिखावे। कारण, माला को प्रकाश करके जप करने से भूत, राक्षस, वेताल, सिद्ध, गन्धर्व एवं चारण प्रभृति उस जप को हरण करते हैं, अतएव माला द्वारा गुप्त भाव से जप करना ही विवेकी व्यक्ति का कर्त्तव्य है ।।१३१॥

अथ जपे दोषाः

नारदपञ्चरात्र में लिखित है– अपवित्र हस्त से अर्थात् कुश रहित हस्त से, नग्न अवस्था में मस्तकाच्छादन करके एवं बातें करते करते जप करने पर वह जप विफल हो जाता है ॥१३२॥

और भी लिखित है—कथोपकथन करते करते, चलते चलते, शयनावस्था में, अपर किसी विषय की चिन्ता करते करते, एव क्षुत्, जृम्भन एवं हिक्कादि द्वारा व्याकुलित मन से जप करने पर मन्त्रसिद्धि नहीं होती है। सुतरां जप के समय इन सबको यत्नपूर्वक परित्याग करना कर्त्तव्य है ॥१३३॥

और भी उक्त है—स्त्री शूद्र के सम्भाषण करना नहीं चाहिये, एवं रात्रिकाल में भी जप न करे ॥१३४

व्यास स्मृति में लिखित है—अङ्गुलि के अग्रभाग में जप करने से, मेरुलङ्घन करके जप करने से, अथवा बिना संख्या के जप करने से वह निष्फल हो जाता है ॥१३५॥

वैशम्पायन संहिता में उक्त है—पुरश्चरणकारी व्यक्ति एक वस्त्र धारण कर जप न करे, अनेक वस्त्रों से आवृत होकर जप न करे। परिधेय एवं उत्तरीय व्यतीत अधोवास एवं उर्द्ध्ववास परित्याग करे। अर्थात् परिधान एवं उत्तरीय के अतिरिक्त वस्त्रयुगल को परित्याग करना चाहिये ॥१३६॥

अतएव मन्त्रार्णव में लिखित है– मस्तक में उष्णीय धारण करके, एवं शरीर में कञ्चुक धारण करके

अप्रावृतकरो भूत्वा शिरसि प्रावृतोऽपि च ।
चिन्ताव्याकुलचित्तो वा क्रुद्धो भ्रान्तः क्षुधान्वितः ॥१३८॥

अनासनः शयानो वा गच्छन्नुत्थित एव वा । रथ्यायामशिवे स्थाने न जपेत्तिमिरान्तरे ॥१३९

उपानद्गूढ़पादो वा यानशय्यागतस्तथा । प्रसार्य्य न जपेत् पादावुत्कटासन एव वा ॥१४०॥

याज्ञवल्क्य-संहितायाम्—

न चंक्रमन्न च हसन्न पार्श्वमवलोकयन् । नापाश्रितो न जल्पंश्च न प्रावृतशिरास्तता ॥१४१॥

न पदा पदमाक्रम्य न चैव हि तथा करौ । न चासमाहितमना न च संशयानो जपेत् ॥१४२॥

ध्यायेत मनसा मन्त्रं जिह्वोष्ठौ न तु चालयेत् ।
न कम्पयेच्छिरो ग्रीवां दन्तान्नैव प्रकाशयेत् ॥१४३॥

यक्षराक्षसभूतानि सिद्धविद्याधरा गणाः । हरन्ति प्रसभं यस्मात्तस्माद्गुप्तं समाचरेत् ॥१४४

स्त्रीशूद्रपतितांश्चैव रासभञ्च रजस्वलाम् । जपकाले न भाषेत व्रतहोमादिकेषु च ।१४५॥

---

अशिवे अमङ्गले स्थाने श्मशानादौ, यच्च प्रेतभूम्यादिकमिति स्थाननियमे लिखितं, तच्च तामसानां दुष्कामविशेषोपेक्षया । तिमिरस्य अन्धकारस्य अन्तरे मध्ये ॥१३९॥

यानगतः शय्यागतो वा ॥१४०॥

चंक्रमन्नितस्ततो भ्रमन्, अपाश्रितः किञ्चिदवष्टब्धवान् सन् ॥१४१॥

न च करौ आक्रम्य, संशयानः संशयं कुर्व्वन् ॥१४२॥

ग्रीवाञ्च न कम्पयेत् ॥१४३॥

एवं सर्व्वथा जपं नैव प्रकाशयेदित्यभिप्रेतं, तत्र हेतुमाह—यक्षेति ॥१४४॥

---

नग्न होकर मुक्तकेश होकर एवं गले में वस्त्रादि वेष्टन कर जप कार्य्य न करे । अपवित्र हस्त से, शौचादि विहीन होकर और वाक्यालाप करते करते कभी भी जप न करे ॥१३७॥

अनाच्छादित हस्त से, आच्छादित मस्तक होकर, चिन्ता व्याकुलचित्त से, क्रुद्ध, भ्रान्त एवं क्षुधान्वित होकर, आसन में उपवेशन करके, शयन करके, अथवा चलते चलते खड़े होकर, रथ्या (पथ) में एवं श्मशानादि अशुभ स्थान में वा अन्धकार प्रदेश में जप करना निषिद्ध है ॥१३८-१३९॥

पादुका धारणकर, यान में आरोहण करके अथवा शयन करके, पदद्वय प्रसारित करके, एवं उत्कट आसन में उपवेशन कर भी जप न करे ।॥१४०॥

याज्ञवल्क्य संहिता में उक्त है—इतस्ततः भ्रमण करते हुए, किंवा हँसते-हँसते पार्श्व भाग को देखते आसन को किञ्चित् आश्रयकर, बातचीत करते-करते एवं मस्तकावृत होकर जप करना निषिद्ध है ॥१४१

पदद्वय के द्वारा पद को, हस्तद्वय के द्वारा हस्त को आक्रमण करके चञ्चल मन से अथवा संशयापन्न होकर भी जप न करे। जप के समय मन मन में मन्त्र का ध्यान करना पड़ता है, जिह्वा एवं ओष्ठ चालन करके जप करना निषिद्ध है, मस्तक एवं ग्रीवा को कम्पित करके भी जप न करे। जप के समय दन्तसमूह को प्रकाश न करे । अर्थात् दाँतों का खिलाना भी जप के समय निषिद्ध है ।।१४२-१४३॥

प्रकाश्य भाव से जप करने से यक्ष, राक्षस, भूत, सिद्ध, एवं विद्याधरगण बलपूर्वक जप हरण करते हैं। सुतरां प्रकाश्य भाव से जप न करे । जप के समय स्त्री, शूद्र, पतित, गर्दभ, एवं रजस्वला के सहित सम्भाषण करना नहीं चाहिये । एवं व्रत-होमादि समय में भी उनसे बातचीत करना उचित नहीं है ॥१४४-१४५॥

त्रैलोक्यसम्मोहनतन्त्रे च—

न च्छायामाक्रमेद्विद्वान् विभीतक-करञ्जयोः।
न दद्यात् कस्यचित् किञ्चिन्न गृह्णीयाज्जपान्तरे ॥१४६॥

अथ दोषप्रायश्चित्तानि

तत्रैव—

तूष्णीमासीत संजल्पश्चाण्डालपतितादिकान्। दृष्ट्वा तान् वार्य्युपस्पृश्याभाष्य स्नात्वा पुनर्जपेत्।
आचम्य प्रयतो नित्यं जपेदशुचिदर्शने ॥१४७॥

किञ्च—

यदि वा यमलोपः स्याज्जपादिषु कथञ्चन। व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् ॥१४८

मन्त्रार्णवे—

पतितानामन्त्यजानां दर्शने भाषणे श्रुते। क्षुतेऽधोवायुगमने जृम्भणे जपमुत्सृजेत् ॥१४९॥
प्राप्तावाचम्य चैतेषां प्राणायामं षड़ङ्गकम्। कृत्वा सम्यग्जपेच्छेषं यद्वा सूर्य्यादिदर्शनम् ॥१५०

---

आभाष्य सम्भाष्य, अशुचीनां मलमूत्रादीनां दर्शने सति ॥१४७॥

यमः जपविषयकनियमस्तस्य लोपो भङ्गः, वाग्यमेति पाठे मौनलोपः, मन्त्रं नामात्मकं विष्णुमन्त्रान्तरं वा ॥१४८॥

भाषणे सम्भाषणे, श्रुते च श्रवणे सति, यद्वा, भाषणे च वचने श्रुते सति। अशुभ इति पाठे दर्शनादीनां सर्व्वेषामेव विशेषणम्, उत्सृजेदित्यत्र हेतुत्वेन ॥१४९॥

एतेषां पतितान्त्यजदर्शनादीनां प्राप्तौ सत्यां, प्राणायामं षड़ङ्गन्यासञ्च कृत्वा ॥१५०॥

---

त्रैलोक्य सम्मोहन तन्त्र में भी लिखित है—विज्ञ व्यक्ति जप के समय विभीतक (वहेड़ा) और करञ्ज (करञ्जुआ) वृक्ष की छाया को स्पर्श न करे। जप समय में किसी को कुछ दान न करे एवं किसी से भी कुछ ग्रहण न करे ॥१४६॥

अथ दोषप्रायश्चित्तानि

उक्त ग्रन्थ में वर्णित है—तूष्णीम्भूत भाव से (चुपचाप) उपवेशन करे, जप के समय चाण्डाल एवं पतित को देखकर आचमन करे, और उनसे बातचीत करने पर स्नान करके पुनर्बार जप करे। अशुचि अर्थात् मल-मूत्रादि दर्शन करने पर आचमन करके यत्नपूर्वक जप करना चाहिये ॥१४७॥

और भी लिखित है—जप काल में यदि किसी कारण जप विषयक नियम भङ्ग होता है तो विष्णु-नामात्मक मन्त्र का एवं अव्यय विष्णु का स्मरण करे ॥१४८॥

मन्त्रार्णव में लिखित है—पतित एवं अन्त्यजवृन्द को देखने वा उनसे बातचीत होने पर अथवा उनकी बात कान में प्रविष्ट होने पर, तथा हुचकी, अधोवायु त्याग और जँभाई आने पर जप परित्याग करना चाहिये ॥१४९॥

आचमन करके पतित एवं अन्त्यजवृन्द की दर्शन प्राप्ति होने से आचमन पूर्वक प्राणायाम एवं षड़ङ्ग-न्यास करके अथवा सूर्य्य दर्शन पूर्वक अवशिष्ट जप सम्पन्न करे ॥१५०॥

मार्ज्जारं कुक्कुटं क्रौञ्चं श्वानं शूद्रं खरं कपिम् ।
दृष्ट्वाचम्याचरेत् कर्म्म स्पृष्ट्वा स्नानं विधीयते ॥१५१॥

नारदपञ्चरात्रे च—

सकृदुच्चारिते शब्दे प्रणवं समुदीरयेत् । प्रोक्ते चाचम्य वाण्यापि प्राणायामं सकृच्चरेत् ॥१५२॥
बहुप्रलापे चाचम्य न्यस्याङ्गानि ततो जपेत् । क्षुतेऽप्येवं तथास्पृश्यस्थानानां स्पर्शने भवेत् ॥१५३॥

किञ्चान्यत्र—

जीर्णे सूत्रे पुनः सूत्रं ग्रथयित्वा शतं जपेत् । प्रमादात् पतिते हस्ताच्छतमष्टोत्तरं जपेत् ।
तावन्निसिद्धसंस्पर्शे क्षालयित्वा यथोदितम् ॥१५४॥

अथ जपभेदाः, तल्लक्षणादि च

नारसिंहे—

त्रिविधो जपयज्ञः स्यात्तस्य भेदान्निबोधत । वाचिकश्च उपांशुश्च मानसश्च त्रिधा मतः ॥१५५
त्रयाणां जपयज्ञानां श्रेयान् स्यादुत्तरोत्तरः ॥१५५॥

यदुच्चनीचस्वरितैः स्पष्टशब्दवदक्षरैः । मन्त्रमुच्चारयेद्व्यक्तं जपयज्ञः स वाचिकः ॥१५६॥
शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचालयेत् । किञ्चिच्छब्दं स्वयं विद्यादुपांशुः स जपः स्मृतः ॥१५७

---

कर्म्म जपलक्षणम् ॥१५१॥

तावदष्टोत्तरशतं यथोदितमिति पूर्व्वलिखितमन्त्र-पञ्चगव्यादिना प्रक्षाल्येत्यर्थः ॥१५४॥

उच्चनीचस्वरितैः उच्चेन नीचेन स्वरितेन वा उदात्तानुदात्तस्वरितसंज्ञैः स्वरैरित्यर्थः । स्वरेण युक्तैः स्पष्टशब्दवद्भिरक्षरैः, अतएव व्यक्तं मन्त्रमुच्चारयेदित्यन्वयः ॥१५६॥

स्वयमेव विद्याज्जानीयात् शृणुयादित्यर्थः ॥१५७॥

---

मार्जार, कुक्कुट, वक, कुक्कुर, शूद्र, गर्दभ, एवं वानर दर्शन होने पर आचमन करके स्पर्श होने से स्नान करके जप करना चाहिये ॥१५१॥

नारदपञ्चरात्र में कथित है—जप समय में एक बार मात्र शब्द उच्चारण होने से प्रणव का उच्चारण करे, वाक्योच्चारण करने एक बार प्राणायाम करना चाहिये, बहु वाक्यालाप करने पर आचमन एवं अङ्गन्यास करके जप करे। हुचकी अथवा शरीर के अस्पृश्य स्थान स्पर्श होने पर भी इसी प्रकार करके जप करना चाहिये ॥१५२-१५३॥

और भी अन्यत्र लिखित है—मालिका का सूत्र जीर्ण होने से पुनर्वार सूत्र ग्रन्थन करके शतवार जप करना कर्त्तव्य है। एवं अनवधानवशतः मालिका हस्त से पतित होने पर अष्टोत्तरशत जप करना कर्त्तव्य है। तथा पूर्ववत् निषिद्ध स्पर्श होने पर पूर्वोक्त मन्त्र एवं पञ्चगव्यादि द्वारा क्षालन करके अष्टोत्तरशत जप करना कर्त्तव्य है ॥१५४॥

अथ जपभेदाः, तल्लक्षणादि च

नृसिंहपुराण में लिखित है—जपयज्ञ तीन प्रकार हैं, उसका श्रवण करो, वाचिक, उपांशु एवं मानस, यह त्रिविध हैं। यह त्रिविध जपयज्ञ परस्पर उत्तरोत्तर श्रेष्ठ हैं। उच्च, नीच एवं स्वरित नामक स्वर के योग से सुपरिष्कृत वर्ण द्वारा स्पष्ट भाव से मन्त्र उच्चारित होने से उसको वाचिक जप कहा जाता है। जो मन्त्र जप में धीरे धीरे उच्चारित होता है, ओष्ठद्वय किञ्चिन्मात्र चालित होते हैं एवं केवल अपना

धिया यदक्षरश्रेण्या वर्णाद्वर्णं पदात् पदम्।
शब्दार्थचिन्तनाभ्यासः स उक्तो मानसो जपः ॥१५८॥

तत्र च याज्ञवल्क्यः—

उपांशुजपयुक्तस्य तस्माच्छतगुणो भवेत्।
सहस्रो मानसः प्रोक्तो यस्माद्ध्यानसमो हि सः ॥१५९॥

मन्त्रार्णवे—

पशुभावे स्थिता मन्त्राः केवलं वर्णरूपिणः।
सौषुम्णाध्वन्युच्चरिताः प्रभुत्वं प्राप्नुवन्ति हि ॥१६०॥
न दोषो मानसे जप्ये सर्व्वदेशेऽपि सर्व्वदा।
जपनिष्ठो द्विजश्रेष्ठाः सर्व्वयज्ञफलं लभेत् ॥१६१॥

अशुचिर्वा शुचिर्वापि गच्छंस्तिष्ठन् स्वपन्नपि।मन्त्रैकशरणो विद्वान् मनसैव सदाभ्यसेत् ॥१६२

किञ्चान्यत्र—

मानसः सिद्धिकामैस्तु पुष्टिकामैरुपांशुकः। वाचिको मारणोच्चाटे प्रशस्तो जप ईरितः ॥१६३

---

वर्णादेकस्मात् क्रमेणान्यत्वर्गं व्याप्य,एवं पदात् पदं व्याप्य, इत्थं शब्दस्य अर्थस्य च यच्चिन्तनमनुसन्धानं तस्य अभ्यासः पुनःपुनरावृत्तिः ॥१५८॥

उपांशुजपयुक्तस्य जपः शतगुणः स्याद्वाचिकाज्जपाच्छतगुणो भवेदित्यर्थः ॥१५९॥

सौषुम्णे सुषुम्णाख्य-नाड़ी-सम्बन्धिनि अध्वनि च्छिद्रमार्गे उच्चारिताः सन्तः, प्रभुत्वं सामर्थ्यम् ॥१६०॥

अतएव मानसो जपः परमोत्तम इत्याह– न दोष इति। द्विजश्रेष्ठा इति तत्रत्यविप्राणां सम्बोधनम्। द्विजश्रेष्ठ इत्येकवचनान्तपाठोऽपिक्वचित् ॥१६१॥

मन्त्रैकशरण इत्यनेन पुरश्चरणादिपरस्तु यथोक्त देशकालादावेवाभ्यसेदित्यभिप्रेतम् ॥१६२॥

---

कर्णगोचर होता है, इस प्रकार ईषन्मात्र शब्द उच्चारित होता है, उसको उपांशु जप कहते हैं। निज बुद्धि योग से एक वर्ण से अन्य वर्ण के एक पद से अन्य पद एवं अर्थ का जो चिन्तन है, उसकी पुनः पुनः आवृत्ति करने को मानस जप कहते हैं ॥१५५-१५८॥

उस विषय में याज्ञवल्क्य ने कहा है—वाचिक जप की अपेक्षा उपांशु जप शतगुण एवं मानस जप सहस्रगुण अधिक है। कारण, मानस जप ध्यान के सदृश है ॥१५९॥

मन्त्रार्णव में लिखित है—केवलमात्र वर्णरूपी मन्त्र पशुभाव में स्थित है। किन्तु यदि वह सुषुम्णानाड़ी के रन्ध्रपथ में उच्चारित होता है, तो उससे शक्ति लाभ होती है। हे द्विजश्रेष्ठगण! सर्वत्र सर्वदा ही मानस जप कर सकते हैं। इसमें दोष नहीं है। सुतरां जपनिष्ठ व्यक्ति को सर्व यज्ञ फल लाभ होता है। ॥१६०-१६१॥

पवित्र किंवा अपवित्र अवस्था में हो, अथवा गमन करते करते हो, स्थितावस्था में हो, अथवा शयन अवस्था में हो, एकमात्र मन्त्र का आश्रय ग्रहण पूर्वक सर्वदा मन मन में मन्त्र की आवृत्ति करना विज्ञ व्यक्ति का कर्त्तव्य है ॥१६२॥

और भी अन्यत्र लिखित है—सिद्धिकामी के पक्ष में मानस एवं पुष्टिकामी के पक्ष में उपांशु, मारणोच्चाटन पक्ष में वाचिक जप ही प्रशस्त है ॥१६३॥

अथ जपमाहात्म्यम्

याज्ञवल्क्यसंहितायाम्—

पाकयज्ञाश्च चत्वारो विधियज्ञसमन्विताः । सर्व्वे ते जपयज्ञस्य कलां नार्हन्ति षोड़शीम् ॥१६४

पद्मनाभीये—

यावन्तः कर्म्मयज्ञाश्च प्रदीप्तानि तपांसि च । सर्व्वे ते जपयज्ञस्य कलां नार्हन्ति षोड़शीम् ॥१६५

जपेन देवता नित्यं स्तूयमाना प्रसीदति । प्रसन्ना विपुलान् भोगान् दद्यान्मुक्तिञ्च शाश्वतीम्। १६६

तत्र जपप्रकारविशेषेण फलविशेषाः

त्रैलोक्यसम्मोहनतन्त्रे श्रीमहादेवोमासंवादे—

अथेदानीं प्रवक्ष्यामि मन्त्रजप्यविधिं प्रिये । केवलं जपमात्रेण यस्य सिद्ध्यन्ति सिद्धयः ॥१६७॥

श्रीवीजपुटितं मन्त्रं यदि जप्येत मन्त्रवित् । कमला तद्वशे तिष्ठेद्यथा कृष्णे रमेत सा ॥१६८॥

कामेन पुटितं मन्त्रं प्रजपेद्यदि भामिनि । मोहयत्येव सकलं जगदेव न संशयः ॥१६९॥

मायावीजेन पुटितं यदि जप्येन्महामनुम् । अष्टैश्वर्य्याणि सम्भूय तस्य पादे गतानि वै ॥१७०

वाग्भवेनापि पुटितं यदि जप्येत्स माहितः । वेदवेदाङ्गपारज्ञः सर्व्वज्ञो भवति ध्रुवम् ॥१७१॥

---

पाकयज्ञा ब्रह्मयज्ञव्यतिरिक्ता देवयज्ञादयः, विधियज्ञा ज्योतिष्टोमादयः ॥१६४॥
शाश्वतीं मुक्तिं, श्रीवैकुण्ठलोकप्राप्तिलक्षणाम् ॥१६६॥
केवलं पूजादिकं विनापीत्यर्थः ॥१६७॥
कमला—सर्व्वसम्पत्तिरित्यर्थः ॥१६८॥
कामेन – तद्वीजेन ॥१६९॥
वाग्भवेन—सरस्वतीवीजेन ॥१७१॥

---

अथ जपमाहात्म्यम्

याज्ञवल्क्य संहिता में लिखित है—पाकयज्ञ (ब्रह्मयज्ञ व्यतीत देवयज्ञादि चतुष्टय) विधियज्ञ अर्थात् ज्योतिष्टोमादि समन्वित होने से यह समस्त यज्ञ, जपयज्ञ के षोड़श भाग के एक भाग के तुल्य नहीं हो सकते हैं ॥१६४॥

पद्मनाभीय ग्रन्थ में उक्त है—यावतीय कर्म, यज्ञ, कठोर तपस्या भी जप यज्ञ के षोड़श भाग के एक भाग के तुल्य नहीं होते हैं। यदि प्रत्यह जप किया जाय तो देवता प्रसन्न होते हैं। देवता सन्तुष्ट होने से ही विपुल योग एवं नित्य मोक्ष लाभ हो सकता है ॥१६५-१६६॥

तत्र जपप्रकारविशेषेण फलविशेषाः

त्रैलोक्य सम्मोहन तन्त्र के श्रीमहादेवोमा संवाद में लिखित है—हे प्रिये उमे ! पूजादि व्यतीत केवल मात्र जप द्वारा जो सिद्ध होता है, अधुना उस मन्त्र जप का विधान वर्णन कर रहा हूँ। श्रीवीज पुत्रित मन्त्र जप करने से कमला जिस प्रकार श्रीहरि में अनुरक्ता होती है, तद्रूप मन्त्रविद् के प्रति भी प्रसन्न होती है। ॥१६७-१६८॥

हे भामिनि ! कामवीज (क्लीं) द्वारा पुटित करके जप करने से जगत् को विमुग्ध किया जा सकता है। इसमें सन्देह नहीं है। एवं मायावीज (ह्रीं) द्वारा पुटित करके जप करने से अणिमादि अष्ट ऐश्वर्य्य साधक के अधीनस्थ होते हैं ॥१६९-१७०॥

समाहित भाव से वाग्भव वीज (सरस्वती वीज) द्वारा पुटित करके जप करने से निश्चय ही वेदवेदाङ्ग पारदर्शी एवं सर्वज्ञ हो सकता है ॥१७१॥

ध्रुवेण पुटितं मन्त्रं यदि जप्येन्महेश्वरि । वीजं कूटश्च विच्छिद्य मुक्तिभागी भवेन्नरः ।।१७२
इदानीं शृणु देवि त्वं केवलस्य मनोर्विधिम् । दशकृत्वो जपेन्मन्त्रमापत्कल्पेन मुच्यते ।।१७३
विंशत्या जपमात्रेण रक्षयेन्मन्त्र एव हि । शतजप्तेन मन्त्रेण दिनपापैः प्रमुच्यते ।।१७४।।
सहस्रजप्तेन तथा मुच्यते महतैनसा । अयुतस्य जपेनैव महापातकनाशनम् ।।१७५।।
अथ लक्षजपान्मन्त्री देववन्मोदते दिवि । कोटिजप्तेन मन्त्रेण मुक्तिभागी भवेन्नरः ।।१७६।।
अहर्निशं जपेद्यस्तु मन्त्री नियतमानसः । स पश्यति न सन्देहो गोपवेशधरं हरिम् ।।१७७।।
अथवा यानि मन्त्रस्य पदानि कथितानि ते । तेषामन्यतमं जप्याद्यत्र वै रोचते मनः ।।१७८।।
वीजं जप्त्वा विशालाक्षि भौमैश्वर्य्येण युज्यते । द्वितीयेन सुखास्वादं कुरुते मन्त्रिसत्तमः ।।१७९
ज्ञानवान् स्यात् तृतीयेन तुरीयेण जगद्गुरुः । भवेत् पञ्चमजप्येन मुक्तिभागी न संशयः ।।१८०।।
अज्ञानी च जपेद्वापि निजरुच्यनुसारतः । प्रथमं ज्ञानसिद्धिन्तु द्वितीयं त्वणिमादिकम् ।।१८१
तृतीयं सर्व्वसौख्यञ्च चतुर्थं देवतात्मताम् । पञ्चमं वैष्णवं लोकं षष्ठं मुक्तिं प्रयच्छति ।।१८२।।

---

ध्रुवेण प्रणवेन, वीजरूपं कूटरूपञ्च कर्म्म विच्छिद्य निरस्य ।।१७२।।

आपत्कल्पेन—सर्व्वोपद्रवेण ।।१७३।।

विंशत्या विंशतिवारानित्यर्थः । मन्त्र एव रक्षयेदिति द्वारपाल-यामिकादिव्यतिरेकेणापि तस्य सर्व्वत्र दुष्टादिभ्यो रक्षा स्यादित्यर्थः ।।१७४।।

तेषां मध्ये यत्र यस्मिन् पदे मनो रोचते, तदन्यतममेकं पदं जपेत् ।।१७८।।

सुखास्वादं—स्वर्गभोगम् ।।१७९।।

तुरीयेण—चतुर्थेन, जगद्गुरुः—सर्व्वशास्त्रार्थतत्त्वोपदेष्टा ।।१८०।।

प्रथमं ज्ञानसिद्धिं प्रयच्छतीत्युत्तरेणान्वयः । एवमग्रेऽपि ।।१८१।।

देवतात्मतां श्रीकृष्णसारूप्यं तदेकचित्ततां वा ।।१८२।।

---

हे महेश्वरि ! वीज एवं कूटरूप कर्म विदारक पूर्वक ओङ्कार पुटित मन्त्र जप करके मानव निश्चय ही मुक्तिभागी होता है ।।१७२।।

हे देवि ! अधुना केवल मन्त्र का विधान श्रवण करो । दश बार मन्त्र जप करने से समस्त उपद्रव विनष्ट होते हैं । विंशतिवार जप करने से मन्त्र, जपकारी की रक्षा करता है । शतधा जप के द्वारा दैनिक पाप विनष्ट होता है । सहस्र जप के द्वारा महापाप एवं अयुत जप द्वारा महापातक ध्वंस होता है । लक्ष जप द्वारा सुरपुर में देववत् आनन्द लाभ होता है । एवं कोटि जप द्वारा मोक्ष लाभ होता है । जो चित्त-संयम करके दिवारात्र मन्त्र जप करते हैं, अर्थात् एकाग्र चित्त से दिन रात मन्त्र जप करते हैं, वे निःसन्देह गोपवेश धर श्रीकृष्ण का साक्षात् प्राप्त होते हैं ।।१७३-१७७।।

हे देवि ! तुम्हारे समीप जिन सब मन्त्रों के पदों का वर्णन किया है, उनमें जिसका जो अभिलाष है, उसी के एक पद का जप कर सकता है । हे विशालाक्षि ! वीज जप के द्वारा पार्थिव वैभव लाभ होता है । मन्त्रिश्रेष्ठ साधक द्वितीय रूप में पुटित मन्त्र का जप करने से स्वर्ग लाभ कर सकता है । उस प्रकार तृतीय जप के द्वारा ज्ञानी, चतुर्थ जप के प्रभाव से जगद्गुरु एवं पञ्चम जप के द्वारा मुक्तिभागी हो सकता है, इसमें सन्देह नहीं है ।।१७८-१८०।।

अज्ञानी व्यक्ति, निज इच्छानुसार जप करे तो प्रथम जप में ज्ञानसिद्धि होती है । द्वितीय जप में अणि-

अथ जपविधिः

गुरुं सम्पूज्य विप्रांश्च सन्तर्प्यान्नरसादिभिः । मारभेत जपं काले मङ्गलेऽनुज्ञया गुरोः ॥१८३॥

प्रातः स्नानादिकं कृत्वा दत्त्वा चार्घ्यं विवस्वते । आचम्य जपसङ्कल्पं विदधीत यथाविधि ॥१८४

विधाय विधिना पूर्व्वं लिखितेनार्च्चनं प्रभोः ।
आत्मार्पणान्तं शक्त्याथ जपं पूजाङ्गमाचरेत् ॥१८५॥
समर्प्य तञ्च दत्त्वार्घ्यं कृत्वा पुष्पाञ्जलिं पुनः ।
स्तुत्वा कृष्णं प्रणम्याथ प्राशनायाच्चरणामृतम् ॥१८६॥

क्षमस्वेति वदन् प्रार्थ्य चेदुद्वास्यं हृदम्बुजे । उद्वास्य विधिवन्मानसोपचारैर्यजेत् पुनः ॥१८७॥

कृष्णे समर्प्य चात्मानमृष्यादिन्यासपूर्व्वकम् । निजं मन्त्रं जपेद्भक्त्या सम्प्रदायानुसारतः ॥१८८

पुरश्चरणकर्म्मारम्भे प्रथमं श्रीगुरुपूजां ब्राह्मणभोजनादिकञ्च लिखति—गुरुमिति । मङ्गले शुभे काले गुरोरनुज्ञया जपमारभेत । तथा चोक्तम्—'विप्रान् सन्तर्पयेदन्नभोजनाच्छादनादिभिः । बहुभिर्वस्त्रभूषाभिः सम्पूज्य गुरुमात्मनः । आरभेत जपं पश्चात्तदनुज्ञापुरःसरम् ॥' इति ॥१८३॥

तत्र नित्यकृत्यं लिखति—प्रातरिति पञ्चभिः । यथाविधीत्यस्य पूर्व्वेणापि सर्व्वेण सम्बन्धः । तत्र सङ्कल्पविधिश्चायम्—'अद्याष्टदशाक्षर-संमोहनमन्त्रस्य सिद्धिकाम इयत्संख्यजप-तद्दशांशामुक-द्रव्यक-होम-तद्दशांशमुक-तर्पण-तद्दशांशाभिषेक-तद्दशांशब्राह्मणभोजनात्मक पुरश्चरणं करिष्ये ।' इति ॥१८४॥

पूर्व्वं नित्यकृत्यलिखने लिखितेन विधिना प्रभोः श्रीकृष्णदेवस्यार्च्चनमात्मार्पणान्तं विधाय पूजाया अङ्गभूतं जपमाचरेत्, स्वमन्त्रं जपेत्, शक्त्या यथाशक्तीत्यर्थः; ततश्च शक्तौ सत्यामष्टोत्तरसहस्रमन्यथाष्टोत्तरशतम्; तथा शक्तौ सप्तावरणसहितस्य, अन्यथावरणसहितस्य केवलस्य ध्यानमात्रेण वेत्यादिकमूह्यम् । एतच्चाग्रे स्पष्टं भावि ॥१८५॥

तञ्च—जपम् ॥१८६॥

उद्वास्यमुद्वासनयोग्यं चेद्यदि स्यात्तदा क्षमस्वेति वदन्, प्रार्थ्य 'स्वस्थानमलङ्कुरु' इत्यभ्यर्थ्य हृदम्बुजे उद्वास्यम्; विधिवदित्यस्य पूर्व्वेण परेणापि सम्बन्धः । तत्रोद्वासनविधिश्चायम्—उद्वासनमुद्रयोद्वास्य दक्षिणनासापुटकण्ठमार्गेण हृत्कमले निधायाङ्कुशमुद्रया निरोधयेदित्यादिक मानसोपचारपूजाविधिश्च पूर्व्वं संक्षेपेण लिखित एवास्ति । स च यथाशक्ति स्वरुच्यनुसारेणैव सर्व्वत्र ज्ञेयः । पुनरिति—पुरश्चरणार्थं पुनःपूजनं ज्ञेयम् । शक्तौ सत्यां किञ्चिद्बहिः पूजनमपि केचिदिच्छन्ति ॥१८७॥

कृष्णे चात्मानं समर्प्येति दानविशेषो दर्शितः । सम्प्रदायानुसारत इति—जपसंख्यानियमादिभेदेन बहुविधः पुरश्चरणविधिः स्यात्तत्र यथास्वगुरुसम्प्रदायमेव मन्त्रं जपेदित्यर्थः ॥१८८॥

मादि सिद्धि, तृतीय जप में सर्वसौख्य, चतुर्थ जप में देवसारूप्य, पञ्चम जप में श्रीहरिधाम एवं षष्ठ जप द्वारा मुक्ति प्राप्त की जाती है ॥१८१ १८२॥

अथ जपविधिः

श्रीगुरुदेव की पूजा करने के पश्चात् अन्नरसादि द्वारा विप्रवृन्द को तृप्त करके श्रीगुरुदेव की अनुमति के अनुसार शुभ समय में जप करना चाहिये ॥१८३॥

प्रातः स्नानादि समापन करके सूर्य्यार्घ्य प्रदान कर आचमन पूर्वक यथ रीति जप का सङ्कल्प करना चाहिये । पूर्वोक्त विधान से आत्मार्पण पर्य्यन्त श्रीहरि की पूजा करके यथाशक्ति पूजाङ्ग स्वरूप नियम मन्त्र जप करे । उस जप को श्रीकृष्णार्पण पूर्वक अर्घ्य प्रदान कर पुनर्वार पुष्पाञ्जलि प्रदान करे । श्रीहरि-स्तुति

अग्निपुराणे—

दर्भहस्तस्तथासीनो दर्भेषूदकपाणिना । प्राङ्मुखोद्वर्त्तयेन्मालां सहस्रं शतमेव वा ॥१८९॥

मन्त्रदेवप्रकाशिन्याम्—

सूर्य्यस्याग्रे गुरोरिन्दोर्दीपस्य च जलस्य च । विप्राणाञ्च गवाञ्चैव सन्निधौ सन्मुखे जपेत् ॥१९०

नारदपञ्चरात्रे च—

शनैः शनैः सुविस्पष्टं न द्रुतं न विलम्बितम् । न न्यूनं नाधिकं वापि जपं कुर्य्याद्दिने दिने ॥१९१

किञ्च —

सम्पूज्याथ जपं कुर्य्याद्यावद्वै प्रहरद्वयम् । तदूर्द्ध्वं पूर्व्ववत् स्नात्वा विशेषेण विधानवित् ॥१९२
न्यासावसानमखिलं सर्व्वं कुर्य्यात् पुरोदितम् । पूजाग्निहोमपर्य्यन्तं ततश्च जपमाचरेत् ॥१९३
यावद्दिनावसानन्तु भूयः स्नायात्ततो द्विज । उपास्य विधिवत् सन्ध्यां देवेशं पूजयेत् पुनः ॥१९४
विसर्ज्ज्य भोजनं कुर्य्यात् सततं तारकोदये । भुक्त्वा शयीत शयने मृत्स्निग्धे वाथ भूतले ॥१९५
अर्द्धरात्रे समुत्थाय पादशौचं चरेद्द्विज । आचम्य देवं संस्मृत्य शीघ्रं सम्पूज्य पूर्व्ववत् ।
जपं कुर्य्याद्यथाशक्ति अर्पयेच्च तथेश्वरे ॥१९६॥

---

दर्भेषु आसीनः प्राङ्मुखः सन्, उदकयुक्तपाणिना मालामुद्वर्त्तयेत् परिवर्त्तयेत् । विसर्गलोपेऽपि सन्धिरार्षः सहस्रं वारान्, अशक्तौ च शतं वा, एतच्च पूजाङ्गनित्यजपाभिप्रायेणोक्तम् । दर्भहस्तत्वादिकञ्च समानमेवेत्यत्र लिखितम् ॥१८९॥

अथ—स्नानानन्तरम् ॥१९२॥ विसर्ज्ज्य देवम् ॥१९५॥

प्रातःकालमारभ्य मध्याह्नपर्य्यन्तं जपं कुर्य्यादित्यत्रोक्तं, नारदपञ्चरात्रे च श्रीभगवतोक्तम्—'मध्याह्नात् परतो न हि' इत्यादिभेदो मन्त्रभेदेन शक्त्यादिभेदेन वा द्रष्टव्यः ॥१९६॥

---

एवं प्रणाम पूर्वक चरणामृत पान करे । उद्वासन (विसर्जन) योग्य होने से 'क्षमस्व' वाक्य से प्रार्थनापूर्वक हृत्कमल में उद्वासन करके पुनर्वार यथाविधि मानसोपचार से पूजा करे । ऋष्यादि न्यास करके श्रीहरि को आत्मसमर्पण पूर्वक सम्प्रदायानुसार भक्ति पूर्वक स्वीय मन्त्र जप करे ॥ ८४-१८८॥

अग्निपुराण में लिखित है—कुशासन पर पूर्वाभिमुख में उपवेशन कर, हस्त में जलग्रहणपूर्वक सहस्रधा वा अशक्त पक्ष में शतधा मालिका परिवर्त्तन करना चाहिये । अर्थात् माला फेरना चाहिये ॥१८९॥

मन्त्रदेव प्रकाशिनी में उक्त है— सूर्य्य, गुरुदेव, चन्द्र, दीप जल, विप्र, गो—इनके निकट वा सम्मुख ही जप करना चाहिये ॥१९०॥

नारदपञ्चरात्र में लिखित है—शनैः शनैः उत्तम रूप से स्पष्ट भाव से प्रत्यह जप करे । किन्तु द्रुत वा विलम्बित भाव से किंवा न्यून वा अधिक करके जप न करे ॥१९१॥

और भी लिखित है—पूजन के पश्चात् द्वि प्रहर काल पर्य्यन्त जप करना चाहिये । यदि उसके बाद भी जप करना आवश्यक हो तो, विधानविद् व्यक्ति पूर्ववत् स्नान के पश्चात् न्यास, पूजा, होम, प्रभृति समस्त कार्य्य सम्पन्न करके जप में प्रवृत्त होना चाहिये । हे द्विज ! जब तक दिन शेष न हो, तब तक ही जप करे, दिन के शेष में यथाविधि आराधना पूर्वक पुनर्वार देवदेव की पूजा करे । अनन्तर विसर्जन करके नक्षत्रोदय होने पर भोजन करे । अनन्तर भूमिशय्या में शयन करे । अर्द्धरात्र में उठकर पादशौच एवं आचमन करके प्रभु का स्मरण कर आशु पूर्ववत् पूजा करे । तत्पश्चात् शक्त्यनुसार जप करके श्रीभगवान् को जप समर्पण करना चाहिये ॥१९२-१९६॥

अन्यत्र च—

नैरन्तर्य्यविधिः प्रोक्तस्तद्दिनं नातिलङ्घयेत्। दिवसातिक्रमात्तेषां सिद्धिरोधः प्रजायते ॥१९७॥

किञ्च—

अनन्यमानसः प्रातःकालान्मध्यन्दिनावधि ॥१९८॥ इति।

अतः कुर्य्याज्जपं नित्यं शक्त्या नियतसंख्यया।

सख्यापूर्त्तौ च कुर्व्वीत प्राणायामं पुनः कृती ॥१९९॥

अथ होमनियमः

नारदपञ्चरात्रे—

जपस्य तु दशांशेन होमः कार्य्यो दिने दिने।

अथवा लक्षपर्य्यन्तं होमः कार्य्यो विपश्चिता ॥२००॥ इति।

होमे च कुण्डनिर्म्माणादिकस्य लिखितो विधिः।

पूर्व्वं दीक्षाविधावत्र विशेषः कोऽपि लिख्यते ॥२०१॥

कुर्य्याद्रक्ताम्बुजैर्होमं गुड़ाज्यमधुसंप्लुतैः। तदलाभे पायसेन सितासर्पिर्युतेन हि ॥२०२॥

होमाशक्तौ जपं होमसंख्यायास्तु चतुर्गुणम्। षड्गुणं चाष्टगुणितं क्रमात् कुर्य्युर्द्विजास्त्रयः ॥२०३

---

शक्त्या यथाशक्ति, या नियता नित्यनियमिता जपसंख्या, तयैव नित्यं जपं कुर्य्यात्, 'न न्यूनं नाधिकं वापि जपं कुर्य्याद्दिने दिने' इत्याद्युक्तेः। संख्यायास्तस्याः पूर्त्तौ च समाप्तौ सत्याम् ॥१९९॥

लक्षसंख्यायां पूर्णायामेकैकलक्षजपे सम्पूर्णे सति, एतच्च फलविशेषार्थ-लक्षचतुष्टयादिजपाभिप्रायेण ॥२००

पूर्व्वं दीक्षाविधौ लिखितः; अत्र च पुरश्चरणविधौ कोऽपि विशेषो लिख्यते ॥२०१॥

तदेव लिखति—कुर्य्यादिति; तदलाभे रक्ताम्बुजाद्यप्राप्तौ सत्याम् ॥२०२॥

मुख्यकल्पाशक्तौ गौणकल्पं लिखति—होमाशक्ताविति। त्रयो द्विजा विप्र-क्षत्रिय-वैश्याः। क्रमात् होम-संख्यायाः—होमस्य यावती संख्या लिखिता जपदशमांशरूपा, तस्याश्चतुर्गुणं जपं विप्रः, षड्गुणं क्षत्रियः, अष्टगुणं वैश्यः कुर्य्यादित्यर्थः। तथा चोक्तम्—'होमाशक्तौ जपं कुर्य्यात् होमसंख्याचतुर्गुणम्। षड्गुणश्चाष्ट-गुणितं यथासंख्यं द्विजातयः॥' इति ॥२०३॥

---

अन्यत्र भी उक्त है—नैरन्तर्य्य विधि का वर्णन इस रीति से हुआ है कि प्रत्यह जप करे, दिवस अतिक्रम न करे, दिवस अतिक्रम करने पर सिद्धि हानि होती है ॥१९७॥

और भी लिखा है—अनन्यचित्त होकर प्रभातकाल से आरम्भ कर मध्याह्नकाल यावत् जप करना चाहिये। पश्चात् प्रत्यह शक्त्यनुसार समसंख्या से जप करना चाहिये। जप सख्या पूर्ण होने से पुनर्बार प्राणायाम करना कृती व्यक्ति के पक्ष में उचित है ॥१९८-१९९॥

अथ होमनियमः

नारदपञ्चरात्र में लिखित है—प्रत्यह जप का दशांश होम करना पड़ता है, किंवा लक्ष जप शेष होने पर तद्दशांश होम करना ही विचक्षण व्यक्ति का कर्त्तव्य है ॥२००॥

इसके पहले दीक्षापद्धति में होमकुण्ड निर्म्माण प्रणाली कही गई है। यहाँ उसी की किसी विशेष विधि का वर्णन किया जाता है। गुड़, घृत एवं मधु मिश्रित लोहित पद्म के द्वारा ही होम करना चाहिये। रक्त-पद्मादि का अभाव होने पर शर्करा घृत मिश्रित पायसान्न द्वारा होम करना कर्त्तव्य है। होम करने में

केचिच्चाहु—

**होमकर्म्मण्यशक्तानां विप्राणां द्विगुणो जपः । इतरेषान्तु वर्णानां त्रिगुणादिर्विधीयते ॥२०४॥**

अथ जपसंख्यानियमः

**सहोमस्तु त्रिवर्णानां तुल्य एव जपः स्मृतः । जपो यो होमरहितस्तेषां तद्योषितां हि सः ॥२०५**
**स्वामिस्त्रिया जपो यश्च शूद्रस्य विहितः स हि । एवमष्टादशार्णस्तु मन्त्रो जप्योऽयुतद्वयम् ॥२०६**

---

इतरेषां क्षत्रिय-वैश्य-शूद्राणां त्रिगुणादिः; क्षत्रियस्य त्रिगुणः, वैश्यस्य चतुर्गुणः, शूद्रस्य पञ्चगुण इत्यर्थः । ॥२०४॥

एवं होमासमर्थस्य वर्णत्रयस्य होमपरिवर्त्तकृत्यं जपभेदं लिखित्वेदानीं होमसमर्थस्य तत्त्रयस्य जपः समान एवेति जपनियमं लिखति—सहोमश्चेति । त्रिवर्णानां—विप्र-क्षत्रिय-वैश्यानां, तत्स्त्रीणाञ्च जपनियमं लिखति—जप इति, तेषां त्रिवर्णानां होमरहितो यो जपश्चतुर्गुणादिरूपः सः, तद्योषितामपि । विप्रस्त्रीणां विप्रतश्चतुर्गुणो जपस्तथा क्षत्रियस्त्रीणां षड्गुणो, वैश्यस्त्रीणाञ्चाष्टगुण इति । तथा च क्रमदीपिकायाम्—'अशक्तानां होमे निगमरसनागेन्द्रगुणितो, जपः कार्य्यो वेति द्विजनृपविशामाहुरपरे । सहोमश्चेदेषां सम इह जपो होमरहितो, य उक्तो वर्णानां स खलु विहितस्तद्दलदृशाम् ॥' इति । अन्यार्थः— होमे असमर्थानां विप्र-क्षत्रियवैश्यानां यथासंख्यं निगमावेदाश्चत्वारः, रसाः षट् नागेन्द्रा अष्टौ, एतैर्गुणितो जपः कार्य्यः । त्वर्थे वा-शब्दः । अपर इति—'होमकर्म्मण्यसुगममेवेति॥२०५॥

शूद्रस्य जपनियमं लिखति—स्वामीति, स्वामी भर्त्ता गुरुर्वा, तस्य स्त्रिया यं जपः, स एव शूद्रस्य विहित आचार्य्यैः । तथा च क्रमदीपिकायाम्—'यं वर्णमाश्रितो यः शूद्रं स च तद्वर्णविहितम् । विदधीत जप विधिवत्-श्रद्धावान् भक्तिपरो नम्रतनुः ॥' इति । एवं वर्णादिभेदेन जपसंख्याभेदं लिखित्वेदानीं पौरश्चरणिकमूलमन्त्र-जपनियमं लिखति—एवमिति । लिखितसंख्याभेदेन—अयुतद्वयं विंशतिसहस्राणि । तथा च क्रमदीपिकायाम्—'प्रजपेदयुतचतुष्कं दशाक्षरं मनुवरं क्रमशः । अष्टादशाक्षरञ्चेदयुतद्वयमित्युदीरिता संख्या ॥' इति । अत्र च क्रमश इति यवोक्तेष्वद्रिश्रृङ्गाद्यष्टस्थानेषु क्रमाज्जपेदित्यर्थः । तत्र च प्रतिस्थानमयुतद्वयं जपेदिति न मन्तव्यं, किन्तु तत्र तत्राद्रिश्रृङ्गादिक्रमेण तथा जप्तव्यं, यथा सर्व्वत्र कृतेन तज्जपेनायुतद्वयसंख्या स्यात्, अन्यथाऽष्टस्थानेषु प्रत्येकमयुतद्वयजपेन षोड़शायुतजपः स्यात्, स च सारदादि-मूलग्रन्थोक्तेन विरुध्यत इति दिक् ॥२०६॥

---

**अक्षम होने पर क्रमानुसार द्विज के पक्ष में अर्थात् ब्राह्मण के पक्ष में होम के चतुर्गुण, क्षत्रिय के पक्ष में षड्गुण, एवं वैश्य के पक्ष में अष्टगुण जप करने की विधि है ॥२०१-२०३॥**

कतिपय व्यक्ति कहते हैं—होमकार्य्य में असमर्थ होने पर विप्रगण, द्विजगण जप, एवं तदन्य व्यक्तिगण त्रिगुणादि जप करें । अर्थात् क्षत्रिय के त्रिगुण, वैश्य के चतुर्गुण, और शूद्र के पक्ष में पञ्चगुण जप करना चाहिये ॥२०४॥

अथ जपसंख्यानियमः

होम करने में सक्षम होने पर त्रिवर्ण अर्थात् ब्राह्मण, क्षत्रिय एवं वैश्य के पक्ष में समान जप करने का विधान है । अर्थात् होम करने पर सभी समान जप करें, सबके स्त्रीगण के पक्ष में यही विधि है । और यह त्रिवर्ण होम करने में अक्षम होने पर पूर्वोक्त रीति से त्रिवर्ण के पक्ष में जो विधि विहित है, उस प्रकार जप करना चाहिये । उसी प्रकार उनकी पत्नियों के पक्ष में भी जानना होगा, अर्थात् ब्राह्मण स्त्री के पक्ष में चतुर्गुण, क्षत्रिय स्त्री के पक्ष में षड्गुण एवं वैश्य स्त्री के पक्ष में अष्टगुण जप विहित है ॥२०५॥

शूद्र के पक्ष में जप विधि इस प्रकार है—स्वामी प्रभु वा गुरु, उनकी स्त्री के पक्ष में जो जप विहित है शूद्र भी तदनुरूप संख्या का जप करे । अर्थात् स्वामी ब्राह्मण, क्षत्रिय, वा वैश्य होने पर तज्जातीय स्वामी

तथा च सारदायाम् —

मन्त्रमेनं यथान्यायमयुतद्वितयं पठेत् । जुहुयादरुणाम्भोजैस्तद्दशांशं समाहितः ॥२०७॥

प्रपञ्चसारेऽपि—

जपः स्यादसमर्थस्य अयुतद्वितयावधिः ॥२०८॥ इति ।

श्रीमत्सनत्कुमारादिप्रोक्तस्य त्वनुसारतः । मन्त्रं फलविशेषाय जपेल्लक्षचतुष्टयम् ॥२०९॥

तथा च सनत्कुमारकल्पे—

उक्तं लक्षं कृतयुगे त्रेतायां तु द्वयं स्मृतम् । लक्षत्रयं द्वापरे च चतुर्लक्षं कलौ युगे ॥२१०॥

त्रैलोक्यसम्मोहनतन्त्रे च—

वेदलक्षं जपेन्मनुम् ॥२११॥ इति ।

अतएवोक्तम्—

यस्मिंश्च निगदेनैव जपसंख्या विधीयते । तत्र सर्व्वत्र मन्त्राणां संख्यावृद्धिर्युगक्रमात् ॥२१२॥

कल्पोक्तैव कृते संख्या त्रेतायां द्विगुणा स्मृता ।
द्वापरे त्रिगुणा ज्ञेया कलौ संख्या चतुर्गुणा ॥२१३॥ इति ।

---

अतएव सारदायुक्तं लिखति—मन्त्रमिति सार्द्धेन ॥२०७॥

एवं महामन्त्रवरस्यास्यायुतद्वयेनैव पुरश्चरणसिद्धिर्भवेदेव, तथापि फलविशेषार्थमधिकाधिकमपि जपेदिति लिखति—श्रीमदित्यादिना पञ्चकमित्यन्तेन । मन्त्रमष्टादशाक्षरम् ॥२०९॥

निगदेन—साक्षादुक्त्या, एतच्च सर्व्वयुगे क्रमेणैव ज्ञेयम् ॥११२॥

---

के पक्ष में विहित जपसंख्या के अनुरूप जपसंख्या शूद्र के पक्ष में विहित है । इस प्रकार अष्टादशाक्षर मन्त्र का जप विंशति सहस्र करना विहित है । अर्थात् अष्टादशाक्षर मन्त्र का जप बीस हजार करना चाहिये । ॥२०६॥

सारदा में उक्त है—यह मन्त्र अर्थात् अष्टादशाक्षर मन्त्र यथारीति अयुत द्वय जप करना चाहिये एवं एकाग्र मन से तद्दशांश रक्तपद्म के द्वारा होम करे ॥२०७॥

प्रपञ्चसार में भी लिखित है—असमर्थ के पक्ष में अयुतद्वय जप ही प्रशस्त है ॥२०८॥

श्रीसनत्कुमारादि की उक्ति के अनुसार फल विशेष लाभ हेतु अष्टादशाक्षर मन्त्र का जप चतुर्लक्ष करना चाहिये ॥२०९॥

सनत्कुमार कल्प में उस विषय में लिखित है—सत्ययुग में एक लक्ष, त्रेता में दो लक्ष, द्वापर में तीन लक्ष एवं कलि में चतुर्लक्ष जप ही विहित है ॥२१०॥

त्रैलोक्यसम्मोहन तन्त्र में लिखित है—चार लक्ष जप ही करना चाहिये ॥२११॥

अतएव उक्त है—जहाँ साक्षात् उक्ति में जप संख्या विहित है, वहाँ युग के क्रमानुसार मन्त्र संख्या में वृद्धि होती है । प्रथम कृतयुग में एकगुण, त्रेता में द्विगुण, द्वापर में त्रिगुण, एवं कलि में चतुर्गुण संख्या वृद्धि से जप का होना चाहिये ॥२१२-२१३॥

सद्यः फलविशेषार्थं जपेद्वा लक्षपञ्चकम् । होमं कुर्य्यात्तद्दशांशं विधिना लिखितेन हि ॥२१४॥
केचिच्च पूर्व्वसेवाख्यं शुद्धयर्थं तज्जपं पुरः । अयुतद्वयमन्ते च मन्यन्ते लक्षपञ्चकम् ॥२१५॥
अन्ते महोत्सवं कुर्व्वन् कृष्णं भक्त्याऽर्च्चयेन्महत् ।
गुरुं सन्तोषयेद्विप्रान् भोजयेत् प्रीणयेत् परान् ॥२१६॥
पुरश्चरणमेवं हि सिध्येदिति मतं बुधैः । तथापि कुर्य्यात् पूर्व्वेषां सम्मतं तर्पणादिकम् ॥२१७

---

सद्यः अचिरादेव फलविशेषसिद्धयर्थम्, वा-शब्दो लक्षचतुष्टयापेक्षया, विकल्पे लक्षपञ्चकं जपेत् । तस्य लक्षचतुष्टयस्य लक्षपञ्चकस्यापि दशानामंशानामेकमंशं लिखितेन 'कुर्य्याद्रक्ताम्बुजैः' इत्यादि-विधिनैव कुर्य्यात् । तत्र लक्षचतुष्टये चत्वारिंशत्-सहस्राणि, लक्षपञ्चके चार्द्धलक्षमिति । तथा च क्रमदीपिकायाम्—'युगलशुषिरवर्णं चेन्मनुं पञ्चलक्षं, प्रजपतु जुहुयाच्च प्रोक्तकल्पार्द्धलक्षम्' इति । अस्यार्थः—युगलशुषिरवर्णमष्टादशाक्षरं मन्त्रं यदि जपेत्तदा लक्षपञ्चकं जपतु । पूर्व्वोक्तविधिना अर्द्धलक्षं जुहुयाच्च, होमस्य जपदशांशकत्वादिति ॥२१४॥

तत्रैव सद्यः फलविशेषापेक्षया मतान्तरं लिखति - केचिच्चेति । अयुतद्वयं लिखितम्, तस्य वाष्टादशाक्षरमन्त्रस्य जपं शुद्धयर्थं मन्त्रादिशुद्धये पुनः पुरश्चरणादौ मन्यन्ते; अतः पूर्व्वसेवेत्याख्या यस्य तम् । अन्ते च तत्समाप्तौ लक्षपञ्चकं मन्यन्ते । तथा च क्रमदीपिकायाम्—'एवञ्चैषामशक्तौ गदितमिह मया पूर्व्वसेवाविधानम्'; किञ्च—'निवृत्तेऽस्मिन् पुनश्च प्रजपतु विधिवत् सिद्धये साधकेशः' इत्यादि । अस्यार्थः—अशक्तौ पूर्व्वोक्ताद्रिशृङ्गाद्यष्टस्थानगमनासामर्थ्ये तथा तत्र तत्र क्रमेणोक्तशाकाद्यष्टाहारासामर्थ्ये चैषामद्रिशृङ्गाद्यष्टस्थानानां मध्ये एकं स्थानं, तथा शाकाद्यष्टविधाहारेष्वेकमाहारमाश्रित्य जपं कुर्य्यात । अनेन च प्रकारेण इह ग्रन्थे प्रकारविशेषेण वा पूर्व्वसेवाभिधानं पुरश्चरणकर्म्म । यद्वा, पूर्व्वसेवेति नामविधानं मयोक्तम्; अस्मिन् पूर्व्वसेवाख्यकर्म्मणि निवृत्ते समाप्ते सति सिद्धये विशिष्टफलसिद्धयर्थं पुनः प्रजपतु, पुरश्चरणजपविशेषं करोतु । तच्च युगलशुषिरवर्णमित्यादि-वक्ष्यमाणं लिखितमेवेति ॥२१५॥

एवं पुरश्चरणे सम्पूर्णे च कृत्यं लिखति अन्त इति । यथा लिखितजपसमाप्तौ सत्याम्, महद्यथा स्यात् तथा, परान् दुःखितान् दीनान्, ते चाग्रे लेख्याश्च दिनान्धेत्यादिना ॥२१६॥

एवं तर्पणादिनियमं विनापि केवलहोमसहितेन होमाशक्तौ च चतुर्गुणादिना जपेनैव पुरश्चरणसिद्धिः स्यादिति केषाञ्चित् प्रामाणिकानामाचार्य्याणां मतमङ्गीकृत्य बहुलसाधुकुलसम्मत-तर्पणादिनियमञ्च लिखति —पुर इति । एवं लिखितप्रकारेणैव, पूर्व्वेषां पुरातनानां साधुजनानाम् ॥२१७॥

---

आशु फलविशेष प्राप्ति हेतु पाँच लक्ष जप करे । पूर्वोक्त पद्धति से इस जप का दशांश होम करना चाहिये । कोई कोई अष्टादशाक्षर मन्त्र के जप सिद्धि हेतु पुरश्चरण के पूर्व में पूर्वसेवाख्य दो अयुत और अन्त में पाँच लक्ष जप की व्यवस्था प्रदान करते हैं । अन्त में अर्थात् यथारीति मन्त्रजपावसान में भक्तिमान होकर श्रीहरि की महापूजा करे । अनन्तर श्रीगुरुदेव को प्रसन्न करके ब्राह्मण भोजन कराना चाहिये, एवं अन्यान्य दीन-दुःखी प्रभृति को तृप्त करे । विज्ञगण कहते हैं कि इस रीति से पुरश्चरण करने से ही मन्त्रसिद्धि होती है । इस प्रकार मन्त्रसिद्धि होने पर भी प्राचीन साधु-व्यक्तियों के मतानुसार तर्पणादि करना उचित है ॥२१४-२१७॥

अथ तर्पणादि

त्रैलोक्यसम्मोहनतन्त्रे—

अखण्डैररुणाम्भोजैर्मधुराक्तैर्दशांशतः । पायसेन घृताक्तेन तिलैरारण्यकैश्च वा ॥२१८॥

जुहुयात्तद्दशांशेन तर्पयेच्छुद्धवारिणा । विप्रांश्च भोजयेत् पश्चाद्गुरुं सन्तोषयेत्ततः ॥२१९॥

अन्यत्र च—

होमाद्दशांशतः कुर्य्यात्तर्पणं देवतामुखे । तर्पणस्य दशांशेन मार्ज्जयेदात्ममूर्द्धनि ।

मार्ज्जनस्य दशांशेन कुर्य्याद्ब्राह्मणभोजनम् ॥२२०॥

अथ तत्र तर्पणम्

तर्पयेच्च विधानेन श्रीकृष्णं शुद्धवारिणा । पुष्पाक्षतादियुक्तेन जले संजप्य पूर्ववत् ॥२२१॥

अथ मार्ज्जनम्

तोयैरञ्जलिना शुद्धैरभिषिञ्चेत् स्वमूर्द्धनि । दशांशं देवताबुद्धया तर्पणस्य ततः परम् ॥२२२

अथ ब्राह्मणभोजनम्

पाद्यार्घ्यैरर्च्चयेदिष्टदेवबुद्धया हि भूसुरान् । भक्ष्यैर्नानारसोपेतैर्भोजयेद्भक्तिभावतः । २२३॥

किञ्च— एवं प्रतिदिनं कुर्य्याद्यावत् संख्या प्रपूर्य्यते ।

तदन्ते महतीं पूजां कुर्य्याद्विप्रांश्च तोषयेत् ॥२२४॥

---

पूर्व्ववदिति, पूर्व्वं प्रातःस्नाने यथा लिखितं तथेत्यर्थः ॥२२१॥

देवताबुद्धयेति, निजेष्टदेवे स्वात्मानं समर्प्येत्यर्थः ॥२२२॥

एवं तर्पणादिकं होमवत्तावत् प्रतिदिनं कुर्य्यात्, यावज्जपोक्तसंख्यापूर्त्तिर्भवति । तदन्ते संख्यापूर्त्तौ च सत्याम् ॥२२४॥

---

अथ तर्पणादि

त्रैलोक्यसम्मोहन तन्त्र में लिखित है— मधुमिश्रित अखण्ड अरुणकमल वा सघृत पायस किंवा आरण्यक तिल द्वारा जप का दशांश होम, पवित्र जल द्वारा तद्दशांश तर्पण, एवं तर्पण का दशांश विप्र भोजन कराकर श्रीगुरुदेव को सन्तुष्ट करना चाहिये ।।२१८-२१९।।

अन्यत्र भी कथित है— देवता के मुख में होम का दशांश तर्पण करे । अपने शिरोदेश में तर्पण का दशांश मार्जन करे एवं मार्जन का दशांश ब्राह्मण भोजन कराना चाहिये ॥२२०॥

अथ तत्र तर्पणम्

पूर्व में प्रातःस्नान प्रकरण में जिस प्रकार वर्णित है, उस रीति से ही जल में मन्त्र जप करे एवं पुष्प, अक्षतादि समन्वित शुद्ध जल द्वारा श्रीकृष्ण के निमित्त तर्पण करे ॥२२१॥

अथ मार्ज्जनम्

निजेष्टदेव में आत्मसमर्पण पूर्वक अञ्जलि में जल ग्रहण करके तद्द्वारा तर्पण का दशांश संख्या में निज शिरोदेश को सिञ्चन करे ॥२२२॥

अथ ब्राह्मणभोजनम्

इष्टदेवता जानकर पाद्यार्घ्य प्रभृति के द्वारा भूदेववृन्द की पूजा करनी चाहिये, एवं भक्तिपूर्वक उनको नानारस संयुक्त अन्न भोजन करावे ॥२२३॥

और भी लिखित है—जब तक संख्या की पूर्त्ति नहीं होती है, तब तक नित्य इसी प्रकार करना चाहिये संख्या पूर्ण होने से महापूजा सम्पन्न करके गन्ध, माल्य, वस्त्र, भक्ष्य भोज्य एवं दक्षिणा द्वारा विप्रवृन्द को

गन्धमाल्याम्बरैश्चैव भक्ष्यभोज्यैः सदक्षिणैः।
दीनान्धकृपणानाथान् प्रीणयेद्भोजनादिना ॥२२५॥
गो-भू-हिरण्य-वस्त्राद्यैः सम्पूज्य गुरुमात्मनः।
मिष्टान्नं बन्धुभिः सार्द्धं भुञ्जीतोत्साहपूर्व्वकम् ॥२२६॥
केचिज्जपाद्दशांशं हि मन्यन्ते तर्पणं बुधाः।
अपेक्ष्योऽन्यो विशेषोऽत्र ज्ञेयोऽन्यग्रन्थतः स च ॥२२७॥

अथ तत्र रिक्तपूरणम्

उक्तञ्च—

यद्यदङ्गं विहीयेत तत्संख्याद्विगुणो जपः। साङ्गतासिद्धये कर्त्तव्यस्तच्चाशक्त्या न भक्तितः ॥२२८
सर्व्वथा भोजयेद्विप्रान् क्षतसाङ्गत्वहेतवे। विप्राराधनमात्रेण व्यङ्गं साङ्गत्वमाप्नुयात् ॥२२९

---

होमदशांशं तर्पणं लिखितं, तत्र मतान्तरं लिखति—केचिदिति। ननु पुरश्चरणकर्त्तुः सन्ध्यादि-समये कतमः कृत्यविशेषः? इत्यपेक्षायां लिखति - अपेक्ष्य इति। अत्र पुरश्चरणजपादिविधौ योऽन्यो विशेषः कश्चिदपेक्ष्यः स्यात्, स चान्यग्रन्थतः सारदातिलकादि-पञ्चरात्रादि-शास्त्रेभ्योऽपि ज्ञेयः। अत्र च ग्रन्थविस्तर-भयान्न विस्तार्य्य लिखित इति भावः ॥२२७॥

अङ्गं तर्पणादि, तस्य अङ्गस्य संख्यायाः द्विगुणः साङ्गस्य पुरश्चरणस्य सिद्धयर्थं जपः कर्त्तव्यः। तच्च द्विगुणजपकरणं तत्र तत्राशक्त्यैव, न च भक्तितः। भक्त्या च प्रयत्नतः सर्व्वमनुष्ठेयमेवेत्यर्थः। शक्तित इति पाठेऽपि शक्तौ सत्यां मुख्यकल्पतर्पणादि-परित्यागेन गौणकल्पे प्रवृत्तेरग्रे दोषोक्त्या प्रयत्नतो मुख्यकल्पेन साङ्गं कुर्य्यादेवेत्यर्थः ॥२२८॥

ननु रिक्तनिवारणार्थं जपाशक्त्यादौ किं कार्य्यम्? तत्राह—सर्व्वथेति। व्यङ्गसाङ्गतार्थं सद्यः फलविशेष सिद्धयर्थमेवेत्यादिसर्व्वप्रकारेण। विशेषतश्च क्षतस्य व्यङ्गस्य साङ्गत्वहेतवे; यद्वा, सर्व्वथेति भक्ष्यभोज्यादि-नानाप्रकारेणेत्यर्थः ॥२२९॥

---

सन्तुष्ट करे। अनन्तर दीन, अन्ध, कृपण एवं अनाथ जनगण को भोजनादि द्वारा तृप्त करना चाहिये। तत्-पश्चात् गो, भूमि, काञ्चन एवं वस्त्रादि द्वारा श्रीगुरुदेव की पूजा करके उत्साह से बन्धुगण के सहित मिष्टान्न भोजन करे। कतिपय बुध व्यक्ति कहते हैं—जप का दशांश तर्पण करना चाहिये। पुरश्चरण के सम्बन्ध में विशेष कुछ जानना आवश्यक हो तो सारदातिलक एवं पञ्चरात्रादि ग्रन्थों से उसको जान सकते हैं ॥२२४-२२७॥

अथ तत्र रिक्तपूरणम्

कथित है—अक्षमता निबन्धन तर्पणादि किसी अङ्गहीन होने पर सम्पूर्णता सिद्धि हेतु उस उस अङ्ग संख्या के द्विगुण जप करना पड़ता है, अक्षम पक्ष में भक्तिमान् होकर पुनर्वार समस्त अङ्गों का अनुष्ठान करने की आवश्यकता नहीं है। जो व्यक्ति, जप करने में अक्षम हैं, उनके पक्ष में भक्तिमान् होकर पुनर्वार समस्त अङ्गों का अनुष्ठान करना आवश्यक नहीं है। जो जप करने में सक्षम हैं, अभावपूर्त्ति हेतु भक्ष्य भोज्यादि द्वारा सर्वथा ब्राह्मणों को भोजन करावे। जो जो अङ्ग होते हैं, विप्राराधन के द्वारा वे सब पूर्ण होते हैं ॥२२८-२२९॥

अन्यत्र च—

यद्यदङ्गं विहीयेत जपस्तद्द्विगुणो मतः। तावत्पुष्पप्रदानं वा तावती वा नमस्क्रिया ॥२३०॥

अथ संक्षिप्त-पुरश्चरणम्

तदुक्तम्—

पूजां विस्तरतः कर्त्तुं यो न शक्नोति साधकः। स विनाङ्गेन्द्रवज्राद्यैः पूजयेदिष्टदेवताम् ॥२३१

अथवा देवतामात्रं ध्यात्वा सम्यक् प्रपूजयेत्। अथवा मानसीं कुर्य्यात् पूजामात्मार्पणावधि ॥२३२

अथवा केवलां पूजां वाह्यं कुर्य्याद्विचक्षणः। सम्पूज्यैवं जपं कुर्य्यान्न मन्त्र केवलं जपेत् ॥२३३

पूर्व्वपूर्व्वस्य चाशक्तावुत्तरोत्तरमाचरेत्। प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तयेत्।

न साम्परायिकं तस्य दुर्म्मतेर्जायते फलम् ॥२३४॥

अथवान्यप्रकारेण पुरश्चरणमिष्यते। ग्रहणेऽर्कस्य चेन्दोर्वा शुचिः पूर्व्वमुपोषितः ॥२३५॥

नद्यां समुद्रगामिन्यां नाभिमात्रोदके स्थितः। ग्रहणादिविमुक्तचन्तं जपेन्मन्त्रं समाहितः ॥२३६

अनन्तरं दशांशेन क्रमाद्धोमादिकं चरेत्। तदन्ते महतीं पूजां कुर्य्याद्‌ब्राह्मणभोजनम् ॥२३७॥

ततो मन्त्रप्रसिद्धचर्थं गुरुं सम्पूज्य तोषयेत्। एवञ्च मन्त्रसिद्धिः स्याद्देवता च प्रसीदति ॥२३८

---

तत्राप्यशक्तौ लिखति—यद्यदिति। नमस्क्रिया प्रणामः ॥२३०॥

अङ्गाद्यावयवैर्विना निजेष्टदेवमात्रं पूजयेत् ॥२३१॥

देवतामात्रं केवलनिजेष्टदेवमेव ध्यात्वा, न तु तत्तदुपचारसमर्पणाद्युक्त-तत्तद्ध्यानं कृत्वा ॥२३२॥

केवलां—मानसिकपूजाव्यतिरिक्ताम् ॥२३३॥

प्रथमकल्पस्य मुख्यपक्षस्य प्रभुस्तत्र समर्थश्चेत्,अनुकल्पेन गौणपक्षेण वर्त्तयेत् कर्म्म कुर्य्यात्; साम्परायिकं—पारलौकिकम् ॥२३४॥

पूर्व्वमुपोषितः, ग्रहणपूर्व्वदिने कृतोपवासः सन् ॥२३५॥

---

अन्यत्र भी वर्णित है—जो जो अङ्गहीन हो, उसका द्विगुण जप करे किंवा तत्संख्यक पुष्पार्पण अथवा तत्संख्यानुसार प्रणाम करना चाहिये ॥२३०॥

अथ संक्षिप्त-पुरश्चरणम्

उस विषय में कथित है—सविस्तार पूजा करने में असमर्थ होने पर इष्टदेव की पूजा ही करे। अथवा देवता मात्र की पूजा चिन्तन के द्वारा सम्यक् प्रकार से करे, किंवा आत्मसमर्पण यावत् मानसी पूजा करे। अथवा केवल वाह्य पूजा करना ही विज्ञ व्यक्ति का कर्त्तव्य है। इस प्रकार पूजा करके जप करना चाहिये, केवल मन्त्र जप करना निषिद्ध है। पूर्व पूर्व अङ्गों का अनुष्ठान करने में अक्षम होने पर उत्तरोत्तर अङ्गों का अनुष्ठान करना चाहिये। जो व्यक्ति, प्रथम कल्पानुष्ठान करने में सक्षम होकर भी अनुकल्प–गौणपक्ष का अनुष्ठान करता है, उस दुर्मति व्यक्ति का पारलौकिक फल विफल होता है। अथवा अन्य प्रकार से पुरश्चरण करना कर्त्तव्य है—पूर्वदिन से पवित्रभाव से उपवास रहकर सूर्य्यग्रहण वा चन्द्रग्रहण के प्रारम्भ से समुद्रगामिनी नदी गर्भ में नाभिमात्र जल में अवस्थान पूर्वक मोक्ष पर्य्यन्त एकाग्रचित्त से मन्त्र जप करना चाहिये। तदनन्तर जप का दशांश क्रम से होमादि का अनुष्ठान करे। तत्पश्चात् महापूजा सम्पन्न करके ब्राह्मण भोजन करावे। अनन्तर मन्त्रसिद्धि के निमित्त श्रीगुरु की पूजा करके उनको सन्तुष्ट करे। इस प्रकार करने से मन्त्रसिद्धि होती है एवं देवतावृन्द प्रसन्न होते हैं। अन्य रूप से भी पुरश्चरण किया जा

अथवान्यप्रकारोऽयं पौरश्चरणिके विधौ । चन्द्रसूर्य्योपरागे तु स्नात्वा प्रयतमानसः ॥२३९॥
स्पर्शाद्विमुक्तपर्य्यन्तं जपेन्मन्त्रं समाहितः । सर्व्वं पूर्व्ववदेवाथ कुर्य्याद्धोमादिकं कृती ॥२४०॥
अथवा देवतारूपं गुरुं ध्यात्वा प्रतोषयेत् । तस्य च्छायानुसारी स्याद्भक्तियुक्तेन चेतसा ॥२४१
गुरुमूलमिदं सर्व्वं तस्मान्नित्यं गुरुं भजेत् । पुरश्चरणहीनोऽपि मन्त्री सिध्येन्न संशयः ॥२४२॥

तथा चोक्तम्—

यथा सिद्धरसस्पर्शात्ताम्रं भवति काञ्चनम् ।
सन्निधानाद्गुरोरेवं शिष्यो विष्णुमयो भवेत् ॥२४३॥

अथ तत्रैवप्रकारान्तरम्

गौतमीये—

गवानुगमनं कार्य्यं गोग्रासं गोप्रदक्षिणम् । नित्यं तासु प्रसन्नासु गोपालोऽपि प्रसीदति ॥२४४

अथ सिद्धमन्त्रस्य लक्षणम्

उक्तञ्च बौधायनेन—

सिद्धस्य त्रीणि चिह्नानि दाता भोक्ताप्ययाचकः ।
सिद्धमन्त्रस्य तन्त्रोक्ताः प्रवर्त्तन्तेऽत्र सिद्धयः ॥२४५॥

---

अथवान्यप्रकारोऽयमित्यत्र समुद्रगामिनदीजलान्तःस्थितिव्यतिरेकेण, संक्षेपे पूर्व्वतो विशेषः ॥२३९॥
स्पर्शात् ग्रासमारभ्य ॥२४०॥
केवल-श्रीगुरु-प्रसादेनैव पुरश्चरणसिद्धिः स्यादिति प्रकारान्तरमाह—अथवेति त्रिभिः ॥२४१॥
दाता भोक्तापि सन् अयाचकः कमपि न याचत इत्यर्थः । न चैतन्मात्रमेव, किन्तु सर्व्वज्ञत्वादि-सिद्धयोऽपि तस्य स्युरित्याह—सिद्धेति । अत्र अस्मिन्नेव लोके देहे वा ॥२४५॥

---

सकता है । चित्त संयम पूर्वक चन्द्र अथवा सूर्य्य-ग्रहण में स्नान करके एकाग्रचित्त से ग्रहणारम्भ से मोक्ष पर्य्यन्त मन्त्र जप करना ही कृती व्यक्ति के पक्ष में कर्त्तव्य है, एवं होमादि क्रिया का सम्पादन भी पूर्ववत् करे । किंवा श्रीगुरुदेव को देवबुद्धि से चिन्तन करके उनको सन्तुष्ट करे एवं भक्तिपूर्वक श्रीगुरुदेव के छायागामी बनकर रहे । यह कर्मसमूह श्रीगुरुमूलक हैं । सुतरां श्रीगुरुदेव का भजन करना चाहिये । इस प्रकार क्रिया के द्वारा पुरश्चरणहीन मन्त्री भी सिद्धि लाभ करता है । इसमें संशय नहीं है ॥२३९-२४२॥

उस विषय में उक्त है—जिस प्रकार सिद्धरस स्पर्श से ताम्र सुवर्णत्व प्राप्त करता है, उस प्रकार एकमात्र श्रीगुरु के सन्निधान में अवस्थान करने से ही शिष्य विष्णुमय हो सकता है ॥२४३॥

अथ तत्रैव प्रकारान्तरम्

गौतमीयतन्त्र में उक्त है— नित्य गवानुगमन, गोग्रास प्रदान, एवं गोप्रदक्षिणा करे । गोगण सन्तुष्ट होने पर श्रीगोपालदेव सन्तुष्ट होते हैं ॥२४४॥

अथ सिद्धमन्त्रस्य लक्षणम्

बौधायन ने कहा है— सिद्ध मन्त्र के तीन चिह्न हैं, जिसका मन्त्र सिद्ध हो गया है, वह दाता और भोक्ता होकर भी किसी से कुछ नहीं माँगता है । और भी कथित है—केवल यही नहीं, किन्तु जो मन्त्र सिद्ध है, वर्त्तमान शरीर से ही उसको तन्त्रवर्णित सर्वज्ञानादि सिद्धिसमूह प्रवर्त्तित होती हैं ॥२४५॥

नारदपञ्चरात्रे च श्रीभगवता—

मन्त्राराधनशक्तस्य प्रथमं वत्सरत्रयम् । जायन्ते बहवो विघ्ना नियमस्तस्य नारद ॥२४६॥

नोद्वेगं साधको याति कर्म्मणा मनसा यदि । तृतीयाद्वत्सराद्दूर्द्ध्वं राजानश्च महीभृतः ॥२४७

प्रार्थयन्तेऽनुरोधेन गर्व्विता अपि मानिनः । प्रसादः क्रियतां नाथ ममोद्धरणकारणम् ॥२४८॥

प्रज्वलन्तं प्रपश्यन्ति तेजसा विभवेन च । अतस्ते मुनिशार्द्दूल निष्ठुरं वक्तुमक्षमाः ॥२४९॥

नवमाद्वत्सराद्दूर्द्ध्वं नानाश्चर्य्याणि पश्यति । आत्मानन्दप्रदान्याशु प्रत्यक्षेण बहिस्तथा ॥२५०

किञ्च—

बलेन परिपूर्णश्च तेजसा भास्करोपमः । पूर्णेन्दुसदृशः कान्त्या गमने विहगोपमः ॥२५१॥

स्वल्पाशनेऽप्यकृशता बहुना न च खिद्यते । विण्मूत्रयोरथाल्पत्वं भवेन्निद्राजयस्तथा । २५२॥

जपध्यानरतो मौनी न खेदमधिगच्छति । विना भोजनपानाभ्यां पक्षमासादिक मुने । २५३॥

इत्येवमादिभिश्चिह्नैर्महाविस्मयकारिभिः । प्रवृत्तैः संप्रबोद्धव्यं प्रसन्नो मन्त्रराडिति ॥२५४॥

मन्त्रप्रसादजनितं लिङ्गञ्च न गुरोर्विना । प्रकाशनीयं विप्रेन्द्र कस्यचित् सिद्धमिच्छता ॥२५५

अथ सिद्धमन्त्रकृत्यम्

तच्चोक्तम्—

सिद्धमन्त्रोऽपि नित्यं हि त्रिसन्ध्यं कृष्णमर्च्चयेत् । नियमेनैकसन्ध्यं वा जपेदष्टोत्तरं शतम् ॥२५६

---

अनुरोधेन आनुकूल्येनैव प्रार्थयन्ते ॥२४८। बहुनाऽशनेन ॥२५२॥ लिङ्गं—चिह्नम् ॥२५५॥
एकसन्ध्यं वा अर्च्चयेत्, अत्र चाष्टोत्तरशतवारात् निजमन्त्रं जपेदित्यर्थः ॥२५६॥

---

नारदपञ्चरात्र में श्रीभगवान् की उक्ति है—हे नारद ! जो नियमवान् होकर मन्त्र साधन में तत्पर होता है, प्रथम तीन वत्सर उसके कार्य्य में अनेक प्रकार के विघ्न उपस्थित होते हैं, कर्म अथवा मन में साधक किसी प्रकार उद्विग्न न होने पर तीन वत्सर के बाद गर्वित एवं माननीय नृपति भी उसके प्रति अनुकूल होकर स्वयं आगमन पूर्वक प्रार्थना करते हैं कि, हे नाथ ! आप मेरी रक्षा करने के निमित्त प्रसन्न हूजिये। उस साधक को समस्त जीव ही तेज एवं विभव से प्रदीप्त देखते हैं। अतएव हे मुनिशार्दूल ! कोई उसको कठोर वचन नहीं कह सकते। इस प्रकार नववर्ष अतिवाहित होने पर, साधक तत्काल प्रत्यक्ष वाह्यदेश में ही आत्मानन्दप्रद विविध आश्चर्य्य प्रत्यक्ष करता है ॥२४६-२५०॥

और साधक बल से परिपूर्ण, तेज में सूर्य्य के समान, कान्ति में पूर्णचन्द्रमा के समान एवं गति में विहङ्ग के समान होता है। अल्प भोजन करने पर भी उसका देह कृश नहीं होता है, एवं भूरि भोजन करने पर भी वह दुःखी नहीं होता है। उसका मलमूत्र बहुत थोड़ा निकलता है। वह जितनिद्र होता है। जप ध्यान परायण एवं मौनी होता है। कभी भी खिन्न नहीं होता है एवं पानाहार के बिना भी एक पक्ष वा एक मास अतिवाहित कर सकता है। हे मुने ! इन सब लिखित आश्चर्य्यदायक प्रवर्त्तमान चिह्नों के द्वारा जान लेना चाहिये कि, मन्त्रराज प्रसन्न हो गया है। हे विप्रेन्द्र ! सिद्धिकामी व्यक्ति के पक्ष में गुरु व्यतीत अन्य किसी के निकट मन्त्रसिद्धि जनित चिह्न को प्रकाश करना निषिद्ध है ॥२५१-२५५॥

अथ सिद्धमन्त्रकृत्यम्

उस विषय में लिखित है—सिद्धमन्त्र होने से प्रत्यह त्रिसन्ध्या में श्रीहरि की पूजा करे किंवा यथारीति एक सन्ध्या में पूजा एवं अष्टोत्तरशत बार मन्त्र जप करे ॥२५६॥

अथासिद्धसाधनोपायाः

ते चोक्ताः—

अनुष्ठितो यथान्यायं यदि मन्त्रो न सिध्यति ।
पुनस्तावत् प्रजप्तव्यस्ततः सिद्धो भवेद्ध्रुवम् ॥२५७॥

पुनः सोऽनुष्ठितो मन्त्रो यदि सिद्धो न जायते । उपायास्तत्र कर्त्तव्याः सप्त शङ्करभाषिताः ॥२५८

रुद्रेण दहनान्तं ये कथिता मन्त्रसिद्धये । सप्तोपाया बुधैर्ज्ञेयास्तेऽन्यमन्त्रेषु सिद्धिदाः ॥२५९॥

श्रीमद्गोपालमन्त्रोऽयं नैव किञ्चिदपेक्षते । हृन्मात्रस्पृक् फलत्येव स्पृष्टो हि दहनो यथा ॥२६०

अथ यन्त्रम्

सनत्कुमारकल्पे —

अर्च्चनार्थे मुने वक्ष्ये यन्त्रं श्रीकरमुत्तमम् । स्वगृहे वा वने वाथ विष्णोरायतनेऽथवा ॥२६१

स्थानमेकान्तमाश्रित्य शोधयेद्गोमयाम्भसा । तत्र संस्थापयेत् पीठं क्षालितं शुद्धवारिणा ॥२६२

---

शङ्करभाषिताः, तच्च सर्व्वं शङ्करेणोदितमिति यावत् ॥२५८॥

दहनान्तमिति द्रावणमारभ्य दहनावधि उपायं कुर्य्यात् ॥२५९॥

ते चोपाया मन्त्रान्तरेष्वेव, न त्वस्मिन् मोहनाख्याष्टादशाक्षरमन्त्र इति लिखति—श्रीमदिति । किञ्चित् संस्कारादिकम्, किन्तु हृन्मात्रं स्पृशतीति तथा सन्नपि फलत्येव । तत्र दृष्टान्तत्वेनार्थान्तरमुपन्यस्यति—स्पृष्टो हीति । यथाकथञ्चित् स्पर्शमात्रेण दहनो दहेदेव, तच्छक्तेस्तथात्वादिति भावः; एतच्च पूर्व्वं माहात्म्य-लिखने व्यक्तीभूतमेवास्ति ॥२६०॥

'शालग्रामे मनौ यन्त्रे' इत्यादिना पूर्व्वं पूजास्थानेषु यन्त्रमुल्लिखितम् । तन्मन्त्रं यन्त्र आलिखेत्यादिना साध्यसाधनोपायेषु च मन्त्रमुद्दिष्टम् । अतोऽपेक्षितं यन्त्रस्य लक्षणं लिखन् केवलयन्त्रधारणमात्रेणैव सर्व्वसिद्धिः स्यादित्यन्तेन तद्धारणमाहात्म्यञ्च प्रमाणयन् लिखति—अर्च्चनार्थ इत्यादिना यावत्समाप्ति । मुने—हे श्रीनारद । श्रीकरं—विभूतिसम्पादकम् ॥२६१॥

एकान्तं—निर्ज्जनम् ॥२६२॥

---

अथासिद्धसाधनोपायाः

उक्त विषय में कथित है—यथायथ आचरण करने पर भी यदि मन्त्रसिद्ध नहीं होती है तो, पुनर्वार जप करना चाहिये । ऐसा करने पर निश्चय मन्त्र सिद्ध होगा । पुनर्वार अनुष्ठान करने पर भी यदि मन्त्र सिद्ध नहीं होता है तो शिवोक्त सात उपाय अवलम्बन करे । मन्त्रसिद्धि के विषय में द्रावणादि सात प्रकार उपाय का वर्णन महेश्वर ने किया है । विज्ञ व्यक्ति को जानना आवश्यक होगा कि, यह सब उपाय का वर्णन अन्य मन्त्रसमूह के निमित्त हुआ है । अन्यान्य अन्यान्य मन्त्रों के सम्बन्ध में उन सबको सिद्धिप्रद जानना चाहिये । यह श्रीमान् गोपाल-मन्त्र, अन्य किसी की अपेक्षा नहीं करते हैं । अनल जिस प्रकार स्पर्श मात्र से ही दग्ध करता है, उस प्रकार केवल मात्र हृद्देश में स्पृष्ट होने से ही यह मन्त्र फलित होता है । ॥२५७-२६०॥

अथ यन्त्रम्

सनत्कुमार कल्प में लिखित है—हे मुने ! पूजा के निमित्त उत्कृष्ट विभूति साधक मन्त्र का वर्णन करता हूँ । निज गृह में वा अरण्य में अथवा श्रीविष्णु मन्दिर में निर्जन स्थान अवलम्बन पूर्वक गोमयान्वित जल द्वारा शोधन करके उसमें शुद्ध जल धौत पीठ स्थापन करना चाहिये । गन्ध-पङ्क द्वारा अष्टदल पद्म अङ्कन

विलिख्य गन्धपङ्केन लिखेदष्टदलाम्बुजम् । कर्णिकायां लिखेद्वह्निपुटितं मण्डलद्वयम् ॥२६३

तस्य मध्ये लिखेद्वीजं साध्याख्यं कामसंयुतम् ।
ततः शिष्टैर्मनोर्वर्णैस्तं कामं वेष्टयेत् सुधीः ॥२६४॥

श्रियं षट्कोणकोणेषु ऐन्द्रनैर्ऋतवायुषु । आलिख्य च लिखेन्मायां वह्निवारुणशूलिषु ॥२६५

मन्त्रं षड़क्षरं तत्र विलिखेत् षट्सु सन्धिषु । अक्षरैः कामगायत्र्या वेष्टयेत् केशरं सुधीः ॥२६६

काममालामनोर्वर्णान् दलेष्वष्टसु मन्त्रवित् । लिखेद्गृहाङ्गनैर्भद्रैर्मातृकां तद्वहिर्न्यसेत् ॥२६६॥

भूविम्वञ्च लिखेद्वाह्ये श्रीमायां दिग्विदिक्षु च । एवं यन्त्रं समालिख्य जातरूपमये पटे ॥२६८॥

राजते ताम्रपट्टे वा भूर्ज्जे क्षौममयेऽपि वा ।
सूक्ष्मतन्तुपटे वापि प्रतिष्ठाप्य समीरणम् ॥२६९॥

हुत्वा सहस्रमाज्येन मन्त्रसम्पातपूर्व्वकम् । अर्च्चयित्वायुतं जप्त्वा धारयेद्यन्त्रमुत्तमम् ॥२७०

---

वह्निपुटितं मण्डलद्वयं षट्कोणमित्यर्थः, अग्रे षट्कोणेष्वित्युक्तेः । तथा च क्रमदीपिकायाम्—'कर्णिकायान्तु षट्कोणं सुसाध्यं तत्र तन्मनुम्' इति । कामं—कामवीजं, शिष्टैः—अवशिष्टैः सप्तदशभिर्वर्णैः । तथा च क्रमदीपिकायाम्—शिष्टैस्तु सप्तदशभिरक्षरैर्वेष्टयेत् स्मरम्' इति ॥२६३॥

षट्कोणस्य तस्य कोणेषु ऐन्द्रादिषु श्रिय लक्ष्मीवीजमालिख्य वह्न्यादिकोणेषु त्रिषु मायां भुवनेश्वरीवीजं लिखेत् । तथा च क्रमदीपिकायाम्— प्राग्रक्षोऽनिलकोणेषु श्रियं शिष्टेषु सद्मसु' इति ॥२६५॥

तत्र षट्कोणे वहिर्ये षट् सन्धयस्तेषु षड़क्षरं मन्त्रं लिखेत् । एकैकस्मिन् सन्धौ एकैकाक्षरं लिखेत् इत्यर्थः । षड़क्षरश्चात्र कामवीजेन सहितश्चतुर्थ्यन्तो नत्यन्तश्च कामगायत्र्याश्चतुर्विंशतिभिरक्षरैः प्रत्येकं केशरमक्षरत्रयमित्येवमष्टदलकमलस्य केशराष्टकं वेष्टयेदित्यर्थः । तथा च क्रमदीपिकायाम्—'षड़क्षरं सन्धिषु च केशरेषु त्रिशस्त्रिशः । विलिखेत् स्मरगायत्रीम्' इति ॥२६६॥

काममालामन्त्रस्य वर्णानष्टचत्वारिंशदक्षराणि प्रत्येकदलं षड्वर्णानित्येवमष्टदलेषु लिखेत् । तथा च क्रमदीपिकायाम्— मालामन्त्रं दलाष्टके । षट्शः संलिख्य' इति । कैर्लिखेत् ? भद्रैरुत्तमैर्गृहाङ्गनैः मसीविशेषैः। तेभ्योऽष्टदलेभ्यो वहिर्मातृकामेव पञ्चाशदक्षरात्मिकां सविन्दुकां क्रमेण लिखेच्च । तथा च क्रमदीपिकायाम्— 'तद्वाह्ये वेष्टयेन्मातृकाक्षरैः' इति ॥२६७॥

तद्वाह्ये मातृकातो वहिर्भूविम्वं भूमण्डलं परितो लिखेत् । तस्य दिक्षु प्राच्यादि चतसृषु श्रियं लक्ष्मीवीजं, विदिक्षु च आग्न्यादिचतुष्कोणेषु मायावीजञ्च लिखेदित्यर्थः । तथा च क्रमदीपिकायाम्—'भूविम्वञ्च लिखेद्वाह्ये श्रीमाये दिग्विदिक्ष्वपि' इत्यर्थः । तद्वहिश्चतुष्कोणं कोणचतुष्टये वज्रचतुष्टयसमेतं लेख्यमिति सत्सम्प्रदायः ॥२६८॥

समीरणं प्रतिष्ठाप्य, प्राणप्रतिष्ठां कृत्वेत्यर्थः ॥२६९॥

---

करके उसकी कर्णिका में वह्नि (त्रिकोण) पुटित दो मण्डल (षट्कोण लिखे) । उसमें सुसाध्य कर्म गर्भित (जिसकी जो कामना है उसके सहित) कामवीज का अङ्कन करे । उस षट्कोण के मध्य में साध्यनाम 'क्लीं कृष्णाय नमः' यह षट् वर्ण लिखे । तत्पश्चात् विज्ञ व्यक्ति अष्टादशाक्षर मन्त्र के अवशिष्ट सप्तदशाक्षर द्वारा उस कामवीज को वेष्टन करे । अनन्तर उक्त षट्कोण के पूर्व नैर्ऋत एवं वायुकोण में लक्ष्मीबीज (श्रीँ) एवं अग्निकोण, पश्चिम एवं ईशान भाग में माया वीज (ह्रीँ) लिखना चाहिये । षट्कोण मण्डल के छः सन्धि में षड़क्षर 'क्लीं कृष्णायनमः' मन्त्र लिखना चाहिये । सुबुद्धिव्यक्ति काम-गायत्री के चतुर्विंशति

त्रैलोक्यैश्वर्यमाप्नोति देवैरपि सुपूजितम् । आकर्षणं सुरस्त्रीणां नागलोकनिवासिनाम् ॥२७१॥
पिशाचयक्षरक्षांसि क्रूरभूतगणाश्च ये । दुष्टसर्पादयः सत्त्वा ह्यपसर्पन्ति दूरतः ॥२७२॥
यन्त्रराजधरं दृष्ट्वा विद्रवन्ति च बिभ्यति । बहुना किमिहोक्तेन सर्व्वलोकसुखावहम् ॥२७३॥
स्त्रीणामाकर्षणं सद्यो राज्ञां वश्यकरं भुवि । योगसिद्धिकरं पुंसां भवसागरतारकम् ।
भुक्तिमुक्तिप्रदं दिव्यमिति प्रोक्तश्च वेधसा ॥२७४॥

इति श्रीगोपालभट्ट-विलिखिते श्रीभगवद्भक्तिविलासे पौरश्चरणिको नाम सप्तदशो विलासः ।

---

नागलोकः पातालं, तद्वासिनामपि स्त्रीजनानामिति शेषः ॥२७१॥
दिव्यं श्रीवैकुण्ठलोक प्रापकञ्चेत्यर्थः ॥२७४॥

इति सप्तदशो विलासः ।

---

वर्ण के द्वारा केशर को वेष्टन करें। मन्त्रवित् व्यक्ति, उत्तम गृहाञ्जन (एक प्रकार मसी) द्वारा अष्टदल में छै छै वर्ण करके कामकला मन्त्र "नमः कामदेवाय सर्वजन प्रियाय सर्वजन सम्मोहाय ज्वल ज्वल प्रज्वल सर्व जनस्य हृदयं मम वशं कुरु कुरु स्वाहा" के अष्टचत्वारिंशत् (अड़तालीस वर्ण) लिखे। उसके बाहर बिन्दु समन्वित एक पञ्चाशत (५१) संख्यक मातृकावर्ण, क्रम से लिखने चाहिये। मातृकावर्ण के बहिर्भाग में सब ओर भूविम्ब (भूमण्डल) और उसके (भूविम्ब के) बहिर्भाग, पूर्व, पश्चिम, उत्तर और दक्षिण दिक् में श्री (श्रीँ) वीज तथा विदिक् में (अग्नि, नैर्ऋत, वायु और ईशान,–चार कोण में) माया वीज (ह्रीँ) लिखे। भूविम्ब के चारों कोणों में अर्थात् मायावीज के बाहर चार वज्रचिह्न भी लिखे। इस प्रकार सुवर्ण-मय, रौप्यमय, ताम्रमय, मूर्त्तमय, क्षौममय, व सूक्ष्म तन्तुमय, तट में मन्त्र लिखकर उसकी प्राणप्रतिष्ठा करे। पुनर्वार मन्त्र पढ़कर एक सहस्र घृत होम करके और अर्च्चना के पश्चात् अयुत मन्त्र जप पूर्वक यह उत्तम यन्त्र धारण करे। इस यन्त्र के धारण करने से त्रिभुवन का ऐश्वर्य्य प्राप्त होता है, और वह यन्त्र-धारणकारी व्यक्ति देववृन्द के द्वारा पूजित होता है। इस यन्त्र के प्रसाद से सुरनारी और नागों की (पाताल वासिनी) स्त्रियों को भी आकर्षण किया जाता है। जो व्यक्ति यह यन्त्र धारण करता है, उसके दर्शन करते ही पिशाच, यक्ष, राक्षस, क्रूर भूतगण और दुष्ट सर्पादि जन्तुगण भीत होकर दूर भाग जाते हैं। अधिक और क्या कहूँ,– विधाता ने स्वयं कहा है कि,– यह यन्त्रराज, धरातल में सर्वलोक सुखदायक है, इसके अतिरिक्त नारीजन आकर्षक, सद्यः नृपति वशकारक, पुरुषों को योगसिद्धि दायक संसार समुद्र तारक, वैकुण्ठ प्रापक एवं भुक्ति, मुक्ति, फल दायक है ॥२६१-२७४॥

इति श्रीगोपालभट्ट-विलिखिते श्रीभगवद्भक्तिविलासे पौरश्चरणिको नाम सप्तदशो विलासः ।

---

# अष्टादश-विलासः

यस्य प्रसादादज्ञोऽपि सद्यः सर्व्वज्ञतां व्रजेत् । स श्रीचैतन्यदेवो मे भगवान् सम्प्रसीदतु ।१॥
अपेक्ष्यन्तेऽर्च्चनेऽवश्यमधिष्ठानानि वैष्णवैः । श्रीमूर्त्तयश्च तत्रापि साक्षात्कारसुखप्रदाः ॥२॥
श्रीमूर्त्तीनां लक्षणानि लिखितान्येव कानिचित् । प्रादुर्भूतेर्विधिस्तासां प्रतिष्ठायाश्च लिख्यते ॥३

अथ श्रीमूर्त्तिप्रादुर्भावणम्

भक्तचैव भगवन्मूर्त्तिप्रादुर्भावोऽपि चेद्भवेत् ।
कर्त्तव्योऽथाप्युपायोऽत्र पूर्व्वैः सद्भिः प्रदर्शितः ॥४॥

अथ तत्रादौ श्रीमूर्त्याविर्भावणमाहात्म्यम्

विष्णुधर्म्मोत्तरे—

प्रतिमां कारयित्वा तु देवदेवस्य चक्रिणः । न दुर्गतिमवाप्नोति विष्णुलोकं स गच्छति ॥५॥
देवस्य प्रतिमायान्तु यावन्तः परमाणवः । तावद्वर्षसहस्राणि विष्णुलोके महीयते ॥६॥

---

श्रीगुरुमुखैकगम्यं श्रीमूर्त्तिप्रादुर्भावणविधिं लिखन् परमदुर्ज्ञेयोऽपि भगवत्प्रसादात् सुज्ञेयो भवतीति तत्-प्रसादं प्रार्थयते—यस्येति ॥१॥

अर्च्चने निमित्तानि अधिष्ठानानि पूजास्थानानि । तत्र अधिष्ठानेष्वपि मध्ये श्रीमूर्त्तयो भगवत्प्रतिकृतयो-ऽवश्यमपेक्ष्यन्ते । कुतः ? भगवत्साक्षात्कारे यत् सुखं, तत् प्रकर्षेण ददतीति तथा ताः ॥२॥

लिखितानि पूर्व्वं बहिःपूजायां चतुर्व्विंशतिमूर्त्यादिलिखने कानिचिदिति, अधुना तान्यपि लेख्यानीति भावः । तासां श्रीमूर्त्तीनां प्रादुर्भूतेः प्रादुर्भावस्य प्रतिष्ठायाश्च विधिर्लिख्यते ॥३॥

निजभक्तैकसाध्येऽपि श्रीमूर्त्तिप्रादुर्भावणे शिष्टाचारानुसारेण यत्नः कार्य्य इति लिखति—भक्तचैवेति । अपि चेत् यद्यपि भक्तचैव, न च शिल्पादिशक्तचा भवेत्, तथापि अत्र भगवन्मूर्त्तिप्रादुर्भावे उपायः साधन-मनुष्ठेयः, स च न स्वकल्पितः, किन्तु शास्त्रद्वारा साधुपरम्परयाभिव्यञ्जित इति लिखति—पूर्व्वैरिति ॥४॥

---

जिनके प्रसाद से सद्यः अज्ञजन को भी सर्वज्ञता प्राप्त होती है, वे भगवान् चैतन्यदेव मुझ पर प्रसन्न होवें । वैष्णववृन्द, अवश्य ही पूजा के उपयुक्त स्थान की अपेक्षा करते हैं, उसमें भी भगवत् प्रतिकृति समूह की अपेक्षा अवश्य ही करते हैं। कारण, यह समस्त प्रतिकृति भगवत् साक्षात्कार जनित आनन्द प्रदान करती है । इसके पहले बाह्यपूजा प्रसङ्ग में चतुर्विंशति मूर्त्यादि लिखने में श्रीमूर्त्तिसमूह के कतिपय लक्षण वर्णित हुये हैं । अधुना उन सब मूर्त्तियों का प्रादुर्भाव एवं प्रतिष्ठा विधि का वर्णन किया जाता है । १-३॥

अथ श्रीमूर्त्तिप्रादुर्भावणम्

यद्यपि भक्ति से ही श्रीभगवद् मूर्त्ति का प्रादुर्भाव होता है, तथापि यहाँ पर पूर्व पूर्व सज्जनवृन्द कर्त्तृक निर्दिष्ट उपाय का भी अवलम्बन करना चाहिये ॥४॥

अथ तत्रादौ श्रीमूर्त्याविर्भावणमाहात्म्यम्

श्रीविष्णुधर्मोत्तर में कथित है—जो देवेश्वर चक्रपाणि श्रीकृष्ण की प्रतिकृति निर्म्माण करते हैं, उनको कभी दुर्गति भोग करना नहीं पड़ता है । वे श्रीविष्णुलोक गमन करते हैं । श्रीदेवविग्रह में जितने परमाणु विद्यमान रहते हैं, उतने ही सहस्र वर्ष वे श्रीविष्णुधाम में जाकर पूजित होते हैं ॥५-६॥

किञ्च—

प्रासादवत्तथा तस्याः फलं सम्यगुदाहृतम् । उत्तरोत्तरतो द्रव्यैर्विना पक्वेष्टकां द्विजाः ।।७।।

नारसिंहे—

प्रतिमां लक्षणोपेतां नरसिंहस्य कारयेत् । सर्व्वपापानि सन्त्यज्य स तु विष्णुपुरे वसेत् ।।८।।

श्रीमूर्त्त्याविर्भावणविधिः

मात्स्ये—

विष्णोस्तावत् प्रवक्ष्यामि यादृक रूपं प्रशस्यते । शङ्खचक्रधरं शान्तं पद्महस्तं गदाधरम् ।।९।।

छत्राकारं शिरस्तस्य कम्बुग्रीवं शुभेक्षणम् । तुङ्गनासं शूर्पकर्णं प्रशान्तोरुभुजद्वयम् ।।१०।।

क्वचिदष्टभुजं विद्याच्चतुर्भुजमथापि वा । द्विभुजश्चापि कर्त्तव्यो भवने स पुरोधसा ।।११।।

देयमष्टभुजस्यास्य यथास्थानं निबोधत । खड्गो गदा शरः पद्मं देयं दक्षिणतो हरेः ।।

धनुश्च खेटकञ्चैव शङ्खचक्रञ्च वामतः ।।१२।।

चतुर्भुजस्य वक्ष्यामि यथैवायुधसंस्थितिः । दक्षिणे च गदां पद्मं वासुदेवस्य कारयेत् ।।

वामतः शङ्खचक्रे च कर्त्तव्ये भूतिमिच्छता ।।१३।।

कृष्णावतारे तु गदा वामहस्ते प्रशस्यते । यथेच्छया शङ्खचक्रे उपरिष्टात् प्रकल्पयेत् ।।१४।।

---

प्रासादवत् प्रासादनिर्म्माणे यथा फलमुक्तं, तथा तस्याः प्रतिमाया निर्म्माणेऽपीत्यर्थः । एतच्चाग्रे मन्दिर-निर्म्माणे लेख्यम् । तथा हि—'सुरवेश्मनि यावन्तो द्विजेन्द्राः परमाणवः । तावद्वर्षसहस्राणि स्वर्गलोके महीयते ।। प्रासादे मृण्मये पुण्यं मयैतत् कथितं द्विजाः । तस्माद्दशगुणं पुण्यं कृते शैलमये भवेत् ।। ततो दशगुणं लौहे ताम्रे शतगुणं ततः । सहस्रगुणितं रौप्ये तस्मात् फलमुपाश्नुते ।। ततः शतसहस्रं वै सौवर्णे द्विजसत्तमाः । अनन्तं फलमाप्नोति रत्नचित्रे मनोहरे ।।' इति । सम्यगिति प्रासादतोऽप्यत्र विशिष्टं फलमित्यर्थः ।।७।।

लक्षणैरग्रे लेख्यैर्युक्ताम् ।।८।।

भवने गृहपूजायामित्यर्थः । स विष्णुः द्विभुजोऽपि आचार्य्येण कार्य्यः ।।११।।

खेटकं—चर्म्म ।।१२।।

---

और भी वर्णित है—श्रीभगवान् का मन्दिर निर्म्माण करने से जो फल लाभ होता है, मूर्त्ति निर्म्माण करने पर भी वैसा ही फल मिलता है । हे द्विजगण ! पक्व इष्टक व्यतीत उत्तरोत्तर वस्तु के द्वारा अथात् पत्थर, लोहे, ताँबा प्रभृति के द्वारा श्रीमूर्त्ति निर्म्माण करने पर भी समधिक फल प्राप्त हो सकता है ।।७।।

नारसिंह पुराण में उक्त है—सुलक्षणयुक्त श्रीनृसिंह मूर्त्ति प्रस्तुत करने पर, सब पापों से उत्तीर्ण होकर श्रीविष्णुधाम में गमन करता है ।।८।।

श्रीमूर्त्त्याविर्भावणविधिः

मत्स्यपुराण में लिखित है—श्रीविष्णु की जिस प्रकार मूर्त्ति प्रशस्त है, उसका वर्णन किया जाता है । श्रीविष्णु की मूर्त्ति शङ्खचक्रधर, प्रशान्त, पद्महस्त, एवं गदाधर हैं । उनके शिरोदेश-छत्राकार, गलदेश-शङ्खवत त्रिरेखायुक्त, नयन-उत्तम, नासिका-उन्नत, कर्ण-शूर्पाकार, एवं ऊरुद्वय तथा भुजद्वय प्रशान्त हैं । श्रीविष्णु कभी अष्टभुज, कभी चतुर्भुज होते हैं । गृह पूजा में उन श्रीविष्णु को द्विभुज करना भी पुरोहित का कर्त्तव्य है । अष्टभुज मूर्त्ति के जिस स्थान में जो स्थापन करना चाहिये, उसका श्रवण करो । श्रीहरि-

अधस्तात् पृथिवी देवी कर्त्तव्या पदमध्यतः । दक्षिणे प्रणतं तद्वद्गरुत्मन्तं निवेशयत् ॥
बामतस्तु भवेल्लक्ष्मीः पद्महस्ता सुशोभना ॥१५॥
गरुत्मानग्रतो वापि संस्थाप्यो भूतिमिच्छता । श्रीश्च पुष्टिश्च कर्त्तव्ये पार्श्वयोः पद्मसंयुते ॥१६
तोरणञ्चोपरिष्टाच्च विद्याधरसमन्वितम् । तथा कल्पलतोपेतं स्तुवद्भिरमरेश्वरैः ॥१७॥

श्रीमूर्त्तिपरिमाणम्

तत्रैव—

अङ्गुष्ठपर्व्वादारभ्य वितस्ति यावदेव तु । गृहे वै प्रतिमा कार्य्या नाधिका शस्यते बुधैः ॥१८
आषोड़शात्तु प्रासादे कर्त्तव्या नाधिका ततः । मध्योत्तमकनिष्ठा तु कार्य्या वित्तानुसारतः ॥१९

वाराहाच्च—

सौम्या तु हस्तमात्रा वसुदा हस्तद्वयोच्छ्रिता ।
प्रतिमा क्षेमसुभिक्षाय भवेत्त्रिचतुर्हस्तप्रमाणा च ॥२०॥

---

सर्व्वेषां परिवारपरिच्छदसन्निवेशमाह— अधस्तादिति सार्द्धैश्चतुर्भिः । श्रीः, सर्व्वसम्पदधिष्ठात्री महालक्ष्म्यंशभूता ॥१५-१६॥

अमरेश्वरैर्ब्रह्मरुद्रादिभिरुपेतम् । प्रणामस्तवनमुद्रा च शिल्पिषु प्रसिद्धैव ॥१७॥

गृहे स्वगृहान्तरर्च्चने ॥१८॥

आषोड़शात् एकहस्तमारभ्य षोड़शहस्तपर्य्यन्तमित्यर्थः । अत्र च मध्यतोत्तमत्वादिकं पूर्व्वपूर्व्वापेक्षयोत्तरोत्तरस्या उत्तमत्वेन, तत्रैव मध्यमत्वस्यापि कल्पनया ज्ञेयम् ॥१९॥

क्षेमाय त्रिहस्ता, सुभिक्षाय चतुर्हस्तेति यथासंख्यं ज्ञेयम् ॥२०॥

---

मूर्त्ति के दक्षिण कर चतुष्टय में, असि, गदा, शर, एवं कमल, वाम कर चतुष्टय में धनुः, चर्म्म, शङ्ख एवं चक्र प्रदान करना चाहिये। चतुर्भुज मूर्त्ति के आयुधसमूह जिस रीति से संस्थित होते हैं उसका कीर्त्तन किया जा रहा है। ऐश्वर्य्यकामी व्यक्ति, दक्षिण हस्तद्वय में गदा एवं पद्म, वाम हस्तद्वय में शङ्ख एवं चक्र प्रदान करे। कृष्णावतार के वामहस्त में गदा प्रशस्त है। इच्छा होने पर ऊद्ध्वं कर में शङ्ख चक्र कल्पनीय हैं। पदमध्य में, अधोदेश में पृथिवी की प्रतिमा, दक्षिणभाग में प्रणत गरुड़, वामादक् में पद्महस्ता सौन्दर्य्यमयी लक्ष्मीदेवी को स्थापन करे। गरुड़ को सम्मुख में स्थापन करना ही ऐश्वर्य्यकामी व्यक्ति का कर्त्तव्य है। ऐश्वर्य्यरूपिणी लक्ष्मी को एवं पुष्टि देवी को पद्म संयुक्ता करके पार्श्वद्वय में स्थापन करे। उपरिभाग में विद्याधर एवं कल्पलता विशिष्ट तोरण निर्म्माण करे। एवं तोरण निर्म्माण इस प्रकार करे कि, देवेश्वरगण श्रीविष्णुमूर्त्ति का स्तव कर रहे हैं ॥९-१७॥

श्रीमूर्त्तिपरिमाणम्

उक्त पुराण में लिखित है— निज गृह में अर्च्चन करने के निमित्त अङ्गुष्ठ पर्व से आरम्भ कर वितस्ति पर्य्यन्त प्रतिमा करना ही विज्ञ व्यक्ति का कर्त्तव्य है। इससे अधिक करना प्रशस्त नहीं है। निज सम्पत्ति के अनुसार ही उत्तम, मध्यम, एवं कनिष्ठादि क्रम से मूर्त्ति निर्म्माण करे ॥१८-१९॥

वराहपुराण में लिखित है— एक हस्त परिमित मूर्त्ति सौम्या है। हस्तद्वय परिमिता मूर्त्ति धनदायिनी है, हस्तत्रयोच्च मूर्त्ति कल्याण दायिनी है, एवं चतुर्हस्तोच्च प्रतिमा सुभिक्ष हेतु है ॥२०॥

अथारम्भे कृत्यम्

श्रीहयशीर्षपञ्चरात्रे—

प्रासादस्योत्तरे भागे शिलां नीत्वा च देशिकः।
कृत्वा कर्म्मकुटीं रम्यां प्रतिमाकर्म्म कारयेत् ॥२१॥
चतुरस्रायतां कृत्वा शिलां संस्थाप्य चार्च्चयेत्।
शिरो मुखञ्च पृष्ठे च अङ्कयित्वा तु बुद्धिमान् ॥२२॥
यजमानानुकूल्येन गुरुः कर्म्म समारभेत्। शिलां पूर्व्वाननां कृत्वा अथवा उत्तराननाम्।
तोयेन ब्रह्मघोषाद्यैः स्नाप्य पश्चाद्बलिं हरेत् ॥२३॥
दधि-दूर्व्वाक्षतैः पूजां नवारम्भे समाचरेत्। शुक्लैर्गन्धैश्च माल्यैश्च मन्त्रेणानेन देशिकः ॥२४॥

अथ तत्र मन्त्रः

ॐ तत् सत् नमः। योऽसौ भगवान् सर्व्वजगतः प्रवीरः सङ्कर्षणो वासुदेवः, प्रवरवराह जय सुप्रतिष्ठित कीर्त्ति प्रवर्द्धयस्व ॐ ॐ फट् फट् नमः ॥२५॥
स्वस्ति वाच्य द्विजान् सम्यग्गुरुभक्त्या समर्च्चयेत्। वस्त्रपुष्पादिदानेन अशाठ्येन तु पूजयेत् ॥२६
मङ्गलैर्ब्रह्मघोषाद्यैः प्रतिमा संविभाजयेत्। मध्यसूत्रं समास्फाल्य तीक्ष्णशस्त्रेण चोत्किरेत् ॥२७

---

प्रतिमायाः कर्म्म निर्म्माणकृत्यम् ॥२१॥
स्नाप्य स्नापयित्वा ॥२३॥
वाच्य वाचयित्वा ॥२६॥
समास्फाल्य पातयित्वा, उत्किरेत् अङ्कयेत् ॥२७॥

---

अथारम्भे कृत्यम्

श्रीहयशीर्ष पञ्चरात्र में लिखित है—पुरोहित प्रासाद के उत्तरदिक् में शिला ले जाकर सुन्दर कुटीर निर्म्माण पूर्वक वहाँ पर देवप्रतिमा प्रस्तुत करावे ॥२१॥

सुबुद्धि गुरु, शिलाको चतुष्कोण करके स्थापन कर, उस शिलापृष्ठ में देवता का मस्तक और मुखप्रदेश अङ्कन करके पूजा करे। यजमान के आनुकूल्य में कार्य्यारम्भ करे। शिला को पुनर्वार पूर्वमुख वा उत्तर मुख करके वेद शब्द उच्चारण करते करते जल से स्नान कराकर समस्त पूजोपहार समर्पण करे ॥२२-२३

प्रतिमा निर्म्माण के प्रारम्भ में आचार्य्य, दधि, दूर्वा, अक्षत, श्वेत चन्दन, एवं माल्य द्वारा वक्ष्यमाण मन्त्र से पूजा करे ॥२४॥

अथ तत्र मन्त्रः

"ॐ तत् सत् नमः, योऽसौ भगवान्" इत्यादि मन्त्र, अर्थात् जो भगवान्, सर्वगत, महावीर हैं, जो सङ्कर्षण, वासुदेव और वराहमूर्त्तिधारी हैं, उनकी जय हो जय हो। हे सुप्रतिष्ठित! आप कीर्त्ति को वर्द्धन कर दीजिये। यह कहकर, "ॐ ॐ फट् फट् नमः" उच्चारण पूर्वक पूजा करे। ब्राह्मणों से स्वस्ति वाचन कराकर शठता त्यागपूर्वक गुरुवत् भक्तिसहित वस्त्र और पुष्पादि द्वारा उन सबकी पूजा करे ॥२५-२६॥

अनन्तर मङ्गलमय वेदध्वनि के सहित प्रतिमा का सम्यक् प्रकार से विभाग करना चाहिये एवं शिला में सूत्रपात कर तीक्ष्ण अस्त्र से अङ्कित करे ॥२७॥

अथाङ्गपरिमाणविशेषः

मात्स्ये—

स्वकीयाङ्गुलिमानेन मुखं स्याद्द्वादशाङ्गुलम् । मुख-मानेन कर्त्तव्या सर्व्वावयवकल्पना ॥२८

अथ अङ्गुलिपरिमाणम्

श्रीहयशीर्षपञ्चरात्रे—

अभिप्रेतप्रमाणन्तु नवधा प्रविभाजयेत् । नवमे भास्करैर्भक्ते भागः स्वाङ्गुलमुच्यते ॥२९॥

श्रीनारदीये च—

विम्बमानन्तु नवधा प्रोच्छ्रयात् संविभज्य वै । भागं भागं ततो भूयो भवेद्द्वादशधा द्विज ॥३०

तदङ्गुलं स्याद्विम्बस्य ॥ इति ।

एवं पुराणतन्त्रादि दृष्ट्वात्रेदं विलिख्यते । ललाटाच्चिवुकान्तं स्यात् श्रीमुखं द्वादशाङ्गुलम् ॥३१

तत्राननं भाग एकस्तत्रैव चतुरङ्गुलम् । ललाटं नासिका तद्वद्गुल्फमर्द्धाङ्गुलं भवेत् ॥३२॥

अर्द्धाङ्गुलोऽधरस्तूद्ध्वोऽपरश्चैकाङ्गुलो मतः ।

द्व्यङ्गुलं चिबुकं चाथ ग्रीवा स्याच्चतुरङ्गुला ॥३३॥

---

स्वकीयं श्रीमूर्त्तेरेव यदङ्गलं, तस्य मानेन । अङ्गुलिरिति वक्तव्ये अङ्गुलमित्यार्षम् । एवमग्रेऽपि ॥२८॥

स्वकीयाङ्गुलिमानमेव लिखति—अभिप्रेतेत्यादिसपादद्वयेन । अभिप्रेतं निजाभीष्ट-प्रमाणं श्रीमूर्त्ति-परिमाणम्, भास्करैर्द्वादशभिर्भागैर्भक्ते विभक्ते सति तदेकभागः स्वस्याः श्रीमूर्त्तेरङ्गुलम् ॥२९।

विम्वं—प्रतिमा ॥३०॥

अधुना अवयव-मानं लिखति—एवमित्यादि । आदि-शब्दात् संग्रहपुस्तकादि, इदमग्रे लेख्यं, ललाटात् श्रीमल्ललाटोपरिभागादारभ्य । तथा च श्रीनारदीयपञ्चरात्रे — 'चिवुकाच्च ललाटान्तम्' इत्यादि । एतदादिकमग्रे सर्व्वं तत्र तत्र व्यक्तं भावीति सम्पूर्णवचनमत्र न संग्राह्यम् ॥३१॥

तत्र तस्मिन्नानन एव ललाटश्चतुरङ्गुलं, तद्वत् चतुरङ्गुलेत्यर्थः ॥३२॥

अपरः अधस्तनः, श्रीमुखनिजविभागं लिखित्वा तदधः श्मश्र्वादिलिखनेन भिन्नोपक्रमादध-शब्दः । एवमग्रेऽपि ज्ञेयम् ॥३३॥

---

अथाङ्गपरिमाणविशेषः

मत्स्यपुराण में उक्त है—श्रीमूर्त्ति के निज अङ्गुलि प्रमाण की मूर्त्ति का वदनकमल द्वादशाङ्गुल करे, मुख के परिमाण के अनुसार समस्त अङ्गों की कल्पना करे ॥२८॥

अथ अङ्गुलिपरिमाणम्

श्रीहयशीर्ष पञ्चरात्र में उक्त है—स्वीय अभीष्ट परिमित श्रीमूर्त्ति के परिमाण को नव (९) अंश में विभक्त कर उसके एक अंश के बारह भाग करने पर, एक भाग में जो हो, श्रीमूर्त्ति की अङ्गुली का परिमाण वही जानना चाहिये ॥२९॥

श्रीनारद पुराण में लिखित है—हे द्विज ! उच्च से निम्न पर्य्यन्त श्रीमूर्त्ति को नव अंश में विभक्त करके उसके एक एक भाग को पुनर्वार द्वादश अंश में विभक्त करे । इस प्रकार करने पर, एक भाग में जो हो, वही प्रतिमा की एक अङ्गुली का परिमाण जानना चाहिये ॥३०॥

पुराण तन्त्रादि पर्य्यालोचन पूर्वक यहाँ वर्णन किया जाता है कि—भालतट के उपरि देश से चिबुक पर्य्यन्त श्रीमुख को द्वादशाङ्गुल परिमाण करना चाहिये । उसमें एकअंश मुख, मुख में ललाट—चतुरङ्गुली

वक्षोभागो भवेदन्यस्तस्मान्नाभ्यवधिः परः। ततोऽपरश्च मेढ्रान्तस्तस्मादुरुविभागकौ ॥३४॥
तथा द्विभागिके जङ्घे जानुनी चतुरङ्गुले। पादौ च तत्समावित्थं दैर्घ्यभागा नवोदिताः ॥३५

कुत्राप्युच्चात् ललाटस्योपरिष्टात्त्र्यङ्गुलं शिरः।
तद्वद्ग्रीवा जानुपादास्तथापि स्युर्नवैव ते ॥३६॥
इति स्यात् सर्व्वतो दैर्घ्ये साष्टोत्तरशताङ्गुलाः।
चतुर्द्दशाङ्गुलो मौलिः क्वचिच्च द्वादशाङ्गुलः ॥३७॥

अथ विस्तारः

विस्तारेऽष्टाङ्गुलं यस्या ललाटं त्वर्द्धचन्द्रवत्।
भ्रुवौ नेत्रान्तपर्य्यन्ते प्रत्येकं चतुरङ्गुले ॥३८॥

---

अन्यः श्रीमुखविभागाद्भिन्नः, तस्माद्वक्षसः ॥३४॥

तथेति समुच्चये, तत्समौ चतुरङ्गुलौ, तौ च गुल्फात् पार्ष्णिपर्य्यन्तौ ज्ञेयौ, दैर्घ्यस्य लिखनात् ॥३५॥

कुत्रापि श्रीनारदीय एव, एतदादिप्रमाणवचनानि च सर्व्वाण्येवाग्रे तत्र तत्र व्यक्तीभविष्यन्त्येवेत्यत्र पूर्व्ववन्न लिख्यन्ते। ग्रीवादयोऽपि तद्वत्; त्र्यङ्गुलाः त्रिभागाः ॥३६॥

तद्वाढ्यार्थमेव लिखति- इतीति। सा श्रीमूर्त्तिः, मौलिस्तु ललाटोपरि श्रीमस्तके ज्ञेयः। क्वचित् श्री-हयशीर्षीये, तथापि द्वादशाङ्गुलत्वं द्व्यङ्गुलालकस्थल-त्यागादविरुद्धमेव। तथा च तत्रैव—'परेण द्व्यङ्गुलौ शङ्खौ' इत्यादि। अस्यार्थः—परेणेति ललाटात् परतः तदुपरीत्यर्थः। तत्पार्श्वयोराधिक्यात्तथालकान्विता-वित्युक्तेश्च ॥३७॥

एवं दैर्घ्यं लिखित्वाङ्गानां विस्तारं लिखति— विस्तार इत्यादिना। तस्याः श्रीमूर्त्तेः ॥३८॥

---

नासा चतुरङ्गुली और गुल्फदेश अर्द्धाङ्गुली प्रमाण करना चाहिये। अनन्तर अधर अर्द्ध अङ्गुल, ओष्ठ एकाङ्गुल, चिबुक दो अङ्गुली,—इस प्रकार सब सहित मुख का परिमाण बारह अङ्गुली होगा। ग्रीवा चार अङ्गुली करनी चाहिये। मुख भाग से वक्षोभाग भिन्न होगा। वक्षोभाग के अधः से नाभि पर्य्यन्त और एक अंश है। उसके पश्चात् मेढ्र अर्थात् पुंचिह्न पर्य्यन्त अन्य अंश होगा। उससे ऊरु दो अंश है। इसी प्रकार जङ्घा भी ऊरु के समान अंश द्वय हैं, अर्थात् चतुर्विंशाङ्गुली हैं। जानु चतुरङ्गुल एवं चरणद्वय भी चतुरङ्गुल हैं। सुतरां दैर्घ्य भाग नवधा वर्णित है। अर्थात् ललाट, नासा, गुल्फ, अधर, ओष्ठ और चिबुक इन छः में एक भाग अर्थात् बारह अङ्गुल (१) ग्रीवा, जानु और पद- इन तीन और एक भाग, अर्थात् बारह अङ्गुल (२) वक्षः एक भाग, अर्थात् बारह अङ्गुल, (३) वक्षः के प्रान्त से नाभि पर्य्यन्त एकभाग अर्थात् बारह अङ्गुल। (४) नाभि के नीचे से मेढ्र तक एक भाग अर्थात् बारह अङ्गुल (५) ऊरु दो भाग अर्थात् चौबीस अङ्गुल, ६-७ एवं जङ्घा दो भाग, अर्थात् चौबीस अङ्गुल। ८-९ प्रतिमा के दैर्घ्य को एक सौ आठ भाग करने पर, एक एक भाग में प्रतिमा की एक अङ्गुली होती है, इस रीति से प्रतिभाग बारह अङ्गुल होगा। अतएव नवभाग में एक सौ आठ अङ्गुल हुआ। श्रीनारदपुराण में कथित है— ललाट के अर्द्ध से मस्तक पर्य्यन्त तीन अङ्गुल एवं ग्रीवा, जानु, पद, प्रत्येक तीन अङ्गुल परिमाण होगा। इस प्रकार होने पर प्रति मूर्त्ति का दैर्घ्य सर्वथा अष्टोत्तरशताङ्गुल होगा। मतान्तर में शिरोभाग चतुर्दश-अङ्गुली एवं द्वादशाङ्गुल होगा ॥३१-३७॥

अथ विस्तारः

श्रीमूर्त्ति के ललाटदेश को अर्द्धचन्द्रवत् अष्टाङ्गुल विस्तृत करना चाहिये। नेत्र के प्रान्त पर्य्यन्त

तयोर्मध्ये द्वयङ्गुलं स्यात् क्वचिच्चैकाङ्गुलं मतम् ।
भ्रूलेखार्द्धाङ्गुला सा च मध्ये स्थूलाग्रतः कृशा ॥३९॥
तीक्ष्णा नतधनुस्तुल्या कर्णौ तु चतुरङ्गुलौ ।
षडङ्गुलौ वा तावुच्चौ विद्धौ चेच्चिबुकावधि ॥४०॥
विततौ द्वयङ्गुलौ प्रान्तेऽर्द्धाङ्गुलौ वैककाङ्गुलौ ।
कर्णच्छिद्रन्तु नेत्रान्तसममेकाङ्गुलं भवेत् ॥४१॥
कर्णोपरिष्ट त् श्रीमस्तमुच्चत्वे द्वादशाङ्गुलम् ।
त्रिगुणः परिधिस्तस्य द्विचत्वारिंषदङ्गुलः ॥४२॥
सकेशस्याथ नयने दैर्घ्यं तु द्वयङ्गुले मते । कुत्रापि त्र्यङ्गुले ते हि विस्तारे चैकलाङ्गुले ॥४३
तारकात्र तृतीयांशा दृष्टिः स्यात् पञ्चमांशिका ।
क्वचित् तृतीयभागैव दृङ्मध्यं चतुरङ्गुलम् ॥४४॥

---

क्वचित् श्रीनारदीये । उभयथाप्यलिखिते एव ते ॥३९॥

वा-शब्दो मतभेदात् । स चात्र विद्धत्वापेक्षया घटत एव । उच्चैः दैर्घ्य इत्यर्थः । एवमग्रेऽपि, चिबुकावधीति विद्धयोरष्टाङ्गुलत्वेन तावत्प्रवेशप्राप्तेः ॥४०॥

प्रान्ते अधस्तनान्त्यभागे, एककमेकम्, एकाङ्गुलौ वा । ईदृक् मतभेदः, स्वस्वरुच्यनुसारेण सौन्दर्य्यस्य तत्तत्कालीन-श्रीमदङ्गषद्भेदस्य वापेक्षया । नेत्रान्ताभ्यां समं, न ताभ्यामुच्चं, न च नीच समरेखयोर्वर्त्तमानमित्यर्थः । यच्चोक्तं श्रीहयशीर्षदेवेन—'भ्रूसमा' इत्यादि । तच्च भ्रुवोः प्रान्तभागस्य प्रायो नेत्रान्तव्यापकताभिप्रायेण ॥४१॥

द्वादशाङ्गुलमिति किरीटस्य द्वयङ्गुलोच्चत्वात् मौलेर्द्वादशाङ्गुलता, पक्षे किरीटस्यैव श्रीमस्तकस्य तावदुच्चत्वात् । यजमानेच्छया मौल्यभावे च स्वत एव तावज्ज्ञेयम् । तस्य श्रीमस्तकस्य परिधिः परिणाहः, त्रिगुणः षट्त्रिंशदङ्गुल इत्यर्थ । एवमग्रेऽन्यत्रापि ॥४२॥

सकेशस्य च तस्य परिधिश्चत्वारिंशदङ्गुल इत्यर्थः । केशपाशस्तु दीर्घः स्कन्धोपरि विन्यस्य । कुत्रापि श्रीनारदीये, एकलमेकम् ॥४३॥

क्वचित्तत्रैव, तत्प्रान्तौ चार्द्धाङ्गुलौ ज्ञेयौ, 'द्रोणी चार्द्धाङ्गुला मता' इति श्रीहयशीर्षदेवोक्तेः । दृशोर्द्वयोर्मध्यम् ॥४४॥

---

विस्तृत भ्रू युगल के प्रत्येक की विस्तृति चतुरङ्गुल होगी । भ्रू-युगल के मध्यवर्त्ती व्यवधान स्थान दो अङ्गुल परिमित होगा । किसी के मत में एकाङ्गुल होगा । भ्रू-रेखा की विस्तृति अर्धाङ्गुली होगी, एवं मध्य, स्थूल, अग्र में कृश एवं तीक्ष्ण और उसको नत धनुकाकृति करनी चाहिये । कर्णयुगल के दैर्घ्य प्रत्येक चार अङ्गुल होगा । चिबुकावधि बिद्ध होने से कर्णद्वय का दैर्घ्य छै अङ्गुल करे ॥३८-४०॥

कर्ण युगल की विस्तृति दो अङ्गुली करे, एवं निम्न प्रान्त में अर्धाङ्गुल वा एक अङ्गुल विस्तृत करे एवं कर्णरन्ध्र, नेत्र प्रान्त के मान से एक अङ्गुल होंगे । कर्णोपरि सकेश श्रीमस्तक द्वादशाङ्गुल उच्च एवं परिधि षट्त्रिंशदङ्गुल (३६) करे । मतान्तर में नेत्र का दैर्घ्य दो वा तीन अङ्गुल एवं विस्तृति एक अङ्गुल करना कर्त्तव्य है । नेत्र परिमाण के तृतीयांश नेत्र तारका, उसके पञ्चमांश अथवा मतान्तर में उसके तृतीयांश दृष्टि होगी । नेत्रद्वय के मध्यभाग का व्यवधान चतुरङ्गुल होना चाहिये ॥४१-४४॥

कुत्रचित् त्र्यङ्गुलं कर्णदृङ्मध्यं चतुरङ्गुलम् । सृक्कणीकर्णयोर्मूलात् षडङ्गुलविदूरतः ॥४५

हनुके द्व्यङ्गुले स्यातां निर्गते कर्णमूलतः । कपोलौ दर्पणाकारौ हन्वग्रे चतुरङ्गुलौ ॥४६॥

नासोच्चैकाङ्गुला मूले द्व्यङ्गुला चाग्रतो भवेत् ।
एकाङ्गुले पुटे तस्यास्तयोस्त्वर्द्धाङ्गुलं बिलम् ॥४७॥

दलञ्च निष्पावसमं सा ह्येवं करवीरवत् । विदारभागस्तुण्डस्य विस्तारे चतुरङ्गुलः ॥४८॥

चिवुकं त्र्यङ्गुलं तारे ग्रीवा त्वष्टाङ्गुला भवेत् ।
परिधिस्त्रिगुणस्तस्याः स्कन्धावुच्चौ षडङ्गुलौ ॥४९॥
विस्तारेऽष्टाङ्गुलौ पीनौ वृषस्कन्धोपमौ मतौ ।
भुजौ सुवृत्तौ तत्रोद्‌र्ध्वो बाहुः स्यात् षोड़शाङ्गुलः ॥५०॥

---

कुत्रचित् श्रीनारदीय एव । कर्णदृशोर्मध्यम् । सृक्कणी ओष्टप्रान्तभागौ, अतएव श्रीमुखविवरस्याप्यन्तभागौ स्याताम् । तथा च श्रीदशमस्कन्धे (१६।२५)—'तं जिह्वया द्विशिखया परिलेलिहानं, द्वे सृक्कणी' इति । किञ्च—'प्रतिसर्द्धेते सृक्कभ्यां सव्यासव्ये नगोदरे' इति । षडङ्गुलैर्विदूरतो वर्त्तेते । यच्च श्रीनारदीये—'सृक्कणी चतुरङ्गुले' इति । तत्र सृक्क-शब्देन सृक्कद्वयपर्य्यन्तं श्रीमुखविवरभाग एवाभिप्रेतः ॥४५॥

हनुकं कर्णपार्श्वतः कपोलपर्य्यन्तो भागः । अतः कर्णमूलं कर्णपार्श्व एवेत्यर्थः । कर्णाधस्ताच्च हनुकं चेत्तथापि तदुपर्य्येव कपोलौ । ततश्च हनुनोऽग्रे उपरीत्यर्थः । गण्डयोर्दर्पणाकारत्वेन सर्व्वतश्चतुरङ्गुलत्वाद्धनूद्‌र्ध्वभागव्याप्तेः । तथा च मात्स्ये—'हनुके द्व्यङ्गुले' इत्यादि । अस्यार्थः—हन्वग्रे मण्डलं गण्डमण्डलं विस्ताराद्धनुतो द्विगुणश्चतुरङ्गुलम् । तच्च सर्व्वत्र इति ज्ञेयं, सर्व्वत्र तस्य फलकमुकुरादि-सादृश्योक्तेरिति ॥ ॥४६॥

पुटे च सर्व्वत एकाङ्गुले ज्ञेये, करवीरसादृश्योक्तेः, क्वचित्तिलपुष्पतुल्यतोक्तेश्च । त्रयोः पुटयोर्विलं छिद्रम् ॥४७॥

दलञ्च तयोरेव स्थौल्यं, निष्पावं द्विदलान्नविशेषः । एवमनेनोक्तप्रकारेण सा नासा करवीरपुष्पसदृशी॥४८

तारे विस्तारे, उच्चौ बाहुमूलात् । अतएवोक्तं मात्स्ये— कक्षयोरुपरिष्टाच्च' इत्यादि ॥४९॥

विस्तारश्च तयोर्बाहुमूलाद्ग्रीवान्तम् । पीनावित्यनेन तदुपरिभागविस्तारश्चतुरङ्गुलो ज्ञेयः, वृषस्कन्धोपमत्वात् । तत्र तयोर्भुजयोरुद्‌र्ध्वो भागः, बाहुः बाहुसंज्ञः ॥५०॥

---

श्रीनारदपुराण में वर्णित है—नेत्रद्वय के मध्यस्थल का व्यवधान तीन अङ्गुल करे । कर्ण एवं नेत्र के मध्यस्थल का व्यवधान चार अङ्गुल एवं सृक्कयुगल-श्रीमुखच्छिद्र के दो प्रान्त भाग कर्णयुगल से छै अङ्गुली दूर करे । कर्ण के पार्श्व से आरम्भ करके हनु (ठोड़ी) दो अङ्गुल करे । हनु के आगे दर्पणाकार कपोलयुगल चार अङ्गुल करने चाहिये । नासामूल एक अङ्गुल एवं नासाग्र दो अङ्गुल उच्च करे । नासापुट, एकाङ्गुल एवं नासारन्ध्र अर्धाङ्गुल करना चाहिये । इन दोनों की स्थूलता निष्पाव तुल्य (द्विदल सिम के तुल्य) और नासिका के आकार करवीर (कनेर) के पुष्प के समान होनी चाहिये । मुख के विदारांश चतुरङ्गुल विस्तृत होगा । चिवुक (चोंच) का विस्तार तीन अङ्गुल होगा, ग्रीवा अष्ट-अङ्गुल, ग्रीवा की परिधि-चतुर्विंशति अङ्गुल, एवं स्कन्ध बाहुमूल से छै अङ्गुल उच्च करे । स्कन्ध, बाहुमूल से ग्रीवा पर्य्यन्त अष्ट अङ्गुल विस्तृत एवं वृषस्कन्धवत् स्थूल करना चाहिये । भुजद्वय सुगोल करे

अष्टादशाङ्गुलोऽधस्तात् प्रबाहुः क्वचिदन्यथा। बाहोस्तु मध्ये परिधिर्भवेदष्टादशाङ्गुलः ।५१
षोड़शाङ्गुलकोऽन्यस्य तदग्रे द्वादशाङ्गुलः। दीर्घं पाणितलं सप्ताङ्गुलं पृथु षड़ङ्गुलम् ।।५२
क्वापि पञ्चाङ्गुलं निम्नमध्यं सल्लक्षणान्वितम्। पञ्चाङ्गुला मध्यमान्ये सार्द्धं च चतुरङ्गुले।।५३

कनिष्ठाङ्गुलिरङ्गुष्ठोऽप्युक्तौ द्वौ चतुरङ्गुलौ।
सार्द्धत्र्यङ्गुलकोऽङ्गुष्ठः क्वाप्ययन्तु द्विपर्व्वकः ।।५४।।

अन्यास्त्रिपर्व्विकाः सर्व्वाः गोपुच्छाकृतिशोभनाः। समानि सर्व्वपर्व्वाणि स्वस्वमानानुरूपतः ।।५५

क्वचिच्च मध्यमामध्यपर्व्वंद्व्यङ्गुलकं मतम्।
अन्यानि सर्व्वपर्व्वाणि न्यूनानि यवशः क्रमात् ।।५६।।
अङ्गुष्ठस्योर्द्ध्वपर्व्वस्थः परिधिश्चतुरङ्गुलः।
क्रमशः किञ्चिदूनाश्च सर्व्वे परिधयोऽपरे ।।५७।।

---

तदधस्ताद्वर्त्तमानश्च प्रबाहुसंज्ञः। क्वचित् हयशीर्षीयादौ त्वन्यथा तद्विपरीतः। 'बाहुरष्टादशाङ्गुलः प्रबाहुः षोड़शाङ्गुलः' इति तच्च चिन्त्यम्; 'अधस्तात्स्कन्धशिखराद्बाहुः स्यात् षोड़शाङ्गुलः' इति श्रीनारदीयोक्तेः, लोके तद्दर्शनाच्च, किञ्च, 'क्वचित् प्रबाहुः कृष्णस्य सप्तदशाङ्गुलो मतः। अथवाङ्गुलहीनस्तु द्वितीयं सर्व्वमुच्यते ।।' इति मात्स्योक्तेः ।।५१।।

अन्यस्य प्रबाहोः तस्य, प्रबाहोरग्रे, पृथु विस्तीर्णम् ।।५२।।

क्वापि श्रीनारदीये, सल्लक्षणैः रेखात्मकैर्ध्वजवज्रादिभिरारण्यादिभिश्चान्वितम्। मध्यमाङ्गुलिः, अन्ये तर्ज्जन्यनामिके द्वे ।।५३।।

क्वापि तत्रैव, अङ्गुष्ठः सार्द्धत्र्यङ्गुलः, अयमङ्गुष्ठस्तु ।।५४।।

गोपुच्छेति मूले स्थूलत्वात् क्रमशोऽग्रे कृशत्वाच्च। शोभना इत्यनेन ततोऽधिकं सौन्दर्य्यं बोधितमेव। स्व स्वमानानुरूपत इति स्वकीयं यत् दैर्घ्य-परिमाणं, तत्तृतीयभागेनैकं पर्व्वत्येवं सर्व्वासां पर्व्वाणीत्यर्थः ।।५५

क्वचिन्मात्स्ये, सर्व्वपर्व्वाणि पञ्चानामपि सर्व्वाणि पर्व्वाणि, तथा च तत्रैव—'यवो यवस्तु सर्व्वस्याः' इत्यादि। क्रमादिति यस्या यावत् प्रमाणं पर्व्वं, तदनुसारेण न्यूनमित्यर्थः। एवमग्रेऽपि ज्ञेयम् ।।५६।।

पर्व्वस्थः पर्व्ववर्त्ती, अपरे सर्व्वे इति अङ्गुष्ठस्याधोवर्त्ती, तथैव पराणाञ्च सर्व्वेषां सर्व्वे परिधयः ।।५७।।

---

एवं उसके अर्द्धभाग में बाहु षोड़शाङ्गुल करे। उसके अधोभाग प्रबाहु अष्टादशाङ्गुल करे। किसी के मत में प्रबाहु अन्य प्रकार भी होते हैं। बाहु के मध्यस्थल की परिधि षोड़श ङ्गुल एवं उसके अग्रदेश की परिधि द्वादशाङ्गुल करे। करतल, सप्ताङ्गुल दीर्घ एवं षड़ङ्गुल विस्तृत करे। ग्रन्थान्तर में (श्रीनारद पुराण में) वर्णित है–करतल पञ्चाङ्गुल विस्तृत एवं करतल के मध्यभाग निम्न एवं ध्वजवज्रादि सुलक्षणान्वित करे। मध्यमा पञ्चाङ्गुल एवं अनामिका, तर्जनी सार्धचतुरङ्गुल करे। कनिष्ठ, अङ्गुष्ठ इन दोनों का परिमाण चार अङ्गुल करे। मतान्तर में पर्वद्वययुक्त अङ्गुष्ठ सार्धत्र्यङ्गुल एवं अन्यान्य अङ्गुलीसमूह के पर्वत्रय का निर्म्माण सुन्दर गोपुच्छाकार होना चाहिये। स्व स्व परिमाणानुसार समस्त पर्व ही एकरूप होने चाहिये। मतान्तर में मध्यमाङ्गुली का मध्यपर्व दो अङ्गुल एवं अन्यान्य पर्व क्रमशः एक यव न्यून करना चाहिये। अङ्गुष्ठ के ऊर्द्ध्व पर्व की परिधि चार अङ्गुल एवं अङ्गुष्ठ के अधः पर्व की तथा अन्यान्य अङ्गुली पर्व की परिधि यथा क्रम से किञ्चित् न्यून करना कर्त्तव्य है ।।४५-५७।।

कूर्म्मपृष्ठसमाः स्वस्वपर्व्वार्द्धप्रतिमा नखाः । चतुर्विंशत्यङ्गुलोऽथ विस्तारो वक्षसो भवेत् ॥५८

स्तनयोस्तु द्वयोर्मध्ये विस्तारो द्वादशाङ्गुलः । द्व्यङ्गुलः स्वस्वविस्तारे चुचुकौ यवमात्रकौ ॥५९

कक्षे षड़ङ्गुले तद्वद्बाहुमूलस्तनान्तरे । चतुर्द्दशाङ्गुलं चारु विस्तारे जठरं भवेत् ॥६०॥

मध्ये चैकाङ्गुला नाभिर्निम्ना च वितता तथा ।
नाभिमध्ये तु परिधिर्द्विचत्वारिंशदङ्गुला ॥६१॥

विस्तारे पुरुषस्योक्ता कटिरष्टादशाङ्गुला । परिणाहो भवेत्तस्याश्चतुःपञ्चाशदङ्गुलः ॥६२

ऊर्व्वोर्मूले तु विस्तारो द्वादशाङ्गुलो भवेत् ।
मध्येऽधिकः क्रमादूनः परिधिस्त्रिगुणोऽखिलः ॥६३॥

चतुर्द्दशाङ्गुलः क्वापि परिणाहस्तु तादृशः । उच्चमेकाङ्गुलं जानुद्वयं त्र्यङ्गुलकं ततम् । ६४

तन्मध्ये परिधिस्त्वेकविंशत्यङ्गुलको भवेत् ।
क्वाप्यष्टाङ्गुलविस्तारः परिधौ त्रिगुणं हि तत् ॥६५॥
विस्तारो जङ्घयोः सप्ताङ्गुलो मध्येऽपि तादृशः ।
परिधिः क्वापि तन्मूले विस्तारस्तु षड़ङ्गुलः ॥६६॥

---

स्वस्य स्वस्य तस्य विस्तारः ॥५९॥

अतः षड़ङ्गुलस्तयोः परिणाहो ज्ञेयः, बाहुमूलस्तनयोरन्तरे मध्यद्वयम् । चारुअश्वत्थपत्राकारात्तथा त्रिबलिसूक्ष्मरेखात्रयादिना च सुन्दरम् ॥६०॥

पुरुषस्येति स्त्रीणां तदाधिक्यात्, तच्चाग्रे व्यक्तं भावि ॥६२॥

अधिको विस्तारस्तदग्रे च क्रमेणोनः, हस्तिहस्तकदलीवृक्षाद्याकारसादृश्यात् । अखिल इति मूलमध्याग्रवर्त्ती सर्व्वोऽपि परिधिः स्वस्वमानानुसारेण त्रिगुणः ॥६३॥

क्वापि वाराह्याम्, तादृशस्तु त्रिगुणः, ततं विस्तीर्णम् ॥६४॥

क्वापि श्रीहयशीर्षीये, तत् जानु ॥६५॥

अपि-शब्दात् मध्य इत्यस्योभयतोऽप्यन्वयः, परिधिस्तादृशस्त्रिगुणः । क्वापि श्रीनारदीये ॥६६॥

---

नखसमूह कूर्मपृष्ठवत् एवं स्व स्व पर्व के अर्धप्रमाण हों । चतुर्विंशति अङ्गुल वक्ष का विस्तार, एवं स्तनद्वय के मध्य भाग का विस्तार द्वादशाङ्गुल होगा । स्व स्व परिमाण में स्तनयुगल दो अङ्गुल विस्तृत कुचाग्र, यव परिमित एवं बाहु तथा स्तन–उभय के मध्यस्थ कक्ष, षड़ङ्गुल परिमित होगा । उदर का विस्तार चतुर्दशाङ्गुल, एवं मनोहर (अश्वत्थ पत्राकृति एवं रेखात्रय समन्वित)करना चाहिये । मध्यस्थल में नाभि एकाङ्गुल गभीर एवं विस्तृत हो । सुदेव मूर्त्ति के कटिदेश अष्टादशाङ्गुल विस्तृत होना चाहिये । यह कथित है । कटि स्थान की परिधि चतुष्पञ्चाशदङ्गुली (चौवन अङ्गुली) और दोनों ऊरु मूल का विस्तार द्वादशाङ्गुल होगा । मूल, मध्य और अग्रभाग सबकी विस्तृति क्रमशः निज निज परिमाणानुसार त्रिगुण एवं मध्य में अधिक और क्रमशः न्यून करे ॥५८-६३॥

स्थानान्तर में (वराहपुराण में) उक्त है—उरुद्वय चतुर्दशाङ्गुल विस्तृत एवं परिधि भी उतनी ही हो । जानुद्वय की उच्चता एकाङ्गुली, एवं विस्तृति अङ्गुलीत्रय होगी एवं उसकी परिधि एकविंशति अङ्गुल करनी चाहिये । स्थानान्तर में (हयशीर्षपञ्चरात्र में) वर्णित है–जानु अष्टाङ्गुल विस्तृत एवं उसकी परिधि

परिधिस्त्रिगुणोऽग्रे तु चतुर्युक्तदशाङ्गुलः ।
क्वचित्त्वेकाधिकः सोऽङ्घ्री द्वौ च चतुर्द्दशाङ्गुलौ । ६७॥
द्वादशाङ्गुलकौ क्वापि विस्तारे तौ षड़ङ्गुलौ ।
कूर्म्मपृष्ठोन्नतौ गुल्फद्वयं द्व्यङ्गुलकं तयोः ॥६८॥
दैर्घ्ये त्र्यङ्गुलकोऽङ्गुष्ठः क्वचिच्च चतुरङ्गुलः ।
प्रदेशिनी तु तत्तुल्या षोड़शांशोनमध्यमा । ६९॥
अन्ये द्वे चाष्टमांशोने तादृश्यो वाखिलाः क्रमात् ।
क्वाप्यन्ये द्वे पादहीने उच्चश्चैकाङ्गुलेन सः ॥७०॥
सपादाङ्गुलतः क्वापि पराः सर्व्वास्तदर्द्धतः ।
पञ्चाङ्गुलोऽस्य परिधिर्देशिन्यास्त्र्यङ्गुलो भवेत् ॥७१॥

क्वचित्तत्रैव, सः अग्रचः परिधिः एकाधिकः पञ्चदशाङ्गुल इत्यर्थः। अतस्तन्मते तयोरग्रे विस्तारः पञ्चाङ्गुलो ज्ञेयः। तथा च तत्रैव—जङ्घावसान इत्यादि चतुर्द्दशाङ्गुलौ ज्ञेयौ दैर्घ्ये। तच्च पार्ष्णिपृष्ठतोऽङ्गुष्ठाग्रान्तम्। तथा च तत्रैव—'पार्ष्ण्योश्च पृष्ठतः' इत्यादि ॥६७॥

क्वापि श्रीहयशीर्षीये, दैर्घ्ये द्वादशाङ्गुलौ, द्व्यङ्गुलकं दैर्घ्ये विस्तारे च ज्ञेयं, तयोः पादयोः ॥६८॥

तच्चतुरङ्गुलं वर्त्तुलं ज्ञेयम्, क्वचिच्च श्रीनारदीये प्रदेशिनीषोड़शांशेनोना मध्यमाङ्गुलिः ॥६९॥

अन्ये अनामिकाकनिष्ठे, क्रमादिति अनामिकाया अष्टमांशेनोना कनिष्ठा ज्ञेया। अखिला अङ्गुलयस्तादृश्यः अङ्गुष्ठाष्टमाष्टमांशोनाः। क्रमादिति पूर्व्वपूर्व्वत्र उत्तरोत्तरा अपि सर्व्वाः क्रमेणाष्टमांशोना इत्यर्थः। तथा च श्रीहयशीर्षीये—'अष्टमांशाष्टमांशोना' इत्यादि। मात्स्ये तु 'अङ्गुष्ठस्य समा तद्वत्' इत्यादि। क्वापि श्रीनारदीये, अन्ये अनामिकाकनिष्ठे मध्यमातः पादहीने। अत्रापि क्रमादित्यस्यानुवर्त्तनादनामिका पादोना कनिष्ठा ज्ञेया। सः अङ्गुष्ठः ॥७०॥

क्वापि श्रीहयशीर्षीये, सपादाङ्गुलेनोच्चं, पराः प्रदेशिन्याद्यास्तस्याङ्गुष्ठस्यार्द्धेनोच्चास्तत्र च तत्तत्परिणाहानुसारेणैव ज्ञेयाः। अस्य अङ्गुष्ठस्य देशिन्याः प्रदेशिन्याः ॥७१॥

त्रिगुण होगी। जङ्घाद्वय का मध्यभाग की विस्तृति सप्ताङ्गुली, एवं उसकी परिधि तद्रूप त्रिगुणित करनी चाहिये। स्थानान्तर में (श्रीनारदपुराण में) उक्त है-जङ्घामूल की विस्तृति षड़ङ्गुल, एवं उसकी परिधि त्रिगुण होगी। इसके अग्रभाग की परिधि, चतुर्दशाङ्गुल होगी। कोई कोई कहते हैं-अग्रिम परिधि पञ्चदशाङ्गुल है। अतएव उस मत में अग्रभाग का विस्तार पञ्चाङ्गुल जानना चाहिये। चरणयुगल का दैर्घ्य चतुर्दशाङ्गुल करना चाहिये ॥६४-६७॥

ग्रन्थान्तर में (श्रीहयशीर्ष में) वर्णित है— चरणद्वय, द्वादशाङ्गुल दीर्घ एवं षड़ङ्गुल विस्तृत, कूर्म्मपृष्ठवत् उन्नत होगा। चरणगुल्फद्वय का दैर्घ्य एवं विस्तार दो अङ्गुल होगा। अङ्गुष्ठ का दैर्घ्य तीन अङ्गुल करना चाहिये। ग्रन्थान्तर में (श्रीनारद पुराण में) उक्त है—अङ्गुष्ठ का दैर्घ्य चतुरङ्गुल होगा एवं प्रदेशिनी का (अङ्गुष्ठ के पार्श्वस्थ का) परिमाण तत् सदृश होगा। मध्यमाङ्गुली षोड़शांश कम होगी। अथवा, समस्त अङ्गुली को ही अङ्गुष्ठ से क्रमश अष्टमांश न्यून करना कर्त्तव्य है। कोई कोई कहते हैं-मध्यमा की अपेक्षा अनामिका को एक पाद एवं अनामिका से कनिष्ठा को एक पाद न्यून करना कर्त्तव्य है। अङ्गुष्ठ की उच्चता एक अङ्गुली होगी ॥६८-७०॥

ग्रन्थान्तर में (हयशीर्ष में) वर्णित है—अङ्गुष्ठ को सपाद एकाङ्गुल उच्च करना चाहिये एवं अन्यान्य

अन्यासां त्वष्टमांशोनः परिधिः स्यात् क्रमेन हि ।
द्विपर्व्वको मतोऽङ्गुष्ठः पराः सर्व्वास्त्रिपर्व्विकाः ॥७२॥
स्वस्वदैर्घ्ये तृतीयांशः पर्व्व तासाममुष्य च ।
अङ्गुष्ठस्य नखः पादोनाङ्गुलोऽर्द्धाङ्गुलोऽन्यतः । ७३॥
क्रमेण किञ्चिद्न्यूनश्च कूर्म्मपृष्ठसमो हि सः । नितम्बौ करिकुम्भाभौ विस्तारे षोड़शाङ्गुलौ ॥७४
षट्त्रिंशदङ्गुलं स्कन्धात् पृष्ठं निम्नं क्रमेण तत् ।
विंशत्यङ्गुलपर्य्यन्तं नतवंशश्च तन्मतम् । ७५॥
मध्यदेशाच्च विततं मिलितं मत्स्ययुग्मवत् ।
अन्यच्चालिखितं कार्य्यं लोकदृष्ट्याऽखिलं बुधैः ॥७६॥

हयशीर्षे—
एतत्ते लक्षणं प्रोक्तमुद्देशेन मयानघ । अनयैव दिशा कार्य्यं स्वयमप्यूह्य देशिकैः ॥७७॥

---

हि एव, क्रमेणैव ॥७२॥

अमुष्य अङ्गुष्ठस्य च, अन्यतः सर्व्वासामन्यासामित्यर्थः ॥७३॥

स नखः, करिकुम्भाभावित्यनेन सुवर्त्तुलौ सुविभक्तौ च ज्ञेयौ । षोड़शाङ्गुलविस्तारत्वेन तयोः परिधिस्तत्त्रिगुणो ज्ञेय एव ॥७४॥

तत् पृष्ठं विंशत्यङ्गुलपर्य्यन्तं क्रमेण निम्नं नतपृष्ठवंशम् । यद्यप्यवष्टम्भाच्छादनादिना श्रीमूर्त्तेर्नितम्बपृष्ठे न दृश्येते, अतएवान्यत्र ते द्वे नोक्ते, केवलं श्रीनारदीय एवोक्ते, तथापि क्वचिदवष्टम्भराहित्यादिना तदपेक्षयात्र ते लिखिते ॥७५॥

एवं प्रसिद्धप्रधानप्रकटमर्व्वाङ्गपरिमाणं लिखित्वा अत्रालिखितान्यविज्ञानप्रकारं लिखति—अन्यच्चेति । लिङ्गादिकं कर्णच्छिद्रपार्श्वद्वयनिम्नत्वं नखाग्रार्द्धचन्द्राकृतित्वं पार्श्वद्वयादिकञ्च लोकदृष्ट्या लोकेषु तत्तदङ्गसौष्ठवादिदृष्ट्या, बुधैरिति तत्र तत्रैव स्वबुद्ध्या विचार्य्यं । तत्रापि शास्त्रोक्तध्यानध्येय-श्रीभगवदङ्गसौन्दर्य्याद्यनुसारेणैव सर्व्वं कार्य्यमित्यर्थः ॥७६॥

उद्देशेन संक्षेपेणैव, न तु साकल्येनेत्यर्थः । दिशा उद्दिष्टेनांशेनेत्यर्थः । तत्राप्यूह्य विचार्य्यैवेत्यर्थः, लिखितार्थमेवैतत । ७७॥

---

अङ्गुली का अङ्गुष्ठ का अर्द्धोच्च करे । अङ्गुष्ठ की परिधि पाँच अङ्गुली एवं प्रदेशिनी की परिधि तीन अङ्गुली करनी चाहिये । अन्यान्य अङ्गुलीसमूह की परिधि, क्रमशः अष्टमांश न्यून करनी चाहिये । अङ्गुल के पर्व दो हैं, किन्तु अपरापर अङ्गुली त्रिपर्वान्वित हैं । अङ्गुली की स्वस्व दीर्घता जिस प्रकार है, उसका पर्व उसका तृतीयांश होता है । अङ्गुष्ठ के नख, पादहीन ऐकाङ्गुल हों, किन्तु अन्यान्य अङ्गुलो के नख अर्द्धाङ्गुली परिमित हैं । नखसमूह क्रमान्वय से ईषत् ऊन एवं कमठपृष्ठ सदृश हों, नितम्बदेश, गजकुम्भ सदृश करना चाहिये । और वह षोड़शाङ्गुल विस्तृत होगा । स्कन्धदेश से पृष्ठ यावत् विस्तृति षट्त्रिंशदङ्गुली होगी एवं उक्त पृष्ठदेश विंशति अङ्गुल पर्य्यन्त क्रमशः निम्न होगा । पृष्ठदण्ड, नत करना चाहिये, एवं पृष्ठ का मध्यभाग से विस्तृत एवं मत्स्यद्वय के समान संयुक्त होगा । एतद्व्यतीत जो नहीं लिखा गया है, विवेकी व्यक्तिगण लोक-दृष्टि के अनुसार उसका सुन्दर निर्म्माण करें । ७१-७६ ।

हयशीर्ष पञ्चरात्र में लिखित है—हे अनघ ! मैंने संक्षेप से श्रीमूर्त्ति के लक्षण का वर्णन किया ।

लोकेषु लक्षणं दृष्ट्वा हसितादिनिरीक्षणम् । तथा तथैव कर्त्तव्यमूह्यं यत्नेन देशिकैः ॥७८॥
श्रीनारदीये—
मनोहराङ्गावयवाः सर्व्वे कार्य्याः सुलक्षणाः । केशैरलकजातं च ललाटोपरि शोभनम् ॥७९
हारनूपुरकेयूरमेखलामौलिभूषितम् । शिष्टं ध्यानोदितं सर्व्वं मयानुक्तं प्रकल्पयेत् ॥८०॥
वाराहे—
देशानुरूपभूषणवेशालङ्कारमूर्त्तिभिः कार्य्या । प्रतिमा लक्षणयुक्ता संविहिता बुद्धिदा भवति ॥८१
किञ्च हयशीर्षीये—
वासुदेवं प्रकुर्व्वीत चतुर्ब्बाहुं सुरेश्वरम् । दक्षिणोपरि चक्रं तु पद्मं चाधः प्रकल्पयेत् ॥८२॥
वामोपरि गदा कार्य्या शङ्खं चाधः सुशोभनम् । एतल्लक्षणसंयुक्ता प्रतिमा शुभदा भवेत् ॥८३
श्री-पुष्टी चापि कर्त्तव्ये पद्मवीणाकरान्विते । ऊरुमात्रोच्छ्रितायामे किञ्चिदावर्ज्जिते तथा ॥८४
नानाविद्याधरौ कार्य्यौ प्रभामण्डलसंस्थितौ । प्रभां विभूषयेद्यत्नाद्गजव्यालादिभिर्बुधः ॥८५
पादाब्ज-पादपीठञ्च तथा शोभासमन्वितम् । देशदेशानुरूपेण कर्त्तव्यं देशिकोत्तमैः ॥८६।

---

लक्षणम्—अङ्गसौष्ठवप्रकारम्;यथा श्रीमुखस्य पूर्णचन्द्राद्याकारेण श्रीनेत्रयोश्च पद्मपत्रेण सादृश्यमित्यादि। तत्तदङ्गं वा। किञ्च, निरीक्षणमवलोकनं, हसितादि च दृष्ट्वा, तथा तेन लोकोत्तरविषयक-दृष्टलक्षणप्रकारेण वीप्सा तद्दाढर्यार्थां, तत्तल्लक्षणञ्च सामुद्रकादावुक्तम्। साक्षात् कस्मिंश्चित् सुपुरुषे दृश्यमानञ्च ज्ञेयम् ॥७८॥

मनोहराः अङ्गस्य श्रीमूर्त्तेरवयवाः, किंवा अङ्गं श्रीमूर्त्त्याद्याकारादिकमवयवाश्च, सुशोभनं लक्षणं शास्त्रोक्तं महापुरुषलक्षणं येषु ते। केशैः सह शोभनं भ्रमराकारसादृश्यादिना विराजमान, केशैः शोभनमिति वा मौल्यधः किञ्चित्केशपाशमूलदर्शनात् ॥७९॥

हारादिभिः सहजैर्भूषितम्, उपलक्षणमेतत् वनमालाकुण्डलादिभिरपि। यच्चात्रानुक्तं शिष्टमवशिष्टमङ्ग-सौष्ठवादिकं तत् ध्याने उदितमत्रान्यत्राप्युक्तं, प्रकर्षेण ततोऽप्युत्कृष्टतया कल्पयेत रचयेत् ॥८०॥

देशानुरूपं विभूषणं यथा गौड़देशे चूड़ागर्भकादि, मध्यदेशादौ चात्र कञ्चुकोष्णीषादि। वेशश्च केशबन्ध-वस्त्रादिपरिधानपरिपाट्यादिना सज्जा अलङ्कारः कुण्डलाङ्गदादिः, मूर्त्तिश्च सकेशादिः पार्षदादिप्रतिमा वा, ताभिः, लक्षणैरत्रान्यत्राप्युक्तैरङ्गसौष्ठवादिभिर्युक्ता, एवं सम्यग्विहिता निर्म्मिता सती भक्तादेर्बुद्धिदा ॥८१॥

---

देशिकगण इस संक्षिप्त वर्णित नियमानुसार स्वयं विवेचना करके श्रीमूर्त्ति प्रस्तुत करें। देशिकगण, हास्यादि लोकलक्षण अङ्ग सौन्दर्य्यादि दर्शन पूर्वक विवेचना करके यत्नपूर्वक उसी प्रकार मूर्त्ति प्रस्तुत करें ॥७७-७८॥

श्रीनारदपुराण में लिखित है—श्रीमूर्त्ति के अवयव समूह को दिव्य लक्षणान्वित करना चाहिये। ललाटोपरि केशपाश के सहित अलकशोभा प्रस्तुत करे। एवं हार, नूपुर, केयूर, काञ्चीदाम एवं चूड़ा के द्वारा अलङ्कृत करे। जो सब अङ्गसौष्ठव का वर्णन यहाँ नहीं हुआ है, ध्यान के अनुसार सम्यक् उसका विधान करे ॥७९-८०॥

वराह पुराण में लिखा है—प्रतिमा को देशानुरूप पद्धति से भूषण—चूड़ा कञ्चुकोष्णीषादि, वेश—केश-बन्धन वसन परिधानादि, अलङ्कार—कुण्डलाङ्गद प्रभृति, एवं मूर्त्ति—पार्षदादि विशिष्ट करना चाहिये। इस प्रकार सुष्ठु विधान से देवमूर्त्ति प्रस्तुत करने से वह प्रतिमा भक्तकुल को बुद्धिदायिनी होती है ॥८१॥

हयशीर्ष पञ्चरात्र में और भी लिखित है—सुरेश्वर वासुदेव की मूर्त्ति चतुर्भुज करनी चाहिये। दक्षिण दिक् के उर्द्ध्व कर में चक्र एवं अधः कर में पद्म एवं वामादिक् के उपरिस्थ कर में गदा एवं अधः कर में सुन्दर शङ्ख स्थापन करे। प्रतिमा इस प्रकार लक्षणान्वित होने पर कल्याण प्रदायिनी होती है। प्रभु के

अथ श्रीगोपालदेवस्य कश्चिद्विशेषः

विष्णुधर्म्मोत्तरे —

गोपालप्रतिमां कुर्य्याद्वेणुवादनतत्पराम् । वर्हापीड़ां घनश्यामां द्विभुजामूदर्ध्वसंस्थिताम् ।।८७

गौतमीयतन्त्रे —

प्रतिमां कृष्णदेवस्य यत्नतः कारयेत् सुधीः । शिल्पिना कृष्णभक्तेन विश्वकर्म्मोक्तिजानता ।।८८

दशपञ्चाङ्गुला मुख्या मध्यमा द्वादशाङ्गुला ।

अष्टाङ्गुलाधमा सा तु न्यूनाधिक्यं न कारयेत् ।।८९।।

अज्ञानेनापि मोहेन यदि कुर्य्यान्नराधमः । प्रतिमा विफला तस्य पूजनान्न फलं लभेत् ।।९०।।

मानाङ्गुलिविहीना च प्रतिमा यत्र तिष्ठति । राजा निपीड़यत्येव गृहस्थो नरकं व्रजेत् ।।९१

मानाङ्गुलेन सा कार्य्या नान्यथा मुनिसत्तम ।

काश्मीरी ज्ञानदा प्रोक्ता स्वर्णजापि न मुक्तिदा ।।९२।।

सम्पत्तिदा शिलाजा तु राजती बहुभक्तिदा । तेजोदा दारुजा या तु रैत्तिकी शत्रुनाशिनी ।।९३

ताम्री धनविवृद्धिश्च करोति बहुसौख्यदा । सदैव मृण्मयी प्रोक्ता प्रतिमा शुभलक्षणा ।।९४।।

भोगदा मोक्षदा सा तु प्रतिमा कथिता तव । लेप्या लेख्या द्विधा चैव प्रतिमा परिकीर्त्तिता ।।९५

---

वेणुवादनतत्परामिति—श्रीमदधरन्यस्तवेणुवादनमन्द्रशोभिताम् । श्रीहस्तद्वयधृतसहजसंलग्नेव वंशी विधेयेत्यर्थः । ऊद्ध्र्वसंस्थितामिति त्रिभङ्ग-ललितत्वात् ।।८७।।

---

वामपार्श्व में पद्महस्ता श्री, एवं दक्षिण में वीणाहस्ता पुष्टि, इन दोनों की प्रतिमूर्त्ति प्रस्तुत करनी चाहिये, उनमें ऊरुमात्र उन्नत (स्थूल) और आयाम (दीर्घ) किन्तु मूर्त्ति कुछ अवनत हो। दो विविध विद्याधर मूर्त्ति प्रस्तुत करे। वे प्रभामण्डल में विद्यमान होंगे। विज्ञ व्यक्ति, उस प्रभा को गज, व्याल प्रभृति द्वारा अलङ्कृत करें। देशिकोत्तमवृन्द, देशाचारानुसार चरणाभायुक्त शोभा सम्पन्न पाद पीठ प्रस्तुत करें।। ।।८२-८६।।

अथ तत्र गोपालदेवस्य कश्चिद्विशेषः

विष्णुधर्म्मोत्तर में उक्त है—श्रीगोपालदेव की मूर्त्ति इस प्रकार निर्म्माण करे कि—वेणुवादन तत्पर, मयूर वर्ह चूड़ा से विभूषित, जलदश्याम, द्विभुज एवं ऊद्ध्र्व संस्थित अर्थात् त्रिभङ्ग भङ्गिमा से मनोहर होकर खड़े हों। ८७।।

गौतमीय तन्त्र में लिखित है—बुध व्यक्ति, विश्वकर्मोक्त विधानज्ञ हरिभक्त शिल्पी कर द्वारा यत्नपूर्वक कृष्ण प्रतिमा प्रस्तुत करावे। पञ्चदशाङ्गुल परिमाण प्रतिमा श्रेष्ठा, द्वादशाङ्गुल मध्यम एवं अष्टाङ्गुल कनिष्ठा है। जो परिमाण कहा गया है, उसमें कम वा अधिक न करे। अज्ञान के वश वा मोह के कारण न्यूनाधिक करने से उस नराधम की प्रतिमा फलदायक नहीं होगी। उस प्रतिमा की पूजा करने पर, वह पूजा विफल होती है। नियमित परिमाण की अपेक्षा एक अङ्गुली न्यून होने पर, वहाँ का राजा प्रजा-पीड़क और मानव, नरकगामी होते हैं। हे मुनिसत्तम ! जो परिमाण कहा गया है, तदनुसार प्रतिमा प्रस्तुत करना चाहिये। कदाच उसका विपरीत आचरण नहीं करना चाहिये। काश्मिरी प्रतिमा, ज्ञानदा, स्वर्णमयी प्रतिमा, मुक्तिदात्री, शिलामयी, सम्पत्तिदात्री, राजती, बहुभक्ति प्रदायिनी, काष्ठमयी, तेजोदात्री रैत्तिकी, अरिक्षयकारी, ताम्रमयी, धनवृद्धिकारिणी एवं शुभ लक्षण से लक्षिता मृण्मयी प्रतिमा, सर्वदा

पर्व्वताग्रे नदीतीरे चत्वरे गोष्ठभूमिषु । समुद्रकूलेऽरण्ये वा मानहीना न दूषणी ॥९६॥

कृष्णप्रतिकृतिं कुर्य्याद्दिव्यां केशसुचिह्निताम् ।
तान्तु संस्थापयेन्मन्त्री गृहे वा गोष्ठमध्यतः ॥९७॥

अथ स्त्रीप्रतिमाङ्गानि

चतुर्द्दशाङ्गुलं दैर्घ्यं जठरं वितता कटिः ।
द्वाविंशत्यङ्गुला स्त्रीणां स्तनौ च द्वादशाङ्गुलौ ॥९८॥
किञ्चिद्ध्रस्वौ भुजौ तासां किञ्चिद्दीर्घं मुखं भवेत् ।
नासाग्रीवाललाटानि सार्द्धद्व्यङ्गुलकानि च ॥९९॥

विस्तारे किञ्चिदधिकार्द्धाङ्गुयोऽधरपल्लवः । नेत्रे चतुर्थभागोने परं श्रीवच्च पूर्व्ववत् ॥१००॥

तथा च मात्स्ये—

स्त्रियः कार्य्याश्च विद्वद्भिस्तनोरुजघनाधिकाः ।
नानाभरणसंयुक्ताः किञ्चिद्ध्रस्वभुजाः शुभाः ॥१०१॥

---

द्वाविंशत्यङ्गुला वितता, स्तनौ च विततौ ॥९८॥

किञ्चित् पुरुषादीषत् ॥९९॥

पुरुषनेत्राच्चतुर्थभागेनोने । श्रीवदिति अग्रे लेख्य-लक्ष्मीमूर्त्तिवत् । अतएवोक्तं श्रीहयशीर्षदेवेन—'सर्व्वेषामेव देवानां विष्णूक्तं मानमुच्यते । देवीनामपि सर्व्वासां लक्ष्म्युक्तं मानमुच्यते ॥' इति । पूर्व्ववच्चेति पूर्व्वोक्तपुरुषाङ्गमानादिसदृशमपीति लक्ष्मीमूर्त्तेः सर्व्वाङ्गमानानुक्तेरिति ॥१००॥

यथा च श्रीमत्स्यपुराणे—'स्वकीयाङ्गुलमानेन मुखं स्याद्द्वादशाङ्गुलम् । प्रतिमामुखमानेन समभागान् प्रकल्पयेत् ॥ चतुरङ्गुला भवेद्ग्रीवा भागेन हृदयं पुनः । नाभिस्तस्मादधः कल्प्या भागेनैकेन शोभना ॥

---

भोग मोक्षदायिनी एवं बहु सुखप्रदा है । तुमसे सब प्रतिमाओं का ही विषय कहा गया है । प्रतिमा लेप्या एवं लेख्या भेद से द्विविधा हैं । पर्वताग्र, नदीतट, चत्वर, गोष्ठ, सागर तट एवं अरण्य,—यह सब स्थानों में प्रतिमा निर्दिष्ट परिमाण से कम होने पर भी दोष नहीं है । मन्त्री व्यक्ति, केश विभूषित अत्युत्तम कृष्ण-मूर्त्ति प्रस्तुत पूर्वक उक्त प्रतिमा को गृह में अथवा गोष्ठ में स्थापन करे ।८८-९७॥

अथ स्त्रीप्रतिमाङ्गानि

स्त्री प्रतिमा का उदर चतुर्दशाङ्गुल दीर्घ होगा । कटि का विस्तार द्वाविंशत्यङ्गुल एवं स्तनद्वय का विस्तार द्वादशाङ्गुल होगा पुं प्रतिमा की अपेक्षा स्त्री प्रतिमा की दोनों भुज कुछ ह्रस्व और मुख कुछ दीर्घ करना चाहिये । एवं नासिका, ग्रीवा, ललाटदेश यह तीनों अङ्ग सार्द्ध द्वि (ढाई) अङ्गुली विस्तृत करे । स्त्री प्रतिमा अधर पल्लव की विस्तृति कुछ अधिक अर्द्धाङ्गुल करे । स्त्री प्रतिमा के नेत्र पुरुष प्रतिमूर्त्ति के चक्षु के चतुर्थांश के एकांश ह्रस्व और अवशिष्ट अङ्ग पूर्वोक्त विष्णु सदृश एवं पश्चादुक्त लक्ष्मी सदृश करने चाहिये ।९८ १००॥

उस विषय में मत्स्यपुराण में लिखित है—स्त्री प्रतिमा का स्तन, ऊरु एवं जघन पुं मूर्त्ति की अपेक्षा विशाल करे, और इस प्रतिमा को विविध आभरणों से भूषित करे । इसके अतिरिक्त शुभ भुजसमूह भी पुं मूर्त्ति की अपेक्षा किञ्चित् ह्रस्व शुभकारी होती है । सर्वेषामेव देवानां विष्णूक्तं मानमुच्यते । देवीनामपि सर्वासां लक्ष्म्युक्तं मानमुचयते ।" हयशीर्ष के यह वचनानुसार पुरुष देवता मूर्त्ति को श्रीविष्णुमूर्त्ति प्रमाण और स्त्री देवता मूर्त्ति को श्रीलक्ष्मी मूर्त्ति प्रमाण बनाना चाहिये ।१०१॥

निम्नत्वे विस्तरत्वे च अङ्गुलत्वं प्रकीर्त्तितम् । नाभेरधस्तान्मेढ्रं तु भागेनैकेन कल्पयेत् ॥ त्रिभागेनायतावूरू जानुनी चतुरङ्गुले । जङ्घे द्विभागे विख्याते पादौ च चतुरङ्गुलौ ॥ चतुर्द्दशाङ्गुलस्तद्वन्मौलिरस्य प्रकीर्त्तितः । ऊर्द्ध्वमानमिदं प्रोक्तं पृथुत्वं च निबोधत॥ सर्व्वावयवमानेषु विस्तारं शृणुत द्विजाः । चतुरङ्गुलं ललाटं स्यादूर्द्ध्वं नासा तथैव च ॥ द्व्यङ्गुलं तु हनु ज्ञेयमोष्ठश्चाङ्गुलसम्मितः । अष्टाङ्गुलं ललाटं तु तावन्मात्रे भ्रुवौ मते ॥ अर्द्धाङ्गुला भ्रुवोर्लेखा मध्ये धनुरिवोन्नता । उन्नताग्रा भवेत् पार्श्वे श्लक्ष्णा तीक्ष्णा प्रशस्यते ॥ अक्षिणी द्व्यङ्गुलायामे तदर्द्धं चैव विस्तरे । उन्नतोदरमध्ये तु रक्तान्ते शुभलक्षणे ॥ तारका तत्त्रिभागेन दृष्टिः स्यात् पञ्चभागिका । द्व्यङ्गुलं तु भ्रुवोर्मध्यं नासामूलमथाङ्गुलम् ॥ नासाग्रविस्तरं तद्वत् सुपुटद्वतमुन्नमम् । नासापुटविलं तद्वदर्द्धाङ्गुलमुदाहृतम् ॥ कपोले द्व्यङ्गुले तद्वत् कर्णमूलाद्विनिःसृते । हन्वग्रमण्डलं तद्वद्विस्तारात् द्व्यङ्गुलं भवेत् ॥ अर्द्धाङ्गुला भ्रुवो राजी मृणालसदृशी मता । अर्द्धाङ्गुलसमस्तद्वदुत्तरोष्ठस्तु विस्तरे ॥ निष्पावसदृशं तद्वन्नासापुटदलं भवेत् । सृक्कणी योनितुल्ये तु कर्णमूलात् षड़ङ्गुले । कर्णौ तु भ्रूसमौ ज्ञेयावूर्द्ध्वश्च चतुरङ्गुलम् ॥ द्व्यङ्गुले कर्णपार्श्वे तु मात्रामेकान्तु विस्तरे । कर्णयोरुपरिष्टाच्च मस्तक द्वादशाङ्गुलम् ॥ ललाटं पृष्ठतोऽर्द्धेन प्रोक्तमष्टादशाङ्गुलम् । षट्त्रिंशदङ्गुलश्चापि परिणाहः शिरोगतः ॥ सकेशनिचयस्यास्य द्विचत्वारिंशदङ्गुलः । केशान्ताद्धनुकात्तद्वदङ्गुलानि तु षोड़श ॥ ग्रीवामध्ये परिणाहश्चतुर्विंशतिरङ्गुलः । अष्टाङ्गुला भवेद्ग्रीवा पृथुत्वेन विशिष्यते ॥ स्तनग्रीवान्तरं प्रोक्तमेकतालं स्वयम्भुवा । स्तनयोरन्तरन्तद्वद्द्वादशाङ्गुलमिष्यते ॥ स्तनयोर्मण्डलं तद्वद्द्व्यङ्गुलं परिकीर्त्तितम् । चुचुकौ मण्डस्यान्तर्यवमात्रावुभौ स्मृतौ ॥ द्वितालं चापि विस्तारे वक्षःस्थलमुदाहृतम् । कक्षे षड़ङ्गुले प्रोक्ते बाहुमूलस्तनान्तरे ॥ चतुर्द्दशाङ्गुलौ पादावङ्गुष्ठस्तत्त्रिरङ्गुलः ॥ पञ्चाङ्गुलपरीणाहमङ्गुष्ठाग्रं तथोन्नतम् ॥ अङ्गुष्ठस्य समा तद्वदायामे स्यात् प्रदेशिनी । तस्याः षोड़शभागेन हीयते मध्यमाङ्गुली ॥ अनामिकाष्टभागेन कनिष्ठा चापि हीयते । पर्व्वत्रयेण चाङ्गुल्योगुल्फौ तु द्व्यङ्गुलौ स्मृतौ । पार्ष्णिद्व्यङ्गुलमात्रा तु कलयोच्चा प्रकीर्त्तिता । द्विपर्व्वाङ्गुष्ठकः प्रोक्तः परीणाहश्च द्व्यङ्गुलः ॥ प्रदेशिनीपरीणाहस्त्र्यङ्गुलः समुदाहृतः । अन्यासामष्ठभागेन हीयते क्रमशो द्विजाः । अङ्गुलेनोच्छ्रयः कार्य्यो ह्यङ्गुष्ठस्य विशेषतः । तदर्द्धेन तु शेषाणामङ्गुलीनां समुच्छ्रयः ॥ जङ्घाग्रे परिणाहस्तु अङ्गुलानि चतुर्द्दश । जङ्घामध्ये परीणाहस्तथैवाष्टादशाङ्गुलः ॥ जानुमध्ये परीणाह एकविंशतिरङ्गुलः । जानूच्छ्रयोऽङ्गुलः प्रोक्तो मण्डलन्तु त्रिरङ्गुलम् ॥ ऊरुमध्ये परिणाहः अष्टाविंशतिकाङ्गुलः । एकविंशोपरिष्टाच्च वृषणौ तु त्रिरङ्गुलौ ॥ त्र्यङ्गुलश्च तथा मेढ्रं परिणाहे षड़ङ्गुलम् । मणिवेधात् समां विद्यात् कोश रेखां तथैव च ॥ मणिकोशपरीणाहश्चतुरङ्गुल इष्यते । विस्तारेण भवेत्तद्वत् कटिरष्टादशाङ्गुला ॥ द्वाविंशतिस्तथा स्त्रीणां स्तनौ च द्वादशाङ्गुलौ । नाभिमध्ये परीणाहो द्विचत्वारिंशदङ्गुलः ॥ पुरतः पञ्चपञ्चाशत् कट्याश्चैव तु वेष्टनम् । कक्षयोरुपरिष्टाच्च स्कन्धौ प्रोक्तौ षड़ङ्गुलौ ॥ अष्टाङ्गुलाश्च विस्तारे ग्रीवाञ्चैव तु निर्द्दिशेत् । परिणाहे तथा ग्रीवा कला द्वादश निर्द्दिशेत् ॥ आयामो भुजयोस्तद्वद्द्विचत्वारिंशदङ्गुलः । कार्य्यन्तु बाहुशिखरं प्रमाणे षोड़शाङ्गुलम् ॥ ऊर्द्ध्वं यद्बाहुपर्व्वन्तु विद्यादष्टादशाङ्गुलम् । तथैवाङ्गुलहीनन्तु द्वितीयं पर्व्वमुच्यते ॥ बाहुमध्ये परीणाहो भवेदष्टादशाङ्गुलः । षोड़शोक्तप्रबाहुस्तु षट्कलोऽग्रकरो मतः ॥ सप्ताङ्गुलं करतलं मध्यमाङ्गुलपञ्चका । अनामिका मध्यमायाः सप्तभागेन हीयते ॥ तस्यास्तु पञ्चभागेन कनिष्ठा परिहीयते । मध्यमायास्तु हीना वै पञ्च भागेन तर्ज्जनी । अङ्गुष्ठस्तर्ज्जनीमूलादधः प्रोक्तस्तु तत्समः॥ अङ्गुष्ठपरिणाहस्तु विज्ञेयश्चतुरङ्गुलः । शेषाणामङ्गुलीनान्तु भागो भागेन हीयते ॥ मध्यमामध्यपर्व्वन्तु अङ्गुलद्वयमायतम् । यवो यवस्तु सर्व्वासां तस्यां तस्यां प्रहीयते । अङ्गुष्ठमध्यपर्व्वन्तु तर्ज्जन्या सदृशं भवेत्। यवद्वयाधिकं तद्वदग्रपर्व्वमुदाहृतम् ॥ पर्व्वार्द्धेन नखान् विद्यादङ्गुलीषु समं ततः । स्निग्धं श्लक्ष्णं प्रकुर्व्वीत ईषद्रक्तं नखव्रजम् ॥ निम्नपृष्ठं भवेन्मध्ये पार्श्वतः कलयोच्छ्रितम् । चतुर्द्दशाङ्गुलायाममुदरं तासु निर्द्दिशेत्। तथैव केशवल्लर्य्यः स्कन्धोपरि दशाङ्गुलाः ॥ स्त्रियः कार्य्याश्च विद्वद्भिः स्तनोरुजघनाधिकाः । नानाभरण-

किञ्च—

ग्रीवावलिश्च कर्त्तव्या किञ्चिदूर्द्धाङ्गुलोच्छ्रया ॥१०२॥

एवं नारीषु सर्व्वासु देवानां प्रतिमासु च । नवतालमिदं प्रोक्तं लक्षणं पापनाशनम् ॥१०३॥

---

सम्पन्नाः किञ्चिद्ध्रस्वभुजाः शुभाः ॥ किञ्चिद्दीर्घं भवेद्वक्त्रमलकावलिरुत्तमा । नासा ग्रीवा ललाटश्च सार्द्धं मासान्त्रयङ्गुलम् । अध्यर्द्धाङ्गुलविस्तारः शस्यतेऽधरपल्लवः । अधरात् नेत्रयुग्मं तु चतुर्भागेन निर्द्दिशेत् ॥'१०१॥

"ग्रीवावलिश्च कर्त्तव्या किञ्चिदर्द्धाङ्गुलोच्छ्रया' ॥१०२॥

"एवं नारीषु सर्व्वासु देवानां प्रतिमासु च । नवतालमिदं प्रोक्तं लक्षणं पापनाशनम् ॥'श्रीहयशीर्षपञ्चरात्रे श्रीभगवद्ब्रह्मसंवादे – 'अतःपरं प्रवक्ष्यामि प्रतिमालक्षणं परम् । यन्न कस्यचिदाख्यातं गुह्याद्गुह्यतरं पदम् ॥ अभिप्रेतप्रमाणं तु नवधा प्रविभाजयेत् । नवमे भास्करैर्भक्ते भागं स्वाङ्गुलमुच्यते ॥ द्व्यङ्गुलं गोलकं नाम्ना कला नेत्रान्तमुच्यते । भागमेकं त्रिधा भक्त्वा पाष्णिभागं प्रकल्पयेत् ॥ भागमेकं तथा जानौ ग्रीवायां भागमेव च । मुकुटं तालमात्रं स्यात् तालमात्रं तथा मुखम् ॥ तालमात्रेण कण्ठं तु तालेन हृदयं तथा । नाभिमेढ्रान्तरं तालं द्वितालावूरुकौ तथा ॥ तालद्वयेन जङ्घा तु सूत्राणि शृणु साम्प्रतम् । कार्य्यं सूत्रद्वयं पादे जङ्घामध्ये तथापरम् ॥ जानौ सूत्रद्वयं कार्य्यमूरुमध्ये तथापरम् । मेढ्रे तथापरं कार्य्यं कट्यां सूत्रं तथापरम् ॥ मेखलाबन्धसिद्ध्यर्थं नाभ्याञ्चैव परं तथा । हृदये च तथा कार्य्यं कण्ठे सूत्रद्वयं तथा ॥ ललाटे चापरं कार्य्यं मस्तके च तथापरम् । मुकुटोपरि कर्त्तव्यं सूत्रमेकं विचक्षणैः ॥ सूत्राण्यर्द्धं प्रदेयानि सप्तैव सुरसत्तम । कक्षात्त्रिकान्तरेणैव कण्ठसूत्राणि दापयेत् ॥ मध्यसूत्राणि सन्त्यज्य सूत्राण्येवं निवेशयेत् । ललाटनासिकावक्त्रं कर्त्तव्यं चतुरङ्गुलम् ॥ ग्रीवाकर्णन्तु कर्त्तव्यमायामाच्चतुरङ्गुलम् । द्व्यङ्गुले हनके कार्य्ये विस्ताराच्चिबुकं तथा ॥ अष्टाङ्गुलं ललाटन्तु विस्तारेण प्रकीर्त्तितम् । परेण द्व्यङ्गुलौ शङ्खौ कर्त्तव्यावलकान्वितौ ॥ चतुरङ्गुलमाख्यातमन्तरं कर्णनेत्रयोः । द्व्यङ्गुलौ पृथुकौ कर्णौ कर्णार्द्धार्धं च पश्चमे ॥ भ्रूसमेन तु सूत्रेण कर्णसूत्रं प्रकीर्त्तितम् । विद्धं षड़ङ्गुलं कर्णमविद्धं चतुरङ्गुलम् ॥ चिबुकेन समं विद्धमविद्धं वा षड़ङ्गुलम् । खड्गपात्रं तथा रक्तं शष्कुलीं कल्पयेत्तथा ॥ अङ्गुलेनाधरः कार्य्यस्तस्यार्द्धेनोत्तराधरः । अर्द्धाङ्गुलं तथा गुल्फं वक्त्रं तु चतुरङ्गुलम् ॥ आयामेन तु वैपुल्य सार्द्धमङ्गुलमुच्यते ॥ नासावंशसमुच्छ्रायं मूले त्वेकाङ्गुलं मतम् । उच्छ्रिता द्व्यङ्गुलं चाग्रे करवीरोपमा स्मृता ॥ अन्तरं चक्षुषोः कार्य्यं चतुरङ्गुलमानतः । द्व्यङ्गुलं चाक्षिकोयं तद्द्व्यङ्गुलं चान्तरन्तयोः ॥ तारा नेत्रत्रिभागेन दृक्तारा पञ्चमांशिका । अङ्गुलं नेत्रविस्तारं द्रोणी चार्द्धाङ्गुला मता । तत्प्रमाणा भ्रुवोर्लेखा भ्रुवौ नेत्रसमे मते ॥ भ्रूमध्यं द्व्यङ्गुलं कार्य्यं भ्रूदैर्घ्यं चतुरङ्गुलम् ॥ षट्त्रिंशदङ्गुलायामं मस्तकस्य तु वेष्टनम् । मूर्त्तीनां केशवादीनां द्वात्रिंशद्वेष्टनं भवेत् ॥ पञ्चनेत्रादधोग्रीवाद्विस्ताराद्वेष्टनं पुनः । त्रिगुणन्तु भवेदूर्द्ध्वं विस्तृताष्टाङ्गुलं पुनः ॥ ग्रीवा त्रिगुणमायामं ग्रीवावक्षोऽन्तरं भवेत् । स्कन्धावष्टाङ्गुलौ कार्य्यौ त्रिकलावंशकौ शुभौ ॥ सप्तनेत्रौ स्मृतौ बाहू प्रबाहू षोड़शाङ्गुलौ । त्रिकलं विस्तृतौ बाहू प्रबाहू चापि तत्समौ ॥ बाहुदण्डार्द्धतो ज्ञेयः परीणाहः कला नव । सप्तदशाङ्गुला मध्ये कूर्परोदूर्ध्वं च षोड़शी ॥ कूर्परस्य भवेन्नाहस्त्रिगुणः सुरसत्तम । नाहः प्रबाहुमध्ये तु

---

और भी लिखित है—ग्रीवा में त्रिवली ईषदूर्द्ध्व एकाङ्गुल उन्नत करे । इस प्रकार यावतीय स्त्री और देवप्रतिमा के लक्षण हो नवताल परिमाण करने चाहिये । यह लक्षण, पातकनाशन कीर्त्तित है । अङ्गुष्ठ एवं मध्यमा की विस्तृति का जो परिमाण है, उसी का नाम 'ताल' है । अतः नव संख्यक ताल से साढ़े चार हाथ जानना चाहिये ॥१०२-१०३॥

षोड़शाङ्गुल उच्यते । अग्रहस्ते परीणाहो द्वादशाङ्गुल उच्यते ॥ विस्तारेण करतलं कीर्त्तितं तु षड़ङ्गुलम् । दैर्घ्यात् साङ्गुलं कार्य्यं मध्ये पञ्चाङ्गुला मता । तर्ज्जन्यनामिका चापि तस्मादर्द्धाङ्गुलं विना ॥ कनिष्ठाङ्गुष्ठकौ कार्य्यौ चतुरङ्गुलसंमितौ । द्विपर्व्वाङ्गुष्ठकः कार्य्यः शेषाङ्गुल्यस्त्रिपर्व्विकाः ॥ सर्व्वासां पर्व्वणोऽर्द्धेन नखमानं विधीयते । वक्षसो यत् प्रमाणञ्च जठरं तत्प्रमाणकम् ॥ अङ्गुलैकं भवेन्नाभी वेधेन च प्रमाणतः । नाभीमध्ये परीणाहो द्विचत्वारिंशदङ्गुलैः ॥ अन्तरं स्तनयोः कार्य्यं तालमात्रं प्रमाणतः । चचुकौ यवमानौ तु द्वियवं मण्डलं भवेत् ॥ चतुःषष्टयङ्गुलं कार्य्यं वेष्टनं वक्षसः स्फुटम् । चतुर्म्मुखं तु तदधो वेष्टनं परिकीर्त्तितम् ॥ परीणाहस्तथा कट्यां चतुःपञ्चाशदङ्गुलैः । विस्तारश्चोरुमूले तु प्रोच्यते द्वादशाङ्गुलः ॥ तस्माद्भ्यधिकं मध्ये ततो निम्नतरं क्रमात् । विस्तृतोऽष्टाङ्गुलं जानु त्रिगुण परिणाहतः ॥ जङ्घामध्ये तु विस्तारः सप्ताङ्गुल उदाहृतः । त्रिगुणः परिधिश्चास्य जङ्घाग्रं पञ्चविस्तरात् ॥ त्रिगुणः परिधिश्चास्य पादौ तालप्रमाणकौ । आयामादुच्छ्रितौ पादौ चतुरङ्गुलमेव च ॥ गुल्फपर्व्वन्तु कर्त्तव्यं प्रमाणाच्चतुरङ्गुलम् । त्रिकलं विस्तृतौ पादौ द्वाङ्गुलोऽङ्गुष्ठकः स्मृतः ॥ पञ्चाङ्गुलं तु नाहोऽस्य दीर्घत्वं तु प्रदेशिनी । अष्टमांशाष्टमांशोनाः शेषाङ्गुल्यः क्रमेण तु ॥ सपादाङ्गुलमुत्सेधमङ्गुष्ठस्य प्रकीर्त्तितम् । पादोनमङ्गुलं कार्य्यमङ्गुष्ठस्य नखं सदा ॥ अर्द्धाङ्गुलं तथान्यासां क्रमादूनं तु कारयेत् । द्व्यङ्गुलौ वृषणौ कार्य्यौ मेढ्रन्तु चतुरङ्गुलम् ॥ परिणाहेन कोषाग्रं कर्त्तव्यं चतुरङ्गुलम् । षड़ङ्गुलपरीणाहौ वृषणौ परिकीर्त्तितौ ॥ वृषणालङ्कृता कार्य्या प्रसन्नवदनेक्षणा । प्रतिमा वासुदेवस्य मानेन सुरसत्तम ॥' ; श्रीनारदपञ्चरात्रे श्रीभगवन्नारदसंवादे—'चिवुकाच्च ललाटान्तं स्याद्वक्त्रं द्वादशाङ्गुलम् । ललाटादूर्द्ध्वतो विप्र त्र्यङ्गुलं चोन्नतं शिरः ॥ द्वादशाङ्गुलविस्तीर्णं त्रिगुणं परिणाहतः । विस्ताराद्द्व्यङ्गुलौ कर्णौ तन्मात्रास्त्रिगुणोच्छ्रितौ ॥ कन्यकाग्रसमं विद्धि रन्ध्रं श्रोत्रस्य चान्तरम् । कर्णवटावधश्चोर्द्ध्वौ मानेनार्द्धाङ्गुलौ स्मृतौ ॥ कर्णच्छिद्राद्धो बाह्ये कर्णमध्येऽङ्गुलो वटः । अङ्गुलाः कर्णपाण्योश्च पार्श्वे स्याद्वा यदृच्छया ॥ भ्रूलते शशिरेखेव आयामाच्चतुरङ्गुला । अर्द्धाङ्गुलेन वै कार्य्या मध्यस्थूलाग्रतः कृशा ॥ भ्रूमध्यमङ्गुलसमं नासा तु चतुरङ्गुला । अस्थूला चाग्रतः कार्य्या तिलपुष्पाकृतिस्तथा ॥ नेत्रयोरन्तरं ज्ञेयं त्र्यङ्गुलं नेत्रतस्तथा । दैर्घ्येण त्र्यङ्गुलं नेत्रं तदायामेन चाङ्गुलम् । त्र्यंशेन तारकं मध्ये ज्योतिस्तु त्र्यंशभागतः ॥ घ्राणाधश्चाङ्गुलेनैव पादहीनेन गोधिका । कल्प्यते मुनिशार्द्दूल एकांशेन ततोऽधरः । उत्तराख्योऽप्यधःस्थश्च प्रमाणेनाङ्गुलं स्मृतम् ॥ द्व्यङ्गुलं चिवुकं विप्र उच्छ्रायेण प्रकीर्त्तितम् । विस्तारस्त्र्यङ्गुलो ज्ञेयः सृक्कणी चतुरङ्गुले ॥ ईर्षाद्विहसितं तेन कर्णपाण्योः परस्परम् । कपोलमर्द्धशशिवत्तन्मध्ये चतुरङ्गुलौ ॥ तौ च गण्डौ समौ कुर्य्यात्त्र्यंशपूर्णौ मनोरमौ । कर्णोच्छ्रायस्त्र्यङ्गुलः स्याद्विस्तारेण तु नारद ॥ अष्टाङ्गुलोऽथ परिधिस्त्रिगुणः परिकीर्त्तितः । कण्ठावधि स्थितं वक्षो यावत् स्यादवधिर्मुने ॥ उन्नतत्वेन विहितं सदैव द्वादशाङ्गुलम् । त्रिगुणं तच्च विस्ताराद्द्व्यङ्गुलं स्तनमण्डलम् ॥ एतयोश्चुचुकं कार्य्यमष्टमांशं स्वकाङ्गुलम् । परस्परं स्यात् स्तनयोरन्तरं द्वादशाङ्गुलम् ॥ अष्टाङ्गुलौ स्मृतावंसौ विस्तारेण महामते । प्रोन्नतत्वेन कुर्य्याच्च हस्तमूलात् षड़ङ्गुलम् ॥ उच्छ्रायेण तु नाभ्यन्तं कुर्य्याद्वै द्वादशाङ्गुलम् । कुर्य्यात् प्रदक्षिणावर्त्तनाभिमेढ्रावधि द्विज ॥ उच्छ्रायेण च सम्पाद्यं सुसमं द्वादशाङ्गुलम् । नाभेरधस्तादुदरं सम्पाद्यं चतुरङ्गुलम् ॥ शेषं स्यात् कटिभूभागो विस्तारेणोदरं मुने । द्विसप्ताङ्गुलमानं स्यात् परिधिस्त्रिगुणः स्मृतः ॥ कुर्य्यात् प्रजननं विप्र उच्छ्रायेण षड़ङ्गुलम् । त्रिगुणः परिमाणेन परिधिस्तु कटेः स्मृतः । त्रिषड़ङ्गुलविस्तीर्णं कटिमानमुदाहृतम् ॥ षड़्विंशदङ्गुला विप्र परिधेस्तु कटिः स्मृता । ऊर्व्वोश्च जघनं विप्र उच्छ्रायेण षड़ङ्गुलम् ॥ द्व्यङ्गुलेन च विस्तीर्णौ वृषणौ चतुरङ्गुलौ । त्रिचतुष्कलसम्पूर्णौ ऊरुदण्डौ ततो द्विज ॥ उच्छ्रायेण च कर्त्तव्यं चतुर्व्विंशाङ्गुलं मुने । पृथुमूलौ क्रमक्षामौ संलग्नौ गजपाणिवत् । विस्तारेण तु कुर्व्वीत ऊरुमूलं षड़ङ्गुलम् ॥ षटत्रिंशदङ्गुलं नाभावूरुमध्यं नवाङ्गुलम् । ऊर्व्वोरप्यवसाने तु वेष्टनं त्वेकविंशतिः ॥ त्र्यङ्गुलं मुनिशार्द्दूल परितो जानुमण्डलम् । विस्तारमुन्नतिं चापि जानोरप्यधुना शृणु ॥ द्विर्द्वादशेनाङ्गुलेन जानोर्विस्तार उच्यते ।

षड़ङ्गुलेन बिस्तीर्णं जङ्घामूलं प्रकीर्त्तितम् ।। जङ्घामध्ये तथा नाभावष्टावप्यथ विंशतिः । जङ्घावसाने विस्तारो ज्ञेयः पञ्चाङ्गुलो मुने ।। तमेव त्रिगुणीकृत्य तस्यैव परिधिर्भवेत् । गुल्फादधस्त्र्यङ्गुलः स्यात् पादोच्छ्रायस्तु नारद । पार्ष्णेश्च पृष्ठतो यावदङ्गुष्ठाग्रं द्विजोत्तम ।। पादस्य तावद्दैर्घ्यं स्यादङ्गुलानां द्विसप्तकम् । षड़ङ्गुलेन विततं कूर्म्मपृष्ठान्नतं क्रमात् ।। चतुर्भिरङ्गुलैर्दीर्घमङ्गुष्ठं परिकीर्त्तितम् । त्रिगुणं वेष्टनं तस्य दैर्घ्यात्तस्य दशाधिका ।। पादप्रदेशिनी कार्य्या तत्समीपस्थिताङ्गुलिः । अङ्गुष्ठस्य समा कार्य्या पादन्यूना त्वनामिका । अनामिकायाः पादेन हीना पादकनीयसी । त्र्यंशेन विद्धि सर्व्वासां पर्व्वमानं तु नारद।। पर्व्वार्द्धेन नखाः कार्य्या अर्द्धेन्दुसदृशाः शुभाः । षट्त्रिंशदङ्गुलं विप्र स्कन्धात् पृष्ठसमावधौ ।। गोमुख वा क्रमान्निम्नं यावदङ्गुलविंशतिः । मध्यप्रदेशाद्विस्तृतं पृष्ठवंशं नतक्रमात् ।। सुशुभं प्रविभक्तञ्च विभक्तञ्च तथा मुने । सुमीलितं मत्स्ययुग्मं क्षामं पञ्चाङ्गुलं मतम् ।। सुवर्त्तुलौ स्फीतौ कार्य्यौ विस्तारात् षोड़शाङ्गुलौ । सुविभक्तौ च पीनौ च करिकुम्भोपमौ स्मृतौ ।। अधस्तात् स्कन्धशिखराद्बाहुः स्यात् षड़्शाङ्गुलः । अथो विंशाङ्गुलं विद्धि उपबाहुं द्विजोत्तम ।। मणिबन्धप्रदेशस्तु तत्र त्र्यङ्गुल उच्यते । मध्यमाङ्गुलिपर्य्यन्तं मणिबन्धावसानतः ।। द्वादशाङ्गुलमानस्तु स्कन्धः स्यात् परिवर्त्तुलः । चतुरङ्गुलविस्तीर्णः परिधिस्त्रिगुणो मतः ।। मूलतश्चोपबाहुर्वै पञ्चाङ्गुल उदाहृतः । त्रिगुणश्च तदुन्नाहस्तं क्रमात् क्षामयेच्छनैः ।। गोपुच्छसदृशं कृत्वा यथा स्यात् कलया मुने । मणिबन्धप्रदेशाद्धि विस्तारेणाथ वेष्टनात् । तथाङ्गुलप्रमाणेन पाणिमानमतः शृणु ।। मुने अङ्गुलमानात्तं विद्धि सप्ताङ्गुलं सदा । पञ्चाङ्गुलप्रमाणेन त्रिकाद्विस्तार उच्यते ।। निम्नं करतलं कुर्य्यात् शुभरेखाविभूषितम् । तत्र मध्याङ्गुलिं विप्र विद्धि पञ्चाङ्गुलं सदा ।। तस्या अप्यङ्गुलिः पार्श्वे ऊना अर्द्धाङ्गुलेन वै । तत् पञ्चमांशहीना च नित्यं कार्य्या कनीयसी । सार्द्धद्व्यङ्गुलमङ्गुष्ठं द्विपर्व्वं परिकीर्त्तितम् ।। त्रिपर्व्वण्यश्चाङ्गुलयः पर्व्वार्द्धेन नखाः स्मृताः ।। गोपुच्छसदृशी कार्य्या अङ्गुल्योऽङ्गुल-श्रीमता । पादहीनाः कनीयस्याः सपादाश्चङ्गुलौ क्रमात् ।। स्वप्रमाणस्य विस्तारात्त्रिगुणं विद्धि वेष्टनम् । कूर्म्मपृष्ठनखाः सर्व्वे अग्रतश्चार्द्धचन्द्रवत् ।। केशैरलव जातन्तु ललाटोपरिशोभनम् । ललाटोर्द्ध्वाङ्गुलिच्छादं कुर्य्यात्त्रिवलिसंयुतम् ।।'

वाराह्याञ्च—स्वैरङ्गुलपरीमाणैर्द्वादशविस्तीर्णमायतञ्च मुखम् । नग्नजिता तु चतुर्द्दशाङ्गुलदैर्घ्येण विस्तारितं कथितम् ।। नासाललाटचिवुक-ग्रीवाश्चतुरङ्गुलास्तथा कर्णौ । द्वे द्वेऽङ्गुले च हनुके चिवुकं च द्व्यङ्गुलं प्रसृतम् ।। अष्टाङ्गुलं ललाटञ्च विस्तारादद्व्यङ्गुलौ परौ । सख्यौ चतुरङ्गुलौ च शङ्खौ कर्णौ च द्व्यङ्गुलं पृथुलौ ।। कर्णोपान्तः कार्य्योऽर्द्धपञ्चमे भ्रूसमेन सूत्रेण । कर्णस्रोतः सुकुमारकं च नयनप्रबन्धसमम्।। चतुरङ्गुलावशिष्टं कथयति नेत्रान्तकर्णयोर्विवरम् । अधरोऽङ्गुलप्रमाणस्तस्यार्द्धेनोत्तरौष्ठश्च ।। अर्द्धाङ्गुला तु गुल्फा वक्त्रञ्च चतुरङ्गुलायतं कार्य्यम् । विपुलं तु सार्द्धमङ्गुलमध्यात्त द्व्यङ्गुलं व्याप्तम् ।। त्र्यङ्गुल-तुङ्गौ नासापुटौ नासापुटाग्रतो ज्ञेयौ । सा द्व्यङ्गुलमुच्छ्राया चतुरङ्गुलमन्तरं चाक्ष्णोः । द्व्यङ्गुलमितः-ऽक्षिकोशो द्वे नेत्रे तत्त्रिभागिका तारा । दृक्तारा पञ्चांशो नेत्रविकाशोऽङ्गुलं भवति ।। पर्य्यन्तात् पर्य्यन्ता दश भ्रुवोऽर्द्धाङ्गुला भ्रुवोर्लेखा । भ्रूमध्ये द्व्यङ्गुलकं भ्रूदैर्घ्येणाङ्गुलचतुष्कञ्च ।। कार्य्या तु केशरेखा भ्रूमध्य-बन्धसमाङ्गुलार्द्धविस्तीर्णा ।। नेत्रान्ते करवीरकमुपन्यस्तदङ्गुलप्रमितम् ।। द्वात्रिंशत् परिणाहा-च्चतुर्द्दशायामतोऽङ्गुलानि शिरः । द्वादश तु चित्रकर्म्माणि दृश्यन्ते विंशतिरदृश्या ।। आस्यांसकेशनिचयं षोड़श दैर्घ्येण नग्नजित्प्रोक्ताः । ग्रीवा दश विस्तीर्णा परिणाहाद्विंशतिः सैका ।। कण्ठाद्द्वादश हृदयं हृदयान्नाभिश्च तत्प्रमाणेन । नाभेर्मध्यान्मेढ्रान्तरञ्च तत्तुल्यमेवोक्तम् ।। ऊरू चाङ्गुमानैश्चतुर्युक्ता विंशति-स्तथा जङ्घे । जानुकपित्थे चतुरङ्गुले च पादौ तत्तुल्यौ ।। द्वादश दीर्घौष्ठा पृथुतया च पादौ त्रिकलायता-ङ्गुष्ठौ । पञ्चाङ्गुलपरीणाहौ प्रदेशिनीत्र्यङ्गुलं दैर्घ्यम् ।। अष्टांशाष्टांशोनाः शेषाङ्गुल्यः क्रमेण कर्त्तव्याः । स्याद्द्व्यङ्गुलमुच्छ्रायं चतुर्थभागमङ्गुलमुत्सेधोऽङ्गुष्ठकस्योक्तः ।। अङ्गुष्ठनखः कथितश्चतुर्भागोनम-ङ्गुलस्तज्ज्ञैः । शेषनखानामर्द्धाङ्गुलक्रमात् किञ्चिदूनञ्च ।। जङ्घाग्रे परीणाहश्चतुर्द्दशोत्तरस्तु विस्तारात्

अथ मृण्मयी नां श्रीमूर्त्तिनां विशेषः

श्रीहयशीर्षीये प्रतिमाप्रसङ्गे —

मृत्तिका वर्ण-पूर्व्वेण गृह्णीयुः सर्व्ववर्णिनः । नदीतीरेऽथवा क्षेत्रे पुण्यस्थानेऽथवा पुनः ॥१०४॥

पाषाणकर्करालोहचूर्णानि समभागतः । मृत्तिकायां प्रयोज्याथ कषायेण प्रपीड़येत् ॥१०५॥

खादिरेणार्ज्जुनेनाथ सर्ज्जश्रीवेष्टकुङ्कुमैः । कोटजैरायसैः स्नेहैर्दधिक्षीरघृतादिभिः ॥१०६॥

आलोड्य मृत्तिकां तैस्तैः स्थाने स्थाप्य पुनः पुनः ।
मासं पर्य्युषितं कृत्वा प्रतिमां परिकल्पयेत् ॥१०७॥

स्थापयेत् प्रतिमाशूलं रत्नन्यासस्य चोपरि । शूलञ्च खादिरादीनां यज्ञीयानां प्रकल्पयेत् ॥१०८

त्रिंशोत्तरशतं शूलं कुर्य्याद्वा पञ्चविंशतिः । प्रतिमाङ्गुलमानेन कृत्वा संस्थापयेद्बुधः ॥१०९

चतुर्द्दशाङ्गुलं प्रोक्तं सपादं दलमेव वा ।
सप्तविंशति चाधस्तान्नाभ्युद्ध्वोऽर्द्धाङ्गुलं मुखम् ॥११०॥
पञ्चविंशाङ्गुलौ चोरू सार्द्धत्रिकलमस्तकम् ।
ऊरू स्मृते समे जङ्घे पादोच्छ्रायं सुसम्मितम् ॥१११॥

---

पञ्च । मध्ये च सप्तविपुलाः परिणाहात्त्रिगुणिताः सप्त ॥ अष्टौ तु जानुमध्ये वैपुल्यं त्र्यष्टकं तु परिणाहः । विपुला चतुर्द्दशोरुर्मध्ये द्विगुणस्तु तत्परिधिः ॥कोटिरष्टादश विपुला चत्वारिंशच्चतुर्युता परिधौ । अङ्गुलमेकं नाभिर्वेधेन तथा प्रमाणेन ॥ चत्वारिंशद्द्वियुता नाभीमध्येन मध्यपरिणाहः । स्तनयोः षोड़श चान्तरमूद्‌र्ध्वं वक्षे षड़ङ्गुलके ॥ अष्टावंसौ द्वादश बाहु कार्य्यौ तथा प्रबाहु च ॥ बाहु षड्विस्तीर्णौ प्रतिबाहू द्व्यङ्गुल-चतुष्कौ ॥ षोड़श बाहुमूले परिणाहो द्वादशाग्रहस्ते च । विस्तारेण करतलं षड़ङ्गुलं सप्त दैर्घ्येण ॥ पञ्चाङ्गुलानि मध्य-प्रदेशिनी मध्यपर्व्वदलहीना । अनया तुल्या चानामिका कनिष्ठा तु पर्व्वोना ॥ पर्व्वद्वयमङ्गुष्ठः शेषाङ्गुल्यस्त्रिपर्व्विका ज्ञेयाः । नखपरिमाणं कार्य्यं सर्व्वासां पर्व्वणोऽर्द्धेन ॥ देशानुरूपभूषण-वेशालङ्कार-मूर्त्तिभिः कार्य्या । प्रतिमा लक्षणयुक्ता संनिहिता बुद्धिदा भवति ॥' इति । अतःपरं सुगमम् । १०३॥

इत्यष्टादशो विलासः ।

---

अथ मृण्मयीनां श्रीमूर्त्तिनां विशेषः

श्रीहयशीर्षपञ्चरात्र ग्रन्थ के प्रतिमा वर्णन प्रसङ्ग में उक्त है— ब्राह्मणादि समस्त जाति ही नदी तीर क्षेत्र वा पुण्यस्थल से मृत्तिका ग्रहण पूर्वक, प्रस्तर कर्करा (केकड़) और लौहचूर्ण सम परिमाण में लेकर पूर्वोक्त मृत्तिका के सहित मिलाकर, खदिर वा अर्जुन काष्ठ द्वारा उत्कृष्ट रूप से मर्द्दन करे। पश्चात् सर्ज (धूप) श्रीवेष्ट (तार्पिण) कुङ्कुम, कौटज (कुटज वृक्ष का निर्य्यास) लौह, स्नेह द्रव्य, दधि, क्षीर, घृत प्रभृति द्रव्य के सहित पुनः पुनः आलोड़न करके उन उन स्थानों में स्थापन करना चाहिये। इस रीति से एक मास यावत् मृत्तिका को पर्य्युसित (बासी) करके उसके द्वारा प्रतिमा निर्म्माण आरम्भ करे ॥१०४-१०७॥

पुनर्वार रत्नन्यास (रत्नपीठ अर्थात् चरण स्थापन हेतु पद्मासन) प्रतिमा दण्ड स्थापन करना चाहिये। यह दण्ड यज्ञीय खदीर आदि काष्ठ से बनाना कर्त्तव्य है। प्रतिमा की अङ्गुली के परिमाण से इस दण्ड को

नेत्रद्वयं समुद्दिष्टमर्द्धाङ्गुलसमन्वितम् । द्विगोलोका भवेद्ग्रीवा चार्द्धाङ्गुल समन्विता ॥११२
भागस्य वृद्धि वक्ष्यामि पञ्चविंशांशके तथा । अर्द्धार्द्धमङ्गुलं दद्यात् हृदयादिषु भागशः ॥११३

पञ्चविंशाङ्गुलं बक्षो विस्तारेण प्रकीर्त्तितम् ।
कटिविस्तारतः कार्य्या षोड़शाष्टादशाङ्गुला ॥११४॥

पञ्चविंशाङ्गुलौ बाहू आयामेन प्रकीर्त्तितौ । तथा सप्तदश प्रोक्ता वायामेन प्रबाहुकौ ॥११५॥

मणिबन्धः कलायामस्तस्मात्तं प्रतिमस्तकम् ।
आयामो मध्यमायास्तु षड़ङ्गुल इति स्मृतः ॥११६॥

एतत् संक्षेपतः प्रोक्तं दशतालस्य लक्षणम् । प्रतिमायाश्चतुर्थेन कूर्म्मार्च्चा परिकीर्त्तिता ॥

तत्त्रिभागेन तत्पीठं कुर्य्यात् सिद्धयर्थमुत्तमम् ॥११७॥

अथ श्रीमूर्त्तिविशेषेण परिमाणविशेषादिः

मात्स्ये—

अतःपरं प्रवक्ष्यामि देवाकारान् विशेषतः । दशतालः स्मृतो रामो बलिर्वैरोचनिस्तथा ॥११८॥

वराहो नरसिंहश्च सप्ततालस्तु वामनः । मत्स्यकूर्म्मौ तु निर्द्दिष्टौ यथाशोभं स्वयम्भुवा ॥११९

अथ वराहमूर्त्तिः

किञ्च—

महावराहं वक्ष्यामि पद्महस्तं गदाधरम् । तीक्ष्णदंष्ट्राग्रघोरास्यं मेदिनीं वामकूर्परे ॥१२०॥

---

विंशत्यधिक शताङ्गुली किंवा पञ्चविंशत्यधिक शताङ्गुली करे। चरण के सहित तलदेश चतुर्दशाङ्गुली, नाभि के निम्न एवं ऊर्द्ध्व प्रत्येक सप्तविंशत्यङ्गुली, मुख-अर्द्धाङ्गुल, ऊरुद्वय-पञ्चविंशत्यङ्गुली एवं शिरोदेश सार्धअङ्गुली करे। चरणद्वय की उच्चता के सहित जङ्घा को ऊरुद्वय के समान पञ्चविंशत्यङ्गुल करे। नयनयुगल, अर्धाङ्गुल विशिष्ट एवं ग्रीवा, अर्धाङ्गुल परिमित और द्वि-गोलक अर्थात् दोनों ओर गोलाकार हो। सम्प्रति पञ्चविंशति भाग की वृद्धि का वर्णन करता हूँ। हृदयादि भागसमूह में अर्द्ध अर्द्ध अङ्गुली प्रदान करना चाहिये। मणिबन्ध (कलाई) और मस्तक की लम्बाई एक कला होगी। वक्ष स्थल की विस्तृति पञ्चविंशत्यङ्गुल निर्दिष्ट है। कटिस्थान की षोड़श वा अष्टादशाङ्गुल एवं बाहुद्वय पञ्चविंशत्यङ्गुल विस्तृत होने चाहिये। बाहु पञ्चविंशाङ्गुल एवं प्रबाहु सप्तदशाङ्गुल करे। मध्यमा षड़ङ्गुल विस्तृत होनी चाहिये। दशताल के लक्षण संक्षेप कथित हुआ। मूल प्रतिमा का चतुर्थांश कर्म्म प्रतिमा करनी चाहिये। यह प्रतिमा कोई कर्म के उद्देश्य में की जाती है। सम्यक् सिद्धि लाभ हेतु कर्मार्चा के तीन भाग के द्वारा प्रतिमा की पीठ प्रस्तुत करनी चाहिये ॥१०८-११७॥

अथ श्रीमूर्त्तिविशेषेण परिमाणविशेषादिः

मत्स्यपुराण में कथित है—सम्प्रति विशेषरूप से देवताओं की आकृति का वर्णन करता हूँ। राम, वैरोचनबलि, वराह, नरसिंह इनकी प्रतिमूर्त्ति दशताल परिमित करनी चाहिये। वामनदेव की प्रतिमा, सप्तताल प्रमाण करनी चाहिये। स्वयम्भु विधाता की उक्ति है—जिस प्रकार शोभायुक्त हों, मत्स्य और कूर्म्म मूर्त्ति उसी प्रकार प्रस्तुत करे ॥११८-११९॥

अथ वराहमूर्त्तिः

और भी वर्णित है—सम्प्रति वराह मूर्त्ति का वर्णन करता हूँ। उनके हस्त में पद्म एवं गदा विराजित हैं। दंष्ट्रा, नासिका, एवं मुखमण्डल तीक्ष्ण भयङ्कर दृष्ट होता है। वे वाम कूर्पर (कहुनी) में पृथिवी धारण

दंष्ट्राग्रेणोद्धृतां दीप्तां धरणीमुत्पलान्विताम् । विस्मयोत्फुल्लनयनामुपरिष्टात् प्रकल्पयेत् ॥१२१॥
दक्षिणं कटिसंस्थश्च करं तस्य प्रकल्पयेत् । कूर्म्मोपरि तथा पादमेकं नागेन्द्रमूर्द्धनि ।
संस्तूयमानं लोकेशैः समन्तात् परिकल्पयेत् ॥१२२॥

अथ नरसिंहमूर्त्तिः

नारसिंहन्तु कुर्व्वीत भुजाष्टकसमन्वितम् । रौद्रं सिंहाननं तद्वद्विदारितमुखेक्षणम् ॥१२३॥
स्तब्धपीनसटाकीर्णं दारयन्तं दितेः सुतम् । विनिर्गतान्त्रजालञ्च दानवं परिकल्पयेत् ॥१२४॥
वमन्तं रुधिरोद्गारं भ्रूकुटिवदनेक्षणम् । युध्यमानं च कुर्व्वीत क्वचित् करणबन्धनैः ॥१२५॥
परिश्रान्तेन दैत्येन तर्ज्ज्यमानं मुहुर्मुहुः । दैत्यान् प्रदर्शयेत्तत्र खड्गखेटकधारिणः ।
स्तूयमानं तथा विष्णुं दर्शयेदमराधिपैः ॥१२६॥

अथ त्रिविक्रममूर्त्तिः

तथा त्रिविक्रमं वक्ष्ये ब्रह्माण्डाक्रमणोल्वणम् । पादपार्श्वे तथा बाहुमुपरिष्टात् प्रकल्पयेत् ॥१२७
अधस्ताद्वामनं तद्वत् कल्पयेत् सकमण्डलुम् । दक्षिणे छत्रिकां दद्यान्मुखं दीनं प्रदर्शयेत् ॥१२८
भृङ्गार-धारिणं तद्वद्बलिं तस्य च पार्श्वतः । बन्धनं चास्य कुर्व्वन्तं गरुड़ं तस्य दर्शयेत् ॥१२९

---

पूर्वक, दंष्ट्राग्र द्वारा उसको उद्धार करते हैं। उत्पलधारिणी विस्मयोत्फुल्ल नयना दीप्तिमती उस पृथिवी को ऊर्द्ध्व भाग में कल्पना करनी चाहिये। वराहदेव के दक्षिण कर कटिदेश में संलग्न हैं। तदीय एक चरण कूर्म्मोपरि एवं अन्य चरण नागेन्द्र के मस्तक में संस्थापित है। लोकपालगण चतुर्दिक में अवस्थान पूर्वक उनकी स्तुति कर रहे हैं। इस प्रकार कल्पना करनी चाहिये ॥१२०-१२२॥

अथ नरसिंहमूर्त्तिः

नृसिंहदेव की मूर्त्ति को इस प्रकार निर्म्माण करे कि—वे अष्टभुज, भीषण दृश्य, सिंहास्य, विदारित मुख एवं ईक्षण, स्तब्ध एवं पीन जटा से समाकीर्ण हैं। वे दितिनन्दन, हिरण्यकशिपु को विदारित कर रहे हैं। हिरण्यकशिपु को इस प्रकार निर्म्माण करे कि उसके अन्त्रसमूह वहिष्कृत हुये जाते हैं, और वह रुधिर वमन कर रहा है। उसका मुख एवं नयन भ्रूकुटियुक्त और वह दानव संग्राम में निरत हो रहा है। दानव प्रवर इन्द्रियग्राम के बन्धन के कारण परिश्रान्त होकर बारम्बार नृसिंह मूर्त्ति की ओर गर्जन कर रहा है। एतद् व्यतीत असि खेटकधारी अन्यान्य असुरवृन्द को एवं श्रीविष्णु स्तवनरत अमराधिपगण को भी वहाँ पर अङ्कित करे। इसी प्रकार श्रीनृसिंहदेव की मूर्त्ति प्रस्तुत करनी चाहिये ॥१२३-१२६॥

अथ त्रिविक्रममूर्त्तिः

अधुना त्रिविक्रम मूर्त्ति का वर्णन करता हूँ। यह देव ब्रह्माण्ड आक्रमण करने के निमित्त समुद्यत हैं। सुतरां महा उग्रमूर्त्ति हैं। अर्द्धादक् पादपार्श्व में इनकी बाहु और अधोभाग में सकमण्डलु वामनमूर्त्ति की कल्पना करनी चाहिये। दक्षिण दिक् में प्रदर्शन करे। इनके पार्श्व में भृङ्गारधारी दीनवदन बलिराजा को निर्म्माण करे, और इस भाव से गरुड़ की मूर्त्ति निर्म्माण करनी चाहिये मानों उनके द्वारा बलिराज बन्दी हो रहे हैं ॥१२७-१२९॥

अथ मत्स्यमूर्त्तिः कूर्म्ममूर्त्तिश्च

मत्स्यरूपं तथा मात्स्यं कौर्म्मं कूर्म्माकृति न्यसेत् ।
एवंरूपः स भगवान् कार्य्यो नारायणो हरिः ॥१३०॥

अथ महाविष्णुमूर्त्तिः

विष्णुधर्म्मोत्तरे—

देवदेवं तथा विष्णुं कारयेद्गरुड़स्थितम् । कौस्तुभोद्भासितोरस्कं सर्व्वाभरणधारिणम् ॥१३१
सजलाम्बुद-सच्छायं पीतदिव्याम्बरं तथा ।
मुखाश्च कार्य्याश्चत्वारो बाहवो द्विगुणास्तथा ॥१३२॥
सौम्येन्दुवदनं पूर्व्वं नारसिंहन्तु दक्षिणम् । कपिलं पश्चिमं वक्त्रं तथा वाराहमुत्तरम् ॥१३३॥
तस्य दक्षिणहस्तेषु बाणार्कमुषलादयः । चर्म्मशङ्खधराविन्दुचापे च वनमालिनः ।
कार्य्याणि विष्णुधर्म्मोक्त्या वामहस्तेष्वनुक्रमात् ॥१३४॥ इति ।

अथ लोकपालविष्णुमूर्त्तिः

किञ्च—

एकवक्त्रो द्विबाहुश्च गदाचक्रधरः प्रभुः ॥१३५॥

अथ वासुदेवमूर्त्तिः

किञ्च—

एकवक्त्रश्चतुर्बाहुः सौम्यरूपी सुदर्शनः । सलिलाध्मातमेघाभः सर्व्वाभरणभूषितः ॥१३६॥
कण्ठेन शुभदेशेन कम्बुतुल्येन राजता । वराभरणयुक्तेन कुण्डलोत्तमभूषितः ॥१३७॥
अङ्गदी बद्धकेयूरो वनमालाविभूषितः । उरसा कौस्तुभं बिभ्रत् किरीटं शिरसा तथा ।१३८

---

अथ मत्स्यमूर्त्तिः कूर्म्ममूर्त्तिश्च

मत्स्यमूर्त्ति मत्स्याकार एवं कूर्म्ममूर्त्ति कूर्म्माकार करनी चाहिये । मत्स्य वा कूर्म्मरूपी भगवान् नारायण की मूर्त्ति इस प्रकार ही निर्म्माण करे ॥१३०॥

अथ महाविष्णुमूर्त्तिः

विष्णुधर्मोत्तर में वर्णित है— देव देव श्रीविष्णुमूर्त्ति, गरुड़ के पृष्ठ में स्थित हैं, यह बक्षःस्थल में प्रदीप्त कौस्तुभमणि और अङ्गों में अनेक प्रकार आभरण धारण करते हैं । इनका वर्ण सजल मेघ के समान एवं परिधान सुन्दर पीताम्बर है । यह दिव्य चतुर्म्मुख एवं तद्‌द्विगुण (अष्ट) हस्त युक्त हैं । इनका पूर्वमुख मनोरम चन्द्र के समान, दक्षिण मुख नरसिंह, पश्चिम मुख कपिल और उत्तर मुख वराह के सदृश है । विष्णुधर्मोक्त नियमानुसार, इन मूर्त्ति के गलदेश में वनमाला, दक्षिण हस्तों में बालसूर्य्य और मूषलादि एवं वाम हस्तों में चर्म्म, शङ्ख, चन्द्र और धनुष, क्रमशः सब निर्म्माण करे ॥१३१-१३४॥

अथ लोकपालविष्णुमूर्त्तिः

और भी कथित है—यह लोकपाल श्रीविष्णु,-एक मुख द्विभुज और गदा चक्रधारी हैं ॥१३५॥

अथ वासुदेवमूर्त्तिः

और भी लिखा है कि-वासुदेव-एकमुख, चतुर्भुज, सौम्यरूपी, सुदृश्य सजलजलद के समान श्यामलाङ्ग और सब आभरणों से अलङ्कृत हों । वे सुशोभन कम्बुतुल्य मनोहर कण्ठ से विराजित हैं । उस कण्ठदेश

शिरःपद्मस्तथैवास्य कर्त्तव्यश्चारुकर्णिकः । पुष्टाश्लिष्टायतभुजस्तनुताम्रनखाङ्गुलिः ॥१३६॥
मध्येन त्रिबलीभङ्गशोभितेन सुचारुणा । स्त्रीरूपधारिणी कार्य्या क्षौणी तत्पदमध्यगा । १४०
तत्करस्थाङ्घ्रियुगलो देवः कार्य्यो जनार्द्दनः ।
सुचारुपदविन्यासः किञ्चिन्निष्क्रान्तदक्षिणः ॥१४१॥
अनुदृश्या मही कार्य्या देवदर्शनविस्मिता । देवश्च कटिवासेन कार्य्यो जान्ववलम्बिना ॥१४२
वनमाला च कर्त्तव्या देवजान्ववलम्बिनी । यज्ञोपवीतं कर्त्तव्यं नाभिदेशमुपागतम् ।१४३॥
उत्फुल्लकमलं पाणौ कुर्य्याद्देवस्य दक्षिणे । वामपाणिगतं शेषं शङ्खाकारं तु कारयेत् ॥१४४॥
दक्षिणे तु गदा देवी तनुमध्या सुलोचना । स्त्रीरूपधारिणी मुग्धा सर्व्वाभरणभूषिता ॥१४५॥
पश्यन्ती देवदेवेशं कार्य्या चामरधारिणी । कार्य्यं तन्मूर्द्धिन विन्यस्तं देवहस्तं तु दक्षिणम् ॥१४६
वामभागगतश्चक्रः कार्य्यो लम्बोदरस्तथा । सर्व्वाभरणसंयुक्तो वृत्तविस्फारितेक्षणः ॥१४७॥
कर्त्तव्यश्चामरकरो देववीक्षणतत्परः । कार्य्यो देवकरो वामो विन्यस्तस्तस्य मूर्द्धनि ॥१४८॥

अथ सङ्कर्षणमूर्त्तिः

वासुदेवस्वरूपेण कार्य्यः सङ्कर्षणः प्रभुः । स तु शुक्लवपुः कार्य्यो नीलवासा यदूत्तमः ॥१४९॥
गदास्थाने तु मुषलं चक्रस्थाने तु लाङ्गलम् । कर्त्तव्यौ तनुमध्यौ तौ नृरूपौ रूपसंस्थितौ ॥१५०

---

श्रेष्ठ आभरणसमूह के द्वारा अलङ्कृत है। यह देव, परमोत्तम कुण्डल, अङ्गद (बाजूबन्द), केयूर और वनमाला से विभूषित हैं। यह हृदय में कौस्तुभमणि और शिर पर किरीट धारण करते हैं, इनके मस्तक में मनोहर कर्णिकायुक्त एक पद्म प्रस्तुत करना चाहिये। इस मूर्त्ति की चारों भुजा पुष्ट, आश्लिष्ट और आयत है, नखाङ्गुली सूक्ष्म और अरुणवर्ण एवं देह मध्य त्रिवली भङ्ग से सुशोभित और मनोहर है। इनके चरण में नारीरूप धारिणी पृथिवी की मूर्त्ति निर्म्माण करे। यह वसुमतीदेवी कर द्वारा वासुदेव के चरण धारण कर रही है। इसी प्रकार वासुदेव की मूर्त्ति निर्म्माण करनी चाहिये। प्रभु को इस प्रकार कल्पना करे कि,–उनके पदक्षेप अत्यन्त मनोहर और दक्षिण पद कुछ बाहर निकला हुआ है। पृथिवीदेवी प्रभु को देखकर आश्चर्य्ययुक्त हो रही हैं। परिवस्त्र एवं वनमाला प्रभु के जानुपर्य्यन्त लम्बित हैं। यज्ञसूत्र नाभिदेश पर्य्यन्त लम्बित होगा। प्रभु के दक्षिण हस्त में विकसित कमल और वाम हस्त में शङ्खाकृति अनन्तमूर्त्ति स्थापन करे। दक्षिणदिक् में श्रीमूर्त्तिधारिणी, क्षीणमध्या, सुनयना गदा नाम्नी देवी विराजिता रहें। वे मुग्धा, सर्वाभरण भूषिता, एवं चामर धारिणी होकर प्रभु की ओर देखतीरहें। प्रभु का दक्षिण हस्त देवी के मस्तक प्रदेश संलग्न रहे। प्रभु के वाम भाग में लम्बोदर मूर्त्तिचक्र प्रस्तुत करनी चाहिये। यह सब आभूषणों से भूषित, सुवृत्त, विस्फारित नयनविशिष्ट एवं चामरधारी तथा प्रभुदर्शन तत्पर हों। प्रभु के वामहस्त उस चक्र के मस्तकोपरि विन्यस्त रहता है ॥१३६-१४८॥

अथ सङ्कर्षणमूर्त्तिः

सङ्कर्षण मूर्त्ति को भी वासुदेव मूर्त्ति के समान निर्म्माण करना चाहिये। यह यदूत्तम सङ्कर्षण देव की मूर्त्ति शुक्लवर्ण एवं उनका परिधान पीताम्बर है। वासुदेव मूर्त्ति के जिस स्थान में गदा विराजमान है, सङ्कर्षण के वहाँ मूषल और वासुदेव के जिस स्थान में चक्र विराजित हैं, इनके वहाँ लाङ्गल, शोभित है। यह मूषल और लाङ्गल कृश मध्य और मनुष्य रूप को समान मनोहर हो ॥१४९-१५०॥

अथ प्रद्युम्नमूर्त्तिः

वासुदेवस्वरूपेण प्रद्युम्नश्च तथा भवेत् । स तु दूर्व्वाङ्कुरश्यामः श्वेतवासा विधीयते ॥१५१॥
चक्रस्थाने भवेच्चापं गदास्थाने तथा शरः । तथा विधौ तु कर्त्तव्यौ यथा मुषल-लाङ्गलौ ॥१५२॥

अथानिरुद्धमूर्त्तिः

एतदेव तथा रूपमनिरुद्धस्य कारयेत् । पद्मपत्राभ-वपुषो रक्ताम्बरधरस्य तु ॥१५३॥
चक्रस्थाने भवेच्चर्म्म गदास्थानेऽसिरेव च । चर्म्म स्याच्चक्ररूपेण प्रांशुः खड्गो विधीयते ॥१५४

अथ चक्रादीनां विविधमूर्त्तीनाञ्च स्वरूपनिर्णयः

चक्रादीनां स्वरूपाणि किञ्चित् पूर्व्वं प्रदर्शयेत् । रम्याण्यायुधरूपाणि चक्रादीन्येव यादव ॥१५५

वामपार्श्वगताः कार्य्या देवानां प्रवरा ध्वजाः ।
सुपताकायुता राजन् यष्टिस्थास्ते यथोचितम् ॥१५६॥

किञ्च—

हंसो मत्स्यस्तथा कूर्म्मः कार्य्यास्तद्रूपधारिणः ।
शृङ्गी मत्स्यस्तु कर्त्तव्यो देवदेवो जनार्द्दनः ॥१५७॥

ऐश्वर्य्यमनिरुद्धस्तु वराहो भगवान् हरिः । ऐश्वर्य्यशक्त्या दंष्ट्राग्रसमुद्धृतवसुन्धरः ॥१५८॥
नृवराहोऽथवा कार्य्यः शेषोपरि गतः प्रभुः । शेषश्चतुर्भुजः कार्य्यश्चारुरत्नफणान्वितः ॥१५९॥
आश्चर्य्योत्फुल्लनयनो देववीक्षणतत्परः । कर्त्तव्यौ सीरमुषलौ करयोस्तस्य यादव ॥१६०॥
सर्पभोगश्च कर्त्तव्यस्तथैव रचिताङ्गुलिः । आलीढ़स्थानसंस्थानस्तत्पृष्ठे भगवान् भवेत् ॥१६१
मूर्त्तिमन्तमनैश्वर्य्यं हिरण्याक्षं विदुर्बुधाः । ऐश्वर्य्येणाविशेषेण स निरस्तोऽरिमर्द्दनः ॥१६२॥

---

अथ प्रद्युम्नमूर्त्तिः

प्रद्युम्न मूर्त्ति को भी वासुदेव के समान करे। यह मूर्त्ति दूर्वाङ्कुरवत् श्यामलाङ्ग और श्वेत वसनधारी हैं। जिस प्रकार सङ्कर्षण मूर्त्ति में मूषल एवं लाङ्गल विन्यस्त होगा, इस प्रकार ही वासुदेव मूर्त्ति के जिस स्थान में चक्र है, इस मूर्त्ति में वहाँ धनुष और जिस स्थान में गदा है, वहाँ शर विन्यास करना चाहिये ॥१५१-१५२॥

अथानिरुद्धमूर्त्तिः

अनिरुद्ध मूर्त्ति को इस प्रकार प्रस्तुत करे कि, उनका देह पद्मपत्र के समान कान्तिविशिष्ट एवं रक्त वसनधारी हों। इस मूर्त्ति के चक्रस्थान में ढाल, और गदा स्थान मे खड्ग स्थापन करे। यह ढाल ही चक्र रूप से विराजित और खड्ग उन्नत हो ॥१५३-१५४॥

अथ चक्रादीनां विविधमूर्त्तीनाञ्च स्वरूपनिर्णयः

हे यादव! चक्रादि का स्वरूप प्रदर्शन किया जाता है। रम्य चक्रादि को ही आयुध स्वरूप जानना चाहिये। देवमूर्त्ति के वाम पार्श्व में अति उत्तम ध्वजा विन्यस्त करे। हे नृप! यह ध्वजसमूह यष्टि में स्थापित और सुन्दर पताका युक्त करे। और भी लिखा है, कि—हंस, मत्स्य और कूर्म्म मूर्त्ति में तत्तद्रूपी करके प्रस्तुत करे एवं मीनरूपी देव जनार्दन को शृङ्गयुक्त करे। अनिरुद्ध मूर्त्ति ऐश्वर्य्य स्वरूप है, अर्थात् अनिरुद्ध मूर्ति के प्रसाद से ऐश्वर्य्य लाभ होता है। वराहरूपी भगवान् हरि को इस प्रकार प्रस्तुत करे कि वे ऐसी शक्ति के बल से दन्ताग्र द्वारा वसुमती को उद्धार कर रहे हैं। अथवा नृवराह मूर्त्ति शेषनाग के

नृवराहोऽथवा कार्य्यो ध्याने कपिलवत् स्थितः ।
द्विभुजस्त्वथवा कार्य्यः पिण्डनिर्व्वपणोद्यतः ॥१६३॥
समग्रक्रोड़रूपो वा बहुदानवमध्यगः । नृवराहो वराहो वा कर्त्तव्यः क्ष्माविदारणः ॥१६४॥
ज्ञानवर्द्धिः स एवोक्तो ज्ञानं परमवर्द्धनः । पीनस्कन्धकटिग्रीवः कृशमध्यः कृशोदरः ॥१६५॥
सिंहाननो नृदेहश्च नीलवासाः प्रभान्वितः । आलीढ़स्थानसंस्थानः सर्व्वाभरणभूषितः ॥१६६
ज्वालामालाकुलमुखो ज्वलत्केशरमण्डलः । हिरण्यकशिपोर्वक्षः पाटयन्नखरैः खरैः ॥१६७॥
नीलोत्पलाभः कर्त्तव्यो दैत्यजानुगतस्तथा । हिरण्यकशिपुर्दैत्यस्तमज्ञानं विदुर्बुधाः ॥१६८॥

अथ वामनमूर्त्तिः

कर्त्तव्यो वामनो देवः सङ्कटे भक्तिभावितैः । पीनगात्रश्च कर्त्तव्यो दण्डी चाध्ययनोद्यतः ।
दूर्व्वाश्यामस्तु कर्त्तव्यः कृष्णाजिनधरस्तथा ॥१६९॥

अथ त्रिविक्रममूर्त्तिः

सजलाम्बुदसङ्काशस्तथा कार्य्यस्त्रिविक्रमः । दण्डपाशधरः कार्य्यः शङ्खचक्रगदाधरः ॥१७०॥
शङ्खचक्रगदापद्माः कार्य्यास्तस्य स्वरूपिणः । निर्द्देहास्ते न कर्त्तव्याः शेषः कार्य्यश्च पूर्व्ववत् ।
एकोर्द्ध्ववदनः कार्य्यो देवो विस्फारितेक्षणः ॥१७१॥

---

ऊपर अवस्थित करती रहे । शेष मूर्त्ति को चतुर्भुज रूप में निर्म्माण करना चाहिये । वे मनोहर रत्नफण से विभूषित होकर देवदर्शन में रत हैं । विस्मय से उनके नेत्र उत्फुल्ल हैं । हे यादव ! इनके हाथ में लाङ्गल एवं मूषल विन्यास करना चाहिये । इनको भुजङ्ग शरीर एवं अङ्गुली विशिष्ट करना चाहिये । भगवान् इनके पृष्ठदेश में आलीढ़स्थ होकर अवस्थित हैं । अर्थात् दक्षिणचरण प्रसारित करके वामचरण सङ्कुचित कर स्थित हैं । विज्ञजनगण, हिरण्याक्ष मूर्त्ति को अनैश्वर्य्य जानते हैं । अत्युत्तम ऐश्वर्य्य द्वारा वह शत्रुसूदन हिरण्याक्ष निरस्त हुआ है, अर्थात् हिरण्याक्ष की उपासनादि करने से ऐश्वर्य्य लाभ करने की सम्भावना नहीं है । अथवा नृवराह मूर्त्ति वा वराहमूर्त्ति इस प्रकार निर्माण करना चाहिये कि– वे भूमि को विदीर्ण कर रहे हैं । इस परम ज्ञानवर्धन मूर्त्ति को ही ज्ञानिगण ज्ञानस्वरूप कहते हैं । यह मूर्त्ति पीनस्कन्ध, पीनकटि, पीनग्रीव, कृशमध्य, कृशोदर, सिंह वदन, नृदेहवान्, नीलवसन, प्रभाशाली आलीढ़स्थ एवं सर्वाभरण शोभित हो, इसका मुख ज्वालामाला से समाकुल है, एवं केशमण्डल प्रदीप्त है । यह तीक्ष्ण नखर के द्वारा हिरण्यकशिपु का हृदय विदारण करते हैं । दैत्यराज हिरण्यकशिपु को नीलोत्पल सन्निभ एवं जानुगत रूप में निर्म्माण करना चाहिये । विज्ञ व्यक्तिगण इस दैत्य को ही अज्ञान स्वरूप कहते हैं ॥१५७-१६८॥

अथ वामनमूर्त्तिः

सङ्कट में भक्तिपूर्वक वामनमूर्त्ति प्रस्तुत करे । यह मूर्त्ति–पीनगात्र, दण्डधारी, अध्ययनोद्यत, दूर्वा के समान श्यामल एवं कृष्णाजिनधारी है ॥१६९॥

अथ त्रिविक्रममूर्त्तिः

यह मूर्त्ति सजल जलद के समान श्यामवर्ण, दण्डपाशधर एवं शङ्खचक्रगदाधर है । शङ्ख, चक्र, गदा एवं रूपविशिष्ट करे, आकृति रहित न करे । शेषनाग को भी पूर्ववत् प्रस्तुत करना चाहिये एवं वह ऊर्द्ध्वमुख और विस्फारित नयन हो ॥१७०-१७१॥

अथ भृगुराममूर्त्तिः

कार्य्यस्तु भार्गवो रामो जटामण्डलदुर्द्दशः। हस्तेऽस्य परशुः कार्य्यः कृष्णाजिनधरस्य तु। १७२

अथ दाशरथिमूर्त्तिः

रामो दाशरथिः कार्य्यो राजलक्षणलक्षितः। भरतो लक्ष्मणश्चैव शत्रुघ्नश्च महाशयः।
तथैव सर्व्वे कर्त्तव्याः किन्तु मौलिविवर्ज्जिताः। १७३॥

अथ कृष्णमूर्त्तिः

कृष्णश्चक्रधरः कार्य्यो नीलोत्पलदलच्छविः। इन्दीवरधरा कार्य्या तस्य साक्षाच्च रुक्मिणी॥१७४

अथ बलदेवमूर्त्तिः

सीर-पाणिर्बलः कार्य्यो मुषली चैककुण्डली। श्वेतोऽतिनीलवसनो मदाघूर्णितलोचनः। १७५

अथ प्रद्युम्नमूर्त्तिः

चापवाणधरः कार्य्यः प्रद्युम्नश्च सुदर्शनः। राजन् दूर्व्वादलश्यामः श्वेतवासा मदोत्कटः। १७६

अथ कामदेवमूर्त्तिः

कामदेवस्तु कर्त्तव्यो रूपेणाप्रतिमो भुवि। अष्टबाहुः स कर्त्तव्यः शङ्खपद्मविभूषणः॥१७७॥
चापवाणधरश्चैव मदाकुञ्चितलोचनः। रतिः प्रीतिस्तथा शक्तिर्मन्दशक्तिस्तथोज्ज्वला॥१७८
चतस्रस्तस्य कर्त्तव्याः पत्न्यो रूपमनोहराः। चत्वारश्च करास्तस्य कार्य्यो भार्य्यास्तनोद्गाः।
केतुश्च मकरः कार्य्यः पञ्चवाणमुखो महान्॥१७९॥

---

अथ भृगुराममूर्त्तिः

इनके मस्तक में दुष्प्रेक्ष्य जटाजाल, हस्त में परशु एवं यह कृष्णजिनधारी हैं॥१७२॥

अथ दाशरथिमूर्त्तिः

दाशरथि राम की मूर्त्ति राजलक्षणान्वित करनी चाहिये। उनके पार्श्व में भरत, लक्ष्मण एवं शत्रुघ्न, मूर्त्तित्रय को निर्म्माण करे। किन्तु इनके मस्तक पर किरीट न रखे॥१७३॥

अथ कृष्णमूर्त्तिः

श्रीकृष्ण चक्रधर एवं नीलोत्पलदलवत् वर्ण विशिष्ट हैं। इनके पार्श्व में रुक्मिणीदेवी की मूर्त्ति निर्म्माण करे। वे हाथ में इन्दीवर धारण कर रही हैं॥१७४॥

अथ बलदेवमूर्त्तिः

श्रीबलदेव मूर्त्ति, लाङ्गल मुषल एवं एक कुण्डल धारण करती है। इनका वर्ण श्वेत, परिधान नीलाम्बर है। मदमत्ततावशतः इनके नयनयुगल विघूर्णित हैं॥१७५॥

अथ प्रद्युम्नमूर्त्तिः

हे राजन्! यह मूर्त्ति, धनुः शरधर, सुदृश्य, दूर्वादलवत् श्यामल, श्वेत वसनधारी एवं मदोत्कट है॥१७६॥

अथ कामदेवमूर्त्तिः

कामदेव की मूर्त्ति को इस प्रकार निर्म्माण करे कि—यह पृथिवी के मध्य में अप्रतिमरूपधारी, अष्टभुज शङ्ख पद्म धनुर्वाणधारी एवं इनके नयनयुगल मत्तत वशतः आकुञ्चित हैं। इनके पार्श्व में रति, प्रीति, मन्दशक्ति एवं उज्ज्वला नाम्नी तदीय रूपवती चारों पत्नियों को भी विन्यस्त करना चाहिये। कामदेव के कर चतुष्टय तदीय पत्नीवृन्द के कुचों के समीप में संलग्न हैं। यह मीन केतन अर्थात् इनकी मकराकृति पताका है। इस पताका में पञ्चवाण का मुख विराजित हो॥१७७-१७९॥

अथ अनिरुद्धमूर्त्तिः साम्बमूर्त्तिश्च

कर्त्तव्यश्चानिरुद्धोऽपि खड्गचर्म्मधरः प्रभुः । साम्बः कार्य्यो महाहस्तस्वरूपोऽसावशेषतः ।
साम्बानिरुद्धौ कर्त्तव्यौ पद्माभौ रक्तवाससौ ॥१८०॥

अथ गोपालमूर्तिः

गोपालप्रतिमां कुर्य्याद्वेणुवादनतत्पराम् । वर्हापीड़ां घनश्यामां द्विभुजामूर्द्ध्वसंस्थिताम् ॥१८१

अथ बुद्धमूर्त्तिः

काषारवस्त्रसंवीतः स्कन्धसंसक्तचीवरः । पद्मासनस्थो द्विभुजो ध्यायी बुद्धः प्रकीर्त्तितः ॥१८२

अथ नरनारायण-मूर्त्तिः

दूर्व्वाश्यामो नरः कार्य्यो द्विभुजश्च महाभुजः । नारायणश्चतुर्बाहुर्नीलोत्पलदलच्छविः ॥१८३
तयोर्मध्ये तु वदरी कार्य्या फलविभूषणा । नरनारायणौ देवावक्षमालाधरावुभौ ॥१८४॥
अष्टचक्रे स्थितौ जाले भूतयुक्ते मनोरमे । कृष्णाजिनधरौ दान्तौ जटामण्डलधारिणौ ॥१८५

अथ विविधमूर्त्तिभेदाः

पादेन चैकेन रथस्थितेन, पादेन चैकेन च जानुगेन ।
कार्य्यो हरिश्चात्र नरेण तुल्यः, कृष्णोऽपि नारायणतुल्यमूर्त्तिः ॥१८६॥

मूर्त्तिमत्पृथिवीहस्तन्यस्तपादः सितच्छविः । नीलाम्बरधरः कार्य्यो देवो हयशिरोधरः ॥१८७
विद्धि सङ्कर्षणांशेन देवं हयशिरोधरम् । कर्त्तव्योऽष्टभुजो देवस्तत्करेषु चतुर्षु च ॥१८८॥
शङ्खचक्रगदापद्मान् सकारान् दर्शयेद्बुधः । चत्वारश्च कराः कार्य्या देवानां देहधारिणाम् ॥
देवेन मूर्द्धि्न विन्यस्ताः सर्व्वाभरणभूषिताः ॥१८९॥

---

अथ अनिरुद्धमूर्त्तिः साम्बमूर्त्तिश्च

अनिरुद्ध मूर्त्ति को असिचर्म्मधारी एवं शाम्बमूर्त्ति को विशाल बाहु करना चाहिये । यह दोनों मूर्त्ति को ही पद्मसन्निभ और लाल वस्त्रधारी करे ॥१८०॥

अथ गोपालमूर्त्तिः

यह मूर्त्ति वेणुवादनरत हैं । इनके शिरोदेश में मयूर पुच्छमयी चूड़ा विराजित है । यह देव, जलद-कान्ति एवं द्विभुज हैं । यह ऊद्‌र्ध्व भाग में अवस्थान करते हैं ॥१८१॥

अथ बुद्धमूर्त्तिः

यह मूर्त्ति कषायाम्बरवृत हैं, स्कन्ध देश में चीर विराजित है । यह कमलालयस्थ हैं, द्विभुज एवं ध्यानमग्न हैं ॥१८२॥

अथ नरनारायण-मूर्त्तिः

नरमूर्त्ति, दूर्वावत् श्यामकाशित विशिष्ट, द्विभुज एवं विशाल बाहुयुक्त हैं । नारायण मूर्त्ति,– चतुर्बाहु एवं नीलोत्पलदल सन्निभ हैं । नर एवं नारायण इन दोनों मूर्त्तियों के मध्य में फलभार से अनित वदरीवृक्ष प्रस्तुत करना चाहिये । यह दोनों मूर्त्ति ही अक्षमाला धारण करती हैं । उभय मूर्त्ति ही सुन्दर भूतयुक्त अष्टचक्र विशिष्ट जाल में अवस्थित हैं । यह कृष्णाजिनधर, दान्त एवं जटामण्डल धर हैं ॥१८३-१८५॥

अथ विविधमूर्त्तिभेदाः

नर सदृश श्रीहरिमूर्त्ति एवं नारायण सदृश श्रीकृष्णमूर्त्ति प्रस्तुत करे । हरि की इस मूर्त्ति का एक

प्रद्युम्नं विद्धि वैराग्यं कापिलीं तनुमाश्रितम् । मध्ये ऊरुकरः कार्य्यस्तस्योत्सङ्गतः परः ।
दोर्युगं चापरं तस्य शङ्खचक्रधरं भवेत् ॥१९०॥

पद्मासनोपविष्टश्च ध्यानसम्मीलितेक्षणः । कर्म्मण्यः कपिलो देवो जटामण्डलदुर्दृशः ॥१९१॥

वायुसंरोधपीनाङ्गः पद्माङ्कचरणद्वयः । मृगाजिनधरो राजन् शुभयज्ञोपवीतवान् ।
विभुर्मन्त्रमहापद्मकर्णिकामध्यमास्थितः ॥१९२॥

वैराग्यभावेन महानुभावो ध्याने स्थितः स्वं परम पदं तत् ।
ध्यायंस्तथा वै भुवनस्य गोप्ता, साङ्ख्यप्रवक्ता पुरुषः पुराणः ॥१९३॥

श्यामवर्णस्तनूवासा पिङ्गलाक्षो जटाधरः । सुमन्तुर्जैमिनिः पैलो वैशम्पायन एव च ।
तस्य शिष्याश्च कर्त्तव्याश्चत्वारः पारिपार्श्विकाः ॥१९४॥

गौरस्तु कार्य्यो वाल्मीकिजटामटामण्डलदुर्दृशः ।
तपस्यभिरतः शान्तो न कृशो न च पीवरः ॥१९५॥

वाल्मीकिरूपं सकलं दत्तात्रेयस्य कारयेत् । जलमध्यगतः कार्य्यः शेषः पन्नगदर्शनः ॥
फणापुञ्जमहारत्नदुर्निरीक्ष्यशिरोधरः ॥१९६॥

---

चरण रथ में एवं अपर चरण जानुदेश में विन्यस्त रहे। हयग्रीव की मूर्त्ति को इस प्रकार निर्म्माण करे कि मूर्तिमती वसुमती के हस्त में उनका चरण विन्यस्त रहे। वे शुक्लबर्ण, नील वसन धारी एवं अश्वशीर्ष है। यह मूर्त्ति-सङ्कर्षणदेव का अंश हैं। इनको अष्टभुज युक्त करे। उनके चार हाथों में मूर्तिमान् शङ्ख, चक्र, गदा एवं पद्म शोभित हैं और अवशिष्ट हस्त चतुष्टय में देहधारी देववृन्द के मस्तक विन्यस्त हैं। उनके समस्त हस्त सर्वाभरण विभूषित हैं ॥१८६-१८९॥

प्रद्युम्न मूर्त्ति—वैराग्यमय एवं कपिलदेहधारी हैं। उनके हस्त चतुष्टय के मध्य में एक हस्त ऊरुदेश में एवं द्वितीय हस्त अङ्क में स्थापित है, एवं अवशिष्ट हस्तद्वय में शङ्ख एवं चक्र विराजित है। कर्मनिरत कपिलदेव पद्मासन में उपविष्ट हैं। ध्यानमीलितनयन एवं जटामण्डल द्वारा दुष्प्रेक्ष्य हैं। हे राजन्! कुम्भक योग से वायुरोध होने से उनका देह स्फीत, एवं चरणद्वय पद्म चिह्न से अङ्कित हैं। वे मृगाजिन एवं शुभ यज्ञोपवीतधारी, विभु एवं मन्त्ररूप महाकमल की कर्णिका में संस्थित हैं। यह वैराग्यभाव हेतु महानुभाव हैं। एवं निज परमपद ध्यान में निरत हैं। यह पुराणपुरुष, भुवनरक्षक एवं सांख्य शास्त्र वक्ता हैं। यह श्यामदेह, सूक्ष्म वसनयुक्त, पिङ्गल नयन एवं जटाधर हैं। सुमन्तु, जैमिनी, पैल एवं वैशम्पायन,-इन मुनि चतुष्टय को कपिलदेव के पार्श्वस्थ शिष्य रूप में प्रस्तुत करना चाहिये ॥१९०-१९४॥

वाल्मिकी मूर्त्ति—गौर वर्ण, जटामण्डल से दुष्प्रेक्ष्य, तपोनिरत, शान्त, नातिकृश एवं नातिस्थूल हैं। दत्तात्रेय की मूर्त्ति भी वाल्मिकी मूर्त्ति के सदृश हैं। पन्नगाकृति शेषमूर्त्ति को जलमध्य में निर्म्माण करना चाहिये। उनके फण मण्डलस्थ दिव्य रत्न की प्रभा से तदीय मस्तक दुष्प्रेक्ष्य है। देव देव को शेष भोगाङ्क में स्थित करके प्रस्तुत करे। उनके एक हस्त जानु में द्वितीय कर नाभिदेश में तृतीय कर शिरोदेश में विन्यस्थ है एवं चतुर्थ कर में देवतरु मञ्जरी शोभित है। इनके नाभि सरोवर में सर्व पृथिवीमय जो कमल समुत्पन्न हुआ है, उस कमल में पूर्ववत् पितामह की मूर्त्ति निर्म्माण करे। इस कमल के नाल में मधु एवं कैटभ नामक असुरद्वय की मूर्त्ति संलग्न रहे। उनके समीप में नृरूपधारी भुजङ्ग में अस्त्रों को विन्यास करना चाहिये। उसके समीप में मरकतकान्ति गरुड़ की मूर्त्ति अङ्कित करे। यह गरुड़ की मूर्त्ति, उलूक

देवदेवस्तु कर्त्तव्यः शेषभोगाङ्कसंस्थितः। एको भुजोऽस्य कर्त्तव्यस्तत्र जानौ प्रसारितः ॥१९७
कर्त्तव्यो नाभिदेशे तु तदा तस्य परः करः। तथैवान्यकरः कार्य्यो देवस्य सुशिरोधरः ॥१९८
स तानमञ्जरीधारी तथैवास्य परो भवेत्। नाभीसरसि सम्भूते कमले तस्य यादव ॥१९९॥
सर्व्वपृथ्वीमये देवः प्राग्वत् कार्य्यः पितामहः। नाललग्नौ च कर्त्तव्यौ पद्मस्य मधुकैटभौ ॥२००

नृरूपधारीणि भुजङ्गमध्ये, कार्य्याण्यथास्त्राणि तथा समीपे ॥२०१॥

तार्क्ष्यो मरकतप्रख्यः कौशिकाकारनासिकः। चतुर्भुजश्च कर्त्तव्यो वृत्तनेत्रमुखस्तथा ॥२०२॥
ग्रीवोरुजानूचरणपक्षद्वयविभूषितः। प्रभासंस्थानसौवर्णकलापेन विराजितः ॥२०३॥
छत्रञ्च पूर्णकुम्भञ्च करयोस्तस्य कारयेत्। करद्वयञ्च कर्त्तव्यं तथा विरचिताञ्जलि ॥२०४॥
यदास्य भगवान् पृष्ठे छत्रकुम्भधरौ करौ। न कर्त्तव्यौ तु कर्त्तव्यौ देवपादधरावुभौ ॥२०५॥

किञ्चिल्लम्बोदरः कार्य्यः सर्व्वाभरणभूषितः ॥२०६॥

अथ लक्ष्मीनारायणमूर्त्तिः

विश्वकर्म्मशास्त्रे च—

लक्ष्मीनारायणौ कार्य्यौ संयुतौ दिव्यरूपिणौ।
दक्षिणस्था विभोर्मूर्त्तिर्लक्ष्मीमूर्त्तिस्तु वामगा ॥२०७॥
दक्षिणः कण्ठलग्नोऽस्य वामहस्तसरोजधृक्।
विभोर्वामकरो लक्ष्म्याः कुक्षिभागे स्थितः सदा ॥२०८॥

सर्व्वावयवसम्पूर्णा सर्व्वालङ्कारभूषिता। सुष्ठुनेत्रकपोलास्य-रूपयौवनसंयुता ॥२०९॥
सिद्धिः कार्य्या समीपस्था चामरग्राहिणी शुभा। कर्त्तव्यं वामनं सर्व्वं देवाधोभागगं सदा ॥२१०
शङ्खचक्रधरौ तस्य द्वौ कार्य्यौ पुरुषौ पुरः। वामनौ हारकेयूरकिरीटमणिभूषितौ ॥२११॥
उपासकौ समीपस्थौ प्रभोर्ब्रह्मशिवात्मकौ। रसनां योगपट्टञ्च शिखामञ्जलिमास्थितौ ॥२१२

---

नासिका के समान नासिकायुक्त, चतुर्हस्त, वृत्त नेत्र (गोल नेत्र) वृत्तास्य एवं ग्रीवा, ऊरु, जानु, पद एवं पक्षद्वय से सुशोभित एवं उज्ज्वल सुवर्ण कान्ति विशिष्ट हैं। इनके प्रथम हस्तद्वय में छत्र एवं पूर्णकुम्भ विद्यमान हैं। एवं अपर हस्तद्वय में अञ्जलि बन्धन कर विराजमान हैं। इनकी पीठ पर श्रीभगवान् की मूर्त्ति अङ्कित करने पर, दोनों हाथों में छत्र और कलश प्रदान न करे। उसके बदले उन दोनों हाथों से श्रीभगवान् के चरण पकड़ कर रहें। उस समय इस गरुड़मूर्त्ति को कुछ लम्बोदर और सब अलङ्कारों से अलङ्कृत करे ॥१९५-२०६॥

अथ लक्ष्मीनारायणमूर्त्तिः

विश्वकर्मशास्त्र में वर्णित है—दिव्यरूपी लक्ष्मीनारायण मूर्त्ति को परिस्पर मिलित भाव से निर्म्माण करे 'नारायण मूर्त्ति दक्षिण भाग में एवं लक्ष्मी की मूर्त्ति वाम भाग में अवस्थित रहे। लक्ष्मीदेवी का दक्षिण हस्त नारायण के कण्ठदेश में संलग्न रहे। और वाम हस्त में कमल विराजमान रहे। नारायण का वाम हस्त देवी के कुक्षिदेश में विन्यस्त रहे। यह देवी सर्वावयव सम्पूर्णा, सर्वाभरण भूषिता, सुनयना, सुकपोला एवं रूप यौवन सम्पन्ना हो। लक्ष्मीदेवी के सन्निधान में शुभकरी सिद्धिदेवी की मूर्त्ति निर्म्माण

अथ योगस्वामिमूर्त्तिः

पद्मासन-समासीनः किञ्चिन्मीलितलोचनः।
घ्राणाग्रे दत्तदृष्टिश्च श्वेतपद्मोपरि स्थितः।२१३।
वामदक्षिणगौ हस्तावुभावुत्सङ्गभागगौ। तत्करद्वयपार्श्वस्थे पङ्केरुह-महागदे।२१४।
ऊर्द्ध्वं करद्वये चास्य शङ्खश्चापि सुदर्शनम्।
योगस्वामी स विज्ञेयः पूज्यो मोदार्थयोगिभिः॥२१५॥

अथ दशावताराणां मूर्त्तयः, तत्र मत्स्यावतारमूर्त्तिः

श्रीहयशीर्षपञ्चरात्रे—

अतःपरं प्रवक्ष्यामि मत्स्यादीनान्तु लक्षणम्।
षट्त्रिंशदङ्गुलायामं तदर्द्धेन तु विस्तृतम्॥२१६॥
दैर्घ्याष्टमांशसंयुक्तं पुच्छवक्त्रं तु कारयत्। रोहितं विवृतास्यन्तु द्वादशाङ्गुलमानतः।
कलैकं पृष्ठरोमन्तु पुच्छार्द्धं क्रोड़गं तथा॥२१७॥
कृतस्यैवंविधस्येह रोहितस्य मुखोद्गतम्।
नारायणन्तु कुर्व्वीत आगुल्फं तन्मुखोद्गतम्॥२१८॥
एवं नृमत्स्यं मत्स्यं वा स्थापयेद्यस्तु मानवः। सर्व्वज्ञत्वं भवेत्तस्य सर्व्वापन्मुक्तिरेव च॥२१९॥

---

करे। इनके हस्त में चामर विद्यमान रहे। इन नारायण के अधोभाग में वामन मूर्त्ति निर्म्माण करनी चाहिये। अर्थात् खर्वाकृति मूर्त्ति निर्म्माण करे। देव के सन्निधान में सम्मुख भाग में शङ्खचक्रधारी दो पुरुष अवस्थित रहें। वे दोनों ही वामनाकृति, एवं हार, केयूर, किरीट, एवं मणि से विभूषित हैं। इनके सन्निधान में ब्रह्मा एवं शिवमूर्त्ति प्रस्तुत करनी चाहिये। वे प्रभु के समीप में रहकर काञ्ची, योगपट्ट, शिखा एवं अञ्जलि धारण करते हैं। एवं प्रभु के समीप में रहकर उपासना में निरत रहते हैं॥२०७-२१२॥

अथ योगस्वामिमूर्त्तिः

यह मूर्त्ति पद्मासन में विराजित हैं। इनके नयनयुगल ईषन्मीलित एवं दृष्टि नासाग्र में विन्यस्त है। यह शुक्ल पद्मोपरि उपविष्ट हैं। इनके वाम एवं दक्षिण हस्त क्रोड़देश में विन्यस्त हैं। हस्तयुगल के पार्श्व में पद्म एवं महागदा शोभित हैं। इनके ऊर्द्ध्व हस्तद्वय में शङ्ख एवं सुदर्शन विद्यमान हैं। आमोदाकाङ्क्षी योगिवृन्द इनकी पूजा करते हैं। यह योगस्वामी नाम से प्रख्यात हैं॥२१३-२१५॥

अथ दशावताराणां मूर्त्तयः, तत्र मत्स्यावतारमूर्त्तिः

श्रीहयशीर्ष पञ्चरात्र में उक्त है— अनन्तर मत्स्यादि मूर्त्ति का लक्षण वर्णन करता हूँ। यह मूर्त्ति दैर्घ्य में षट्त्रिंशदङ्गुल (छत्तीस) और विस्तार में उससे आधी अर्थात् अष्टादश (अठारह) अङ्गुल होगी, एवं पुच्छ मुख के दैर्घ्य के अष्टमांश (साढ़े चार हाथ) और मुख में टेढ़ी करनी चाहिये। इस मूर्त्ति का आकार रोहित मत्स्य के समान है, मुख, द्वादशाङ्गुल विस्तृत है। पृष्ठ रोम एक कला और पूँछ का आधा अंश गोदी में हो। अथवा श्रीभगवान् इस प्रकार रोहित मत्स्य के मुखविवर से उद्गत हुये हैं। किवा नारायण के गुल्फ पर्य्यन्त शरीर इस मीनवर के मुखोद्गत रहे। अर्थात् मछली के मुख से निकला हुआ रहे। जो मानव, यह नृमत्स्य वा मत्स्य मूर्त्ति स्थापन करते हैं, उनको सर्वज्ञता लाभ होता है और वे आपदुत्तीर्ण होते हैं॥२१६-२१९॥

अथ कूर्म्ममूर्त्तिलक्षणम्

दैर्घ्यात्त्रितालसंयुक्तं तदर्द्धं परिमण्डलम् । चतुश्चरणसंश्लिष्टं चतुरङ्गुलमात्रया ॥२२०॥
कपालद्वयमध्ये तु गोविन्दं तु समुद्गतम् । कृत्वा वा गुल्फपर्य्यन्तमुद्गच्छन्तं सुरोत्तमा ॥२२१
नृकूर्म्मं कारयित्वैनं कूर्म्मं वा स्थापयीत यः । स्ववंशोद्धरणं तस्य जायते मुक्तिरेव च ॥२२२

अथ वराहमूर्त्तिलक्षणम्

वक्त्रं कलाष्टकायामं श्रोत्रमस्य द्विगोलकम् । हनू सप्ताङ्गुले तस्य सृक्कणी द्व्यङ्गुले मते ॥२२३
सप्ताङ्गुलं मुखं प्रोक्तं रदौ सार्द्धकलौ द्विज । नासारन्ध्रं भवेन्नेत्रं यवहीनेऽर्क्षिणी मते ॥२२४
किञ्चिद्वक्त्रे स्मिते श्रोत्रे द्विगोलकसमायते । चतुष्कलं कर्णमध्यं तदर्द्धेन तदुच्छ्रितम् ॥२२५॥
वस्वङ्गुला भवेद्ग्रीवा नेत्रैकं चोन्नता तु सा । शेष नृसिंहवत् कार्य्यं वराहस्य तु विग्रहम् ॥२२६
शेषाहि-विधृतं पादं बाहुना धारयन् धराम् । शङ्खं वामे तथा पद्मं पदाचक्रे तु दक्षिणे ॥२२७

एवं नरवराहञ्च कृत्वा यः स्थापयेन्नरः । भवोदधिसमुत्तारं राज्यञ्च हतकण्टकम् ।
प्राप्नुयान्नात्र सन्देहो ह्यमुत्रेहैव वा भुवि ॥२२८॥

अथ नृसिंहमूर्त्तिलक्षणम्

तिर्य्यङ्नृसिंहदेवस्य तथा विपुलमाननम् । वर्त्तुलेऽस्य तथा नेत्रे स्कन्धौ तालमितौ शुभौ ॥२२९
व्याकुञ्चिते भ्रुवौ वक्त्रं विवृतं चोग्रदंष्ट्रकम् । लेलिहाना तथा जिह्वा समुद्गतशटं शिरः ॥२३०

---

अथ कूर्म्ममूर्त्तिलक्षणम

कूर्म्ममूर्त्ति दैर्घ्य में सार्ध एक हस्त (डेढ़ हाथ दीर्घ लम्बी) एवं तदर्द्ध परिमण्डलयुक्त है। इनके चार चरण हैं। प्रत्येक चरण में चार चार अङ्गुल विराजित हैं। इनके कपालयुगल के मध्य में आगुल्फ समुत्थित श्रीगोविन्द मूर्त्ति विराजमान हैं। नृकूर्म्ममूर्त्ति वा कूर्म्ममूर्त्ति स्थापन करने से वंशोद्धार होता है एवं मोक्ष लाभ होता है ॥२२०-२२२॥

अथ वराहमूर्त्तिलक्षणम्

हे द्विज ! वराह मूर्त्ति का मुख का विस्तार अष्टकला है, कर्ण, द्वि गोलक, हनु (गण्डयुगल के प्रान्त-भाग) सप्तदशाङ्गुल, सृक्क (ओष्ठ का प्रान्तभाग) दो अङ्गुल, वदन सप्त अङ्गुल, दशनयुगल सार्धएक कला, नासारन्ध्र तीन यव, नयनद्वय यवहीन, मुख इषद्धास्ययुक्त, कर्णद्वय द्वि गोलक परिमित सम एवं आयत करना चाहिये। कर्ण के मध्यभाग चतुष्कला एवं उच्चता दो कला करनी चाहिये। ग्रीवा अष्टाङ्गुल एवं एक चक्षु के परिमाण करे। अवशिष्ट अङ्ग का निर्म्माण श्रीनृसिंहदेववत् करे। शेषनाग, श्रीवराहदेव के चरण धारण करके अवस्थित हैं। वराह, बाहु द्वारा वसुमती को धारण कर अवस्थित हैं। इनके वाम भाग में शङ्ख एवं पद्म एवं दक्षिण भाग में गद एवं चक्र स्थापन करे। जो मानव, इस प्रकार नृवराह मूर्त्ति स्थापन करते हैं, वे भव जलधि के उस पार उतर जाते हैं, और इसलोक एवं परलोक में निष्कण्टक राज्य लाभ करते हैं। इसमें संशय नहीं है ॥२२३-२२८॥

अथ नृसिंहमूर्त्तिलक्षणम्

श्रीनृसिंहदेव के मुख ईषत् तिर्य्यक् भाव में अवस्थित एवं विस्तृत करना चाहिये। इनके नयनयुगल सुवृत्त, स्कन्धद्वय सुदृश्य, एवं तालपरिमित, भ्रूद्वय कुञ्चित, वक्त्र विवृत, दन्त-भीषण, रसना लेलिहान

दंष्ट्रे द्व्यङ्गुलनिर्य्याते वक्त्राग्रे तु सिते तथा । त्रिकलाभ्यधिकं वक्षः पञ्चनेत्राधिका कटिः ।।२३१

द्विकलाभ्यधिकौ चोरू जानू चापि कलाधिकौ ।
जङ्घे मार्द्धकले मध्ये विस्तृताग्रे विभागतः ।।२३२।।
ऊद्ध्वौ किञ्चित् स्मृतौ पादौ बाहुमूले कलाधिके ।

किञ्चित् किञ्चित् तथा हीनौ पर्य्यन्ते चोपबाहुकौ । वपुरित्थं नृसिंहस्य कुर्य्याद्देशिकसत्तम ।।२३३
जान्वंशे तस्य संस्थाप्य विदारितमहासुरम् । भूषितं वैजयन्त्या तु मालया श्रीसमन्वितम् ।।२३४
खड्गचक्रधरं देवं नृसिंहं कारयेद्बुधः । स्थापयेत् पापनाशाय जयाय नरकेशरीम् ।।२३५।।

अथ वामनमूर्त्तिलक्षणम्

भुजं त्रिगोलकायामं वक्षोविस्तारशोभितम् । पाणीपादं तुरीयांशं प्रवृद्धशिरसं तथा ।।२३६।।
ऊर्वङ्घ्रिद्वितयायामविहीनमुखयुग्मकम् । कटिस्फिक्पार्श्वनाभीषु तद्वृद्धं वामनं बुधः ।।
कृत्वा संस्थापयेद्देवं मोहनार्थाय सर्व्वथा ।।२३७।।

अथ जामदग्न्यमूर्त्तिलक्षणम्

जामदग्न्यन्तु कुर्व्वीत जटामुकुटमण्डितम् । चतुर्बाहुं महाभागं सर्व्वक्षत्रान्तकं विभूम् ।।२३८।।
दक्षिणे परशुं हस्ते वामे दद्यात्तथा धनुः । खड्गं दक्षिणहस्ते तु वामहस्ते तु खेटकम् ।।२३९।।
कुठारहस्तं द्विभुजं कुर्य्याद्वा रेणुकासुतम् । कृत्वैवं जामदग्न्यन्तु स्थापयेद्यस्तु मानवः ।
स वित्तं प्राप्नुयात् शीघ्रं कामांश्च मनसेप्सितान् ।।२४०।।

---

एवं मस्तक जटामण्डल मण्डित है । इनके वदन के सम्मुख में शुभ्रवर्ण दशनसमूह अङ्गुलद्वय परिमाण में वहिर्देश में निष्क्रान्त हैं । इनके वक्षःस्थल तीन कला से अधिक है, कटि, पञ्च नेत्र से अधिक, ऊरु कलाद्वय से अधिक, जानु एक कला से अधिक, जङ्घा के मध्यस्थान अर्ध एक कला एवं सम्मुख में प्रसारित, चरण-द्वय ईषदूर्द्ध्व, बाहुमूल एक कला से अधिक, एवं ऊर्द्ध्व बाहुयुगल अग्रभाग में ईषत् क्षुद्र हैं । इस प्रकार नृसिंह मूर्त्ति का निर्म्माण करना श्रेष्ठ आचार्य्य का कर्त्तव्य है । इस मूर्त्ति के जानुप्रदेश में महा असुर हिरण्यकशिपु को स्थापन करना चाहिये । नृसिंहदेव उसका देह विदीर्ण कर रहे हैं । नृसिंहदेव–वैजयन्ती मालिका से भूषित हैं । श्री वशिष्ट एवं शङ्ख चक्रधर हैं । पातक क्षय एवं जय लाभहेतु इस प्रकार नृकेशरी की मूर्त्ति को स्थापन करना चाहिये ।।२२९-२३५ ।।

अथ वामनमूर्त्तिलक्षणम्

इनके भुजद्वय का आयतन त्रिगोलक, वक्षः विस्तीर्ण, कर चरण चतुर्थांश, मस्तक, वृहत, ऊरु, अङ्घ्रि युगल एवं मुख भाग, आयाम रहित (ह्रस्व) कटि, पश्चाद्भाग, पार्श्व एवं नाभि स्थूल हो, मोहन के निमित्त इस प्रकार वामनदेव की मूर्त्ति स्थापन करनी चाहिये ।।२३६-२३७।।

अथ जामदग्न्यमूर्त्तिलक्षणम्

इनके मस्तक प्रदेश जटामुकुट से मण्डित है, यह चतुर्भुज, महाभाग एवं सर्वक्षत्रियान्तक विभु हैं । इनके दक्षिण हस्तद्वय में परशु एवं असि एवं वाम हस्तद्वय में ढाल एवं धनु विद्यमान हैं । अथवा, रेणुकासुत जामदग्न्य की मूर्त्ति परशुहस्त एवं द्विभुज करनी चाहिये । जो इस प्रकार से जामदग्न्य की मूर्त्ति स्थापन करते हैं, वे तत्काल वित्त एवं मनोऽभीष्ट प्राप्त करते हैं ।।२३८-२४०।।

अथ राममर्त्तिलक्षणम्

कुर्य्याद्दाशरथिं रामं सप्ततालं चतुर्भुजम् । शरकार्म्मुकहस्तं तु शङ्खचक्रधरं शुभम् ॥२४१॥

दक्षिणाद्ध्वं भवेच्चक्रं वामोद्ध्वं शङ्खमेव च । दक्षिणाधो भवेद्वाणो वामाधो धनुरेव च ।

द्विभुज शरहस्तं वा राम कुर्य्यात् सकार्म्मुकम् ॥२४२॥

कृत्वैवं राघवं रामं सर्व्वलक्षणसंयुतम् । क्रूरशत्रुविनाशाय स्थापयेत् सर्व्वकामदम् ॥२४३॥

अथ बलराममूर्त्तिलक्षणम्

तृतीयं तु यथा रामं चतुर्बाहुं शृणुष्व मे । वामोद्ध्वं लाङ्गलं दद्यादधः शङ्खं सुशोभनम् ।

गदां कृपाणं वा दद्यात् संस्थाने शक्तिचक्रयोः ॥२४४॥

कृत्वैवं बलदेवं तु यो नरः स्थापयेत् प्रभुम् । पुत्रं ददाति तस्याथ विपक्षांश्च जयत्यसौ ॥२४५॥

अथ बुद्धलक्षणम्

दशतालं तथा बुद्धं पद्मासनगतं हरिम् । प्रलम्बश्रवणं कुर्य्याच्चीवरालङ्कृतं तथा ॥२४६॥

मणिनाभं समाधिस्थं पद्मास्यं पद्मलोचनम् । समाधिस्थोत्तानपाणिं योगदृष्टिसमन्वितम् ।

स्थापयेद्रूपकामस्तु पितेव जगतः स्थितम् ॥२४७॥

अथ कल्किलक्षणम्

कल्किनं तु चतुर्बाहुं बद्धतूणं धनुर्द्धरम् । शङ्खचक्रधरं कुर्य्यात्तथा खड्गधरं प्रभुम् ॥२४८॥

द्विभुजं वा हयारूढं खड्गपाणिं सुरेश्वरम् । कल्किनं स्थापयित्वैवं शत्रुस्थानं लभेन्नरः ।२४९॥

---

अथ राममूर्त्तिलक्षणम्

दाशरथिराम मूर्त्ति का परिमाण सप्त ताल है। यह चतुर्भुज, धनुःशरहस्त एवं शङ्खचक्रधर हैं, इनके दक्षिणभाग के ऊद्ध्व हस्त में चक्र, अधो हस्त में वाण, एवं वाम भाग के ऊद्ध्व हस्त में शङ्ख एवं अधोहस्त में धनु विद्यमान है। किंवा दाशरथि राम की मूर्त्ति को द्विभुज धनुर्वाणधर करना चाहिये। इस प्रकार सर्वगुण लक्षित, सर्वकामद, राघव राममूर्त्ति को प्रस्तुत पूर्वक स्थापन करने से क्रूर अरिसमूह विनष्ट हो जाते हैं ॥२४१-२४३॥

अथ बलराममूर्त्तिलक्षणम्

चतुर्भुज बलदेवाख्य तृतीय राममूर्त्ति का लक्षण कहता हूँ, सुनो। इनके वामदिक् के ऊद्ध्व हस्त में लाङ्गल, अधो हस्त में मनोहर शङ्ख, एवं शक्ति स्थान में गदा एवं चक्र स्थान में कृपाण विन्यास करे। इस प्रकार बलराममूर्त्ति प्रस्तुत पूर्वक स्थापन करने पर स्थापनकर्त्ता को पुत्र प्राप्त होता है एवं वह शत्रुजयी होता है ॥२४४-२४५॥

अथ बुद्धलक्षणम्

इस मूर्त्ति का परिमाण दशताल (पाँच हाथ) होगा। यह पद्मासन में उपविष्ट है, इनके कर्णद्वय अत्यन्त दीर्घ हैं। परिधान में कौपीन, एवं नाभिदेश मणियुक्त है, यह समाधिस्थ हैं। यह पद्ममुख, कमल नयन, ऊद्ध्वपाणि एवं योगदृष्टि विशिष्ट हैं। रूपकामी व्यक्ति के पक्ष में जगत् पितृवत् इनको स्थापन करना कर्त्तव्य है ॥२४६-२४७॥

अथ कल्किलक्षणम्

यह चतुर्हस्त, बद्धतूण, धनुर्धर एवं शङ्ख चक्र खड्गधर हैं। किंवा इस मूर्त्ति को द्विभुज, अश्वारूढ़,

अथ नवव्यूहप्रतिमालक्षणम्

किञ्च—

आदिमूर्त्तिर्वासुदेवः पूर्व्वमेवोदितो मया। दक्षिणोद्‌र्ध्वे गदा यस्य वामोद्‌र्ध्वे चक्रमुल्वणम्।
ब्रह्मेशौ पार्श्वगो नित्यं शेषमन्यच्च पूर्व्ववत् ॥२५०॥

द्वितीयो वासुदेवोऽयं द्वापरादौ स उच्यते। द्विभुजो वाथ कर्त्तव्यो वामे शङ्खधरः प्रभुः ॥
वरदो दक्षिणेनाथ वासुदेवो द्विधोदितः ॥२५१॥

बलदेवश्चतुर्बाहुः कुण्डलैकविभूषितः। लाङ्गली मुषली देवो गदापद्मधरो विभुः।
शङ्खचक्रगदापाणिः कर्त्तव्यो वरदोऽथवा ॥२५२॥

प्रद्युम्नस्तु चतुर्बाहुः शङ्खचक्रधरः शुभः। चक्रं दक्षिणहस्ते च वामहस्ते धनुस्तथा ॥२५३॥

शङ्खश्च दक्षिणे दद्याद्‌गदां वामे प्रदर्शयेत्। प्रद्युम्नं कारयेद्देवं सर्व्वलक्षणसंयुतम्। २५४॥

स्त्रियौ चैवास्य कर्त्तव्ये खड्‌गचर्म्मधरे शुभे। रतिप्रीत्योर्मध्यगत कम्बुग्रीवं सकार्म्मुकम्।
द्विभुजं शरहस्तं वा प्रद्युम्नं कारयेद्‌बुधः ॥२५५॥

अनिरुद्धः कम्बुग्रीवश्चतुर्बाहुः प्रभूषितः। दक्षिणेऽस्य गदा देया चक्रशङ्खौ तु वामतः।
दक्षिणे च तथा पद्मनिरुद्धस्य दापयेत् ॥२५६॥

नारायणश्चतुर्बाहुः कार्य्यस्तल्लक्षणं मया। मूर्त्तिद्वादशके सर्व्वं कीर्त्तितं ब्रह्मणः शृणु ॥२५७॥

---

खड्‌गहस्त करके भी स्थापित कर सकता है। जो इस मूर्त्ति को स्थापन करते हैं, उनका इन्द्रपुर में वास होता है, "इति दशावतार प्रतिमा लक्षणम्।" यह दशावतार प्रतिमा के लक्षण हैं ॥२४८-२४९॥

अथ नवव्यूह-प्रतिमालक्षणम्

मैंने पहले आदिमूर्त्ति वासुदेव मूर्त्ति का विषय वर्णन किया है। उनके दक्षिण दिक् के ऊद्ध्वं हस्त में गदा एवं वामदिक् के ऊद्ध्वं हस्त में बृहत् चक्र विराजमान है। ब्रह्मा एवं रुद्र, उभय ही इनके समीप में नित्य अवस्थान करते हैं, अन्यान्य अङ्ग पूर्ववत् प्रस्तुत करने चाहिये। द्वापर में यही द्वितीय वासुदेव कहे गये हैं। इनको द्विभुज भी कर सकता है। उनमें वाम हस्त में शङ्ख धारण एवं दक्षिण हस्त में वर प्रदान करते रहते हैं। इन दो प्रकार से ही जो वासुदेव मूर्त्ति निर्म्माण की जा सकती है, उसका वर्णन किया गया। विभु बलदेव को चतुर्बाहु, एक कुण्डल मण्डित, लाङ्गल मुषल गदा पद्मधर अथवा शङ्ख चक्र गदा-हस्त एवं वरद करना चाहिये। प्रद्युम्नमूर्त्ति, चतुर्बाहु एवं शङ्ख चक्रधर हैं। इनके दक्षिण हस्त में चक्र एवं शङ्ख एवं वाम हस्तद्वय में धनुः एवं गदा विराजित हैं। इस मूर्त्ति को सर्वलक्षण विशिष्ट करना चाहिये। इनके पार्श्वद्वय में शुभ लक्षणयुक्ता स्त्री रति एव प्रीति खड्‌ग चर्म्म धारण पूर्वक अवस्थित रहें। अथवा प्रद्युम्नमूर्त्ति इस प्रकार स्थापन करनी चाहिये कि– वह कम्बुग्रीव, धनुर्धारी, द्विभुज, एवं शरहस्त हैं, एवं रति-प्रीति नाम्नी भार्य्याद्वय के मध्य में अवस्थान करते हैं ॥२५०-२५५॥

अनिरुद्धमूर्त्ति, कम्बुग्रीव, चतुर्बाहु एवं विशेष अलङ्कृत होती है। इनके दक्षिण हस्तद्वय में गदा एवं पद्म एवं वाम हस्तद्वय में चक्र एवं शङ्ख सुशोभित हैं। नारायण मूर्त्ति को चतुर्भुज करना चाहिये। द्वादश मूर्तिप्रकरण में इसके लक्षणों का वर्णन किया गया है। अधुना ब्रह्मा की मूर्त्ति का वर्णन करता हूँ। श्रवण करो। ब्रह्मा के चतुर्मुख, चतुर्हस्त, बृहत् उदर एवं ऊद्ध्वं मस्तक जटामण्डल शोभित है, एवं यह मूर्त्ति धूमाच्छन्न एवं मेखलाधारी हैं। इनके दक्षिणदिक् के ऊद्ध्वं हस्त में सुशोभन अक्षमाला है, एवं अधोहस्त में

चतुर्म्मुखश्चतुर्बाहुर्बृहज्जठरमण्डलः। ऊद्ध्वमूद्ध्वंजटाजूटः सधूमसममेखलः ॥२५८॥
शोभनं दक्षिणे हस्ते दद्यादस्याक्षसूत्रकम्। स्रुवञ्च दक्षिणे दद्याद्वामहस्ते तु कुण्डिकाम्। २५९
आज्यस्थालीं कुशोपेतां वामहस्ते नियोजयेत्।
शङ्खचक्रगदापाणिः कार्य्यो वाथ चतुर्म्मुखः ॥२६०॥
सरस्वती च सावित्री वामदक्षिणसंस्थिते। कर्त्तव्या मुनयो वाथ परिवार्य्य व्यवस्थिताः ॥२६१
विनिर्विष्टः सदा ब्रह्मा कार्य्यो ह्यन्यस्ततोऽन्यथा।
नृसिंहवत् स्वमात्रा तु किञ्चिदभ्यधिकः स्मृतः ॥२६२॥
विष्णुरष्टभुजः कार्य्यश्चतुर्बाहुरथापि वा। वैनतेयगतः सौम्यः संदष्टोष्ठपुटोऽपि वा ॥२६३॥
खड्गं गदां शरं दद्याद्दक्षिणे वरदोऽपरः। कार्म्मुकं खेटकं चक्रं वामेऽस्य दापयेत् ॥२६४॥
चतुर्भुजे गदा देया दक्षिणे वरदोऽवरः। वामे शङ्खश्च चक्रञ्च विष्णुरेवंविधो मतः ॥२६५॥
नरसिंहश्चतुर्बाहुः शङ्खचक्रगदाधरः। शङ्खचक्रधरो वापि विदारितमहासुरः ॥२६६॥
चतुर्बाहुर्वराहस्तु शेषः पाणिपदे धृतः। धारयन् बाहुना पृथ्वीं वामेन कमलामथ ॥२६७॥
पादलग्ना धरा कार्य्या यदा लक्ष्मीर्भुजस्थिता। वराहं कामयेद्देवं शङ्खचक्रगदाधरम् ॥२६८
सप्ततालौ प्रशस्येते वराहनरकेशरी। नवतालावभ्यधिकौ पुरस्तात् कथितौ तव ॥२६९॥

अथ पुरुषोत्तममूर्त्तिलक्षणम्

किञ्च—

अष्टबाहुं बुधः कुर्य्याद्देवं त्रैलोक्यमोहनम्। गरुड़ासनगं देवं प्रथमे वयसि स्थितम् ॥२७०॥

---

स्रुव एवं वामदिक् के ऊद्ध्वं हस्त में कमण्डलु एवं अधोहस्त में कुशयुक्त आज्यस्थाली है। किंवा इनको शङ्ख चक्र गदाधर एवं चतुरानन करना चाहिये। इनके वाम एवं दक्षिण दिक् में सरस्वती एवं सावित्री विराजित हैं। यह मुनिवृन्द से परिवेष्टित होकर अवस्थित हैं। अन्यरूप ब्रह्मा सवदा अन्य रूप में समासीन हैं। इस प्रकार प्रस्तुत करना चाहिये। किन्तु परिमाण में नृसिंहवत् किञ्चिदधिक प्रस्तुत करे। विष्णुमूर्त्ति को अष्टबाहु वा चतुर्बाहु करनी चाहिये। यह गरुड़ पर आरूढ़ हो रहे हैं। इनकी मूर्त्ति सौम्य एव सन्दष्टोष्ठ पुट हैं। इनके दक्षिण दिक् के भुजचतुष्टय के मध्य में तीन हाथों में असि, गदा, खड्ग शोभित हैं एवं एक हस्त में वर प्रदान करें। एवं वामदिक् के हस्त चतुष्टय में धनु, चर्म्म, चक्र एवं शङ्ख विद्यमान हैं। चतुर्भुज मूर्त्ति करने से दक्षिण दिक् के एक हस्त में गदा रहेगी एवं अन्य हस्त से वरदान करें, एवं वामभाग के हस्तद्वय में शङ्ख चक्र प्रदान करे। चतुर्भुज एवं शङ्ख चक्र गदाधारी करके नृसिंहमूर्त्ति निर्म्माण करनी चाहिये। किंवा शङ्ख चक्रधर एवं महासुर हिरण्यकशिपु को विदारण कर रहे हैं। वराहमूर्त्ति को चतुर्भुज करे। उनके कर में एवं चरण में शेष देव न्यस्त हैं, एवं दक्षिण हस्त द्वारा वसुमती को, एवं वाम हस्त द्वारा कमलादेवी को धारण कर विद्यमान हैं। लक्ष्मी को करस्था करने पर वसुमती को पादस्था करे। यह देव शङ्ख चक्र गदाधर हैं। वराहमूर्त्ति एवं नृसिंहमूर्त्ति सप्तताल परिमित होने से प्रशस्त हैं। पूर्व में कहा गया है कि, इन मूर्तिद्वय का परिमाण नवताल से भी अधिक होता है ॥२५६-२६९॥

अथ पुरुषोत्तममूर्त्तिलक्षणम्

त्रैलोक्य मोहन पुरुषोत्तम मूर्त्ति को विज्ञजन अष्टभुज करके निर्म्माण करें। यह गरुड़ारूढ़, प्रथमवयस्क अर्थात् किशोर हैं। इनके दक्षिण भुज चतुष्टय में शङ्ख, शार्ङ्ग, गदा एवं पाश प्रदान करने चाहिये। लक्ष्मी

चक्रं खड्गञ्च मुसलं साङ्कुशं दक्षिणे न्यसेत् । शङ्खं शार्ङ्गं गदां पाशं वामहस्तेषु विन्यसेत् ।
लक्ष्मीसरस्वती कार्य्ये पद्मवीणासमन्विते ।।२७१।।

किञ्च प्रतिष्ठाप्रसङ्गे—

अष्टबाहुः पूर्व्वमेव कथितः पुरुषोत्तमः । चतुर्बाहुं द्विबाहुञ्च संक्षेपात् कथयामि ते ।।२७२।।
दक्षिणं शान्तिदं हस्तं कुर्य्यादन्यं दयान्वितम् ।
वामोर्द्ध्वं कारयेच्चक्रं पाञ्चजन्यं तथा ह्यधः ।।२७३।।
श्रीपुष्टिसहितं कुर्य्याच्चतुर्बाहुं सुरोत्तमम् । प्रासादे स्थापयेन्नित्यं गृहे वा मण्डपेऽपि वा ।।२७४
अथ द्विबाहुं तं देवं कुर्य्याद्रूपद्वयेन तु । एकं शान्तिकरं हस्तमपरं चक्रभूषितम् ।
श्रीसरस्वतीसंयुतमेकमायतने न्यसेत् ।।२७५।।
गदाचक्रधरं वापि द्विभुजं पुरुषोत्तमम् । सीरपाणिसमोपेतमेकानंशान्वितं विभुम् ।
चतुरस्रायते धाम्नि स्थापयेत् सर्व्वकामदम् ।।२७६।।
अतसीपुष्पसङ्काशं पीनवक्षःस्थलोरसम् । लावण्याम्बुजतोयेन सिञ्चन्तमिव सर्व्वतः ।।२७७।।
त्रैलोक्ये यस्य रूपेण न भूतो न भविष्यति । तं देवं कारयेत् सौम्यं पुरुषोत्तममुत्तमम् ।।२७८
बलदेवं द्विदोर्द्दण्डं मदविभ्रान्तलोचनम् । लाङ्गलासक्तपाणिन्तु मुषलोद्यतदक्षिणम् ।।२७९।।
कुर्य्याद्वा तस्य बाह्वोस्तु शङ्खचक्रौ सुशोभनौ । शरचापधरौ वापि वरशान्तिप्रदौ तथा ।।२८०
कार्य्यौ भुजौ महाभाग बलदेवस्य सत्तम । भोगान् पञ्चाथवा सप्त कुर्य्यादस्य त्वनन्तवत् ।।२८१
एकानंशान्तयोर्मध्ये कारयेत् सौम्यरूपिणीम् । वरदां पद्महस्तां वा दक्षिणेन भुजेन तु ।।२८२
श्रोणिस्थ-वामहस्तां तु कुर्य्याद्भद्रां सुरेश्वरीम् ।
एवं ते द्विभुजो विष्णुः कथितः सर्व्वकामदः ।।२८३।।

---

एवं सरस्वती नाम्नी दो शक्तियों को भी इनके निकट स्थापन करनी चाहिये। इन दो देवियों में लक्ष्मी, पद्म और सरस्वती वीणा धारण करती हैं ।।२७०-२७१।।

प्रतिष्ठा प्रसङ्ग में उक्त है – पूर्व में कथित है–पुरुषोत्तम अष्टभुज हैं, अधुना इनकी चतुर्भुज एवं द्विभुज मूर्त्ति का विषय सक्षेप से तुम्हारे निकट वर्णन करता हूँ। इन देव को चतुर्भुज करने पर, दक्षिणदिक् के ऊर्द्ध्व कर शान्ति एवं अन्य कर में दया एवं वामदिक् के ऊर्द्ध्व कर में चक्र एवं निम्न कर में पाञ्चजन्य शङ्ख नाम शङ्ख विन्यस्त करे। यह श्री एवं पुष्टि नाम्नी शक्तिद्वय समन्वित होकर अवस्थित हैं। इनको नित्य प्रासाद में गृह में वा मण्डप में स्थापन करना चाहिये। इनकी द्विभुज मूर्त्ति भी द्विविध हैं। प्रथमतः यह एक हस्त से शान्ति प्रदान करते हैं एवं अपर हस्त चक्र द्वारा समलङ्कृत है। इन प्रभु को लक्ष्मी सरस्वती युक्त करके घर में ही स्थापन करना चाहिये। अन्य प्रकार से इन पुरुषोत्तम मूर्त्ति को द्विभुज करना हो, तो, गदाचक्रधारी करना चाहिये। यह बलभद्र और सुभद्रा समन्वित रहें। यह समस्त कामना प्रदान करते हैं। इनको चतुष्कोण मन्दिर में स्थापन करना उचित है। पुरुषोत्तम मूर्त्ति का वर्ण अतसी पुष्प के समान है। इनके वक्ष स्थल एवं ऊरु स्थूल है, यह लावण्य रूप अम्बुज जल से सब दिक् को अभिसिक्त कर रहे हैं। त्रिभुवन में उनके समान रूप किसी का भी नयन गोचर न हुआ और न होगा।

बलदेवेन सहितो भद्रया च समन्वितः। देवस्य दक्षिणे पार्श्वे सुभद्रां विनिवेशयेत्।
ततः परे मदाक्रान्तलोचनं स्थापयेद्बलम् ॥२८४॥

अथ विश्वरूपलक्षणम्

किञ्च—

विंशद्बाहुं विश्वरूपं कुर्य्यात्तल्लक्षणं शृणु। चक्रं खड्गञ्च मुषलमङ्कुशं पट्टिशं तथा ॥२८५॥
मुद्गरञ्च तथा पाशं शक्तिं शूलं शरं तथा। दक्षिणेषु प्रदद्याद्वै वामेषु शृणु साम्प्रतम्। २८६॥
शङ्ख शार्ङ्गं गदां पाशं तोमर लाङ्गलं तथा। परशुं छुरिकां दण्डं चर्म्मप्रक्षेपणं तथा ॥२८७॥
नृसिंहोक्तं परं मानं विश्वरूपस्य कीर्त्तितम्। चतुर्म्मुखं दक्षिणेऽस्य त्रिनेत्रं वामतो न्यसेत्।
स्तुवन्तो मुनयः कार्य्या विद्रवन्तो निशाचराः ॥२८८॥

अथ जलशायिमूर्त्तिलक्षणम्

वामपार्श्वेन शयितं कारयेज्जलशायिनम्। शेषपर्य्यङ्कगं देवं चतुर्बाहुं जनार्द्दनम् ॥२८९॥
श्रिया धृतैकचरणं सर्व्वालङ्कारभूषितम्। देवीभिर्विमलाद्याभिः सेव्यमानमितस्ततः।
नाभ्युत्थपङ्कजारूढ़पितामहसमन्वितम ॥२९०॥

---

इस प्रकार पुरुषोत्तम विग्रह निर्म्माण करना चाहिये। इनके बगल में बलभद्र मूर्त्ति को भी स्थापन करे। वे द्विभुज, मदविभ्रान्त नयन एवं वाम हस्त में लाङ्गल एवं दक्षिण हस्त में समुद्यत मूषल धारण करते हैं अथवा तदीय हस्तद्वय में सुशोभन चक्र एवं शङ्ख किंवा हस्तद्वय में शर एवं चाप स्थापन करे। अथवा हस्तद्वय का निर्म्माण वर शान्तिप्रद रूप में करे। हे महाभाग! बलभद्र मूर्त्ति द्विभुज करना ही प्रशस्त है। यह अनन्त सदृश पाँच अथवा सात फणों से मण्डित रहें। पुरुषोत्तम एवं बलभद्र के मध्यस्थल में सौम्यरूपा एकानंशा सुभद्रादेवी की मूर्त्ति स्थापन करनी चाहिये। इन सुरेश्वरी देवी के दक्षिण कर में वर वा पद्म विराजित रहे और वाम हस्त श्रोदेश में संलग्न रहे। सर्वकामद द्विभुज विष्णुमूर्त्ति का लक्षण तुम्हारे निकट वर्णन किया। इस मूर्त्ति को बलभद्र एवं सुभद्रा के सहित संयुक्त करना चाहिये। सुभद्रादेवी पुरुषोत्तम मूर्त्ति के दक्षिण भाग में एवं मदविभ्रान्त नेत्र बलदेव सुभद्रा के दक्षिण भाग में स्थित रहें। ॥२७२-२८४॥

अथ विश्वरूपलक्षणम्

और भी वर्णित है— विश्वरूप मूर्त्ति के विंशति भुज हैं। इनके लक्षण कहता हूँ, सुनों। इन बीस हाथों के मध्य में दक्षिण दश हस्त में चक्र, खड्ग, मुषल, अङ्कुश, पट्टिश, मुद्गर, पाश, शक्ति, शूल एवं शर और वामहस्त में शङ्ख, शार्ङ्ग, गदा, पाश, तोमर, लाङ्गल, परशु, छुरिका, दण्ड, एवं ढाल यह सब अस्त्र विद्यमान रहें। विश्वरूप मूर्त्ति का परिमाण श्रीनृसिंह मूर्त्ति के समान हो। इन देव के दक्षिण पार्श्व में चतुरानन ब्रह्मा और वाम पार्श्व में त्रिनेत्र शिव की मूर्त्ति स्थित रहे। एवं देव देव के निकट स्तुतिकीर्त्तनकारी ऋषिवृन्द की मूर्त्ति एवं पलायनपरायण निशाचर समूह की मूर्त्ति भी विन्यस्त करनी चाहिये ॥२८५-२८८॥

अथ जलशायिमूर्त्तिलक्षणम्

जलशायीदेव को वाम पार्श्व में शायित करे। यह शेष पर्य्यङ्क स्थित चतुर्भुज जनार्दन देव हैं। लक्ष्मी देवी, सर्वालङ्कारों से अलङ्कृत होकर इनका एक चरण धारण कर रही हैं। इतःततः अवस्थित विमलादि देवीगण इनकी सेवा करती हैं। इनकी नाभि के कमल से ब्रह्मा उत्पन्न हुए हैं। इस प्रकार जलशायी जनार्दन की मूर्त्ति प्रस्तुत करे। ॥२८९-२९०॥

अथ लक्ष्मीमूर्त्तिलक्षणम्

किञ्च—

अष्टताला तु कर्त्तव्या देवी लक्ष्मीः सुरेश्वरी । तत्क्रमं सौरकाण्डे तु कथयिष्ये तवानघ ।।२९१।।
नवतालिकक्षेत्रां तु कथ्यमानामितः शृणु । भ्रुवौ यवाधिके कार्य्ये यवहीना तु नासिका ।।२९२

गोलोकेनाधिकं वक्त्रमूर्द्ध्वतिर्य्यग्विवर्ज्जितम् ।
आयते नयने कार्य्ये त्रिभागोनैर्यवैस्त्रिभिः ।।२९३।।

तदर्द्धेन तु वैपुल्यं नेत्रयोः परिकल्पयेत् । कर्णपाशोऽधिकः कार्य्यः सृक्कण्या समसूत्रतः ।।२९४
नम्रं कलाविहीनं तु कुर्य्यादंसद्वयं सदा । ग्रीवा सार्द्धकला कार्य्या तद्विस्तारोपशोभिता ।।२९५

नेत्रे विना तु विस्तारे ऊरू जानू च पिण्डिके ।
अङ्घ्रिपृष्ठे स्फिचे कट्यां यथायोग्यं प्रकल्पयेत् ।।२९६।।
सप्तांशोनास्तथाङ्गुल्यो दैर्घ्यं विष्कम्भनाहतम् ।
नेत्रैकवर्ज्जितायामा जङ्घोरू च तथा कटिः ।।२९७।।

मध्यं पार्श्वं न तद्वृत्तं घनपीनं कुचद्वयम् । तालमात्रौ स्तनौ कार्य्यौ कटिः सार्द्धकलाधिका ।

शेषमन्यद्यथोद्दिष्टं लक्ष्मीश्चेयं प्रकीर्त्तिता ।।२९८।।

सर्व्वाभरणसम्पन्ना मध्ये क्षामा स्तनोन्नता । श्रोणीतटसुविस्तीर्णा कार्य्या देवी सुरेश्वरी ।।२९९

द्विभुजा कम्बुग्रीवा च विशालाक्षी सुलक्षणा ।
स्तनौ समुन्नतौ कार्य्यौ कञ्चुकेनावगुण्ठितौ ।।३००।।

नागहस्तोपमौ बाहू ऊरू रम्भासमौ शुभौ । नानारत्नोज्ज्वलं पट्टं देव्याः शिरसि दापयेत् ।।३०१
नानारत्नोज्ज्वला देव्या मेखला श्रोणीसंयुता । युक्ता दिव्येन हारेण केयूरमुकुटोज्ज्वला ।।३०२
पद्मासना प्रकर्त्तव्या पद्मश्रीफलपाणिका । दक्षिणे पुण्डरीकन्तु वामहस्ते तु श्रीफलम् ।।३०३

---

अथ लक्ष्मीमूर्त्तिलक्षणम्

सुरेश्वरी लक्ष्मीदेवी की मूर्त्ति का परिमाण अष्टताल अर्थात् चार हस्त है। हे अनघ! इसका क्रम सौरकाण्ड में कहूँगा। सम्प्रति प्रथमतः सार्ध चार हाथ परिमिता मूर्त्ति का वर्णन करता हूँ, सुनो। भ्रूद्वय यवापेक्षा अधिक है नासिका यव से कम, मुख गोलाकार करे एवं ऊर्द्ध्व तिर्य्यक् रहित करे। इनके आयत नेत्रद्वय त्रिभागोन त्रियव परिमित करे। चक्षु का विस्तार उससे आधा करना चाहिये। सृक्कणी (होठों) के समान भाग से कान पृथक् हों। स्कन्धद्वय सदा नत एवं कलारहित करे। ग्रीवा सार्ध एक कला एवं उसका विस्तार सार्ध एक कला करके शोभा का विस्तार करे। नेत्रद्वय व्यतीत, ऊरु, जानु, पिण्डिका, अङ्घ्रि, पृष्ठ, स्फिच एवं कटि,–इन सबकी भी उपयुक्त परिमाण से विस्तृत करना चाहिये। अङ्गुली सात अंश न्यून एवं नातिदीर्घ नातिविस्तृत करे। जङ्घा, ऊरु, कटि,–इन सबकी विस्तृति एक नेत्र हीन करे। मध्य भाग एवं पार्श्व भाग गोलाकार न हों। कुच युगल घनसन्निविष्ट एवं पीन हों। स्तनद्वय ताल परिमाण अर्थात् आधे हाथ की बराबर ऊँचे और कटिदेश डेढ़कला से कुछ अतिरिक्त करे। अपरापर अङ्ग इच्छानुसार करने चाहिये। यही लक्ष्मी की मूर्त्ति कही गई है। सर्वाभरणभूषिता सुरेश्वरी लक्ष्मीदेवी का

स्थिता वा त्रिबलीभङ्गशोभिता च प्रशस्यते । स्त्रियौ पार्श्वद्वये कार्य्ये समे चामरहस्तिके ॥३०४

भृङ्गारहस्तौ द्वौ नागौ स्नपयन्तौ श्रियं स्थितौ ।
श्रीरियं लक्षणोपेता स्थापिता सर्व्वकामदा ॥३०५॥

अथ श्रीगरुडमूर्त्तिलक्षणम्

खगेशस्य प्रवक्ष्यामि तव रूपं सुशोभनम् । नरतुल्यं भवेद्गात्रं नासिका चञ्चुकान्विता ॥३०६
षड़ङ्गुलोच्छ्रया सम्यक् चञ्चुरूपेण कल्पिता । मस्तके सुन्दरं केशं नेत्रे चैवास्य वर्त्तुले ॥३०७
आयतौ द्विभुजौ चास्य पक्षौ कार्य्यौ सुशोभनौ । स्कन्धप्रदेशसंलग्न-जलदाग्नि-समप्रभौ ॥३०८॥
पादयोर्नखराः कार्य्याः सर्पमण्डलमण्डिताः । नूपुरौ तस्य द्वौ नागौ केयूरौ पद्मकम्बलौ ॥३०९
कटिदेशेऽस्य कुलिकः परिधानस्य वेष्टनः । वृश्चिकैः कर्णिका कार्य्या गरुड़स्य महात्मनः ॥३१०
देवस्य पुरतः स्थाप्यो यष्ट्यां वा मण्डपेऽथवा । प्रासादस्य प्रमाणेन कार्य्यो गरुड़मण्डपः ।
यष्ट्याः समुच्छ्रयः कार्य्यः प्रासादायामतोऽर्द्धतः ॥३११॥

किञ्च—

सर्व्वेषामेव देवानां विष्णुक्तं मानमुच्यते । देवीनामपि सर्व्वासां लक्ष्म्युक्तं मानमुच्यते ।
किङ्कराद्याश्च कर्त्तव्याः सप्तसंस्थानसंयुताः ॥३१२॥

---

मध्यभाग क्षीण, स्तन उच्च एवं श्रोणी स्थल सुविस्तीर्ण हों । यह विशाल लोचना देवी द्विभुजा, कम्बुग्रीवा एवं सुलक्षणान्विता हैं। इनके कुचद्वय उच्च, एवं कञ्चकावगुण्ठावृत हैं । इनके बाहुद्वय नागकर सदृश मनोहर एवं ऊरुयुगल कदलीतरुवत् सुन्दर हैं । इनके शिरोपरि नानारत्नखचित सिँथि है। इनके श्रोणी-स्थल में अनेक रत्नों से प्रकाशमान मेखला विन्यास करे । इनको दिव्य हार से विमण्डित, केयूर मुकुट से समुद्भासित और पद्मासना करे । यह पद्म एवं श्रीफल धारणी हैं । इनके दक्षिण कर में पद्म एवं वाम कर में श्रीफल अर्पण करे । यह त्रिबली तरङ्ग से विमण्डित होकर परम शोभा धारण करती हैं । देवी के पार्श्व द्वय में चामरधारिणी शुभ नारीमूर्त्ति स्थापना करनी चाहिये । एतद्व्यतीत उभय पार्श्व में दो हाथी शुंड़ में भृङ्गार धारण पूर्वक लक्ष्मीदेवी को स्नान कराने के निमित्त उभय पार्श्व में अवस्थित हैं । इन सब लक्षणों से युक्त श्रीलक्ष्मीदेवी की मूर्त्ति स्थापन करनी चाहिये ॥२९१-३०५॥

अथ श्रीगरुड़मूर्त्तिलक्षणम्

सम्प्रति तुम्हारे पास गरुड़ का मनोहर रूप बर्णन करता हूँ । गरुड़ का देह मानवतुल्य, नासा–चञ्चु-युक्त, यह छै अङ्गुल उच्च एवं चञ्चु आकार में गठित है । इनके मस्तक में मनोहर केश हैं, नयनयुगल गोलाकार एवं भुजद्वय दीर्घ हैं । इनके पक्षद्वय स्कन्धप्रदेश में संलग्न हैं, एवं जलदाग्नि के सदृश प्रभाविशिष्ट हैं। इनके चरण नखसमूह सर्पमण्डल में विमण्डित हैं, सर्पद्वय इनके चरण नूपुर रूप में अवस्थित हैं एवं केयूरद्वय पद्मकम्बल नामक सर्प से निर्म्मित हैं। कुलिक नामक सर्प कटि के परिधेय बसन वेष्टन रूप में और वृश्चिक नाम, कर्णिका रूप में अवस्थित हैं । जनार्दन के सम्मुख में काष्ठयष्टि में वा मण्डप में इस प्रकार गरुड़मूर्त्ति स्थापन करनी चाहिये । प्रासाद के परिमाण के अनुसार गरुड़ मण्डप निर्म्माण करे, और प्रासाद की उच्चता के अर्ध परिमाण में यष्टि को उन्नत करे ॥३०६-३११॥

और भी कथित है—जितनी जितनी देवमूर्त्तियों के वर्णन किये गये हैं, उन सबका ही परिमाण विष्णु के समान और जितनी देवी मूर्त्ति हैं, उन सबका परिमाण लक्ष्मीमूर्त्ति के सदृश है । किङ्करादि को सप्त चिह्न से चिह्नित करे ॥३१२॥

अथ श्रीमूर्त्यङ्गाधिक्यादिदोषः

मात्स्ये—

नाधिकाङ्गी न हीनाङ्गी कर्त्तव्या देवता क्वचित् ।
स्वामिनं घातयत्युग्रा करालवदना तथा ॥३१३॥
अधिका शिल्पिनं हन्यात् कृशा चैवार्थनाशिनी ।
कृशोदरी तु दुर्भिक्षं निर्मांसा धननाशिनी ॥३१४॥

वक्रनासा तु दुःखाय संक्षिप्ताङ्गी भयङ्करी । चिपिटा दुःखशोकाय अनेत्रा नेत्रनाशिनी ॥३१५
दुःखदा हीनवक्त्रा तु पाणिपादकृशा तथा । हीनांशा हीनजङ्घा च भ्रमोन्मादकरी नृणाम् ॥३१६

शुष्कवक्त्रा तु राजानं कटिहीना च या भवेत् ।
पाणिपादविहीनायां जायते नरको महान् ॥३१७॥

जङ्घाहीना तु या त्वर्च्चा शत्रुकल्याणकारिणी । पुत्त्रमित्रविनाशाय हीना वक्षःस्थले तु या ।
सम्पूर्णावयवा या तु आयुर्लक्ष्मीप्रदा सदा ॥३१८॥

वाराह्याम्—

नृपभयमत्यङ्गायां हीनाङ्गायामल्पकता कर्त्तुः । शातोदर्य्यां क्षुद्भयमर्थविनाशः कृशाङ्गायाम् ।
मरणं तु क्षतायां शस्त्र-निपातेन निर्द्दिशेत् कर्त्तुः ॥३१९॥
वामे विनता पत्नीं दक्षिणविनता हिनस्त्यायुः ।
अन्धत्वमूर्द्ध्वदृष्ट्यां करोति चिन्तामधोमुख दृष्टिः ॥३२०॥

---

अथ श्रीमूर्त्यङ्गाधिक्यादिदोषाः

मत्स्यपुराण में लिखित है—देवता की मूर्त्ति को अधिकाङ्ग वा हीनाङ्ग न करे। देवता हीनाङ्ग वा कराल वदन होने से स्थापनकारी की मृत्यु होती है। तद्रूप, अधिकाङ्गी होने पर शिल्पी का निपात होता है, कृश होने से अर्थनाश, कृशोदरी होने से राज्य में दुर्भिक्ष, एवं मांसहीना होने से धन नाश होता है। मूर्त्ति, वक्रनासा होने से दुःखद होती है। संक्षिप्ताङ्गी–भयङ्करी होती है। चिपिटा–दुःख शोकदा, अनेत्रा–चक्षुनाशिनी एवं हीनमुखी दुःखदा होती है एवं कृश हस्ता, कृश चरणा, हीन स्कन्धा, हीन जङ्घा मूर्त्ति मनुष्यगण के भ्रम एवं उन्माद की कारणभूता होती है। देवमूर्त्ति शुष्कमुखी, एवं कटिहीना होने से तत्रत्य राजा विनष्ट होते हैं। कर चरण विहीन होने पर कर्त्ता का भीषण नरकवास होता है। जङ्घा हीना मूर्त्ति, अरि शुभदा, वक्षोहीना मूर्त्ति, पुत्र मित्र घातिनी होती है। सम्पूर्ण अवयवा मूर्त्ति, आयुर्वृद्धिकारिणी एवं लक्ष्मीदात्री हैं ॥३१३-३१८॥

वराहपुराण में लिखित है—प्रतिमा अधिकाङ्गी होने पर नृपति को भयदा होती है। हीनाङ्गी होने से कर्त्ता की हीनावस्था उपस्थित होती है। कृशोदरी प्रतिमा क्षुधा एवं भय की हेतु भूता है। कृशाङ्गी प्रतिमा, अर्थनाशकारी एवं क्षताङ्गी होने पर अस्त्राघात से प्रतिमाकर्त्ता निहत होता है। मूर्त्ति, वामभाग में नता होने पर पत्नीनाश एवं दक्षिणभाग में नता होने से आयु क्षय होता है। प्रतिमा ऊर्द्ध्वदृष्टि सम्पन्ना होने से अन्धत्व, एवं अधोवदना होने से चिन्ता उत्पादन करती है ॥३१९-३२०॥

किञ्च श्रीप्रह्लादोक्ते पुराणोद्धारेऽपि—

सुराच्चाँ लक्षणैर्हीनां यस्तु पूजयते नरः । तस्यान्नं नाभिगृह्णन्ति तस्मात्तां परिवर्ज्जयेत् ।। ३२१

अथ द्रव्यभेदेन श्रीमूर्त्तिभेदः

मात्स्ये—

चित्रजा चैव लेप्या च शस्त्रोत्कीर्णा च पाकजा ।
पटे कुडये च पात्रे च चित्रजा प्रतिमा स्मृता ।।३२२।।
लेप्या तु पार्थिवी ज्ञेया लोहजा पाकजा मता ।
शैलजा वृक्षजा चैव शस्त्रोत्कीर्णा च कीर्त्तिता ।।३२३।।
चतुर्द्धा द्रव्यभेदेन प्रतिमा परिकीर्त्तिता ।।३२४।।

श्रीहयशीर्षपञ्चरात्रे—

मृन्मयी दारुघटिता लोहजा रत्नजा तथा । शैलजा गन्धजा चैव कौसुमी सप्तमी स्मृता ।।३२५
कौसुमी रत्नजा चैव मृन्मयी प्रतिमा हिता । तत्कालपूजिताश्चैताः सर्व्वकामफलप्रदाः ३२६।।

किञ्च—

भाग्यदा शैलजा स्याच्च स्वर्णजा पुष्टिदा भवेत् ।
सुखप्रदा स्यान्मणिजा राजती कीर्त्तिदा भवेत् ।।३२७।।
ताम्रजा धनदा प्रोक्ता श्रीप्रदा वृक्षजा मता ।
कौसुमी सुखदा प्रोक्ता गन्धजा भोगदा मता ।।३२८।।
प्रत्यग्रस्थापिता वापि मृन्मयी सर्व्वसिद्धिदा ।।३२९।।

किञ्च तत्रैव चित्रजा-प्रतिष्ठा-प्रसङ्गे—

यावन्ति विष्णुरूपाणि सुरूपाणीह लेखयेत् । तावद्युगसहस्राणि विष्णुलोके महीयते ।।३३०।।

---

श्रीप्रह्लाद कथित पुराणोद्धार में और भी कथित है—जो व्यक्ति, लक्षणहीन प्रतिमा की पूजा करते हैं देवगण तदीय अन्न ग्रहण नहीं करते । सुतरां तादृशी प्रतिमा परित्याग करनी चाहिये ।।३२१।।

अथ द्रव्यभेदेन श्रीमूर्त्तिभेदः

मत्स्यपुराण में लिखित है—प्रतिमा, चित्रिता, लेप्या, शस्त्रोत्कीर्णा, एवं पाकजा—भेद से चतुर्विध हैं । अर्थात् वस्त्र, प्राचीर और पात्र में चित्रित करने से ही उसका नाम 'चित्रिता' वा 'चित्रज।' है । पार्थिवी मृत्तिका से निर्म्मिता प्रतिमा को 'लेप्या' कहते हैं । धातुमयी प्रतिमा 'पाकजा' एवं प्रस्तर एवं काष्ठ की प्रतिमा ही शास्त्रोत्कीर्णा कही गई है । वस्तु भेद यह चार प्रकार की प्रतिमा कही गई ।।३२२-३२४।।

श्रीहयशीर्ष पञ्चरात्र में उक्त है—मृन्मयी, दारुमयी, लोहजा, रत्नजा, शैलजा, गन्धजा, एवं कौसुमी—प्रतिमा सप्तविध हैं । कौसुमी पुष्पों की प्रतिमा, रत्नजा, मृन्मयी प्रतिमा—मङ्गलकारी हैं । इनकी पूजा करने पर ही उसी समय वह काम फलदात्री होती हैं ।।३२५-३२६।।

और भी लिखत है—शैलजा प्रतिमा भाग्यदात्री, सुवर्णमयी प्रतिमा, पुत्रप्रदा, मणिजा, सुखदायिनी, रौप्यमयी, कीर्त्तिदा, ताम्रमयी, धनप्रदा, दारुमयी, सम्पद्विधायिनी, कौसुमी, सुखदायिनी, गन्धजा, भोगदा, एवं मृन्मयी प्रतिमा नूतन स्थापित होने पर सर्वसिद्धि दायिनी होती है ।।३२७-३२९।।

चित्रजा प्रतिष्ठा प्रसङ्ग में उक्त ग्रन्थ के उक्त स्थान में लिखित है—सुरूप सम्पन्न जितनी श्रीविष्णु अङ्कन करे, उतने ही सहस्रयुग विष्णुधाम में सम्मान के सहित वास कर सकता है ।।३३०।।

लेप्ये चित्रे हरिर्नित्यं सन्निधानमुपैति हि । तस्मात् सर्व्वप्रयत्नेन लेप्यचित्रगतं यजेत् ।।३३१।।

कान्तिभूषणभावाद्याश्चित्रे यस्मात् स्फुटं स्थिताः । अतः सान्निध्यमायाति चित्रजासु जनार्द्दनः ।

तस्माच्चित्रार्च्चने पुण्यं स्मृतं शतगुणं बुधैः ।।३३२।।

चित्रस्थं पुण्डरीकाक्षं सविलासं सविभ्रमम् । दृष्ट्वा विमुच्यते पापैर्जन्मकोटिसुसञ्चितैः ।।३३३।।

तस्माच्छुभार्थिभिर्धीरैर्महापुण्यजिगीषया । पटस्थः पूजनीयस्तु देवो नारायणः प्रभुः ।।३३४।।

इति ।

अथ शिलाग्रहणम्

त्रिकूटाद्रिषु गृह्णीयात् किंवा श्रीपर्व्वतादिषु । शिलां भूमिगतां वाथ ज्ञात्वा तल्लक्षणं बुधः ।।३३५

तथा च तत्रैव—

सुवारे सुतिथौ योगे स्वर्क्षे सुकरणान्विते । आपूर्य्यमाणपक्षे तु सुग्रहे चोत्तरायणे ।।३३६।।

यजमानानुकूले तु प्रतिमार्थं व्रजेद्गुरुः । श्वेतवस्त्रपरीधानः श्वेतचन्दनचर्च्चितः ।।३३७।।

श्वेतपुष्पकृतापीड़ः शिल्पिभिः सहितो गुरुः । निपुणैः शिल्पिभिः सर्द्धं सहायैर्बलवत्तरैः ।।३३८

नृसिंहं पूज्य विज्ञाप्य पूज्य टङ्कादिकं ततः ।

ध्यात्वा हरिं हविः प्राश्य मन्त्राङ्गन्यस्तविग्रहः ।।३३९।।

---

श्रीहरि, लेप्य एवं चित्र मूर्त्ति के निकट नित्य वास करते हैं। सुतरां सम्यक् यत्नपूर्बक लेप्या एवं चित्रजा प्रतिमा की पूजा करे ।।३३१।।

चित्र प्रतिमा में स्पष्ट रूप से कान्ति, भूषण एवं भाव प्रभृति प्रकाशित होने के कारण, श्रीहरि उस प्रतिमा के निकट विराज करते हैं। सुतरां बुधवृन्द, चित्रजा प्रतिमा अर्चन में शतगुण पुण्य वर्णन किये हैं। ।।३३२।।

विलास विभ्रम समन्वित चित्रस्थ श्रीहरि का दर्शन करने पर कोटि जन्म सञ्चित पातकराशि से मुक्त हो सकता है। सुतरां मङ्गलाकाङ्क्षी धीर व्यक्तिगण महापुण्य लाभ हेतु पटस्थ प्रभु श्रीनारायण की पूजा करें ।।३३३-३३४।।

अथ शिलाग्रहणम्

त्रिकुट पर्वत अथवा श्रीपर्वतादि से प्रतिमा लक्षणोचित भूमिगतशिला ग्रहण करना ही बुद्धिमान् व्यक्ति का कर्त्तव्य है ।।३३५।।

उक्त विषय में उस ग्रन्थ में ही लिखित है—श्रीगुरुदेव, यजमान के अनुकूल वार में सुतिथि में, सुयोग में, सुनक्षत्र में, सुकरण में, शुक्लपक्ष में, सुग्रह में, एवं उत्तरायण के समय में प्रतिमा के निमित्त प्रस्थान करें। वे श्वेत वस्त्र परिधान पूर्वक, श्वेत चन्दन लिप्त एवं श्वेत पुष्प के शिरोभूषण से भूषित होकर महा-बल सहाय स्वरूप सुदक्ष शिल्पीवृन्द के सहित श्र नृसिंह देव की पूजा करें। अनन्तर श्रीहरिस्मरण पूर्वक हविः सेवन करके शरीर में मन्त्र न्यास करें। तत्पश्चात् भक्तिमान् होकर ब्राह्मणवृन्द के द्वारा स्वस्तिवाचन कराकर मङ्गल दर्शन, दधि, दूर्वा, रोचना, दर्पण, श्वेत पुष्प, फल एवं पूर्णकुम्भ,–इन सबकी वन्दना करके वन में प्रस्थान करे। दिव्य, अन्तरीक्ष एवं भौम निमित्त समूह के प्रति देखना उनका कर्त्तव्य है। शुभ निमित्त दर्शन होने पर गमन करें। किन्तु तद्विपरीत दर्शन होने पर गमन न करके शान्त रहना कर्त्तव्य है। अनन्तर तीन बार प्राणायाम पूर्वक श्रीनृसिंहमूर्त्ति का ध्यान करके पुनर्बार अष्टबार जप करें। पश्चात् पातालमूषल नामक मन्त्र का जप करना चाहिये। गीतवाद्यादि उच्चरव विशिष्ट होने से अर्थात् यात्राकाल

ब्राह्मणान् वाचयित्वा तु भक्त्या मङ्गलदर्शनम् ।
दधिदूर्व्वां रोचनां वा आदर्शं कुसुमं सितम् ॥३४०॥

फलञ्च पूर्णकुम्भञ्च वन्दयित्वा वनं व्रजेत् । दिव्यान्तरीक्षभौमानि निमित्तान्युपलक्षयेत् ॥३४१
यात्राच्छुभनिमित्तेषु विपरीते निवर्त्तयेत् । त्रिराचम्य ततः प्राणान् ध्यायेत् सिंहतनुं हरिम्॥३४२

पुनश्चाष्टोत्तरं जप्त्वा पातालमुषलं जपेत् ।
गीतवाद्यरवोद्‌घुष्टा यात्रा स्यात् सिद्धिदा नृणाम् ॥३४३॥
लक्ष्मीं ध्यायन् वनं यायात् सहायैः शिल्पिभिः सह ।
शङ्खकाहलशब्दैश्च पुण्याहजयमिश्रितैः ॥३४४॥
ऋग्यजुःसामसङ्घैश्च ध्यायन् सिंहं वनं व्रजेत् ।
प्राचीं दिशमथोदीचीमैशानीं वा व्रजेद्‌गुरुः ॥३४५॥

भूधराद्यास्तु ये पूर्व्वं संस्थाना कथिता मया । तत्र गत्वा समीपे तु कृतरक्षो वनं विशेत् ॥३४६
प्रविशेत्तत्र यत्नेन शिल्पिभिः सहितो गुरुः । निरूपयेत् समन्तात्तु वृक्षं वाप्यथवा शिलाम् ॥३४७
लक्षणेन तु मन्त्रज्ञो यत् पूर्व्वं कथित मया । एकवर्णां शिलां दृष्ट्वा बाह्यदोषविवर्ज्जिताम् ॥३४८
चतुर्द्दिक्षु समं कृत्वा भूमिभागं विशोधयेत् । प्लाव्य तोयेन पूतेन गोमयेन विलेपयेत् ॥३४९॥
तत्रैव मण्डपं कृत्वा वासुदेवं ततो जपेत् । पताकैस्तोरणैश्चित्रैर्मण्डपं तं विभूषयेत् ॥३५०॥
पूजयेदथ दिग्देवान् भूतक्रूरबलिं हरेत् । माषं हरिद्राचूर्णञ्च दधिशक्तुसमन्वितम् ॥३५१॥
सलाजमाषभक्तञ्च दद्यात् क्रूरबलिं बुधः । विष्णुं पूज्य विधानेन क्रमशस्तान् प्रपूजयेत् ॥३५२
वायव्यामस्त्रमन्त्रेण गन्धपुष्पैः प्रपूजयेत् । वह्निं प्रज्वाल्य विधिना मन्त्रान् सन्तर्प्य पूजयेत् ॥३५३

---

में गीत-वाद्यादिक उच्च ध्वनि उत्थित होने पर वह योग सिद्धिकरी होती है। तत्पश्चात् श्रीगुरुदेव, लक्ष्मी देवी का ध्यान करके सहायस्वरूप शिल्पीवृन्द के सहित वन में प्रस्थान करें। पुण्यदिनोचित जयध्वनियुक्त शङ्ख एवं उसका शब्द एवं ऋक्-यजुः-सामवेद ध्वनि के सहित श्रीनृसिंहदेव का ध्यान करते करते वन में गमन करना चाहिये। घर से बाहर होकर वन के निमित्त पूर्व, उत्तर वा ईशानकोण के अभिमुख में प्रस्थान करे ॥३३६-३४५॥

इति पूर्व में पर्वतादि जिस स्थान समूह का उल्लेख किया गया है, वहाँ जाकर यथा विधि रक्षाबन्धन कर वन में प्रवेश करना चाहिये। इस प्रकार श्रीगुरुदेव, शिल्पीगण के सहित यत्नपूर्वक वन में प्रस्थान करें। इसके पहले जो लक्षण वर्णन किये गये हैं, मन्त्रज्ञ श्रीगुरुदेव, चतुर्दिक पर्य्यवेक्षण पूर्वक उस प्रकार लक्षण समन्वित वृक्ष वा पाषाण निरूपण करें। बाह्य दोषवर्जित अर्थात् जिसमें किसी प्रकार भग्न वा क्षतादि दोष नहीं हैं, इस प्रकार एकवर्णा शिला निरूपण पूर्वक चतुर्दिक समान करके भूभाग को सविशेष शोधन एवं पवित्र सलिल से धौत करने के पश्चात् गोमय से लिप्त करें, तोरण द्वारा मण्डप सुसज्जित करें, तत्पश्चात् दिग्देववृन्द की पूजा करके भूतगण के प्रति बलि प्रदान करें। माष, हरिद्राचूर्ण, दधि, शक्तु एवं लाज,–इन सबको एकत्र करके विचक्षण व्यक्ति माषभक्त नामक क्रूर बलि अर्पण करे। अतः पर विष्णु-पूजा करके यथाविधि क्रमान्वय से भूतवर्ग की पूजा करनी चाहिये। वायुकोण में अस्त्र मन्त्ररूप गन्ध पुष्प

हुत्वा यथोक्तविधिना शान्तितोयं समारभेत् ।
शान्तितोयं ततो गृह्य अस्त्रेण प्रोक्षयेच्छिलाम् ।।३५४।।

दर्भैरुल्लेखयेत् पश्चादस्त्रमन्त्रेण तां शिलाम् । मन्त्रैरालभ्य तां यत्नात् शुक्लवस्त्रेण वेष्टयेत् ।।३५५

रक्षां कृत्वा नृसिंहेन दर्भैराच्छाद्य पूजयेत् ।
गन्धैः पुष्पैश्च नैवेद्यैर्धूपैः सम्पूज्य तां शिलाम् ।।३५६।।

ततस्तु मूलमन्त्रेण आज्यमष्टोत्तरं हुनेत् । ततः पूर्णाहुतिं दद्यान्मन्त्रराजेन वै गुरुः ।।३५७।।

एवं सन्तर्प्य सम्पूज्य विज्ञाप्य च बलिं हरेत् । गन्धैः पुष्पैस्तथा धूपैर्दद्याद्भूतबलिं बुधः ।।३५८

अत्र येऽवस्थिताः सत्त्वा यातुधानाश्च गुह्यकाः ।
सिद्धादयो वा ये चान्ये तान् सम्पूज्य क्षमापयेत् ।।३५९।।

अथ क्षमापणम्

विष्णुबिम्बार्थमस्माकं यात्रैषा केशवाज्ञया । विष्णवर्थं यद्भवेत् कार्य्यं युष्माकमपि तद्भवेत्।।३६०

अनेन बलिदानेन प्रीता भवथ सर्व्वथा । क्षेमेण गच्छतान्यत्र मुक्त्वा स्थानमिदं पुनः ।।३६१

एवं प्रबोधिताः सत्त्वाः परितुष्टा यथासुखम् । आचम्य संविश्य ततः कृतरक्षापुरःसरः ।।३६२

चरुं प्राश्य निराहारः शिल्पिभिः सह देशिकः ।
हरिं विज्ञाप्य विधिवद्देवीञ्च कमलोद्भवाम् ।।३६३।।

पश्चिमे दर्भशय्यायां वसेत्तां रजनीं गुरुः ।
निराहारः स्थितो भूत्वा प्राणायामारम्भकं जपन् ।।३६४।।

---

के द्वारा इन सबकी पूजा करें । अनन्तर विधिपूर्वक वह्नि प्रज्वलित करके मन्त्रसमूह तर्पण करने पर पूजा में प्रवृत्त होना चाहिये । होम कार्य्य समापन पूर्वक यथोक्त विधान से शान्ति जल करें एवं यह शान्ति जल ग्रहण करके अस्त्र मन्त्र से शिलासेचन पूर्वक कुश के द्वारा अस्त्र मन्त्र से खनन करें। तत्पश्चात् मन्त्र-पाठ पूर्वक यत्नसहित ग्रहण पूर्वक इस शिला को शुक्ल वस्त्र से परिवेष्टन करना चाहिये । अनन्तर नृसिंह मन्त्र से रक्षण एवं कुश द्वारा आवृत करके गन्ध, पुष्प, नैवेद्य एवं धूप द्वारा शिला की पूजा करें। अतःपर गुरुदेव मूलमन्त्र द्वारा अष्टोत्तरशत घृताहुति प्रदान कर मन्त्रराज के द्वारा पूर्णाहुति प्रदान करें । इस प्रकार तर्पण, पूजा एवं विज्ञापन पूर्वक नैवेद्य अर्पण करके गन्ध, पुष्प एवं धूपसमूह द्वारा भूतबलि अर्पण करें। तत्पश्चात् तत्रत्य सत्त्व, यातुधान, गुह्यक, सिद्ध वा अन्य समस्त की पूजा करके क्षमाप्रार्थना करें ।।३४६-५९

अथ क्षमापणम्

श्रीविष्णु प्रतिमा निर्म्माण हेतु केशव के आदेश से हमने यह यात्रा की है । श्रीविष्णु के निमित्त जिस कार्य्य का अनुष्ठान होगा, वह कार्य्य तुम्हारा भी है। इस बलिदान द्वारा तुम सर्वथा प्रसन्नता को प्राप्त होओ । इस स्थान को परित्याग करके मङ्गल के सहित अन्यत्र गमन करो । इस प्रकार भूतसमूह प्रबोधित एवं यथासुख प्रसन्न होने पर देशिक आचमन पूर्वक उपविष्ट होकर रक्षा विधान करके चरु भोजन करें। पश्चात् शिल्पिगण के सहित श्रीगुरुदेव निराहार रहकर श्रीहरि एवं कमलोद्भवा लक्ष्मी देवी को विज्ञापन पूर्वक पश्चिम दिक् में दर्भशय्या में शयन कर रात्रि अनिवाहित करें। अनाहार रहकर प्राणायाम पूर्वक मन्त्र जप करके निशायापन करना कर्त्तव्य है ।।३६०-३६४।।

अथ तत्र मन्त्रः

ॐ नमः सर्व्वलोकपित्रे विष्णवे प्रभविष्णवे । विश्वाय विश्वरूपाय स्वर्गाधिपतये नमः ॥३६५
आगच्छ देवदेवेश प्रपन्नोऽस्मि तवान्तिकम् । स्वप्ने सर्व्वाणि कार्य्याणि हृदिस्थितानि यानि मे ।
ॐ ह्रीं फट् विष्णवे स्वाहा ॥३६६॥
यदा स पश्यते वृक्षं ज्वलन्तं धूमवर्ज्जितम् । फलितं पुष्पितं चैव तदा सिद्धिर्न दूरतः ॥३६७॥
प्रज्वलन्तीं शिलां पश्येच्छ्रिया वाधिष्ठितां शिलाम् ।
ब्रह्मणाधिष्ठितां वापि सा तदा सर्व्वकामदा ॥३६८॥
श्रिया जुष्टं प्रज्वयन्तमथ पश्यति पर्व्वतम् । ततः प्रवृद्धशिखरं काञ्चनद्रुममण्डितम् ॥३६९॥
युतं सर्व्वोद्भवैर्वृक्षैः फलपुष्पसमन्वितैः । एवम्भूतेषु दृष्टेषु स्वप्ने अर्च्चा सुशोभना ॥३७०॥
अपरेऽहनि सम्प्राप्ते कृतरक्षः कृताह्निक । शस्त्रादि विधिवत् पूज्य शिलां पूज्य विधानतः ॥३७१
अर्घ्यं दत्वा शिलायान्तु शस्त्रमन्त्रेण पूजयेत् । मन्त्रयित्वा स्वमन्त्रेण प्रज्वलन्तं विभावयेत् ॥३७२
मध्वाज्याक्तमुखं कृत्वा आत्मानं चिन्तयेद्धरिम् ।
शिल्पिनं विश्वकर्म्माणं ध्यात्वोदवप्राङ्मुखोऽपि वा ॥३७३॥
शस्त्रं विष्ण्वात्मकं ध्यात्वा प्रदद्याच्छिल्पिने गुरुः ।
मुखं पृष्ठं सलाङ्गुलं शिल्पिने दर्शयेद्गुरुः ॥३७४॥
शुक्लगन्धानुलिप्ताङ्गः शुक्लपुष्पाद्यलङ्कृतः । उदङ्मुखः प्राङ्मुखो वा स्थपतिः संयतः शुचिः ॥३७५

---

अथ तत्र मन्त्रः

जो विश्वस्वरूप, विश्वरूपी और स्वर्ग के अधिपति हैं, उन सब लोकों के पिता श्रीविष्णु को नमस्कार है। हे देवदेवेश! आओ, मैंने आपकी शरण ली है। स्वप्न में जो सब कार्य्य मेरे हृदयस्थ हों, वह सब आपको अर्पण करता हूँ। "ॐ ह्रीं फट् विष्णवे स्वाहा।" यह मन्त्रार्थ चिन्ता कर रात्रि यापन करें। ॥३६५-३६६॥

यदि श्रीगुरुदेव, स्वप्न में धूमरहित अथच ज्वलन्त वृक्ष को फलित एवं कुसुमित देखें, तो जानना होगा कि सिद्धि अदूरवर्त्तिनी है। यदि शिला को प्रज्वलिता किंवा लक्ष्मीकर्त्तृक वा ब्रह्माकर्त्तृक अधिष्ठिता देखें तो समझना होगा कि सर्वाभीष्ट सिद्ध होगा ॥३६७-३६८॥

यदि लक्ष्मीकर्त्तृक अधिष्ठित प्रज्वलित पर्वत दिखाई दे, अथवा इस प्रकार दिखाई दे कि, स्वर्णतरु-विमण्डित, बृहत्शृङ्ग फल-पुष्प समन्वित, सर्व ऋतुजात तरुराजि समाकीर्ण पर्वत विराजत हैं, तो प्रतिमा सुदृश्य होगी। अनन्तर परदिन प्रभात में रक्षाविधान एवं आह्निकादि समापन पूर्वक यथा विधि अस्त्रों की और शिला की पूजा कर, शिला में अर्घ्य प्रदान करें। पश्चात् अस्त्र मन्त्र से पूजा करनी चाहिये। तत्-पश्चात् शिला को निज इष्ट-मन्त्र के द्वारा अभिमन्त्रित करके प्रज्वलित भावना करें। अनन्तर उस शिला का मुख मधु और घृतसिक्त करके अपने को हरिरूप में चिन्ता करनी चाहिये। पश्चात् श्रीगुरुदेव, उत्तरास्य वा पूर्वास्य होकर शिष्य को विश्वकर्म के रूप में ध्यान कर शस्त्र को विष्णु स्वरूप भावन करें। अनन्तर वह शस्त्र शिल्पकार को अर्पण करना चाहिये। इसके बाद गुरुदेव, शिल्पकार को शिला का मुख, पीठ और पश्चाद्भाग दिखावें। शिल्पी, स्नानपूर्वक शुक्लगन्धानुलेपन से चर्च्चित, श्वेत कुसुमादि से सुशोभित,

ध्यात्वात्मदेवतां शिल्पी टङ्कहस्तो जितेन्द्रियः ।
यथेष्टं शातयेत् पश्चाद्यच्छिलान्तच्छृणुष्व मे ।।३७६।।
उदक्शिरां प्राक्शिरां वा तथैवेशानदिग्गताम् ।
ऊर्द्ध्वभागं भवेत् पृष्ठमधोभागं भवेन्मुखम् ।।३७७।।
किञ्चिन्मानाधिकां कृत्वा कल्पयेत् प्रतिमाशिलाम् ।
किञ्चिन्मानाधिका त्याज्या विविधा या च पिण्डिका ।
छेदयित्वा समुद्धृत्य चतुरस्रां तु कारयेत् ।।३७८।।

अनेनैव विधानेन परीक्ष्य गुणदोषतः । वृक्षं यत्नेन गृह्णीयाद्विधिज्ञो देशिकोत्तमः ।।३७९।।
समानीय रथं श्रेष्ठं सुशीलैर्वृषभैर्युतम् । रथे स्थाप्य शिलां यत्नाच्छादयित्वा तु वाससा ।
हरिं ध्यात्वा स्मरन्मन्त्रमर्घ्यं दद्यात्ततो गुरुः ।।३८०।।
आनीयमाने तु रथे रथाङ्गपरिचारकैः । वृषभे वा समुत्पन्ने अनिमित्ते च साधकः ।।३८१।।
वैष्णवाग्नौ नृसिंहेन तिलैर्घृतविमिश्रितैः । हुत्वा चाष्टशतं सम्यक् तद्दोषेण विमुच्यते ।।३८२
आनीय शङ्खनिर्घोषैर्गीतमङ्गल-निस्वनैः । प्रासादस्योत्तरे भागे कृत्वा कर्म्मकुटीं गुरुः ।।३८३
शिलां संस्थाप्य तस्मिंस्तु अर्च्चयित्वा बलिं हरेत् ।
ततः प्रवर्त्तयेत् कर्म्म विद्वान् विज्ञैस्तु शिल्पिभिः ।।३८४।।

किञ्च— यथोक्तायां दिशायां तु न लभ्येत यदा शिला ।
तदा विदिक्स्थिता ग्राह्या विधिना येन तच्छृणु ।।३८५।।

---

संयत, पवित्र, जितेन्द्रिय एवं उत्तरमुख वा पूर्वमुख होकर आत्मदेवता की पूजा पूर्वक टङ्क हाथ में धारण करके इच्छानुसार शिला विदीर्ण करे । जिस प्रकार शिला करनी चाहिये वह कहता हूँ, सुनो । ईशानदिक् में स्थित उत्तर शिरा वा पूर्व शिरा शिला ही विदारण के उपयुक्त है । शिला के ऊर्द्ध्व भाग को पीठ और अधो भाग को मुख कहा जाता है । प्रतिमा के परिमाण से शिला का परिमाण कुछ अधिक रहना आवश्यक है । पिण्डिका, परिमाण में अधिक होने पर वह त्याग देनी चाहिये । शिलाछेदनपूर्वक उत्तोलन करके चतुष्कोण करें । विधिज्ञ श्रीगुरुदेव, इस प्रकार यथाविधि वृक्ष के भी गुण-दोष की परीक्षा करके यत्नपूर्वक उसको ग्रहण करें ।।३६९-३७९।।

अनन्तर श्रीगुरुदेव, सुशील वृषसमन्वित दिव्य रथ लाकर यत्नपूर्वक शिला को वस्त्राच्छादित करके उस रथ में स्थापन पूर्वक श्रीहरि की चिन्ता और मन्त्रपाठ करते करते अर्घ्य प्रदान करें । रथाङ्ग परिचालकवृन्द कर्त्तृक आनयन के समय रथ में वा वृष में अथवा अन्य किसी प्रकार से उत्पन्न किसी प्रकार दुर्निमित्त-अशकुन दिखाई दे तो गुरुदेव, वैष्णवानल में नृसिंह-मन्त्र द्वारा अष्टोत्तरशत घृतविमिश्रित तिलहोम करें । इस प्रकार करने पर सब दोषों का निवारण हो जाता है । अनन्तर श्रीगुरुदेव, शङ्खध्वनि एवं गीत-वाद्यादि शुभ निनाद के सहित शिला को आनयन पूर्वक प्रासाद के उत्तर में कर्मकुटीर प्रस्तुत करें । वहाँ पर शिला को रखकर अर्चन पूर्वक बलि प्रदान करना कर्त्तव्य है । पश्चात् विज्ञ शिल्पीवृन्द के द्वारा कर्म्म प्रारम्भ श्रीगुरुदेव करावें ।।३८०-३८४।।

और भी लिखा है— यथाविहित दिक् में शिला प्राप्त न होने पर विदिक् से शिला ग्रहण करें । जिस

समानीय शिलां सम्यक् पूर्व्वोक्तलक्षणैर्युताम् ।
प्रासादस्योत्तरे भागे खात्वा भूमिं विधानवित् ॥३८६॥
शिलां संस्थाप्य तत्खाते मृदा सम्पूरयेद्गुरुः ।
समीकृत्याथ तां भूमिं मण्डपं तत्र कारयेत् ॥३८७॥
पताकाध्वजपत्राद्यैर्भूषयीत समन्ततः । तोरणैः कदलीस्तम्भैर्वितानेन च भूषयेत् ॥३८८॥
प्राच्यां तु भद्रकं लिख्य तत्र विष्णुं यजेद्गुरुः । प्रबालमुक्ताफलकैर्हेमपुष्पैः समुज्ज्वलैः ॥३८९॥
पूर्व्वोक्तं सकलं वापि विधानं समुपाचरेत् । भूतक्रूरबलिं दद्यात् पूर्व्वोक्तविधिनैव तु ॥३९०॥
प्रतीच्यां पूर्व्वविधिना होमं कुर्य्याद्यथोदितम् । दिग्दोषपरिशुद्धयर्थं विशेषाद्धोममाचरेत् ॥३९१
पातालनरसिंहेन सहस्रं वैष्णवानले । दिग्देवानामथाङ्गानां हुत्वा पूर्णां यजेद्गुरुः ॥३९२॥
तर्पिते मन्त्रराजे तु दिग्दोषैर्मुच्यते शिला । ततः पूर्व्वोक्तविधिना कृत्वा पुष्पादिकं गुरुः ॥३९३
पूर्व्वोक्तेन विधानेन शिरःपृष्ठादि कल्पयेत् ।
मन्त्रोदकेन संप्रोक्ष्य शिलां तां प्रोक्षयेद्गुरुः ॥३९४॥
दिग्दोषप्रशमनार्थं गृष्टिं भव्यां स्वलङ्कृताम् । सुवर्णशृङ्गसंयुक्तां कांस्यदोहां पयस्विनीम् ।
ताम्रपृष्ठीं सोपवीतां दद्याद्रौप्यखुरां गुरोः ॥३९५॥
तोषयीत गुरुं यत्नाद्वस्त्रालङ्कारणादिभिः । शिल्पिनं तोषयेद्यत्नाद्वस्त्रालङ्कारचन्दनैः ॥३९६॥
आचार्य्ये तोषिते विष्णुस्तोषितः स्यान्न संशयः ॥३९७॥
शिल्पिनं तोषयेदेवं विश्वकर्म्माथ पूजितः । ततः कर्म्माणि युञ्जीत सर्व्वकामप्रदो भवेत् ॥३९८

---

विधि से उस शिला द्वारा कार्य्य आरम्भ करना आवश्यक है,उसका वर्णन करता हूँ,श्रवण करो । विधानविद् गुरु पूर्ववर्णित लक्षणयुक्त शिला यथाविधि आनयन पूर्वक प्रासाद के उत्तर दिक् में भूमि खनन करके उसके मध्य में शिला को रखें, एवं मृत्तिका द्वारा उस खात को पूर्ण करें। पश्चात् वहाँ का स्थान समतल कर उस पर मण्डप प्रस्तुत करना चाहिये । अनन्तर पताका, ध्वज, पत्र, तोरण, रम्भास्तम्भ एवं चन्द्रातप द्वारा मण्डप को चारों ओर से अलङ्कृत करना चाहिये । पश्चात् उसके पूर्वांश में भद्रमण्डल अङ्कन करके उसमें प्रबाल, मुक्ता, एवं समुज्ज्वल काञ्चन कुसुम द्वारा श्रीहरि की पूजा करें। अथवा पूर्व वर्णित विधि के अनुसार भूतगण के निमित्त बलि प्रदान करें। अनन्तर श्रीगुरुदेव, पूर्वोक्त विधि से पश्चिमदिक् में यथोचित होम करें । विशेष रूप से दिक् दोष शोधन हेतु वैष्णवानल में 'पाताल नरसिंह' मन्त्र से सहस्र होम करें । तदनन्तर अङ्गस्वरूप दिक् देवतागण को आहुति प्रदान कर पूर्णाहुति देनी चाहिये । इस प्रकार मन्त्रराज का तर्पण करने पर शिला में दिक् दोष नहीं रहता है । पश्चात् श्रीगुरुदेव, पूर्वोक्त विधानानुसार पुष्पादि स्थापन पूर्वक पूर्वोक्त विधान से शिला के मस्तक पृष्ठादि की कल्पना करें एवं मन्त्राभिमन्त्रित जल द्वारा सेचन पूर्वक उक्त शिला को प्रोक्षण करें । अनन्तर दिक् दोष विदूरित करने के निमित्त श्रीगुरुदेव को विविध आभरणभूषिता, स्वर्णशृङ्गी, कांस्य क्रोड़ा, दुग्धवती, ताम्रपृष्ठा, रौप्यक्षुरा, सुदृश्या धेनु एवं तत् सहित उपवीत प्रदान करे । यत्नपूर्वक वसन भूषण द्वारा श्रीगुरुदेव को सन्तुष्ट करके शिल्पी को वस्त्र, भूषण एवं चन्दन द्वारा प्रसन्न करना चाहिये । आचार्य्य सन्तुष्ट होने से श्रीहरि भी सन्तुष्ट होते हैं, उसमें

अथ शिलालक्षणम्

तत्रैव—

क्षाराम्लसेविता या च नदीतोरसमुद्भवा । पुरमध्ये स्थिता या च तथा पितृवने स्थिता ।।३९९

चतुष्पथे स्थिता या च मृच्छिला पक्वणे च या ।

ऊषरे च तथा मध्ये वल्मीके वापि या स्थिता ।।४००।।

सूर्य्यरश्मिप्रतप्ता या या च दग्धा दवाग्निना । अन्यकर्म्मोपयुक्ता या अन्यदेवार्थनिर्म्मिता ।।४०१

क्रव्यादाद्यैरुपहृता वर्ज्ज्या यत्नेन वै शिला । येन केनचिदानीता वर्ज्जनीया तथा शिला ।।४०२

पुण्यसेतुद्भवा ग्राह्या पुण्यतीर्थोद्भवा तु या । नदीपर्व्वतसंलग्ना वृक्षच्छायाद्यनावृता ।।४०३।।

निमग्ना भूतले या च याऽस्पृष्टा सूर्य्यरश्मिभिः । अन्तर्जलोषिता नद्यामेकवर्णा मनोरमा ।।४०४

पाण्डुरा चारुणा पीता कृष्णा शस्ता च वर्णिनाम् ।

न यदा लभ्यते सम्यग्वर्णिनां वर्णतः शिला ।।४०५।।

वर्णस्यापादने तत्र जुहुयात् सिंहविद्यया । कृते वर्णस्य जनने तस्य वर्णस्य सा शुभा ।।४०६।।

श्रेष्ठवर्णा सुवर्णा च रेखा सर्व्वस्य शस्यते । अपरस्य तु वर्णस्य श्रेष्ठस्य न प्रशस्यते ।।४०७।।

वर्णिनामिह सर्व्वेषां कृष्णरेखा विधीयते । शिलानामिह सर्व्वासां शुक्लरेखा प्रशस्यते ।।४०८

रेखाणामिह सर्व्वासां व्यत्यये होममाचरेत् । पातालनरसिंहेन सहस्रं देशिकोत्तमः ।।४०९।।

तर्पिते मन्त्रराजे तु ततः सा शुभदा नृणाम् । विपरीते तु विमले विन्दुके हीरके तथा ।।४१०

---

सन्देह नहीं है । इस रीति से शिल्पी को सन्तुष्ट करने पर विश्वकर्मा पूजित होते हैं । पश्चात् जिस किसी कार्य्य में शिल्पकार को नियुक्त किया जाय, विश्वकर्मा उन सब में ही सर्व काम फलदायक होते हैं ।।३८५-३९८।।

अथ शिलालक्षणम्

पूर्वोक्त ग्रन्थ में ही लिखित है— जो शिला, क्षार वा अम्ल द्रव्य से संयुक्त है, जो नदी के तट से उत्पन्न, पुर के मध्य में, श्मशान में वा चतुष्पथ में स्थित है, मृच्छिला अर्थात् मिट्टीयुक्त शिला, जो शवरालय में, ऊषर क्षेत्र में अथवा वल्मीक में संस्थिता, रविकिरण से तप्ता, दावानल दग्धा, अन्य कार्य्य की उपयुक्ता, अन्य देवता के निमित्त निर्मिता, जो मांसाशी जीवकर्त्तृक दुष्टा एवं अयोग्यजन कर्त्तृक आनीता, तादृशी शिला को त्याग देनी चाहिये । जो पुण्यसेतुद्भवा, पुण्यतीर्थजाता, नदी किंवा गिरिलग्ना वृक्षच्छायादि से अनःवृता, भूभग्ना, रविकिरणास्पृष्टा नदीजलगर्भस्थिता एव जो मनोहर एकवर्ण विशिष्टा तादृशी शिला ही ग्रहणीया है ।।३९९-४०४।।

ब्राह्मणादि वर्ण चतुष्टय के पक्ष में क्रमशः पाण्डुर, अरुण, पीत एवं कृष्णवर्ण शिला श्रेष्ठ है अर्थात् ब्राह्मण के पक्ष में पाण्डुर, क्षत्रिय के पक्ष में अरुण, वैश्य के पक्ष में पीत एवं शूद्र के पक्ष में कृष्णवर्ण शिला ही प्रशस्त है । वर्ण के अनुरूप शिला का अभाव होने पर वर्ण सम्पादन विषय में सिंह मन्त्र द्वारा उस शिला में होम करना चाहिये । इस रीति से वर्णोत्पादन सम्पादित होने से समस्त वर्ण के पक्ष में ही वह शिला शुभप्रद होती है । ब्राह्मणादि समस्त जाति के पक्ष में सुवर्णरेखा युक्त शिला ही श्रेष्ठ वर्ण रूप में प्रशस्त है । अन्य वर्ण श्रेष्ठ होने पर भी प्रशस्त नहीं है । समस्त वर्णों के पक्ष में कृष्णरेखा प्रशस्ता है, एवं समस्त शिला के पक्ष में श्वेत रेखा प्रशंसनीया है । यदि रेखाओं से हीन हो तो, आचार्य्यश्रेष्ठ—पातालनृसिंह

इममेव विधिं कुर्य्यादन्यस्मिन्नपि गर्हिते । युवा मध्या भवेद्ग्राह्या बाला वृद्धा च गर्हिता ॥४११

सुगन्धा निविड़ा स्निग्धा तथा गम्भीरनिस्वना ।
शीतला या च तेजाढ्या युवेति प्रोच्यते शिला ॥४१२॥
तद्रूपा प्रोच्यते मध्या किन्तु सा कठिना भवेत् ।
अतिमृद्वी भवेद्बाला वृद्धातिकठिना मता ॥४१३॥

टङ्काघाता मता बाला वृद्धा लोकक्षयङ्करी । स्त्रीपुंनपुंसकञ्चैव लक्षणेनैव लक्षयेत् ॥४१४॥

उत्पाट्यमाने दृश्येत तिन्दुकालातवत् ज्वलन् ।
स्फुलिङ्गः श्रूयते नादः कांस्यघण्टानिनादवत् ॥४१५॥

मूले मध्ये तथाग्रे च पुंलिङ्गेति तु सा स्मृता । तदेव लक्षणं यद्वन्मन्दं मन्दं प्रतीयते ॥४१६॥

स्त्रीलिङ्गेति तदा सा च भिन्नकांस्यध्वनिस्तु या । नपुंसकेति सा ज्ञेया न यत्रैतद्द्वयं भवेत् ॥४१७

पुंलिङ्गः प्रतिमा कार्य्या स्त्रीलिङ्गः पादपीठिका ।
पिण्डिकार्थं तु सा ग्राह्या दृष्टा या षण्डलक्षणा ॥४१८॥

लिङ्गानां तु विपर्य्यासे पूर्व्वोक्तं होममाचरेत् । छेदने भेदने वापि शिलागर्भः समीक्ष्यते ।४१९

दृश्यते मण्डलं यस्यां सगर्भां तां विनिर्द्दिशेत् ।
मण्डूको मण्डले तस्या लोहिते नात्र संशयः ॥४२०॥

---

मन्त्र द्वारा सहस्र होम करें। मन्त्रराज, अर्थात् नृसिंह मन्त्र द्वारा तर्पित होने पर मनुष्यवृन्द के पक्ष में वह शिला इस प्रकार शिलास्थ विमल रेखा एवं हीरकविन्दु विपरीत होने पर अथवा अन्य किसी रीति से गर्हित होने पर उस विधि का अनुसरण करना कर्त्तव्य है। शिला युवा एवं मध्या होने से ग्रहणीया है। बाला एवं वृद्धा होने पर वर्जनीया है। शिला, सुगन्धयुक्ता, निविड़ा, स्निग्धा, गभीरशब्दा, शीतला, एवं तेजस्विनी होने पर उसको युवा कहते हैं। यदि शिला कठिन होती है, तो मध्या कहते हैं, अतिमृद्वी शिला बाला एवं अति कठिना होने से वृद्धा कहते हैं। टङ्काघात ध्वनियुक्त शिला को बाला कहते हैं। वृद्धाशिला लोक क्षयकारणी होती है। शिला के लक्षणानुसार शिला का स्त्रीलिङ्ग, पुंलिङ्ग, एवं नपुंसकलिङ्ग निर्णय करना चाहिये ॥४०५-४१४॥

जिस शिला को उत्पाटन करने से गाब काष्ठ दग्धवत् वा प्रज्वलित अग्नि स्फुलिङ्गवत् दिखाई दे, और मूल, मध्य एवं अग्रभाग में कांस्य-घण्टा शब्द के समान शब्द श्रुतिगोचर होता है, उसको पुंलिङ्ग शिला कहते हैं। यह सब लक्षण स्वल्प परिमाण में दृष्ट होने से स्त्रीलिङ्ग कहा जाता है। जिस शिला को उखड़ने के समय भग्नकांस्यवत् शब्दोत्थित होता है, एवं जिसमें पुंलिङ्ग वा स्त्रीलिङ्ग चिह्न दृष्ट नहीं होता है वह नपुंसक शिला है। पुंशिला द्वारा प्रतिमा, स्त्रीशिला द्वारा पादपीठ एवं नपुंसक शिला द्वारा पिण्डिका प्रस्तुत करे। यदि लिङ्ग व्यत्यय होता है तो पूर्वोक्त रीति से होम करना चाहिये। छेदन भेदन में सगर्भा निगर्भा शिला भी परिलक्षित होती है ॥४१५-४१९॥

शिला में गोलाकार चिह्न दृष्ट होने पर वही सगर्भा कही गई है। शिलास्थ मण्डल लोहित वर्ण होने से उसमें मण्डूक (मेंढ़क) उत्पन्न होता है, इसमें सन्देह नहीं है। उस प्रकार मण्डल हरिद्राभ होने पर गोधा

हरिद्राभे भवेद्गोधा कृष्णसर्पस्तथा सिते । निस्त्रिंशसदृशे तोयं गृहगोधा तु कर्कशे ।।४२१।।
आखुर्हरिद्रावर्णे स्यादरुणे सरटस्तथा । पिङ्गवर्णे तु पाषाणः पद्माभे सिकता भवेत् ।।४२२।।
वृश्चिकः स्याद्विचित्रे तु पीतनीले पतङ्गकः । पारावताभे खद्योतं मण्डले तु विनिर्द्दिशेत् ।।४२३
अकल्पना तु मण्डूके दौर्भाग्यं गोधया भवेत् । सर्पे विषेण मरणमतिवृष्टिस्तथा जले ।।४२४।।
धनहानिस्तु गोधायाम खुनानिष्टमुद्भवेत । अल्पायुष्ट्वं तु सरटे पाषाणे विद्युतो वधः ।।४२५।।
बालुकायामनावृष्टिः कलहो वृश्चिके भवेत् । राष्ट्रोच्छित्तिस्तु शलभे खद्योते गात्रसंक्षयः ।।४२६
तस्मात् परीक्ष्य यत्नेन शिलां गृह्णीत देशिकः । सगर्भया तु शिलया रूपकः क्रियते यदि ।।४२७
तद्देशे म्रियते राजा यजमानोऽथ देशिकः । शिलायामपि वृक्षेषु यत्नाद्‌गर्भं समीक्षयेत् ।।४२८

अथ शिल्पि-कृत्यम्

मात्स्ये—

विविक्ते संवृते स्थाने स्थपतिः संयतेन्द्रियः । पूर्ब्ववत् कालदेशज्ञः शास्त्रज्ञः शुक्लभूषणः ।।४२९
प्रयतो नियताहारो देवताध्यानतत्परः । यजमानानुकूल्येन विद्वान् कर्म्म समाचरेत् ।।३३०।।
धृत्वा पूर्ब्वमुखं द्रव्यमथवा चोत्तरामुखम् । दधिदूर्ब्वाक्षतैः पूज्य तदारम्भे बलिं हरेत् ।।४३१
पूर्ब्ववद्ब्रह्मघोषाद्यैः स्थापयेद्द्रव्यमाचरेत् ।।४३२।।
शुक्लैर्गन्धैश्च पुष्पैश्च द्रव्यं सम्पूज्य भक्तितः । स्वस्तिवाचनकं कृत्वा प्रतिमां संविभाजयेत् ।।४३३

अथ पिण्डिकालक्षणम्

हयशीर्षपञ्चरात्रे—

अतःपरं प्रवक्ष्यामि पिण्डिकालक्षणं तव ।।४३४।।

---

श्वेत वर्ण होने से कृष्णसर्प, खड्गवर्ण होने से जल, कर्कश होने से गृह गोधा (घर की गोथ) हरिद्रावर्ण से मूषिक, अरुणवर्ण से कृकलास, पिङ्गलवर्ण से पाषाण एवं पद्मवर्ण होने पर बालुका की उत्पत्ति होती है। मण्डल, पीत नीलवर्ण होने पर पतङ्ग एवं कपोतवर्ण होने से खद्योत उत्पन्न होता है । मण्डूक में अकल्पना, गोधा में धनहानि, मूषिक में अनिष्ट, कृकलास में अल्पायुः, पाषाण में वैद्युतानल से निधन, बालुका में अन्न वृष्टि, वृश्चिक में कलह, पतङ्ग में राज्यनाश, एवं खद्योत में शरीर क्षय होता है । सुतरां यत्नपूर्वक परीक्षा करके शिला ग्रहण करना कर्त्तव्य है । सगर्भा शिला के द्वारा प्रतिमा निर्म्माण करने पर तत्रत्य नृपति, यजमान एवं आचार्य्य का विनाश होता है । सुतरां यत्नपूर्वक शिला एवं वृक्षगर्भ दर्शन करके परीक्षापूर्वक ग्रहण करे ।।४२०-४२८।।

अथ शिल्पि-कृत्यम्

मत्स्यपुराण में लिखित है—पूर्वोक्तवत् देशकालदर्शी, शास्त्रज्ञ, श्वेतवस्त्रधारी शान्त, परिमिताहारी, देवध्यान परायण, विद्वान् शिल्पि, निर्जन आवृतस्थान में जितेन्द्रिय होकर यजमान के अनुकूल में कार्य्य आरम्भ करे । कार्य्यारम्भ के समय में उत्तरास्य वा पूर्वास्य द्रव्य (शिला वा काष्ठ) धारण पूर्वक दधि, दूर्वा एवं अक्षत के द्वारा पूजा करके बलि अर्पण करे । पूर्ववत् वेद शब्द के सहित शिला वा काष्ठ स्थापन कर्म में प्रवृत्त होना चाहिये । तत्पश्चात् भक्तिपूर्वक श्वेत चन्दन एवं पुष्प द्वारा द्रव्य (शिला अथवा काष्ठ) की पूजा एवं स्वस्तिवाचन करके प्रतिमा के निमित्त शिला का विभाग करे ।।४२९-४३३।।

अथ पिण्डिकालक्षणम्

श्रीहयशीर्षपञ्चरात्र में लिखित है—अतःपर तुम्हारे समीप में पिण्डिका का लक्षण कहता हूँ, सुनो ।

उच्छ्रायं प्रतिमार्द्धञ्च दैर्घ्येण प्रतिमा समा। चतुःषष्टि पुटान् कृत्वा पिण्डिकां तत्र कल्पयेत् ॥४३५

त्यक्त्वा पङ्क्तिद्वय चाधस्तद्वदूर्द्ध्वं यत्तु कोष्ठकम्।
समस्तमुभयोः पार्श्वे अन्तस्थं परिमार्ज्जयेत् ॥४३६॥

ऊर्द्ध्वपङ्क्तिद्वयं कृत्वा अधस्ताद्वर्णकोष्ठकम्। अन्तःस्थं मार्जयेद्यत्नात् पार्श्वयो रुभयोः समम्।

तयोर्मध्यगतौ तत्र चतुष्कौ मार्ज्जयेत्ततः ॥४३७॥
चतुर्द्धा भाजयित्वा तु ऊर्द्ध्वपङ्क्तिद्वयं बुधः।
मेखलाभागमात्रं स्यात् खातं तस्यार्द्धमानतः ॥४३८॥
भागं भागं परित्यज्य पार्श्वयोरुभयोः समम्।
दत्वा चैकं पदं बाह्ये प्रमाणं कारयेद्बुधः ॥४३९॥

त्रिभागेन च भागः स्यादग्रे स्यात्तोयदिग्गतः। नानाप्रकारभेदेन भद्रेयं पिण्डिका शुभा ॥४४०

किञ्च तत्रैवाग्रे—

दैर्घ्येण प्रतिमा तुल्या तदर्द्धेन तु विस्तृता। उच्छ्रितायामतोऽर्द्धेन सुविस्तरार्द्धभागतः ॥४४१
त्रिभागेन तु बाहुल्यं तत्त्रिभागेन मेखला। खातं च तत् प्रमाणं तु किञ्चिदुत्तरतोन्नतम् ॥४४२
विस्तारस्य चतुर्थेन प्रमाणस्य विनिर्णयः। समं मूलस्य विस्तारमग्रे कुर्य्यात्तदर्द्धतः ॥४४३॥
विस्तारस्य तृतीयेन तोयमार्गन्तु कारयेत्। पिण्डिकार्द्धेन वा तुल्यं दैर्घ्यं कुशस्य कीर्त्तितम् ॥४४४
कुशबाहुल्यदैर्घ्येण ज्ञात्वा सूत्र प्रकल्पयेत्। उच्छ्रायं पूर्ववत् कुर्य्याद्भागशेषेण संख्यया ॥४४५

---

उसकी उच्चता, प्रतिमा से आधी और दैर्घ्य प्रतिमा के समान हो। चतुषष्टि (चौंसठ) कोष्ठ करके उसमें पिण्डिका की कल्पना करे। निम्न, ऊर्द्ध्व, एवं उभय पार्श्व के दो दो पंक्ति त्यागकर मध्यगत कोष्ठ चतुष्टय को मार्ज्जन यत्नपूर्वक करे। ऊपर की दो पङ्क्ति और नीचे की दो पङ्क्ति वर्जन पूर्वक मध्यगत कोष्ठ चतुष्टय को यत्नपूर्वक मार्जन करे। अनन्तर पार्श्वद्वय में समान करके उस पङ्क्तिद्वय के मध्यस्थ चतुष्कद्वय को मार्जन करे। ऊर्द्ध्वस्थ पङ्क्तिद्वय को चतुर्भाग करके एक भाग मेखला, एवं तदर्द्धभाग गर्त्त (गड्ढा) करना ही बुद्धिमान् व्यक्ति का कर्त्तव्य है। पश्चात् उभय पार्श्व में समान करके एक एक भाग त्यागपूर्वक बाहर में एक पद देकर मेखला का परिमाण करना चाहिये। दो पङ्क्तियों के तीन भाग में भी भाग होता है, प्रथमतः पश्चिम दिक् का भाग करना होगा। यह शुभप्रदा पिण्डिका विविध प्रकार की होती हैं ॥४३४-४४०॥

उक्त ग्रन्थ के अग्रिम भाग में उक्त है—पिण्डिका का दैर्घ्य (लम्बाई) प्रतिमा के समान, विस्तृति (चौड़ाई) प्रतिमा से आधी और ऊँचाई विस्तार से आधी हो। विस्तार के अर्द्ध के विभाग द्वारा उच्छ्राय ऊँचाई की अधिक होती है। उच्छ्राय के तीन भाग द्वारा मेखला और मेखला के तीन भाग द्वारा खात करे यह खात (गड्ढा) उत्तर के अंश में नत हो अर्थात् झुका हुआ हो। विस्तृति के चतुर्थांश परिमाण का निर्णय करना चाहिये। जल पथ विस्तार के तीन भाग करे और उसके मूल की विस्तृति उससे आधी करे। ॥४४१-४४४॥

कुश का दैर्घ्य पिण्डिका अर्द्धभाग के समान हो, और कुश की दीर्घता का बाहुल्य को जानकर सूत्र की कल्पना करनी चाहिये। भाग शेष-संख्या के द्वारा पूर्ववत् उच्च करे। इस उच्छ्राय के निम्न भाग को तीन

अधस्तस्य द्विभागन्तु कण्ठं कुर्य्यात्त्रिभागकम्।
शेषा ह्येकैकशः कार्य्याः प्रतिष्ठा निर्गतास्तथा ॥४४६॥

यष्टिका पिण्डिका चेयं सामान्यप्रतिमासु च। प्रासाद-द्वारमानेन प्रतिमा-द्रव्यमुच्यते ॥४४७॥
गजबालकसंयुक्ता प्रभा स्यात् प्रतिमासु च। पिण्डिकासु यथाशोभं कर्त्तव्या सततं हरेः ॥४४८

मात्स्ये—

पिण्डिकालक्षणं वक्ष्ये यथावदनुपूर्व्वशः। पीठोच्छ्रायं यथावच्च भागान् षोड़श कारयेत् ॥४४९
भूमावेकः प्रतिष्ठः स्याच्चतुर्भिर्जगती मता। वृत्तो भागस्तथैकः स्याद्वृत्तपट्टस्तु भागतः ॥४५०
भागैस्त्रिभिस्तथा कण्ठः कण्ठपट्टस्त्रिभागतः। भागाभ्यामूर्द्ध्वपट्टस्तु शेषभागेन पट्टिका ॥४५१
प्रविष्टं भागमेकैकं जगती यावदेव तु। निर्गमस्तु पुनस्तस्माद्यावद्वै शेषपट्टिकाः ॥४५२॥
वारिनिर्गमनार्थन्तु तत्र कार्य्यः प्रणालकः। पीठिकानां तु सर्व्वासामेतत् सामान्यलक्षणम् ॥४५३

विशेषाद्देवताभेदात् शृणुध्वं द्विजसत्तमाः।
स्थण्डिला वाथ वापी च यक्षी वेदी च मण्डला ॥४५४॥

पूर्णचन्द्रा च वज्रा च पद्मा चार्द्धशशीस्तथा। त्रिकोणा दशमी तासां संस्थानञ्च निबोधत ॥४५५
स्थण्डिला चतुरस्रा तु वर्ज्जिता मेखलादिभिः। वापी द्विमेखला ज्ञेया यक्षी चैव त्रिमेखला ४५६

चतुरस्रायता वेदी न तां लिङ्गेषु योजयेत्।
मण्डला वर्त्तुला या तु मेखला त्रिगुणा प्रिया ॥४५७॥

रक्ता द्विमेखला मध्ये पूर्णचन्द्रा प्रकीर्त्तिता। मेखलात्रयसंयुक्ता षड़स्रा वज्रिका भवेत् ॥४५८

---

भाग में विभक्त करके एक भाग में कण्ठ और अवशिष्ट में एक एक प्रतिष्ठा बहिर्गत करे। साधारण में प्रतिमा में यह यष्टिका पिण्डिका के नाम से अभिहित होती है। प्रतिमा प्रासाद के द्वार के परिमाण में समस्त द्रव्य निरूपित होते हैं। प्रतिमा की प्रभा गज बालक समन्वित हो। श्रीहरि की प्रतिमा में जिस प्रकार शोभा सम्पादित होती है, उसी प्रकार पिण्डिका में शोभा करनी चाहिये ॥४४५-४४८॥

मत्स्यपुराण में उक्त है—पिण्डिका का लक्षण आद्योपान्त यथारीति वर्णन करता हूँ। पीठ की उच्चता को षोड़श भाग में विभक्त कर एक भाग भूमि में प्रतिष्ठित करके चार भाग में जगती, एक भाग वृत्त, एक भाग में वृत्तपट्ट, तीन भाग में कण्ठ, तीन भाग में कण्ठपट्ट, दो भाग में ऊर्द्ध्व पट्ट और अवशिष्ट भाग में पट्टिका करे। जगती जितनी संख्या की होगी, उतनी संख्या में एक एक भाग प्रविष्ट होगा। पुनर्वार उससे शेष पट्टिका पर्य्यन्त एक एक भाग निष्क्रान्त करना पड़ता है। जल पथ के निमित्त इस स्थान में प्रणाली प्रस्तुत करनी चाहिये। यावतीय पीठिका के साधारण लक्षण इस प्रकार मैंने कहा ॥४४९-४५३॥

हे द्विजसत्तमवृन्द! देव भेद से विशेष विशेष लक्षण वर्णन करता हूँ, श्रवण करो। स्थण्डिला, वापी, यक्षी, वेदी, मण्डला, पूर्णचन्द्रा, वज्रा, पद्मा, अर्द्धशशी एवं त्रिकोणा,–इन दश प्रकार का पीठ के लक्षण कहता हूँ सुनो। स्थण्डिला, मेखलादि रहिता एवं चतुष्कोण विशिष्टा होगी। वापी, द्विमेखला विशिष्टा, यक्षी, त्रिमेखलायुक्ता एवं वेदी चतुष्कोण समन्विता होगी। वेदी को लिङ्गसमूह से योजित न करे। त्रिमेखलान्विता वर्त्तुल पीठिका ही मण्डला है। मण्डलाभ्यन्तर में लोहितवर्णा दो मेखला होने पर उसका नाम पूर्णचन्द्रा है। षट्कोण एवं त्रिमेखलान्विता होने से उसको वज्रिका कहते हैं। षोड़शकोण, एवं मूल

षोड़शास्रा भवेत् पद्मा किञ्चित् ह्रस्वा च मूलतः । तथैव धनुराकारा सार्द्धचन्द्रा प्रशस्यते ॥४५९
त्रिशूलसदृशो तद्वत् त्रिकोणा ऊर्द्ध्वतो मता । प्रागुदक्प्रवणा तद्वत् प्रशस्ता लक्षणान्विता ॥४६०
परिवेषास्त्रिभागेन निर्द्देशं तत्र कारयेत् । विस्तारं तत्प्रमाणं तु मूले चाग्रे तथोर्द्ध्वतः ॥४६१
जलमार्गस्तु कर्त्तव्यस्त्रिभागेन सुशोभनः । लिङ्गस्यार्द्धत्रिभागेन स्थौल्येन समधिष्ठितः ॥४६२॥
मेखला तु त्रिभागेन खातं वै तत्प्रमाणतः । अथवा पादहीनं तु शोभनं कारयेत् सदा ॥४६३
उत्तरस्थं प्रमाणन्तु प्रमाणादधिकं भवेत् । स्थण्डिलायामथारोग्यं धन-धान्यञ्च पुष्कलम् ॥४६४
गोप्रदा तु भवेद्यक्षी वेदी सम्पत्प्रदा भवेत् । मण्डलायां भवेत् कीर्त्तिर्वरदा पूर्णचन्द्रिका ॥४६५
आयुःप्रदा भवेद्वज्री पद्मा सौभाग्यदायिनी । पुत्रदा त्वर्द्धचन्द्रा स्यात्त्रिकोणा शत्रुनाशिनी ॥४६६

देवस्य यजनार्थं तु पिण्डिका दश कीर्त्तिताः ।
शैले शैलमयीं पिण्डीं पार्थिवे पार्थिवीं तथा ॥४६७॥
दारुजे दारुजां कुर्य्यान्मिश्रे मिश्रां तथैव च ।
नान्ययोनिस्तु कार्य्या वै सदा शुभफलेप्सुभिः ॥४६८॥

अर्च्चायाम-समं दैर्घ्यं लिङ्गायाम-समं तथा । यस्य देवस्य या पत्नी तां पीठे परिकल्पयेत् ।
एवमेव समाख्यातं समासात् पीठलक्षणम् ॥४६९॥

किञ्च—

द्वारोच्छ्रायस्य यन्मानमष्टधा तत्तु कारयेत् । भागद्वयेन प्रतिमां त्रिभागीकृत्य तत् पुनः ।
पिण्डिका भागतः कार्य्या नातिनीचा न चोच्छ्रिता ॥४७०॥

---

भाग में किञ्चिद्ह्रस्व होने से उसको पद्मा कहते हैं। धनुराकृति ही अर्द्धचन्द्रा है। ऊर्द्ध्व भाग में त्रिशूल सदृशी होने से उसको त्रिकोणा कहते हैं। यह सब पूर्ववत् उत्तरांश में नत होने पर सुलक्षणयुक्त एवं प्रशस्त होती हैं। परिधि को त्रिभाग करना चाहिये एवं मूल, अग्र, एवं ऊर्द्ध्व,–इन तीन ओर उसी परिमाण से विस्तृत करना चाहिये। तीन भाग के द्वारा मनोहर जलपथ का निर्माण करे। वह लिङ्ग के अर्द्धांश के त्रिभाग के समान स्थूल होगा। उसके तीन भाग के द्वारा मेखला के सदृश खात(गड्ढा) निर्माण करे। अथवा सर्वदा उस खात को मेखला के पादहीन करके सुदृश्य करे। उत्तरांश की प्रणाली यथोचित परिमाण से अधिक करनी चाहिये। स्थण्डिला आरोग्य एवं बहु धन-धान्य प्रदा, यक्षी, गोप्रदा, वेदी, सम्पददात्री, मण्डला, कीर्त्तिप्रदा, पूर्णचन्द्रिका, वरदात्री, वज्री, आयुष्करी, पद्मा, सौभाग्यदात्री, अर्धचन्द्रा, पुत्रदा, एवं त्रिकोणा, शत्रुघातिनी है। देवपूजा हेतु दशविध पिण्डिका का वर्णन हुआ। प्रतिमा, प्रस्तर निर्मिता होने से प्रस्तरमयी, मृद्गठिता, मृन्मयी, दारुनिर्मिता, दारुमयी, एवं विविध द्रव्य मिश्रिता होने पर मिश्रिता पिण्डिका करनी चाहिये। जो सर्वदा अपने मङ्गल की कामना करते हैं। ऊपर कहे हुए द्रव्य के अतिरिक्त जिस देवता की जो भार्य्या हैं, उनको उसी देवता की पीठ में कल्पित करना चाहिये। संक्षेप से इस प्रकार पीठ लक्षणों का वर्णन किया गया। ४५४-४६९॥

और भी वर्णित है – द्वार की उच्चता के परिमाण को अष्ट अंश में विभक्त करे। दो भाग द्वारा प्रतिमा और उसको पुनर्वार तीन अंश करके एक अंश द्वारा पिण्डिका करे, किन्तु पिण्डिका को बहुत ऊँचा वा नीचा न करे ॥४७०॥

श्रीनारदपञ्चरात्रे च—

विम्बमानाद्यथा पीठं कुर्य्याद्देवस्य तच्छृणु । चतुरस्रञ्च तद्विद्धि चतुरस्रायतं तु वा ॥४७१॥

विम्बोच्छ्राय-समं पीठं परितश्चैव विस्तृतम् । तदर्द्धेनोन्नतं कुर्य्य देतत् सामान्यलक्षणम् ॥४७२

चतुरस्रस्य पीठस्य कथितं तु महामुने । चतुरस्रायतस्याथ प्रमाणमवधारय ॥४७३॥

विम्बार्द्धोनन्तु विस्तीर्णं तत्प्रमाणेन चोन्नतम् ।
समं देवस्य दैर्घ्यं वा चतुरस्रायतं तु तत् ॥४७४॥

कार्य्यं तुङ्गालयस्थानां देवतानां महामुने । चलानां वेश्मसंस्थानां विम्बानां पीठमन्यथा ॥४७५

कुर्य्याद्विम्बसमं दैर्घ्यं स्वेन मानेन वा पुनः । आपादजानुपर्य्यन्तं विस्तारेणोच्छ्रयेण च ॥४७६

ऊर्वर्द्धेनाथवा कुर्य्यात् सविस्तारं द्विजोन्नतिम् ।
वक्षोऽन्तरे वा विम्बस्य तस्यार्द्धेन च विस्तृतम् ॥४७७॥

तच्चतुर्भागहीनं तु त्रिभागं चार्द्धमेव वा । अङ्ग त्वं विद्धि तत् पीठं चलविम्बस्य सर्व्वदा ।४७८

धातुद्रव्यस्य चाभावात् स्थिराणामेवमेव च । कृत्वा तु तदधः कुर्य्यादुपपीठं प्रमानतः ॥४७९

त्रिभागेनाथ पीठस्य प्रमाणं मध्यतो भवेत् । तन्मानेन ततो दैर्घ्यं स्वमानादग्रतः पुनः ॥४८०॥

त्र्यंशमानेन विस्तीर्णं तस्यापि त्र्यंशमन्तरा ।
निखनेदग्रतो मूलात् तत् कुर्य्यान्मकराननम् ॥४८१॥ इत्यादि ।

इति श्रीगोपालभट्ट-विलिखिते श्रीभगवद्भक्तिविलासे श्रीमूर्त्तिप्रादुर्भावो नामाष्टादशो विलासः ।

---

श्रीनारदपञ्चरात्र में भी लिखित है—विम्ब के परिमाण में देवता की पीठ जिस प्रकार होगी उसका वर्णन करता हूँ, सुनो । उसको चतुरस्र (चौकोण) वा चतुरस्रायत चार हाथ चौड़ी करे । उसकी पीठ, आकृति की उच्चता के तुल्य विस्तृत एवं तदर्ध उन्नत करे । यही साधारण लक्षण है ॥४७१-४७२॥

हे महामुने ! चतुरस्य पीठ का विषय वर्णित हुआ । अधुना चतुरस्रायत परिमाण का प्रमाण श्रवण करो । विस्तार में विम्ब की अपेक्षा न्यून एवं उच्चता में उसके समान परिमाण हो, एवं दैर्घ्य देवता के समान करे । इस प्रकार होने से ही उसको चतुरस्रायत कहते हैं ॥४७३-४७४॥

हे महामुने ! अत्युच्च प्रासादस्थ देवतागण की पीठ इस प्रकार करनी चाहिये । मन्दिर के अभ्यन्तर में अधिष्ठित उक्त प्रतिमासमूह को पादपीठ अन्यरूप करनी चाहिये । उक्त पीठ प्रतिमा के सदृश किंवा स्वीय प्रमाण में दीर्घ हो । हे द्विज ! आपाद जानुपर्य्यन्त विस्तृत एवं उच्छ्रित (ऊँचा) हो, अथवा ऊरु के अर्द्धांश के समान विस्तार सहित उच्छ्राय करे । किंवा प्रति मूर्त्ति के वक्ष स्थल के मध्य पर्य्यन्त उन्नत एवं तदर्ध विस्तृत करे । अथवा त्रिचतुथ भाग वा अर्द्धांश विस्तृत करे ॥४७५-४७७॥

हे अङ्ग ! चलमूर्त्ति की पीठ, इस प्रकार जाननी चाहिये । धातु का अभाव होने पर, स्थिर प्रतिमा की पीठ इस प्रकार करके उसके नीचे इतनी ही उपपीठ करनी चाहिये । उपपीठ का मध्यस्थान पीठ के तीन भाग होगा, और दैर्घ्य भी इतना ही करना चाहिये । पुनर्वार अग्रभाग में स्वीय परिमाण में तृतीयांश विस्तृत और तृतीयांश प्रोथित करे । अग्रभाग से मूल यावत् मकरानन करना चाहिये । ४७८-४८१॥

इति श्रीगोपालभट्ट-विलिखिते श्रीभगवद्भक्तिविलासे श्रीमूर्त्तिप्रादुर्भावो नाम अष्टादशो विलासः ।

———

# एकोनविंश-विलासः

श्रीश्रीकृष्णाय नमः

श्रीचैतन्यं प्रविष्टोऽस्मि शरणं सुष्ठु येन हि । आविष्टो याति दुष्टोऽपि प्रतिष्ठां सद्भिष्टुताम् ।। १

अथ श्रीमूर्त्तिप्रतिष्ठा

प्रतिष्ठयैव भगवदाविर्भावो विशेषतः । प्रतिमासु ततस्तासां प्रतिष्ठां विधिनाचरेत् ।।२।।

तथा चोक्तमेकादशस्कन्धे श्रीभगवता (२७।१३)—

प्रतिष्ठा जीवमन्दिरम् ।।३।। इति ।

अथ प्रतिष्ठालक्षणम्

श्रीहयशीर्षपञ्चरात्रे—

परमात्मा हरिर्देवस्तच्छक्तिः श्रीरिहोदिता । श्रीर्देवी प्रकृतिः प्रोक्ता केशवः पुरुषः स्मृतः ।।४।।

---

श्रीश्रीकृष्णाय नमः

जीयाच्चैतन्यदेवोऽसौ यत्पादाब्जरसं स्पृशन् । नित्यं चित्रं फलत्येव मनोरथमहाद्रुमः ।।

श्रीमूर्तिप्रतिष्ठाविधिं लिखन् तत्-सुसिद्धये परगुरुरूपं भगवन्तं शरणं याति—श्रीचैतन्यमिति । हि यस्माद्-येन श्रीचैतन्येन आविष्टः हृद्याक्रान्तः सन् दुष्टोऽपि जनः सद्भिरभिष्टुतां प्रतिष्ठां याति । अतोऽत्ययोग्योऽपि हृदि तत्प्रेरणया लिखन्नहं सम्यगेतल्लिखितुमर्हामीति भावः ।।१।।

यद्यपि श्रीमूर्त्याविर्भावेणैव सर्व्वलोकेषु साक्षादाकारादिस्फूर्त्या भगवदाविर्भावो वृत्त एव, तथापि विधिना प्रतिष्ठयैव प्रतिमासु विशेषतो भगवत आविर्भावः स्यात्, ततस्तस्माद्धेतोस्तासां प्रतिमानां शास्त्रोक्त-प्रकारेण प्रतिष्ठामाचरेदित्यर्थः ।२।।

एतदेव श्रीभगवदुक्त्या प्रमाणयति— प्रतिष्ठेति । प्रतिष्ठा या, यद्वा, प्रतिष्ठा भवति चेत्तर्हि जीवयति जगच्चेतयतीति जीवः परमात्माहं तस्य मन्दिरमधिष्ठानं भवति । एवं प्रतिष्ठाया नित्यत्वभिप्रेतम् ।।३।।

पिण्डिकोपरि श्रीमूर्त्तेः प्रकर्षेण स्थितेः प्रतिष्ठेति निरुक्त्या तल्लक्षणमाह—परमात्मेति सार्द्धद्वयेन । अर्थविशेषस्तु श्रीवैष्णवानां हृदयगम्य एवेति किन्तद्विस्तारणश्रमेण ? केवलमत्रोपयुक्तमेव लेख्यम् ।।४-५।।

---

जिनके द्वारा आविष्ट होने पर अर्थात् हृदय में जिनका अधिष्ठान होने से दुष्ट व्यक्ति भी साधुवृन्दों का स्तव योग्य होता है, अर्थात् प्रतिष्ठा प्राप्त करता है । मैं उन्हीं श्रीचैतन्यदेव की शरण लेकर उनका सुशोभन आश्रय ग्रहण करता हूँ ।।१।।

अथ श्रीमूर्त्तिप्रतिष्ठा

प्रतिष्ठा के द्वारा ही प्रतिमा में विशेषतः भगवदाविर्भाव होता है । सुतरां शास्त्रीय विज्ञान के अनुसार प्रतिमा की प्रतिष्ठा करनी चाहिये ।।२।।

उस विषय में श्रीमद्भागवत के एकादश स्कन्ध में भगवान् श्रीकृष्ण ने कहा है—श्रीभगवत् प्रतिमा की प्रतिष्ठा होने पर, जगच्चेतना होती है । मैं तादृश प्रतिष्ठित प्रतिमा में अधिष्ठित होकर रहता हूँ ।।३।।

अथ प्रतिष्ठालक्षणम्

श्रीहयशीर्षपञ्चरात्र में लिखित है—परमात्म श्रीहरि ही देव हैं, और लक्ष्मी श्री उनकी शक्ति कही गई है । श्रीदेवी ही प्रकृति एवं श्रीहरि ही पुरुष शब्द से अभिहित होते हैं ।।४।।

न विष्णुना विना देवी न हरिः पद्मजां विना। अर्च्चामूर्त्तिः स्मृतः कृष्णः पिण्डिका कमलालया।
तयोर्यो विधिना योगः सा प्रतिष्ठा प्रकीर्त्तिता ॥५॥

अथ श्रीमूर्त्तिप्रतिष्ठामाहात्म्यम्

मात्स्ये ऋषय ऊचुः—

क्रियायोगः कथं सिध्येद्गृहस्थादिषु सर्व्वदा। ज्ञानयोगसहस्राद्धि कर्म्मयोगो विशिष्यते ॥६॥

श्रीसूत उवाच—

क्रियायोगं प्रवक्ष्यामि देवतार्च्चानुकीर्त्तनम्। भुक्तिमुक्तिप्रदं यस्मान्नान्यल्लोकेषु विद्यते ॥७॥

प्रतिष्ठायाः सुराणाञ्च देवतार्च्चानुकीर्त्तनात्। देवयज्ञोत्सवाच्चापि बन्धनेन विमुच्यते ॥८॥

विष्णुधर्म्मे —

स्थापितां प्रतिमां विष्णोः सम्यक् सम्पूज्य मानवः।
यं यं प्रार्थयते कामं तं तं प्राप्नोत्यनुत्तमम् ॥९॥

यथोक्तविधिना देवं प्रतिष्ठाप्य जनार्द्दनम्। अक्षयं लोकमाप्नोति विष्णोरमिततेजसः ॥१०॥

स्कान्दे —

यावद्दिनानि लोकेऽस्मिन् स्थापयेत् प्रतिमां हरेः। तावद्युगसहस्राणि विष्णुलोके महीयते ॥११

---

देवतानां, यद्वा, देवतायाः परमपूज्यस्य भगवतोऽर्च्चा पूजा प्रतिमा वा अनुकीर्त्तनं च, द्वन्द्वैक्यम्, तद्रूपं क्रियायोगं प्रवक्ष्यामि। तत्र हेतुः—यस्माद्देवतार्च्चानुकीर्त्तनादन्यत् किञ्चिद्भुक्तिमुक्तिप्रदं नास्ति ॥७॥

सुराणामिति बहुत्वं श्रीशिवाद्यपेक्षया, भगवतः परमगौरवापेक्षया वा। प्रतिष्ठेत्यादि प्रथमान्तपाठे सैव देवतार्च्चानुकीर्त्तनं, सैव देवयज्ञोत्सवश्च, येन देवतार्च्चानुकीर्त्तनेन देवयज्ञोत्सवेन च कर्म्मबन्धाज्जनो मुक्तो भवति ॥८॥

---

श्रीविष्णु के बिना लक्ष्मी और लक्ष्मी के बिना विष्णु अधिष्ठान नहीं करते हैं। अर्च्चामूर्त्ति को कृष्ण एवं पिण्डिका मूर्त्ति को ही लक्ष्मी जानना चाहिये। विधानानुसार एतदुभय का जो योग है, उसको प्रतिष्ठा कहते हैं ॥५॥

अथ श्रीमूर्तिप्रतिष्ठामाहात्म्यम्

मत्स्यपुराण में ऋषिवृन्द ने कहा है—किस प्रकार गृहीप्रभृति में क्रियायोग सुसिद्ध होता है? कारण, कर्मयोग ही सहस्र ज्ञानयोग की अपेक्षा गरीयान् है। उत्तर में सूत ने कहा—देवप्रतिमा का अनुकीर्त्तनरूप कर्मयोग का वर्णन करता हूँ। देवता की प्रतिमा का अनुकीर्त्तन के बिना भुक्ति मुक्ति का और कोई उपाय दिखाई नहीं देता। देवप्रतिष्ठा, देवप्रतिमा का अनुकीर्त्तन एवं देवयज्ञोत्सव पूजा,–इन सब कार्यों से कर्म-बन्धन छिन्न होता है ॥६-८॥

विष्णुधर्म में कथित है—श्रीविष्णु की स्थापित मूर्त्ति की यथाविधि पूजा करके जो कोई कामना की जाय, वही सिद्ध होती है। यथोक्त विधान से केशवमूर्त्ति की प्रतिष्ठा करने से भूरितेजा श्रीहरि के अक्षय-धाम में गमन कर सकता है ॥९-१०॥

स्कन्दपुराण में लिखित है—जब तक इस जगत् में श्रीहरि प्रतिमा अधिष्ठित रहती है, उतने ही सहस्र-युग यावत् स्थापनकारी श्रीहरि के धाम में वास करता है, एवं तत्कर्त्तृक शिवादि देवताओं की प्रतिष्ठा हो जाती है। हे ब्रह्मनन्दन नारद! तुम्हारे से जो कुछ मैंने कहा है, उसको निःसन्देह सत्य जानना चाहिये।

अक्षयो भवते तावद्यावदाहूतसंप्लवम् । येनार्च्चा स्थापिता विष्णोः सप्तलोकस्य नायक ॥१२
प्रतिष्ठा शङ्करादीनां देवानां ब्रह्मनन्दन । कृता तेन न सन्देहः सत्योक्त तव नारद ॥१३॥
पितॄणामर्य्यमादीनां वासवादिदिवौकसाम् । कृता तेन महाप्रीतिः स्थापयित्वा जनार्द्दनम् ॥१४
यः स्थापयति देवर्षे देवं मधुनिसूदनम् । तस्य सम्भाषणादेव पापं याति दशाब्दिकम् ॥१५॥
ये निरीक्षन्ति नन्दन्ति प्रतिष्ठां केशवस्य हि । ते वसन्ति हरेर्लोके युगानामेकविंशतिम् ॥१६॥
प्रयागे यत् फलं प्रोक्तं माघमासे तु स्नानतः । गयायां पिण्डदानेन पितृपक्षे च नारद ॥१७॥
कार्त्तिके पुष्करे प्रोक्तं कुरुक्षेत्रे रविग्रहे । द्वारकायां च वैशाखे प्रभासे च शशिग्रहे ॥१८॥
सिद्धेश्वरे शिवरात्रौ क्षेत्रे चैव तु हाटके । शुक्लतीर्थे तु रेवायां गङ्गासागरसङ्गमे ॥१९॥
अश्वमेधादिभिर्यज्ञैर्व्रतैर्द्वादशि-संज्ञकैः । कपिलाकोटिभिर्दत्तैर्हेमभारशतैरपि ॥२०॥
चान्द्रायणैश्च पाराकैः कृतैर्यत्फलमाप्नुयात् । प्रतिष्ठाप्य हरेरर्च्चां पुण्यमाप्नोति नारद ॥२१॥
तस्मात् कलियुगे घोरे विशेषेण नरोत्तमैः । स्थापनीया हरेरर्च्चा पितॄणां मुक्तिमिच्छता ॥२२
अन्यकृते च प्रासादे प्रतिमां स्थापयेत्तु यः । कुलायुतशतैर्युक्तो वसते विष्णुवेश्मनि ॥२३॥
स धन्यः स कुलीनश्च पितॄणां भवते सुतः । कारयित्वा हरेर्धिष्ण्यं यः स्थापयति केशवम् ॥२४
हरस्य विष्णोर्भानोर्वा प्रासादे चापि नारद । स्थापयित्वा हरेरर्च्चां मुख्यं पुण्यमवाप्नुयात्॥२५

---

वैष्णवानां विष्णुपरिवाराणां शङ्करादीनां, हे सप्तलोकस्य नायक, नारद ! नारदेति वा पाठः, ततश्च सप्तलोकस्य विशेषतः शङ्करादीनां च प्रतिष्ठा तेन कृतेत्यन्वयः ॥१२-१३॥

मुख्यमिति—प्रासादं स्वयं निर्म्माय तत्र हरेरर्च्चास्थापनेन यत् पुण्यं तदित्यर्थः ॥२५॥

---

जो मानव जनार्दन की स्थापना करते हैं,अर्य्यमादि पितृवर्ग एवं इन्द्रप्रमुखदेववृन्द भी उससे प्रसन्न होते हैं।

हे देवर्षे ! जो मधुसूदन श्रीहरि की स्थापना करते हैं, उनके सहित केवल सम्भाषण करने से ही दश वर्षज पाप ध्वंस होता है। जो श्रीहरि की प्रतिष्ठा को देखते हैं वा उसमें आनन्दित होते हैं, उनका एकविंशति युग यावत् हरिलोक में वास होता है ॥११-१६॥

हे देवर्षे ! माघ मास में प्रयाग स्नान से, पितृपक्ष में गया क्षेत्र में पिण्डदान से, कार्त्तिक में पुष्कर, कुरुक्षेत्र में सूर्य्यग्रहण, द्वारका में वैशाख, प्रभास में चन्द्रग्रहण, शिवचतुर्दशी में सिद्धेश्वर, हाटक क्षेत्र में, शुक्लतीर्थ में रेवा में एवं गङ्गासागर सङ्गम में स्नान, अश्वमेधादि यज्ञ, द्वादशी व्रत, कोटि कपिला दान, शतभार सुवर्ण दान, चान्द्रायण व्रत, पराक व्रत,–इन सबके द्वारा जो फल मिलता है, श्रीहरि की प्रतिमा की प्रतिष्ठा करने पर भी वही फल मिल जाता है। सुतरां घोर कलियुग में श्रेष्ठ मानवों के पक्ष में विशेषतः पितृपुरुषों को उद्धार की कामना करने वाले मनुष्य के पक्ष में सम्यक् विधान से श्रीहरि की प्रतिमा की स्थापना करना अवश्य कर्त्तव्य है ॥१७-२२॥

अपर के द्वारा निर्मित प्रासाद में जो व्यक्ति श्रीहरि प्रतिमा को स्थापन करता है, वह अयुत शतकुल समन्वित होकर श्रीविष्णुलोक में निवास कर सकता है। जो व्यक्ति श्रीहरि-मन्दिर निर्म्माण पूर्वक उसमें श्रीहरिमूर्त्ति को स्थापन करता है, वह धन्य है, वही कुलीन है, एवं पितृवृन्द की यथार्थ सन्तान है ॥२३-२४

हे देवर्षे ! शिव, विष्णु वा रविदेव के मन्दिर में श्रीविष्णु प्रतिमा स्थापन करने से मुख्य पुण्य लाभ होता है ॥२५॥

श्रीहयशीर्षपञ्चरात्रे प्रतिष्ठाविध्यन्ते —

यो विष्णुं स्थापयेद्देवं सर्व्वदेवनमस्कृतम् । स्थापितं तेन सर्व्वं स्याज्जगत् स्थावरजङ्गमम् ।।२६

अतीतान् दशपूर्व्वांश्च तथैवानागतान् दश । आत्मानं सपरीवारं विष्णुलोकं नयेन्नरः ।।२७।।

कोटिजन्मगतं पापं स्वल्पकं यद् वा गुरु ।

तत् सर्व्वं भस्मसात् कुर्य्यात् संस्थाप्य मधुघातिनम् ।।२८।।

तथैव भविष्ये —

एवं यः कुरुते राजन् प्रतिष्ठां देवचक्रिणः । सर्व्वपापविनिर्म्मुक्तः सर्व्वभूषणभूषितः ।।२९।।

विमानेन विचित्रेण त्रिसप्तकुलजैः सह । पूजां सम्प्राप्य महतीमिन्द्रलोकादिषु क्रमात् ।

सबान्धवं सुखं प्राप्य विष्णुलोके महीयते ।।३०।।

नारसिंहे—

प्रतिष्ठां नरसिंहस्य यः करोति यथाविधि । निष्कामो नरशार्द्दूल देहबन्धात् प्रमुच्यते ।।३१।।

सकामो नरसिंहस्य पुरं प्राप्य च मोदते । मन्वन्तराण्यनेकानि लब्धसौख्यो विमुच्यते ।।३२।।

नरसिंहं प्रतिष्ठाप्य यः पूजामाचरेन्नरः । तस्य कामाः प्रसिध्यन्ति पुत्रपौत्रादयो भुवि ।।३३।।

विधिवत् स्थापयेद्यस्तु कारयित्वा जनार्द्दनम् । न जातु निर्गमस्तस्य विष्णुलोकात् कथञ्चन ।।३४

गौतमीये—

गोष्ठे वा शैलशृङ्गे वा पुण्यारण्ये नदीतटे ।

प्रासादे स्थापयेत् कृष्णं तीर्थकोटिफलं लभेत् ।।३५।।

---

श्रीहयशीर्ष पञ्चरात्र में प्रतिष्ठा विधि के अन्त में लिखित है — जो व्यक्ति, सर्वदेव वन्द्य श्रीविष्णु को स्थापन करता है, उसके द्वारा समस्त स्थावर जङ्गमात्मक जगत् का स्थापन होता है, एवं वह अतीत दश एवं भावी दश पुरुषों के सहित विष्णुलोक में सपरिवार प्रस्थान करता है ।।२६-२७।।

कोटि जन्म में जो कुछ पाप एकत्र हुए हैं, वे बहुत वा थोड़े होने पर भी श्रीहरि की प्रतिमा स्थापन के फल से दग्ध होते हैं ।।२८।।

तद्विषय में भविष्यपुराण में उक्त है—हे राजन् ! जो व्यक्ति, इस प्रकार चक्रपाणि श्रीहरि मूर्त्ति की प्रतिष्ठा करता है, वह निखिलपातक विनिर्मुक्त होकर एवं सर्वाभरणभूषित होकर विचित्र यान में आरोहण पूर्वक एकविंशति कुल के सहित महासम्मान से सबान्धव इन्द्रादि लोक में सुख भोग करने के पश्चात् विष्णुलोक में पूजित होता है ।।२९-३०।।

नरसिंहपुराण में लिखित है—हे नरशार्दूल ! जो निष्काम होकर विधिपूर्वक नृसिंह मूर्त्ति की प्रतिष्ठा करता है, उसका देह बन्धन विनष्ट होता है । सकाम भाव से प्रतिष्ठा करने पर भी नृसिंहपुर में जाकर वह मन्वन्तरयावत् सुख भोग करके मुक्ति को प्राप्त होता है । नृसिंहमूर्त्ति प्रतिष्ठा करके पूजन करने पर भूलोक में पुत्र पौत्रादि प्राप्तिरूप कामना सिद्ध होती है । जो नरहरि मूर्त्ति प्रस्तुत करके यथारीति स्थापन करता है, उसको कदाच विष्णुलोक से प्रत्यावर्त्तन नहीं करना पड़ता है ।।३१-३४।।

गौतमीय में वर्णित है—गोष्ठ, गिरिशृङ्ग, पुण्यवन, नदीतट एवं प्रासाद,-इन सब स्थानों में श्रीहरि-मूर्त्ति स्थापन करने पर कोटितीर्थ का फल लाभ होता है । कोटि कोटि महास्नान एवं कोटितीर्थ परिभ्रमण

कोटिकोमिहाज्ञानात् कोटितीर्थपरिभ्रमात् ।
तत् फलं लभते भक्त्या संप्रतिष्ठाप्य केशवम् ।।३६।।
सद्य मन्त्रकोटिजपाद्यत् फलं पुरुषो लभेत् ।
तत् फलं समवाप्नोति संस्थाप्य पुरुषोत्तमम् ।।३७।।

कोटियज्ञेन यत् पुण्यं पुण्यारण्यनिषेवणात् । तत् फलं लभते मर्त्यस्तद्वत् संस्थाप्य केशवम् ।।३८
यावज्जन्म हरेर्नामग्रहणे यत् फलं लभेत् । तत् फलं समवाप्नोति संस्थाप्य पुरुषोत्तमम् ।।३९।।

अथ प्रतिष्ठाकालः

मात्स्ये—

चैत्रे वा फाल्गुने वापि ज्यैष्ठे वा माधवे तथा । माघे वा सर्व्वदेवानां प्रतिष्ठा शुभदा भवेत् ।।४०
प्राप्य पक्षं शुभं शुक्लमतीते चोत्तरायणे । पञ्चमी च द्वितीया च तृतीया सप्तमी तथा ।।४१।।
दशमी पौर्णमासी च तथा श्रेष्ठा त्रयोदशी । आसु प्रतिष्ठा विधिवत् कृत्वा बहुफला भवेत् ।।४२
आषाढ़े द्वे तथा मूलमुत्तरात्रयमेव च । ज्येष्ठाश्रवणरोहिण्यः पूर्व्वभाद्रपदा तथा ।।४३।।
हस्ताश्विनी रेवती च पुष्या मृगशिरस्तथा । अनुराधा तथा स्वाती प्रतिष्ठादिषु शस्यते ।।४४
बुधो बृहस्पतिः शुक्रस्त्रय एते शुभावहाः । एभिर्निरीक्षितं लग्नं नक्षत्रञ्च प्रशस्यते ।।४५।।
ग्रहताराबलं लब्ध्वा ग्रहपूजां विधाय च । निमित्तं शकुनं लब्ध्वा वर्ज्जयित्वाद्भुतादिकम् ।।४६
शुभे योगे शुभे स्थाने क्रूरग्रहविवर्ज्जिते । लग्ने ऋक्षे च कुर्व्वीत प्रतिष्ठादिकमुक्तवत् ।।४७।।
अयने विषुवे तद्वत् षड़शीतिमुखे तथा । एतेषु स्थापनं कार्य्यं विधिदृष्टेन कर्म्मणा ।।४८।।
प्राजापत्ये तु शयनं श्वेते तूत्थापनं तथा । मुहूर्त्ते स्थापनं कुर्य्यात्तथा ब्राह्मे विचक्षणः ।।४९

---

अतीते चोत्तरायण इति मकरसंक्रान्तौ व्यतीतायामित्यर्थ । दक्षिणायने प्रतिष्ठानिषेधात ।।४१।।
अद्भुतं भूकम्पादि, आदि-शब्देन ग्रहणादि ।।४६।।

---

द्वारा जो फल लाभ होता है, भक्तिपूर्वक केशवमूर्त्ति स्थापन करने पर वही फल मिल जाता है। सर्वदा कोटि मन्त्र जप करने से जो फल लाभ होता है, पुरुषोत्तम हरि को स्थापन करने से मनुष्य वही फल प्राप्त कर सकता है। कोटि यज्ञानुष्ठान से एवं पुण्यारण्य सेवन से जो फल प्राप्त होता है, श्रीहरिमूर्त्ति स्थापन करने से वही फल मिल सकता है। आजीवन श्रीहरिनाम ग्रहण से जो फल होता है, श्री हरि की मूर्त्ति स्थापन करने पर वही फल मिल जाता है।।३५-३९।।

अथ प्रतिष्ठाकालः

मत्स्यपुराण में लिखित है—वैशाख, ज्यैष्ठ, माघ, फाल्गुन, चैत्र,—इन सब मासों में देवप्रतिष्ठा शुभदायिनी है। उत्तरायण अतीत होने पर इन सब मासों में शुक्लपक्ष में, द्वितीया, तृतीया, पञ्चमी, सप्तमी, दशमी, त्रयोदशी एवं पूर्णिमा,—इन सब तिथियों में विधानानुसार प्रतिष्ठा करने पर वह प्रतिष्ठा बहुफलदायिनी होती है। पूर्वाषाढ़ा, उत्तराषाढ़ा, मूला, उत्तर फाल्गुनी, उत्तर भाद्रपद, ज्येष्ठा, श्रवणा, रोहिणी, पूर्वभाद्रपद, हस्ता, अश्विनी, रेवती, पुष्या, मृगशिरा, अनुराधा, एवं स्वाती,—यह सब नक्षत्र प्रतिष्ठा कार्य्य के प्रशस्त हैं। बुध वृहस्पति एवं शुक्र,—यह तीन वार प्रतिष्ठा कर्म में प्रशस्त हैं। और लग्न वा नक्षत्र, इन तीन ग्रह के द्वारा दृष्ट हों, उनको भी प्रशस्त जानना चाहिये। ग्रह बल एवं तारा बल प्राप्तकर ग्रह पूजा

हयशीर्षपञ्चरात्रे च—

उत्तराशाश्रिते भानौ शुक्लपक्षे सुरेश्वर। कृष्णपक्षान्तिम-त्र्यंशादृते सुरगणार्च्चित ॥५०॥
शुक्लस्याद्यं परित्यज्य प्रतिष्ठां कारयेद्बुधः। माघे मासि फाल्गुने वा चैत्र-वैशाखयोरपि ॥५१
ज्यैष्ठे मास्यथवाषाढ़े सुयोगकरणान्विते। प्रतिपच्च द्वितीया च तृतीया पञ्चमी तथा ॥५२॥
सप्तमी दशमी चैव द्वादशी च त्रयोदशी। अष्टमी पौर्णमासी च प्रतिष्ठायां सुशोभनाः ॥५३॥
गुरुः सोमो बुधः शुक्रः प्रतिष्ठायां शुभावहाः। मेषो वृषोऽथ मिथुनः कर्कटो वृश्चिकस्तथा ॥५४॥
सिंहः कन्या च सततं विज्ञेयाः शान्तिकारकाः। उत्तरासु तथा मूले रौद्रे पुष्येऽथ शस्यते ॥५५॥
वैष्णवे चानुराधे च रेवत्यां रोहिणीषु च। अश्विन्यामथ चित्रायां भरण्यां च पुनर्व्वसौ ॥५६॥
प्रतिष्ठां कारयेद्विद्वान् नक्षत्रे मृगशीर्षके। अयने विषुवे चैव षड़शीतिमुखे तथा ॥५७॥
मित्रं परममित्रञ्च सम्पत्क्षेमञ्च साधकम्। तारापञ्चकमेतच्च प्रतिष्ठायां प्रशस्यते ॥५८॥
गरं विष्टिञ्च किन्तुघ्नं शाकुनञ्च चतुष्पदम्। वर्ज्जयेत् सुप्रयत्नेन प्रतिष्ठायां सुरेश्वर ॥५९॥
विष्कुम्भमतिगण्डञ्च शूलं परिघमेव च। गण्ड व्याघातकं चैव वैधृतिं वज्रमेव च ॥६०॥
व्यतीपातं हर्षणञ्च योगानेतान् विवर्ज्जयेत्। न शस्तं ग्रहणे नित्यं तथा वै दक्षिणायने ॥६१॥

---

भानौ उत्तराशां दिशमाश्रिते, उत्तरायणे सतीत्यर्थः। कृष्णपक्षेऽपि शुभयोगबाहुल्ये कारयेत्, किन्तु तत्र त्रयोदशीचतुर्द्दश्यमावस्या वर्ज्जयेदित्याह—कृष्णेति ॥५०॥

---

समापन पूर्वक शुभप्रद निमित्त को देखकर अद्भुतादि वर्जन पूर्वक शुभ योग में, शुभ स्थान में, क्रूरग्रहशून्य लग्न में एवं नक्षत्र में, पूर्वोक्तवत् प्रतिष्ठादि करे। उत्तरायण, दक्षिणायन, विषुव संक्रान्ति एव षडशीति संक्रान्ति,–इन चार संक्रान्ति में विधि विहित नियम से मूर्त्ति स्थापन करना चाहिये। विचक्षण व्यक्ति के पक्ष में प्राजापत्य में शयन, श्वेत में उत्पादन एवं ब्राह्ममुहूर्त्त में स्थापन करना कर्त्तव्य है ॥४०-४९॥

हयशीर्षपञ्चरात्र में वर्णित है– हे सुरेश्वर! हे देवगणार्च्चित! सूर्य्यदेव उत्तरदिक्स्थ होने पर शुक्लपक्ष में, कृष्णपक्ष की त्रयोदशी तिथि में, चतुर्दशी एवं अमावस्या तिथि में, एवं शुक्लपक्ष की प्रतिपत् तिथि को वर्जन करके प्रतिष्ठा करना ही विज्ञव्यक्ति का कर्त्तव्य है। माघ, फाल्गुन, चैत्र, वैशाख, ज्यैष्ठ एवं आषाढ़ मास में शुभ योग एवं शुभ करण में, प्रतिपत्, द्वितीया, तृतीया, पञ्चमी, सप्तमी, अष्टमी, दशमी, द्वादशी, त्रयोदशी एवं पूर्णिमा,–यह सब तिथि प्रतिष्ठा कार्य्य में प्रशस्त हैं। गुरु, सोम, बुध एवं शुक्र,–यह सब वार प्रतिष्ठा कर्म में शुभावह हैं। मेष, वृष, मिथुन, कर्कट, वृश्चिक, सिंह, एवं कन्या,–यह सब लग्न प्रतिष्ठाकार्य में सर्वदा शान्तिदायक हैं। उत्तरात्रय, मूला, रौद्र (आर्द्रा), श्रवण, पुष्या, अनुराधा, रेवती, रोहिणी, अश्विनी, चित्रा, भरणी, पुनर्वसु एवं मृगशिरा,–इन सब नक्षत्रों में विज्ञव्यक्ति, प्रतिष्ठा कार्य्य करें। अयन, विषुव संक्रान्ति, षड़शीति संक्रान्ति, एवं मित्र, परममित्र, सम्पत्, क्षेम, एवं साधक,–यह पाँच तारा प्रतिष्ठा कार्य्य में प्रशस्त हैं ॥५०-५८॥

हे सुरेश्वर! प्रतिष्ठा कार्य्य में गर, विष्टि, किन्तुघ्न, शाकुन एवं चतुष्पद को यत्नपूर्वक वर्जन करे, एवं यह सब करण को भी परित्याग करे। विष्कुम्भयोग, अति गण्ड, शूल, परिघ, गण्ड, व्याघात, वैधृति, वज्र, व्यतीपात, एवं हर्षण,–यह सब योग को भी परित्याग करना चाहिये। ग्रहणकाल एवं दक्षिणायन, प्रतिष्ठा कार्य्य में अप्रशस्त है ॥५९-६१॥

लग्ने तु सुस्थिरे कार्य्यं स्थिरांशे सुरसत्तम । कर्त्तुश्चोपचयोपेते मुहूर्त्ते शोभने द्विज ॥६२॥
मैत्रे वैराज-सावित्रे श्वेते वा वासवे शिवे । अभिजिद्रोहिणीनाञ्च मुहूर्त्ते पद्मसम्भवे ॥६३॥
गान्धर्व्वे वा स्थापयीत हरिं सुरगणार्च्चितम् ।
आदित्यस्य बलं लब्ध्वा लग्नं शुभनिरीक्षितम् ॥६४॥
चन्द्रताराबलं प्राप्य स्थापयेत् पुरुषोत्तमम् । सुग्रहे च सुनक्षत्रे कुर्य्यात्तत्राधिवासनम् ॥६५॥

भविष्ये—

हरौ सुप्ते न कर्त्तव्यं देवार्च्चास्थापनं बुधैः । कर्त्तव्यं तु विबुद्धे तु हंसे चाप्युत्तरं गते ॥६६॥
सर्व्वकामसमृद्धयर्थं स्थापयेदुत्तरायणे । वर्ज्जयेत् सर्व्वयत्नेन मन्त्रविद्दक्षिणायनम् ॥६७॥

देवीपुराणे—

सिंहसंस्थं गुरुं शुक्रं सर्व्वारम्भेषु वर्ज्जयेत् । प्रारब्धं न च सिध्येत महाभयकरं भवेत् ॥६८॥
पुत्रभ्रातृकलत्राणि हन्याच्छीघ्रं न संशयः । कारको व्रजते नाशं सन्तानं क्षीयतेऽचिरात् ॥६९॥
देवारामतड़ागेषु प्रपोद्यान-ग्रहेषु च । सिंहस्थं मकरस्थं च गुरुं यत्नेन वर्ज्जयेत् ॥७०॥

अथ प्रतिष्ठास्थानम्

तत्रैव—

सिद्धक्षेत्रं सरः पुण्यवनं रम्यं नदीतटम् । प्रासादो निर्म्मितः शक्त्या मनोरमगृहादि च ॥७१॥

---

हे सुरश्रेष्ठ ! स्थिर लग्न एवं स्थिरांश में प्रतिष्ठा कार्य्य करना कर्त्तव्य है । हे द्विज ! कर्त्ता की उन्नति हेतु मैत्र, वैराज, सावित्र, श्वेत, वासव, शिव, अभिजित, एवं रोहिणी मुहूर्त्त में ब्राह्ममुहूर्त्त में वा गान्धर्व मुहूर्त्त में देववन्द्य श्रीहरि को स्थापन करना चाहिये । सूर्य्य का बल और शुभ लग्न समागम होने पर एवं चन्द्र तारा बलवान् होने पर पुरुषोत्तम को स्थापन करना कर्त्तव्य है । उस स्थान में शुभग्रह एवं शुभनक्षत्र के उदय में अधिवास करना चाहिये ॥६२-६५॥

भविष्यपुराण में कथित है—श्रीहरि के शयन काल में देव प्रतिमा स्थापन करना उचित नहीं है । श्रीभगवान् के उत्थान में और सूर्य्य उत्तर दिक गत होने पर (उत्तरायणकाल में) स्थापन करना चाहिये । मन्त्रज्ञव्यक्ति, सर्वकाम समृद्धि हेतु उत्तरायण में प्रतिमा स्थापन करे । दक्षिणायन को यत्नसहित परित्याग करे ॥६६-६७॥

देवीपुराण में लिखित है—समस्त कार्य्यो के प्रथम ही सिंहस्थ गुरु वा सिंहस्थ शुक्र को परित्याग करे, कारण, उस समय कार्य्य में प्रवृत्त होने पर कर्म निष्फल एवं महाभयावह होता है । एवं पुत्र, भ्राता एवं भार्य्या का नाश होता है । कर्त्ता का नाश होता है । एवं शीघ्र सन्तान का नाश होता है । इसमें सन्देह नहीं है । गुरु सिंहस्थ वा मकरस्थ होने पर देव, तड़ाग आराम, प्रपा, उद्यान एवं गृहादि प्रतिष्ठा कार्य्य को परित्याग यत्नपूर्वक करे ॥६८-७०॥

अथ प्रतिष्ठास्थानम्

उक्त पुराण में ही लिखित है- सिद्धक्षेत्र, सरोवर, पुण्योद्यान एवं मनोहर नदीतट,-इन सब स्थानों में स्वीय सामर्थ्यानुसार प्रासाद वा सुन्दर गृह प्रभृति निर्म्माण करना चाहिये ॥७१॥

हयशीर्षपञ्चरात्रे—

अथ दिङ्नियमोपेतं देवतास्थापनं शुभम् ।
पुरो दिशि यथा देवाः स्थाप्याः शृणु तथा मम ॥७२॥

नगरग्राममध्ये तु ब्रह्मणः स्थानमुत्तमम् । आखण्डलस्य सूर्य्यस्य पूर्व्वेणायतनं शुभम् ॥७३॥
स्वदिग्गतं कृशानोस्तु मातृणाञ्चैव दक्षिणे । भूतानामालयस्तस्मिन् धर्म्मराजालयः शुभः ॥७४
चण्डिकायाः पितृणाञ्च दैत्यानां नैर्ऋते भवेत् । प्रचेतसः समुद्रस्य सिन्धूनां पश्चिमे भवेत् ॥७५

फणिनां चैव वायव्यां वायोः स्थानन्तु तच्छुभम् ।
यक्षाधिपस्य स्कन्दस्य उदीच्यां स्थानमुच्यते ॥७६॥
विष्णोः स्थानं तु सर्व्वत्र कालभेदेन भिद्यते ।
नगराभिमुखाः सर्व्वे स्थापिताः शुभदा नृणाम् ॥७७॥

अज्ञानाद्वा प्रमादाद्वा कृता यदि पराङ्मुखाः । तदा शास्त्रादिभिर्विद्वानुपायमिममाचरेत् ॥७८
तद्वर्णभूषणोपेतं तद्रूपायुधलक्षणम् । पुरस्याभिमुखं भित्तौ त देवं तत्र संलिखेत् ॥७९॥

किञ्च—

दिग्विशेषेण मे स्थानं शृणु मे सुरसत्तम । ग्राममध्येऽथवारण्ये नदीनां सङ्गमे तथा ॥८०॥
नगरस्य समन्ताच्च सर्व्वत्राहं प्रतिष्ठितः । भुक्तिमुक्तिप्रदं पुंसां विशेषं शृणु चापरम् ॥८१॥

ऐन्द्र्यां प्रशस्तं विज्ञेयमाग्नेय्यां परिवर्ज्जितम् ।
याम्यां प्रशान्तये शस्तं नैर्ऋत्यां भयदं भवेत ॥८२॥

---

कालभेदेन भिद्यत इति यदुक्तं, तदेव दर्शयति— ऐन्द्र्यामित्यादिना सार्द्धद्वयेन ॥८२॥

---

हयशीर्षपञ्चरात्र में लिखित है—यथाविहित दिक् में यथाविधि देव स्थापन करने से कल्याण होता है। प्रथमतः जिस दिक् में देवता को स्थापन करना चाहिये उसका वर्णन करता हूँ, सुनो। ब्रह्मा को स्थापन करना हो तो, नगर और ग्राम में उनका उत्तम स्थान जाने। इन्द्र एवं सूर्य्य के स्थापन हेतु पूर्वदिक् में गृह निर्म्माण मङ्गलप्रद है। अग्नि के निमित्त अग्निकोण में एवं मातृगण के निमित्त, भूतवर्ग के निमित्त, एवं धर्मराज के निमित्त दक्षिणदिक् में गृह निर्म्माण मङ्गलप्रद है। नैर्ऋत में चण्डिका, पितृगण एवं दैत्यसमूह के पश्चिम में वरुण, समुद्र एवं नदीसमूह के निमित्त, वायुकोण में फणी एवं वायु के निमित्त, एवं उत्तरदिक् में यक्षाधिप कुवेर एवं कार्त्तिक मूर्त्ति स्थापन हेतु गृहनिर्म्माण प्रशस्त है। विष्णु स्थापन हेतु समस्त दिक् में गृहनिर्म्माण कर सकता है। किन्तु समयभेद से विभिन्न प्रकार होता है। देवतावृन्द को नगर में स्थापन करने से मानवगण मङ्गल लाभ कर सकते हैं। अज्ञान से अथवा प्रमादवशतः अन्य मुख में स्थापन करने पर विज्ञव्यक्ति शास्त्रानुसार उपाय विधान करे। जिस देवता का वर्ण जिस प्रकार है, जिस प्रकार अलङ्कार, जिस प्रकार मन्त्र एवं जिस प्रकार लक्षण है, उस प्रकार करके पूर्वाभिमुखी भित्ति में अङ्कन करना चाहिये ॥७२-७९॥

और भी लिखित है—हे सुरोत्तम! दिग् विशेष में मेरा स्थापन का जैसा उपयुक्त स्थान हो सकता है, वह कहता हूँ, सुनो। ग्राम, वन, नदी सङ्गम, नगर की समस्त दिक् में और सर्वत्र हा मुझको प्रतिष्ठित कर सकता है। मैं उक्त प्रकार से प्रतिष्ठित होने पर भुक्ति मुक्ति प्रदान करता हूँ। एतद्विषय में अन्यान्य जो

द्रव्यादीनां प्रसिद्ध्यर्थं वारुण्यां राज्यसिद्धये । वायव्यां वर्ज्जयेद्यत्नात् कौवेर्य्यां पुष्टिवर्द्धनम् ।
ऐशान्यां यजनं श्रेष्ठं सर्व्वसम्पत्करं नृणाम् ॥८३॥

अथ प्रतिष्ठाधिकारी

देवीपुराणे—

वर्णाश्रमविभागेन देवाः स्थाप्या हि नान्यथा ॥८४॥

किञ्च—

चातुर्व्वर्ण्यैस्तथा विष्णुः प्रतिष्ठाप्यः सुखार्थिभिः ॥८५॥

अथ स्थापकादि-लक्षणं मूर्त्तिपानाञ्च लक्षणम्

तत्रैव—

पञ्चरात्रार्थकुशलो मन्त्रतन्त्रावधारकः । स्थापने सर्व्वदा शस्तो ब्रह्मचारी च शान्तियुक् ॥८६
अन्यथा कलहोद्वेगं कुर्य्यान्नित्यं महाभयम् । यजमाने नृपे राष्ट्रे स्थापके च निरागमे ॥८७॥

किञ्च मात्स्ये—

अतःपरं प्रवक्ष्यामि मूर्त्तिपानां तु लक्षणम् । स्थापकस्य समासेन लक्षणं श्रृणुत द्विजाः ॥८८॥
सर्व्वावयवसम्पूर्णो वेदमन्त्रविशारदः । पुराणवेत्ता तत्त्वज्ञो दम्भलोभविवर्ज्जितः ॥८९॥

---

वर्णाश्रम-विभागेनैव देवाः स्थाप्याः,केनचिद्वर्णेन केनचिदाश्रमादिना च कश्चिद्देवः स्थाप्यः, न च सर्व्वैरेव सर्व्व इत्यर्थः । श्रीविष्णुस्तु सर्व्वैरेव स्थाप्य इत्याह—चातुर्व्वर्णैरिति ॥८४॥

तन्त्रमनुष्ठानप्रकारः ॥८६

स्थापके प्रतिष्ठाचार्य्ये, निरागमे शास्त्रानभिज्ञे सति, एतच्च अन्यथेत्यस्य विवरणम् । यद्वा, यजमानादिषु तादृशे स्थापके च कलहादि-महाभयं कुर्य्यादित्यर्थः ॥८७॥

---

विशेष है, वह भी सुनो । पूर्व दिक् में प्रतिष्ठा करना ही प्रशस्त है । अग्निकोण में प्रतिमा स्थापन करना निषिद्ध है । उत्तम शान्ति लाभ हेतु दक्षिण दिक् में स्थापन करे । नैर्ऋतकोण में स्थापन भयावह है । द्रव्यसिद्धि एवं राज्य लाभ हेतु पश्चिम दिक् में स्थापन ही प्रशस्त है । वायुकोण को यत्नपूर्वक परित्याग करे । उत्तर दिक् में स्थापन करने से पुष्टि लाभ होता है । मनुष्यवृन्द के पक्ष में ईशानकोण में यजन श्रेष्ठ एवं सर्व सम्पद दायक है ॥८०-८३॥

अथ प्रतिष्ठाधिकारी

देवीपुराण में लिखित है—वर्णाश्रम के विभागानुसार देवता की प्रतिमा स्थापन करनी चाहिये । इसके अन्यथा आचरण न करे ॥८४॥

और भी लिखित है—सुखार्थी होकर ब्राह्मणादि चतुर्वर्ण ही विष्णुप्रतिमा स्थापन कर सकते हैं ॥८५॥

अथ स्थापकादि-लक्षणं मूर्त्तिपानाञ्च लक्षणम्

उक्त पुराण में लिखित है—पञ्चरात्रार्थविद्, मन्त्रतत्त्वज्ञ, शान्तिमान् ब्रह्मचारी ही देवप्रतिमा स्थापन का उपयुक्त पात्र है । इसके विपरीत होने पर यजमान, राजा, राज्य, एवं शास्त्रानभिज्ञ, आचार्य्य के पक्ष में ही कलह, उद्वेग एवं नित्य महाभय उपस्थित होता है ॥८६-८७॥

मत्स्यपुराण में और भी कथित है—हे द्विजगण ! अनन्तर मूर्त्ति स्थापन के लक्षण एवं मूर्त्तिरक्षकादि के लक्षण संक्षेप से वर्णन करता हूँ, श्रवण करो । जो सर्वाङ्ग सम्पूर्ण वेदमन्त्रविशारद, पुराणविद्, तत्त्वज्ञ, एवं दम्भलोभ विवर्जित हैं, एवं कृष्णसार मृग विचरणकारी देश में उत्पन्न, जिसका आकार शुभ, जो

कृष्णसारवरे देशे य उत्पन्नः शुभाकृतिः। शौचाचारपरो नित्यं पाषण्डकुलनिष्पृहः ॥९०॥

समः शत्रौ च मित्रे च ब्रह्मोपेन्द्रहरप्रियः। ऊहापोहार्थतत्त्वज्ञो वास्तुशास्त्रस्य पारगः।

आचार्य्यस्तु भवेन्नित्यं सर्व्वदोषविवर्ज्जितः ॥९१॥

मूर्त्तिपास्तद्विधाश्चैव कुलीना ऋजवस्तथा। द्वात्रिंशत् षोड़शाथापि अष्टौ वा श्रुतिपारगाः।

ज्येष्ठ-मध्य-कनिष्ठास्तु मूर्त्तिपाः परिकीर्त्तिताः ॥९२॥

श्रीहयशीर्षपञ्चरात्रे च—

कर्त्तुमिच्छति यः पुण्यं मम मूर्त्तिप्रतिष्ठया। अन्वेषणीयस्त्वाचार्य्यस्तेन लक्षणसंयुतः ॥९३॥

संशुद्धब्रह्मयोनिस्तु प्रलयोत्पत्तिसंस्थितिम्।

यो वेत्ति कुलजो धीमानाचार्य्यत्वं हि सोऽर्हति ॥९४॥

सम्मतः सर्व्ववर्णानां पञ्चरात्रविशारदः।

क्रोधलोभविनिर्मुक्तो मात्सर्य्यदोष-वर्ज्जितः ॥९५॥

क्षयापस्माररहितः कुष्ठरोग-विवर्ज्जितः। अन्यूनानतिरिक्ताङ्गो युवा लक्षणलक्षितः ॥९६॥

अनन्यदेवताभक्तः शूद्रान्नपरिवर्ज्जितः। ब्राह्मणानामलाभे तु क्षत्रियो वैश्यशूद्रयोः ॥९७॥

क्षत्रियाणामलाभे तु वैश्यः शूद्रस्य कल्पितः। कदाचिदपि शूद्रस्तु नैवाचार्य्यत्वमर्हति ॥९८॥

गृहस्थं ब्रह्मचर्य्यस्थं ककाराष्टकवर्ज्जितम्। गुरुं कुर्व्वीत सततमुपवासव्रते रतम्।

ऋजुस्वभावं मधुरस्मितपूर्व्वाभिभाषिणम् ॥९९॥

---

कृष्णसारो हरिणस्तेन वरे श्रेष्ठे; चारेति पाठे कृष्णः कृष्णसारस्तस्य चारश्चरणं तेन वरे ॥९०॥

कुलजः, पितृमातृ-कुलद्वयस्य प्रलयं मरणम्, उत्पत्तिं जन्म, संस्थितिञ्च जीवनं यो वेत्ति; अन्यथा कुलाचाराज्ञानादिदोषप्रसक्तेः ॥९४॥

ककाराष्टकञ्च कुष्ठी, कुनखी, कुण्डः, काकस्वरः, क्लीवः, कातरः, क्रोधनः, कुत्सित इति स्वयमेवाभिव्यञ्जयितव्यम् ॥९८॥

---

नित्य शौचाचारवान्, पाषण्ड कुल संसर्ग में निस्पृह, शत्रु मित्र में समदर्शी, ब्रह्मोपेन्द्रशिवप्रिय, किसी स्थान में किस मन्त्रवर्ण का ऊहकरण, एवं अपोह–मन्त्रवर्ण का त्यागकरणा हो तो, उस विषय तत्त्व की मीमांसा करने में जो समर्थ है। जो वास्तुशास्त्र में अभिज्ञ एवं सर्व्व दोष रहित है, तादृश व्यक्ति ही नित्य आचार्य्य पद के उपयुक्त है। मूर्त्तिरक्षणगण को भी उस प्रकार होना आवश्यक है, वे कुलीन, ऋजु, एवं श्रुतिविद् होंगे। मूर्त्ति रक्षकगण, द्वात्रिंशत् संख्यक होने पर ज्येष्ठ, षोड़श संख्यक होने से मध्यम, एवं अष्ट संख्यक होने पर कनिष्ट कहे गये हैं ॥८८-९२॥

श्रीहयशीर्षपञ्चरात्र में लिखित है—जो मेरी मूर्त्ति प्रतिष्ठा करके पुण्यसञ्चय करने के इच्छुक हैं, उसके पक्ष में लक्षणविशिष्ट आचार्य्य का अनुसन्धान करना कर्त्तव्य है। जो सुपवित्र ब्राह्मणकुलोत्पन्न, हैं, जिनका पितृ-मातृ कुल विशुद्ध हैं, जो प्रलय, उत्पत्ति एवं स्थिति विषय में ज्ञानी हैं, वे ही बुद्धिमान् आचार्य्य पद के उपयुक्त हैं। पञ्चरात्र शास्त्र में जिनकी अभिज्ञता है, जो क्रोध, लोभ और मात्सर्य्य के दोष से रहित हैं, क्षय, मृगी, कुष्ठरोग वर्जित हैं, वे ही सर्व वर्ण के मध्य में आचार्य्य होने के योग्य हैं। विप्र वर्ण में यदि उस प्रकार लक्षणान्वित व्यक्ति का अभाव हो तो, उस प्रकार लक्षणान्वित क्षत्रिय, वैश्य वा शूद्र आचार्य्य

किञ्च—

सर्व्वत्र व्यतिरिक्तन्तु आत्मानं वेत्ति यो द्विजः। सर्व्वलक्षणहीनोऽपि स गुरुर्नात्र संशयः ॥१००

अपि पापसमाचारः सर्व्वलक्षणवर्ज्जितः। देशिकः स तु विज्ञेयः ससारार्णवतारकः ॥१०१॥

पञ्चरात्रप्रबुद्धस्तु सिद्धान्तार्थस्य तत्त्ववित्। सर्व्वलक्षणहीनोऽपि आचार्य्यः स विशिष्यते ॥१०२

यस्य विष्णौ परा भक्तिर्यथा विष्णौ तथा गुरौ।
स एव स्थापको ज्ञेयः सत्यमेतद्वदामि ते ॥१०३॥

किञ्च—

येन तन्त्रेण प्रारब्धा प्रतिष्ठा गुरुणा भवेत्। तत्तन्त्रपारगाः शस्ताः मूर्त्तिपाश्छिन्नसंशया ॥१०४

षड़ङ्गविदुषः सर्व्वे मन्त्रब्राह्मणपारगाः। एवंविधैर्वैष्णवैस्तु प्रतिष्ठामारभेद्गुरुः ॥१०५॥

अथ स्थापकत्वे वर्ज्जनीयाः

तत्रैव—

शैवः सौरो नैष्ठिकश्च नग्नः सङ्करजोऽशुचिः। वृद्धः कुत्सितमूर्त्तिर्यो महापातकचिह्नितः ॥१०६

---

अधुना स्थापकस्य लक्षणविशेषमाह—सर्व्वत्रेति चतुर्भिः। व्यतिरिक्तं देहादिभिन्न, सर्व्वैरुक्तैर्लक्षणैर्हीनोऽपि ॥१००॥

पञ्चरात्रे शास्त्रे प्रबुद्धः अभिज्ञः ॥१०२॥

मूर्त्तिपानां लक्षणमाह— येनेति द्वाभ्याम्। षड़ङ्गेषु विदुषः विद्वांसः, ब्राह्मणं वेदभागविशेषः ॥१०४-१०५

उक्तलक्षणाचार्य्यालाभे तदन्यवरणेऽपि शैवादयोऽवश्यं वर्ज्ज्या इत्याह— शैव इत्यादिना देशिक इत्यन्तेन ॥१०६॥

---

में वृत हो सकते हैं। क्षत्रिय का अभाव होने पर वैश्य आचार्य हो सकता है, किन्तु शूद्र कभी भी आचार्य होने का योग्य नहीं है। जो गृहस्थ ब्रह्मचर्य्यवान्, उपवास व्रत परायण, सरल स्वभाव, वाक् प्रयोग के पूर्व में जिनका आनन मधुरस्मित हास्ययुक्त होता है, एवं जो कुष्ठादि अष्ट ककार रहित हैं, अर्थात् जो कुष्ठी, कुनखी, कुण्ड, काकस्वर, क्लीव, कातर, क्रोधन, कुत्सित नहीं हैं। वे ही गुरुपद में वृत्त होने के योग्य हैं। ॥९३-९९॥

जो आत्मा को देहादि से भिन्न जानते हैं, सर्व लक्षण रहित होने पर भी वे गुरुपद में वृत होने के योग्य हैं। इसमें सन्देह नहीं है। वे पापाचारवान् एवं सर्व लक्षण वर्जित होने पर भी गुरु हो सकते हैं। जो संसार बन्धन से मुक्त करने में समर्थ हैं वे ही गुरु हो सकते हैं। जो पञ्चरात्र शास्त्रज्ञ, जो सिद्धान्तार्थवित् हैं, वे सर्व लक्षण रहित होने पर भी आचार्य के योग्य हैं। श्रीविष्णु के प्रति जिनकी परमाभक्ति है एवं श्रीगुरु के प्रति भी विष्णु तुल्य भक्ति है। मैं सत्य करके कहता हूँ कि, वे ही प्रकृत स्थापक हैं ॥१००-१०३॥

और भी लिखित है—श्रीगुरुदेव जिस तन्त्र के द्वारा प्रारम्भ में प्रतिष्ठाकार्य्यारम्भ किये हैं। मूर्त्तिरक्षक वृन्द को भी उस तन्त्र में अभिज्ञ होना आवश्यक है। संशयरहित, षड़ङ्गविद्, एवं मन्त्रमात्र एवं ब्राह्मणमात्र हैं। एवं ब्राह्मण भाग में अभिज्ञ हैं। गुरुदेव इस प्रकार वैष्णववृन्द के सहित मिलित होकर प्रतिष्ठा कार्य्य आरम्भ करें ॥१०४-१०५॥

अथ स्थापकत्वे बर्ज्जनीयाः

अनन्तर स्थापकत्व के सम्बन्ध में परित्यज्य विषय का वर्णन करते हैं। श्रीहयशीर्ष पञ्चरात्र में लिखित है—शैव, सौर, नैष्ठिक, नग्न, सङ्करज, अशुद्ध, वृद्ध, कदाकार, महापातक चिह्न से चिह्नित, कुष्ठी, कुनखी,

कुष्ठी च कुनखी श्वित्री निष्ठीवी घर्घरस्वरः ।
अर्व्वुदी गण्डवी व्यङ्गी गर्व्वितो वधिरस्तथा ॥१०७॥
तन्त्रविद्वेषिकश्चैव परद्रोहरतस्तथा । कुण्डः काकस्वरः क्लीवः कातरः क्रोधनस्तथा ॥१०८॥
पुनर्भूश्च स्वयम्भूश्च गोलको नास्तिकस्तथा ।
जड़ोऽतिगौरः खल्वीटो हीनाङ्गः स्थूल एव च ॥१०९॥
अतिकृष्णोऽघृणः पापी कृशो ह्रस्वोऽलसस्तथा ।
व्यापन्नोऽसंस्कृतश्चैव उद्विग्नो दीन एव च ॥११०॥
व्रतोपवासहीनश्च वृषलीपतिरेव च । पण्यरङ्गोपजीवी च पण्यस्त्री-पारदारिकः ॥१११॥
आचार्य्यपुत्रकादीनां विद्वेष्टा परसेवकः । भोजकः सुवकश्चैव व्यसनी पिशुनी गदी ॥११२॥
अतिरोगी भिषक् चैव साहसी समयच्युतः । द्विजातिगुरुदेवानां निन्दकः पापकस्तथा ॥११३
पिङ्गाक्षो धूम्रवर्णाक्षो विड़ालाक्षस्तथैव च । मत्सरी गण्डमाली च वकवृत्तिरतस्तथा ॥११४
उपायदेशहीनश्च कक्खटः कुत्सितव्रतः । निर्द्दयश्चैव निःसत्त्वो नैपुण्यपरिवर्ज्जितः।
प्रतिष्ठातन्त्रकिञ्चिज्ज्ञोऽवेदवेदाङ्गपारगः ॥११५॥
वर्ज्जयीत प्रयत्नेन सर्व्वज्ञमपि नास्तिकम् ॥११६॥

---

श्वित्रं श्वेतकुष्ठं तद्वान्, निष्ठीवी निष्ठीवनशीलः, अर्व्वुदं मांसग्रन्थिरूपो रोगविशेषस्तद्वान्, गाण्डवश्च गलरोगविशेषः, तद्वान् ॥१०६॥

अमृते भर्त्तरि जारजः कुण्डः ॥१०८॥

पुनर्भूः द्विरूढ़ा स्त्रीः, अत्र तत्सुतो ज्ञेयः; स्वयम्भू कानीनः मृते भर्त्तरि जारजो गोलकः, खल्वीटः केश-रहितमस्तकमध्यः ॥१०९॥

व्यापन्न आपद्ग्रस्तः ॥११०॥

भोजकः देवान्नभोजी, सेवकः अन्नमात्रार्थदेवसेवापरः, गदी सदा रोगयुक्तः ॥११२॥

तत्राप्यतिरोगी ॥११३॥

उपायो निजवृत्तिः स्वदेशश्च ताभ्यां हीनः, प्रतिष्ठातन्त्रस्य किञ्चिदेव, न च सामग्रचं जानातीति तथा, न वेदवेदाङ्गानां पारगस्तेषामपि किञ्चिदेव जानातीत्यर्थः ॥११५॥

नास्तिकं पाषण्डिनम् ॥११६॥

---

श्वेतकुष्ठी, निष्ठीवी, अर्थात् जो सर्वदा निष्ठीवन त्याग करता है, अर्थात् जो सदा खखार थूकता है, घर्घर स्वरान्वित, अर्वुद रोगी, गलरोगी, विकृताङ्ग, गर्वी, बधिर, तन्त्र विद्वेषी, परद्रोही, जारज, काकवत् स्वर-युक्त, नपुंसक, कातर, क्रोधन, पुनर्भू, स्वयम्भू अर्थात् कानीन (दो बार विवाहिता नारी का पुत्र), कन्या से जात पुत्र, गोलक (विधवा का जारज पुत्र), नास्तिक, जड़, टाकरोगी, खल्वाट, हीनाङ्ग, स्थूल, अतिशय कृष्णवर्ण, अघृण, पातकी, कृश, ह्रस्वशरीर, अलस, विपन्न, असंस्कृत, उद्विग्न, दीन, व्रतोपवास रहित वृषलीपति, पण्यरङ्गोपजीवी, पण्यस्त्री, पारदारिक, आचार्य्यपुत्र प्रभृति के विद्वेषी, परसेवाकारी, देवान्न-भोजी, अन्न विनिमय से देवसेवाकारी, व्यसन परायण, परदोष सूचक, नित्यरोगी, अति रुग्न, चिकित्सक, साहसी, नियम रहित, द्विज गुरुदेव निन्दक, पापिष्ठ, पिङ्गलनयन, धूम्रवर्ण नयनयुक्त, विड़ालनेत्र, मत्सरी, गण्डमालारोगी, वकवृत्तिपरायण, निजवृत्ति एवं स्वदेशहीन, क्रूर, कुत्सितव्रती, दयाहीन, निःसत्त्व नैपुण्य

परवाक्यप्रमाणज्ञो ब्राह्मणो वेदपारगः। रञ्जितः पशुशास्त्रेण नाचार्य्यंत स देशिकः ॥११७॥
यद्येतैर्वर्जितैर्विष्णोः स्थापनं क्रियते क्वचित्।
असाधकं भुक्तिमुक्त्योर्निष्फलं तत्र संशयः ॥११८॥

अथ प्रतिष्ठाविध्यभिज्ञस्य प्रतिष्ठानाचरणे दोषः

तत्रैव—
नाभिषेकं तु यः कुर्य्यात् प्रतिष्ठालोभमोहितः।
स याति नरकं घोरं सह शिष्यैर्न संशयः ॥११९॥

इदानीमचलायास्तु श्रीमूर्त्तेः प्राग्विलिख्यते। प्रतिष्ठाविधिराकृष्य शास्त्रतः साधुसम्मतः ॥१२०

अथ स्थिरमूर्त्तिप्रतिष्ठारम्भः

सुस्नातः शुक्लवस्त्रः सन् कृतकृत्यः शुभक्षणे। तिथ्यृक्षदैवते विघ्नेश्वरं मातॄंश्च पूजयेत् ॥१२१॥

---

परेषां वाक्यस्य प्रमाणानि प्रामाण्यापादकानि वचनादीनि जानातीति तथा। तादृशोऽपि वेदपारगोऽपि अधीतवेदचतुष्टयोऽपि पशुशास्त्रेण पाषण्डशास्त्रेण रञ्जितो यः, स आचार्य्यो न क्रियेत; यद्वा, परवाक्यमेव नात्मवाक्यमज्ञतया प्रमाणं जानातीति तथा सः, यतः अवेदपारगः वेदार्थानभिज्ञः अनधीतवेदो वा; अतः पशुशास्त्रेण रञ्जितः। अन्यत् समानम् ॥११७॥

प्रतिष्ठा स्वयं पौरोहित्यादिविद्यया इत्यादिरूपा लोके ख्यातिस्तस्यां लोभः, यद्वा, प्रतिष्ठाकर्म्मणि अधिकप्राप्तौ यो लोभस्तेन मोहितः सन्। अभिषेकप्रधानां प्रतिष्ठां यो न कुर्य्यात् ॥११९॥

प्रतिष्ठा च श्रीमूर्त्तेश्चलाचलत्वभेदेन द्विविधा। तत्रेदानोमचलायाः प्रतिष्ठाविधिर्विस्तारेण लिख्यते—प्रागिति। अचलाप्रतिष्ठाया मुख्यत्वात्तस्या विधिज्ञानेन चलाया अपि प्रायः प्रतिष्ठाविधिविज्ञानाच्च। शास्त्रतः पुराणागमादिभ्य आकृष्य तत्तद्वचनानि क्रमेणैकत्र संगृह्य साधूनां सम्मत इति साम्प्रदायिक-तत्तत्पद्धतिकार-शिष्टगणसम्मत्यैव लिख्यत इत्यर्थः ॥१२०॥

कृतानि नित्यकर्म्माणि येन सः, तिथिम् ऋक्षञ्च नक्षत्रञ्च तयोर्देवते। पूजनञ्च प्रणवादि-नमोऽन्तैश्चतुर्थ्यन्तैर्नाममन्त्रैरक्षतगन्धपुष्पादिद्रव्यैश्च। प्रयोगः— 'ॐ गौर्य्यै नमः' इत्यादि ॥१२१॥

---

रहित, प्रतिष्ठामन्त्र के किञ्चिदंशज्ञाता, एवं जो वेदवेदाङ्गविद् नहीं है, उस प्रकार नास्तिक सर्वज्ञ होने पर भी उसको आचार्य्यत्व में वरण करना निषिद्ध है ॥१०६-११६॥

परवाक्य प्रमाणज्ञ, अर्थात् दूसरे के वाक्य का प्रमाण को जानने वाला, एवं अधीतवेद-वेद पढ़ा हुआ, देशिक ब्राह्मण, यदि पाषण्ड शास्त्र में अनुरागी हो, तो वह भी आचार्य्य पद के योग्य नहीं है। जिन सब त्याज्य व्यक्ति का वर्णन किया गया है, उनके द्वारा श्रीविष्णु स्थापित होने पर, उस स्थापन से भुक्ति मुक्ति लाभ नहीं होती है, किन्तु प्रतिष्ठा निष्फल होती है, इसमें सन्देह नहीं है ॥११७-११८॥

अथ प्रतिष्ठाविध्यविज्ञस्य प्रतिष्ठानाचरणे दोषः

अनन्तर प्रतिष्ठाविधि का भिज्ञ के प्रतिष्ठान करने में जो दोष होता है, उसको कहते हैं। श्रीहयशीर्ष पञ्चरात्र में उक्त है—जो व्यक्ति, यजमान से अधिक लाभेच्छु होकर प्रतिष्ठा नहीं करता है, उसको शिष्यों के सहित भीषण नरक में निपतित होना पड़ता है, इसमें सन्देह नहीं है ॥११९॥

सम्प्रति पुराण, आगमादि शास्त्र से संग्रह पूर्वक साम्प्रदायिक साधुजन सम्मत अचला मूर्त्ति की प्रतिष्ठाविधि लिखी जा रही है ॥१२०॥

अथ स्थिरमूर्त्तिप्रतिष्ठारम्भः

प्रथमतः सुस्नात होकर, श्वेत वसन परिधान पूर्वक नित्यकृत्य सम्पन्न करके शुभ क्षण में तिथि-

अथ षोड़श मातरः

गौरी पद्मा शची मेधा सावित्री विजया जया । देवसेना स्वधा स्वाहा मातरो लोकमातरः ।
धृतिः पुष्टिश्च तुष्टिश्च शान्तिः स्वकुलदेवता ॥१२२॥ इति ।

अथाचार्य्यादिवरणम्

वृद्धिश्राद्धं ततः कृत्वा विधिवद्वृणुयाद्बुधः । आचार्य्यं मधुपर्कादिदानेनाथ समर्च्चयेत् ॥१२३

एवं ब्रह्मचतुष्कञ्च तथा होतृचतुष्टयम् । द्वारजापि-चतुष्कञ्च पञ्चमं गर्भजापिनम् ॥१२४॥

तथा मूर्त्तिधरं चैकं पुराणस्तुतिपाठकम् । सर्व्वान् सम्पूज्य पुण्याहं स्वस्त्याद्यैतैस्तु वाचयेत् ॥१२५

अथ मण्डपादिनिर्म्माणम्

मितं षोड़शभिर्हस्तैः किंवा द्वादशभिश्च तैः । दशभिर्वा प्रकुर्व्वीत मण्डपं समलङ्कृतम् ॥१२६॥

सप्तधान्याङ्कुरोपेतं नदीमृद्वालुकाचितम् । तोरणादियुतं दिव्यं शङ्खभेर्य्यादिनादितम् ॥१२७॥

---

वृद्धिश्राद्धं नान्दीश्राद्धं, यच्च प्रतिष्ठाङ्गम् । विधिवदिति अमुकगोत्रः अमुकनामाहम्,अमुकगोत्रममुकनामानं त्वां भगवद्भक्तिकामो भगवन्मूर्त्तिप्रतिष्ठार्थमाचार्य्यत्वेन वृणे, स च वृतोऽस्मीति प्रब्रूयादिति । एवमादि-विधियुक्तं यत् स्यात् । आदि-शब्दात् यथाशक्ति वस्त्रालङ्कारादि । अथ वरणानन्तरं मधुपर्कादिदानेनैव, किंवा पाद्यार्घ्याचमनीयादिभिः सम्यगर्च्चयेत् ॥१२३॥

एवं लिखितप्रकारेण ब्रह्मादींश्च वृणुयात् । एतैराचार्य्यादिभिस्तु पुण्याहं स्वस्त्यादिकञ्च वाचयेत् ॥१२४॥

किंवेत्यादिर्विकल्पश्च शक्त्यनुसारेण प्रासादप्रदेशानुसारेण वा । तच्च श्रीहयशीर्षपञ्चरात्रवचनतो व्यक्तं भावि । यद्यपि 'दशाष्टहस्तं हीनं तु मध्यं द्वादशषोड़शम् । विंशहस्तं चतुर्विंशमुत्तमस्योदितं द्विज ॥' इति हयशीर्षपञ्चरात्रोक्तं, तथापि भविष्यपुराणाद्यनुसारेण शिष्टाचारतः साधुपद्धतिकारवर्गसम्मत्या लिखितम्— 'मितं षोड़शभिः' इत्यादि । एवमन्यत्राप्यग्रे बोद्धव्यम् । सम्यगलङ्कृतं पुष्पदामवितानपल्लवादिभिर्भूषितं, तद्विशेषश्च भविष्यपुराणादिवचनतोऽग्रे व्यक्तो भावी ॥१२६॥

---

नक्षत्राधिष्ठात्री देवता, विघ्नेश्वर एवं मातृदेवता की पूजा करनी चाहिये । पूजनीय देवता के नाम को चतुर्थ्यन्त करके उसके प्रथम 'ॐ' और पीछे 'नमः' शब्द देकर पूजा करे ॥१२१॥

अथ षोड़श मातरः

उसके मध्य में षोड़श मातृका नाम का वर्णन करते हैं । गौरी, पद्मा, शची, मेधा, सावित्री, विजया, जया, देवसेना, स्वधा, स्वाहा, धृति, पुष्टि, तुष्टि, शान्ति, आत्मदेवता एवं कुलदेवता । इस प्रकार षोड़श-सोलह मातृका क्रमशः कही गई हैं ॥१२२॥

अथाचार्य्यादिवरणम्

विज्ञ व्यक्ति, वृद्धि श्राद्ध करके आचार्य्य को यथाविधि वरण पूर्वक मधुपर्कादि दान द्वारा पूजा करें ॥१२३

इस प्रकार ब्रह्मा चार जन, होता चार जन, द्वार जापक चार जन, एवं गर्भजापक चार जन, मूर्त्तिधर एक जन, और पुराण पाठक एक जन । इनकी पूजा करके वरण करे एवं उनसे ही पुण्याह और स्वस्ति वाचन करावे ॥१२४-१२५॥

अथ मण्डपादिनिर्म्माणम्

मण्डप- षोड़श, द्वादश किंवा दशहस्त प्रमाण करके माल्य नवपल्लवादि के द्वारा सुसज्जित करे । उस मण्डप में सप्तधान्याङ्कुर स्थापन करना चाहिये, एवं वह तोरणादि मृत्तिका और बालुका से व्याप्त हो । मण्डपमें अति उत्तम शङ्ख भेरी प्रभृति का शब्द होता रहे ॥१२६-१२७॥

तथा च भविष्ये—

प्रासादान्नातिदूरे तु कुर्य्यान्मण्डपमग्रतः। दशद्वादशहस्तं वा परिक्षिप्तं समन्ततः ॥१२८॥
चतुर्भिस्तोरणैर्युक्त पुष्पदामाभिशोभितम्। प्लक्षोडुम्बरमश्वत्थं वटः पूर्व्वादितः क्रमात् ॥१२९॥
हस्तं प्रवेशयेद्भूमौ दृश्य हस्तचतुष्टयम्। सूपलिप्तं सुसंमृष्टं चतुर्द्वारेण संयुतम् ॥१३०॥
स्थण्डिलस्योपरि क्षिप्त समन्तादुपशोभितम्। नदीतीरमृदा युक्तं बालुकायाश्च कारितम् ॥१३१

मात्स्ये—

प्रासादस्योत्तरे वापि पूर्व्वे वा मण्डपो भवेत् ॥१३२॥

हस्तान् षोड़श कुर्व्वीत दश द्वादश वा पुनः। मध्ये वेदिकया युक्तः परिक्षिप्तः समन्ततः ॥१३३॥
सप्त पञ्च चतुर्वापि करान् कुर्व्वीत वेदिकाम्। चतुर्भिस्तोरणैर्युक्तो मण्डपः स्याच्चतुर्म्मुखः ॥१३४
प्लक्षं द्वारं भवेत् पूर्व्वं याम्यमौडुम्बरं भवेत्। पश्चादश्वत्थघटितं नैयग्रोधं तथोत्तरम् ॥१३५
भूमौ हस्तप्रविष्टानि चतुर्हस्तानि चोच्छ्रये। शोभनं भूतलं तत्र लिप्तञ्च गोमयाम्भसा।
वस्त्रैर्नानाविधैस्तद्वत् पुष्पपल्लवशोभितम् ॥१३६॥

---

स्वलिखितार्थं प्रमाणयन् भविष्यपुराणादिवचनानि संगृह्णाति—प्रासादादित्यादि। एवमग्रेऽपि सर्व्वत्र ज्ञेयम्। अग्रतः पूर्व्वादिशि आदौ वा समन्ततः परिक्षिप्तम् ॥१२८॥

चतुस्तोरणान्येवाह—प्लक्षेति; प्लक्षादिकं तद्भूमिमध्ये हस्तमात्रं प्रवेशयेत्। उपरि च हस्तचतुष्टयं दृश्यं कुर्य्यादित्यर्थः। पुनः प्रस्तुतं मण्डपमेव विशिनष्टि—सूपलिप्तमिति सार्द्धेन। सूपलिप्त इत्यादि-सप्तम्यन्तपाठे च स्थण्डिलस्योपरि इत्यस्य विशेषणानि सप्तम्यन्तानि ॥१२९-१३०॥

क्षिप्तं न्यस्तं विनिर्म्मितमित्यर्थः। स्थण्डिलेषु परिक्षिप्त इति वा पाठः। ततश्च स्थण्डिले कारितमित्यर्थः। ॥१३१॥

चतुर्म्मुखश्चतुर्द्वारः ॥१३४॥

---

भविष्य पुराण में उस विषय का वर्णन इस प्रकार है—प्रासाद के स्वल्प दूर पर मण्डप को पूर्बदिक् में किंवा चतुर्दिक में दश वा द्वादश हस्त स्थान परित्याग करे, अर्थात् चतुर्द्दिक में इतना स्थान खाली रखे। उक्त मण्डप में चार तोरण निर्माण करके कुसुम-माला से सज्जित करे। उसके पूर्वादि चतुर्दिक में क्रमशः प्लक्ष (पिलखप), उडुम्बर, अश्वत्थ, एवं बट,- इन चारों बृक्ष का चतुर्विध काष्ठ एक एक हस्त प्रमाण पृथिवी के भीतर प्रोथित करे। यह काष्ठ, भूमि के ऊपर चार चार हाथ बाहर रहे। यह मण्डप उत्तम रूप से उपलिप्त, परिमार्जित एवं द्वार चतुष्टय समन्वित हो, वह स्थण्डल के उपरिस्थान में सर्बथा उपशोभित, नदीमृत्तिका समन्वित एवं बालुकायुक्त हो ॥१२८-१३१॥

मत्स्यपुराण में लिखित है—मण्डप का निर्माण प्रासाद के उत्तरि भाग में अथवा पूर्व भाग में करना चाहिये। उसका परिमाण-सोलह, दश वा बारह हाथ हो, वह वेदीयुक्त एवं समन्तात् परिक्षिप्त करे। वेदी सप्त, पञ्च वा चार हाथ प्रमाण करे। मण्डप, चार तोरण, एवं चार द्वारयुक्त हो, प्लक्ष काष्ठ (पाकुड़ काष्ठ के, पिलखन के काष्ठ) का द्वार पूर्बदिक् में, उडुम्बर (गूलर) काष्ठ का द्वार दक्षिण में, अश्वत्थ काष्ठ का द्वार पश्चिम में एवं वट काष्ठ का द्वार उत्तर में करे। प्रत्येक द्वार का काष्ठ, एक हस्त परिमित भूगर्भ में प्रोथित हो, एवं वह चार हस्त उन्नत हो, भूमितल गोमयवारि से उपलिप्त सुशोभित एवं विविध वस्त्र, पुष्प पल्लव द्वारा सुशोभित रहे ॥१३२-१३६॥

हयशीर्षपञ्चरात्रे च—

प्रासादं वेष्टयित्वा तु कुर्य्यादगुप्ततरं बुधः । कृत्वा गुप्तं ततः पश्चाद्यागमण्डपमारभेत् ॥१३७

गर्भसूत्रं तु निःसार्य्य प्रासादस्याग्रतो गुरुः । कृत्वा भूमिं तु निःशल्यां मण्डपं सूत्रयेत्ततः ॥१३८

हीनस्तु मण्डपः कार्य्यो हीने त्वायतने सदा । उत्तमे तूत्तमः कार्य्यो मध्यमे मध्यमस्तथा ॥१३९

दशाष्टहस्तं हीनं तु मध्यं द्वादशषोड़शम् । विंशहस्तं चतुर्विंशमुत्तमस्योत्तमं द्विज ॥१४०॥

चतुर्हस्तादिमानानां प्रासादानां यथाक्रमम् । मण्डपानष्टहस्तादीन् कल्पयेद्वेदवृद्धितः ॥१४१॥

समवृत्तं चतुर्द्वारं चतुस्तोरणभूषितम् । विचित्रस्तम्भविन्यासं रचनाचरितं शुभम् ।
धूपनिर्गमनोपेतं मण्डपं कारयेद्बुधः ॥१४२॥

किञ्च तत्रैव—

मण्डपं मण्डयेदार्द्रशाखाभिरतु समन्ततः । विमलेन वितानेन पताकाभिश्च भूषयेत् ॥१४३॥

दर्पणैश्चामरैर्घण्टैः स्तम्भान् वस्त्रैर्विभूषयेत् । कलसैर्घण्टिकाभिश्च साधारैर्गण्डुकैस्तथा ॥१४४

मण्डपं भूषयित्वैवं जाह्नवीबालुकां शुभाम् । बाह्यदेशेषु विकिरेत पञ्चगव्येन प्रोक्षयेत् ॥१४५

किञ्च—

अश्वत्थोडुम्बरौ चैव न्यग्रोधः प्लक्षः एव च । तोरणार्थेषु कथिताः पूर्व्वादिषु यथाक्रमम् ॥१४६

---

वेदवृद्धितः चतुर्हस्तवृद्धिक्रमेण, अष्टहस्ते प्रासादे द्वादशहस्तमण्डपं, द्वादशहस्ते च षोड़शहस्तमित्येवं कल्पयेदित्यर्थः ॥१४१॥

घण्टैः बृहद्घण्टाभिः, घण्टिकाभिः स्वल्पघण्टाभिः ॥१४४॥

---

श्रीहयशीर्ष पञ्चरात्र में लिखित है—विचक्षण व्यक्ति, वेष्टनादि द्वारा वेष्टन पूर्वक प्रासाद को गुप्त रखें । उस प्रकार गुप्त रखकर अनन्तर यागमण्डप निर्म्माण आरम्भ करना चाहिये । गुरुदेव, गर्भसूत्र निःसारण पूर्वक प्रासाद के सम्मुखस्थ क्षेत्र को अस्थिरहित करके मण्डप का सूत्रपात करें । हीन आयतन में हीन मण्डप, उत्तम आयतन में उत्तम मण्डप एवं मध्य आयतन में मध्यम मण्डप निर्म्माण करना चाहिये ॥ ॥१३७-१३९॥

हे द्विज ! दश हस्त वा अष्ट हस्त होने से हीन, द्वादश किंवा षोड़श हस्त परिमित होने से, वह मध्यम, एवं विंशति वा चतुर्विंशति हस्त परिमित होने से वह उत्तम मण्डप होता है । चार हस्तादि परिमित प्रासाद समूह में क्रमशः वेदवृद्धि चारि हस्त, अष्ट हस्त मण्डप निर्म्माण करे । अर्थात् प्रासाद अष्ट हस्त होने से मण्डप द्वादश हस्त होगा, एवं प्रासाद द्वादश हस्त होने से मण्डप षोड़श हस्त परिमित होगा । मण्डप, समवृत्त, चतुर्द्वार समन्वित, तोरण चतुष्टय शोभित, विचित्र स्तम्भ विशिष्ट, रचना नैपुण्य से सुन्दर एवं धूम निर्गमन मार्ग समन्वित होगा ॥१४०-१४२॥

और भी उक्त ग्रन्थ में लिखित है—मण्डप के समन्तात् (चारों ओर) आर्द्र शाखा समूह द्वारा मण्डित एवं परिष्कृत चन्द्रातप तथा पताका समूह के द्वारा सुशोभित करे । स्तम्भ समूह को दर्पण, चामर, बृहत् घण्टा एवं वस्त्र द्वारा शोभित करे । मण्डप को कलस, क्षुद्रघण्टा एवं साधारगण्डुक (ग्रन्थि) द्वारा सुशोभित करके उसके वहिर्देश में विशुद्ध गङ्गा बालुका और पञ्चगव्य द्वारा प्रोक्षण करना चाहिये ॥१४३-१४५॥

और भी पहले कहा गया है—पूर्वादि चतुर्दिक में यथाक्रम से अश्वत्थ (पीपल), उडुम्बर (गूलर) वट (बड़) और प्लक्ष (पिलखन) के काष्ठ का तोरण विराजित रहे और उसका एक हस्त परिमित भूगर्भ में

एकहस्तं खनेद्भूमौ चतुर्हस्तं तथोच्छ्रये । द्विहस्तान्तरमन्योऽन्यं तोरणं सम्प्रकल्पयेत् ।।१४७

तिर्य्यक् फलकमानं स्यात् स्तम्भानामर्द्धमानतः ।

शैलाः पृथिवीमन्त्रेण स्थाप्याः पूज्यास्तु तोरणाः ।।१४८।।

शुक्लवस्त्रयुगच्छन्नान् दर्भकिञ्जल्कसंयुतान् । पुष्पमालापरिक्षिप्तान् तोरणान् परिकल्पयेत् ।।१४९

वृत्तं वा चतुरस्रं वा द्विषट्काष्ठाङ्गुलं तु वा ।

षट्चतुर्वाङ्गुलं कार्य्यं तोरणं निर्व्रणं भवेत् ।।१५०।।

तोरणस्तम्भमूलेषु कलसान् मङ्गलाङ्कुरान् । प्रदद्यादुपरिष्टात्तु कुर्य्याच्चक्रं सुदर्शनम् ।

कलसं वर्द्धमानं वा वसुभागेन कल्पयेत् ।।१५१।।

किञ्च—

नवेन चित्रवर्णेन वितानं कारयेच्छुभम् । अथवा शुक्लवर्णेन मध्ये जलजभूषितम् ।।१५२।।

उत्तमाधममध्यं तु प्रमाणं चास्य कीर्त्यते । मण्डपस्य प्रमाणन्तु ज्येष्ठं तस्य वितानकम् ।

मध्यमं वेदिकामात्रं कनिष्ठं मण्डलस्य तु ।।१५३।।

अथ तत्र वेद्यादिनिर्म्माणम्

तन्मण्डपस्य मध्ये तु वेदीं हस्तोच्छ्रितां समाम् । पञ्चहस्तमितां दिव्यां चतुरस्रां प्रकल्पयेत् ।।१५४

ऐशान्यां हस्तमात्राञ्च ग्रहवेदीं समाचरेत् । तथा कुण्डचतुष्कञ्च वेद्याः प्राच्यादिदिक्षु हि ।।१५५

---

द्विषट् द्वादश, काष्ठा दश वा, वेष्टने अङ्गुलानि यस्य तत् । षट् चत्वारि वा अङ्गुलानि यस्य तत् । वा-शब्दव्यवधानेनापि समासादिकमार्षम् । विकल्पश्च पूर्व्वोक्तमण्डपमानापेक्षया ।।१५०।।

उपरिष्टात् तोरणोपरि, तत्तत्प्रसङ्गाद्वर्द्धमान स्वल्पघटं, वसुभागेन तोरणस्याष्टमांशेन ।।१५१।।

विमलेन वितानेन इत्युक्तं, तदेव विशिनष्टि—नवेनेति सार्द्धद्वाभ्याम्, वस्त्रेणेति शेषः ।।१५२।।

समां—पार्श्वादावेकरूपाम् ।।१५४।।

---

प्रोथित एव चार हाथ ऊपर में रहे, अर्थात ऊँचे रहे । परस्पर से दो हाथ दूर में तोरण की कल्पना करनी चाहिये । फलक प्रस्तर का परिमाण स्तम्भ समूह के अर्ध एवं वह वक्रभावापन्न होना चाहिये । पृथिवी मन्त्र से प्रस्तर स्थापन एवं तोरण की पूजा करे । तोरण समूह शुक्ल वस्त्र से आवृत, कुश किञ्जल्क विशिष्ट एवं पुष्पमाला परिवेष्टित हों । तोरणसमूह की परिधि गोलाकार, चतुष्कोण, द्वादशाङ्गुल वा दशाङ्गुल एव निश्छिद्र करनी चाहिये । तोरण के स्तम्भमूल में मङ्गलाङ्कुरविशिष्ट कुम्भ, एवं उपरिभाग में सुदर्शन चक्र स्थापन करना चाहिये । कलश वा क्षुद्रघट होने से वह तोरण के अष्टमांश के प्रमाणानुसार करे । ।।१४६-१५१।।

और भी लिखित है—विचित्र वर्णयुक्त नवीन वस्त्र से चन्द्रातप करे, अथवा श्वेत वर्ण वसन द्वारा चन्द्रातप प्रस्तुत करके मध्य भाग में पद्म अङ्कन पूर्वक समलङ्कृत करे । उत्तम, मध्यम एवं कनिष्ठ भेद से चन्द्रातप के परिमाण भेद का वर्णन करता हूँ । मण्डप प्रमाण होने से वह चन्द्रातप उत्तम, वेदी प्रमाण होने से मध्यम, एवं मण्डप प्रमाण होने से कनिष्ठ होता है ।।१५२-१५३।।

अथ तत्र वेद्यादिनिर्म्माणम्

मण्डप के मध्य में पाँच हस्त परिमित उत्तम वेदी का निर्म्माण करे । वह एक हस्त परिमित उच्च, चतुःपार्श्व में समान एवं चतुरस्र (चौकोन) हो । उसके ईशानकोण में एक हस्त परिमित ग्रहवेदी एवं

तच्च हस्तमितं योनिवक्त्राढ्यं सत्रिमेखलम् । चतुरस्रार्द्धशीतांशुवर्त्तुलाब्जाकृति क्रमात् ।।१५६
दीक्षाविधौ पुरालेखि कुण्डलक्षणमत्र तु । चतुर्दिक्षु त्यजेद्वेदीमङ्गुलानि त्रयोदश ।।१५७।।
आचार्य्यकुण्डं कुर्य्याच्च ग्रहवेद्यास्तु दक्षिणे । हस्तमात्रावटं तच्च चतुरस्रं सुलक्षणम् ।।१५८।।

तथा च तत्रैव—

त्रिभागेनार्द्धभागेन कुर्य्याद्वेदीं सुशोभनाम् ।
हस्तमात्रोच्छ्रिता कार्य्या मध्ये सम्यग्व्यवस्थिता ।।१५९।।

किञ्च—

चतुष्कोणं भवेत् कुण्डं पूर्व्वस्यां दिशि सर्व्वदा ।
अर्द्धचन्द्रं भवेद्याम्यां वारुण्यां वर्त्तुलं भवेत् ।
पद्माभमुत्तरे भागे कुण्डं स्याद्द्विजसत्तम ।।१६०।। इति ।

अथ कुम्भस्थापनम्

यजमानः सपत्नीकः पुत्रपौत्रसमन्वितः । ऋत्विग्भिः सहितः पश्चाद्द्वारेण प्रविशेत्ततः ।।१६१
न्यसेत्तस्य चतुर्द्वार्षु द्वौ द्वौ कुम्भौ यवोपरि । जलपूर्णौ स्वर्णगर्भौ पल्लवादियुतौ शुभौ ।।१६२।।

---

क्रमादिति प्राच्यां चतुरस्रं, दक्षिणस्यामर्द्धचन्द्राकारं, पश्चिमायां वर्त्तुलम्, उदीच्याञ्च पद्माकारमित्यर्थः ।।१५६।।

अत्र प्रतिष्ठाविधौ तु चतुर्दिक्षु त्रयोदशाङ्गुलानि वेदीं परित्यजेत्, तावत्प्रदेशं वेद्याः परितस्त्यक्त्वा कुण्डानि कुर्य्यादित्यर्थः । तथा च मात्स्ये – 'वेदीभित्तिं परित्यज्य त्रयोदशभिरङ्गुलैः' इति ।।१५७।

त्रिभागेन मण्डपस्य तृतीयांशेन, अर्द्धभागेन वा परिमिताम् ।।१५९।।

ततो यजमानः पत्न्यादिसहितः पश्चिमद्वारेण तं मण्डपं प्रविशेत् ।।१६१।।

न्यसेद्यजमानो गुरुर्वा । तस्य —मण्डपस्य ।।१६२।।

---

उसके पूर्वादि चतुर्दिक में चार कुण्ड निर्म्माण करे। उक्त कुण्ड समूह एक हस्त परिमित योनिमुखाकार, मेखलात्रय विशिष्ट एवं यथाक्रम से चतुरस्र, अर्धचन्द्रवत् वृत्त एवं पद्माकार हों ।।१५४-१५६।।

इति पूर्व में दीक्षाविधि प्रसङ्ग में कुण्ड लक्षण वर्णित हुआ है। किन्तु यहाँ पर चतुर्दिक में त्रयोदश-अङ्गुली वेदी को परित्याग करे। ग्रहवेदी के दक्षिण पार्श्व में आचार्य्यकुण्ड निर्माण करना चाहिये। वह कोण चतुष्टयान्वित सुलक्षण से लक्षित एवं एक हस्त परिमित गर्तयुक्त होना चाहिये ।।१५७-१५८।।

एतद्विषय में उक्त ग्रन्थ में लिखित है—मण्डप के तृतीयांश वा अर्धांश परमाण में वेदी निर्म्माण पूर्वक उसको सुशोभित करे। उसकी उच्चता एक हस्त परिमित होगी, एवं उसको मध्यस्थल में रखनी चाहिये। ।।१५९।।

और भी लिखित है—हे द्विजसत्तम ! कुण्ड के पूर्वदिक् में चतुष्कोण, दक्षिणदिक् में अर्धचन्द्र, पश्चिम दिक् में गोलाकार एवं उत्तरदिक् में पद्म सदृश करना चाहिये ।।१६०।।

अथ कुम्भस्थापनम्

अनन्तर यजमान् सहधर्म्मिणी एवं पुत्र-पौत्र समन्वित होकर पुरोहितवृन्द के सहित पश्चिम द्वार से मण्डप में प्रवेश करे। मण्डप के चतुर्द्वार में यव के ऊपर जलपूर्ण सुवर्ण गर्भ, पल्लवादि विशिष्ट– दो दो अत्युत्तम मङ्गलकुम्भ स्थापन करे ।।१६१-१६२।।

तथा च मात्स्ये—

कृत्वैवं मण्डपं पूर्णं चतुर्द्वारेषु विन्यसेत् । अव्रणान् कलसानष्टौ जलकाञ्चनगर्भितान् ॥१६३॥
चूतपल्लवसंछन्नान् सितवस्त्रयुगान्वितान् । स्रक्चन्दनफलोपेतान् चन्दनोदकपूरितान् ॥१६४॥

भविष्ये—

अकालान् कलसानष्टौ चतुर्द्वारेषु स्थापयेत् । अन्तःकाञ्चनसंयुक्तान् फलपुष्पैरलङ्कृतान् ॥१६५
अहतैर्युगलैर्वस्त्रैर्ग्रीवायां तु निवेशितैः । चन्दनागुरुतोयेन पूरयित्वा यथाक्रमम् ॥१६६॥

किञ्च हयशीर्षपञ्चरात्रे—

शातकुम्भमयान् कुर्य्याद्राजतान् शुक्लजानथ । जलाढ़कप्रपूरांश्च लोहजान् कारयेद्दृढ़ान् ॥१६७
मृन्मयान् कलसान् वापि पक्वविम्बोपमान् शुभान् ।
अष्टत्रिंशाधिकशतपलपूर्व्वांस्तु मृन्मयान् ॥१६८॥
आरक्तान् स्फोटरहितान् कालमण्डलवर्ज्जितान् । आहृत्य कलसान् वस्त्रपूततोयेन पूरयेत् ।
सहिरण्यान् वस्त्रयुग्मबद्धकण्ठान्निवेशयेत् ॥१६९॥

अथ स्नानमण्डपादिनिर्म्माणम्

कुर्य्यादुत्तरतस्तस्मादधिवासनमण्डपात् । चतुर्हस्तं चतुर्द्वारकोणं स्नपनमण्डपम् ॥१७०॥

---

अकालान्—कृष्णवर्णेतरान् ॥१६५॥

अहतैर्नवैः ॥१६६॥

अथेति विकल्पे, शुक्लजान्, ताम्रमयान्, स्फोटरहितान् निश्छिद्रान्, कालेन श्यामेन मण्डलेन विन्दुना आवर्त्तेन वा वर्जितान् ॥१६७-१६९॥

चत्वारि द्वाराणि कोणाश्च यस्य तम् ॥१७०॥

---

तद्विषय में मत्स्यपुराण में लिखित है—इस प्रकार मण्डप निर्म्माण करके द्वार चतुष्टय में सजल, स्वर्ण गर्भ अखण्ड कुम्भाष्टक स्थापन करे ॥१६३॥

वह सब कुम्भ, आम्रपल्लव से आवृत, शुक्लवस्त्रद्वय से आच्छादित, माल्य चन्दन फलयुक्त एवं सचन्दन जल से पूर्ण हों ॥१६४॥

भविष्यपुराण में लिखित है—चतुर्द्दिकस्थ चतुर्द्वार में जो आठ कुम्भ स्थापन करें, उनका वर्ण काला न हो, इसके अतिरिक्त अन्य वर्ण का होना वाञ्छनीय है । यह सब कुम्भ, स्वर्णगर्भ एवं फलपुष्प से सुशोभित हों । उनके गले में नव वस्त्रद्वय प्रदानकर चन्दनागुरु संयुक्त जल से क्रमपूर्वक पूर्ण करने चाहिये ॥१६५-६६

हयशीर्षपञ्चरात्र में और भी लिखित है—चारों द्वार में स्वर्णमय, रौप्यमय, ताम्रमय, लौहमय, सुदृढ़ आढ़क परिमित (चार प्रस्थ जल रखने योग्य) चार कुम्भ, अथवा पक्व विम्ब सदृश, सुन्दर लोहित वर्ण, स्फोटशून्य, कालमण्डल रहित एवं अष्टत्रिंशदधिक शतपल (एक सौ अड़तीस पल) जल रख सकें, ऐसे मृण्मय कुम्भ चतुष्टय आनयन पूर्वक स्थापन करे, वह सब कुम्भ स्वर्णगर्भ, वस्त्रपूत जलपूर्ण, एवं गलदेश वस्त्र द्वारा निबद्ध हों ॥१६७-१६९॥

अथ स्नानमण्डपादिनिर्म्माणम्

अधिवासन मण्डप के उत्तर पार्श्व में स्नान मण्डप निर्म्माण करना चाहिये । वह चार हाथ, चार द्वार

तत्रेष्टकाभिः पक्वाभिः द्विविहस्ताञ्च वेदिकाम् ।
विदध्याद्भूतलं वाथ सकलं बालुकामयम् ॥१७१॥

तथा च भविष्ये —

एवं सुशोभनं कृत्वा मण्डपं तु सुतोरणम् । तस्यैवोत्तरपार्श्वे च कर्त्तव्यः स्नानमण्डपः ।
सुशोभनं तु कर्त्तव्यं स्थण्डिलं बालुकामयम् ॥१७२॥

मात्स्ये—

एवं सतोरणं कृत्वा अधिवासनमण्डपम् । तस्याप्युत्तरतः कुर्य्यात् स्नानमण्डपमुत्तमम् ।
तदर्द्धेन त्रिभागेन चतुर्भागेन वा पुनः ॥१७३॥

हयशीर्षपञ्चरात्रे—

स्नानार्थं कलसार्थञ्च स्नानद्रव्यार्थमेव च । जलनिर्गमनोपेतमर्द्धेन स्नानमण्डपम् ॥१७४॥
ऐशान्यां कलसार्थञ्च तस्माद्दक्षिणगोचरे । पूर्व्वस्यां मण्डपं कुर्य्याद्यागद्रव्यार्थमायतम्१७५॥ इति ।

अथ ध्वजपताकास्थापनम्

अथ वाद्यादिभिर्दिव्यैर्विचित्रैर्मङ्गलस्वनैः । कृत्वा महोत्सवं न्यसेत् पताका विधिवद्गुरुः ॥१७६

---

अथवा स्नानमण्डपस्य भूतलं सकलमेव बालुकामयं विदध्यात् । यद्यपि भविष्य-मत्स्यपुराणयोर्ध्वज-पतकाधिरोहणानन्तरमेव स्नानमण्डपनिर्म्माणमेव लिखितं, तथापि हयशीर्षपञ्चरात्रोक्तानुसारेण निर्म्माण-प्रसङ्गेऽस्मिन् लिखितम् ॥१७१॥

तस्य अधिवासमण्डपस्य अर्द्धेन तृतीयेन भागेन वा चतुर्थेन वा परिमितम् ॥१७३॥

स्नानार्थमेकं, स्नानकलसार्थं चैकं, स्नानद्रव्यार्थं चैकमेवं मण्डपत्रयं कुर्य्यात्, तदेव विविच्याह—जलेति सार्द्धेन ॥१७४॥

स्नानद्रव्यमेव यागद्रव्यं, स्नानस्यैवात्र प्राधान्यात् ॥१७५॥

---

से सुशोभित एवं चतुष्कोण हो। इस स्नानमण्डप में ईंटों के द्वारा हस्तद्वय वा हस्तत्रय परिमित वेदिका निर्म्माण करे। किंवा स्नानमण्डप के भूतल के समस्त स्थान ही बालुकामय करे ॥१७०-१७१॥

भविष्यपुराण में उक्त विषय का वर्णन है—इस प्रकार सुशोभन तोरणयुक्त मनोहर मण्डप निर्म्माण करके उसके उत्तर में स्नानमण्डप निर्म्माण करे एवं तत्रस्थ मृत्तिका को सुन्दर बालुकामय करे ॥१७२॥

मत्स्यपुराण में लिखित है—इस प्रकार तोरणसमन्वित अधिवासन मण्डप प्रस्तुत करके उसका अर्द्धांश तृतीयांश वा चतुर्थांश परिमित स्नान-मण्डप निर्म्माण करना चाहिये ॥१७३॥

हयशीर्षपञ्चरात्र में उक्त है—स्नान के निमित्त कुम्भ स्थापन हेतु एवं स्नान द्रव्य रक्षण हेतु एक एक मण्डप तदर्द्धांश परिमाण में जलप्रणालीयुक्त करना चाहिये। कुम्भ-स्नान हेतु ईशानकोण में मण्डप प्रस्तुत करें एवं दक्षिणदिक् के पूर्वांश में याग द्रव्य स्थापन हेतु विस्तृत मण्डप निर्म्माण करे ॥१७४-१७५॥

अथ ध्वजपताकास्थापनम्

अनन्तर गुरुदेव उत्तमवाद्यादि एवं विचित्र मङ्गल शब्द के सहित महोत्सव सम्पन्न करके विधानानुसार पताका विन्यास करे ॥१७६॥

अथ तद्विशेषः

भविष्ये—

पूर्व्वेणेन्द्रायुधाकारामाग्नेय्यामग्निसन्निभाम् ।
कृष्णाञ्चैव तु याम्यायां नैर्ऋत्यां तु तथैव च ॥१७७॥
इन्द्रगोपनिभाकारां वारुण्यां चैव दापयेत् । शिरीषपुष्पप्रतिमां वायव्यां विनिवेशयेत् ।
कौवेर्य्यां पीतवर्णां तु ऐशान्यां पाण्डुरा भवेत् ॥१७८॥

मत्स्ये—

ध्वजादिरोपणं कार्य्यं मण्डपस्य समन्ततः ।
ध्वजांश्च लोकपालानां सर्व्वदिक्षु निवेशयेत् ।
पताका जलदाकारा मध्ये स्यान्मण्डपस्य तु ॥१७९॥

हयशीर्षपञ्चरात्रे—

पञ्चहस्तप्रमाणं तु ध्वजं कुर्य्याद्विचक्षणः । वैपुल्यं चास्य कुर्व्वीत षोड़शाङ्गुलसंमितम् ।
सप्तहस्तोच्छ्रितं चास्य दण्डं कुर्य्यात् सुरोत्तम ॥१८०॥
सप्तहस्तास्ततो दीर्घा विस्तृता द्वादशाङ्गुलाः । द्विपञ्चहस्तदण्डेषु पताकास्तु निवेशयेत् ॥१८१
वाह्यदेशे मण्डपस्य तोरणाभ्यन्तरे तथा । अष्टौ ध्वजाः स्थापनीयाः पूर्व्वादिक्रमयोगतः ॥१८२
अरुणोऽग्निनिभश्चैव कृष्णः शुक्लोऽथ पीतकः । रक्तवर्णस्तथा श्वेतः सर्व्ववर्णस्तथैव च ॥१८३

---

मत्स्यपुराणे ध्वजपताकयोरभेदाभिप्रायेण ध्वजाभिरोपणमित्याद्युक्त्वा पश्चात् पताका जलदाकारेत्युक्तम्, तद्विशेषश्च हयशीर्षपञ्चरात्रतो व्यक्तो भावी ॥१७९॥

द्विपञ्चदश, यद्वा, द्वौ पञ्च चेत्येवं सप्त तावद्धस्तप्रमाणदण्डेषु, एवं पताकाया ध्वजदण्डसाम्यमुक्तं स्यात् ॥१८१

---

अथ तद्विशेषः

भविष्यपुराण में लिखित है पूर्वदिक् में इन्द्रायुधाकार अग्निकोण में अग्निवर्ण विशिष्ट, दक्षिण में एवं नैर्ऋतदिक् में कृष्णवर्ण, पश्चिमदिक् में इन्द्रगोप कीट तुल्य रक्तवर्ण, वायुकोण में शिरीष पुष्पवर्ण, उत्तर दिक् में पीत एवं ईशानकोण में पाण्डुवर्ण पताका स्थापन करे ॥१७७ १७८॥

मत्स्यपुराण में लिखित है– मण्डप के चतुर्द्दिक में ध्वजारोपण करना चाहिये । लोकपालवृन्द के उद्देश्य से समस्त दिक् में ही पताका विन्यास करे । मण्डपाभ्यन्तर में मेघाकार पताका स्थापन करे ॥१७९॥

हयशीर्षपञ्चरात्र में उक्त है—हे सुरोत्तम ! पञ्च हस्त प्रमाण ध्वजा करना ही बुद्धिमान् व्यक्ति का कर्त्तव्य है, और उसकी विपुलता सोलह अङ्गुल और उसके दण्ड में जो पताका सन्निवेश करें, उसका दैर्घ्य सात हस्त परिमित करे । उस सप्तहस्त दण्ड में जो पताका विन्यस्त हो, उसका दैर्घ्य सप्तहस्त एवं विस्तार द्वादशाङ्गुल होगा । द्विपञ्चहस्त प्रमाण दण्ड में पताका विन्यास करना कर्त्तव्य है । मण्डप के वहिर्देश में तोरण के मध्य में पूर्वादि क्रम से ध्वजाष्टक विन्यस्त करे । उक्त अष्टसंख्यक ध्वज का वर्ण क्रमशः अरुण, वह्नि, कृष्ण, शुक्ल, पीत, लोहित, श्वेत एवं विचित्र वर्ण का होना चाहिये ॥१८०-१८३॥

अथ ध्वजाद्यर्पणम्, लोकपालपूजाविधिश्च

हयशीर्षपञ्चरात्रे—

कुमुदः कुमुदाख्यश्च पुण्डरीकोऽथ वामनः । शङ्कुकर्णः सर्व्वनेत्रः सुमुखः सुप्रतिष्ठितः ।
इत्येते विष्णुलोकस्य दिक्पालगणनायकाः ।।१८४।।
कोटिसंख्यगुणैर्युक्ता पूजनीया यथादिशि ।।१८५।।

मात्स्ये—

गन्धपुष्पादिकं कुर्य्यात् स्वैः स्वैर्मन्त्रैरनुक्रमात् । बलिञ्च लोकपालेभ्यः स्वस्वमन्त्रैर्निवेदयेत् ।
ऊर्द्ध्वे तु ब्रह्मणे देयस्त्वधस्ताच्छेषवासुकेः ।।१८६।।
संहितायान्तु ये मन्त्रास्तद्दैवत्याः श्रुतौ स्मृताः ।
तैः पूजा लोकपालानां कर्त्तव्या हि समन्ततः ।।१८७।।

हयशीर्षपञ्चरात्रे—

ॐ आयाहीन्द्र महाराजाधिराज वज्रहस्त स्वबलवाहनावृत इहागच्छागच्छ, तिष्ठ तिष्ठ, पूर्व्वद्वारमभिरक्ष रक्षेत्यावाह्य, ॐ त्रातारमिन्द्रमित्यनेनार्घ्यं दत्त्वा गन्धादिभिरर्च्चयेत् ।।१८८

ॐ आयाहि चित्रभानो महाराजाधिराज शक्तिहस्त स्वबलवाहनावृत इहागच्छागच्छ, तिष्ठ तिष्ठ, आग्नेयीं दिशं रक्ष रक्षेत्यावाह्य, ॐ अग्निर्मूर्द्धा दिव इत्यनेनार्घ्यं दत्त्वा गन्धादिभिरर्च्चयेत् ।।१८९।।

ॐ आयाहि यम महाराजाधिराज दण्डहस्त स्वबलवाहनावृत रक्तान्तायतलोचन इहागच्छागच्छ, तिष्ठ तिष्ठ, दक्षिणद्वारमभिरक्ष रक्षेत्यावाह्य, ॐ वैवस्वतं संयमनमित्यनेनार्घ्यं दत्त्वा गन्धादिभिरर्च्चयेत् ।।१९०।।

---

'न्यसेत् पताका विधिवद्गुरुः' इति लिखितम्; तदेवाभिव्यञ्जयति—कुमुद इत्यादिना ।।१८४।।
यथादिशीति पूर्व्वाद्यष्टदिक्षु क्रमेण कुमुदादयोऽष्ट पूजनीया इत्यर्थः ।।१८५।।
वासुकेः अनन्तस्य, शेषवासुकेरिति पाठेऽपि अर्थस्तु स एव ।।१८६।।

---

अथ ध्वजाद्यर्पणम्, लोकपालपूजाविधिश्च

हयशीर्षपञ्चरात्र में लिखित है—विष्णुलोकस्थ दिक्पालवृन्द नायक आठ जन हैं,—कुमुद, कुमुदाक्ष, पुण्डरीक, वामन, शङ्कुकर्ण, सर्वनेत्र, सुमुख एवं सुप्रतिष्ठित ।।१८४।।

पूर्वादि दिक् में कोटिसंख्यक गुणयुक्त लोकपालों की पूजा करे ।।१८५।।

मत्स्यपुराण में लिखित है—लोकपालवृन्द को क्रमशः स्व स्व मन्त्र के द्वारा गन्ध पुष्प एवं बलि अर्पण करनी चाहिये। ब्रह्मा को ऊर्द्ध्व भाग में एवं शेष वासुकि को अधोभाग में बलि निवेदन करे। जो सब मन्त्र संहिता में उक्त हैं, उन्हीं को तत्तद्दैवता सम्बन्धीय जानना चाहिये। तत्तन्मन्त्र द्वारा समस्त दिक् में ही दिक्पालवृन्द की पूजा करनी चाहिये ।।१८६-१८७।।

हयशीर्षपञ्चरात्र में लिखित है—'ॐ आय हीन्द्र' इत्यादि मूल में कथित मन्त्र से इन्द्र को आवाहन करके 'ॐ त्रातारमिन्द्रम्' इत्यादि मन्त्र से अर्घ्य अर्पण करके गन्धादि के द्वारा उनकी पूजा करनी चाहिये। 'ॐ आयाहि चित्रभानो' इत्यादि मन्त्र द्वारा आवाहन करके ॐ अग्निमूर्धा' इत्यादि मन्त्र से अर्घ्य अर्पण पूर्वक गन्धादि द्वारा अग्नि की पूजा करे। ॐ आयाहियम' इत्यादि मन्त्र से आवाहन करके 'ॐ वैवस्वतं'

ॐ आयाहि नैर्ऋत महाराजाधिराज स्वबलवाहनावृत खड्गहस्त महावल इहागच्छागच्छ, तिष्ठ तिष्ठ, नैर्ऋतीं दिशमभिरक्ष रक्षेत्यावाह्य, ॐ एष ते निर्ऋते इत्यनेनार्घ्यं दत्त्वा गन्धादिभिरर्च्चयेत् ॥१८१॥

ॐ आयाहि वरुण महाराजाधिराज पाशहस्त स्वबलवाहनावृत इहागच्छागच्छ, तिष्ठ तिष्ठ, पश्चिमद्वारमभिरक्ष रक्षेत्यावाह्य, ॐ उरु हि राजा वरुणश्चकारेत्यनेनार्घ्यं दत्त्वा गन्धादिभिरर्च्चयेत् ॥१८२॥

ॐ आयाहि पवन महाराजाधिराज ध्वजहस्त स्वबलवाहनावृत इहागच्छागच्छ, तिष्ठ तिष्ठ, वायवीं दिशमभिरक्ष रक्षेत्यावाह्य, ॐ वात आ वातु भेषजमित्यनेनार्घ्यं दत्त्वा गन्धादिभिरर्च्चयेत् ॥१८३॥

ॐ आयाहि सोम महाराजाधिराज शङ्खहस्त स्वबलवाहनावृत इहागच्छागच्छ, तिष्ठ तिष्ठ, उत्तरद्वारमभिरक्ष रक्षेत्यावाह्य, ॐ सोमं राजानमित्यनेनार्घ्यं दत्त्वा गन्धादिभिरर्च्चयेत् । ॥१८४॥

ॐ आयाहीशान महाराजाधिराज शूलहस्त स्वबलवाहनावृत इहागच्छागच्छ, तिष्ठ तिष्ठ, ऐशानीं दिशमभिरक्ष रक्षेत्यावाह्य, ॐ ईशानाय नमस्येत्यनेनार्घ्यं दत्त्वा गन्धादिभिरर्च्चयेत् । ॥१८५॥

ॐ आयाहि चतुर्म्मुख सर्व्वलोकाधिपते स्रुक्स्रुवहस्त स्वबलवाहनावृत इहागच्छागच्छ, तिष्ठ तिष्ठ, ऊर्द्ध्वां दिशमभिरक्ष रक्षेत्यावाह्य, ॐ हिरण्यगर्भः समवर्त्तताग्र इत्यनेनार्घ्यं दत्त्वा गन्धादिभिरर्च्चयेत् ॥१८६॥

ॐ आयाहि अनन्त महाराजाधिराज स्वबलवाहनावृत लाङ्गलहस्त इहागच्छागच्छ, तिष्ठ तिष्ठ, अधोदिशमभिरक्ष रक्षेत्यावाह्य, ॐ नमोऽस्तु सर्पेभ्य इत्यनेनार्घ्यं दत्त्वा गन्धादिभिरर्च्चयेत् ॥१८७॥

---

इत्यादि मन्त्र से अर्घ्यदान पूर्वक गन्धपुष्पादि के सहित यत्नपूर्वक यम की पूजा करे। 'ॐ आयाहि नैर्ऋत' इत्यादि मन्त्र से आवाहन पूर्वक 'ॐ एष ते नैर्ऋते' इत्यादि मन्त्र से अर्घ्य प्रदान कर गन्धादि द्वारा निर्ऋति की पूजा करे। 'ॐ आयाहि वरुण' इत्यादि मन्त्र द्वारा आवाहन करके 'ॐ उरु हि राजा' इत्यादि मन्त्र द्वारा अर्घ्य अर्पण कर गन्धादि द्वारा वरुणदेव की पूजा करे। 'ॐ आयाहि पवन' इत्यादि मन्त्र से आवाहन पूर्वक 'ॐ वात' इत्यादि मन्त्र से अर्घ्य अर्पण पूर्वक गन्धादि द्वारा पवनदेव की पूजा करे। 'ॐ आयाहि साम' इत्यादि मन्त्र द्वारा आवाहन करके 'ॐ सोमं राजान' इत्यादि मन्त्र से अर्घ्य प्रदान करके गन्धादि के द्वारा सोमदेव की पूजा करे। 'ॐ आयाहि ईशान' इत्यादि मन्त्र द्वारा आवाहन पूर्वक 'ॐ ईशानाय नमस्य' इत्यादि मन्त्र द्वारा अर्घ्य प्रदान करके गन्धादि द्वारा ईशान की पूजा करे। 'ॐ आयाहि चतुर्म्मुख' इत्यादि मन्त्र से आवाहन करके 'ॐ हिरण्यगर्भः' इत्यादि मन्त्र से अर्घ्य प्रदान कर गन्धादि द्वारा ब्रह्मा की पूजा करे। एवं 'ॐ आयाहि अनन्त' इत्यादि मन्त्र के द्वारा आवाहन पूर्वक 'ॐ नमो अस्तु' इत्यादि मन्त्र से अर्घ्य प्रदान करके गन्धपुष्पादि द्वारा अनन्त देव की पूजा करे ॥१८८-१८७॥

अथ प्रतिष्ठाकर्म्मारम्भः

द्रव्याणि यवत्राण्याहृत्य कृत्वा कृष्णार्च्चनादिकम् ।
वेद्यामालिख्य चक्रादि शय्यादि रचयेत्ततः ॥१९८॥

तथा च तत्रैव—

पाषण्डान् नास्तिकान् सर्व्वान् देवब्राह्मणदूषकान् । दीक्षावहिष्कृतान् सर्व्वान् हेतुवादरतांस्तथा ॥
निवार्य्य प्रारभेत् कर्म्म वैष्णवैर्दीक्षितैः सह ॥१९९॥

आहृत्य सर्व्वद्रव्याणि स्रुक्स्रुवं विष्टराणि च । यज्ञपात्राणि सर्व्वाणि न्यस्य यत्नेन देशिकः॥२००

श्वेतवस्त्रपरीधानः सोष्णीषश्चन्दनोक्षितः । अङ्गुलीयकहस्तश्च सर्व्वालङ्कारभूषितः ॥२०१॥

आत्मानं विष्णुवत् पूज्य गन्धपुष्पादिभिर्गुरुः ।
ध्यात्वा देवं विष्णुरूपं मन्त्रात्मकमथो शुचिः ॥२०२॥

हरिं प्रणम्य विज्ञाप्य मूर्त्तिपानपि पूजयेत् । सितैः पुष्पैर्वस्त्रयुग्मैरङ्गुलीयैरथाङ्गदैः ॥२०३॥

निपुणैः शिल्पिभिः सार्द्धं ततः कर्म्म समाचरेत् । पञ्चगव्येन सत्कृत्य शोध्य कुम्भान् विचक्षणः॥
स्नापयेन्मूर्त्तिपान् पश्चात् कुम्भे कुम्भे तु देशिकः ॥२०४॥

किञ्च—

व्रीहीनाहृत्य देवेशं वासुदेवेन चार्च्चयेत् । क्षिपेच्च नारसिंहेन पातालमुषलेन तु ॥२०५॥

सिद्धार्थकान् क्षिपेद्ध्यायन् सिंहमन्त्रेण मन्त्रयेत् ।
रक्षोघ्नान् पञ्चगव्येन प्रोक्षयेद्भूमिमादरात् ॥२०६॥

---

द्रव्याणि पूजोपकरणादीनि, वेद्याम् अधिवासनमण्डपान्तर्निर्म्मितायाम् । आदिशब्दैर्गृहीतमग्रे व्यक्तं भविष्यति ॥१९८॥

वासुदेवेनेत्यादयो मन्त्राः ॥२०५-२०६॥

---

अथ प्रतिष्ठाकर्म्मारम्भः

अनन्तर यावतीय सामग्री आहरणपूर्वक श्रीकृष्ण की पूजा करके वेदी में चक्रादि अङ्कन करके शय्यादि रचना करनी चाहिये ॥१९८॥

हयशीर्षपञ्चरात्र में लिखित है—पाषण्ड, नास्तिक, देव ब्राह्मण निन्दक, अदीक्षित, एवं हेतुवादिरत,—इन सब व्यक्तियों को दूर से वर्जन पूर्वक यावतीय सामग्री आहरण करके स्रुक्, स्रुव, कुश, एवं यज्ञपात्र आदि यत्नपूर्वक स्थापन करे । पश्चात् दीक्षित वैष्णववृन्द के सहित मिलित होकर कार्य्य में प्रवृत्त होना देशिक का कर्त्तव्य है ॥१९९-२००॥

श्रीगुरुदेव, श्वेतवस्त्र परिधान एवं शिरोदेश में उष्णीष, हस्त में अङ्गुरीयक धारण करके चन्दनाक्त, सर्वालङ्कार से विभूषित एवं पवित्र होकर गन्ध पुष्पादि द्वारा अपने को श्रीविष्णुवत् गन्धादि द्वारा पूजा करें । अनन्तर मन्त्रस्वरूप श्रीविष्णुरूप का ध्यान करके श्रीहरि को प्रणाम एवं विज्ञापन पूर्वक श्वेतपुष्प, वस्त्रद्वय, अङ्गुलीय एवं अङ्गदों के द्वारा मूर्त्तिरक्षकवृन्द की पूजा करें । तत्पश्चात् शिल्पवृन्द के सहित कार्य्य में प्रवृत्त होना चाहिये । विचक्षण देशिक, पञ्चगव्य द्वारा कुम्भ समूह का संस्कार एवं शोधन करके प्रत्येक कुम्भ में मूर्त्तिरक्षक को स्नान करावें ॥२०१-२०४॥

और भी कथित है—व्रीहि आहरण करके वासुदेव मन्त्र से प्रभु की पूजा, नृसिंहमन्त्र से क्षेपण, पाताल

ततस्ताम्रमयं कुम्भं मृण्मयं वा नवं दृढ़म् । जलपूर्णं स्थापयित्वा सरङ्गकरकायुतम् ।
ऐशान्यामर्च्चयेत्तस्मिन् साङ्गं गन्धादिना हरिम् ॥२०७॥
अस्त्रमन्त्रेण करकां शतवारांस्तमर्च्चयेत् । तद्धाराच्छिन्नया सिञ्चेन्मण्डपं तं प्रदक्षिणम् ॥२०८
कुम्भं तं पृष्ठतो नीत्वा कुम्भमन्त्रेण देशिकः ।
व्रीहीन् संस्कृत्य सर्व्वांस्तु कुम्भं तत्रोपरि न्यसेत् ॥२०९॥
पुनः सम्पूजयेद्विष्णुं कलसेषु समाहितः । वस्त्रयुग्मेन कलसमेकेन करकां बुधः ।
छादयित्वा ततो गृह्य करणीं मण्डलीं नयेत् ॥२१०॥
चतुरस्रं चतुर्द्वारं चक्राब्जं षोड़शारकम् । पञ्चवर्णेन चूर्णेन द्वादशारमथापि वा ॥२११॥
वेद्यामेवं लिखित्वा च मण्डपे पूर्व्वदक्षिणे । चतुर्हस्तं चतुष्कोणं मध्ये पङ्कजभूषितम् ।
चतुर्द्वारं तु चूर्णेन स्वस्तिकं मण्डलं लिखेत् ॥२१२॥
तस्योद्ध्वे न्यस्य पर्य्यङ्कं कुशान् संस्तारयेत्ततः ।
योगे योगेति मन्त्रेण गन्धतोयेन प्रोक्षयेत् ॥२१३॥
तूलिकां विन्यसेत्तत्र दिव्यपट्टांशुकान्विताम् । उपाधानद्वयं कृत्वा पार्श्वे गेण्डुकमेव च ।
कपोलधारणं कृत्वा कुर्य्यादूद्ध्वं वितानकम् ॥२१४॥

---

तमधिवासार्थनिर्म्मितं मण्डपम् ॥२०८॥

चक्राब्जसंज्ञं, मण्डपम्, तच्च षोड़शारं द्वादशारं वा चक्रमष्टदलपद्मगर्भं तद्बहिश्चतुरस्रश्चतुर्द्वारं लिखेदिति ज्ञेयम् ॥२११॥

---

मुषल मन्त्र से सिद्धयर्थ विकीरण, ध्यानयोग से, नृसिंह मन्त्र से रक्षोघ्नगण को मन्त्रण, एवं पञ्चगव्य द्वारा यत्नपूर्वक भूमि में प्रोक्षण करना चाहिये । तत्पश्चात् ईशानदिक् में ताम्रगठित वा सुदृढ़ नूतन मृण्मय कुम्भ में सरङ्ग करकायुक्त सलिल पूर्ण करके स्थापन करना चाहिये । पश्चात् उसमें गन्धादि द्वारा अङ्गदेव वृन्द के सहित श्रीहरि की पूजा करनी चाहिये । अनन्तर अस्त्र मन्त्र से शतधा करका पूजा करके दक्षिणावर्त्त भाव से अच्छिन्न धारा द्वारा मण्डप को अभिषिक्त करें। पश्चात् देशिक, पृष्ठदेश में इस कुम्भ को रखकर अधिवासार्थ निर्मित मण्डप में ले जाकर कुम्भमन्त्र से ब्रीहि संस्कार करके तदुपरि कुम्भ स्थापन करें । तत्पश्चात् विज्ञव्यक्ति, समाहित चित्त से पुनर्वार उन सब कुम्भों में श्रीहरि की पूजा करके वस्त्रद्वय के द्वारा कुम्भ एवं एक खण्ड वस्त्र के द्वारा करका को आवृत भाव से लेकर कार्य्यस्थल में उपस्थित हों। अनन्तर वेदी में पञ्चवर्ण चूर्ण द्वारा चतुष्कोण, चतुर्द्वार, शोड़शार वा द्वादशार चक्राब्ज मण्डल अङ्कन करके चूर्ण द्वारा पूर्व दक्षिण मण्डप में चतुर्हस्त, चतुष्कोण, एवं मध्य में पङ्कज भूषित चतुर्द्वार स्वस्तिकमण्डल चित्रित करें । उसके ऊपर पर्य्यङ्क स्थापन करके कुश विस्तार पूर्वक "योगे योगे" इत्यादि मन्त्र से उसमें गन्धोदक प्रोक्षण करना चाहिये । तदनन्तर, उसमें सुन्दर पट्टवस्त्र युक्त तोषक विन्यास करके पार्श्व में उपाधानद्वय (दो तकिया) एवं गण्डदेश धारणार्थ गेण्डूक उपाधानद्वय–दो तकिया, स्थापन पूर्वक ऊद्ध्र्व में वितान (चाँदवा) प्रस्तुत करें ॥२०५-२१४॥

पुष्पमालापरिक्षिप्तं मुक्ताहारोपशोभितम् । कुर्य्यात् पुष्पगृहं हृद्यं मलयागुरुधूपितम् ॥२१५॥
विद्याधिपास्तु सम्पूज्याः शक्त्या दिक्षु विदिक्षु च । विष्णुर्मधुनिहा चैव तथैव च त्रिविक्रमः ।
वामनश्चापि दिक्ष्वेते पूर्व्वाद्यासु व्यवस्थिताः ॥२१६॥
श्रीधरः श्रीहृषीकेशः पद्मनाभस्तथैव च । दामोदरश्च सम्पूज्य आग्नेयादिव्यवस्थिताः ॥२१७
एवमच्चर्य ततः पश्चादैशान्यां स्नानमण्डपे । चतुःस्तम्भयुते रम्ये तन्मध्ये वेदिका शुभा ॥२१८
चतुरस्रा चतुर्दिक्षु जलनिर्गमनान्विता । क्षीरिवृक्षोद्भवं पीठं मध्ये तत्र निवेशयेत् ॥२१९॥

अथ कलसाधिवासनम्

तत्रैव—

स्नानद्रव्याणि सर्व्वाणि समानीय विचक्षणः ।
निक्षिप्य स्नानकुम्भेषु कुम्भांस्तानधिवासयेत् ॥२२०॥
रत्नानि च चतुर्दिक्षु सिद्धद्रव्यान्विताः शुभाः ।
कलसाः स्थापनीयास्तु अभिषेकार्थमादरात् ॥२२१॥
वटोडुम्बरकाश्वत्थ-चम्पकाशोक-श्रीद्रुमान् । पलाशार्ज्जुनप्लक्षांश्च कदम्बवकुलाम्रजान् ।
पल्लवांस्तु समानीय पूर्व्वंकुम्भे विनिक्षिपेत् ॥२२२॥
पद्मकं रोचनां दूर्व्वां दर्भपिञ्जलमेव च । जातिपुष्पं कुन्दपुष्पं चन्दनं रक्तचन्दनं ।
तमालं तगरं चैव वञ्जुलं दक्षिणे न्यसेत् ॥२२३॥

---

तस्य स्नानमण्डपस्य मध्ये या वेदिकास्ति, तत्र तस्यां पीठं निवेशयेत् ॥२१८-२१९॥

कलसाधिवासनादिकं मत्स्य-भविष्यानुक्तमपि भगवता श्रीहयशीर्षेणोक्तत्वादुपयुक्ततया अत्र लिख्यते— स्नानेत्यादिना । 'शातकुम्भमयान्' इत्यादिना कुम्भलक्षणं चोक्तमेवास्ति । सिद्धद्रव्याणि चाग्रे स्वयमेव वक्तव्यानि वटोडुम्बरे न्यस्येदित्यादिना ॥२२०॥

---

अनन्तर पुष्पमाला समाकीर्ण, मुक्ताहार से उपशोभित एवं मलयागुरु धूपित मनोहर पुष्पगृह निर्म्माण करना चाहिये । एवं शक्त्यनुसार दिक् विदिक् में विद्याधिपवृन्द की पूजा करनी चाहिये । पूर्वादि क्रम से चतुर्द्दिक में विष्णु, मधुसूदन, त्रिविक्रम एवं वामन,—इन चारों की पूजा करके अग्न्यादि चार कोणों में श्रीधर, हृषीकेश, पद्मनाभ, एवं दामोदर की पूजा करें । तत्पश्चात् ईशानकोण में स्तम्भ चतुष्टय शोभित मनोहर स्नान मण्डपाभ्यन्तर में चतुष्कोण एवं चतुर्द्दिक में जल प्रणालीयुक्त सुन्दर वेदी प्रस्तुत करें । उक्त वेदी के मध्य में क्षीरिकाष्ठ निर्म्मित पीठ स्थापन करना चाहिये ॥२१५-२१९॥

अथ कलसाधिवासनम्

उक्त ग्रन्थ में वर्णित है—विचक्षण व्यक्ति, यावतीय स्नान सामग्री आहरण करके स्नान कुम्भ समूह में निक्षेप पूर्वक उक्त कुम्भसमूह का अधिवास करें । अभिषेक के निमित्त सिद्धद्रव्य एवं रत्नगर्भ, मङ्गल-कलश समूह को चतुर्द्दिक में यत्नपूर्वक स्थापन करे ॥२२०-२२१॥

पूर्व्वदिक् के कुम्भ में वट, उडुम्बर, अश्वत्थ, चम्पक, अशोक, श्रीद्रुम, पलाश, अर्जुन, प्लक्ष, कदम्ब, वकुल, आम्र,—इन सब वृक्षों के पल्लव, दक्षिणदिक् के कुम्भ में—पद्मक (पद्मकाष्ठ), रोचना, दूर्वा, दर्भ पिञ्जल (कुश के खण्ड), जाति पुष्प, कुन्द कुसुम, चन्दन, रक्तचन्दन, तमाल, तगर, वञ्जुल, पश्चिमदिक्

सुवर्णं रजतं चैव कूलद्वयमृदं तथा । नद्याः समुद्रगामिन्या विशेषाज्जाह्नवीजलम् ।
गोमयञ्च यवान् शालीन् तिलांश्चैव परे न्यसेत् ॥२२४॥
विष्णुपर्णीं श्यामलतां भृङ्गराजं शतावरीम् । गुडुचीं सहदेवीञ्च विन्यसेच्च महौषधीः ॥२२५॥
फलान्युदकयुक्तानि आग्नेय्यां विन्यसेद्घटे । पञ्चगव्यन्तु नैर्ऋत्यां कुम्भे कृत्वाभिमन्त्रितम् ॥२२६
वटाश्वत्थपलाशानां विल्वस्योडुम्बरस्य च । कषायोदकसंयुक्तं वायव्यां कलसं न्यसेत् ॥२२७॥
कुमारीममृताञ्चैव शतमूलीं शतावरीम् । सहदेवीं वचां सिंहीं बलां ब्राह्मीं सुलक्षणाम् ।
ऐशान्यामपरे कुम्भे मङ्गलाख्ये निवेशयेत् ॥२२८॥
वल्मीकमृत्तिकां सप्तस्थानोत्थामपरे न्यसेत् । जाह्नवीबालुकातोयं विन्यसेदपरे घटे ॥२२९॥
वराह-वृषनागेन्द्र-विषाणोद्धृतमृत्तिकाम् । कूलद्वयमृदं नद्यां विन्यसेदपरे घटे ॥२३०॥
मृत्तिकां पद्ममूलस्य कुशस्याप्यपरे घटे । तीर्थपर्व्वतमृद्भिस्तु युक्तमप्यपरे घटे ॥२३१॥
नागकेशरपुष्पञ्च काश्मीरमपरे घटे । चन्दनागुरुकर्पूरैः पूरितं चापरं न्यसेत् ॥२३२॥
वैदूर्य्यं विद्रुमं मुक्तां स्फाटिकं वज्रमेव च । एतान्येकत्र निक्षिप्त्वा स्थापयेद्देवसत्तम ॥२३३॥
नदीनदतड़ागानां सलिलैरपरं न्यसेत् । एकाशीतिपदे चान्यान् मण्डपे कलसान्न्यसेत् ॥२३४
पूरितान् गन्धतोयेन धान्यस्थांस्तास्तु मन्त्रयेत् । श्रीसूक्तेन समस्तेन सर्व्वानेव सकृत् सकृत् ॥२३५

---

परे पश्चिमकुम्भे ॥२२४॥
विष्णुपर्ण्याद्याश्च उत्तरे न्यसेदिति ज्ञेयम् ॥२२५॥
फलानि वदरादीनि वा ॥२२६॥
एकत्र एकस्मिन् घटे ॥२३३॥

---

के कुम्भ में–स्वर्ण, रजत, कुलद्वय की मृत्तिका, समुद्रगामिनी नदी का सलिल, विशेषतः गङ्गाजल, गोमय, यव, शालि धान्य एवं तिल, उत्तरदिक् के कुम्भ में–स्वर्ण, रजत, कुलद्वय की मृत्तिका, समुद्रगामिनी नदी का सलिल, विशेषतः गङ्गाजल, गोमय, यव, शालिधान्य एवं तिल, विष्णुपर्णी, श्यामालता, भृङ्गराज, शतावरी, सहदेवी, महौषधि, फल एवं जल, अग्निकोण के कुम्भ में, नैर्ऋतकोण के कुम्भ में मन्त्रपूत पञ्चगव्य, वायुकोण के कुम्भ में वट, अश्वत्थ, पलाश, विल्व, उडुम्बर के कषाययुक्त डाल, ईशानकोण के मङ्गलघट में कुमारी, अमृता, शतमूली, शतावरी, सहदेवी, वच, सिंही, बला एवं सुलक्षणा ब्राह्मी स्थापन करें ॥२२२-२२८॥

अपर एक घट में सप्त स्थानोत्थ बल्मीकमृत्तिका, एक घट में गङ्गासिकतायुक्त जल, एक घट में वराह वृषनागेन्द्र कर्त्तृक शृङ्गोत्तलित मृत्तिका एवं नदी कुलद्वय की मृत्तिका, एक घट में पद्ममूल मृत्तिका एवं कुशमूल मृत्तिका, एक घट में तीर्थ एवं गिरि मृत्तिका, एक घट में नागकेशर पुष्प एवं कुङ्कुम, एक घट में चन्दन, अगुरु एवं कर्पूरसमूह, हे देवसत्तम ! और एक घट में वैदूर्य्य, विद्रुम, मुक्ता, स्फटिक एवं वज्र, और एक घट में नद नदी एवं तड़ाग का जल रखना चाहिये । अन्य कलस समूह को एकाशीति पद्ममण्डप में रखना चाहिये, एवं उक्त कलस समूह को गङ्गोदक द्वारा पूर्ण करके धान्योपरि स्थापन पूर्वक उक्त समस्त कुम्भ को ही एक एक वार श्रीसूक्तमन्त्र से अभिमन्त्रित करें ॥२२९-२३५॥

अथार्घ्यद्रव्यादि-स्थापनम्

तत्रैव—

कलसानधिवास्यैवमर्घ्यादीन् विनिवेशयेत् ॥२३६॥

यवं सिद्धार्थकं गन्धं कुशाग्रं चाक्षतं तथा। तिलान् फलं तथा पुष्पमर्घ्यार्थं पूर्व्वतो न्यसेत् ॥२३७

पद्मं श्यामलतां दूर्व्वां विष्णुपर्णीं तथा कुशान्। पाद्यार्थं दक्षिणे भागे स्थापयेद्देशिकोत्तमः ॥२३८

स्थापयेत् पश्चिमे भागे मधुपर्कं सुसंवृतम्। कक्कोलकं लवङ्गञ्च तथा जातीफलं शुभम्।

उत्तरे स्थापयेद्भागे द्रव्यमाचमनाय तु ॥२३९॥

आग्नेय्यां स्थापयेत् पात्रं पूर्णं दूर्व्वाक्षतैर्बुधः। नीराजनार्थं देवेश देवदेवस्य सर्व्वदा ॥२४०॥

नैर्ऋत्यामुदकं गन्धयुक्तं स्नानाय विन्यसेत्। उद्वर्त्तनाय वायव्यां गन्धपिष्टं निवेशयेत् ॥२४१

न्यसेदामलकं पात्रे मुरामांसीयुतं शुभम्। सहदेवीं सदाभद्रां कुशाग्रां रजनीं तथा ॥२४२॥

ऐशान्यां विन्यसेत् पात्रे शिरीषं सूर्य्यवर्णिनीम्।

निर्मञ्छनाय देवस्य स्थापकः सुसमाहितः ॥२४३॥

अष्टौ दिक्षु न्यसेद्विद्वान् लौहयष्टिप्रदीपकान् ॥२४४॥

शङ्खं चक्रञ्च श्रीवत्सं कौस्तुभं पङ्कजादिकम्। हेमाद्रिपात्रे कृत्वाथ गोमयेनाथ वा पुनः ॥२४५

नीराजनाय देवस्य तथा वै पुष्पजातयः।

स्थापनीयास्तथा चान्ये माङ्गल्याः स्नानचोदिताः ॥२४६॥

अथ श्रीमूर्त्तेः स्नानमण्डपे प्रवेशनम्

शिल्पिशालां ततो गत्वा गीतवाद्यादिनिस्वनैः। आनयेद्भगवन्मूर्त्ति सह पिण्डिकया ततः ॥२४७

---

ततः शिल्पिशालातः, श्रीमूर्त्ति पिण्डिकासहितामानयेत् ॥२४७॥

---

अथार्घ्यद्रव्यादि-स्थापनम्

उक्त ग्रन्थ में लिखित है—कलस समूह का अधिवास करके अर्घ्यादि विन्यास करे। अर्घ्यार्थ पूर्वदिक् में यव, सिद्धार्थ, गन्ध, कुशाग्र, अक्षत, तिल, फल एवं पुष्प, पाद्यार्थ दक्षिणदिक् में पद्म, श्यामलता, दूर्वा, विष्णुपर्णी एवं कुश, पश्चिमदिक् में सुसंवृत मधुपर्क एवं आचमनार्थ उत्तरदिक् में कक्कोल, लवङ्ग एवं शुभजाती फल स्थापन करना पड़ता है। हे देवेश ! बुधव्यक्ति, देवदेव के नीराजनार्थ अग्निकोण में सर्वदा दूर्वा एवं अक्षत पूर्ण पात्र, स्नानार्थ नैर्ऋतकोण में गन्धजल, उद्वर्त्तन के निमित्त वायुकोण में पात्र के ऊपर पिष्टगन्ध, यथा आमलक (आँवला), मुरामांसी (तालीसपत्र), सहदेवी, सदाभद्रा, कुशाग्र, हरिद्रा, एवं आरत्रिकार्थ ईशानकोण में पात्र के ऊपर शिरीष (सिरस) एवं सूर्य्यवर्णिनी (सूर्य्यकान्त) स्थापन करें। विज्ञव्यक्ति, स्वर्णादि पात्र में यथाक्रम से लौहयष्टि, प्रदीप, शङ्ख, चक्र, श्रीवत्स, कौस्तुभ एवं पद्मादि स्थापन करे। अथवा प्रभु के नीराजनार्थ गोमयोपलिप्त स्थल में पुनर्वार विविध कुसुम एवं स्नान प्रकरणोक्त माङ्गलिक सामग्री समूह स्थापन करें ॥२३६-२४६॥

अथ श्रीमूर्त्तेः स्नानमण्डपे प्रवेशनम्

अनन्तर शिल्पिशाला में जाकर गीत-वाद्यादि के सहित पिण्डिका के सहित श्रीभगवन्मूर्त्ति को आनयन करें। तत्पश्चात् विज्ञ व्यक्ति, स्नानमण्डप के बाहर विंशति कुम्भ सलिल के द्वारा श्रीमूर्त्ति को स्नान

अथ विंशतिकुम्भाद्भिः स्नानमण्डपतो वहिः।
स्नापयित्वा परीक्षेत श्रीमूर्त्ति तां विचक्षणः ॥२४८॥
अथवा शिल्पिशालायां स्नापयित्वा यथाविधि।
प्रवेशयेत् पिण्डिकायां तां विप्रैः स्नानमण्डपम् ॥२४९॥

तथा च भविष्ये—

आचार्य्यो मूर्त्तिपैश्चैव ऋत्विग्भिः सह संयुतैः। विष्णुव्रतधरैः शान्तैः विष्णुशास्त्रानुरञ्जितैः॥२५०
अलोलुपैरहीनाङ्गैरार्य्यदेशसमुद्भवैः। विष्णुभक्तिपरैर्धीरैर्विप्रैर्भागवतैः सह ॥२५१॥
द्वात्रिंशद्भिः षोड़शभिः अष्टाभिस्तु क्रमेण तु। आनयित्वा तु देवेशं स्थापयेत् स्नानमण्डपे ॥२५२

हयशीर्षपञ्चरात्रे—

अत्र संज्वालयेद्वह्निं वैष्णवं विधिना गुरुः। ऐशान्यां गुरुकुण्डे तु प्राङ्मुखोदङ्मुखोऽपि वा ॥२५३
तत्रैव होमयेद्विष्णुं गायत्र्या घृतमादरात्। अष्टोत्तरशतं हुत्वा सम्पातविधिना सुधीः ॥२५४
सम्पाताज्येन कलसान् प्रोक्ष्य देशिकसत्तमः। लिप्तायां कारुशालायामुपतिष्ठेत संयतः ॥२५५॥
ब्राह्मणैर्वैष्णवैः सार्द्धं मूर्त्तिपैः शिल्पिभिः सह। महता ब्रह्मघोषेण सहायैर्बलवत्तरैः ॥२५६॥

---

विंशतिकुम्भजलेन स्नानमण्डपाद्बहिः स्नापयित्वेति केषाञ्चित् सतां मतं लिखितम् ॥२४८॥

श्रीहयशीर्षभगवन्मतं लिखति— अथवेति। तच्च अग्रे तद्वचनतो व्यक्तं भावि, विप्रैः कृत्वा तां भगवन्मूर्त्ति पिण्डिकासहितां स्नानमण्डपं प्रवेशयेत् ॥२४९॥

अष्टाभिस्त्वित्यत्र तु-शब्दो वार्थे। ततश्च विकल्पो मुख्यकल्पाशक्तावल्पसंख्यब्राह्मणवरणानुसारेण श्रीमूर्त्त्यनुसारेण वा ज्ञेयः। क्रमेणानीय, न हठादेकदैव वेगेनेत्यर्थः ॥२५२॥

वैष्णवं मण्डपमध्ये शय्यायां श्रीविष्णुलक्ष्म्याः सङ्गमाद्रेतोरूपोऽग्निरुद्भूत इति भावनया जनितो यस्तं, एतद्विशेषश्च दीक्षाविधौ पूर्व्वं लिखितोऽस्ति। प्राङ्मुखः उदङ्मुखो वा, विसर्गलोपेऽपि सन्धिरार्षः ॥२५३॥

कारुः—शिल्पी ॥२५५॥

---

कराकर परीक्षा करें, किंवा विधानानुसार शिल्पिशाला में स्नान कराकर पिण्डिका के सहित श्रीमूर्त्ति को विप्रवृन्द के द्वारा स्नान मण्डप में प्रवेश करावे ॥२४७-२४९॥

भविष्यपुराण में लिखित है—आचार्य्य, मूर्त्तिप, ऋत्विग्वृन्द के सहित समवेत होकर द्वात्रिंशत् संख्य, षोड़शसंख्य, वा अष्टसंख्य विप्र के द्वारा प्रभु को लाकर स्नान मण्डप में स्थापन करें। यह सब ब्राह्मण, विष्णु व्रतधारी, शान्त, विष्णुशास्त्रानुरागी, अलोलुप, अहीनाङ्ग आर्य्यदेशक, विष्णुभक्ति परायण, धीर एवं भागवत हों ॥२५०-२५२॥

हयशीर्ष पञ्चरात्र में लिखित है— गुरुदेव इस मण्डप में पूर्व मुख वा उत्तर मुख होकर बैठें, और ईशानकोण में गुरुकुण्ड में यथाविधि वैष्णवाग्नि प्रज्वलित करें। सुधीगुरुदेव, वहाँ पर श्रीविष्णु के निमित्त गायत्री के द्वारा घृत होम करें। देशिकश्रेष्ठ सम्पात विधानानुसार एक शत अष्ट होम करके घृत सम्पात द्वारा कलससमूह को सेचनपूर्वक गोमयलिप्त शिल्पिशाला में आकर संयतचित्त से अवस्थान करें ॥२५३-५५

तदनन्तर आचार्य्य ब्राह्मण, वैष्णव एवं सहायस्वरूप बलवान् मूर्त्तिरक्षक एवं शिल्पिगण के सहित

काहलशङ्खशब्दैश्च भेरीमुरजनिस्वनैः। वीणावेणुस्वनैर्हृद्यदिव्ययन्त्रस्वनैस्तथा।
आचार्य्यः प्राङ्मुखो भूत्वा कुर्य्यात् कौतुकबन्धनम् ॥२५७॥
वैष्णवे सिपिविष्टेति गौरसिद्धार्थकेन तु। ऊर्णामयेन सूत्रेण निम्बदूर्व्वान्वितेन च।
दुकूलवस्त्रैर्बद्ध्वा तु दक्षिणे बध्नीयात् करे ॥२५८॥
देशिकस्यापि कर्त्तव्यं करे कौतुकबन्धनम् ॥२५९॥
ततो विकल्प्य देवास्त्रं तण्डुलैः पञ्चरङ्गकैः।
तन्मध्ये प्रतिमां स्थाप्य स्नाप्य चैव यथाविधि। २६०॥
वस्त्रयुग्मेन संछाद्य पूज्य गन्धादिना तु ताम्। चामरैस्तालवृन्तैश्च वीजयेन्मङ्गलान्विताम् ॥२६१
एरकायां निवेश्याथ प्रतिमां संस्तवेत्ततः ॥२६२॥

अथ तत्र स्तवः

नमस्तेऽर्च्चे सुरेशानि प्रणीते विश्वकर्म्मणा। प्रभाविताशेषजगद्धात्रि तुभ्यं नमो नमः। २६३
त्वयि सम्पूजयामीशं नारायणमनामयम्। रहिता शिल्पदोषैस्त्वमृद्धियुक्ता सदा भव।
एवं विज्ञाप्य प्रतिमां नयेत्तां स्नानमण्डपम् ॥२६४॥ इति।

कौतुकं—मङ्गलसूत्रम् ॥२५७॥

देवास्त्रं चक्रं, विकल्प्य विरचय्य ॥२६०॥

मङ्गलानि दधिदूर्व्वादीनि, तैरन्वितां, तानि निवेद्येत्यर्थः। तथा च मात्स्ये—'मङ्गलानि निवेद्यानि' इत्यादि, तच्चाग्रे माङ्गल्ये लेख्यम्। मङ्गलान्वितमिति क्लीवैकवचनान्तपाठोऽपि, ततश्च क्रियाविशेषणम्, अर्थश्च स एव ॥२६१॥

एरका तृणविशेषः, तन्मयास्तरणे श्रीमूर्त्ति स्थापयित्वा सम्यक् स्तवेत् स्तुवीत ॥२६२॥

स्तुतिमेवाह—नमस्ते इति द्वाभ्याम्। प्रकर्षेण भावितस्य स्वयमेवोत्पादितस्य अशेषजगतो धात्रि धारण-पोषणकर्त्रि। यद्वा, प्रभावितं प्रभावयुक्तं कृतमशेषं यया, सा चासौ जगद्धात्री च, तत् सम्बोधनम् ॥२६३-६४॥

समवेत होकर महावेद शब्द एवं काहल, शङ्ख, भेरी, मुरज, वीणा वेणु एवं अन्यान्य वाद्ययन्त्रादि की मनोहर ध्वनि के सहित पूर्वाभिमुख में मङ्गलसूत्र बन्धन करें। वैष्णव के पक्ष में 'सिपिविष्ट' मन्त्र से पट्ट-वस्त्र में करके गौरसिद्धार्थ, ऊर्णामय सूत्र, निम्ब, दूर्वा,-यह सब दक्षिण हस्त में बाँधकर देशिक(आचार्य) के हस्त में भी उस प्रकार मङ्गलसूत्र बन्धन करना चाहिये ॥२५६-२५९॥

तदनन्तर पञ्चवर्ण तण्डुलचूर्ण द्वारा सुदर्शन विरचन पूर्वक उसमें यथाविधि प्रतिमा को स्थापन कर एवं स्थापन पूर्वक वस्त्रद्वय द्वारा आवृत करके गन्धादि द्वारा पूजा करनी चाहिये एवं चामर तथा तालवृन्त द्वारा मङ्गलमयी प्रतिमा को व्यजन करना चाहिये ॥२६०-२६१॥

पश्चात् प्रतिमा को एरकाख्य तृणोपरि स्थापन करके स्तुति करे ॥२६२॥

अथ तत्र स्तवः

हे अर्च्चे! हे सुरेशानि! विश्वकर्म्मा ने आपको निर्म्माण किया है। आप स्वयं आविर्भूत, निखिल जगद्धात्री एवं पोषणकारिणी हैं। आपको नमस्कार नमस्कार ॥२६३॥

अनामय ईश्वर नारायण की पूजा आपमें ही करता हूँ। आप शिल्पदोष रहिता और सदा समृद्धिमती होओ। प्रतिमा की इस प्रकार सार्थक स्तुति करके प्रतिमा को स्नान मण्डप में आनयन करना कर्त्तव्य है। ॥२६४॥

अथ शिल्पिपरितोषणम्

तत: सपरिवारांश्च श्रीमूर्त्यांविर्विधायिनः ।
शिल्पिनोऽभ्यच्चर्य विविधैर्द्रव्यैर्वाक्यैश्च तोषयेत् ॥२६५॥

तथा च भविष्ये—

ततो विष्णुं समानीय सुधौतं सुपरीक्षितम् । शिल्पिनः पूजयेत् पश्चाद्वस्त्रालङ्करणादिभिः ।
अन्ये च पूजनीयाश्च ये चात्र परिचारकाः ॥२६६॥

मात्स्ये—

आनीय लिङ्गमर्च्चां वा शिल्पिनः पूजयेद्बुधः । वस्त्राभरणरत्नैश्च ये च तत्परिचारकाः ।
क्षमध्वमिति तान् ब्रूयाद्यजमानो ह्यतःपरम् ॥२६७॥

हयशीर्षपञ्चरात्रे—

पूजयित्वा तु प्रतिमां शिल्पिनं तोषयेत्ततः । गन्धपुष्पादिभिर्विप्रं तोषयेत् कटकादिभिः ॥२६८
सर्व्वेऽथ कर्म्मिणस्तस्यास्तस्मिन् काले पृथक् पृथक् ।
क्षमापयीत तान् सर्व्वान् प्रियप्रश्नेन सर्व्वथा ॥२६९॥ इति ।

अथ स्नपनम्

कुशाद्यास्तरणे न्यस्य पीठे वा स्नापयेत्ततः । दिव्यवाद्यादिना पञ्चकाषायसलिलादिभिः ॥२७०

---

वाक्यैश्च पश्चात् विविधैः क्षमध्वमित्यादिरूपैः ॥२६५॥

पूजयित्वेति शिल्पिशालायां पूजानन्तरमेव शिल्पितोषणमभिप्रेतम् ॥२६८॥

कुशैः, आदि-शब्दात् कोमलवंशदलादिभिर्यदास्तरणं शय्याविशेषस्तस्मिन् न्यस्य श्रीमूर्त्तिम् । एतच्च 'प्रागग्रैर्दर्भवंशैस्तु राजन् दिव्यजलैः शुभैः' इत्यादिनाधिवासनमण्डपान्तर्यन शय्याविरचणं भविष्योक्तं, तदनुसारेण केषाञ्चिच्छिष्टानां सम्मतं लिखितम् । भद्रपीठे वेति च हयशीर्षोक्तानुसारेण । अत्र च यथात्म-

---

अथ शिल्पिपरितोषणम्

पश्चात् श्रीमूर्त्ति के प्रादुर्भावकारी, सपरिवार शिल्पिगण की पूजा करके विविध सामग्री एवं वचन द्वारा उनको सन्तुष्ट करना चाहिये ॥२६५॥

तद्विषय में भविष्य पुराण में लिखित है—अनन्तर सुप्रक्षालित सुपरीक्षित श्रीविष्णु को आनयनपूर्वक वस्त्र भूषणादि द्वारा शिल्पी की पूजा करे एवं तत्रत्य अन्यान्य परिचारकवर्ग की भी पूजा करनी चाहिये । ॥२६६॥

मत्स्यपुराण में लिखित है—विज्ञव्यक्ति, लिङ्ग वा प्रतिमा आनयन पूर्वक वस्त्रालङ्कार प्रदान करके शिल्पी एवं परिचारकवर्ग की पूजा करें । अनन्तर क्षमध्वम्' 'क्षमा करो' इस वाक्य से सबके निकट क्षमा प्रार्थना करें ॥२६७॥

हयशीर्षपञ्चरात्र में लिखित है—प्रतिमा की पूजा करके एवं शिल्पी को सन्तुष्ट करने के पश्चात् गन्ध, पुष्पवलयादि द्वारा ब्राह्मणों को सन्तुष्ट करना चाहिये ॥२६८॥

उस समय कुशल-प्रश्न के द्वारा समस्त प्रतिमा-कर्मकारगण के निकट पृथक् पृथक् प्रकार से क्षमा प्रार्थना करनी चाहिये ॥२६९॥

अथ स्नपनम्

कुशास्तरण, कुशासन वा पीठ में प्रतिमा को स्थापन करके अतिउत्तम वाद्यध्वनि के सहित पञ्चकषाय जल से स्नान कराना चाहिये ॥२७०॥

तथा च भविष्ये—

स्नपनं तु ततः कार्य्यं दिव्यमङ्गलनादितम्। यथानुरूपैर्विविधैर्वादित्रनिनदैः शुभैः।
काषायैः पञ्चगव्यैश्च तीर्थवल्मीकमृज्जलैः ॥२७१॥

अथ तत्र मन्त्राः

समुद्रज्येष्ठा सलिलस्य मध्याद्,-या आपो दिव्या उत वा श्रवन्ति।
यासां राजा वरुणो याति मध्ये, यासु राजा वरुणो यासु सोमः ॥२७२॥ इति।

मात्स्ये—

ततो लिङ्गमथार्च्चां वा नीत्वा स्नपनमण्डपम्। गीतमङ्गलशब्देन स्नपनं तत्र कारयेत् ॥२७३
पञ्चगव्यैः कषायेण मृद्भिर्भस्मोदकेन च। शौचं तत्र प्रकुर्व्वीत वेदमन्त्रचतुष्टयात् ॥२७४॥

हयशीर्षपञ्चरात्रे—

ध्रियमाण-वितानेन ब्रह्मघोषेण तां बुधः। तत्र पीठे समारोप्य भद्रं कर्णेति कीर्त्तयन्।
स्नापयेच्छुद्धतोयेन शुद्धवत्या तु देशिकः ॥२७५॥
स्नापिता गन्धतोयेन शिल्पिदोषैर्विमुच्यते। मन्त्रैर्गन्धादिनाभ्यर्च्च्य च्छादयेच्छुद्धवाससा ॥२७६

---

सम्प्रदायमेत्र व्यवहर्त्तव्यम्, एवमन्यत्राप्यूह्यम्। दिव्येन वाद्येन, आदि-शब्दाद्गीतेन नृत्येन वेदघोष-नाम-संकीर्त्तनादिना च। पञ्चकषायाश्च वटाश्वत्थपलाशविल्वोडुम्बरास्तैः संस्कृतजलेन। आदि-शब्दात् पञ्चगव्यादि। एतच्चाग्रे व्यक्तमेव भावि ॥२७०॥

काषायैः पञ्चकषायजलैः, पञ्चगव्यैस्तीर्थजलैर्वल्मीकमृज्जलैश्चेत्येवं चतुर्भिः ॥२७१॥

समुद्रज्येष्ठा इत्यादिचतुर्मन्त्रैः क्रमेण स्नपनमिति ज्ञेयम् ॥२७२॥

पञ्चगव्यैः पञ्चकषायैश्च तीर्थादिमृद्भिः भस्मोदकेन चेत्येवं चतुर्भिः। समुद्रज्येष्ठा इत्यादिवेदमन्त्रचतुष्टयात् क्रमेण स्नपनं कारयेत् ॥२७४॥

शुद्धवत्या मन्त्रेण ॥२७५॥

---

भविष्यपुराण में लिखित है— अनन्तर अत्युत्तम मङ्गलशब्द एवं यथायथ अत्युत्तम विविध वाद्यध्वनि के सहित पञ्चकषाय, पञ्चगव्य, तीर्थोदक, वल्मीक मृत्तिका एवं जल के द्वारा स्नान कराना चाहिये ॥२७१

अथ तत्र मन्त्राः

समुद्र गर्भ से जिस सलिल की उत्पत्ति हुई है, जो दिव्य जल सतत प्रवाहित हो रहा है। वरुणदेव सलिल के अधिपति हैं, एवं जिस सलिल में वरुणदेव एवं सोम अधिष्ठित हैं, उसी जल से स्नान कराता हूँ। इस मन्त्र चतुष्टय का अर्थानुसन्धान करके स्नान कराना चाहिये ॥२७२॥

मत्स्यपुराण में लिखित है - अनन्तर लिङ्ग वा प्रतिमा को स्नान मण्डप में आनयन पूर्वक सङ्गीतादि मङ्गल शब्द के सहित स्नान कराना चाहिये। पञ्चगव्य, पञ्चकषाय, मृत्तिका एवं भस्मोदक द्वारा वेदमन्त्र चतुष्टय के सहित यथारीति क्रमशः स्नान कराना चाहिये ॥२७३-२७४॥

हयशीर्ष पञ्चरात्र में कथित है— विचक्षण देशिक चन्द्रातप धारणपूर्वक वेदध्वनि करते करते प्रतिमा को पीठ में स्थापन करें, एवं 'भद्रं कर्णेति' मन्त्र कीर्त्तन पूर्वक शुद्धवती मन्त्र द्वारा विशुद्ध जल से स्नान करावे। गङ्गोदक के द्वारा स्नान कराने से शिल्पी दोष शून्य होता है। समन्त्र गन्धादि द्वारा पूजा करके शुद्ध वस्त्र के द्वारा आच्छादित करें। २७५-२७६॥

अथ नेत्रोन्मीलनम्

ततश्चोन्मीलयेन्नेत्रे तन्मन्त्रेण विचक्षणः । तयोश्च ज्योतिरुत्कीर्य्य शुभां दृष्टिं प्रकल्पयेत् ।।२७७

तथा च मात्स्ये—

देवं प्रस्तरणे कृत्वा नेत्रे ज्योतिः प्रकल्पयेत् ।।२७८।।

हयशीर्षपञ्चरात्रे च—

यजमानस्ततो भक्त्या देशिकं परितोषयेत् । कांस्यदोहां वस्त्रकण्ठां ताम्रपृष्ठां पयस्विनीम् ।।२७९

रौप्याङ्घ्रिं स्वर्णशृङ्गीं तां सुशीलां तरुणीं शुभाम् ।

प्रणम्य विधिना धेनुं दद्याद्वाग्भिः क्षमापयेत् ।।२८०।।

अवधार्य्य जगच्छान्तिं नेत्रे चोन्मीलयेद्बुधः ।

चित्रं देवेति मन्त्रेण ज्योतिर्देवस्य चोत्किरेत् ।।२८१।।

अग्निज्योतीतिमन्त्रेण ज्ञात्वा दृष्टिं प्रकल्पयेत् । दृष्टिभेदांस्तु सकलान् वर्णयिष्ये तवोपरि ।।२८२

तथा च तत्रैव लेप्यार्च्चास्थापनप्रसङ्गे —

चित्रं देवेति-मन्त्रेण सौम्यां दृष्टिं तु कारयेत् ।।२८३।।

दृष्टयो बहुधा नाट्यशास्त्रेषु परिकीर्त्तिताः । किं त्वत्रोद्देशतो वक्ष्ये दृष्टीनां लक्षणं द्विज ।।२८४

हसिता घूर्णिता क्षिप्ता तथान्तर्वेदनातुरा । विदिष्टा लज्जिता क्रूरा प्रसन्ना मदनातुरा ।।२८५।।

---

उत्कीर्य्य उज्ज्वाल्य दृष्टिभेदान् ज्ञात्वा दृष्टिं शुभां प्रकल्पयेदित्यर्थः ।।२७७।।

हसिताघूर्णितादीनामवलोकनभेदेनेषदवान्तरभेदः कल्पयितव्यः ।।२८५।।

---

अथ नेत्रोन्मीलनम्

विज्ञ व्यक्ति, तत्पश्चात् नेत्रमन्त्र के द्वारा नयनद्वयोन्मीलन पूर्वक चक्षुर्द्वय की ज्योतिः प्रज्वालित करके शुभदृष्टि की प्रकल्पना करें ।।२७७।।

मत्स्यपुराण में उक्त है—प्रभु को प्रस्तरण प्रस्तर की चौकी में करके नेत्रद्वय को उन्मीलित करना चाहिये ।।२७८।।

हयशीर्ष पञ्चरात्र में लिखित है– उसके बाद यजमान भक्तिपूर्वक आचार्य्य को सन्तुष्ट करे। वह एक कांस्यक्रोड़ा (काँसी की गोद वाली) वस्त्रकण्ठा (गले में वस्त्र पड़ी) ताम्रपृष्ठा (ताँबे की पीठ वाली) दुग्धवती, रजतखुरा, सुवर्णशृङ्गी, सोने के सींग वाली, सुशीला, तरुणी, और मनोहर धेनु लाकर यथाविधि उसको गुरु के हाथ में अर्पण करके यथायोग्य वाक्य से क्षमा प्रार्थना करे ।।२७९-२८०।।

अनन्तर विचक्षण व्यक्ति, जगत् को प्राप्त होने के निमित्त नयनद्वय उन्मीलन पूर्वक 'चित्रं देवेति' इत्यादि मन्त्र से प्रतिमा की ज्योतिः प्रकाश और "अग्नि ज्योतिः" इत्यादि मन्त्र से विशेष विचार सहित दृष्टि की कल्पना करें ।।२८१।।

'अग्नि ज्योति' मन्त्र से विशेष विवेचना करके दृष्टि की कल्पना करे। अधुना तुम्हारे समीप में दृष्टिभेद का वर्णन करता हूँ। हयशीर्ष पञ्चरात्र के लेप्यमूर्त्ति स्थापन प्रसङ्ग में लिखित है—'चित्रं देव इति' मन्त्र से सौम्या दृष्टि की कल्पना करनी चाहिये। नाट्यशास्त्र में अनेक प्रकार दृष्टि का वर्णन है। किन्तु हे द्विज ! अधुना प्रसङ्गतः उन सबके मध्य में कतिपय के लक्षण वर्णन करता हूँ। हसित, घूर्णित, क्षिप्त, अन्तर्वेदनातुर, विद्विष्ट, लज्जित, क्रूर, प्रसन्न, मदनातुर, लज्जित किन्तु ईषत् कम्पित, तृप्त, दीन, अन्तर्निहित

लज्जिता कम्पिता तृप्ता दीनान्तर्निहिता तथा।
विशालान्तरविक्षिप्ता ऊर्द्ध्वक्षिप्ता सुर्वणिता ॥२८६॥
पार्श्वावलोकिनी चाधःक्षिप्ता नासाग्रगोचरा। समावलोकिनी क्रान्ता योगदृष्टिस्तथा शुभा॥२८७
बीभत्सा करुणालोका ईषत्क्षिप्ता च केकरा। विभ्रान्ता लूलिता चान्तःकोपहर्षसमन्विता।
एवं ज्ञात्वा दृष्टिभेदेन् प्रतिमासु प्रयोजयेत् ॥२८८॥ इति।

अथ नेत्राभ्यञ्जनम्

तत्रैव—

ततः शुक्लानि पुष्पाणि घृतसिद्धार्थकं तथा। दूर्व्वां कुशाग्रं देवस्य दद्याच्छिरसि देशिकः।
पठन् रक्षोहनं सर्व्वमन्त्रमाथर्व्वणं तथा ॥२८९॥
रौप्यं भाजनमादाय मधुरत्रयसंयुतम्। मधुवातेति मन्त्रेण मन्त्रयित्वाष्टधा पुनः ॥२९०॥
शलाकया सुवर्णस्य नेत्रे चाभ्यञ्जयेद्गुरुः। हिरण्यगर्भमन्त्रेण इमं मे इति कीर्त्तयेत् ॥२९१॥

अथार्घ्यार्पणादि

समर्प्य चार्घ्यं देवाय या दिव्या आप इत्यतः। इन्द्रादिभ्यो बलिं दद्यात् सिद्धार्थघृतपायसैः ॥२९२

अथार्घ्यद्रव्याणि

मात्स्ये—

दध्यक्षतकुशाग्राणि क्षीरं दूर्व्वा तथा मधु।
यवाः सिद्धार्थकास्तद्वदष्टाङ्गोऽर्घ्यः फलैः सह ॥२९३॥ इति।

---

अक्षताश्चात्र खण्डतण्डुलाः, भविष्योक्तार्घ्यद्रव्याणि च पूर्व्वं नित्यपूजायामर्घ्यप्रसङ्गे लिखितानि सन्ति। भविष्य-हयशीर्षोक्तार्घ्यद्रव्यभेदश्च फलादिभेदं कल्पयित्वा सोढ़व्यः, एवमन्यत्रापि ॥२९३॥

---

विशाल, अन्तरविक्षिप्त, ऊर्द्ध्वक्षिप्त, सुर्वणित, पार्श्वावलोकन, अधःक्षिप्त, नासाग्रगोचर, समावलोकन, क्रान्त, योगदृष्टि, शुभ, वीभत्स, करुणावलोक, ईषत्क्षिप्त, केकर, विभ्रान्त, लुलित, अन्तःकोप एवं हर्ष-समन्वित,–इस प्रकार दृष्टिभेद अनेक प्रकार हैं। यह सब जानकर प्रतिमा में तदनुसार दृष्टि की कल्पना करनी चाहिये ॥२८३-२८८॥

अथ नेत्राभ्यञ्जनम्

उक्त ग्रन्थ में लिखित है—अनन्तर देशिक, अथर्वोक्त रक्षोघ्न मन्त्र पाठ करके प्रतिमा के शिरोदेश में घृत, सिद्धार्थ, दूर्वा एवं कुशाग्र अर्पण करें। तत्पश्चात् मधुरत्रय विशिष्ट रजतपात्र लेकर 'मधुवाता' इत्यादि मन्त्र से आठ बार अभिमन्त्रित सुवर्ण शलाका के द्वारा दोनों नेत्र अभ्यञ्जन और हिरण्यगर्भ मन्त्र पाठ पूर्वक 'इमं मे' वाक्य उच्चारण करें ॥२८९-२९१॥

अथार्घ्यार्पणादि

अनन्तर 'या दिव्या आपः' मन्त्र से प्रभु को अर्घ्य अर्पण करके इन्द्र प्रमुख देववृन्द के निमित्त सिद्धार्थ, घृत एवं पायस द्वारा बलि प्रदान करनी चाहिये ॥२९२॥

अथार्घ्यद्रव्याणि

मत्स्य पुराण में लिखित है—फल के सहित दधि, आतप, तण्डुल, कुशाग्र, दुग्ध, दूर्वा, मधु, यव एवं सिद्धार्थ,–यह सब एकत्र करके अर्घ्य प्रदान करे। इसको अष्टाङ्ग अर्घ्य कहते हैं ॥२९३॥

अथ माङ्गल्याचरणामङ्गलनिवारणञ्च

देवं पुष्पैरलङ्कृत्य धूपयित्वा प्रणम्य च ।
परिधाप्य च वस्त्रे द्वे ब्राह्मणान् स्वस्ति वाचयेत् ॥२९४॥
तेभ्योऽथ दक्षिणां दत्त्वा होमाचार्य्याय गामपि । आवाह्य मन्त्रयेद्देवं नमो भगवते इति ॥२९५
विलिखन् काञ्चनेनाथ श्रीमूर्त्ति मङ्गलानि तु । कारयेद्गीतवाद्यादीन्यमाङ्गल्यञ्च वारयेत् ॥२९६

तथा च भविष्ये—

अर्घ्यं दत्त्वा नमस्कृत्य आचर्चयित्वा यथाक्रमम् । दत्त्वा सगुग्गुलं धूपं देवदेवस्य धीमतः ।
प्रच्छाद्य वस्त्रयुग्मेन ततः कार्य्यं तु लक्षणम् ॥२९७॥

मात्स्ये—

सर्व्वतस्तु बलिं दत्त्वा सिद्धार्थघृतपायसम् । शुक्लपुष्पैरलङ्कृत्य घृतगुग्गुलधूपितम् ।
विप्रेण वाचनं कुर्य्यात् दत्त्वा शक्त्या च दक्षिणाम् ॥२९८॥
गामेकां कनकं तद्वत् स्थापकाय निवेदयेत् ।
लक्षणं कारयेद्भक्त्या मन्त्रेणानेन वै द्विजः ॥२९९॥

तत्र मन्त्रः

ॐ नमो भगवते तुभ्यं शिवाय हरये नमः । हिरण्यरेतसे विष्णो विष्णुरूपाय ते नमः ॥३००
मन्त्रोऽयं सर्व्वदेवानां नेत्रज्योतिःस्वपि स्मृतः । एवमामन्त्र्य देवेशं काञ्चनेन विलेखयेत् ॥३०१॥
मङ्गलानि निवेद्यानि ब्रह्मघोषञ्च गीतकम् । ऋद्ध्यर्थं कारयेद्विद्वानमाङ्गल्यनिवारणम् ॥३०२

लक्षणं काञ्चनेन लिखनादि, तच्च श्रीवत्सलक्षणादि ॥२९७॥

अथ माङ्गल्याचरणमङ्गलनिवारणञ्च

अनन्तर श्रीप्रभु को पुष्प के द्वारा विभूषित करके धूपदान, नमस्कार, एवं वसनद्वय (उत्तरीय परिधेय) परिधान कराने के पश्चात् ब्राह्मणवृन्द के द्वारा स्वस्ति वाचन कराना चाहिये। उसके बाद उन सब ब्राह्मणों को दक्षिणा और आचार्य्य को एक धेनु दान करे। तत्पश्चात् प्रभु को आवाहन और 'नमो भगवते' इस वाक्य से आमन्त्रण करे ॥२९४-२९५॥

अनन्तर स्वर्ण द्वारा श्रीमूर्त्ति एव मङ्गलचिह्नादि लिखे। पश्चात् गीतवाद्य के सहित अमङ्गल निवारण करना चाहिये ॥२९६॥

भविष्य पुराण में लिखित है— बुद्धिमान् व्यक्ति, प्रभु को अर्घ्य प्रदान कर क्रमशः प्रणाम, पूजा, एवं गुग्गुलु धूप समर्पण करके वस्त्रद्वय से आच्छादित करके स्वर्ण द्वारा लिखे ॥२९७-२९८॥

मत्स्यपुराण में उक्त है—समन्तात् (चारों ओर) सिद्धार्थ, घृत, पायस, द्वारा बलि अर्पण पूर्वक श्वेत पुष्प से विभूषित एवं घृत, गुग्गुलु धूप से धूपित करके विप्र द्वारा स्वस्ति वाचन करावे। तत्पश्चात् स्थापक को शक्त्यनुसार दक्षिणा प्रदान कर एक गौ एवं काञ्चन अर्पण करे। बाद में द्विज, वक्ष्यमाण मन्त्र से काञ्चनद्वार विलिखन करें ॥२९९॥

तत्र मन्त्रः

हे भगवन् ! आप कल्याणमय श्रीहरि हैं, आपको प्रणाम है। हे विष्णो ! आप हिरण्यरेता, विष्णुरूपी हैं, आपको नमस्कार है। समस्त देवताओं की नेत्रज्योतिः कल्पना करने के समय ही इस मन्त्र की

अथ पुनर्विशेषतः स्नपनम्

हस्तमात्रमिते भद्रपीठे क्षीरितरूद्भवे । विन्यस्य स्नापयेद्देवं पञ्चगव्यादिभिस्ततः ॥३०३॥

मात्स्ये—

गजाश्वरथ्यावल्मीकवराहोत्खातमण्डलात् । अग्न्यागारात्तथा तीर्थाद्ध्रदाद्गोमण्डलादपि ।
कुम्भेषु मृत्तिकां दद्यादुद्धृतासीति मन्त्रवित् ॥३०४॥
———— शन्नो देवीत्यपां मन्त्र आपो हिष्ठेति या ऋचः ।
सावित्र्यादाय गोमूत्रं गन्धद्वारेति गोमयम् ॥३०५॥
आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि । तेजोऽसीति घृतं तद्वद्देवस्य त्वेति चोदकम् ॥
कुशमिश्रं जपेद्विद्वान् पञ्चगव्यं भवेत्ततः ॥३०६॥
स्नाप्याथ पञ्चगव्येन दध्ना शुद्धेन वै ततः । दधिक्राव्णेति मन्त्रेण कर्त्तव्यमभिमन्त्रणम् ॥३०७
आप्यायस्वेति पयसा तेजोऽसीति घृतेन च । मधुवातेति मधुना ततः पुष्पोदकेन च ॥
सरस्वत्यै भैषज्येन कार्य्यं तस्याभिमन्त्रणम् ॥३०८॥

---

क्षीरितरवः क्षीरयुक्तवृक्षा उडुम्बरादयस्तदुद्भवे ॥३०३॥

मन्त्रविदित्युक्तम्; तन्मन्त्रानेवाभिव्यञ्जयति— शन्न इति । अपां मन्त्रो यः, याश्च आपो हिष्ठेत्यृचः, त एव स्नाने मन्त्रा इत्यर्थः । अत्र पञ्चगव्य-पञ्चकषायेणेत्यादि-पूर्व्वलिखित-मात्स्यवचनात् पञ्चगव्यादिभिश्चतुर्भिः समुद्रज्येष्ठा इत्यादि-मन्त्रचतुष्टयेन यथाक्रमं पूर्व्ववदादौ स्नपनमिति केषाञ्चित् सतां मतम् । अन्यानपि दर्शयति—सावित्र्यादिना ॥३०४-३०५॥

कुशमिश्रमुदकं च देवस्य त्वेति जपेदभिमन्त्रयेत् ॥३०६॥

अथ जपानन्तरं, पञ्चगव्येन स्नापयित्वा पञ्चामृतस्नपनमाह— दध्नेत्यादि ॥३०७॥

अत्र च शर्करास्थाने पुष्पोदकं ज्ञेयम् । तत्र सरस्वत्यै भैषज्येनेति मन्त्रः । एव सर्व्वत्रोह्यम् ॥३०८॥

---

आवश्यकता है । बुध व्यक्ति, इस रीति से देवेश को आमन्त्रण करके स्वर्ण द्वारा निवेदन योग्य (श्रीवत्स-चिह्नादि) मङ्गलचिह्न लिखकर सम्पद् सिद्धि लाभार्थ (ऋद्धचर्थ) वेदपाठ एवं गीतादि शब्द के द्वारा अमङ्गल निवारण करें ॥३००-३०२॥

अथ पुनर्विशेषतः स्नपनम्

अनन्तर प्रभु को उडुम्बर काष्ठ निर्म्मित एक हस्त परिमाण भद्रपीठ में स्थापन पूर्वक पञ्चगव्यादि द्वारा स्नान कराना चाहिये ॥३०३॥

मत्स्यपुराण में वर्णित है—'उद्धतासि' इस मन्त्र से मृत्तिका प्रदान करे । हस्ती वा अश्वोत्खात मृत्तिका पञ्चस्थ मृत्तिका, वल्मीक मृत्तिका, ह्रदस्थ मृत्तिका एवं गोसमूह के खुरोत्थित मृत्तिका, उक्त रीति से प्रदान करनी चाहिये । शन्नोदेवी' 'आपोहिष्ठा' मन्त्र से सलिल द्वारा स्नान करावे । सावित्र्यादि' मन्त्र से गोमुत्र द्वारा, 'गन्धद्वारा' इस मन्त्र से गोमय द्वारा, 'आप्यायस्व' इस मन्त्र से दुग्ध द्वारा, 'दधिक्राव्नेति' मन्त्र से दधि द्वारा, 'तेजोऽसि' मन्त्र से घृत द्वारा स्नान करावे । अतःपर 'देवस्यत्वा' इति मन्त्र से कुश-मिश्र सलिल द्वारा स्नान कराने से ही पञ्चगव्य स्नान निष्पन्न होता है ॥३०४-३०६॥

इस प्रकार पञ्चगव्य स्नान कराकर पञ्चामृत द्वारा स्नान कराना कर्त्तव्य है । तन्मध्य में 'दधिक्राव्नेति' मन्त्र से दधि द्वारा, 'आप्यायस्व' मन्त्र से दुग्ध द्वारा, 'तेजोऽसि' मन्त्र से घृत द्वारा, 'मधुवातय' मन्त्र से मधु द्वारा, एवं 'सरस्वत्यै भैषज्येन' इस मन्त्र के द्वारा पुष्पोदक से स्नान करावे । यहाँ शर्करा के स्थान में

हिरण्याक्षेति मन्त्रेण स्नापयेद्रत्नवारिणा । कुशाम्भसा ततः स्नानं देवस्य त्वेति कारयेत् ॥३०९
फलोदकेन च स्नानमग्न आयाहि कारयेत् । ततस्तु गन्धतोयेन सावित्र्या चाभिमन्त्रयेत् ॥३१०
ततो घटसहस्रेण सहस्रार्द्धेन वा पुनः । तस्यार्द्धेन वा कुर्य्यादथवाष्टशतेन वा ॥३११॥
चतुःषष्ट्या तदर्द्धेन तदर्द्धेनाथवा पुनः । चतुर्भिरथवा कुर्य्याद्घटैनामपि वित्तवान् ॥३१२॥

सौवर्णै राजतैर्वापि ताम्रैर्वा रीतिकोद्भवैः ।
कांस्यैर्वा पार्थिवैर्वापि स्नपनं शक्तितो भवेत् ॥३१३॥

सहदेवी वचा व्याघ्री बला चातिबला तथा । शङ्खपुष्पी तथा सिंही अष्टमी च सुवर्च्चला ।
महौषध्यष्टकं ह्येतन्महास्नानेषु योजयेत् । ३१४॥
यवगोधूमनीवारतिलश्यामाकशालयः । प्रियङ्गवो व्रीहयश्च स्नानेषु परिकल्पयेत् ॥३१५॥

भविष्ये—

पञ्चगव्यं दधि क्षीरं तथा मधु घृतं नृप । रत्नवारि कुशाम्भश्च फलगन्धादिकं तथा ॥३१६॥
उपस्नानैः कषायैश्च दिव्यौषधिभिरेव च । वल्मीकात् पर्व्वताग्राच्च सरस्तीर्थाद्ध्रदाद्गजात् ।
अग्न्यागारात्तु गृह्णीयादष्टमीश्च चतुष्पथात् ॥३१७॥
उद्धृतासीति मन्त्रेण मर्द्दयेत्तु समालभेत् । उपमानिकेति प्रथमं मन्त्रेणानेन लेपयेत् ॥३१८॥

---

अष्टशतेन—अष्टोत्तरशतेनेत्यर्थः । क्रमेण संख्यानुक्तेः ॥३११॥

रीतिक—पित्तलम् ॥३१३॥

सहदेव्याद्योषध्यष्टकं यवादिव्रीह्यष्टकं च तथा कुम्भेषु मृत्तिकादिकं दद्यादिति पूर्व्वोक्तगजस्थानादिमृत्तिकाष्टकश्चोक्तेषु कुम्भेषु निक्षिप्य सर्व्वत्र स्नाने नियोजयेदित्यर्थः । तत्र व्याघ्री क्षुद्रवार्त्ताकुः, सिंही कण्टकारिका, शालयः शालयः, प्रियङ्गवः कङ्गवः, व्रीहयः षष्टिकाः ॥३१४॥

पञ्चगव्यादिकं काषायादिभिः सह गृह्णीयादित्युत्तरेणान्वयः । उपस्नानैः स्नानोपयुक्तैरित्यर्थः, अष्टमीं मृत्तिकामिति शेषः ॥३१६-३१७॥

लेपयेन्मृदैव ॥३१८॥

---

अर्थात् शर्करा के परिवर्त्त में पुष्पोदक द्वारा स्नान कराना चाहिये। तत्पश्चात् 'हिरण्याक्ष' इस मन्त्र से रत्नवारि द्वारा, 'देवस्यत्वा' मन्त्र से कुशवारि द्वारा, 'अग्न आयाहि' मन्त्र से फलोदक द्वारा एवं 'सावित्री' मन्त्र से गन्धजल द्वारा स्नान कराना चाहिये ॥३०७-३१०॥

अनन्तर वित्तवान् होने पर शक्तयनुसार स्वर्ण रौप्य, ताम्र, कांस्य किंवा मृत्तिका द्वारा सहस्र, पञ्चशत सार्द्धद्विशत, अष्टोत्तरशत, चतुःषष्टि, द्वात्रिंशत्, षोड़श से स्नान करावे। अथवा उसमें अक्षम होने पर चार कुम्भ निर्म्माण करके उनसे स्नान कराना चाहिये ॥३११-३१३॥

महास्नान में सहदेवी, वच, व्याघ्री (भटकटैया), बला (बरियार), अतिवला (पीली वाट्यालक), शङ्खपुष्पी (शङ्खाहुली) वा (डानकुनी), सिंही (वृहती), सुवर्च्चला (ब्राह्मी, यह अष्ट महौषधि एवं यव, गोधूम, नीवार, तिल, श्यामाक (समा), शालि, प्रियङ्गु (कंकुनी) एवं व्रीहि (सट्ठीधान्य),–यह आठ प्रकार की व्रीहि प्रदान करनी चाहिये ॥३१४-३१५॥

भविष्यपुराण में वर्णित है—हे नृप ! स्नानोपयुक्त काषाय एवं दिव्यौषधि के सहित पञ्चगव्य, दधि,

स्नानमन्त्रांस्ततश्चान्यान् वक्ष्यामि ते महीपते।
गायत्र्या चैव गोमूत्रं गन्धद्वारेति गोमयम् ॥३१९॥
आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि।
तेजोऽसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम् ॥३२०॥
एभिस्तु पञ्चभिर्मन्त्रैः प्रथमं स्नापयेद्धरिम्।
द्वितीये दधिक्राव्णेति दध्ना च स्नानमाचरेत् ॥३२१॥
आप्यायस्वेतिमन्त्रेण क्षीरेण स्नापयेद्बुधः।
तेजोऽसीति ततः पश्चाद्घृतेन स्नानमाचरेत् ॥३२२॥
तदन्ते मधुना स्नानं मधुवाता ऋतायते। रत्नवारि ततः पश्चाद्धिरण्याक्षेति मन्त्रयेत् ॥३२३
कुशाम्भसा ततः स्नानं देवस्य त्वेति मन्त्रयेत्।
फलोदकैस्ततः स्नानं अग्न आयाहि वीतये ॥३२४॥
दद्यात्तु गन्धतोयानि सावित्र्या त्वभिमन्त्रयेत्।
कारयेच्च महास्नानं ततः स्नानादनन्तरम् ॥३२५॥
कलसानां सहस्रेण कुर्य्यात् पञ्चशतेन वा। अथवा तस्य सार्द्धेन तथा चाष्टशतेन वा ॥३२६
चतुःषष्ट्या तदर्द्धेन षोड़शैरष्टभिस्तथा। यथालाभं यथाकालं यथाविभवमात्मनः ॥३२७॥
अकालमूलैः कलसैः सुपक्वैः सुदृढ़ैर्नवैः। राजतैस्ताम्रसौवर्णैः कांस्यरैतिकपार्थिवैः ॥३२८॥
बला चातिबला चैव शङ्खपुष्पी सुवर्च्चला। सहदेवी च सिंही च वचा व्याघ्री तथैव च।
ओषधीनां गणेनैवं स्नापयेद्देवमच्युतम् ॥३२९॥ इति।

---

क्षीर, मधु, घृत, रत्नवारि, कुशवारि, फल एवं गन्धादि प्रदान करे। वल्मीक (बँवई), गिरिशृङ्ग, सरोवर, तीर्थ, ह्रद, हस्तीकर्त्तृक उत्खात स्थल, अग्निगृह एवं चतुष्पथ,–इन अष्ट स्थानों से 'उद्धृतासि' मन्त्र से मृत्तिका लेकर प्रथम 'उपप्लानिवा' इत्यादि मन्त्र से उसको लेपन करे ॥३१६-३१८॥

हे महीपते! आपके सन्निधान में अन्यान्य स्नान-मन्त्र का वर्णन करता हूँ। 'गायत्री' मन्त्र पाठ पूर्वक गोमूत्र से, 'गन्धद्वारा' मन्त्र से गोमय द्वारा, 'आप्यायस्व' मन्त्र से दुग्ध द्वारा, 'दधिक्राव्णेति' मन्त्र से दधि द्वारा, 'तेजोऽसि' मन्त्र से घृत द्वारा, 'देवस्यत्वा' मन्त्र से कुशोदक द्वारा, प्रथमतः इन पाँच मन्त्रों से श्रीहरि को स्नान कराना चाहिये। दूसरी बार–'दधिक्राव्णेति' मन्त्र से दधि द्वारा, 'आप्यायस्व' मन्त्र से दुग्ध द्वारा 'तेजोऽसि' मन्त्र से घृत द्वारा, 'मधुवाता' मन्त्र से मधु द्वारा, 'हिरण्याक्ष' मन्त्र से रत्नोदक द्वारा, 'देवस्य त्वा' मन्त्र से कुशवारि के द्वारा, 'अग्न आयाहि' मन्त्र से फलोदक के द्वारा एवं 'सावित्री' मन्त्र से गन्धोदक द्वारा स्नान करावे। इस प्रकार महास्नान सम्पादन करके यथा लाभ, यथा काल, एवं यथा विभवानुसार सहस्र, पञ्चशत, सार्ध द्विशत, अष्टोत्तरशत, चतुःषष्टि, द्वात्रिंशत, षोड़श वा आठ कुम्भ प्रस्तुत करे। कुम्भसमूह इस प्रकार होने चाहिये कि, कुम्भ के तल देश में कृष्णचिह्न न हो, एवं कुम्भसमूह सुपक्व सुदृढ़ एवं नूतन हों, कुम्भसमूह का निर्म्माण स्वर्ण, रौप्य, ताम्र कांस्य, पित्तल वा मृत्तिका द्वारा होना चाहिये। इन सब जलपूर्ण कलसों में बला, अतिबला, शङ्खपुष्पी, सुवर्च्चला, सहदेव, सिंही, वचा एवं व्याघ्री,–यह अष्टविध औषधि प्रदान करके तद्द्वारा प्रभु को स्नान कराना चाहिये ॥३१९-३२९॥

अथ विशेषान्तरम्

तत्रैव —

फलोदस्नपनात् पश्चात् चूर्णैरुद्वर्त्य शोभनैः ।
स्नापयित्वा कदुष्णाद्भिः स्नापयेत् शीतवारिणा ॥३३०॥

चन्दनाद्यैर्विलिप्याथ शुक्लमाल्याम्बरादिना । भूषयित्वोपवीतं च दन्तकाष्ठं तथार्पयेत् ॥३३१
ततश्च कारयेत् स्नानं सुगन्धिसलिलादिना । इत्येवमत्र विज्ञेयो विशेषः शिष्टसम्मतः ॥३३२

तथा च हयशीर्षपञ्चरात्रे—

घृतेनाभ्यञ्जयेत् पश्चात् पठन् घृतवतीं बुधः । मसूरचूर्णनोद्वर्त्तेदतो देवेति कीर्त्तयन् ॥३३३॥
क्षालयेदुष्णतोयेन सप्त ते अग्नेति देशिकः । चन्दनेनानुलिप्येत द्रुपदादिव इत्यृचा ॥३३४॥
नादेयैः स्नापयेत्तोयैरापो हिष्ठेति देशिकः । स्नापयेद्रत्नतोयेन पावमानीभिरेव च ॥३३५॥
समुद्रं गच्छ मन्त्रेण स्नापयेच्चन्दनोदकैः । नागकेशरतोयेन श्रीश्च तेत्यभिषेचयेत् ॥३३६॥
गायत्र्या पद्मतोयेन पञ्चमृत्तिकया ततः । हिरण्यवर्णाः शुचय इति मन्त्रेण सेचयेत् ॥३३७॥
इमं मेति च मन्त्रेण स्नापयेत् सिकताजलैः । वल्मीकतोयेन हरिं तद्विष्णोरिति स्नापयेत् ॥३३८
या ओषधीति मन्त्रेण स्नानमोषधिमङ्गलम् । यज्ञयज्ञेति मन्त्रेण दद्यात् काषायजं जलम् ॥३३९

---

शोभनैः यवादिसम्भवैः सुगन्धिद्रव्ययुतैः ॥३३०॥

चन्दनेन, आद्य शब्दात् कुङ्कुमादिभिश्च मिश्रितैर्विलिप्य, यज्ञोपवीतञ्च शुक्लमेवार्पयेत्, तथेति समुच्चये ॥३३१

ततः दन्तकाष्ठार्पणादनन्तरं तु 'दद्यात् गन्धतोयानि' इत्यादिना फलोदकस्नानानन्तरं यत् सुगन्धिसलिलादिना स्नानमुक्तं, तत् कारयेदित्यर्थः । सुगन्धिसलिलञ्च तगर-मुक्तक-ह्रीवेरागुरु-तुरुष्क-चन्दन-कर्पूर-कुङ्कुम-मृगमदैः परम-सुगन्धिद्रव्यैः संस्कृतं जलम् ॥३३२॥

पश्चात् नेत्राभ्यञ्जनादनन्तरं, शलाकया सुवर्णस्य' इत्यादिश्लोकस्य घृतेनेत्यादि-पाठात् ॥३३३॥

पद्मतोयेन पद्ममूलमृज्जलेन, एवमन्यत्रापि पूर्व्वोक्तानुसारेण ह्यम् । पञ्चमृत्तिकाः तीर्थादिस्थानपञ्चकमृदः, ताभिश्च हिरण्येत्यादि-मन्त्रेणाभिषेचयेत् । मृत्तिकयेत्येकवचनान्तमार्षम् ॥३३७॥

ओषधिभिर्मङ्गलं यत् तत् स्नानम् ॥३३९॥

---

अथ विशेषान्तरम्

उक्त ग्रन्थ में वर्णित है—फलोदक द्वारा स्नपनान्त में शोभन यवादिचूर्ण द्वारा उद्वर्त्तन एवं किञ्चिदुष्ण सलिल के द्वारा स्नान कराकर शीतल सलिल से स्नान कराना कर्त्तव्य है। अनन्तर चन्दनादि विलेपनपूर्वक शुक्ल पुष्पमाल्य एवं वस्त्र से भूषित करके उपवीत एवं दन्तकाष्ठ अर्पण करे ॥३३०-३३१॥

तत्पश्चात् सुगन्धि जल से स्नान कराना चाहिये। साधुगणानुमोदित इस प्रकार प्रभेद यहाँ द्रष्ट होता है ॥३०२॥

तद्विषय में हयशीर्ष पञ्चरात्र में वर्णित है— विज्ञव्यक्ति, नेत्राभ्यञ्जन के पश्चात् 'घृतवती' मन्त्र से घृत द्वारा अभ्यञ्जन करके 'आतो देवा' मन्त्र से मसूरचूर्ण द्वारा उद्वर्त्तन करे। पश्चात् देशिक 'सप्तते अग्ने' मन्त्र से उष्णोदक क्षालित करके 'द्रुपदादिव' मन्त्र से चन्दनानुलेपन करे। पश्चात 'आपोहिष्ठा' मन्त्र से नदी-सलिल द्वारा 'पावमानो' मन्त्र से रत्नतोय द्वारा, 'समुद्रं गच्छ' मन्त्र से चन्दनोदक द्वारा, एवं 'श्रीश्च ते' मन्त्र से नागकेशर कुसुमोदक द्वारा स्नान करें ॥३३३-३३६॥

पयः पृथिव्या मन्त्रेण पञ्चगव्येन स्नापयेत् । याः फलिनीरिति हरिं फलतोयेन सेचयेत् ॥३४०॥
विश्वतश्चक्षुरित्युक्त्वोत्तरकुम्भेन सेचयेत् । मूर्द्धानं दिवमन्त्रेण कुर्य्यादुद्वर्त्तनं हरेः ॥३४१॥
धात्रीफलं मुरामांसीयुतं शिरसि स्नापयेत् । मानस्तोकेति मन्त्रेण ततो गन्धोदकैः पुनः ॥३४२
गन्धद्वारेति-मन्त्रेण ततः स्नपनमाचरेत् । एकाशीति-पदन्यस्तैर्घटैर्मलयभूषितैः ।
इदमापेति मन्त्रेण सर्व्वैरेवाभिषेचयेत् ॥३४३॥ इति ।
अथवा पञ्चकाषाय-जलादिस्नपनं सकृत् । कार्य्यमन्यच्च सकलं तथा लिखितमेव तत् ॥३४४॥

अथ स्नपनमाहात्म्यम्

तत्रैव—

एष साधारणः प्रोक्तः स्नपनस्य विधिर्मया । य एवं विधिवत् कुर्य्यात्तस्य पुण्यफलं शृणु ॥३४५
यावन्ति जलबिन्दूनि मम गात्रे निवेशयेत् । तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥३४६॥

---

पूर्व्वं शिल्पिपरितोषणानन्तरं कुशाद्यास्तरणे न्यस्येत्यादिना स्नपन लिखितं, पुनश्चाधुना विशेषतः स्नपनमेतल्लिखितमित्येवं वारद्वयं स्नपनं केषाञ्चित् सतां पद्धतिकाराणां सम्मत्यालेखि । तत्र मात्स्ये—'ततो लिङ्गमथार्च्चां वा' इत्यादिना स्नपनमेकमेवोक्त्वा तदनन्तरमेव गन्धवस्त्रार्पणं, ततश्चोत्थापनादिकमुक्तम् । 'अथातः सम्प्रवक्ष्यामि देवस्नपनमुत्तमम्' इत्यादिना चान्ते केवलस्नपनविधिर्विविच्य विस्तरेण दर्शितः । भविष्ये च—'आनयित्वा तु देवेशम्' इत्यादिना, 'तथान्ते च यथा कुर्य्यात्तच्च संक्षेपतः शृणु' इत्यादिना च प्रायस्तथैवोक्तम्; एवमेकमेव स्नपनं गम्यते, तथा भगवता श्रीहयशीर्षेणापि शिल्पिशालायां शुद्धतोयमात्र-स्नपनमुक्त्वा नेत्राभ्यञ्जनादनन्तर 'घृतेनाभ्यञ्जयेन पश्चात्'इत्यादिना स्नपनमेवमेव विवृत्योक्तमित्येवमादिकं प्रक्रियागौरवञ्च विचार्य्य पूर्व्वलिखितं केषाञ्चित् पद्धतिकाराणां पक्षं निरस्यन्निव पक्षान्तरं लिखति—अथवेति । पञ्चकषाय-पञ्चगव्यादिभिः स्नपनं यत्, तत् सकृत् एकवारमेव कार्य्यं, न तु पूर्व्वस्नपनाभावेन तदनन्तरलिखितकृत्यमपि न कार्य्यम्, अपि तु तत् सर्व्वं कर्त्तव्यमेवेति लिखति—अन्यच्चेति । तत् पूर्व्वलिखितं श्रीनेत्रोन्मीलनादिकम् ॥३४४॥

स्वर्गलोके महीयते इति वैकुण्ठलोकं गच्छन् पथि इन्द्रादिभिर्भक्त्या विश्रमय्य चिरमभ्यर्च्च्यते इत्यर्थः ॥३४६

---

अनन्तर गायत्री पाठ पूर्वक, पद्मतोय द्वारा, 'हिरण्यवर्णाः शुचयः' मन्त्र से पञ्चमृत्तिकायुक्त जल द्वारा, 'इमं मा' मन्त्र से सिकतायुक्त जल द्वारा, 'तद्विष्णो.' मन्त्र से वल्मीकमृत्तिका युक्त जल द्वारा, 'या ओषधिः' इस मन्त्र से मङ्गलौषधियुक्त उदक द्वारा, 'यज्ञ यज्ञ' मन्त्र से काषाय जल द्वारा 'पयः पृथिव्यां' मन्त्र से पञ्चगव्य द्वारा, 'याफलिनी' मन्त्र से फलतोय के द्वारा एवं 'विश्वतश्चक्षुः' मन्त्र से उत्तम कुम्भसलिल के द्वारा स्नान करावें । पश्चात् 'मूर्धानदिवो' मन्त्र से प्रभु का उद्वर्त्तन कार्य्य सम्पन्न करना कर्त्तव्य है ॥३३७-

अनन्तर 'मानस्तोके ति' मन्त्र द्वारा मुरामांसी एवं अमलक फलयुक्त जल द्वारा मस्तक में सेचन पूर्वक 'गन्धद्वारा' मन्त्र से गन्धोदक द्वारा स्नान कराना चाहिये । पश्चात् 'इदमाप' मन्त्र से एकाशीति पदन्यस्त मलयचन्दनादि भूषित कलससमूह द्वारा स्नान कराना कर्त्तव्य है ॥३४१-३४३॥

अथवा एक बार मात्र पञ्चकषायोदक से स्नान कराना चाहिये । अन्यान्य क्रियाओं का वर्णन पहले ही हुआ है ॥३४४॥

अथ स्नपनमाहात्म्यम्

उक्त ग्रन्थ में वर्णित है—स्नान की साधारण विधि कही गई है । इस प्रकार विधि से स्नान कराने से जो पुण्य होता है, उसको कहता हूँ, सुनो । मेरे शरीर में जितनी जलबिन्दु प्रवेश करें, उतने हजार वर्ष स्वर्गलोक में वास होता है । ३४५-३४६ ।

अथ श्रीमूर्त्युत्थापनम्

ततश्च विधिवद्विद्वान् सम्पूज्य वाहनादिभिः। औत्थापनिक-मन्त्रेण देवमुत्थापयेच्छनैः ॥३४७

मात्स्ये—

एवं स्नाप्य ततो देवं पूज्य गन्धानुलेपनैः। प्रच्छाद्य वस्त्रयुग्मेन अभिवस्त्रेत्युदोहरन्।
उत्थापयेत्ततो देवमुत्तिष्ठ ब्रह्मणस्पते ॥३४८॥

भविष्ये हयशीर्षे च—

आवाहयेत्ततो विष्णुं शुक्लस्फटिकसन्निभम्। एह्येहि भगवन् विष्णो लोकानुग्रहकारक।
यज्ञभागं गृहाणेमं वासुदेव नमो नमः ॥३४९॥
अनेनावाह्य देवेशं कुर्य्यात् कौतुकमोचनम्।
मुञ्चामि त्वेति मन्त्रेण देशिकस्यापि मोचयेत् ॥३५०॥
हिरण्मयेति मन्त्रेण अर्घ्यं देवाय दापयेत्। अतो देवेति-सूक्तेन पाद्यं कृष्णाय मन्त्रितम्।
मधूवातेति मन्त्रेण मधुपर्कं निवेदयेत् ॥३५१॥
मयि गृह्णाति मन्त्रेण दद्यादाचमनं बुधः। अक्षन्नमीमदन्तेति किरेद्दूर्वाक्षतं बुधः ॥३५२॥
निर्म्मञ्छनं ततः कुर्य्यात् काण्डात् काण्डेति देशिकः।
गन्धं गन्धवतीत्येवमुन्नयामीति माल्यकम् ॥३५३॥
इदं विष्णुवति-मन्त्रेण दद्याद्यज्ञोपवीतकम्। बृहस्पतेति-मन्त्रेण वस्त्रयुग्मे प्रदापयेत् ॥३५४॥

---

उत्थापनिकेन उत्थापनसम्बन्धिना मन्त्रेण, एवमग्रेऽपि ॥३४७॥

स्नपनानन्तरमुत्थापनपूर्व्वकृत्यमाह—आवाहयेत्यादिना उच्चरेदित्यन्तेन। सर्व्वं स्पष्टार्थमेव ॥३५०॥

---

अथ श्रीमूर्त्युत्थापनम्

अनन्तर विज्ञव्यक्ति, विधानानुसार वाहनादि के सहित पूजा करके उत्थापनकालीन मन्त्र से धीरे-धीरे प्रभु को उत्थापित करें ॥३४७॥

मत्स्यपुराण में लिखित है—इस प्रकार प्रभु को स्नान कराकर गन्धानुलेपन द्वारा पूजा करे एवं 'अभिवस्त्रा' मन्त्र उच्चारण पूर्वक दो वस्त्रों से आच्छादन कर 'उत्तिष्ठ ब्रह्मणस्पते' कहकर उत्थापित करे ॥३४८॥

भविष्यपुराण एवं हयशीर्षपञ्चरात्र में लिखित है—अनन्तर शुक्ल स्फटिक तुल्य श्रीविष्णु को आवाहन करना चाहिये। हे भगवन्! हे विष्णो! हे लोकानुग्रहकारक! उपस्थित हूजिये और यज्ञ भाग ग्रहण कीजिये। आप वासुदेव हैं, आपको प्रणाम है। यह मन्त्रार्थ चिन्ताकर प्रभु को आवाहन पूर्वक बन्धन-सूत्र मोचन पूर्वक 'मुञ्चामित्वा' इस मन्त्र से देशिक के हाथ का भी बन्धन-सूत्र मोचन करना चाहिये। अनन्तर 'हिरण्मये ति' मन्त्र से प्रभु को अर्घ्य, 'अतोदेव' मन्त्र से मन्त्रित पाद्य, 'मधुवाता' मन्त्र से मधुपर्क अर्पण करें। अनन्तर विज्ञव्यक्ति, 'मयिगृह्णाति' मन्त्र से आचमन अर्पण करके 'अक्षन्नमीमदन्त' मन्त्र से दूर्वाक्षत प्रक्षेप करें ॥३४९-३५२॥

तत्पश्चात् देशिक, 'काण्डात् काण्डात्' मन्त्र से निर्मञ्छन करें। अनन्तर 'गन्धवती' मन्त्र गन्ध, 'उन्नयामि' मन्त्र से माल्य, 'इदं विष्णुवति' मन्त्र से यज्ञोपवीत, 'बृहस्पतेति' मन्त्र से वस्त्रद्वय, 'वेदाहमेकं

वेदाहमेकं पुरुषमुत्तरीयं निवेदयेत् । सकलीकरणं कुर्य्यात् पठन् व्रतमहाव्रतम् ॥३५५॥
ओषधयः संवदन्ते सपुष्पकरणं ततः । धूरसीति पठन् भक्त्या धूपं दद्यात् सगुग्गुलम् ॥३५६॥
विभ्राड़िति सूक्तेन अञ्जनं तु प्रदापयेत् । युञ्जन्तीति च मन्त्रेण रोचनातिलकं तथा ॥३५७॥
दद्यात् पुष्पाणि माल्यानि दीर्घायुष्ट्वेति मन्त्रवित् ।
इन्द्रच्छत्रेति मन्त्रेण श्वेतं छत्रं प्रदापयेत् ॥३५८॥
आदर्शं तु विराजेन त्रिकर्णेन तु चामरम् । रथान्तरेणाभरणं व्यजनं वायुदेवतैः ॥३५९॥
मुञ्चामि त्वेति सूक्तेन पुष्पमालार्च्चनं ततः ।
ततः स्तुवीत गोविन्दं मन्त्रैर्वेदादिभिर्विभुम् ।३६०॥
तथा पुरुषसूक्तेन बृहत्साम्ना सुरोत्तम । शशिकर्णीति नवभिः सूक्तैः सुरगणार्च्चितम् ॥३६१॥
शान्तातीयेन च स्तूयाद्गुह्योपनिषदैस्तथा । सर्व्वमेतत् समं कुर्य्यात् पिण्डिकायामपि द्विज । ३६२
देवस्योत्थानसमये सौपर्णं सर्व्वमुच्चरेत् ॥३६३॥

अथ अधिवासमण्डपे प्रवेशः

महतानेकवाद्येन पताकादिविभूषितम् । यानमारोहयेद्देवमारोहणिक-मन्त्रतः । ३६४॥
आनीय तोरणाभ्यासमधिवासनमण्डपम् । प्रावेशनिक-मन्त्रेण सुखं देवं प्रवेशयेत् । ३६५॥

---

पिण्डिकायामपीति च यथा भगवन्मूर्त्तेः स्नपनावाहनादिकं कुर्य्यात्तथा पिण्डिकाया अपि स्नपनावाहनादिकं कुर्य्यादित्यर्थः । एतच्चाग्रे पिण्डिकाशोधने लेख्यमेव, उत्थापनं च उत्तिष्ठेति समुत्थाप्येत्यग्रे लेख्यवाक्यादुद्दिष्टमेव । तच्चैकपादमात्रत्वादत्र न लिखितम् ॥३६२॥

पश्चिमद्वारेण देवं प्रवेशयेदिति सतां मतम्, पिण्डिकामपि श्रीमूर्त्त्या सह रथमारोप्याधिवासनमण्डपं प्रवेशयेदिति, 'तथाविधे परे स्थाने' इत्यादि श्रीहयशीर्षोक्तेः । अग्रे पिण्डिकाशोधने लेख्यानुसारेण द्रष्टव्यम् । तथा तत्रैवैकस्मिन् मण्डपान्तःप्रदेशे निवेश्य तस्या अधिवासादिकं च बोद्धव्यम् ॥३६५॥

---

पुरुषं' मन्त्र से उत्तरीय प्रदान पूर्वक 'व्रतंमहाव्रतं' मन्त्र से सकलीकरण करना कर्त्तव्य है । पश्चात् 'ओषधय संवदन्ते' मन्त्र से सपुष्पकरण करके 'धूरसीति' मन्त्र से भक्तिपूर्वक गुग्गुलु धूप, 'विभ्राड़िति' मन्त्र से अञ्जन 'युञ्जन्तीति' मन्त्र से रोचनातिलक, 'दीर्घायुष्ट्वेति' मन्त्र से पुष्प एवं माल्य 'इन्द्रच्छत्रेति' मन्त्र से श्वेत-छत्र, 'विराज' मन्त्र से दर्पण, 'त्रिकर्ण' मन्त्र से चामर, 'रथान्तर' मन्त्र से अलङ्कारः, एवं 'वायुदेवत' मन्त्र से व्यजन प्रदान कर 'मुञ्चामित्या' मन्त्र से पुष्पमाल्य द्वारा पूजा करनी चाहिये । पश्चात् वेदादि मन्त्र से विभु गोविन्द का स्तव करना चाहिये ॥३५३-३६०॥

हे सुरोत्तम ! पुरुषसूक्त, बृहत्साम, शशिकर्णीति नवसंख्यक सूक्त, शान्तातीयसूक्त एवं गुह्योपनिषद् पाठ करके सुरवृन्द पूज्य प्रभु गोविन्द का स्तव करना चाहिये ॥३६१॥

हे द्विज ! पिण्डिका में यह सब अनुष्ठान करने चाहिये । प्रभु के उत्थापन समय में यावतीय सौपर्णमन्त्र का भी पाठ करना कर्त्तव्य है ॥३६२-३६३॥

अथ अधिवासमण्डपे प्रवेशः

आरोहणिक मन्त्र पाठ पूर्वक विविध वाद्य के सहित पताकादि विभूषित रथ में श्रीप्रभु को आरोहण कराना चाहिये । अनन्तर प्रभु को तोरण समीप में आनयन पूर्वक प्रावेशनिक मन्त्र से आनन्द पूर्वक अधिवास मण्डप में प्रवेश करावे ॥३६४-३६५॥

तथा च तत्रैव—

उत्तिष्ठेति समुत्थाप्य कुर्य्याद्ब्रह्मरथे शुभे । शाकुनेन तु सूक्तेन मण्डपे सन्निधापयेत् ॥३६६॥

भविष्ये—

रथे तिष्ठेति मन्त्रेण रथमारोहयेत् प्रभुम् । शङ्खदुन्दुभिनिर्घोषैः पताकाभिरलङ्कृतम् ॥३६७

आरोप्य सदृशे याने आनयेत्तोरणान्तिकम् । प्रवेशयेत्ततो देवं स्थापकः शंसितव्रतः ॥३६८॥

मात्स्ये—

रथे ब्रह्मरथे वापि धृतं शिल्पिगणेन च । आरोप्य चालयेद्विद्वानाकृष्टेन प्रवेशयेत् ॥३६९॥

श्रीमूर्त्तिस्थापनप्रकारः

पाद्मे—

कृत्वा प्राग्लिखितैर्दर्भैः प्रागग्रैर्वंशपल्लवैः । पुष्पैर्वास्तरणं कृत्वा वस्त्रेणाच्छादयेद्गुरुः ॥३७०

प्राङ्मुखं स्थापयित्वास्मिन् देवं कुर्य्यात् प्रदक्षिणम् ।
निद्राकुम्भं शिरोदेशे न्यसेद्दत्त्वोपधानकम् ॥३७१॥
मध्वाज्याक्तांश्च सिद्धार्थान् दत्त्वा गात्राणि संस्पृशन् ।
गन्धपुष्पैः समभ्यर्च्च्य दद्यात् प्रतिसरं सितम् ॥३७२॥
देवं चाच्छाद्य सद्वस्त्रैश्छत्रादीनि निधाय च ।
प्रज्वाल्य चतुरो दीपान् न्यसेत् कुम्भांश्च पादयोः ॥३७३॥

---

ब्रह्मरथे ब्राह्मणवाह्य-शिविकादियाने ॥३६६॥

अस्मिन् वस्त्राच्छादितास्तरणे ॥३७१॥

गात्राणि संस्पृशन् देवस्य दक्षिणपार्श्वे उपविष्टः अग्रे लेख्येन ॐ आप्यायस्वेत्यादिमन्त्रद्वयेन देवस्याङ्गान्यलभमानः सन् देवहस्ते प्रतिसरं सूत्रविशेषं दद्यात् ॥३७२॥

आदि-शब्दात् चामर-व्यजनादीनि, तानि चाग्रे व्यक्तानि भविष्यन्ति। शिष्टाचारतः सायं द्वारेषु च चतुरो दीपान् प्रदीपञ्च, पञ्चगव्यतीर्थोदकपूर्णकुम्भांश्च चतुरः पादयोः देवपादान्तिके न्यस्येत् धारयेत् ॥३७३

---

तद्विषय में उक्त ग्रन्थ में लिखित है—'उत्तिष्ठ' यह वाक्योच्चारण पूर्वक श्रीप्रभु को ब्रह्मरथ में आरोहण शाकुन मन्त्रोच्चारण करते करते मण्डप में प्रवेश कराना चाहिये ॥३६६॥

भविष्यपुराण में लिखित है—'रथे तिष्ठ' यह वाक्योच्चारण पूर्वक शङ्ख दुन्दुभि निनाद के सहित पताका भूषित रथ में श्रीप्रभु को आरोहण कराना चाहिये। व्रतानुष्ठित उपासक, सदृश यान में श्रीप्रभु को तोरण समीप में आनयन पूर्वक रथ में प्रवेश करावे ॥३६७-३६८॥

मत्स्यपुराण में उक्त है—विज्ञव्यक्ति, रथ में वा ब्रह्मरथ में शिल्पिवृन्द के साहाय्य से श्रीप्रभु को आरोहण कराकर चलन पूर्वक 'आकृष्टेन' मन्त्र पाठ पूर्वक प्रवेश करावे ॥३६९॥

श्रीमूर्त्तिस्थापनप्रकारः

पद्मपुराण में उक्त है— गुरुदेव, प्रागग्रदर्भ, वंशपल्लव एवं पुष्प द्वारा आस्तरण निर्म्माण करके उसको वस्त्राच्छादित करें। पश्चात् श्रीप्रभु को पूर्वाभिमुख करके तदुपरि स्थापन पूर्वक प्रदक्षिण करें। पश्चात् उपधान प्रदान करके शिरोदेश में निद्राकुम्भ संस्थापन करें ॥३७०-३७१॥

अनन्तर मधु घृताक्त सिद्धार्थ प्रदान करके प्रभु के अङ्गसमूह को स्पर्श पूर्वक गन्ध पुष्प के द्वारा पूजा

क्षीरादिकं निवेद्याथ भक्ष्यपेयादिभिः शुभैः । मण्डपं तत् प्रपूर्य्याथ सर्व्वतो वितरेद्वलिम् ॥३७४

हयशीर्षे—

पुष्पोपशोभिते स्थाने चन्द्रातपविभूषिते । मुक्ताहारैर्लम्बमाने दीपमालोपशोभिते ॥३७५॥
भक्ष्यभोज्यैरनेकैश्च सान्द्रपल्लवशोभिते । दिव्यपर्य्यङ्कन्यस्तायां तूलिकायां सुरोत्तम ।
अतो देवेति मन्त्रेण शय्यायां स्थापयेद्धरिम् ॥३७६॥

तथाविधे परे स्नाने पिण्डिकां सन्निवेशयेत् । श्रायन्तीयेन सूक्तेन श्रीसूक्तेन निवेशयेत् ॥३७७
निद्राख्यं कलसं रत्नगर्भवस्त्रयुगान्वितम् । खण्डकाद्यैरनेकैश्च पूरयेच्च समन्ततः ॥३७८॥

भविष्ये—

प्रागग्रैर्दर्भवंशैश्च राजन् दिव्यदलैः शुभैः । पुष्पैश्च रचयेच्छय्यां कोमलैर्दिव्यपल्लवैः ॥३७९॥
उपरिष्टाच्च शय्याया देयं प्रस्तरणं शुभम् । दुकूलं पट्टसंछन्नकार्पासं चाप्यसम्भवे ॥३८०॥
प्रदक्षिणं ततः कुर्य्यात् स्थापकः प्रयतः शुचिः ॥३८१॥

प्राङ्मुखन्तु ततः कृत्वा भद्रपीठे सुसंस्थिते । पूरयित्वाम्भसा स्वप्नकलसं चाप्यलङ्कृतम् ॥३८२

---

तथा क्षीरमादि-शब्देन घृतं मधु च, 'ॐ अभि त्वा शूर नो नुमः' इति-मन्त्रेण देवपादनिकटस्थाने निवेद्य, तत् अधिवासमण्डपं बलिञ्च सर्व्वतो भुवि दद्यात्। सन्ध्यायां मध्यरात्रे उषसि च दशदिक्षु शक्रादिभ्यः 'भगवान् प्रीयताम्' इत्यभिधाय मातृविघ्नगणेभ्यश्चप्रत्येकं पुष्पाक्षतमिश्रबलिं दद्यादिति शिष्टाचारतो ज्ञेयम्। ॥३७४॥

मण्डपे सन्निधापयेदित्युक्तं, तदनन्तरकृत्यमाह—पुष्पोपशोभित इत्यादिना स्थाने इति मण्डपान्तर वेदिकायामिति बोद्धव्यम् ॥३७५॥

पिण्डिकां सन्निवेशयेदित्युक्तं, तच्च केन मन्त्रेणेत्याह– श्रायन्तीयेनेति ॥३७७॥

दर्भवंशैस्त्र ॥३७९॥

प्रस्तरणमाच्छादनम् ॥३८०॥

पूरयित्वा मण्डपम् ॥३८२॥

---

करके देवता के हस्त में प्रतिसर (सूत्रविशेष) अर्पण करे। अनन्तर अत्युत्तम वस्त्र द्वारा श्रीप्रभु को आच्छादन एवं छत्रादि समर्पण करके सन्ध्याकाल में द्वारदेश में दीपचतुष्टय प्रज्वालन एवं पदयुगल के सन्निधान में कुम्भ चतुष्टय स्थापन करे ॥३७२-३७४॥

हयशीर्ष पञ्चरात्र में लिखित है—हे सुरोत्तम ! पुष्पराजित चन्द्रातप शोभित, लम्बित मुक्तादाम भूषित दीपमालिका सुसज्जित बहु भक्ष्य भोज्य समन्वित एवं सान्द्र पल्लव शोभित स्थान में, दिव्य पर्य्यङ्कोपरि तुलिका स्थापन पूर्वक श्रीप्रभु को 'अतोदेव' मन्त्र से शय्या में स्थापन करना चाहिये ॥३७५-३७६॥

उस प्रकार ही अन्य स्थल में भी पिण्डिका सन्निवेश करे। अनन्तर श्रायन्तीय सूक्त एवं श्रीसूक्त पाठ पूर्वक वस्त्रद्वय समन्वित रत्नगर्भ, निद्राख्य कलस स्थापन करे। तत्पश्चात् समन्तात् (चारों ओर) अनेक खण्डकादि द्वारा पूर्ण करे ॥३७७-३७८॥

भविष्यपुराण में वर्णित है—हे राजन् ! प्रागग्रदर्भ, दिव्य वंशपल्लव, शुभप्रदपुष्प एवं अत्युत्तम कोमल दिव्य पल्लव द्वारा शय्या प्रस्तुत करे। दुकूल एवं पट्टाच्छादित कार्पास का अभाव होने पर शय्या के उपरि भाग में शुभ आस्तरण प्रदान करे अनन्तर संयत एवं पवित्र भाव से प्रदक्षिण करना स्थापक का कर्त्तव्य

सपुष्पं साक्षतं कृत्वा शिरोदेशे तु दापयेत् । शिरोदेवीति मन्त्रेण मातरः शुद्धयन्तु च ।।३८३।।

ततः शिरोन्नते भूय उपधानसमन्विते । शयने कारयेद्देवं विधिदृष्टेन कर्म्मणा ।।३८४।।

मधुना सर्पिषाभ्यज्य दद्यात् सिद्धार्थकान् शुभान् ।
स्थित्वा च दक्षिणे पार्श्वे मन्त्रं च समुदाहरेत् ।।३८५।।

आप्यायस्वेति मन्त्रेण याते रुद्रे शिवेति च । सर्व्वाङ्गञ्च समालभ्य दद्यात् पुष्पं नराधिप ।
श्वेतान् प्रतिसरान् दद्यान्मन्त्रेणैव नराधिप ।।३८६।।

बृहस्पतये त्वा मह्यं मन्त्रेण परिवेष्टयेत् । दुकूलपट्टकार्पासैस्तथा वल्कजरोमजैः ।
चित्रपट्टैर्विचित्रैश्च छादयेत समन्ततः ।।३८७।।

चामरं व्यजनं छत्रं वितानञ्च सुशोभनम् । दर्पणं पार्श्वतः स्थाप्य रत्नान्योषधयस्तथा ।
गृहोपकरणैश्चान्यैः समन्तात् परिवारयेत् ।।३८८।।

भक्ष्यभोज्यान्नपानैश्च षड् विधैश्च विशेषतः । समन्तात् कारयेत्तत्र मण्डपञ्च सुशोभनम् ।।३८९

प्रकीर्णश्चाप्रकीर्णश्च दातव्यो देवसन्निधौ । त्र्यम्बकं यजामहेति सर्व्वमेतद्धि कारयेत् ।।३९०।।

---

भद्रपीठोपरि देवस्य शिरोदेशे निद्राकुम्भं दापयेत, तत्र मन्त्रद्वय शिरोदेवीत्यादि ।।३८३।।
शिर उन्नतं यस्मात्तस्मिन्, सन्धिरार्षः, तत्प्रकारमेवाह—उपधानेन शुभ यथा स्यात्तथान्विते ।।३८४।।
शुभान् गौरवर्णान् सिद्धार्थानेव मधुसर्पिभ्यामभ्यज्य अभ्युक्ष्य ।।३८५।।
सर्व्वाङ्गं देवस्य गात्राणि, सम्यक् आलभ्य स्पृष्ट्वा ।।३८६।।
बृहस्पतये इतिमन्त्रेण दुकूलपट्टादिभिर्देवमाच्छादयेत् ।।३८७।।
देवस्य पार्श्वतश्छत्रादिकं स्थापनीयम् ।।३८८।।
प्रकीर्य्य या बलिर्दीयते, स प्रकीर्ण ओदनादिः, तदितरश्चाप्रकीर्णः ।।३९०।।

---

है । पश्चात् सम्यक् प्रकार से स्थापित भद्रपीठ में जलपूर्ण निद्राख्य कुम्भ स्थापन पूर्वमुख में करके उसको समलङ्कृत, सपुष्प एवं साक्षत करके श्रीप्रभु के मस्तकदेश में प्रदान करे । अतःपर विधिबोधितानुसार श्रीप्रभु को उपाधान समन्वित शय्या में स्थापन करे । इस प्रकार स्थापन करना चाहिये कि शिरोदेश किञ्चित् उन्नत हो, एवं उस समय 'शिरोदेवी' ति मन्त्र एवं 'मातरः शुद्धयन्तु' मन्त्र पाठ करना चाहिये । तत्पश्चात् मधुघृतयुक्त मङ्गलकर गौर सर्षप अर्पण पूर्वक दक्षिण पार्श्व में अवस्थित होकर मन्त्र पाठ करे । ।।३७९-३८५।।

हे नराधिप ! 'आप्यायस्वेति' 'यातेरुद्रेशिवेति' मन्त्र पाठ करके देव के सर्वाङ्ग को सम्यक् स्पर्श करके पुष्प निवेदन करे । एवं मन्त्र पाठ पूर्वक श्वेत प्रतिसर समूह अर्पण भी करे । पश्चात् 'बृहस्पतये त्वा मह्य' मन्त्र से दुकूल, पट्ट, कार्पास, वल्कलज, रोमज एवं चित्र विचित्र वर्ण वसन द्वारा सर्वतः आच्छादन करे । तत्पश्चात् श्रीप्रभु के पार्श्व में चामर, व्यजन, छत्र, सुशोभन चन्द्रातप, दर्पण, रत्न एवं ओषधि स्थापन करे । यह छोड़कर अन्यान्य गृहोपकरण, एवं षड्विध भक्ष्य, भोज्य, एवं अन्न पानादि द्वारा मण्डप के समन्तात् सुशोभित करे । पश्चात् श्रीप्रभु के सन्निधान में प्रकीर्ण एवं अप्रकीर्ण अर्पण करे । विकिरण पूर्वक जो बलि दी जाती है, उसका नाम प्रकीर्ण है अर्थात् भात इत्यादि हैं और इसके विपरीत अन्यान्य प्रकार को बलि को अप्रकीर्ण कहते हैं । 'त्र्यम्बकंयजामहे' इत्यादि मन्त्र पाठ पूर्वक यह कार्य्य करना चाहिये । ।।३८६-३९०।।

मात्स्ये—

ततः प्रास्तीर्य्य शय्यायां स्थापयेच्छनकैर्भुवि ।
कुशेष्वास्तीर्य्य पुष्पाणि दापयेत् प्राङ्मुखं ततः ।।३९१।।

ततस्तु निद्राकलसं वस्त्रकाञ्चनसंयुतम् । शिरोभागे तु देवस्य जपन्नेव निधापयेत् ।
आपो देवीति-मन्त्रेण आपोऽस्मान्मातरोऽपि च ।।३९२।।

ततो दुकूलपट्टैश्चाच्छाद्य नेत्रोपधानकम् । दद्याच्छिरसि देवस्य कौशेयं वा विचक्षणः ।।३९३

मधुना सर्पिषाभ्यज्य देवं सिद्धार्थकैस्ततः । आप्यायस्वेति मन्त्रेण यात रुद्रे शिवेति च ।।३९४

उपविश्यार्च्चयेद्देवं गन्धपुष्पैः समन्ततः । सितं प्रतिसरं दद्याद्बार्हस्पत्येति मन्त्रतः ।।३९५।।

दुकूलपट्टैः कार्पासैर्नानाचित्रैरथापि वा । आच्छाद्य देवं सर्व्वत्र छत्रं चामरदर्पणम् ।
पार्श्वे तु स्थापयेत्तत्र वितानं पुष्पसंयुतम् ।।३९६।।

रत्नान्योषधयस्तद्वद्गृहोपकरणानि च । भाजनानि विचित्राणि शयनान्यासनानि च ।
अभि त्वा शूर मन्त्रेण यथा विभवतो न्यसेत् ।।३९७।।

क्षीरं क्षौद्रं घृतं तद्वद्भक्ष्यं भोज्यञ्च पायसम् ।
षड् विधैश्च रसैस्तद्वत् समन्तात् परिपूरयेत् ।।३९८।।

बलिं दद्यात् प्रयत्नेन मन्त्रेणानेन भूरिशः । त्र्यम्बकं यजामह इति सर्व्वतः शनकैर्भुवि । ३९९

अथ श्रीमूर्त्त्यधिवासनम्

भूतशुद्धिं ततः कृत्वा न्यासजातं विधाय च । ध्यात्वा तत्त्वं परं कुर्य्यात् सजीवकरणं बुधः ।।४००

---

बलिं सर्व्वतो भुवि शनकैर्दद्यात् ।।३९९।

---

मत्स्यपुराण में लिखित है—तदनन्तर भूतल में कुशोपरि पुष्प विस्तार पूर्वक शय्या रचना करके शनैः शनैः प्रभु को पूर्वमुख में स्थापन करे। पश्चात् 'आपो देवीति' 'आपोऽस्मान्मातर.' इस मन्त्र जप करते-करते श्रीप्रभु के मस्तक पार्श्व में सवसन काञ्चनगर्भ निद्राकुम्भ स्थापन करे। अनन्तर विज्ञव्यक्ति दुकूल एवं पट्टवस्त्र द्वारा नेत्रोपधानक आवरण पूर्वक श्रीप्रभु के मस्तक में कौशेयवस्त्र अर्पण करे। बाद में 'आप्यायस्व' एवं 'याते रुद्रे शिवेति' दो मन्त्र पाठ पूर्वक मधु घृत मिश्रित सिद्धार्थ द्वारा प्रभु को अभ्युक्षण करके उपवेशन पूर्वक गन्ध पुष्प द्वारा सर्वथा पूजा करनी चाहिये। अनन्तर बार्हस्पत्य मन्त्र से शुभ्र वर्ण प्रतिसर अर्पण करके दुकूल, पट्ट एव चित्रविचित्र कार्पास वस्त्र द्वारा श्रीप्रभु को आच्छादित करना चाहिये पश्चात् श्रीप्रभु के पार्श्व में छत्र, चामर, आदर्श पुष्पसंयुक्त वितान, रत्न, ओषधी, गृहोपकरण, विचित्र पात्रसमूह, शय्या, आसन प्रभृति विभवानुसार स्थापन करने चाहिये। 'अभि त्वा शूर' मन्त्र से उक्त द्रव्य समूह स्थापन करने चाहिये। अनन्तर दुग्ध, मधु, घृत, भक्ष्य, भोज्य, पायस एवं षड्विधरस द्वारा समन्तात् परिवृत करना कर्त्तव्य है। 'त्र्यम्बकं यजामहे' मन्त्र से भूतल में यत्नपूर्वक धीरेधीरे बहुल परिमाण में बलि अर्पण करना कर्त्तव्य है ।।३९१-३९९।

अथ मूर्त्त्यधिवासनम्

उसके बाद विज्ञव्यक्ति भूतशुद्धि एवं न्याससमूह सम्पन्न करके परमतत्त्व ध्यानपूर्वक सजीवकरण करें।

पूजयेच्च ततो देवं साङ्गं सपरिवारकम् । तत्तद्विशेषो विज्ञेयोऽश्वशिरःपञ्चरात्रतः ।।४०१।।

अथ ब्राह्मणस्थापनम्

आचार्य्यः स्थापयेद्विद्वान् मूर्त्तिपांस्तत्र मण्डपे । चतुरो ब्रह्मणो होतृनृत्विजो जापिनस्तथा ।।४०२

रक्षकांश्च चतुर्द्वार्षु चतुरः स्थापयेद्बुधः । एकं पुरुषसूक्तस्य जापकं मण्डपान्तरे ।।४०३।।

आचार्य्येण समादिष्टाः स्वसस्थाने स्थिताश्च ते ।

स्वस्वप्रयोजनं कुर्य्यः शिष्टाचारानुसारतः ।।४०४।।

मात्स्ये—

मूर्त्तिपान् स्थापयेत्तत्र सर्व्वदिक्षु विचक्षणः । चतुरो द्वारपालांश्च द्वारेषु विनिवेशयेत् ।।४०५

अथ द्वारेषु जपनियमः

मात्स्ये—

श्रीसूक्तं पावमानं तु सोमसूक्तं सुमङ्गलम् । तथा च शान्तिकाध्यायमिन्द्रसूक्तं तथैव च ।

रक्षोघ्नश्च तथा सूक्तं पूर्व्वतो बह्वृचो जपेत् ।।४०६।।

---

तस्य तस्य भूतशुद्धिकरणादेर्विशेषश्च अश्वशिरसः श्रीहयशीर्षस्य पञ्चरात्रतो विस्तरेण ज्ञेयः। तत्रैकत्रैव व्यक्तत्वादत्र च ग्रन्थविस्तरभयान्न लिख्यत इति भावः। यद्यपि मात्स्य-भविष्ययोर्भूतशुद्धयादिकमेतदत्र विशिष्य नोक्तमस्ति, तथापि भगवच्छ्रीहयशीर्षोक्ति-प्रामाण्येनात्र लिखितम् ।।४०१।।

एवं हयशीर्षानुक्तमपि ब्राह्मणस्थापनादि मात्स्य-भविष्योक्तिप्रामाण्येन शिष्टाचारादृतत्वादग्रे लेख्यम्, एवमन्यत्राप्यूह्यम्। तथेति होत्रादींश्चतुर एवेत्यर्थः।।४०२।।

पुरुषसूक्तजापकं चैकं मण्डपाभ्यन्तरे स्थापयेत् ।।४०३।।

शिष्टाचारानुसारत इति जपहोमादौ मत्स्यपुराणादिवचनैर्मन्त्रादिभेदतो विरोधे निज-सत्सम्प्रदाय-व्यवहारोऽनुसर्त्तव्य इत्यर्थः। एवं सर्व्वत्रैव ज्ञेयम् ।।४०४।।

सर्व्वासु अष्टसु दिक्षु, तथा च भविष्ये— मूर्त्तिपान् स्थापयेत् पश्चाद्दिशासु विदिशासु च' इति। समानार्थत्वात्तदेतदर्द्धंवचं न संगृहीतम्; एवमन्यत्रापि ज्ञेयम् ।।४०५।।

श्रीसूक्तादिकं पूर्व्वतः पूर्व्वद्वारि बह्वृचो जपेदिति सार्द्धेनान्वयः। तत्र श्रीसूक्तं—'हिरण्यवर्णां हरिणीम्' इत्यादि, पावमानम्—'आदिष्टयामादिष्टया' इत्यादि, सोमसूक्तं—'त्वं सोममह' इत्यादि, सुमङ्गलं— 'कलिह्लदजनुषाम्' इत्यादि, शान्तिकाध्यायं— 'शक्रो, इन्द्राग्नी' इत्यादि, इन्द्रसूक्तं—'यो जात एव' इत्यादि, रक्षोघ्नसूक्तं च—'क्व नु अपाजः' इत्यादि ।।४०६।।

---

अनन्तर अङ्गदेवता एवं परिवार देवता के सहित श्रीप्रभु की पूजा करनी चाहिये। हयशीर्ष पञ्चरात्र ग्रन्थ से इस सब कार्यों की विशेष विधि जान लेनी चाहिये ।।४००-४०१।।

अथ ब्राह्मणस्थापनम्

अनन्तर बुद्धिमान् आचार्य्य, मण्डप के मध्य में मूर्त्तिरक्षकवृन्द को स्थापन करें। मण्डप के मध्य में चार ब्रह्मा, चार होता, चार ऋत्विक्, चार द्वार-जापक एवं चार मण्डपान्तर में और एक सूक्त-जापक को स्थापन करना चाहिये। यह सब गुरु की आज्ञा को प्राप्त कर अपने अपने स्थान में अवस्थित पूर्वक साधुगण सम्मत आचरणानुसार निज निज प्रयोजनीय कर्म्म सम्पादन करें ।।४०२-४०४।।

मत्स्यपुराण में कथित है—विज्ञव्यक्ति, सर्वतः मूर्त्तिपगण को एवं द्वारचतुष्टय में द्वारपाल को स्थापन करें ।४०५।।

अथ द्वारेषु जपनियमः

मत्स्यपुराण में लिखित है—बह्वृच, पुरद्वार में श्रीसूक्त, पावमान, सोमसूक्त, सुमङ्गल, शान्तिकाध्याय

रुद्रान् पुरुषसूक्तञ्च श्लोकाध्यायं ससुक्रियम् । तथैव मण्डलाध्यायमध्वर्य्युर्दक्षिणे जपेत् ॥४०७॥
वामदेव्यं बृहत्साम ज्येष्ठं साम रथन्तरम् । तथा पुरुषसूक्तञ्च रुद्रसूक्तं सशान्तिकम् ।
भारुण्डानि च सामानि छन्दोगः पश्चिमे जपेत् ॥४०८॥
अथर्व्वाङ्गिरसं तद्वन्नीलरुद्रं तथैव च । तथापराजितां देवीं मधुसूक्तं सरौद्रकम् ।
तथैव शान्तिकाध्यायमध्वर्य्युश्चोत्तरे जपेत् ॥४०९॥

भविष्ये—

श्रीसूक्तं पावमानञ्च ताम्यं दाम्यञ्च वाजिनम् । वृषाकपिञ्च मैत्रञ्च बह्वृचः पश्चिमे जपेत् ॥४१०
देवव्रतं पुरुषगतिं ज्येष्ठसाम रथन्तरम् । भारुण्डानि च सामानि वामदेव्यं तथैव च ।
उत्तरां दिशमास्थाय छन्दोगस्तज्जपेत् सदा ॥४११॥
रुद्रान् पुरुषसूक्तञ्च श्लोकाध्याय ससुक्रियम् ।
ब्राह्मण मैत्रमैन्द्रञ्च अध्वर्य्युः पूर्व्वतो जपेत् ॥४१२॥

---

रुद्रान् 'नमस्ते रुद्र' इत्यादि, पुरुषसूक्तं—'सहस्रशीर्षा' इत्यादि, श्लोकाध्यायं 'देव सवितः' इत्यादि, ससुक्रियं—'ऋतं वाचं प्रपद्ये' इत्यादि, मण्डलाध्यायश्च—'आदित्यो वा एष एतन्मण्डलम्' इत्यादि तैत्तिरीयके प्रसिद्धम् ॥४०७॥

वामदेव्यं कया नश्चित्रमित्यस्यामृचि गीतं साम, बृहत्सामे 'त्वामिद्धि हवामहे' इत्यस्यां गीतम, ज्येष्ठसाम 'मूर्द्धानं दिवो अरतिम्' इत्यस्यां गीतम, रथन्तरं 'अभि त्वा शूर नो नुम' इत्यस्यां गीतम, रुद्रसूक्तं—'संहिता ओरोराजनस्त्वोवर्ग आज्यदोहानि देवव्रतानि च' इत्येतत् । सशान्तिकं शान्तिकाध्यायसहितम् । भारुण्डानि सामानि च 'इलं स्तोमः' इत्यादनि ॥४०८॥

आथर्व्वणं सूक्तं—दोषागायेत्यादि, आङ्गिरसं सूक्तम्—अङ्गिरसो जन्मानीत्यादि, नीलरुद्रं—जलेत्यादि, अपराजितां देवीं—परिवर्त्तमानेत्यादि, मधुसूक्त- मधुवाता ऋतायत इत्यादि, रुद्रसूक्तं—भवा सर्व्वे मृड़तमानियातमित्यादि ॥४०९॥

ताम्यसूक्तं—नासदासीदिति सप्तर्च्चम । दाम्यसूक्तं—सोमा रुद्रा इति चतुर्ऋचं, वाजिसूक्तं—चतुस्त्रिंशद्वाजिन इनि, वृषाकपि—विहिसातोरसृक्षतेत्यादि, मैत्रसूक्तं—मित्रोजनान् पाययतीति नवर्चम ॥४१०॥

देवव्रतम्—अधिकपतायीत्यादि पुरुषगति—पुरुषसूक्तम् ॥४११॥

ब्रह्मसूक्तं—आब्रह्मन्निति, मैत्रसूक्तं—मित्रस्य चर्षणीधृत इति, इन्द्रसूक्तम्—आशुः शिशान इत्यादि ॥४१२

---

इन्द्रसूक्त एवं रक्षोघ्नसूक्त जप करें। अध्वर्य्यु, दक्षिण द्वार में रुद्रमन्त्र, पुरुषसूक्त, श्लोकाध्याय, ससुक्रिय एवं मण्डलाध्याय जप करें। छन्दोग, पश्चिम द्वार में वामदेव्य, बृहत् साम, ज्येष्ठ साम, रथन्तर, पुरुषसूक्त, शान्तिकाध्याय विशिष्ट रुद्रसूक्त एवं भारुण्ड साम जप करें। अध्वर्य्यु, उत्तर द्वार में अथर्व्वाङ्गिरससूक्त, नीलरुद्र, अपराजितादेवी, मधुसूक्त, रुद्रसूक्त एवं शान्तिकाध्याय जप करें ॥४०६-४०९॥

भविष्यपुराण में लिखित है- बह्वृच पश्चिम द्वार में श्रीसूक्त, पावमान, ताम्य, दाम्य, वाजि, वृषाकपि एवं मैत्रसूक्त जप करें। छन्दोग, उत्तरदिक् में, देवव्रत, पुरुषसूक्त, ज्येष्ठसम, रथन्तर, भारुण्डसाम, एवं वामदेव्यसूक्त, जप करें। अध्वर्य्यु, पूर्वदिक् में रुद्रसूक्त, पुरुषसूक्त, श्लोकाध्याय, ससुक्रिय, ब्रह्मसूक्त, मैत्रसूक्त एवं इन्द्रसूक्त जप करें। अथर्व, दक्षिणदिक् में अथर्वाङ्गिरससूक्त, शिवसूक्त, एवं नीलरुद्र मन्त्र

अथर्व्वाङ्गिरसञ्चैव शिवसूक्तं तथैव च । नीलरुद्रञ्च वै मन्त्रमथर्व्वा दक्षिणे जपेत् ॥४१३॥
विष्णुकल्पं परिषदं पञ्चरात्रानुगामिनम् । स्तोत्रमन्त्रविदश्चाथ पठेयुर्दक्षिणे सदा ॥४१४॥
मध्ये पुरुषसूक्तञ्च प्रजपेद्गर्भजापकः । जपेयुः शान्तिकाध्यायं द्वार्षु ते जापकाः पुनः ॥४१५

अथ होमः

ब्रह्मादींस्तत्र चाचार्य्यो यथास्थानं निवेश्य तान् ।
होमं कुर्य्यान्निजे कुण्डे ते च कुर्य्युर्यथाविधि ॥४१६॥

अथ तद्विशेषः

भविष्ये—

शिरःस्थाने तु कृष्णस्य आचार्य्यो होममाचरेत् ।
शान्तिकैः पौष्टिकैश्चापि मन्त्रैर्व्याहृतिभिस्तथा ॥४१७॥

---

अथर्व्वाङ्गिरसम् आथर्व्वणसूक्तम् आङ्गिरससूक्तञ्च ॥४१३॥

पञ्चरात्रानुग-वैष्णवस्तोत्रं मन्त्रं च विदन्तीति ते तथा ॥४१४॥

मध्ये प्रासादाभ्यन्तरे मण्डपमध्ये वा । पुनरिति अथाचार्य्येण तु पुनश्च जपेतेत्यादिष्टाश्चत्वारस्ते द्वार-जापकाश्चतुर्द्वारेषु पुनः शान्तिकाध्यायं जपेयुरित्यर्थः ॥४१५॥

तत्र मण्डपाभ्यन्तरे, ब्रह्मादीन् चतुरो ब्रह्मणो होतॄंश्च, यथास्थानं स्वस्वकुण्डे यथोचितं निवेश्य उपवेश्य । आचार्य्यश्च देवशिरःस्थानवर्त्ति निजकुण्डसमीपस्थः तत्र होमं यथाविधि कुर्य्यात् । ते च ब्रह्मादयो यथाविधि होमं कुर्य्युः । विधिश्चायम्—सर्व्व एव स्वस्वगृह्यविधिनाग्निस्थापन-ब्रह्मोपवेशनादि-कुशण्डिकां कृत्वा स्रुक्स्रुवपूर्णपात्रप्रणीताज्यस्थालीसमिदाज्यतिलयवकुशबर्हिर्विध्यादिकं च कुण्डेषु कल्पयेयुः । ततः स्थापको ग्रहवेद्यां ग्रहयज्ञोक्तविधिना तत्तन्मन्त्रेण सूर्य्यादिद्वात्रिंशद्देवताः संस्थाप्य यथाविहितं पुष्पनैवेद्यादिभिः सम्पूज्य निजकुण्डेऽग्निस्थापनादि-कुशण्डिकां कृत्वा आघारावाज्यभागादिकं हुत्वा पलाशोडुम्बराश्वत्थापामार्ग-शमीसमिधां प्रत्येकं प्रथमं महाव्याहृतिभिराहुतिचतुष्टयम् । ततः शन्न इन्द्राग्नी भवतामरोभिरित्यादिभिः शान्तिकैस्त्रिभिराहुतित्रयम् । ततः ॐ पुष्टिर्नव त्वा ॐ मयस्कानौ अमीवहा इति, ॐ त्र्यम्बकं यजामह इत्येतैस्त्रिभिः पौष्टिकैराहुतित्रयम् । एवमावृत्तिक्रमेणैकैकं सहस्रं हुत्वा यथाक्रमं देवस्य पादयोर्नाभौ मध्ये वक्षसि शिरसि च स्पृशेत् । तथा होतारोऽपि स्वस्वगृह्योक्तविधिना आघारावाज्यभागादिकं च हुत्वा नवग्रह-समिधामष्टोत्तरशतमष्टाविंशतिमष्टौ वा ग्रहेभ्यो हुत्वा अथ इन्द्रादिलोकपालेभ्यो हुत्वा तथा वसुधाद्यष्टमूर्त्तिभ्यो मूर्त्यधिदेवेभ्यश्च सर्व्वादिभ्यस्तत्तद्वैदिकमन्त्रैर्होमं कुर्य्युरित्यादि । एष चाग्रे भविष्यादिवचनतो व्यक्तो भावी ॥४१६॥

---

जप करें। पञ्चरात्रानुग वैष्णवस्तोत्राभिज्ञगण, दक्षिण द्वार में सर्वदा विष्णुकल्प, परिषद एवं पञ्चरात्र्यनुग स्तोत्रादि जप करे। मण्डपाभ्यन्तर में गर्भजापक, पुरुषसूक्त जप करें। पूर्वोक्त द्वारजापकगण पुनर्वार समस्त द्वार में शान्तिकाध्याय जप करें ॥४१०-४१५॥

अथ होमः

आचार्य्य (श्रीगुरुदेव) ब्रह्मादि को यथायोग्य स्थान में सन्निवेशित करके स्वीय कुण्ड में होम करें। यथारीति होम करना पूर्व्वोल्लिखित ब्रह्मादि सबका भी कर्त्तव्य है ॥४१६॥

अथ तद्विशेषः

भविष्यपुराण में लिखित है—श्रीकृष्ण के शिरःप्रदेश में होम करना ही आचार्य्य का कर्त्तव्य है।

पलाशोडुम्बराश्वत्थमपामार्गं शमीं तथा । सहस्रमेकं हुत्वा च विष्णुपादौ स्पृशेत्ततः ॥४१८॥
द्वितीय तु ततो हुत्वा समिद्भिस्तावदेव तु । मध्ये तु संस्पृशेद्देवं मूर्द्धिन चैवं क्रमेण तु ॥४१९॥
होमयेयुस्ततः सर्व्वे मूर्त्तिपाः स्वदिगाश्रिताः । अनन्तादि-शिवान्ताश्च अष्टौ ये चक्रवर्त्तिनः ।
तेषां मन्त्रैश्च होतव्या जप्तव्याश्च यथाक्रमम् ॥४२०॥

मात्स्ये—

शिरःस्थाने तु देवस्य स्थापको होममाचरेत् ।
शान्तिकैः पौष्टिकैस्तद्वन्मन्त्रैर्व्याहृतिपूर्व्वकैः ॥४२१॥

पलाशोडुम्बराश्वत्थमपामार्गं शमीं तथा । हुत्वा सहस्रमेकैकं देवं पादे तु संस्पृशेत् ॥४२२॥
ततो होमसहस्रेण हुत्वा हुत्वा ततस्ततः ।
नाभिमध्यं तथा वक्षः शिरश्चाप्यालभेत् पुनः ॥४२३॥

किञ्च —

मूर्त्तिपा लोकपालेभ्यो मूर्त्तिभ्यः क्रमशस्ततः ।
तथा मूर्त्त्यधिदेवेभ्यो होमं कुर्य्युः समन्ततः ॥४२४॥

अथ मूर्त्तिसंज्ञकदेवाः

वसुधा वसुरेताश्च यजमानो दिवाकरः । जलं वायुस्तथा सोम आकाशं चाष्टमं मतम् ।
देवस्य मूर्त्तयो ह्यष्टावेताः कुण्डेषु संस्मरेत् ॥४२५॥

---

अनन्त आदिर्येषां शिवश्चान्ते येषां ते चामी च ते, अनन्तः सूक्ष्मोऽपराजित एकनेत्र एकमूर्त्तिस्त्रिमूर्त्तिः श्रीकण्ठः शिवश्चेति । ते स्वस्वमन्त्रैर्नामभिर्वा होतव्याः, तेषां मन्त्राश्च जप्तव्या ॥४२०॥

---

पलाश, उडुम्बर, अश्वत्थ अपामार्ग (चिरचिरा) एवं शमीतरु समिध के द्वारा शान्तिक, पौष्टिक, एवं महाव्याहृति मन्त्र से होम करके श्रीहरि के चरण-कमल को स्पर्श करे । तत्पश्चात् द्वितीयबार उस प्रकार समिध द्वारा सहस्र होम करके क्रमशः प्रभु के मध्य भाग, शिरः प्रदेश को स्पर्श करना चाहिये । अनन्तर मूर्त्तिरक्षकगण निज निज निर्दिष्ट स्थान में अवस्थान पूर्वक अनन्तादि अष्ट संख्यक चक्रवर्त्ती के निमित्त (अनन्त, सूक्ष्म, अपराजिता, एकनेत्र, एकमूर्त्ति, त्रिमूर्त्ति, श्रीकण्ठ, और शिव) क्रमशः उनके स्व स्व मन्त्र से वा स्व स्व नाम से होम एवं उनके मन्त्र का जप करें ॥४१७-४२०॥

मत्स्यपुराण में लिखित है—प्रभु के शिरोदेश में होम करना स्थापक का कर्त्तव्य है, वह महाव्याहृति समन्वित शान्तिक एवं पौष्टिक मन्त्र पाठ पूर्वक पलाश, उडुम्बर, अश्वत्थ, अपामार्ग एवं शमीतरु के समिध के द्वारा सहस्रहोम समापनपूर्वक श्रीप्रभु के चरणयुगल को स्पर्श करें । पश्चात् पुनर्वार सहस्र होम समापन करके श्रीप्रभु के नाभिमध्य, वक्षःस्थल एवं शिरःप्रदेश को स्पर्श करें ॥४२१-४२३॥

और भी कथित है—मूर्त्तिपगण, क्रमशः लोकपालगण, मूर्त्तिगण (वसुधादि), मूर्त्त्यधिदेवगण (वसुधादि के अधिपवृन्द) के निमित्त होम करें ॥४२४॥

अथ मूर्त्तिसंज्ञकदेवाः

वसुधा, वसुरेता, यजमान, दिवाकर, जल, वायु, सोम (चन्द्र), एवं आकाश,–यह अष्टमूर्त्ति हैं । प्रभु की इन अष्टमूर्त्तियों को कुण्ड में स्मरण अर्थात् उनके निमित्त होम करें ॥४२५॥ ।

तत्र मूर्त्तीनामधिपाः

एतासामधिपान् वक्ष्ये यैर्विप्रा मूर्त्तिपा मताः। पृथिवीं पाति सर्व्वस्तु पशुपश्चाग्निमेव तु।
यजमानं तथैवोग्रो रुद्रश्चादित्यमेव च ॥४२६॥
भवो जलं सदा पाति वायुमीशान एव च। महादेवस्तथा चन्द्रं भीमश्चाकाशमेव च ॥४२७
सर्व्वदेवप्रतिष्ठासु मूर्त्तिपा ह्येत एव तु। एतेभ्यो वैदिकैर्मन्त्रैर्यथास्वं होममाचरेत् ॥४२८॥
हयशीर्षे च—

कृत्वाग्निं वैष्णवैर्मन्त्रैः कुर्य्याच्छान्त्युदकं बुधः।
तत् सिक्त्वा प्रतिमामूर्द्धिन वह्निप्रणयनं कुरु ॥४२९॥

दक्षिणेऽग्निभूतमिति कुण्डेऽग्निं प्रणयेद्बुधः। अग्निमयी तु पूर्व्वे तु कुण्डेऽग्निं प्रणयेद्बुधः ॥४३०
उत्तरे प्रणयेदग्निं अग्निमग्निं तु धीमहि। अग्निप्रणयने मन्त्रस्त्वमग्ने त्विति पश्चिमे ॥४३१
पलाशसमिधानां तु घृताक्तानां महानले। अष्टोत्तरसहस्रं तु कुण्डे कुण्डे तु होमयेत् ॥४३२॥
वेदादिमन्त्रैर्देवेश ततो व्रीहींस्तु होमयेत्। तिलानां घृतयुक्तानां कुण्डे कुण्डे तु मूर्त्तिपाः ॥४३३
सहस्रं कं व्याहृतिभिर्जुहुयुः साज्यमक्षतम्। मूलमन्त्रेण जुहुयुः स्वाहान्तेन सुरोत्तम।
अष्टोत्तरसहस्रं तु कुण्डे कुण्डे यथाविधि ॥४३४॥
घृतहोममिदं प्रोक्तं शान्तिहोममतः शृणु। मधुरात्रितयेनाथ जुहुयाद्द्वादशाक्षरैः।
पादौ नाभिं हृच्छिरश्च स्पृशेद्बुद्ध्वा यथाक्रमम् ॥४३५॥

---

यथास्वं यथाक्रमं, यथास्वं होममाचरेदित्यनेनाचार्य्योऽपि तत्तद्धोमं कुर्य्यादित्यर्थः ॥४२८॥
अग्निभूतमिति-मन्त्रेण दक्षिणे कुण्डे अग्निं प्रणयेत्; अग्निमयीति मन्त्रेण ॥४३०॥
'अग्निम् अग्निं तु धीमहि' इति मन्त्रेण ॥४३१॥

---

तत्र मूर्त्तीनामधिपाः

सम्प्रति मूर्त्तिसंज्ञक देवताओं के अधिपति का वर्णन करते हैं। इनके द्वारा ही ब्राह्मणगण, मूर्त्तिप शब्द से अभिहित होते हैं, शर्व, पृथिवी की, पशुपति, अग्नि की, उग्र, यजमान् की, रुद्र, दिवाकर की, भव, जल की, ईशान, वायु की, महादेव, चन्द्र की, एवं भीम, आकाश की सर्वदा रक्षा करते हैं। यावतीय प्रतिष्ठा कर्म में ही यह 'मूर्त्तिप' नाम से स्मरण किये जाते हैं। श्रीगुरुदेव, क्रमानुसार वैदिक मन्त्रोच्चारण करके इन सबके निमित्त होम करें ॥४२६-४२८॥

हयशीर्ष में वर्णित है—विज्ञव्यक्ति वैष्णव मन्त्र से अग्नि आनयन पूर्वक शान्त्युदक करके उस उदक को प्रतिमा के मस्तकोपरि सेचन करके वह्नि स्थापन करें। 'अग्निभूतम्' इस मन्त्र से दक्षिण कुण्ड में, 'अग्निमयी' इत्यादि मन्त्र से पूर्व कुण्ड में, 'अग्निमग्निं तु धीमहि' मन्त्र से उत्तर कुण्ड में, एवं 'त्वमग्ने तु' मन्त्र से पश्चिम कुण्ड में अग्निसंस्कार करें। तत्पश्चात् प्रत्येक कुण्ड के महाग्नि में घृताक्त पलाश समिध द्वारा अष्टोत्तर सहस्र होम करना चाहिये ॥४२९-४३२॥

अनन्तर वेदादि मन्त्र से प्रत्येक कुण्ड में व्रीहि द्वारा होम करना कर्त्तव्य है। तत्पश्चात् मूर्त्तिपगण, प्रत्येक कुण्ड में व्याहृति उच्चारण पूर्वक सघृत तिल द्वारा सहस्र होम करें। हे सुरोत्तम ! अनन्तर स्वाहान्त मूल-मन्त्र उच्चारण पूर्वक प्रति कुण्ड में घृतान्वित अक्षत द्वारा यथाविधि अष्टोत्तर सहस्र होम करें। घृत होम

घृतं दधि पयश्चैव माक्षिकं देशिकः स्वयम् । प्रतिलोमं स्पृशेच्चापि हुत्वा तु मधुरत्रयम् ॥४३६

शतमष्टोत्तरं हुत्वा विष्णुं शिरसि संस्पृशेत् । तथैव हुत्वा पञ्चाशत् हृदये संस्पृशेद्धरिम् ॥४३७

ततोऽष्टाविंशतिं हुत्वा नाभिदेशे हरिं स्पृशेत् ।
अष्टावष्टौ ततो हुत्वा पादाङ्गुष्ठौ तु संस्पृशेत् ॥४३८॥

अथ शान्तिघटोदकस्नानादि

देवं शान्तिघटस्थेन सम्पाताहुतिपाथवा । संस्नाप्य दत्वा वस्त्रादीनधिवासं समापयेत् ॥४३९॥

तथा च भविष्ये—

शान्तितोयघटं गृह्य सम्पाताहुतिजं तथा । तेन पादौ तु देवस्य शिरः प्रक्षाल्य यत्नतः ॥४४०

स्थितश्च स्नापयेत्तत्र सम्पाताहुतिवारिणा । पुनः प्रच्छादयेच्चैवं धूपं दद्यात् सगुग्गुलुम् ॥४४१

निवेद्य च हविष्यान्नं तथा मोदकसंयुतम् ।
ब्राह्मणान् पूजयेत् पूर्व्वं शेषानन्यांश्च कामतः ॥४४२॥

रात्रौ महोत्सवः कार्य्यः शङ्खभेर्य्यादिनिस्वनैः । गायनैर्नर्त्तनैश्चैव ब्रह्मघोषैस्तथैव च ॥४४३॥

पुरतो वैष्णवान् धर्म्मान् श्रावयेद्वाचकस्तथा ।
त्रिरात्रमेकरात्रं वा कुर्य्यात्तत्राधिवासनम् ॥४४४॥

---

प्रतिलोमं शिरआदिक्रमेणेत्यर्थः ॥४३६॥

तदेवाभिव्यञ्जयन् तत्र तत्र होमसंख्यामाह—शतमिति द्वाभ्याम् ॥४३७॥

सम्पाताहुतेर्यत् पाथो जलं तेन, तत्साधनप्रकारश्चाग्रे मात्स्य-वचनतो व्यक्तो भावी । सम्पाताहुतिजलश्च शान्तिघटे देवस्य स्थापनानन्तरं स्नानार्थं किञ्चिदवशिष्टं कार्य्यमिति, 'तस्यान्ते स्नापयेत्तेन सम्पाताहुति-वारिणा' इति स्नापनानन्तरमग्रे लेख्यभविष्यानुसारेण ज्ञेयम् ॥४३९।

---

वर्णित हुआ, अधुना शान्ति होम का विषय सुनो, देशिक स्वयं द्वादशाक्षर मन्त्र से मधुरत्रय द्वारा होम करके क्रमशः श्रीहरि के चरणयुगल, नाभि, हृदय एवं शिर प्रदेश में घृत, दधि, दुग्ध एवं मधु स्पर्श कराना चाहिये। अनन्तर प्रतिलोम रूप से (शिरःप्रदेश से चरण पर्य्यन्त) स्पर्श करके पुनर्वार मधुरत्रय होम करें। अतःपर अष्टोत्तर शत होम करके श्रीहरि के हृदय, अष्टाविंशति होम करके नाभिस्थान एवं अष्टसंख्यक होम करके पद एवं अङ्गुष्ठ को स्पर्श करे ॥४३३-४३८॥

अथ शान्तिघटोदमस्नानादि

अनन्तर शान्तिघटोदक द्वारा स्नानादि का वर्णन करते हैं—शान्तिघटस्थित सम्पाताहुति के जल द्वारा ही प्रभु को स्नान कराकर वस्त्रादि प्रदान पूर्वक अधिवास समापन करना चाहिये ॥४३९॥

तद्विषय में भविष्यपुराण में वर्णित है– सम्पाताहुति जनित शान्तिजलपूर्ण घट को लेकर तिल के द्वारा यत्नपूर्वक श्रीहरि के चरणयुगलों को और मस्तक प्रक्षालनपूर्वक सम्पाताहुति जनित जल द्वारा उस स्थिति स्थान को प्रोक्षित कर वहाँ स्थापन करें। अनन्तर पुनर्वार आच्छादित कर सगुग्गुलु धूप एवं मोदक समन्वित हविष्यान्न देकर ब्राह्मणों की पूजा और अन्यान्य सबकी पूजा इच्छानुसार करे। पश्चात् भेरी, शङ्ख इत्यादि के शब्द, सङ्गीत, नृत्य और वेद के सहित निशा भाग में महोत्सव सम्पन्न करें और वक्ता, उपस्थित समस्त व्यक्ति को वैष्णवधर्म श्रवण करावें। इस प्रकार तीन रात्र वा एक रात अधिवासन करना चाहिये ॥४४०-४४४॥

मात्स्ये —

ततः शान्तिघटं कुर्य्यात् प्रतिकुण्डेषु सर्व्वतः ।
शतान्ते वा सहस्रान्ते स्रुक्पूर्णाहुतिरिष्यते ॥४४५॥
समाप्याहुतिमूर्द्ध्वस्थः प्रशान्तात्मा विनिक्षिपेत् ।
आहुतीनां तु सम्पातं पूर्णकुम्भेषु विन्यसेत् ॥४४६॥
मूलमध्योत्तमाङ्गेषु देवं तेनावसेचयेत् । स्थितश्च स्नापयेत्तेन सम्पाताहुतिवारिणा ।४४७॥
प्रतियामेषु धूपं च नैवेद्यं चन्दनोदकम् । पुनः पुनः प्रकुर्व्वीत होमः कार्य्यः पुनः पुनः ॥४४८॥
पुनः पुनश्च दातव्या यजमानेन दक्षिणा । सितवस्त्रैश्च ते सर्व्वे पूजनीयाः समन्ततः ॥४४९॥
विचित्रहेमकटकैर्हेमसूत्राङ्गुरीयकैः । वासोभिः शयनीयैश्च प्रतियामेषु शक्तितः ॥४५०॥
भोजनं चापि दातव्यं यावत् स्यादधिवासनम् ।
त्रिसन्ध्यं बलयो देया भूतेभ्यः सर्व्वतो दिशम् ॥४५१॥
ब्राह्मणान् भोजयेत् पूर्व्वं शेषान् वर्णास्तु कामतः ।
रात्रौ महोत्सवः कार्य्यो नृत्यगीतकमङ्गलैः ॥४५२॥
त्रिरात्रमेकरात्रं वा पञ्चरात्रमथापि वा ।
सप्तरात्रमथो कुर्य्यात् क्वचित् सद्योऽधिवासनम् ॥४५३॥

---

ऋत्विग्भ्यो दक्षिणा दातव्या, ते चाचार्य्यादयः सर्व्वे पुनः पुनः पूजनीयाः ॥४४९॥

इत्येवं प्रतियामं यथोक्तं होमादिदेवपूजान्तो विधिरावर्त्तनीय इत्यर्थः ॥४५०॥

क्वचित् सद्योऽधिवासनमिति चलमूर्त्त्यभिप्रायेण देशकालाद्यपेक्षया ।।४५३॥

हयशीर्षदेवेन च शान्तिघटतोयस्नपनादिकं होमप्रसङ्गत एव निर्द्दिष्टम् । अधिवासनशेषकृत्यमन्यच्च केचिदाहुः—यागेत्यादिना । अन्यत् स्पष्टार्थमेव ॥४५३॥

---

मत्स्यपुराण में वर्णित है—अनन्तर प्रत्येक कुम्भ के समीप में शान्तिघट स्थापन पूर्वक शत वा सहस्र संख्यक होम करके स्रुक्पूर्ण आहुति प्रदान करें । इस प्रकार होम कार्य सम्पन्न होने के पश्चात् दण्डायमान (खड़ा) होकर प्रशान्त भाव से आहुति प्रदान करे । आहुति सम्पात पूर्णकुम्भ में ही निक्षेप करना चाहिये । उस जल से प्रभु के चरणयुगल, मध्यभाग एवं शिरोभाग को अभिषिक्त करना चाहिये । एवं इस सम्पात-उदक के द्वारा अवस्थित देववृन्द को स्थापन करें । प्रत्येक याम में ही पुनः पुनः धूप, नैवेद्य एवं चन्दनोदक अर्पण, पुनः पुनः होम, पुनः पुनः ऋत्विकवृन्द को दक्षिणा प्रदान एवं शुक्ल वस्त्र द्वारा उन सबकी पूजा करें ॥४४५-४०९॥

प्रत्येक प्रहर में ही आचार्य्यवृन्द को शक्त्यनुसार विचित्र स्वर्ण वलय, स्वर्णाङ्गुरीय, वस्त्र एवं शय्या प्रभृति के द्वारा पुनः पुनः पूजा करें, एवं अधिवासन यावत् भोजन प्रदान करना भी चाहिये । त्रिसन्ध्या समन्तात् भूतगणों के निमित्त बलि अर्पण करें ।।४५०-४५१।।

अनन्तर प्रथमतः ब्राह्मणवृन्द को भोजन कराकर स्वेच्छानुसार अन्यान्य वर्णसमूह को भोजन प्रदान करें । पश्चात् रात्रि में नृत्य, गीत एवं मङ्गल शब्द के सहित महोत्सव सम्पन्न करना चाहिये । एक रात्र, त्रिरात्र, पञ्चरात्र, सप्तरात्र, कभी सद्यः भी अधिवासन करना चाहिये ॥४५२-४५३॥

हयशीर्षपञ्चरात्रे च—

यागमण्डपमासाद्य दक्षिणद्वारगोचरे। उत्तराभिमुखाः स्थाप्याश्चतस्रो धेनवोऽनघ ॥४५४॥

गङ्गेति प्रथमा ख्याता द्वितीया यमुनेति च। गोदावरी तृतीया च चतुर्थी तु सरस्वती ॥४५५

दोहनं विष्णुगायत्र्या कृत्वा पश्चाच्चरुं श्रपेत्।
गायत्र्या होमयेच्चैव गायत्र्यैव बलिं हरेत् ॥४५६॥

भोजयेद्ब्राह्मणं चैव मण्डपादुत्तरे द्विज। पायसेनाज्ययुक्तेन शर्करामिश्रितेन च ॥४५७॥

मासाधिपानां तुष्ट्यर्थं दद्यात् कनकदक्षिणाम्। गाश्च तांस्तान् समुद्दिश्य एकैकाय निवेदयेत्।
देवासुरादीनुद्दिश्य कुर्य्याद्बलिनिवेदनम् ॥४५८॥

अधिवास्यैव देवेशं कुर्य्याज्जागरमादरात्। मङ्गलैर्ब्रह्मघोषैश्च जयशब्दरवैस्तथा ॥४५९॥
पुण्याहशब्दैर्विपुलैर्गीतवादित्रनिस्वनैः। शङ्खघोषेन महता वीणावेणुरवेण च।
कोलाहलैश्च भेर्य्याद्यैः कुर्य्याज्जागरणं हरेः ॥४६०॥ इत्यधिवासनम्।

अथ अधिवासन-माहात्म्यम्

तत्रैव—

यस्त्वेवं विधिना भक्त्या कुर्य्याद्देवाधिवासनम्। स सर्व्वतीर्थयज्ञानां दानानां तपसां तथा ॥४६१

फलं शतगुणं प्राप्य विष्णोर्लोके महीयते। आहूतसप्लवं यावद्देववत्तत्र मोदते ॥४६२॥

अथ प्रासादादेर्गर्त्तनिर्म्माणादि

प्रातः प्रासादगर्त्तं तु पुष्पाद्भिः प्रोक्ष्य सर्व्वतः।
निश्चित्य मध्यमैशान्यां गर्त्तं कृत्वार्पयेच्छिलाम् ॥४६३॥

---

गर्त्तस्याधो ब्रह्मशिलां न्यसेत ॥४६३॥

---

हयशीर्ष पञ्चरात्र में लिखित है—हे अनघ! पुनर्व्वार यागमण्डप में गमनपूर्वक मण्डप के दक्षिण द्वार में उत्तराभिमुखी करके चार धेनु स्थापन करें। यह चार धेनु क्रमशः,-गङ्गा, यमुना, गोदावरी एवं सरस्वती नाम से कीर्त्तिता हैं। विष्णुगायत्री पाठ पूर्वक होम करें एवं गायत्री पाठ पूर्वक वलि आहरण करें। हे हे द्विज! पश्चात् मण्डप के उत्तरांश में ब्राह्मणों को घृतशर्करान्वित पायस भोजन करना चाहिये। मासाधिपगण के सन्तोष निमित्त उन सबको एक एक धेनु एवं दक्षिणा प्रदान कर देववृन्द एवं असुरवृन्द के निमित्त वलि प्रदान करें। इस रीति से देवश का अधिवासन सम्पन्न करके मङ्गल शब्द, वेदशब्द, जय शब्द, पुण्याह शब्द, अत्युच्च गीत-वाद्य शब्द, महा शङ्खध्वनि एवं भेरी शब्द प्रभृति की ध्वनि के सहित श्रीहरि के निमित्त जागरण करें ॥४५४-४६०॥

इति अधिवासनम्

अथ अधिवासन-माहात्म्यम्

अनन्तर अधिवासन के माहात्म्य का वर्णन करते हैं—उक्त ग्रन्थ में लिखित है—जो व्यक्ति उक्त विधानानुसार भक्तिपूर्वक श्रीप्रभु का अधिवासन करता है, वह निखिल तीर्थ, यज्ञ, दान, तपस्या की अपेक्षा भी शतगुण फल लाभ करके श्रीहरि धाम में पूजित हो सकता है। एवं आप्रलय पर्य्यन्त विष्णुलोक में आनन्द से निवास कर सकता है ॥४६१-४६२॥

अथ प्रासादादेर्गर्त्तनिर्म्माणादि

प्रातःकाल में प्रासाद के अभ्यन्तर में सर्वथा पुष्प जल द्वारा सिञ्चनकर मध्यस्थल निर्णय करके उसको

तथा च भविष्ये—

अधिवास्य ततो विष्णुं श्वभ्रं कुर्य्यात् समाहितः।
प्रासादस्यानुरूपेण प्रतिमायाश्च भारत ॥४६४॥

प्रासादं प्रोक्ष्य सर्व्वत्र मन्त्रपूतेन वारिणा। पातयेत् पक्षसूत्राणि द्वारसूत्रं तथैव च ॥४६५॥

ततो मध्यं समं गृह्य कर्त्तव्यं स्थिरमादरात्। कुर्य्यात् श्वभ्र-प्रमाणेन कृष्णस्याद्भुतकर्म्मणः।
श्वभ्राधस्तान्न्यसेत् पूर्व्वं शिलां ब्रह्मात्मिकां शुभाम् ॥४६६॥

मात्स्ये—

कृत्वाधिवासं देवानां श्वभ्रं कुर्य्यात् समाहितः।
प्रासादार्च्चानुरूपेण मानाल्लिङ्गस्य वा पुनः ॥४६७॥

पुष्पोदकेण प्रासादं प्रोक्ष्य मन्त्रपुतेन तु। पातयेत् पक्षसूत्राणि द्वारसूत्रं तथैव च ॥४६८॥

आश्रयेत् किञ्चिदैशानीं मध्यं कृत्वा दिशं बुधः। ऐशानीमाश्रितं देवं पूजयन्ति दिवौकसः ॥४६९
आयुरारोग्यफलदमथवोत्तरमाश्रितम्। शुभं स्यादशुभं प्रोक्तमन्यथा स्थापनं बुधैः।
अधः कूर्म्मशिला प्रोक्ता सदा ब्रह्मशिलाधिका ॥४७०॥

हयशीर्षपञ्चरात्रे—

अधिवास्य विधानेन देवदेवं हरिं प्रभुम्। पिण्डिकास्थापनार्थाय गर्त्तागारं विशेद्गुरुः ॥४७१
यादृशं गर्त्तगेहं तु कृतं सुरगणार्च्चितम्। संविभज्य प्रकुर्व्वीत सप्तभागं विचक्षणः।
पुनश्च सप्तधा कृत्वा स्थानभागं प्रकल्पयेत् ॥४७२॥

---

मन्त्रेण 'ॐ सरस्वत्यै भैषज्येन तु' इतिमन्त्रेण पूतं यत्तेन। पक्षसूत्राणि ॥४६५॥
शुभमपि स्थापनमन्यथा उक्तप्रकारव्यतिरेकेणाशुभं स्यादिति बुधै प्रोक्तम् ॥४७०॥

---

ईशानदिक् में गर्त्त करें। उस गर्त्त में शिलास्थापन करनी चाहिये ।।४६३।।

उस विषय में भविष्य पुराण में लिखा है— हे भारत ! श्रीहरि का अधिवासन समापन करके समाहित प्रासाद वा प्रतिमा के अनुरूप गर्त्त करे। अनन्तर मन्त्रपूत जल द्वारा प्रासाद के सब स्थान प्रोक्षण करके पार्श्वसूत्र और द्वार सूत्रपात करना चाहिये। अनन्तर यत्नपूर्वक सम भाग में मध्य सूत्र का निर्णय करें। अद्भुत कर्मा श्रीहरि के निमित्त गर्त्त प्रमाण उसको करना चाहिये। गर्त्त के निम्नदेश को पूर्वदिक् में मङ्गलकारी ब्रह्मात्मिका शिला स्थापन करनी चाहिये ।।४६४-४६६।।

मत्स्यपुराण में लिखित है — देवगण का अधिवासन करके सावधानी से प्रासाद वा प्रतिमा वा लिङ्ग के अनुरूप गर्त्त प्रस्तुत करे। तत्पश्चात् मन्त्रपूत जल द्वारा सेचन पूर्वक पार्श्वसूत्र एवं द्वार सूत्रपात करे। किञ्चित् ईशानदिक् को अवलम्बन करके मध्यसूत्रपात करना ही विज्ञव्यक्ति का कर्त्तव्य है। ईशानदिक् में अधिष्ठित देवगण आयुः एवं आरोग्य दान करते हैं। विचक्षण व्यक्ति का कथन है कि, अन्यदिक् में देवस्थापन करने से शुभ भी अशुभ में परिणत होता है। अधोदिक् में स्थापिता कूर्म्मशिला सर्वदा ब्रह्मशिला की अपेक्षा से भी श्रेष्ठा है ।।४६७-४७०।।

हयशीर्ष पञ्चरात्र में लिखित है— गुरुदेव, विधिपूर्वक देवदेव प्रभु श्रीहरि का अधिवास करके पिण्डिका स्थापन हेतु गर्भागार में प्रवेश करें। सुरगणार्चित गर्त्तगृह जिस प्रकार हुआ है, विचक्षण गुरु, उसको सप्तधा विभक्त करके पुनर्वार उसको सप्त अंश करके स्थानभाग की कल्पना करें। मध्य स्थान में ब्रह्मभाग

ब्रह्मभागं भवेन्मध्यं दैवं स्यात्तदनन्तरम् । तृतीयं मानुषं भागं पैशाचं तु चतुर्थकम् ॥४७३॥

द्विभुजं ध्यानयोगस्थं निविष्टं स्थितमेव च ।
चतुर्भुजं वा ब्राह्मे तु भागे संस्थापयेद्धरिम् ॥४७४॥

ब्राह्मभागं परित्यज्य किञ्चिदाश्रित्य वा द्विजः । सदैव स्थापयेद्देवं दैवमानुषभागयोः ॥४७५

दैवमानुषभागाभ्यां शयनं परिकल्पयेत् । दारवीं मृन्मयीं मूर्त्ति देवस्थाने निवेशयेत् ॥४७६॥

मानुषं किञ्चिदाश्रित्य आसीनं स्थापयेद्धरिम् । नरसिंहं वराहञ्च देवभागे नियोजयेत् ॥४७७॥

विघ्नेशमम्बिकां देवीं मातृ भूतगणं तथा । आदित्यादीन् हरेरंगानेवमादींस्तथा परान् ।
पैशाचे स्थापयेत् स्थाने नात्र कार्य्या विचारणा ॥४७८॥

स्वस्थानवर्ज्जिताः सर्व्वे भयदुःखामयप्रदाः ।
तस्मात् सर्व्वेण यत्नेन स्वस्थाने विनिवेशयेत् ॥४७९॥

अथ पिण्डिकाशोधनम्

श्रीमूर्त्या सह पिण्डीं च स्थापयित्वाभिपूज्य ।
रथेन मण्डपं नीत्वा संस्थाप्य पुनरर्च्चयेत् ॥४८०॥

मात्स्ये—

ततः प्रक्षालितां कृत्वा पञ्चगव्येन पिण्डिकाम् । कषायतोयेन पुनर्मन्त्रयुक्तेन सर्व्वतः ।
देवभार्य्याश्रयं मन्त्रं पिण्डिकासु नियोजयेत् ॥४८१॥

---

पूर्वं साक्षादलिखितं पिण्डिकास्थापनादिकं पिण्डिकाशोधनप्रसङ्गेऽत्र लिखति—श्रीमूर्त्त्या सहेति । रथेन श्रीमूर्त्त्यधिरोहितयानेन, असम्भवे अन्येन वा ॥४८०॥

---

तत्पश्चात् दैवभाग होगा । पश्चात् तृतीय मनुष्यभाग और चतुर्थ पैशाचभाग होगा । ध्यान योगस्थ निविष्ट, संस्थित, द्विभुज वा चतुर्भुज हरि को ब्रह्मभाग में स्थापन करें । अथवा द्विज, ब्रह्मभाग को परित्याग करके उसका कियदंश मात्र अवलम्बन करके सर्वदा देव एवं मनुष्य भाग में प्रभु को स्थापन करे । देव एवं मनुष्य भाग में ही शय्या कल्पना करनी चाहिये । देव भाग में दारुमयी एवं मृण्मयी मूर्त्ति स्थापन करे । मनुष्य भाग का कियदंश को आश्रय करके उपविष्ट हरिमूर्त्ति स्थापन करनी चाहिये । देवभाग में नरसिंह मूर्त्ति एवं वराहमूर्त्ति स्थापन करे ॥४७१-४७७॥

विघ्ननाशक, अम्बिका, मातृगण, भूतगण, एवं आदित्यादि श्रीहरि के अङ्ग देवगण को एवं अन्यान्य देवगण को पैशाच भाग में स्थापन करें । इस विषय में कुछ भी विचार न करें ॥४७८॥

जिन सब मूर्त्तियों का विषय वर्णित हुआ है, वह यथा स्थान में स्थापित न होने से भय, दुःख, एवं रोगप्रद होते हैं । सुतरां सर्वप्रयत्न से इन सबको स्थापन करना चाहिये ॥४७९॥

अथ पिण्डिकाशोधनम्

पिण्डिका को श्रीमूर्त्ति के सहित स्थापन एवं पूजन करके रथ में आरोहण कराकर मण्डप में उपस्थित करे एवं वहाँ स्थापन पूर्वक पुनर्वार पूजा करे ॥४८०॥

मत्स्यपुराण में उक्त है—अनन्तर पञ्चगव्य द्वारा पिण्डिका धौत करके पुनर्वार सर्वथा मन्त्रपूत कषाय जल द्वारा प्रक्षालन पूर्वक उस पिण्डिका में देवभार्य्याश्रय मन्त्र प्रयोग करना कर्त्तव्य है ॥४८१॥

हयशीर्षे—

श्रियः सूक्तेनार्च्चयीत प्रत्यृचं पिण्डिकामपि ॥४८२॥

अथ प्रासादे श्रीमूर्त्तिविजयः

प्रागवत् श्रीमूर्त्तिमुत्थाप्य याने चारोप्य मण्डपात् ।
प्रादक्षिण्येन सानन्दं नयेत् प्रासादमण्डपम् ॥४८३॥

तथा च मात्स्ये—

तत उत्थाप्य देवेशं उत्तिष्ठ ब्रह्मणस्पते । आनीय गर्भभवनं पीठान्ते स्थापयेद्‌बुधः ॥४८४॥

भविष्ये—

ततश्चोत्थापयेद्देवं मन्त्रेणानेन भूमिप । उत्तिष्ठ ब्रह्मणस्पते ब्रह्मघोषैश्च पुष्कलैः ।
पुण्याहजयघोषैश्च शङ्खभेर्य्यादिनिस्वनैः ॥४८५॥

रथं चालङ्कृतं कृत्वा तस्मिंश्चारोपयेच्छनैः । रथे तिष्ठेति मन्त्रेण रथस्थं कारयेद्धरिम् ॥४८६

ग्रामं वा नगरं वापि शनैः कुर्य्यात् प्रदक्षिणम् ।
पुष्पैर्गन्धैस्तथान्नाद्यैः शकटं पूरयेच्छुभैः ॥४८७॥

शङ्खभेरीनिनादैश्च पताकाभिर्ध्वजैस्तथा । चामरैश्च वितानैश्च कलसैः पद्मशोभितैः ॥४८८॥
दीपदर्पणसंयुक्तै र्गीतमङ्गलनादितैः । बलिं प्रक्षिप्यमाणन्तु शनैर्गच्छेत् प्रदक्षिणम् ॥४८९॥

---

प्रादक्षिण्येन नगरस्य ग्रामादेर्वा प्रदक्षिणक्रमेण, सानन्दं गीतवाद्यादि-महोत्सवैर्नेत्यर्थः, प्रासादे तदग्रतो यन्मण्डपं तत् ॥४८३॥

शकटं तद्रथमेव ॥४८७॥

---

हयशीर्ष पञ्चरात्र में उक्त है– प्रति ऋक् की एवं पिण्डिका की श्रीसूक्त के द्वारा पूजा करनी चाहिये ॥४८२

अथ प्रासादे श्रीमूर्त्तिविजयः

पूर्ववत् मण्डप से श्रीमूर्त्ति को रथ में आरोहण कराकर गीतवाद्य प्रभृति महोत्सव के सहित नगर किंवा ग्राम की प्रदक्षिणा करके प्रासाद के सम्मुखस्थ मण्डप में ले जाय ॥४८३॥

उस विषय में मत्स्यपुराण में लिखित है—विद्वान् व्यक्ति 'उतिष्ठ ब्रह्मणस्पते' इस मन्त्र से प्रभु को उत्थापन करे, एवं मन्दिर के अभ्यन्तर में ले आकर पीठ में स्थापन करे ॥४८४॥

भविष्यपुराण में कथित है—हे राजन् ! अनन्तर 'उत्तिष्ठ ब्रह्मणस्पते' इस मन्त्र से प्रभु को उत्थापित करना चाहिये । तत्पश्चात् पवित्र वेद शब्द, पुण्याह, जयनाद एवं शङ्ख, भेरी, प्रभृति की ध्वनि के सहित रथ को सुशोभित करके उसमें शनैः शनैः आरोपण पूर्वक 'रथे तिष्ठ' इस मन्त्र से श्रीहरि को रथारूढ़ कराना चाहिये । अतःपर शनैः शनैः ग्राम वा नगर की प्रदक्षिणा करनी चाहिये । तत्पश्चात् पुष्प, गन्ध एवं विशुद्ध अन्नादि द्वारा रथ पूरित एवं पताका ध्वजारोपण, चामर, वितान, कमलशोभित कलस, दीप, दर्पण, गीत द्वारा सज्जित करके शङ्ख-भेरीध्वनि एवं मङ्गल शब्द के सहित बलि अर्पण पूर्वक शनैः शनैः प्रदक्षिण पूर्वक गमन करे ॥४८५-४८९॥

अथ रत्नादिन्यासः

अर्घ्यपाद्यादिकं दत्वा तत्र विश्रम्य च क्षणम् । तस्यां ब्रह्मशिलायां तु न्यसेद्रत्नादि मन्त्रतः ॥४६०

भविष्ये—

आनीय मण्डपे पश्चादर्घ्यं पाद्यं च दापयेत् । तस्मिन् मुहूर्त्ते विश्रम्य रत्नन्यासं तु कारयेत् ॥४६१
सर्व्ववीजानि धातूंश्च रत्नान्योषधयस्तथा । काञ्चनं पद्मरागश्च पारदेन समन्वितम् ॥४६२॥
पद्मः कूर्म्मश्च पृथिवी गरुड़श्चानुपूर्व्वशः । ब्रह्मस्थाने तु दातव्या मन्त्रपूता यथाविधि ॥४६३

वीजं गाढ़ं न कुर्व्वीत समूलांस्तान् प्रपातयेत् ।
वीजे गाढ़े महादोषो व्याधिदोषभयं भवेत् ।
वीजकानामलाभे तु स्वर्णं सर्व्वत्र विन्यसेत् ॥४६४॥

मात्स्ये—

अर्घ्यपाद्यादिकं तत्र मधुपर्कं प्रयोजयेत् । ततो मुहूर्त्तं विश्रम्य रत्नन्यासं समाचरेत् ॥४६५॥
वज्रं मौक्तिकवैदूर्य्यं शङ्खं स्फटिकमेव च । पुष्परागेन्द्रनीलश्च नीलं पूर्व्वादितः क्रमात् ॥४६६
तालकश्च शिला-वज्रमञ्जनं श्याममेव च । काक्षीं काशीसमाक्षिकं गैरिकञ्चादितः क्रमात् ॥४६७

---

तत्र मण्डपे क्षणं विश्रम्य, तस्यां गर्त्ताधोन्यस्तायां, मन्त्रनस्तत्तन्मन्त्रैः, रत्नन्यासविधिक्रमश्च मत्स्य-पुराणादिवचनतोऽग्रे व्यक्तो भवत्येव ॥४६०॥

पद्मादयश्च स्वर्णनिर्म्मिताः अग्रे लेख्यश्रीहयशीर्षोक्तिचा ज्ञेयाः ॥४६३॥

वीजं गाढ़ं कठिनमित्यर्थः जातावेकत्वम् ॥४६४॥

तत्र—गर्भभवने, प्रयोजयेत्—समर्पयेत् ॥४६५॥

वज्राद्यष्टकम् अष्टदिक्षु पूर्व्वदिशमारभ्य क्रमेण अग्रे लेख्यतत्तन्मन्त्रैर्विन्यसेत् । एवमग्रेऽपि ज्ञेयम् । तत्र प्रयोगः—'इन्द्रस्तु महसा दीप्तः सर्व्वदेवाधिपो महान् । दम्भोलिहस्तः सत्त्वाढयस्तस्मै नित्यं नमो नमः ॥ ॐ इन्द्राय नमः' इत्यादि । पञ्चरात्रानुसारेण चाग्रे लेख्यतन्त्रोक्त मन्त्रैरेव । तत्र वज्रं हीरकम् ॥४६६॥

तालकं हरितालकं, शिला मनःशिला, वज्रं वज्राभ्रकं, श्याममञ्जनं सौवीराञ्जनम्, काक्षीं सौराष्ट्र-मृत्तिकाम्, काशीसं सीसं, माक्षिकं सुवर्णमाक्षिकम् ॥४६७॥

---

अथ रत्नादिन्यासः

अर्घ्य, पाद्य प्रभृति प्रदान करके कियत्काल मण्डप में विश्राम करके पूर्वोक्त ब्रह्मशिला में तन्त्र मन्त्रादि द्वारा रत्नादि स्थापन करे ॥४६०।

भविष्यपुराण में लिखित है—अनन्तर मण्डप में आनयन करके पुनर्वार अर्घ्य और पाद्य देवे एवं मुहूर्त्त विश्राम करने पर रत्न स्थापन करे । सर्व बीज, धातु, रत्न, औषधि, सुवर्ण, पारद, पद्मराग, सुवर्णमय-पद्म, कूर्म्म, पृथ्वी और गरुड़,–यथाविधि इन सबको मन्त्रपूत करके ब्राह्म भाग में प्रदान करे । वीज को कठिन न करे, वह समूह प्रदान करे । वीज दृढ़ होने पर महादोष एवं व्याधि का भय उपस्थित होता है । वीज के अभाव में सर्वत्र सुवर्ण अर्पण करना ही प्रशस्त है । ४६१-४६४॥

मत्स्य पुराण में उक्त है—उक्त स्थान में अर्घ्य, पाद्य, प्रभृति प्रदान करके मधुपर्क अर्पण करना चाहिये । तत्पश्चात् एक मुहूर्त्त विश्राम करके रत्न स्थापन करे ॥४६५।

पूर्वादि अष्ट दिक् में क्रम पूर्वक वज्र, मुक्ता, वैदूर्य्य, शङ्ख, स्फटिक, पुष्पराग, इन्द्रनील, एवं नील,–यह

गोधूमश्च यवं तद्वत्तिलमुद्गं तथैव च । नीवारमथ श्यामाकं सर्षपं व्रीहिमेव च ॥४९८॥

न्यसेत् क्रमेण पूर्व्वादौ चन्दनं रक्तचन्दनम् । अगुरुं चाञ्जनं चैव उशीरञ्च ततः परम् ।

वैष्णवीं सहदेवीञ्च लक्षणाञ्च ततः परम् ॥४९९॥

स्वलोकपालनाम्ना तु न्यसेदोङ्कारपूर्व्वकम् ॥५००॥

सर्व्वबीजानि धातूंश्च रत्नान्योषधयस्तथा । ब्रह्मस्थाने तु दातव्याः संहताः स्युः परस्परम् ॥५०१

काञ्चनं पद्मरागञ्च पारदं पद्ममेव च । कूर्म्मं धरां वृषं तद्वन्न्यस्येत् पूर्व्वादितः क्रमात् ॥५०२

मूलकं विद्रुमं ताम्रं कांस्यं चैवारकूटकम् । रजतं विमलं पुष्पं लोहं चानुक्रमेण तु ॥५०३॥

काञ्चनं हरितालञ्च सर्व्वाभावे विनिक्षिपेत् । दद्याद्वीजौषधिस्थाने सहदेवीं यवानपि ॥५०४

हयशीर्षपञ्चरात्रे—

नपुंसकशिलायान्तु रत्नन्यासं समाचरेत् । वस्त्राभरणगन्धाद्यैः पूर्व्ववद्भूषितो गुरुः ॥५०५॥

हुत्वाहुतिशतं विप्र नारसिंहेन वा पुनः । तेनैवामन्त्र्य रत्नादीन् पिण्डिकां श्वभ्रके न्यसेत् ।

गुग्गुलं द्रावयित्वाथ गर्भे तु विनिवेशयेत् ॥५०६॥

रत्नादीनां तु न्यस्तानां निश्चलीकरणाय तु । ततो निवेशयेत्तांस्तु दिशासु विदिशासु च ॥५०७

---

व्रीहिं धान्यम्, अञ्जनं कृष्णागुरुं, वैष्णवीं विष्णुक्रान्ताम् ॥४९८-४९९॥

एवं सर्व्वाणि बीजानि, सर्व्वान् धातून, सर्व्वाणि रत्नानि, सर्व्वा ओषधीश्च क्रमेण न्यसेत् । ब्रह्मस्थाने च मध्ये बीजादयः परस्परं संहता मिलिता दातव्याः ॥५०१॥

पुनः काञ्चनमयस्कान्तलोहमिति यावत् ॥५०१॥

विमलं त्रिविधं—हेमविमलं, तारविमलं, कांस्यविमलमिति प्रसिद्धम्; पुष्पं लोहविशेषं, यत्र पङ्कजाकारा विन्दवो वर्त्तन्ते । लोहाभावे काञ्चन धातुम् औषध्यभावे सहदेवीं दद्यादिति ज्ञेयम् । एतच्च सर्व्वमग्रे हयशीर्ष-पञ्चरात्र-वचनतो विवृतं भावि । तत्र क्वचिद्विरोधश्च फलभेदादि कल्पनया परिहरणीय इति लिखितमेवेति दिक् अन्यत् सुगमम् ॥५०३॥

---

आठ स्थापन करने चाहिये । अनन्तर पूर्वादि क्रम से हरिताल, मनःशिला, वज्राभ्र, सौबीराञ्जन, सौराष्ट्र-देशज मृत्तिका, सीसक, स्वर्णमाक्षिक, गैरिक, एवं तत्पश्चात् गोधूम, यव, तिल, मुद्ग, नीवार, श्यामाक, सर्षप एवं धान्य,- यह सब स्थापन करे । पश्चात् प्रणव उच्चारण के सहित लोकपालवृन्द के स्वनाम द्वारा चन्दन, रक्तचन्दन, अगुरु, कृष्णागुरु, वेणामूल, अपराजिता, बला एवं श्वेत कण्टकारि (सफेद कटेरी),- यह सब स्थापन करने चाहिये ॥४९६-५००॥

सर्वबीज, धातु, रत्न एवं औषधिसमूह एकत्र करके ब्रह्मस्थान में अर्पण करे । उस प्रकार बाद में पूर्वादि दिक्समूह में क्रमानुसार काञ्चन, पद्मराग, पारद, पद्म, कूर्म्म, धरा, वृष, मूलक, प्रवाल, ताम्र, कांस्य, पित्तल, विमल, रजत, पुष्प, (लौह विशेष) एवं लौह स्थापन करे । बीजोषधि के अभाव से सहदेवी एवं यव प्रदान करे ॥५०१-५०४॥

हयशीर्ष पञ्चरात्र में वर्णित है— नपुंसकशिला में रत्न अर्पण करना निषिद्ध है। हे विप्र ! गुरुदेव पूर्ववत् वस्त्र, भूषण, एवं गन्धादि से भूषित होकर नारसिंह मन्त्र से शत होम करके उक्त मन्त्र से ही आमन्त्रण पूर्वक यह रत्नादि एवं पिण्डिका गर्त्त में स्थापन करना चाहिये और गुग्गुलु द्रव करके गर्त्त में प्रदान करें । तदनन्तर स्थापित रत्न प्रभृति के स्थिरीकरण हेतु इन सबको दिक्विदिक में सन्निवेश करें ॥५०५-५०७॥

प्रथमावरणे व्रीहीन् रत्नान्यपि द्वितीयके । तृतीये विन्यसेद्धातून् लोहञ्चापि चतुर्थके ।।५०८।।

प्रत्यावरणगर्भे तु पञ्चमावरणे द्विज । चन्दनादींश्च विप्रेन्द्रश्चाष्टदिक्षु निवेशयेत् ।

एकैकं दिक्षु विन्यस्य मध्ये चैवापरं न्यसेत् ।।५०९।।

ऐन्द्रयाञ्च चन्दनं न्यस्यमाग्नेय्यां रक्तचन्दनम् ।

कृष्णागुरुं दक्षिणस्यां निर्ऋत्यामपरागुरुम् ।।५१०।।

उशीरं पश्चिमे भागे विष्णुक्रान्तामथापरे । सहदेवीमुदीच्यां तु लक्षणामीशगोचरे ।

ब्राह्मीं सुवर्च्चलां मध्ये वृद्धिं ब्राह्मे निवेशयेत् ।।५११।।

धान्यमैन्द्रयां निवेश्याथ आग्नेय्यां तु कुलत्थकम् ।

यवान् दक्षिणभागे तु गोधूमं नैर्ऋते न्यसेत् ।।५१२।।

तिलांस्तु पश्चिमे दद्यान्नीवारं वायुगोचरे । मुद्गमुत्तरतो दद्यान्निष्पावमीशगोचरे ।

मध्ये सिद्धार्थकं दद्याद्रत्नन्यासं समाचरेत् ।।५१३।।

वज्रं तु पूर्व्वतो दद्यादाग्नेय्यां मौक्तिकं तथा ।

वैदूर्य्यं दक्षिणे दद्याच्छङ्खं निर्ऋतिगोचरे ।।५१४।।

स्फटिकं वारुणे दद्यात् पद्मरागं तु वायवे । उत्तरे चन्द्रकान्तं तु ऐशान्यामिन्द्रनीलकम् ।

पद्मरागं न्यसेन्मध्ये यथावद्द्विजसत्तम ।।५१५।।

हरितालं न्यसेत् पूर्व्वे आग्नेय्यां तु मनःशिलाम् ।

अञ्जनं दक्षिणे दद्यान्माक्षिकं ब्रह्मगोचरे ।।५१६।।

सौराष्ट्रीं वारुणे दद्याद्वायव्यां गैरिकं तथा ।

सीसं चैवोत्तरे दद्यादैशान्यां गन्धकं तथा ।

पारदं तु न्यसेन्मध्ये यथावत्त्रिदशेश्वर ।।५१७।।

---

हे द्विज ! प्रथम आवरण में व्रीहि, द्वितीय आवरण में रत्न, तृतीय आवरण में धातु एवं चतुर्थ आवरण में लौह प्रदान करना चाहिये। प्रति आवरण में एवं पञ्चम आवरण में अष्टदिक् में चन्दनादि प्रदान करना कर्त्तव्य है। उत्तम विप्र, एक एक करके समस्त दिक् में स्थापन पूर्व्वक मध्यभाग में अन्य एक को स्थापन करें ।।५०८-५०९।।

पूर्व में चन्दन, अग्निकोण में रक्तचन्दन, दक्षिण में कृष्णागुरु, नैर्ऋत में शुक्लागुरु, पश्चिम में वेणामूल, वायुकोण में अपराजिता, उत्तर में बला एवं ईशानकोण में श्वेत कण्टकारि स्थापन पूर्वक मध्य में ब्राह्मी सुवर्च्चला एवं ब्रह्मभाग में वृद्धि नामक ओषधि विशेष स्थापन करे।५१०-५११।

तत्पश्चात् पूर्व भाग में धान्य, अग्निकोण में कुलत्थ, दक्षिण में यव, नैर्ऋतकोण में गोधूम, पश्चिम में तिल, वायुकोण में नीवार, उत्तर में मुद्ग ईशानकोण में निष्पाव एवं मध्य में सिद्धार्थक अर्पण करें। पश्चात् रत्नन्यास करना आवश्यक है। अर्थात् पूर्व में वज्राभ्र, अग्निकोण में मुक्ता, दक्षिण में वैदूर्य्य, नैर्ऋतकोण में शङ्ख, पश्चिम में स्फटिक, वायुकोण में पद्मराग उत्तर में चन्द्रकान्त, ईशानकोण में इन्द्रनील एवं मध्य स्थान में पद्मराग स्थापन करें। हे त्रिदशेश्वर ! अनन्तर, पूर्व में हरिताल, अग्निकोण में मनः-

हिरण्यं पूर्व्वतो दद्यादाग्नेय्यां तारमुत्तमम् । आयसं दक्षिणे न्यस्य नैर्ऋत्यां त्रपुषं तथा ॥५१८
पश्चिमे विन्यसेद्घोषं नारं वायव्यगोचरे । सिह्लकं चोत्तरे न्यस्य शुल्वमीशानगोचरे ॥५१९
पद्मं कूर्म्मं तथानन्तं पृथ्वीं मध्ये निवेशयेत् । सुमेरुञ्च सुरश्रेष्ठ सर्व्वमेतद्धिरण्मयम् ॥५२०॥
एषामेकतमं मध्ये न्यसेत् सर्व्वाण्यथापि वा । नमो हिरण्यमन्त्रेण ब्रह्मस्थाने निवेशयेत् ॥५२१

किञ्च —

ओषधीनाममलाभे तु विष्णुक्रान्तां विशाम्पते । वीजानामप्यलाभे तु यवं सर्व्वत्र दापयेत् ॥५२२
अलाभे सर्व्वरत्नानां मुक्ता सर्व्वत्र शस्यते । अलाभे सर्व्वधातूनां हरितालं विनिक्षिपेत् ।
अलाभे सर्व्वलोहानां काञ्चनानि प्रदापयेत् ॥५२३॥

अथ रत्नन्यासमन्त्रः

भविष्ये —

इन्द्रस्तु महसा दीप्तः सर्व्वदेवाधिपो महान् ।
दम्भोलिहस्तः सत्त्वाढ्यस्तस्मै नित्यं नमो नमः ॥५२४॥ इति पूर्व्वदिशि ।
आग्नेयः पुरुषो दीप्तः सर्व्वदेवमयोऽव्ययः ।
धूमकेतुरनाधृष्यस्तस्मै नित्यं नमो नमः ॥५२५॥ इति आग्नेय्याम् ।
यमश्चोत्पलवर्णाभः पुरुषो दण्डधृङ्महान् ।
धर्म्मसाक्षी विशुद्धात्मा तस्मै नित्यं नमो नमः ॥५२६॥ इति दक्षिणस्याम् ।
नैर्ऋतः पुरुषः कृष्णः सर्व्वरक्षोऽधिपो महान् ।
खड्गहस्तो महासत्त्वस्तस्मै नित्यं नमो नमः ॥५२७॥ इति नैर्ऋत्याम् ।

---

शिला, दक्षिण में अञ्जन, नैर्ऋतकोण में माक्षिक, पश्चिम में सौराष्ट्रिक, वायुकोण में गैरिक, उत्तर में सीसक, ईशानकोण में गन्धक एवं मध्यभाग में पारद देवें। पश्चात् पूर्व में स्वर्ण, वह्निकोण में मुक्ता, दक्षिण में लौह, नैर्ऋतकोण में सीसक, पश्चिम में कांस्य, वायुकोण में जल, उत्तर में सिह्लक (गन्ध द्रव्य विशेष) एवं ईशानकोण में ताम्र स्थापन करें। हे सुरश्रेष्ठ ! सुवर्ण द्वारा पद्म, कूर्म्म, अनन्त, वसुधा, एवं सुमेरुमूर्त्ति निर्म्माण करके मध्यस्थ स्थापन करे। इन सबके मध्य में एक अथवा समुदय के मध्य में स्थापन करें एवं 'नमो हिरण्य' इस मन्त्र से ब्रह्मस्थान में सन्निवेश करना चाहिये ॥५१२-५२१॥

और भी लिखित है—हे विशाम्पते ! ओषधिसमूह का अभाव होने पर अपराजिता एवं वीज का अभाव होने पर यव अर्पण करना ही सर्वत्र कर्त्तव्य है। रत्नसमूह का अभाव से एकमात्र मुक्ता, समस्त धातु का अभाव होने पर हरिताल एवं सर्वविध लौह का अभाव से सुवर्ण प्रदान करना चाहिये ॥५२२-२३

अथ रत्नन्यासमन्त्रः

भविष्यपुराण में लिखित है—जो महातेज से दीप्त, देवगण के अधिपति, महान्, बज्रहस्त एवं महाबल हैं, उन इन्द्र को नित्य नमस्कार, नमस्कार।' इस मन्त्र से पूर्व दिक् में विन्यास करे। 'जो दीप्त, देवगणमय, अव्यय, धूमकेतु एवं अनाधृष्य हैं उन आग्नेयपुरुष को नित्य नमस्कार, नमस्कार।' इस मन्त्र से अग्निकोण में विन्यास करना चाहिये। 'जिनका वर्ण उत्पलकान्ति सदृश है, जो दण्डधारी, महान् एवं धर्मसाक्षी हैं, उन विशुद्धात्मा पुरुष यम को नित्य नमस्कार, नमस्कार।' इस मन्त्र से दक्षिणदिक् में विन्यास करे। 'जो

वरुणः सबल धीमान् पुरुषो निम्नगाधिपः ।
पाशहस्तो महाबाहुस्तस्मै नित्यं नमो नमः ॥५२८॥ इति पश्चिमदिशि ।
वायुर्वै श्यामवर्णोऽयं सर्व्वगन्धवहः शुचिः ।
पुरुषो ध्वजहस्तश्च तस्मै नित्यं नमो नमः ॥५२९॥ इति वायव्याम् ।
आत्रेयः पुरुषः सौम्यः सर्व्वौषधिसमन्वितः ।
नक्षत्राधिपतिः सोमस्तस्मै नित्यं नमो नमः ॥५३०॥ इति उदीच्याम् ।
ईशानः पुरुषः शुक्रः सर्व्वविद्याधिपस्तथा ।
शूलहस्तो विरूपाक्षस्तस्मै नित्यं नमो नमः ॥५३१॥ इति ऐशान्याम् ।
पद्मयोनिश्च तन्मूर्त्तिर्वेदव्यासः पितामहः ।
यज्ञाध्यक्षश्च सततं तस्मै नित्यं नमो नमः ॥५३२॥ इति ऊद्ध्वें ।
योऽसावनन्तरूपेण ब्रह्माण्डं सचराचरम् ।
पुष्पवद्धारयेन्मूर्द्धिन तस्मै नित्यं नमो नमः ।५३३॥ इति अधः ।

मात्स्ये च प्रायः सर्व्वमेवमेव ।

किञ्च—

ॐकारपूर्व्विका ह्येते न्यासे बलिनिवेदने । मन्त्राः स्युः सर्व्वदेवानां बृद्धिपुत्रफलप्रदाः ।५३४॥

हयशीर्षपञ्चरात्रे च—

दिगीशानां तु मन्त्रेण रत्नादीन् विनिवेशयेत् ॥५३५॥

---

कृष्णवर्ण, राक्षस समूह के अधिपति, महान् एवं खड्ग हस्त हैं, उन महाबल पुरुष को नित्य नमस्कार, नमस्कार ।' इस मन्त्र से नैर्ऋतकोण में विन्यास करे । 'जो सबल, धीमान्, सरित्पति, पाशहस्त एवं महाबाहु हैं, उन वरुणदेव को नित्य नमस्कार, नमस्कार ।' इस मन्त्र से पश्चिमदिक् में विन्यास करे । 'जो श्यामवर्ण, सर्वगन्धवाही, पवित्र, ध्वजहस्त, उन पुरुषमूर्त्ति वायुदेव को नमस्कार, नमस्कार ।' इस मन्त्र से वायुकोण में विन्यास करें । 'जो सौम्यमूर्त्ति, सर्वौषधिसमन्वित एवं नक्षत्राधिपति हैं, उन अत्रिनयनजात पुरुषोत्तम सोमदेव को नित्य नमस्कार, नमस्कार ।' इस मन्त्र द्वारा उत्तरदिक् में विन्यास करें । 'जो शुक्र शब्द से विदित, सर्वविद्याधिप, शूलहस्त, एवं विरूपाक्ष, उन पुरुषमूर्त्ति ईशान को नित्य नमस्कार, नमस्कार ।' इस मन्त्र से ईशानकोण में विन्यास करे । 'जो वेदव्यास मूर्त्तिधारी, पितामह, एवं यज्ञाध्यक्ष हैं, उन पद्मयोनि को नित्य नमस्कार, नित्य नमस्कार ।' इस मन्त्र से ऊद्ध्र्वदिक् में विन्यास करना कर्त्तव्य है । 'जो अनन्तरूप से इस सचराचर ब्रह्माण्ड को शिरोदेश में पुष्पवत् धारण करते हैं, उनको सदा नमस्कार ।' इस मन्त्र से अधोदिक् में विन्यास करे ॥५२४-५३३॥

मत्स्यपुराण में भी प्रायः ये ही सब मन्त्र दिखाई देते हैं । और भी वर्णित है—यावतीय देववृन्द के न्यास के समय एवं बलि अर्पण के समय,–प्रथम प्रणव समन्वित करके यह सब मन्त्र उच्चारण करे । यह सब मन्त्र बुद्धि एवं पुत्रफल प्रद हैं ॥५३४॥

हयशीर्ष पञ्चरात्र में लिखित है—दिक्पालवृन्द के मन्त्रोच्चारण पूर्वक रत्नविन्यास करना चाहिये । अर्थात् प्रत्येक दिक् में उस दिक् के अधिपति का मन्त्रपाठ करके रत्नन्यास करे ॥५३५॥

तद्यथा —

ॐ शक्रः सुरपतिः श्रीमान् सहस्रनयनोज्ज्वलः । यष्टा यः क्रतुमुख्यानां नमस्तस्मै महात्मने ।
ॐ त्रातारमिति मन्त्रेण सान्निध्यं तत्र कारयेत् ॥५३६॥ इति पूर्व्वस्याम् ।
ॐ अजः सर्व्वगतः शक्तिर्यस्य छायेव राजते । हव्यकव्यवहो यो वै नमस्तस्मै महात्मने ।
ॐ अग्न आयाहि मन्त्रेण सान्निध्यं तस्य कारयेत् ॥५३७॥ इति आग्नेय्याम् ।
ॐ कृष्णाञ्जननिभो रौद्रो दण्डपाणिः स्रगुज्ज्वलः । सर्व्वप्रेताधिपो देवो नमस्तस्मै महात्मने ।
सान्निध्यकरणे तस्य मन्त्रस्त्वसि यमः स्मृतः ॥५३८॥ इति दक्षिणस्याम् ।
ॐ घोरदंष्ट्राकरालस्तु खड्गपाणिः सुभैरवः । राक्षसाधिपतिर्देवो नमस्तस्मै महात्मने ।
सान्निध्यार्थं तस्य मन्त्र एष ते निर्ऋते स्मृतः ॥५३९॥ इति नैर्ऋत्याम् ।
ॐ सप्तसागरदेहस्तु पाशपाणिर्महाद्युतिः । यादसां पतिरेको यो नमस्तस्मै महात्मने ।
तस्यालभनमन्त्रस्तु पञ्चनद्यः सरस्वती ।५४०॥ इति पश्चिमायाम् ।
ॐ सप्तसुरानुगा यस्य योनिर्गीता मनीषिभिः । अशरीरेति विख्यातो नमस्तस्मै महात्मने ।
मन्त्रस्तस्यापि सान्निध्ये वात आवातु भेषजम् ॥५४१॥ इति वायव्याम् ।
ॐ धनाधिपो ह्रस्वमूर्त्तिर्गदाहस्तो नृवाहनः । उत्तराशाधिपः श्रीमान् नमस्तस्मै महात्मने ।
सोमं राजेति मन्त्रोऽयं तस्य सान्निध्यकारकः ॥५४२॥ इति उदीच्याम् ।
ॐ विद्याधिपो वृषारूढ़ शूलपाणिर्महाबलः । त्रैलोक्यवन्दितः श्रीमान् नमस्तस्मै महात्मने ।
ईशावास्येति मन्त्रेण तत्सान्निध्यं प्रकल्पयेत् ॥५४३॥ इति ऐशान्याम् ।

---

इस विषय में और भी लिखा है—'जो सुरपति, श्रीमान्, सहस्र नयनों से समुद्भासित, एवं मुख्य मुख्य यज्ञकारी हैं, उन महात्मा इन्द्र को प्रणाम ।' इस मन्त्रपाठ पूर्वक पूर्वदिक् में विन्यास करके 'ॐ त्रातारम्' इस मन्त्र से वहाँ पर इन्द्र का सन्निधिकरण वा आमन्त्रण करे ॥५३६॥

'जो अज, सर्वगत, जिनकी शक्ति छाया के सदृश विराजित है, उन हव्य कव्यवह महात्मा अग्नि को नमस्कार ।' इस मन्त्र से अग्निकोण में विन्यास करके 'ॐ अग्न आयाहि' इस मन्त्र से अग्नि का सन्निधिकरण करना चाहिये । 'जिनका वर्ण कृष्णाञ्जन कान्तिवत्, जो भीषणमूर्त्ति, दण्डहस्त, माल्य विभूषित, एवं सर्व प्रेताधिप हैं, उन महात्मा यम को प्रणाम ।' इस मन्त्र से दक्षिण दिक् में विन्यास करे । 'ॐ असि यमः' इस मन्त्र से यम का सन्निधिकरण करना चाहिये । 'जो घोरदंष्ट्रायुक्त, करालमूर्त्ति, खड्गहस्त, भैरवाकार, उन राक्षसाधिप, महात्मा देव को नमस्कार ।' इस मन्त्र से नैर्ऋतकोण में विन्यास करके 'एष ते निर्ऋते' मन्त्र से सन्निधिकरण करे । 'सप्तसागर ही जिनका शरीर स्वरूप हैं, जो पाशहस्त महाद्युति एवं यादवपति हैं, उन महात्मा वरुणदेव को नमस्कार ।' इस मन्त्र से पश्चिमदिक् में विन्यास पूर्वक 'पञ्चनद्यः सरस्वती' इस मन्त्र से आलमन (सन्निधिकरण) करे ॥५३७-५४०॥

जिनकी उत्पत्ति, सप्तस्वरानुग के नाम से मनीषिवृन्द कर्त्तृक कथित है, एवं जो अशरीरी नाम से विदित हैं, उन महात्मा पवनदेव को नमस्कार ।' इस मन्त्र से वायुकोण में विन्यास करके 'वात आवातु भेषजम्' इस मन्त्र से सन्निधिकरण करना चाहिये । 'जो धनाधिप, ह्रस्वमूर्त्ति, गदापाणि, नृवाहन, उत्तर-

ॐ य इमां सकलां पृथ्वीं सप्तसागरभूषिताम् । बिभर्त्ति माला-प्रतिमां नमस्तस्मै महात्मने ।
नमोऽस्तु सर्पमन्त्रेण सान्निध्यं तस्य कल्पयेत् ॥५४४॥ इति अधः ।

ॐ ब्रह्मा चतुर्म्मुखः स्वामी सर्व्वलोकपितामहः । कमण्डलुधरः श्रीमान्नमस्तस्मै महात्मने ।
ब्रह्मा देवेति मन्त्रेण सान्निध्यं तस्य कल्पयेत् ॥५४५॥ इति ऊद्र्ध्वे ।

अथ कामविशेषेण द्रव्यविशेषन्यासः

भविष्ये—

क्षीरवृक्षत्वचं पुष्पमष्टमङ्गलसंयुतम् । श्रीकामस्तु न्यसेत् सम्यग्देशवृद्धिकरं शुभम् ॥५४६॥

पारदं घृतगोधूमान् दूर्व्वां रोचनया सह । गोशृङ्गमृत्तिकाञ्चैव कूर्च्चेन सह निक्षिपेत् ।
स्थितस्य तस्य देवस्य श्रियो वृद्धिः सदा भवेत् ॥५४७॥

कृशरं काञ्चनं चैव पद्मेन सह विन्यसेत् । स्थितस्य तस्य देवस्य चातुर्व्वर्ण्यहितं भवेत् ।
चतुष्पादाश्च वर्द्धन्ते दौभाग्यञ्च प्रणश्यति ॥५४८॥

लाक्षा मधु घृतञ्चैव शमी चाश्वत्थमेव च । वेद्या सह च दातव्या यज्ञोत्सवकरास्तथा ॥५४९॥
मृत्तिका पर्व्वतस्याथ ह्रदादादाय मृत्तथा । यथाक्रमेण दातव्या राष्ट्रवृद्धिकरी नृप ॥५५०॥

काञ्चनं सर्व्वबीजानि मेदिन्या सह विन्यसेत् ।
स्थितस्य तस्य कृष्णस्य राजा प्रजा च वर्द्धते ॥५५१॥

---

स्थितस्य तत्तद्रव्योपर्य्यवस्थिते सतीत्यर्थः ॥५४७॥

---

दिगाधिपति एवं श्रीमान् हैं, उन महात्मा को नमस्कार।' इस मन्त्र से उत्तरदिक् में विन्यास करके 'सोमं राज्ञा' इस मन्त्र से कुवेर का सन्निधिकरण करना चाहिये। 'जो विद्याधिपति, वृषारूढ़, शूलहस्त, महाबल, त्रलोक्य वन्दित एवं श्रीमान् हैं, उन महात्मा को नमस्कार करता हूँ।' इस मन्त्र से ईशानकोण में विन्यास करके 'ईशावास्य' इस मन्त्र से ईशान का सान्निधिकरण करे ॥५४१-५४३॥

'जो यह सप्तसागर भूषिता निखिल वसुन्धरा को माला के समान शिरोपरि धारण किये हैं, उन महात्मा को नमस्कार करता हूँ।' इस मन्त्र से अधोभाग में विन्यास करके 'नमोऽस्तुसर्ग' इस मन्त्र से अनन्त का सान्निधिकरण करना कर्त्तव्य है। 'जो चतुर्मुख, सबके प्रभु, सर्वजन पितामह, कमण्डलुधर एवं श्रीमान् हैं, उन महात्मा ब्रह्मा को प्रणाम करता हूँ। इस मन्त्र से ऊद्र्ध्वदिक् में विन्यास करके 'ब्रह्मदेव' इस मन्त्र से ब्रह्मा का सन्निधिकरण करना चाहिये ॥५४४-५४५॥

अथ कामविशेषेण द्रव्यविशेषन्यासः

भविष्यपुराण में लिखित है—श्री कामी व्यक्ति, क्षीरिवृक्ष के वल्कल एवं मङ्गलान्वित पुष्प सम्यक् प्रकार से स्थापन करे। उक्त वल्कल एवं पुष्प,-देश का उन्नतिकर एवं मङ्गलकर है। कूर्च्चमुष्टि, पारद, घृत, गोधूम, दूर्वा, रोचना, गोशृङ्गस्थ मृत्तिका, यह सब विन्यास करके तदुपरि देवस्थान करने से ब्राह्मणादि चतुर्वर्ण का ही मङ्गल होता है। चतुष्पदगण वर्द्धित होते हैं, एवं दौभाग्य विदूरित होता है। लाक्षा, मधु, घृत, समी, अश्वत्थ, वेदी के सहित विन्यास करने पर यज्ञोत्सव सम्पन्न होता है। हे नृप! पर्वत वा ह्रद से मृत्तिका आनयन करके विन्यास करने से राज्य की उन्नति होती है। काञ्चन, सर्वविध वीज एवं भूमि विन्यास करके श्रीकृष्ण स्थापन करने से राजा-प्रजा सबकी उन्नति होती है। ब्रह्मस्थान में समस्त

ब्रह्मस्थाने च विन्यस्य सर्व्वकामार्थदं शुभम् । न भयं न च दुर्भिक्षं तत्तद्द्रव्ये व्यवस्थिते ॥५५२

इति ।

श्रीहयशीर्षदेवेन रत्नान्यासादनन्तरम्—

वृत्ते शान्त्यम्बुसेके तु प्रासादे विजयो मतः ॥५५३॥

यथा हयशीर्षे—

रत्नान्यासविधिं कृत्वा प्रतिष्ठामारभेद्गुरुः ॥५५४॥

सशलाकैर्दर्भपिञ्जैः सहदेवीसमन्वितैः । महाक्षतैस्तु सत्कृत्य पञ्चगव्येन शोधयेत् ॥

प्रोक्षयेद्गन्धतोयेन नदीतीर्थोदकेन च ॥५५५॥

होमार्थे स्थण्डिलं कुर्य्यात् सिकताभिः समन्ततः ॥

सार्द्धं हस्तप्रमाणन्तु चतुरस्रं सुशोभनम् ॥५५६॥

अष्टदिक्षु यथान्यायं कलसानपि पूजयेत् । मन्त्रेणाष्टाक्षरेणैव पूजादिक्रमयोगतः ॥५५७॥

आनीय संस्कृतं वह्निं त्वमग्ने प्रयतेत्यृचा । पलाशसमिधानां तु घृताक्तानां सुरेश्वर ॥५५८॥

शतं वाथ सहस्रं वा गायत्र्या विष्णुसंज्ञया । जुहुयाच्च शतं दद्यादाज्यमष्टाक्षरेण तु ॥५५९॥

पूर्णाहुतिं शान्तितोयं कुर्य्यात्तत्र विचक्षणः । कलसेषूदकं गृह्य ताम्रपात्रे निवेशयेत् ॥५६०॥

मन्त्रयेच्छतवारांस्तु मूलमन्त्रेण देशिकः । सेचयेद्दैवतामूर्द्धिन श्रीश्च तेत्यनयाऽनघ ॥५६१॥

ब्रह्मयानेन चोद्धृत्य उत्तिष्ठ ब्रह्मणस्पते । त्वं विष्णोरितिमन्त्रेण प्रासादाभिमुखं नयेत् ॥५६२

शिविकायां हरिं स्थाप्य रथे वाथ सुयन्त्रितम् । भ्रामयीत पुरं सर्व्वमथवायतनं स्वकम् ॥५६३

---

एवं मत्स्य-भविष्यपुराणोक्तयनुसारिणां सतां मते प्रथमं प्रासादे श्रीमूर्त्तेर्विजयस्ततो रत्नादिन्यास इति लिखितम् । श्रीहयशीर्षमते च तद्विपरीतमित्युल्लिखन् तत्रैव परमपि कृत्यविशेषं लिखति—रत्नन्यास-मित्यादिना निवेदयेदित्यन्तेन ॥५५४॥

सुयन्त्रितं सावधानं रथेन सह संयोजितमित्यर्थः । अन्यत् सुगमम् ॥५६३॥

---

द्रव्य विन्यास करने से सर्व कामना पूर्ण होती हैं और कल्याण की प्राप्ति होती है। उक्त स्थान में समस्त द्रव्य व्यवस्थित होने से किसी प्रकार भय वा दुर्भिक्ष की आशङ्का नहीं रहती ॥५४६-५५२॥

श्रीहयग्रीवदेव कहे हैं—रत्नन्यास के पश्चात् शान्तिजल सिञ्चन करे, तदनन्तर प्रासाद में विजय करनी चाहिये ॥५५३॥

हयशीर्ष पञ्चरात्र में वर्णित है—गुरुदेव यथाविधान से रत्नन्यास करके प्रतिष्ठारम्भ करें। शलाका एवं सहदेवी के सहित दर्भपिञ्ज एवं महाक्षत के द्वारा सत्कार करके पञ्चगव्य द्वारा शोधन करें। गन्धोदक, नदीजल, तीर्थजल, द्वारा सेचनपूर्वक होमार्थ बालुका विस्तृत करके स्थण्डिल करना चाहिये। उस स्थण्डिल को अर्धहस्त परिमित एवं मनोरम चतुष्कोण करे। उसके अष्टदिक् में यथाविधि पूर्वादिक्रम से अष्टाक्षर मन्त्र से कुम्भसमूह की पूजा करनी चाहिये ॥५५४-५५७॥

हे सुरेश्वर ! अनन्तर ! अनन्त संस्कृत अग्नि आनयन पूर्वक 'त्वमग्ने प्रयत' इस मन्त्र से अथवा विष्णु-गायत्री द्वारा घृताक्त पलाश समिध द्वारा शतसंख्यक वा सहस्र संख्यक होम करे। एवं अष्टाक्षर मन्त्र से भी होम करना चाहिये ॥५५८-५५९॥

अनन्तर विज्ञव्यक्ति पूर्णाहुति प्रदानकर शान्तिजल करे। आचार्य्य कुम्भसमूह से जल लेकर ताम्रपात्र

प्रदक्षिणेन देवेशं सर्व्वशोभासमन्वितम् । ततो मङ्गलघोषैश्च गीतैर्मधुरनिस्वनैः ॥५६४॥
स्तुवद्भिर्मागधैः सूतैर्वाद्यैर्नानाविधैः शुभैः । गायद्भिर्ब्राह्मणैः साम शङ्खाकारेण सर्व्वशः ॥५६५
पताकाभिर्विचित्राभिर्ध्वजैर्नानाविधैः शुभैः । देवदेवं महादेवं हरिं सर्व्वजगद्गुरुम् ॥५६६॥
संसारार्णवसन्तारपोतभूतं सुरेश्वरम् । कर्त्तॄणां स्थपतीनाञ्च शिल्पिनां पुरवासिनाम् ॥५६७॥
स्थापकानाञ्च भृत्यानां पावकं पुण्यवर्द्धकम् ।
भ्राम्य प्रासादाभिमुखं कृत्वा देवं निवेशयेत् ॥५६८॥

अथ तत्र मङ्गलस्नपनम्

एरकायां तु संस्थाप्य स्नपयेन्मङ्गलान्वितम् ॥५६९॥
चतस्रोऽविधवास्तत्र दिव्यमन्त्राभिमन्त्रिताः ।
सव्यापसव्यसूत्रेण वेष्ट्य स्पृश्य कुशेन तु ॥५७०॥
आचार्य्येणाभ्यनुज्ञाता घटैर्मलयभूषितैः । स्नपयन्ति हरिं भक्त्या अष्टमङ्गलसंयुतम् ॥५७१॥
ततो गन्धादिनाभ्यर्च्य मूलमन्त्रेण देशिकः ।
शुक्लवस्त्रेण संछाद्य अष्टाङ्गार्घ्यं निवेदयेत् ॥५७२॥
एवं क्रमो बहुविधः कृत्यञ्च विविधं भवेत् । प्रतिमायां बुधैश्चात्र कार्य्यं स्वगुरुसम्मतम् ॥५७३

नन्वेवं कृत्ये क्रमे च पुराणागमादिवचनतो विरोधापत्त्या कथं व्यवहर्त्तव्यम ? अत्र लिखति - एवमिति । निजगुरुसम्प्रदायाचारानुसारेण तत्र तत्र व्यवहारः कर्त्तव्य इत्यर्थः । एवं सर्व्वत्रैवोह्यम् । सर्व्वत्र विविध-विरोधदर्शनात् पुनः पुनरेव लिख्यते इत्युन्नेयम् ॥५७३॥

में स्थापन पूर्वक मूलमन्त्र से शतधा अभिमन्त्रित करके 'श्रीश्चते ति' मन्त्र द्वारा देवता के शिरोभाग को अभिषिक्त करें । तदनन्तर 'उत्तिष्ठ ब्रह्मणस्पते' कहकर ब्रह्मयान में उत्तोलन करके 'त्वं विष्णोः' मन्त्र से प्रासाद की ओर ले जाना चाहिये । सर्वशोभान्वित सुयन्त्रित देवेश हरि को शिविका वा रथ में स्थापन करके दक्षिणावर्त्त रूप से समस्त पुर वा निज आयतन में भ्रमण करावें ॥५६०-५६३॥

अनन्तर मङ्गल शब्द, मधुर सङ्गीत शब्द एवं स्तुतिपाठक मन्त्रघोष सूतादिकृत विविध मङ्गलमय शब्द के सहित एवं शङ्खवत् उच्चरव से सामगान परायण ब्राह्मणगण एवं विविध विचित्र मङ्गलमय ध्वज-पताकादि के सहित सर्व जगद्गुरु, संसार सागरोत्तारक पोतस्वरूप, सुरेश्वर, कर्त्ता, सूत्रधार, शिल्पी, पुरवासी, स्थापक एवं भृत्यवर्ग को पवित्रकारक, पुण्यवर्धक प्रभु श्रीहरि को भ्रमणकराकर प्रासादाभिमुख करके उसमें प्रवेश करावें ॥५६४-५६८॥

अथ तत्र मङ्गलस्नपनम्

मङ्गलमय श्रीहरि को एरकोपरि स्थापन पूर्वक स्नान कराना चाहिये । वहाँ दिव्य मन्त्र के द्वारा अभिमन्त्रित चारजन सधवा रमणी आचार्य्यकर्त्तृक आदिष्ट होकर सूत्र द्वारा वेष्टन एवं कुश स्पर्श पूर्वक भक्तियुक्त होकर अष्ट मङ्गल संयुक्त श्रीहरि को माल्य चन्दन भूषित घटसमूह के द्वारा स्नान करावें । पुनर्वार गुरुदेव, मूलमन्त्र पाठ पूर्वक गन्धादि द्वारा पूजा करके शुक्लवस्त्र द्वारा आवरण पूर्वक अष्टाङ्ग अर्घ्य प्रदान करें ॥५६९-५७२॥

प्रतिमा के सम्बन्ध में इस प्रकार विविध क्रम एवं कृत्य दृष्ट होते हैं । वस्तुतः सम्प्रदायानुसार निजनिज गुरु प्रदर्शित प्रतिमा सम्बन्धीय क्रियानुष्ठान करना बुद्धिमान् व्यक्ति का कर्त्तव्य है ॥५७३॥

अथ गर्त्तलेपनादि

पायसेनोपलिप्यादौ गर्त्तमाच्छाद्य वाससा ।
अग्न्यादिभ्यस्तु जुहुयात् सिद्धयर्थं तस्य दक्षिणे ॥५७४॥

तथा च मात्स्ये—

न्यासं कृत्वा तु रत्नानां पायसेनानुलेपितम् । पटेनाच्छादयेच्छ्वभ्रं शुक्लेनोपरि धारयन् । ५७५

भविष्ये च—

रत्नन्यासे कृते पश्चात् पायसेनोपलेपयेत् । पटेन महता पश्चाच्छुक्लेनोपरि छादयेत् ॥५७६॥

किञ्च—

श्वभ्रस्य दक्षिणे पार्श्वे सर्षपान् जुहुयाद्बुधः । अग्नये ब्रह्मणे चैव रुद्राय चैव विष्णवे ।
स्कन्दाय गणराजाय गणमातृभ्य एव च ॥५७७॥

अथेन्द्रादिबलिदानम्

दद्यात् श्रीमूर्त्तिमुत्थाप्य शक्रादिभ्यो वलिं बुधः । तत्तन्नाम्ना चतुर्थ्यन्तनमोऽन्तप्रणवादिना ॥५७८

तथा च तत्रैव—

इन्द्रादीन् लोकपालांश्च आदित्यांश्च वसूंस्तथा ।
विश्वेदेवांस्तथा सर्व्वान् स्वनाम्ना चोपलक्षितान् ।
ॐकाराद्यान्नमोऽन्तांश्च कृत्वोत्थाप्य बलिं हरेत् ॥५७९॥

---

केभ्यो जुहुयात् ? तानेव निर्द्दिशति । अत्र प्रयोगः— ॐ अग्नये स्वाहा, ॐ ब्रह्मणे स्वाहेत्यादि ॥५७७॥
इन्द्रादिभ्यश्च पायसवलिं तत्तन्नाममन्त्रेण दद्यात्; तत्र प्रयोगः—ॐ इन्द्राय नम इत्यादि ॥५७८॥

---

अथ गर्त्तलेपनादि

प्रथमतः पायस के द्वारा लेपन करके वस्त्राच्छादन पूर्वक सिद्धि हेतु गर्त्त के दक्षिण भाग में अग्न्यादि देवताओं के निमित्त होम करना चाहिये ॥५७४॥

तद्विषय में मत्स्यपुराण में लिखित है—रत्नसमूह स्थापन पूर्वक पायस के द्वारा गर्त्त अनुलिप्त करके तदुपरि शुक्लवस्त्र आच्छादन देना चाहिये ॥५७५॥

भविष्यपुराण में भी लिखित है—रत्न स्थापन के पश्चात् पायस द्वारा उपलेपन करें, तत्पश्चात् शुक्ल अम्बर द्वारा तदुपरि आवरण प्रदान करना चाहिये ॥५७६॥

और भी लिखित है—अग्नि, ब्रह्मा, रुद्र, विष्णु, स्कन्द, गणपति, एवं मातृगण के निमित्त गर्त्त को दक्षिणदिक् में सर्षप के द्वारा होम करें ॥५७७॥

अथेन्द्रादिबलिदानम्

श्रीमूर्त्ति का उत्थापन करके इन्द्रादि प्रमुख देवगण को चतुर्थ्यन्त तत्तन्नाम के आदि में प्रणव एवं अन्त में नमः शब्द योग करके पायसवलि अर्पण करें। अर्थात् 'ॐ इन्द्राय नमः' इत्यादि मन्त्र से क्षीर उपहार प्रदान करें ॥५७८॥

उक्त ग्रन्थ में उक्त विषय में लिखित है—श्रीमूर्त्ति उत्थापन के पश्चात् इन्द्रादि लोकपालगण, आदित्यगण, वसुगण, एवं विश्वदेवगण के निमित्त चतुर्थ्यन्त तत्तन्नाम के प्रथम में प्रणव एवं शेष में नमः शब्द योग करके पायसवलि अर्पण करें ॥५७९॥

अथ प्रासादान्तः श्रीमूर्त्तिप्रवेशनम्

देवं गोबालरज्वाऽभिवेष्ट्य स्वस्त्यभिवाचयेत् ।
आचार्य्यो विधिवत्तश्च प्रासादान्तः प्रवेशयेत् ॥५८०॥

अथ तद्विधिविशेषः

तत्रैव—

उत्थितं तत्र देवेशं बालरज्वा हि दण्डवत् । ततः सुयन्त्रितं कृत्वा ब्राह्मणान् स्वस्ति वाच्य च
जीवदानं ततः कृत्वा देवदेवं समुत्क्षिपेत् ॥५८१॥

स्थापकः स्थापयेद्देवं मूर्त्तिपैर्बलवत्तरैः । पुण्याह-जयशब्दैश्च ब्रह्मघोषैश्च पुष्कलैः ॥५८२॥

आचार्य्यस्त्वग्रतो गच्छेदर्घ्यहस्तः समाहितः । पृष्ठतो यजमानस्तु भक्त्या देवन्तु संस्पृशन् ।
पुत्रभ्रातृकलत्रैश्च बन्धुभिः परिवेष्टितः ॥५८३॥

सर्व्वेऽन्योऽन्यमसंलग्ना ध्यायमाना जनार्द्दनम् । द्वारदेशे समानीय अर्घ्यं तस्मै निवेदयेत् ॥५८४

ततः प्रवेशयेद्देवं न द्रुतं न विलम्बितम् । तिर्य्यगूद्ध्र्वमधश्चैवमस्पृशन्तं प्रवेशयेत् ॥५८५॥

हयशीर्षपञ्चरात्रे च—

पाशेन यन्त्रितं कृत्वा ततो देवेति चालयेत् । अद्वारबन्धे प्रासादे द्वारेणैव प्रवेशयेत् ॥५८६॥

द्वारबन्धे कृते देवमाकाशेन प्रवेशयेत् । द्वारबन्धे कृते चापि अस्पृशन्तं प्रवेशयेत् ।
देवस्य त्वेति मन्त्रेण तिर्य्यगूद्ध्र्वमधस्तथा ॥५८७॥

---

दण्डवद्बालरज्वा सुयन्त्रितं कृत्वा 'यत्त' इत्यादिजीवसूक्तेन जीवदानं कृत्वा ॥५८१॥

सर्व्वेऽन्योऽन्यमसंलग्नाः सन्तो गच्छेयुरिति शेषः । द्वारदेशे च सर्व्वगन्धजलैः 'द्वारि सन्तिष्ठते नमः' इति देवं स्नापयेत्, ततोऽर्घ्यं निवेदयेदिति केषाञ्चिन्मतम् ॥५८४॥

---

अथ प्रासादान्तः श्रीमूर्त्तिप्रवेशनम्

गुरुदेव, गो-बालरज्जु द्वारा प्रभु को वेष्टन करके स्वस्तिवाचन पूर्वक यथाविधि प्रभु को प्रासाद के भीतर ले जाँय ॥५८०॥

अथ तद्विधिविशेषः

उक्त ग्रन्थ में लिखित है—सर्पदेहवत् बालरज्जु के द्वारा प्रभु को सुयन्त्रित करके ब्राह्मणवृन्द के द्वारा स्वस्तिवाचन समापन के पश्चात् प्राणदान पूर्वक प्रभु को उत्थापित करें। पश्चात् पुण्याह, जय शब्द, एवं पुष्कल ब्रह्मध्वनि के सहित स्थापक बलशाली मूर्त्तिपगण के द्वारा प्रभु को स्थापन करावें। आचार्य्य, अर्घ्य हस्त एवं समाहित होकर अग्रे अग्रे गमन करें। यजमान भक्तिपूर्वक पृष्ठदेश में प्रभु को स्पर्श करके पुत्र, भ्राता, भार्य्या एवं बन्धुवर्ग के द्वारा परिवेष्टित होकर समस्त लोकों के सहित अस्पृष्ट भाव से ध्यान करते-करते श्रीहरि को द्वार देशे लाकर अर्घ्य अर्पण करे। तत्पश्चात् प्रभु को इस प्रकार प्रवेश कराना चाहिये कि-द्रुत गति, वा अति धीरगति दिखाई न दे, एवं ऊद्ध्र्वदिक् में, अधःदिक् में वा तिर्य्यक्दिक् (पार्श्व) में प्रभु के गात्र में कुछ स्पर्श न करे ॥५८१-५८५॥

श्रीहयशीर्ष पञ्चरात्र में लिखित है—पाश द्वारा यन्त्रित करके 'देवस्यत्वा' मन्त्र पाठ पूर्वक 'देव' मन्त्र से चलाकर द्वारबन्धहीन प्रासाद में द्वार से प्रवेश कराना चाहिये। द्वारबन्ध होने से तिर्य्यक् ऊद्ध्र्व वा अधोदिक में स्पर्श न हो इस रीति से 'देवस्यत्वा' मन्त्र पाठ करके शून्य मार्ग से प्रवेश करावे ॥५८६-५८७॥

अथ पिण्डिकान्यासादि

पाद्यं दत्त्वा पिण्डिकाञ्च विन्यस्य विधिना च ताम् ।
प्रक्षाल्याभ्यर्च्चर्य तद्गर्त्तं पायसेनोपलेपयेत् ॥५८८॥

भविष्ये—

विष्णुपीठं न्यसेत् पश्चादर्घ्यं दत्त्वा समाहितः । कपिलाक्षीरसंस्निग्धं परमान्नं तु संस्कृतम् ।
कपिलाज्येन संमिश्रं तैः श्वभ्रमुपलेपयेत् ॥५८९॥

हयशीर्षे—

रत्नन्यासमिमं कृत्वा नपुंसकशिलातले । न्यसेत् पादशिलां तत्र स्त्रीलिङ्गैरुपलक्षिताम् ॥५९०
तत्र सम्पूजयेद्विद्वान् पिण्डिकां शक्तिरूपिणीम् ।
सह रङ्गेण वस्त्रेणाच्छाद्य गन्धादिनार्च्चयेत् ॥५९१॥
पुष्पैर्मूलैः फलैर्हृद्यैः सितया चार्द्रकेण च ।
अभ्यर्च्चर्य विन्यसेद्विद्वान् लक्ष्मीबीजं समाहितः ॥५९२॥
कृत्वैव पिण्डिकाकर्म्म तदूर्द्ध्वं प्रतिमां न्यसेत् ।
प्रासादानां तु सर्व्वेषां प्रतिमाबीज उच्यते ॥५९३॥
प्रतिमानां तु सर्व्वासां पादपीठः शिलामयः ।
तस्मात् सर्व्वप्रयत्नेन पीठोर्द्ध्वं प्रतिमां न्यसेत् ॥५९४॥

---

विधिनेति—प्रतिपदसीति मन्त्रेण पिण्डिकां विन्यस्य पञ्चगव्येन कषायोदकेन च प्रक्षाल्य, लक्ष्मीमन्त्रेणाभ्यर्च्चर्येति । पूर्व्वमधिवासे प्रक्षालनादिकमस्यापि लिखितं, इदानीञ्च प्रासादान्तःस्थापन इति भेदः ॥५८८॥
पीठस्योर्द्ध्वमुपरि ॥५९४॥

---

अथ पिण्डिकान्यासादि

पाद्य दान करके पिण्डिका स्थापन पूर्वक प्रक्षालन एवं पूजा समाप्त करके पायस द्वारा गर्त्त उपलेपन करे ॥५८८॥

भविष्यपुराण में लिखित है—अवहित होकर अर्घ्य प्रदान पूर्वक विष्णुपीठ स्थापन करना कर्त्तव्य है । कपिलाक्षीर के द्वारा स्निग्ध एवं कपिलामृत मिश्रित सुसंस्कृत पायस द्वारा गर्भ में उपलेपन करे ॥५८९॥

हयशीर्ष पुराण में वर्णित है—नपुंसक शिलातल में रत्नन्यास करके वहाँ स्त्रीलिङ्ग चिह्नित पादशिला स्थापन करनी चाहिये । विज्ञव्यक्ति, वहाँ शक्तिरूपिणी पिण्डिका की पूजा एवं रङ्गवस्त्र से आवृत करके गन्धादि फूल, मूल, मनोहर फल, शर्करा आर्द्रक (अद्रख) इत्यादि द्वारा पूजा करे । एवं सतर्कता के सहित लक्ष्मीबीज 'श्रीँ' न्यास करे ॥५९०-५९२॥

इस प्रकार पिण्डिका का कार्य्य समापन करके तदुपरि प्रतिमा स्थापन करनी चाहिये । इस क्रिया को ही प्रतिमाबीज कहते हैं । यावतीय प्रतिमा के पादपीठ ही शिला द्वारा गठित करें । अतएव सर्वथा यत्न-पूर्वक पीठोपरि प्रतिमा स्थापन करनी चाहिये ॥५९३-५९४॥

अथ श्रीमूर्त्तिस्थापनम्

गन्धपुष्पादिनाभ्यर्च्य विविधैर्मङ्गलस्वनैः ।
गीतादिभिश्च तां मूर्त्ति स्थापयेत् पिण्डिकोपरि ।।५९५।।

मात्स्ये—

तत उत्थाप्य देवेशमिष्टांशे तु शुभाजने । ध्रुवा द्यौरिति मन्त्रेण श्वभ्रोपरि निवेशयेत् ।।५९६।।

भविष्ये च—

स्थापयेत्तमसंलग्नमद्रुतश्चाविलम्बितम् । पुण्याह-जयशब्दैश्च ब्रह्मघोषैश्च पुष्कलैः ।
शङ्खभेरीनिनादैश्च गीतवादित्रनिस्वनैः ।।५९७।।

हयशीर्षपञ्चरात्रे—

पिण्डिकोद्र्ध्वं ततो देवं यन्त्रितो धारयेत् क्षणम् ।
ततः शङ्खघटीनोयैर्देवज्ञान् लग्नमादिशेत् ।।५९८।।

ज्ञात्वा सम्यक्स्थिरं लग्नमलग्नं वा निवेशयेत् । पिण्डिकायां सुरश्रेष्ठ मन्त्रेणानेन देशिकः ।।
ॐ त्रैलोक्यविक्रान्ताय त्रिविक्रमाय नमो नमः ।।५९९।। इति ।
संस्थाप्य पिण्डिकायान्तु स्थिरं कुर्य्याद्विचक्षणः ।
ध्रुवा द्यौरिति मन्त्रेण विश्वतश्चक्षुरित्यपि ।।६००।। इति ।

अथ श्रीमूर्त्तिस्थापनानन्तरकृत्यानि

ततः स्वर्णादिना देवं संस्थाप्यार्घ्यं प्रदाय च । धूपादि दत्त्वावहितो महामन्त्रं जपेद्गुरुः ।।६०१

---

इष्टे स्थापनयोग्ये अंशे प्रदेशभागे, तत्र च सुभाजने सत्पात्रे पिण्डिकोपरीत्यर्थः ।।५९६।।

आदिशेत् पृच्छेदित्यर्थः ।।५९८।।

आदि-शब्दात् मधुसर्पिषा, तथा पुरा शान्तिघटन्यस्तावशिष्टम्पाताहुतिजलेन च, अवहितः निःशब्दताद्यापादनेन सावधानः सन् महामन्त्रं द्वादशाक्षरं जपेत् ।।६०१।।

---

अथ श्रीमूर्त्तिस्थापनम्

गन्धपुष्पादि द्वारा पूजा करके विविधमङ्गलवाद्य एवं गीतादि के सहित पिण्डिकोपरि श्रीमूर्त्ति स्थापन करे ।।५९५।।

मत्स्यपुराण में लिखित है—तत्पश्चात् देवेश को उठाकर 'ध्रुवाद्यौः' मन्त्र से गर्त्तोपरि पिण्डिका के स्थापनोपयोगि स्थान में स्थापन करे ।।५९६।।

भविष्य पुराण में लिखित है—पुण्याह, जयध्वनि, बहुल वेदध्वनि, शङ्ख, भेरीध्वनि एवं गीत-वाद्य शब्द के सहित श्रीप्रभु को अद्रुत भाव से एवं अविलम्बित भाव से स्थापन करना चाहिये ।।५९२।।

हयशीर्षपञ्चरात्र में लिखित है—तत्पश्चात् श्रीप्रभु को यन्त्रित अवस्था में पिण्डिकोपरि कियत्क्षण धारण करें, अनन्तर शङ्ख एवं घटोदक स्पर्श करके देवज्ञ से लग्न जिज्ञासा करें ।।५९८।।

हे सुरश्रेष्ठ ! शुभलग्न वा अशुभ लग्न हो, इसको सम्यक् रूप से न जानकर देशिक शुभलग्न में श्रीप्रभु को 'ॐ त्रैलोक्य विक्रान्ताय' इत्यादि मन्त्र से पिण्डिका के ऊपर स्थापन करें ।।५९९।।

बुधव्यक्ति, प्रभु को पिण्डिकोपरि स्थापन पूर्वक 'ध्रुवाद्यौ' 'विश्वतश्चक्षुः' मन्त्रद्वय के द्वारा उनका स्थिरीकरण सम्पादन करें ।।६००।।

अथ श्रीमूर्त्तिस्थापनानन्तरकृत्यानि

श्रीमूर्त्तिस्थापन के अनन्तर जिस जिस क्रिया का अनुष्ठान करना चाहिये, अधुना उसको कहते हैं—

भविष्ये —

स्थितमात्रं सुवर्णेन स्नापयेदथ सर्पिषा । तस्यान्ते स्नापयेत्तेन सम्पाताहुतिवारिणा ॥६०२॥
अर्घ्यं दत्त्वा नमस्कृत्य अर्च्चयित्वा यथाविधि । सघृतं गुग्गुलं दद्यान्निःशब्दं कारयेत्ततः ॥६०३
ऐशाने तु दिशाभागे स्थितस्तूष्णीं सुसंयतः । उच्चारयेन्महामन्त्रं द्वादशाक्षरमद्रुतम् ।
तेन वै जप्यमानेन विधेरच्छिद्रता भवेत् ॥६०४॥
मन्त्रहीनो विधिर्यश्च अङ्गहीनश्च यो भवेत् । हीनो वै दक्षिणाभिश्च न प्रशस्तः कदाचन ।
एष गुह्यविधिः प्रोक्तः संहितोक्तो मया तव ॥६०५॥

अथ मन्त्रैः श्रीमदङ्गालभनम्

ॐ यज्जाग्रत इत्याद्यैर्मन्त्रैः षड्भिः क्रमात् स्पृशेत् ।
देवस्य दक्षिणं पार्श्वं वामं पृष्ठं शिरः पदौ ॥६०६॥

भविष्ये—

अधुना वैदिकं वक्ष्ये विधिं सामान्ययोगतः ।
एताभिर्ऋग्भिः षड्भिश्च विष्णुं सर्व्वत्र संस्पृशेत् ॥६०७॥
दक्षिणं पश्चिमं चैव उत्तरं पूर्व्वमेव च । मूर्द्ध्नि मूले च यत्नेन संस्पृशेत् प्रयतो बुधः ॥६०८

---

तेन पूर्व्वं शान्तिघटन्यस्तेन ॥६०२॥
अर्पयित्वेति पाठे आदौ मन्त्रेणार्घ्यं विसृज्य पश्चात्तेन अर्घ्यं कृत्वा, यद्वा, अर्पयित्वा अर्च्चयित्वेत्येवार्थः ॥६०३
विधेः—कर्म्मणः ॥६०४॥
छिद्रतामेव दर्शयति—मन्त्रहीन इति ॥६०५॥
अग्रे लेख्यैः षड्भिर्मन्त्रैः क्रमेण देवस्य दक्षिणपार्श्वादि-स्थानषटकं स्पृशेत् ॥६०६॥

---

अनन्तर श्रीगुरुदेव, स्वर्णाद द्वारा श्रीप्रभु को स्थापन पूर्वक अर्घ्य एवं धूपादि अर्पण करके महामन्त्र जप करने में प्रवृत्त हों ॥६०१॥

भविष्य पुराण में लिखित है—श्रीप्रभु का स्वर्ण द्वारा स्थापन पूर्वक घृत द्वारा स्नान करावें । पश्चात् सम्पाताहुति जल द्वारा स्नान कराकर अर्घ्य प्रदान करे । अनन्तर प्रणाम एवं विधानानुसार पूजा करके घृत समन्वित गुग्गुलु प्रदान करने के बाद उस स्थान को निःशब्द करना चाहिये । तत्पश्चात् ईशानकोण में मौनभाव से सुसंयत होकर अद्रुतभाव से द्वादशाक्षर मन्त्र जप करना चाहिये । इस प्रकार मन्त्र जप करने से विधिदोष रहित होता है । मन्त्रहीन, अङ्गहीन एवं दक्षिण हीन विधि कदाच प्रशस्त नहीं है । संहितोक्त गोपनीय विधि का कीर्त्तन मैंने तुम्हारे पास किया ॥६०२-६०५॥

अथ मन्त्रैः श्रीमदङ्गालभनम्

अनन्तर मन्त्रसमूह के द्वारा श्रीअङ्ग स्पर्श करें 'ॐ यज्जाग्रतः' इत्यादि मन्त्रषट्क उच्चारण पूर्वक क्रमशः प्रभु के दक्षिण पार्श्व, वामपार्श्व, पृष्ठ, मस्तक एवं पदयुगल, इन षड़ङ्गों कोस्पर्श करना चाहिये । ॥६०६॥

भविष्यपुराण में कीर्त्तित है—अधुना सामान्यतः वैदिक विधि का वर्णन करता हूँ । यह छैः मन्त्र पाठ पूर्वक श्रीहरि के सब अङ्गों को स्पर्श करना चाहिये । बुद्धिमान मनुष्य यत्नपूर्वक दक्षिण, पश्चिम, उत्तर, पूर्व, मस्तक प्रदेश और मूल (पादादि अधोऽङ्ग) सब स्थानों को ही स्पर्श करें ॥६०७-६०८॥

अथ मन्त्राः

ॐ यज्जाग्रतो दूरमुदैति दैवम् ॥६०९॥ इति ।

ॐ येन कर्म्मण्यपसो मनीषिणो यज्ञ ॥६१०॥ इति ।

ॐ यत् प्रज्ञानामृतचेतो धृतिश्च ॥६११॥ इति ।

ॐ येनेदम्भूतं भुवनं भविष्यत् ॥६१२॥ इति ।

ॐ यस्मिन्नृचः सामयजूंषि यस्मिन् ॥६१३॥ इति ।

ॐ सुषारथिरश्वानिवयन्मनुष्यान् ॥६१४॥ इति ।

मात्स्ये—

देवध्यानैकचेतास्तु मन्त्रानेतानुदीरयेत् ॥६१५॥

ॐ यज्जाग्रतो दूरमुदैति इति, ततो विराड़जायत इति, सहस्रशीर्षा पुरुष इति, अभि त्वा शूर नो नुम इति । ॐ पुरुष एवेदं सर्व्वमिति, ॐ येनेदं भूतं भुवनमिति, ॐ न त्वा वा अन्क इति ॥६१६॥

सर्व्वास्वेतान् प्रतिष्ठासु जप्त्वा मन्त्रान् पुनः पुनः ।

चतुष्कृत्वः स्पृशेदद्भिर्मूले मध्ये शिरस्यपि ॥६१७॥ इति ।

अथ जपविधिविशेषः

दैवमूर्द्धिन करं न्यस्य देवं ध्यायन् जपेद्‌गुरुः । सूक्तान्यथात्मतत्त्वञ्च भावयित्वा पठेन्मनून् ।६१८

तत्रैव—

ततः स्थिरीकृतस्यास्य हस्तं दत्त्वा तु मस्तके । ध्यात्वा परमसद्भावं देवदेवन्तु निष्कलम् ॥६१९

देवव्रतं तथा साम रुद्रसूक्तं तथा पठेत् । आत्मानमीश्वरं ध्यात्वा नानाभरणभूषितम् ।

यस्य देवस्य यद्रूपं तद्‌ध्याने संस्मरेत् सदा ॥६२०॥

---

सूक्तानि देवव्रतादीनि जपेत्, आत्मतत्त्वं 'भगवद्दासोऽस्मि' इत्येवं ध्यात्वा ॥६१८॥
आत्मानं सर्व्वान्तर्य्यामिणम् ॥६२०॥

---

अथ मन्त्राः

'ॐ यज्जाग्रतः' इत्यादि छैः मन्त्रों के द्वारा प्रभु को स्पर्श करना चाहिये ॥६०९-६१४॥

मत्स्यपुराण में लिखित है— देवध्यान परायण होकर एकाग्रचित्त से इन सब मन्त्रों को पाठ करना चाहिये । समस्त देव प्रतिष्ठा कार्य्य में यह सब मूल में लिखित,—'यज्जाग्रतः' इत्यादि मन्त्र का पाठ पुनः पुनः करके जल के द्वारा चार बार करके मूल, मध्य और मस्तक का स्पर्श करना चाहिये । ६१५-६१७॥

अथ जपविधिविशेषः

श्रीगुरुदेव, देवता के मस्तक में हस्त स्थापन पूर्वक देवध्यान पूर्वक सूक्तसमूह का जप करें, एवं आत्मतत्त्व भावना करके मन्त्र पाठ करें ॥६१८॥

उक्त पुराण में ही लिखित है— अनन्तर स्थिरीकृत प्रभु के मस्तकोपरि करस्पर्श पूर्वक सद्भावपूर्ण, निष्फल देवदेव की भावना करके देवव्रत, साम एवं रुद्रसूक्त पाठ करना कर्त्तव्य है । पश्चात् विविध अलङ्कारों से अलङ्कृत, सर्व्वान्तर्य्यामी ईश्वर की चिन्ता करके जिस देव का जो रूप है, मन के द्वारा उसकी चिन्ता करनी चाहिये ॥६१९-६२०॥

अथ मन्त्राश्च

तत्रैव—

अतसीपुष्पसङ्काशं शङ्खचक्रगदाधरं। संस्थापयामि देवेशं देवो भूत्वा जनार्द्दनम् ॥६२१॥

किञ्च—

वेदमन्त्रांस्तथा मन्त्रान् रुद्रस्य स्थापने जपेत्।
विष्णोस्तु वैष्णवांस्तद्वद्ब्राह्मांश्च ब्रह्मणो बुधः ॥६२२॥

सौराः सूर्य्यस्य जप्तव्यास्तथान्येषु तदाश्रयाः। वेदमन्त्रप्रतिष्ठा तु यस्मादानन्ददायिनी ॥६२३

किञ्च—

स्थापयेद्यस्तु देवेशं प्रधानन्तं प्रकल्पयेत्। तस्य पार्श्वे स्थितानन्यान् स्मरेत्तत्परिवारवत् ॥६२४

हयशीर्षपञ्चरात्रे—

पञ्चगव्येन तं स्नाप्य क्षाल्य गन्धोदकेन तु। पूजयेत् सकलीकृत्य साङ्गं सावरणं हरिम् ॥६२५
ध्यायेत्त परमात्मानं निष्कलं निर्म्मलं विभुम् ॥६२६॥

गगनं तस्य मूर्त्तिस्तु पृथिवी तस्य पिण्डिका। कल्पयेद्विग्रहं तस्य तैजसैः परमाणुभिः ॥६२७॥

तेजोमयं ततो ध्यायेच्छङ्खचक्रगदाधरम्। मन्त्रमूर्त्ति ततः कुर्य्यान्मूलमन्त्रेण वै हरिम् ॥६२८॥

स्थिते सति स्थितिन्यासमासीने सृष्टिसंज्ञितम्। शयिते संहृतिन्यासं यानस्थे सर्व्वमेव च ॥६२९

---

देवः देवस्याधीनो दास इत्यर्थः ॥६२१॥

वेदमन्त्रजपे हेतुमाह— वेदेति। अतो वैदिकमन्त्रप्रधानैरेव प्रतिष्ठा कार्य्येति भावः। ६२२-६२३॥

परिवारवत् स्मरेत्, परिवारान् जानीयात् ॥६२४॥

श्रीहयशीर्षदेवेन च 'संस्थाप्य पिण्डिकायां तु' इतिपद्येन पिण्डिकायां स्थिरीकरणमुक्त्वा तदनन्तरकृत्यं यदुक्तं, तल्लिखति—पञ्चगव्येत्यादिना। अन्यत् सुगमम्। तत्र ध्यानादावर्थविशेषश्च श्रीभागवतानां हृदयवेद्य एव ॥६२५॥

---

अथ मन्त्राश्च

उक्त ग्रन्थ में लिखित है—मैं प्रभु का अधीन दास होकर अतसी कुसुम सन्निभ, शङ्ख चक्र गदाधर जनार्दन को स्थापन करता हूँ ॥६२१॥

और भी लिखित है—रुद्रस्थापन में रुद्रसम्बन्धीय वैदिक मन्त्र, विष्णु स्थापन में वेदमन्त्र, ब्रह्मस्थापन में ब्रह्म सम्बन्धीय वेद मन्त्र, सूर्य्य स्थापन में सूर्य्य सम्बन्धीय वैदिक मन्त्र, एवं अन्यान्य देवता स्थापन में अन्यान्य वेदमन्त्रों का जप करना बुद्धिमान् व्यक्ति का कर्त्तव्य है। कारण, वेदमन्त्रों से प्रतिष्ठा करने पर वह प्रतिष्ठा आनन्ददायिनी होती है ॥६२२-६२३॥

और भी लिखा है—जो जिस देवता को स्थापन करते हैं, उसी देवता को प्रधान जानना उचित है, एवं उन देवता के पार्श्ववर्त्ती अपरापर सबको उन्हीं का परिवार जानना चाहिये ॥६२४॥

हयशीर्ष पञ्चरात्र में वर्णित है— पञ्चगव्य द्वारा स्नान, गन्धोदक द्वारा क्षालन एवं सकलीकरण पूर्वक अङ्ग एवं आवरण के सहित जनार्दन की पूजा करके उन निष्कल निर्म्मलविभु परमात्मा की चिन्ता करनी चाहिये। गगन ही परमात्मा की मूर्त्ति है, एवं पृथिवी ही तदीय पिण्डिका है, तैजस परमाणु के द्वारा तदीय विग्रह की कल्पना करे। पश्चात् तेजोमय शङ्ख चक्र गदा पद्मधर मूर्त्ति का ध्यान करके मूलमन्त्र से श्रीहरि

एवं न्यासविधिं कृत्वा ध्यायेद्विष्णुं सुरेश्वरम् । हृत्तामरस-मध्यस्थं सर्व्वकर्म्मैकसाक्षिणम् ।
क्षेत्रज्ञं चित्स्वभावन्तमणीयांसमणोरपि ।।६३०।।

अदोषपरमर्ष्यादीन् प्रतिमायां निवेशयेत् । सजीवकरणं कृत्वा प्रणवेन निरोधयेत् ।।६३१।।
सान्निध्यकरणार्थाय हृदयं स्पृश्य देशिकः । पौरुषन्तु जपेत् सूक्तं ध्यायेद्देवं सुरेश्वरम् ।।६३२।।
जपेत्तथापरं मन्त्रमिमं गुह्यं सनातनम् ।।६३३।।

ॐ नमस्तुभ्यं सुरेशाय सन्तोषविभवात्मने । ज्ञानविज्ञानरूपाय ब्रह्मतेजोऽनुशालिने ।।६३४।।
गुणानुक्रान्तवेशाय पुरुषाय महात्मने । अक्षयाय पुराणाय विष्णो सन्निहितो भव ।।६३५।।
यच्च ते परमं तत्त्वं यच्च ज्ञानमयं वपुः । तत् सर्व्वमेकतो लीनमस्मिन् देहे विबुध्यताम् ।।६३६
अनेन सन्निधीकृत्य देवं देवारिसूदनम् । ब्रह्मादिपरिवारांस्तु स्वनाम्ना स्थापयेत्ततः ।।६३७।।
आयुधान्यस्य मन्त्रैस्तु नमोऽन्तैः स्थापयेद्बुधः ।
ततः सन्दर्शयेत् पश्चात् स्वकां मुद्रां पृथक् पृथक् ।
सान्निध्यन्तु पृथक् कुर्य्यात् प्रणवेन प्लुतेन तु ।।६३८।।

अथ महापूजा

कृष्णे न्यस्य गुरुश्चित्तं मन्त्रैरावाहनादिकम् । कृत्वा तु स्नापयेद्गीतादिना पञ्चामृतादिभिः ।।६३९

---

मन्त्रैरग्रे लेख्यैः—ॐ आगच्छेत्यादिभिः, अन्येश्चोपयुक्तैरावाहनम्, आदि-शब्देन ध्यानादि च कृत्वा । गीतेन, आदि-शब्दात् गीतनृत्यवेदघोषादिना च । इत्यादि सर्व्वमग्रे व्यक्तं भाव्येव ।।६३९।।

---

को मन्त्रमूर्त्ति करनी चाहिये । अनन्तर जनार्दन की सस्थितावस्था में स्थितिन्यास, समासीनावस्था में सृष्टि-न्यास, शयनावस्था में संहार यास एवं यानारूढ़ावस्था में निखिलन्यास ही करना चाहिये । इस प्रकार न्यासविधान पूर्वक सुरेश्वर विष्णु का ध्यान करना चाहिये । तत्पश्चात् सर्व कर्मसाक्षी, क्षेत्रज्ञ, चित्स्वभाव, अणु से भी अणीयान् प्रभु को हृत्कमलस्थ करके निष्कलुष परमर्षिवृन्द को प्रतिमा में सन्निवेश करे और सजीवकरण पूर्वक प्रणव 'ॐ' द्वारा निरोध करना चाहिये ।।६२५-६३१।।

देशिक सन्निधीकरण के निमित्त हृदय को स्पर्श करके पुरुषसूक्त, जप एवं देवदेव का ध्यान करके परम गोपनीय वक्ष्यमाण यह सनातन मन्त्र जपना चाहिये । 'हे भगवन् ! आप सुरेश्वर, सन्तोषरूप विभव-मय, ज्ञानविज्ञान स्वरूप, ब्रह्मतेज से तेजस्वी, यावतीय गुणों से गुणी, महापुरुष अक्षय और पुरातन हो, आपको नमस्कार है । हे विष्णो ! सन्निहित हूजिये अर्थात् इस प्रतिमा में सन्निहित हों । आपका परमतत्त्व और ज्ञानमयवपुः युगपत् इस प्रतिमा में सद्यः विलीन होकर जागरित रहे ।' इस मन्त्र के द्वारा देवारि निसूदन प्रभु का सन्निधीकरण करके ब्रह्मादि परिवार देवताओं को स्व स्व नाम से पृथक् पृथक् प्रकार से स्थापन करना चाहिये ।।६३२-६३७।।

नमोऽन्त मन्त्र द्वारा प्रभु के आयुधसमूह को स्थापन करना बुद्धिमान् व्यक्ति का कर्त्तव्य है । अनन्तर पृथक् पृथक् प्रकार से स्व स्व मुद्रा प्रदर्शन पूर्वक प्लुत प्रणव के सहित पृथक् पृथक् प्रकार से ही सन्निधी-करण करना कर्त्तव्य है ।।६३८।।

अथ महापूजा

श्रीगुरुदेव श्रीहरि में चित्तएकाग्र करके मन्त्रपाठ के सहित आवाहन करके गीतादि सहित पञ्चामृतादि द्वारा उनको स्नान करावें ।।६३९।।

तथा च भविष्ये—

पश्चादावाहनं कुर्य्याद्देवदेवस्य शार्ङ्गिणः । ध्यात्वा परमसद्भावं चतुर्व्यूहं चतुर्भुजम् ॥६४०॥
तत्र सन्धाय चित्तं तु निश्चलं कुरुनन्दन । आवाहनं ततः कुर्य्यान्मुनिभिर्मन्त्रसंयुतैः ॥६४१॥

तत्र मन्त्रः

ॐ आगच्छागच्छ भगवन्ननुग्राह्य जनार्द्दन ।
शाश्वतः पुरुषः पूजां प्रतिगृह्णातु नमो नमः ॥६४२॥

ॐ स्वागतं भगवते सगणाय सपरिवाराय । प्रतिगृह्णातु भगवान् मन्त्रपूतमिदमर्घ्यं पाद्यमाचमनीयं चैतदासनं ब्रह्मणा विहितं स्वयम् ॥६४३॥

मात्स्ये—

ततः पुण्याहघोषेण ब्रह्मघोषैश्च पुष्कलैः । स्नापयीत ततो देवं दधिक्षीरघृतेन च ।
मधुशर्करया तद्वत् पुण्यगन्धोदकेन तु ॥६४४॥
कृत्वाथोद्वर्त्तनं दत्त्वा वस्त्रादि विधिवद्बुधः ।
नत्वा प्रदक्षिणीकृत्य स्तुत्वा चाभ्यर्थयेत् प्रभुम् ॥६४५॥

---

ततः स्थापनानन्तरम्, अत्र च स्नपनानन्तरं केषाञ्चिन्मतमिदम्—'ॐ यज्जाग्रतो दूरम्' इत्यादिमन्त्रान् जप्त्वा त्रिकृत्वो मूले मध्ये शिरसि पुनर्देवमभिस्पृशत, सर्व्वासु प्रतिष्ठासु एतान् मन्त्रान् जप्त्वा पुनः पुनरिति पूर्व्वलिखितमात्स्यवचनात् । ततो देवाग्रेऽग्निमाधाय परिस्तीर्य्य गायत्र्या वैष्णवेन च मन्त्रेण चतसृभिराहुतिभिरेकैकं जातकर्म्मनामकरण-निष्क्रामणान्नप्राशन-चूड़ाकरणोपनयनादिकां क्रियां कुर्य्यात् । ततश्चतुर्दिक्षु 'ॐ त्रातारम्' इत्यादि-चतुर्मन्त्रैः क्रमेणाज्याहुतिं दत्त्वा विधिवत् यामं कृत्वा स्विष्टिकृतं जुहुयात् ॥६४४॥

अथ पञ्चामृतादिस्नपनानन्तरं देवस्योद्वर्त्तनं सुगन्धिचूर्णैः कृत्वा, वस्त्रम्, आदि-शब्दात् गन्धपुष्पादि । विधिवद्बुध इति—यथा येन मन्त्रेण यद्दातुमुपयुज्यते, तथा तेन तद्दत्त्वेत्यर्थः । एवमग्रेऽपि बोद्धव्यम् । स्तुत्यर्च्चनयोः प्रकारविशेषश्चाग्रे व्यक्तो भावी ॥६४५॥

---

भविष्यपुराण में वर्णित है—देवदेव शार्ङ्गी का ध्यान करके पश्चात् आवाहन करना चाहिये । हे कौरव! परम सद्भावपूर्ण चतुर्व्यूह, चतुर्भुज देव का ध्यान करके उनमें चित्त स्थिर करके मन्त्रज्ञ मुनिवृन्द के सहित आवाहन करना चाहिये ॥६४०-६४१॥

तत्र मन्त्रः

'हे भगवन् ! आगमन कीजिये, हे जनार्दन ! अनुग्रह कीजिये, आप नित्यपुरुष हैं, यह पूजा ग्रहण कीजिये आपको पुनः पुनः नमस्कार । आप गणों के सहित एवं परिवारों के सहित यह स्वागत, मन्त्रपूत अर्घ्य, पाद्य, आचमनीय एवं स्वयं ब्रह्माकर्त्तृक विहित आसन ग्रहण कीजिये ॥६४२-६४३॥

मत्स्यपुराण में वर्णित है—तत्पश्चात् पुण्याह शब्द, बहुल वेदध्वनि के सहित दधि, क्षीर, घृत, मधु, शर्करा, पवित्रगन्ध, उदक द्वारा प्रभु को स्नान कराना चाहिये ॥६४४॥

सुधी व्यक्ति उद्वर्त्तन पूर्वक यथाविधि वस्त्रादि प्रदान कर नमस्कार, प्रदक्षिण एवं स्तुति करके प्रभु की अभ्यर्थना करे ॥६४५॥

भविष्ये—

ततः पूजां प्रकुर्व्वीत संहितोक्तान्तु मन्त्रवित् । चन्दनागुरुकर्पूरकुङ्कुमाद्यैश्च लेपयेद् ॥६४६॥
नारायणेति मन्त्रेण वस्त्रैर्धूपैश्च योजयेत् । एवं सुपूजितं कृत्वा देवदेवं जनार्द्दनम् ।
प्रणम्य दण्डवद्भूमौ शनैर्गच्छेत् प्रदक्षिणम् ॥६४७॥
पुनरागत्य पुरतो विज्ञाप्यो जनार्द्दनः । सुकृतं दुष्कृतं वापि ज्ञानतोऽज्ञानतोऽपि वा ।
तत् सर्व्वमात्मना सार्द्धं मया तुभ्यं निवेदितम् ॥६४८॥

किञ्च—

शान्तिं भवन् कुर्व्वथ लोकनाथो, राज्ञश्च राष्ट्रस्य च ब्राह्मणानाम् ।
सबालवृद्धस्य गवाञ्च शान्तिं, कन्यासु सर्व्वासु पतिव्रतासु ॥६४९॥
नश्यन्तु रोगा अथ ईतयश्च, भवन्तु सर्व्वे सुखिताश्च भूताः ।
शाकेषु व्रीहिष्वथ कर्षकाणां, सुभिक्षकालं कुरु पद्मनाभ ॥६५०॥

हयशीर्षे—

कृत्वाष्टाङ्ग-नमस्कारं प्रणम्याञ्जलिमुद्रया । सान्निध्यकरणाच्चाथ ऋत्विग्भिः सहितो गुरुः ॥६५१
स्तूयादुपनिषन्मन्त्रैर्ऋग्यजुःसामसम्भवैः । आवश्यकं पठेत् सर्व्वं पञ्चोपनिषदस्तथा ।
स्तुत्वा स्तोत्रैश्च पौराणैर्जपेदष्टाक्षरं ततः ॥६५२॥
जप्त्वाष्टाक्षरमन्त्रं तु निर्गत्य द्वारसंस्थितौ । चण्डप्रचण्डौ द्वारस्थौ निर्गत्याभ्यर्च्चयेद्गुरुः ॥६५३
अग्रमण्डपमासाद्य गरुड़ं स्थाप्य पूजयेत् । दिगीशानथ दिग्देवान् स्थाप्य सम्पूज्य देशिकः ॥६५४

---

श्रीहयशीर्षदेवेन च पिण्डिकायां देवस्य स्थापनानन्तरं पञ्चगव्यादिस्नपनं ध्यानादिकं सन्निधीकरणं चोक्त्वा परिवारस्थापनानन्तरं भगवत्सान्निध्यलक्षणान्युक्त्वा ततः प्रणामादिकमुक्तम् । तत्र च स्नपनादि-सन्निधीकरणान्तं पूर्व्वं लिखितमेव, इदानीं चात्र प्रणामादिप्रसङ्गे सान्निध्यलक्षणान्यलिखित्वा तदुक्तं प्रणामादिकमेवादौ लिखति—कृत्वेत्यादिना, सान्निध्यकरणादथ अनन्तरञ्च ॥६५१॥

आवश्यकं नित्यपाठ्यं, प्रतिष्ठायामवश्यं पठनीयं वा पुरुषसूक्तादि । अन्यत् सुगमम् ॥६५२॥

---

भविष्यपुराण में लिखित है—अनन्तर मन्त्रज्ञव्यक्ति संहितोक्त विधान से श्रीप्रभु की पूजा करके चन्दन अगुरु, कर्पूर एवं कुङ्कुमादि विलेपन पूर्वक 'नारायण' मन्त्र से वस्त्र एव धूप अर्पण करे । इस प्रकार देवदेव जनार्दन की सम्यक् पूजा करके भूमि में दण्डवत् प्रणाम करके शनैः शनैः प्रदक्षिणा करनी चाहिये । तत्पश्चात् प्रभु के सम्मुख में पुनर्वार आगमन करके विज्ञापन करना चाहिये कि 'हे भगवन् ! ज्ञानाज्ञानकृत यावतीय पापपुण्य सबही आपको समर्पण किया ।' ६४६-६४८॥

और भी लिखित है—हे लोकनाथ ! आप, नृपति, राज्य, ब्राह्मणवृन्द, एवं बालक, वृद्ध गोवृंद एवं पतिव्रता रमणीवृन्द की शान्ति विधान करें । हे पद्मनाभ ! रोग और अतिवृष्टि अनावृष्टि प्रभृति दुःखस्वरूप इति समूह विदूरित हों । भूतगण सुख लाभ करें । कृषकवृन्द के निमित्त शाक एवं व्रीहि में सुभिक्ष फल प्रदान कीजिये । अर्थात् यह सब बहुत से उत्पन्न हों ॥६४९-६५०॥

हयशीर्ष पञ्चरात्र में वर्णित है—गुरुदेव, अष्टाङ्ग नमस्कार और अञ्जलि मुद्रा के सहित प्रणति करके सन्निधीकरण के पश्चात् ऋत्विग्गण के सहित ऋक्, यजु एवं सामोद्भव उपनिषन्मन्त्र से स्तुति करें । एवं समस्त प्रयोजनीय मन्त्र, पञ्चोपनिषत् पाठ करें । अनन्तर पौराणिक स्तवसमूह के द्वारा स्तुतिवाद एवं

विष्वक्सेनन्तु संस्थाप्य मूलमन्त्रेण पूजयेत् । तथा शङ्खञ्च चक्रञ्च पूजयेन्मन्त्रवित्तमः ।
विष्णुपार्षददेवांश्च सर्व्वेभ्यो बलि ाहरेत् ॥६५५॥
एवं कृत्वा गुरुः सम्यक् शुक्लाम्बरधरः शुचिः । शतमष्टोत्तरं जप्त्वा देवं तमभिवादयेत् ॥६५६
प्रणाममुद्रया पश्चादष्टाङ्गं प्रणिपत्य च ।
नृत्यं गीतञ्च वाद्यञ्च नाट्यञ्चापि प्रकारयेत् ॥६५७॥ इति ।
यद्वा स्थापनतः पश्चाद्वर्णादिस्नपन प्रभोः । ध्यानं जपाङ्गालभनं पूजाथावरणार्च्चनम् ।६५८
यद्वाऽङ्गालभनात् पश्चात् सकलीकरणादिकम् ।
कुर्य्याच्छ्रीहयशीर्षोक्तं परिवारार्च्चनं ततः ॥६५९॥

एवञ्च स्थापनानन्तरमादौ द्वादशाक्षरजपः, ततो मन्त्रैः श्रीमदङ्गालभनं, तत्रैव किञ्चिद्ध्यानं, तन्मन्त्र-जपविशेषः, तत्रैव ध्यानविशेषश्च, ततो हयशीर्षदेवोक्तपूजादि च, ततः पुनर्महापूजायां ध्यानाद्यावाहनादि, पञ्चामृतादिस्नपनं, वस्त्रादिसमर्पणं, ततः प्रणामादि च लिखितम् । इत्थं वारं वारं जपध्यानपूजादिकं प्राप्तम्। तत्र च मात्स्ये--'ततः स्थिरीकृतस्यास्य' इत्यादिना स्थापनानन्तरं देवमूर्द्धिन हस्तन्यासपूर्व्वकं ध्यानमुक्तं, ततो देवव्रतादिसूक्तानां मन्त्राणां च पाठः, ततः पञ्चामृतादिस्नपनं, ततो मन्त्रैः श्रीमदङ्गालभनम् । भविष्ये च—'स्थितमात्रं सुवर्ण-'इत्यादिना स्थापनानन्तरं सुवर्णादि-स्नपनं, ततो द्वादशाक्षरजपः, ततो वैदिक-षड़मन्त्रैः श्रीमदङ्गालभनम्, आवाहनादिना पूजनन्तु स्थापनात् पूर्व्वमेवोक्तम् । केवलमन्ते स्नपनविध्युक्तानन्तरं, ततः पूजां प्रकुर्व्वीत' इत्यादिना पूजानमस्कारादिकमुक्तम । श्रीहयशीर्षपञ्चरात्रे च- 'पञ्चगव्येन तं स्नाप्य' इत्यादिना स्थापनानन्तरं स्नपनं, सकलीकरणपूर्व्वकं पूजनं, ध्यानं, न्यासजपादिना सन्निधी-करणञ्चोक्तम् । एवं जपध्यानपूजादौ पौनःपुण्यं क्रियालाघवं चालोच्य पूर्व्वलिखितं केषाञ्चित् पद्धतिकाराणां सम्मतं पक्षं निरस्य पक्षान्तरं लिखति—यद्वेति । अथ देवपूजानन्तरम्, आवरणानां ब्रह्मादिपरिवाराणा-मर्च्चनम् । तत्र च भविष्योक्तानुसारेण स्थापनानन्तरं स्वर्णादिस्नपनम् । ततो मात्स्योक्तानुसारेण ध्यानं, ततश्च तद्द्वयोक्तानुसारेण मन्त्रजप, मन्त्रैः श्रीमदङ्गालभनञ्च । ततश्च भविष्ये स्नपनविध्यन्तोक्तानुसारेण श्रीहयशीर्षदेवोक्तानुसारेण च आवाहनादिना सकलीकरणादिना च पूजनम् । ततो मात्स्यहयशीर्षोक्तानुसारेण परिवारपूजनमित्येवमपौनःपुन्यं ज्ञेयम ॥६५८॥

एवं श्रीमदङ्गालभनानन्तरं पूजा लिखिता । तत्र च मात्स्ये, भविष्ये च स्नपनानन्तरं श्रीमदङ्गालभन-मेवोक्तं, न च पूजनम् । श्रीमदङ्गालभनानन्तरं च मात्स्ये आचार्य्यादिपूजनमुक्त्वा 'ततस्तु मधुना देवं

---

अष्टाक्षर मन्त्र जप करने के पश्चात् बहिर्गत होकर चण्ड एवं प्रचण्ड द्वारपाल द्वय की पूजा करें । अनन्तर अग्र मण्डप में गमन करके गरुड़स्थापन पूर्वक पूजा करनी चाहिये । उसके बाद देशिक दिगीश्वर एवं दिग्-देववृन्द को स्थापन पूर्वक पूजा करके विष्वक्सेन को स्थापन पूर्वक मूलमन्त्र से पूजा करें । अनन्तर शङ्ख-चक्र की पूजा करके विष्णु पारिषद् देववृन्द के निमित्त बलि प्रदान करें ॥६५१-६५५॥

गुरुदेव, उक्त रीति से निखिल कर्म सम्पादन करके शुक्लाम्बर धारण पूर्वक अष्टोत्तरशत बार मन्त्र जप करें एवं पश्चात् श्रीप्रभु को अभिवादन करें । तत्पश्चात् प्रणाममुद्रा के सहित अष्टाङ्ग प्रणति करके नृत्य, गीत वाद्य के सहित नाट्य प्रदर्शन करना कर्त्तव्य है ॥६५६-६५७॥

किंवा स्थापन पूर्वक प्रभु के वर्णादिस्नपन, ध्यान, जप, श्रीमूर्त्ति का अङ्गस्पर्श पूजा एवं आवरण पूजा करनी चाहिये । अथवा अङ्ग स्पर्शपूर्वक सकलीकरण करके हयशीर्षपञ्चरात्र वर्णित विधानानुसार परिवार देवतावृन्द की पूजा करनी चाहिये ॥६५८-६५९॥

अथ तत्र श्रीभगवत्सान्निध्यलक्षणानि

हयशीर्षे—

तस्मिन्नेव मुहूर्त्ते तु हर्षो वाभयमेव च। चक्षुर्भ्रमो विभ्रमो वा त्रासो वा जायते यदि ॥६६०

व्यामोहः परमोहो वा स्तनितं परमं तथा।
अश्रुतानां श्रुतिर्वा स्याद्गात्राणां वाथ वेपथुः ॥६६१॥
वैराग्यं नेत्रयोर्वा स्याद्दर्पः कन्दर्प एव वा।
परमो विस्मयो वाथ दिव्यो वा श्रूयते ध्वनिः ॥६६२॥

दिव्यवादित्रघोषो वा गन्धर्व्वनगरस्य वा। दर्शनं जायते काले तस्मिन् सुरगणार्च्चिते ॥६६३

नरा नार्य्योऽथ दृश्यन्ते गायन्त्योऽप्यथ हर्षिताः।
नन्दितूर्य्यरवो वापि श्रूयते छन्दसां ध्वनिः ॥६६४॥
दिव्यगन्धा रसा वापि एकस्यापि भवन्ति हि।
लिङ्गैरेतैर्विजानीयात्तत्र सान्निहितं हरिम् ॥६६५॥

---

प्रथमेऽहनि लेपयेत्' इत्यादिना दिनान्तरकृत्यमेवोक्तम्, भविष्ये च दिनान्तरकृत्यमेव। हयशीर्षपञ्चरात्रेऽपि पूजनं धूपदीपनैवेद्यादिसमर्पणेन विशेषतो विविच्य नोक्तं, किन्तु केवल पूजयेदित्येवोक्त, पश्चाच्च सकलीकरणादि-सन्निधीकरणान्तमात्रकृत्यमुक्तम्। सान्निध्यलक्षणोक्त्यनन्तरं च प्रणामादिकमेव, इत्येवं विचार्य्य महापूजाशब्दालिलिखित पूजाविशेषं त्याजयन्निव पूर्व्वलिखितपक्ष एव पक्षान्तरं लिखति—यद्वेति। सकलीकरणम्, आदि-शब्दात् 'ध्यायेत्तं परमात्मानम्' इत्यादिना पञ्चरात्रोक्तानि ध्यान-न्यास-जप-सन्निधीकरणानि च। ननु मात्स्य-भविष्यपुराणयोः श्रीमदङ्गालभनानन्तर तत् किञ्चिन्नास्ति, तत्र लिखति—हयशीर्षोक्तमिति। अतो मात्स्य-भविष्योक्तमतिक्रम्य श्रीहयशीर्षदेवोक्तानुसारेण, एवं सर्व्वत्र प्रायो व्यवहर्त्तव्यमिति भावः। मात्स्ये श्रीरुद्रस्य प्रतिष्ठा प्राधान्यात्, भविष्ये सक्षेपोक्तेरिति दिक्। एतच्चाग्रे स्वयमेव व्यक्तं लेख्यम्। ततः सन्निधीकरणानन्तरमेव परिवाराणामर्च्चनमिति समानमेव ॥६५९॥

अभयं भयाभावः, चक्षुषो भ्रमः, अन्यस्मिन्नन्यदर्शनं, विभ्रमो भ्रान्तिविशेषः ॥६६०॥

व्यामोहो मौढ्यविशेषः, परमोहो मूर्च्छा ॥६६१॥

नेत्रयोर्वैराग्यं वैवर्ण्य दर्शने निर्व्वेदो वा ॥६६२॥

तस्मिन् काले स्थापनसमये ॥६६३॥

एकस्यैव द्रव्यस्य दिव्या बहवो गन्धा रसा वा भवन्ति यदि। तत्र प्रासादे, तस्यां वा प्रतिमायाम्। अन्यत् सुगमम् ॥६६५॥

---

अथ तत्र श्रीभगवत्सान्निध्यलक्षणानि

हयशीर्ष पञ्चरात्र में वर्णित है—उसी समय हर्ष, अभय, चक्षुका भ्रम, विभ्रम (भ्रान्ति विशेष) त्रास, मूढ़ता, मूर्च्छा, भीषण मेघगर्ज्जन, अश्रुत श्रवण, देहकम्प, नेत्रद्वय का वैवर्ण्य, देवता व्यतीत अन्य वस्तु दर्शन करने की अनिच्छा, दर्प, काम, अतिशय विस्मय, दिव्यध्वनि, वा दिव्य वाद्यशब्द श्रवण, गन्धर्वनगर दर्शन स्थापन के समय सङ्गीत निपुण पुरुष वा आनन्दित स्त्री का दर्शन, मनोहर तूर्य्यध्वनि वा छन्दोगीति श्रवण, एक द्रव्य की अनेक प्रकार गन्ध और रसबोध,—यह सब लक्षण दृष्ट होने से समझना चाहिये कि—श्रीहरि सन्निहित हुए हैं। स्वभावतः प्रतिमा प्रभाव से प्रदीप्त होने से, प्रतिमा विशेषरूप से स्फूर्त्तिमती होने से,

प्रभावैरविशेषेण ज्वलन्तीव च दृश्यते । स्फुरन्तीव च दृश्येत प्रतिमा च विशेषतः ॥६६६॥

स्फुरन्निव जनः कश्चित् स्मयमान इव क्वचित् । वीक्ष्यमाणो जनस्तत्र प्रहृष्ट इव लक्ष्यते ।
एतैस्तु लक्षणैर्ज्ञेयस्तत्र सन्निहितो हरिः ॥६६७॥

विशेषादथवा पश्येच्चक्रचापोपमं क्वचित् । छविं वज्रप्रभां पश्येत् पद्मरागप्रभां तथा ॥६६८॥
सौदामिनीप्रभां पश्येत् प्रतिमायां क्वचिद्यदि ।
एतैर्लिङ्गैस्तु बोद्धव्यस्तत्र सन्निहितो हरिः ॥६६९॥

बधिरा इव केचित्तु मूका इव तथापरे । विभ्रान्ता इव केचिच्च जड़ा इव तथापरे ॥६७०॥

धावन्त इव केचित्तु पतन्त इव चापरे । नृत्यन्त इव चाप्यन्ये मत्ता इव तथा यदि ॥६७१॥

चित्रस्था इव केचित्तु विवशा इव केचन । भवन्ति तत्र चोन्मत्ताः प्रमत्ता इव चापरे ।
लिङ्गैरेतैस्तु बोद्धव्यस्तत्र सन्निहितो हरिः ॥६७२॥

अथाचार्य्यादिसम्माननम्

सन्मानयेदथाचार्य्यं शक्त्या वस्त्रादिना ततः ।
मूर्त्तिपांश्चापरान् विप्रान् वैष्णवांश्चापरानपि ॥६७३॥

मात्स्ये—

स्थापिते तु ततो देवे यजमानः समूर्त्तिपम् । आचार्य्यं पूजयेद्भक्त्या वस्त्रालङ्कारभूषणैः ।
दीनान्धकृपणांस्तद्वद्ये चान्ये समुपस्थिताः ॥६७४॥

---

शक्त्या स्वशक्त्यानुसारेण यथाविभवमित्यर्थः । अपरान् दीनान्धादीनपि तत्रागतान् ॥६७३॥
दीना दरिद्राः, कृपणा रागादिदुःखिताः, ये चान्येऽन्त्यजादयस्तानपि ॥६७४॥

---

किसी व्यक्ति को स्फूर्त्तिशील दृष्ट होने से, किसी को विस्मयाविष्ट वा हर्षान्वित बोध होने से समझना होगा कि श्रीहरि सन्निधित हुए हैं ॥६६०-६६७॥

प्रतिमा में कभी चक्र वा धनुषाकार अथवा वज्रप्रभा, पद्मरागवत् प्रभा वा विद्युत्प्रभा दिखाई देने पर जानना होगा कि श्रीहरि वहाँ सन्निहित हुए हैं ॥६६८-६६९॥

उस समय किसी व्यक्ति को बधिर (बहरा) किसी को मूक (गूँगा) किसी को विभ्रान्त, किसी को जड़ अथवा धावमान पतनशील, नृत्यपरायण, मत्त, चित्रार्पित, वा विवश, वा उन्मत्त, वा प्रमत्त के समान देखने से भी समझे कि श्रीहरि वहाँ सन्निहित हुये हैं । ६७०-६७२॥

अथाचार्य्यादिसम्माननम्

अनन्तर निज सामर्थ्यानुसार आचार्य्यदेव को वस्त्रादि द्वारा सम्मानित करके मूर्त्तिप, अपर ब्राह्मण, वैष्णव एवं दीनान्धवृन्द को सम्मानित करना चाहिये ॥६७३॥

मत्स्यपुराण में लिखित है—प्रतिमा स्थापन सुसम्पन्न होने से यजमान भक्तिपूर्वक आचार्य्य को एवं मूर्तिरक्षकवृन्द को वस्त्र भूषणादि द्वारा पूजा करे एवं वहाँ दीन, अन्ध एवं कृपणादि जो कोई भी उपस्थित हों सबको सम्मानित करे ॥६७४॥

भविष्ये—

ततः सम्पूजयेद्भक्त्या स्थापकं विधिवन्नृप । भूमिदानादिभिर्दानैर्गोदानैश्च महीपते ।
यथा स तुष्यते राजंस्तथा कार्य्यं प्रयत्नतः ॥६७५॥

यथाशक्त्यानुसारेण पूज्याश्चापि द्विजातयः । दीनान्धकृपणानाञ्च पूजा कार्य्या प्रयत्नतः ।
गणांश्च नर्त्तकांश्चैव यथाशक्ति प्रपूजयेत् ॥६७६॥

हयशीर्षे—

मण्डले कमले वापि स्थापयित्वा गुरुं यजेत । प्रियप्रश्नैः क्षमाप्यैनं विष्णुवत् पूजयेद्बुधः ।
पादयोः प्रणिपत्याथ दक्षिणाञ्च निवेदयेत् ॥६७७॥

आचार्य्य-दक्षिणां दद्यान्नगरं ग्राममेव च । सुवर्णं रजतं वस्त्रं गाञ्चैव समलङ्कृताम् ।
दक्षिणां विधिवद्दत्वा दद्यादाभरणादिकम् ॥६७८॥

आचार्य्यदक्षिणार्द्धन्तु प्रदद्याद्ब्रह्मदक्षिणाम् ।
मूर्त्तिपान् पूजयेत् पश्चाद्गोवस्त्राभरणैर्द्विज ॥६७९॥

सर्व्वांस्तु पूजयेत्तत्र वैष्णवानागतान् द्विजान् ।
भोजयेद्ब्राह्मणान् भक्त्या अत्यादरमतन्द्रितः ॥६८०॥

---

भविष्ये च सर्व्वान्ते प्रोक्तमप्यचार्य्यादिसम्माननं यथाप्रसङ्गमत्र लिखति— तत इति त्रिभिः ॥६७५॥

मण्डले—सर्व्वतोभद्रादौ । यद्यपि 'यागोपयोगिद्रव्याणि सर्व्वाण्यस्मै निवेदयेत्' इत्यादिना दानानन्तरमेवाशेषयागोपकरणद्रव्यार्पणमपि श्रीहयशीर्षदेवेन प्रसङ्गादेवात्रैवोक्तं, तथापि तत्र पृथक्कृत्य मात्स्योक्तानुसारेण पुनराचार्य्य-सम्माननेऽग्रे लेख्यम्, चतुर्थीकर्म्मादि-शेषकृत्यसमाप्तिपदेन यागद्रव्यसामग्र्याः सिद्धेः ॥६७७

वैष्णवान् विप्रान् सम्पूजयेत, अन्यांश्च ब्राह्मणान्, तदनन्तरमेव तान् भोजयेदित्यर्थः ॥६८०॥

---

भविष्य पुराण में लिखित है— हे नृप ! अनन्तर भूम्यादि एवं गोदान द्वारा विधानानुसार भक्तिपूर्वक स्थापक की पूजा करनी चाहिये । हे राजन् ! स्थापक को सन्तुष्ट करने में यत्नपरायण होना चाहिये । तत्पश्चात् क्षमता के अनुसार यत्नपूर्वक पूज्यद्विजातिवृन्द को, दीनान्ध कृपणसमूह को, नर्त्तकवर्ग को पूजा करे ॥६७५-६७६॥

श्रीहयशीर्ष पञ्चरात्र में उक्त है— धीरव्यक्ति, सर्वतोभद्रादि मण्डल में वा पद्मोपरि स्थापन पूर्वक श्रीगुरुदेव की पूजा करे । प्रिय प्रश्न द्वारा क्षमा प्रार्थना करके उनको सन्तुष्ट करे । उनको श्रीविष्णु ज्ञान से पूजा करनी चाहिये । एवं तदीय चरणयुगल में नमस्कार पूर्वक दक्षिणा अर्पण करे । आचार्य्य को दक्षिणा रूप में नगर, ग्राम, सुवर्ण, रौप्य, वस्त्र एवं विभूषिता धेनु विधिपूर्वक दान कर, अलङ्कारादि प्रदान करने चाहिये । आचार्य्य को जिस प्रकार दक्षिणा दी जाती है, ब्रह्मदक्षिणा उससे आधी प्रदान करे । हे द्विज ! तत्पश्चात् धेनु, वस्त्र एवं विभूषणों के द्वारा मूर्त्तिपगण की पूजा करे । वहाँ समागत वैष्णव द्विजातिवर्ग की पूजा करे एवं भक्तिपूर्वक अति आदर से एवं अतन्द्रित भाव से ब्राह्मणवृन्द को भोजन प्रदान करे । ॥६७७-६८०॥

किञ्च —

यज्ञः सुपुष्कलः सर्व्वः कर्त्तव्यो धर्म्मलिप्सया । मन्त्रहीनो गुरुं हन्याद्राष्ट्रमन्येन वर्ज्जितः ।
धर्म्मश्च यजमानश्च हन्याद्दक्षिणया विना ।।६८१।। इति ।
अथवा स्थापनात् पश्चाद्ध्यानाद्यावाहनादि च ।
पञ्चामृतादिना स्वर्णादिनान्यस्नपनं ततः ।।६८२।।
वस्त्रादिदानैर्विधिवत् पूजा-मन्त्रजपादिकम् । नतिः प्रदक्षिणा याच्ञा गुर्व्वाद्यर्च्चेत्ययं क्रमः ।।६८३

अथ श्रीमूर्त्तिस्थिरतापादनम्

मूर्त्तिं च चालयेज्जातु यत्नात् सुस्थिरतां नयेत् ।
तस्यां प्रचलितायाञ्च कुर्य्यात् स्वस्त्ययनादिकम् ।।६८४।।

तथा च मात्स्ये —

स्थिरं न चालयेद्देवमन्यथा पापभाग्भवेत् । पूजयेत् सिकताभिश्च निश्छिद्रं सर्व्वतो भवेत् ।६८५
लोकपालस्य दिग्भागे यस्य सञ्चलते विभुः । तस्य लोकपतेः शान्तिर्देयाश्चेमाश्च दक्षिणाः ।।६८६
इन्द्राय वारणं दद्यात् काञ्चनं वाल्पवित्तवान् । अग्नेः सुवर्णमेषञ्च यमस्य महिषं तथा ।।६८७
अजं सकाञ्चनं दद्यान्निर्‌ऋतिं राक्षसं प्रति । वरणं प्रति मुक्तानि सशुक्तीनि प्रदापयेत् ।।६८८।।

---

दक्षिणादिकं चावश्यमेव देयमित्याह—यज्ञ इति सार्द्धेन । सर्व्वो यज्ञः सुपुष्कलः सम्पूर्ण एव कर्त्तव्यः, अन्यथा च परमानर्थ एवेत्याह—मन्त्रेति ।।६८१।।

एवं लिखितस्यास्य प्रतिष्ठाविधिक्रमस्य पूर्व्वलिखित-नित्यपूजाविधिक्रमेण विरोधाशङ्कया पूर्व्वसूचित-क्रमे पक्षान्तरं लिखति—अथवेति । आदि-शब्दैर्गृहीतानि पूर्व्वलिखितानुसारेणोन्नेयानि । एवं क्रमलिखनेन विधिरपि दर्शित एव । ततश्च पूर्व्वलिखिते द्वितीयपक्षे परित्यक्तमपि पूजनं प्रासादान्तःपिण्डिकोपरि स्थापनरूपे मुख्यकृत्ये अस्मिन्नवश्यमेवापेक्ष्यमिति तदत्र लिखितमिति ज्ञेयम् । एतच्चाखिलं पूर्व्वलिखित-मात्स्यादि-वचनार्थविचारणे प्रायः पर्य्यवस्यत्येव । यत्र च यत्र च विरुध्येत, तत्र च तत्र च ग्रन्थान्तरेण सहैकवाक्यतार्थं वचनपौर्व्वापर्य्यादिविचारेणाभिज्ञैर्विरोधः परिहरणीय एव । सर्व्वत्रैव तथात्वादिति दिक् ।।६८२-६८३।।

मूर्त्तिमित्यादि, ततः परमित्यन्तं सुगममेव ।।६८४।।

---

और भी कथित है—धर्मलाभ हेतु सकल यज्ञ यथाविधि सम्पूर्ण करना कर्त्तव्य है । मन्त्र रहित यज्ञ गुरुदेव को विनष्ट करता है । और अन्य द्रव्य विवर्जित होने से राज्य नष्ट होता है एवं यज्ञ दक्षिणा हीन होने से धर्म्म एवं यजमान विनष्ट होते हैं । अथवा स्थापन के अनन्तर ध्यानादि, आवाहनादि, पञ्चामृतादि एवं स्वर्णादि द्वारा स्नपन, वस्त्रादि दान द्वारा यथाविधि पूजा करे । इस प्रकार क्रमानुसार समस्त कार्य्य करे ।।६८१-६८३।।

अथ श्रीमूर्त्तिस्थिरतापादनम्

देवमूर्त्ति को कभी भी चालित न करे । यत्नपूर्वक उसको स्थिरता सम्पादन करे । यदि प्रतिमा चलायमान हो, तो स्वस्त्ययन प्रभृति का अनुष्ठान करना चाहिये ।।६८४।

तद्विषय में मत्स्यपुराण में लिखित है—स्थिर प्रतिमा को चालित करना उचित नहीं है । मूर्त्ति को चलायमान करने से पातकभागी होना पड़ता है । सिकता (बालू) द्वारा पूजा करने से सर्वदा अनुष्ठान निर्द्दोष होता है । जिस लोकपालाधिष्ठित दिक् में प्रभु सञ्चालित होते हैं, उस लोकपति के निमित्त शान्ति

रीतिकां वायवे दद्याद्वस्त्रयुग्मेन संयुताम् । सोमाय धेनुर्दातव्या राजतस्तु वृषः शिवे ॥६८९॥
यस्यां यस्यान्तु चलते शान्तिः स्यात्तत्र तत्र तु । अन्यथा तु भवेद्घोरं भयं कुलविनाशनम् ।
अचलं कारयेत्तस्मात् सिकताभिः सुरेश्वरम् ॥६९०॥

भविष्ये —

स्थिरं न चालयेद्देवं कदाचिदपि पण्डितः ।
हन्याद्विचालितोऽज्ञानात्तस्मात्तं न विचालयेत् ॥६९१॥
यां यां दिशं चलेद्देवस्तां तां शान्तिन्तु कारयेत् ।
अन्यथा तु भवेद्घोरं भयं कुलविनाशनम् ॥६९२॥

यथा न चलते देवस्तथा बध्नीत पिण्डिकाम् । शीघ्रमेव तु कर्त्तव्यं न विलम्बेत् कदाचन ।
प्रतिमां सुस्थिरां कुर्य्यान्नोद्ध्र्वदृष्टिं कदाचन ॥६९३॥

अथ दिनान्तरोत्सवः

रात्रौ गीतादिकं कुर्व्वन् दिवसे च महार्च्चनम् ।
महोत्सवेनाहरेकं शक्त्या वा कतिचिन्नयेत् ॥६९४॥

भविष्ये —

त्रिरात्रं सप्तरात्रं वा दशरात्रमथापि वा । पुण्याह-जयघोषैश्च कुर्य्याद्देवमहोत्सवम् ॥६९५॥

---

विधान एवं वक्ष्यमाण रीति से दक्षिणा दान करना कर्त्तव्य है। इन्द्र को हस्ती प्रदान करना कर्त्तव्य है। किन्तु स्वल्पवित्त भक्त, काञ्चन दान करे। अग्नि को सुवर्ण एवं मेष, यम को महिष, निर्ऋति नामक राक्षस को सकाञ्चन छाग, वरुण को शुक्ति के सहित मुक्ता, वायु को वस्त्रद्वय समन्वित पित्तल सोम को धेनु एवं ईशान को रजतमय वृष दान करे। जिस जिस दिक् में प्रतिमा चालित होती है। उक्तानुरूप अनुष्ठान करने से उस उस दिक् की शान्ति होती है। इसके विपरीत करने से भयङ्कर भीति उपस्थित होती है, एवं कुल का नाश होता है। सुतरां वालुक द्वारा देवदेव को अचल करना कर्त्तव्य है ॥६८५-६९०

भविष्यपुराण में लिखित है—स्थिरमूर्त्ति को कभी भी पिण्डिका से चालित न करे। अज्ञान से चालित करने पर वह मूर्त्ति चालक को विनष्ट करती है। सुतरां मूर्त्ति को चालित न करे। जिस जिस दिक् में मूर्त्ति को चलायमान किया जाता है, उस उस दिक् का शान्ति विधान करना कर्त्तव्य है। अन्यथा भयङ्कर भय एवं कुल विनष्ट होता है। जिससे मूर्त्ति अचल रहती है, तद्रूप पिण्डिका बन्धन करना आशु कर्त्तव्य है। तद्विषय में कदाच विलम्ब करना उचित नहीं है। प्रतिमा को सुस्थिर करे एवं कभी भी प्रतिमा को ऊर्द्ध्व दृष्टि न करे ॥६९१-६९३॥

अथ दिनान्तरोत्सवः

रात्रि में गीतादि का अनुष्ठान करके एवं दिवस में महापूजा समाधान पूर्वक शक्त्यनुसार एक दिन वा कतिपय दिन महोत्सव करना चाहिये ॥६९४॥

भविष्यपुराण में लिखित है—पुण्याह एवं जयध्वनि के सहित त्रिरात्र, सप्तरात्र वा दशरात्र देव-महोत्सव करना चाहिये ॥६९५॥

किञ्च—

रात्रौ महोत्सवं कुर्य्याच्छङ्खभेर्य्यादिनिस्वनैः । एकरात्रं त्रिरात्रं वा सप्तरात्रमथापि वा ।
तस्माद्विष्णुः सदायाति इत्येषा फलसम्प्रदा ॥६९६॥

मात्स्ये—

रात्रौ दिने च गीताद्यैः पुण्याह-जयमङ्गलैः । त्रि पञ्च सप्त दश वा दिनानि स्यान्महोत्सवः ॥६९७

अथ तत्र कृत्यविशेषेण फलविशेषः

मात्स्ये —

ततस्तु मधुना देवं प्रथमेऽहनि स्नपयेत् । हरिद्रयाथ सिद्धार्थैर्द्वितीयेऽहनि तत्त्वतः ॥६९८॥
चन्दनेन यवैस्तद्वत् तृतीयेऽहनि लेपयेत् । मनःशिलाप्रियङ्गुभ्यां चतुर्थेऽहनि लेपयेत् ॥६९९॥
सौभाग्यं शुभदं यस्मात् लेपनं व्याधिनाशनम् । मनःप्रीतिकरं नृणामेतद्वेदविदो विदुः ॥७००
कृष्णजिनं तिलांस्तद्वत् पञ्चमेऽह्नि निवेदयेत् । षष्ठे तु सघृतं दद्याच्चन्दनं पद्मकेशरम् ॥७०१॥
रोचनां नागपुष्पञ्च सप्तमेऽहनि दापयेत् । यत्र सद्योऽधिवासश्च तत्र सर्व्वं निवेदयेत् ॥७०२॥

भविष्ये —

मधुवातेति मधुना अभ्यङ्गं प्रथमेऽहनि । पुण्यदं सर्व्वरोगाणां सर्व्वनाशाय तत् प्रभोः ॥७०३
हरिद्रासर्षपैश्चैव द्वितीयेऽहनि लेपयेत् । पित्तरोगभयञ्चैव न भवेत्तु कदाचन ॥७०४॥
तण्डुलेन यवैश्चैव तृतीयेऽहनि लेपयेत् । शिरोऽर्त्तिमक्षिरोगञ्च कर्णशूलञ्च नाशयेत् ॥७०५॥
मनःशिलां प्रियङ्गुञ्च चतुर्थेऽहनि लेपयेत् । सौभाग्यं येन सततं यजमानस्य वर्द्धते ॥७०६॥

---

और भी लिखित है— शङ्ख, भेरी प्रभृति ध्वनि द्वारा रात्रि में महोत्सव करे । इस प्रकार एक रात्र, त्रिरात्र वा सप्तरात्र महोत्सव करना चाहिये । इस प्रकार करने से हरि सर्वदा वहाँ विद्यमान होते हैं । इस प्रकार क्रिया फलदायिनी है ॥६९६ ।

मत्स्यपुराण में उक्त है—रात्रि में एवं दिन में गीतादि मङ्गल ध्वनि के सहित तिन दिन, सप्ताह वा दशाह महोत्सव करे ॥६९७॥

अथ तत्र कृत्यविशेषेण फलविशेषः

मत्स्यपुराण में लिखित है—प्रथम दिन, मधु द्वारा देवप्रतिमा को लेपन करना चाहिये, द्वितीय दिवस में हरिद्रा एवं सिद्धार्थ, तृतीय दिवस में चन्दन, यव, चतुर्थ दिवस में मनःशिला एवं प्रियङ्गु नामक सुगन्धि द्रव्य लेपन करना चाहिये । वेदज्ञवृन्द कहे हैं—इस प्रकार देवमूर्त्ति को विलेपन करने से सौभाग्य, मङ्गल एवं मनःप्रीति उत्पन्न होती है । एवं व्याधि का विनाश भी होता है । इस प्रकार पञ्चम दिन में कृष्णजिन एवं तिल, षष्ठ दिन में घृत, चन्दन, पद्मकेशर एवं सप्तम दिन में रोचना एवं नागपुष्प प्रदान करे । सद्यः अधिवास होने से उस दिन उक्त समस्त द्रव्य ही प्रदान करे ॥६९८-७०२॥

भविष्य पुराण में लिखित है— प्रथम दिन में 'मधुवाता' मन्त्र से मधु द्वारा अभ्यङ्ग करना उचित है । यह अभ्यङ्ग पुण्यद एवं सर्वरोग नाशक है । द्वितीय दिन में हरिद्रा सर्षप विलेपन करना चाहिये । इस प्रकार करने से कदाच पित्तजनित रोगाशङ्का नहीं होती है । तृतीय दिन में तण्डुल एवं यव चूर्ण विलेपन करे । इस प्रकार करने से शिरःपीड़ा, नेत्र रोग, एवं कर्णशूल विनष्ट होता है । चतुर्थ दिन में मनःशिला एवं प्रियङ्गु एकत्र करके तद्द्वारा विलेपन करे । इस प्रकार करने से सर्वदा यजमान् का भाग्योदय होता

कृष्णाजिनं तिलांश्चैव पञ्चमेऽहनि दापयेत् । पितरस्तस्य तृप्यन्ति यावज्जीवं सुखप्रदाः ।।७०७
सुरभि चन्दनञ्चैव सघृतं पद्मकेशरम् । षष्ठेऽहनि च दातव्यं शत्रुदोषविनाशनम् ।७०८।।
रोचनां नागपुष्पञ्च सप्तमेऽहनि दापयेत् । क्षेमं गोबहुलं चापि धनधान्यं विवर्द्धते ।७०९।।
एवं सप्ताहमभ्यङ्गं कापिलेन घृतेन तु । दद्याद्विभवतः शक्त्या यदीच्छेच्छ्रियमात्मनः ।७१०।।
दीपा घृतेन दातव्याश्चत्वारश्च प्रदक्षिणाः । सप्ताहं मन्त्रयुक्ताश्च विभवेन ततः परम् ।७११।।

अथ चतुर्थीकर्म्म

चतुर्थे च दिने प्राप्ते चतुर्थीकर्म्म कारयन् । अर्घ्यं समर्प्य देवेशं प्राग्वत् स्नपनमाचरेत् ।।७१२
पुनश्च दत्त्वाष्टाङ्गार्घ्यं गोमयस्वस्तिकादिभिः । देवं नीराज्य गन्धाद्भिर्दद्यादाचमनं बुधः ।।७१३
ततो वस्त्रयुगं दत्त्वा दिव्यं दत्त्वानुलेपनम् । पुष्पादि धूपदीपादि तत्तन्मन्त्रेण चार्पयेत् ।।७१४
इत्थं सम्पूज्य विधिवद्दण्डवत्तं प्रणम्य च । विज्ञापयन् मुहुर्भक्त्या तत्तत् पद्यं प्रकीर्त्तयेत् ।।७१५

मात्स्ये—

चतुर्थेऽह्नि महास्नानं चतुर्थीकर्म्म कारयेत् । दक्षिणा च पुनर्देया तत्रापि शक्तितः ।।७१६

---

प्राग्वदिति—स्नपनमण्डपे लिखितस्नानविध्यनुसारेण इत्यर्थः । तथा हि—गीतवाद्यादिमहोत्सवे वल्मीकादिमृत्तिकादिभिरुद्धृतासीति मन्त्रेण देवं विलिप्य पञ्चगव्यादिना तत्तन्मन्त्रेण स्नापयित्वा यथाशक्ति सम्पादितैर्निक्षिप्ताष्टमृत्तिकौषधिव्रीहिकैः कलसैस्तत्तन्मन्त्रेण स्नापयेदिति ।।७१२।।

गोमयकृतैः स्वस्तिकादिभिर्देवं नीराज्य, आदि-शब्देन गोमयकृतपद्मकादि-सप्तपञ्चवर्णौदनादि च । एतच्चाग्रे विशेषतो व्यक्तं भावि ।।७१३।।

तत्तन्मन्त्रेण वस्त्राद्यर्पणमन्त्रेण, स चाग्रे व्यक्तो भावी ।।७१४।।

तत्तत् पूर्व्वलिखितं 'सुकृतं दुष्कृतं वापि' इत्यादि प्रकीर्त्तयेत, भक्त्या बद्धाञ्जलिः सन् पठेत् ।।७१५।।

---

है। पञ्चम दिन में कृष्णजिन एवं तिल प्रदान करे। इससे पितृगण आजीवन सन्तुष्ट होकर सुख विधान करते हैं, षष्ठ दिन में सुगन्ध चन्दन एवं सघृत पद्मकेशर अर्पण करने से अरिकृत दोष ध्वंस होता है। सप्तम दिन में रोचना एवं नागपुष्प अर्पण करने से मङ्गल लाभ एवं बहु गो-लाभ होता है एवं धन-धान्य वृद्धि होती है। जो मानव श्री कामी है, वह विभव एवं क्षमतानुसार सप्ताह कपिला घृत द्वारा प्रतिमा को अभ्यङ्ग करे। सम्पत्ति विद्यमान होने पर तत्पश्चात् सप्ताह पर्य्यन्त समन्त्रक प्रत्यह चार घृत-दीप अर्पण एवं प्रदक्षिणा करनी चाहिये ।।७०३-७११।।

अथ चतुर्थीकर्म्म

चतुर्थ दिवस में चतुर्थ कर्म करना चाहिये। प्रभु को अर्घ्य प्रदान करके पूर्ववत् स्नान कराना कर्त्तव्य है। विचक्षण व्यक्ति पुनर्वार अष्टाङ्गार्घ्य अर्पण पूर्वक गोमयकृत स्वस्तिक, पद्मक प्रभृति द्वारा प्रभु की आरात्रिक (आरती) करके गन्धोदक द्वारा आचमनीय अर्पण करे। तत्पश्चात् वस्त्रद्वय एवं दिव्य अनुलेपन अर्पण पूर्वक तत्तन्मन्त्र से पुष्प प्रभृति एवं धूपदीपादि प्रदान करे। इस रीति से पूजा एवं दण्डवत् प्रणति करके भक्तिपूर्वक पुनः पुनः विज्ञापन पूर्वक एवं तत्पद्य 'सुकृतं दुष्कृतं वापि' इत्यादि पाठ करे ।।७१२-७१५

मत्स्यपुराण में उक्त है—चतुर्थ दिन में महास्नान एवं चतुर्थ कर्म समाधान एवं शक्त्यनुसार पुनर्वार दक्षिणा समर्पण करे ।।७१६।।

किञ्च—

स्वस्तिकं पद्मकं शङ्खमुत्पलं कमलं तथा । श्रीवत्सं दर्पणं तद्वन्नन्द्यावर्त्तमथाष्टकम् ।
एतानि गोमयैः कुर्य्यान्मृदा वा शुभया ततः ॥७१७॥
पञ्चवर्णोदनं तद्वत् पञ्चवर्णरजस्तथा । दूर्व्वा कृष्णतिलं तद्वन्नीराजनविधिर्मतः ॥७१८॥
एवं नीराजनं कृत्वा दद्यादाचमनं बुधः । मन्दाकिन्यास्तु यद्वारि सर्व्वपापहरं शुभम् ॥७१९
ततो वस्त्रयुगं दद्यान्मन्त्रेणानेन यत्नतः । देवसूत्रसमायुक्ते यजमानसमन्विते ।
सर्व्ववर्णैः शुभे देव वाससी नवनिर्म्मिते ॥७२०॥
ततश्च चन्दनं दद्यात् समं कर्पूरकुङ्कुमैः । इममुच्चारयेन्मन्त्रं दर्भपाणिः प्रयत्नतः ॥७२१॥
शरीरन्ते न जानामि चेष्टां नैव च नैव च ।
मया निवेदितान् गन्धान् प्रतिगृह्य विलिप्यताम् ॥७२२॥

किञ्च—

चत्वारिंशत्ततो दीपान् दद्याच्चैव प्रदक्षिणाम् । त्वं सूर्य्यचन्द्रज्योतींषि विद्युदग्निस्तथैव च ।
त्वमेव सर्व्वज्योतींषि दीपोऽयं प्रतिगृह्यताम् ॥७२३॥

अथावभृथस्नानम्

हयशीर्षे— अतःपरं प्रवक्ष्यामि देवस्यावभृथं तव ॥७२४॥

---

चतुर्थीकर्म्मणि मात्स्योक्तं स्नपनविधिं पूर्व्वलिखितत्वात्ततोऽन्यं विशेषमेव लिखति—स्वस्तिकमित्यादिना ॥७१७॥

'नीराजन-विधिर्मतः' इति गोमयेन मृदा वा विरचितैः स्वस्तिकादिभिस्तथा पञ्चवर्णोदनैः पञ्चवर्णतण्डुलचूर्णादिभिश्च देवं नीराजयेदित्यर्थः ॥७१८॥

मन्त्रमेवाह - देवसूत्रेति । यजमान इति वस्त्रार्पणादौ स एव कर्त्तेति शिष्टसम्मतया ज्ञेयम् । एवमग्रेऽपि ॥७२०

दीपार्पणे मन्त्रश्च—त्वं सूर्य्येत्यादि, पुष्पधूपाद्यर्पणमन्त्रेषु च पूर्व्वतो विशेषाभावात् केवलमिममित्याद्येव लिखितम् ॥७२३॥

श्रीमात्स्योक्त-चतुर्थीकर्म्मैव प्रतिष्ठाकर्म्मसमाप्तौ क्रियमाणत्वादवभृथमिति श्रीहयशीर्षदेवेन यदुक्तं,

---

और भी लिखित है—गोमय वा शुभमृत्तिका द्वारा निर्मित स्वस्तिक, पद्मक, शङ्ख, उत्पल, कमल, श्रीवत्स, दर्पण, अष्ट नन्द्यावर्त्त एवं पञ्चशस्य, पञ्चवर्ण गण्डिका, दूर्वा, कृष्णतिल,–यह सब द्रव्य के द्वारा नीराजन करना प्रशस्त है । बुधव्यक्ति इस रीति से नीराजन करके सर्वपातक नाशन पवित्र गङ्गोदक द्वारा आचमन प्रदान करें । तत्पश्चात् 'हे देव ! यह वस्त्रद्वय देवसूत्रविशिष्ट, यजमान समन्वित सर्व वर्णमय, कल्याणयुक्त एवं नूतन हैं' इस मन्त्र से यत्नपूर्वक वस्त्रद्वय प्रदान करे । पश्चात् सकर्पूर पुष्प समन्वित चन्दन अर्पण करके यत्नपूर्वक हस्त में कुश ग्रहण पूर्वक मन्त्रोच्चारण करना पड़ेगा कि, 'त्वदीय शरीर एवं चेष्टा को नहीं जानता हूँ, मत्प्रदत्त (मेरा दिया) यह गन्ध ग्रहण करके अङ्ग में विलेपन कीजिये ।' ७१७-७२२॥

और लिखा है - तत्पश्चात् 'सूर्य्य, चन्द्र, नक्षत्र, विद्युत एवं अग्नि, यह सब आप ही हैं, आप ही सर्व प्रकार ज्योतिः स्वरूप हैं । यह प्रदीप ग्रहण करो ।' इस मन्त्र पाठ पूर्वक प्रदक्षिणा करते करते चत्वारिंशत् (४०) संख्यक प्रदीप अर्पण करे । ७२३॥

अथावभृथस्नानम्

हयशीर्ष में लिखित है—हे विप्र ! अधुना तुम्हारे समीप में प्रभु का अवभृथ स्नान का वर्णन कर रहा

शोधयेद्गोमयैर्विप्र यागस्थानं तु सर्व्वतः । सिक्त्वा गन्धोदकेनाथ पञ्चगव्येन शोधयेत् ॥७२५
विकिरैः शोधयेद्भूमिं वितानेन विभूषयेत् । पुष्पदामैरधश्चोर्द्ध्वं पार्श्वतश्चापि शोधयेत्॥७२६
जुहुयाद्वैष्णवे वह्नौ घृतमष्टोत्तरं शतम् । विष्णोर्नुकेति मन्त्रेण समिधोऽष्टशतं तथा ॥७२७॥
विद्यामालिख्य विधिना एकाशीतिपदं बुधः । वैष्णवं कलसं मध्ये आजिघ्रेति निवेशयेत् ॥७२८
एकाशीतिपदे कुम्भान् श्रीसूक्तेन निवेशयेत् । शन्नो देवीति मन्त्रेण कलसानभिमन्त्रयेत् ॥७२९

कलसे विन्यसेत् पञ्चगव्यं मन्त्रैर्विशेषतः । फलं पुष्पं न्यसेत्तत्र द्रावितं कदलीजलम् ।
मन्त्रयीत द्वयं चैतद्याः फलिनीति सत्तमः ॥७३०॥

ऐक्षवञ्च रसं विद्वान् या दिव्येति निवेशयेत् । मन्त्रतोयं न्यसेन्मध्ये नवकानां सुरोत्तम ।७३१
तरत् स इत्यृचा विद्वान् वस्त्रपूत समाहितः । नदीनदतड़ागोत्थैः शेषांस्तोयैः प्रपूरयेत् ।७३२
अपराजितेन मन्त्रेण सर्व्वानेवाभिमन्त्रयेत् । नवेन शुक्लवस्त्रेण सर्व्वानेवाभिमन्त्रयेत् ।७३३॥

गायत्रीं वैष्णवीं जप्त्वा मूलमन्त्रं शतं जपेत् ।
जप्त्वा ध्यायन् हरिं सम्यक् प्रविश्याभ्यन्तरं शुचिः ।
कृष्णोऽसीति च निर्म्माल्यं विष्वक्सेनाय निक्षिपेत् ॥७३४॥

---

तच्चतुर्थीकर्म्मप्रसङ्गत एव लिखति– अत परमित्यादि ॥७२४॥

विकिरैः—अङ्कुरादिभिः ॥७२६॥

एकाशीतिपद-लिखनविधिश्चाग्रे प्रासादादिनिर्म्माणप्रसङ्गे सुव्यक्तो भावी । मध्यमेवाशीतिपदान्तः ॥७२८

तत्रेति, कलसे एकस्मिन् फलपुष्पजलमन्यस्मिंश्च कदलीफलजलमिति बोद्धव्यम् । अग्रे स्नपने तयोः पृथगुक्तेः । एतन्न्यस्तफल-पुष्प-जलं न्यस्तकदली-फल-जलञ्चेति कलसद्वयम् ॥७३०॥

नवकानां पदानां मध्ये ॥७३१॥ शेषान् – कलसान् ॥७३२॥

---

हूँ। गोमय द्वारा याग स्थान को सम्यक् रूप से शोधन पूर्वक गन्धोदक के द्वारा सेचन करके पञ्चगव्य द्वारा शोधन करना चाहिये। पश्चात् अङ्कुर प्रभृति द्वारा भूमिशोधन करके वितान के द्वारा अलङ्कृत करे। अधोदिक् ऊर्द्ध्व भाग एवं पार्श्व भाग को पुष्पमाल्य से विभूषित करे। तत्पश्चात् वैष्णवानल में अष्टोत्तर-शत आज्य होम करके 'विष्णोर्नुकेति' मन्त्र से समिध द्वारा अष्टशत होम करना चाहिये ॥७२४-७२७॥

सुधी व्यक्ति विधानानुसार एकाशीति पद विलिखन पूर्वक 'आजिघ्र' इस मन्त्र से मध्य में वैष्णवकलस स्थापन करे। उक्त एकाशीति पद से एवं श्रीसूक्त मन्त्र से कुम्भसमूह विन्यस्त करें। तत्पश्चात् 'शन्नोदेवीति' मन्त्र से कलस समूह को अभिमन्त्रित करे। विशेष मन्त्र पाठ पूर्वक कुम्भ में पञ्चगव्य प्रदान करे। सत्तम-व्यक्ति, एक कुम्भ में फल पुष्प एवं अन्य एक कुम्भ में निष्पीड़ित कदलीजल रखे। एवं 'याः फलिनीति' मन्त्र से उक्त कुम्भद्वय को अभिमन्त्रित करके 'या दिव्या' मन्त्र से इक्षुरस प्रदान करें। विज्ञव्यक्ति, एकाग्र-चित्त से 'तत् रसः' मन्त्र से वस्त्रपूत जल प्रदान करे। अन्यान्य कुम्भसमूह को नद नदी एवं तड़ाग सलिल से परिपूरित करना चाहिये। 'अपराजित' मन्त्र से समस्त कुम्भ को ही शुक्लवस्त्र के सहित अभिमन्त्रित करे ॥७२८-७३३॥

विष्णुगायत्री जप पूर्वक मूलमन्त्र शतवार जप करना चाहिये। पश्चात् श्रीहरि का ध्यान करते करते सम्यक् पवित्र होकर अभ्यन्तर में गमन करके 'कृष्णोऽसि' इस मन्त्र से विष्वक्सेन को निर्म्माल्य प्रदान

अर्घ्यं दत्वा शुद्धवत्या शुद्धतोयेन सेचयेत् । अग्निर्मूर्द्धेत्युष्णजलैः स्नाप्य स्नानं समाचरेत् ।।७३५

गोमूत्रेण हरिं क्षाल्य गोमयेन विलेपयेत् ।
क्षीरेण स्नापयेत् पश्चाद्दधिना तदनन्तरम् ।७३६।।
घृतेन स्नाप्य विधिना धूपं दद्यात् स गुग्गुलम् ।
प्रक्षाल्य कोष्णतोयेन फलतोयेन सेचयेत् ।।७३७।।

स्नापयेत् कदलीतोयैस्ततस्त्विक्षुरसेन च । यैर्मन्त्रैर्मन्त्रयेत्तोयं तैर्मन्त्रैः स्नापयेद्धरिम् ।।७३८।।
पञ्चनद्येत्यृचा पश्चान्नदीनदतड़ागजैः । स्नापयित्वा विधानेन वस्त्रयुग्ममुपाहरेत् ।।७३९।।
कार्पासं पट्टसूत्रं वा कौशेयं वाथ भूषितम् । बृहस्पतेति मन्त्रेण परिधाप्यार्च्चयेत् क्रमात् ।।७४०
गन्धादिभिः समभ्यर्च्च्य पार्षदान् पूजयेत्ततः । निवेदयीत नैवेद्यं भक्ष्यभोज्यं सुपुष्कलम् ।७४१

पेयं चूष्यं तथा लेह्यं प्रभूतं द्विजसत्तम ।
वलिं विनिक्षिपेत् पश्चाद्दिशासु विदिशासु च ।।७४२।।
ॐ नमः पार्षदेभ्योऽथ वलिं पीठे विनिक्षिपेत् ।।७४३।।

ततः प्रदक्षिणीकृत्य मण्डलं ब्राह्मणेन तु । प्रविश्य भवनं भूयः सर्व्वमावश्यकं पठेत् ।७४४।।
पौराणैश्च स्तवैः स्तुत्वा महापुरुषपूर्व्वकैः । दण्डवत् प्रणमेत् पश्चान्नृत्यगीतादि कारयेत् ।७४५

दद्यात् सुवर्णं गां वस्त्रं दक्षिणां देशिकाय तु ।
वैष्णवान् पूज्य शक्त्या तु ब्राह्मणेभ्यश्च दक्षिणाम् ।
आचार्य्यं तोष्य यत्नेन सन्ध्यायां वलिमाहरेत् ।।७४६।।

---

उक्तगोमूत्रादि-स्नानमन्त्रानुद्दिशति—यैरिति ।।७३८।।
भूषितं गन्धपुष्पादिभिरलङ्कृतं सन्तमर्च्चयेत् ।।७४०।।
ततो भगवदर्च्चनानन्तरं गन्धादिभिः क्रमेण पार्षदान् समभ्यर्च्च्य विधिवत् पूजयेत् ।।७४१।।
प्रभूतं—प्रचुरम् ।।७४२।।
वलिमाहरेदिति, बलिदानविधिरपेक्षितस्तत्र लिखति—बलीति । तस्य हयशीर्षपञ्चरात्रतो विस्तरेण

---

करे । तत्पश्चात् अर्घ्य अर्पणपूर्वक शुद्धोदक द्वारा, सेचन एवं 'अग्निर्मूर्द्धा' मन्त्र से उष्ण जल में स्नान कराना कर्त्तव्य है । पश्चात् गोमूत्र द्वारा हरि को प्रक्षालन करके गोमय लेपन करना चाहिये । अनन्तर दुग्ध, दधि एवं घृत के द्वारा स्नान कराकर यथ विधि गुग्गुलु समन्वित धूप प्रदान करे । अनन्तर ईषदुष्णोदक द्वारा प्रक्षालन करके बाद में फलोदक, कदलीजल एवं इक्षुरस सेचन करे । जिन सब मन्त्रों से जल अभिमन्त्रित करना चाहिये, उन सब मन्त्रों के द्वारा प्रभु को स्नान करावे । पुनर्वार 'पञ्चनद्य' इत्यादि मन्त्र से नद नदी तड़ाग के जल में स्नान कराकर यथाविधि वस्त्रद्वय अर्पण करे ।।७ ४-७३९।।

अनन्तर 'बृहस्पतेति' मन्त्र द्वारा गन्धपुष्पादि से सुसज्जित कार्पासज, पट्टसूत्रज एवं कौशेय वस्त्र धारण कराकर पूजा करे । पश्चात् गन्धादि द्वारा क्रमशः पार्षदवर्ग की पूजा करनी चाहिये । हे द्विजसत्तम ! अनन्तर भूरिपरिमित उत्कृष्ट भक्ष्य भोज्य, पेय चूष्य एवं लेह्य निवेदन करके दिक् विदिक् में बलि प्रदान करनी चाहिये । 'ॐ नमः पार्षदेभ्यः' मन्त्र से पीठ में बलि अर्पण करके मण्डल प्रदक्षिण पूर्वक ब्राह्मण के सहित पुनर्वार गृह में प्रविष्ट होकर समस्त आवश्यक मन्त्रोच्चारण करे । अनन्तर महापुरुष पूर्विका

वलिकर्म्मविधिश्चायं हयशीर्षे च विस्तरात् । उक्तोऽतिव्यक्तमेकत्र ज्ञेयस्तत् पञ्चरात्रतः । ७४७

अथ होमसमाधानम्

स्वस्वगृह्योक्तविधिना समुपाधाय पावकम् । पर्य्युक्ष्य त्रिर्व्याहृतिभिर्दद्यादाहुतिकं बुधः । ७४८
तारेणाथाग्निमभ्युक्ष्य गायत्र्याहुतिपञ्चकम् । हुत्वैकवैष्णवेनैवं जुहुया द्वारपञ्चकम् ।।७४९।।
ततो व्याहृतिभिर्हुत्वा द्वादशाक्षरमन्त्रतः । हुत्वा पूर्णाहुतिं विद्वान् कुशकुण्डीं समापयेत् ।।७५०

अथ यजमानाभिषेकः

आभिषेचनिकैर्मन्त्रैः शान्तिकुम्भाम्भसा ततः ।
आचार्य्याद्या द्विजाः कुर्य्युर्यजमानाभिषेचनम् ।।७५१।।

मात्स्ये—

अनेन विधिना कृत्वा सप्तरात्रमहोत्सवम् । देवकुम्भैस्ततः कुर्य्याद् यजमानाभिषेचनम् । ७५२।।
चतुर्भिरष्टभिर्वापि द्वाभ्यामेकेन वा पुनः । सपञ्चरत्नकनकैः सितवस्त्रावबेष्टितैः । ७५३।।
देवस्य त्वेति मन्त्रेण साम्ना चाथर्व्वणेन च । अभिषेके इमे मन्त्रा नवग्रहमखे स्मृताः ।।७५४

---

सुव्यक्तमेकत्रैवोक्त्या सुज्ञेयत्वादत्र च ग्रन्थविस्तारभयान्न लिखतीति भावः ।।७४६-७४७।।

मात्स्याद्यनुक्तमपि होमसमाधानं युक्तत्वाच्छिष्टसम्मतया लिखति—स्वस्वेति । पावकमेव पर्य्युक्ष्य ।।७४८

एवं लिखितप्रकारेण एकेन वैदिकवैष्णवेन वारपञ्चकं जुहुयात् ।।७४९।।

तदनन्तरं व्याहृतिभिः सकृत् हुत्वा द्वादशाक्षरमन्त्रेण पूर्णाहुतिं हुत्वा ।।७५०।।

भविष्ये चाभिषेकमन्त्राश्चाग्रे व्यक्ता भविष्यन्ति ।।७५१।।

देवस्य कुम्भैः, देवो यैः स्नापितः, तैरेव प्रसादरूपैः कलसैरित्यर्थः ।।७५२।।

आभिषेचनिक-साम्नाथर्व्वणेन च मन्त्रेण । नवग्रहमखे मन्त्राश्च –'सुरास्तामभिषिञ्चन्तु' इत्यादयः । तैश्च यजमानाभिषेचनं कुर्य्यादिति पूर्व्वेणैवान्वयः ।।७५४।।

---

पौराणिकी स्तुति द्वारा स्तव करके दण्डवत् प्रणाम पूर्वक नृत्यगीतादि करावे । पश्चात् देशिक को सुवर्ण, धेनु एवं वस्त्र दक्षिणा प्रदान करके शक्त्यनुसार वैष्णववृन्द की पूजा करके ब्राह्मणवृन्द को दक्षिणा दान करे । आचार्य्य को सन्तुष्ट करके यत्नपूर्वक सन्ध्याकाल में बलि आहरण करे ।।७४-७४६।।

हयशीर्ष पञ्चरात्र में यह बलि की विधि सविस्तर वर्णित है । वहाँ एक स्थान में ही सब जाना जा सकता है ।।७४७।।

अथ होमसमाधानम्

बुद्धिमान् व्यक्ति स्व स्व गृह्योक्त विधान के अनुसार अग्निस्थापन करके पर्य्युक्षण पूर्वक व्याहृति होम करे । पश्चात् प्रणव के सहित अग्नि को अभ्युक्षण करके गायत्रीपाठ पूर्वक पञ्चाहुति एवं एक वैदिक वैष्णव मन्त्र के द्वारा पाँच आहुति प्रदान करे । तत्पश्चात् विज्ञव्यक्ति, एक बार व्याहृति होम करके द्वादशाक्षर मन्त्र द्वारा पूर्णाहुति प्रदान कर कुशकण्डिका समापन करे ।।७४८-७५०।।

अथ यजमानाभिषेकः

अनन्तर आचार्य्यादि द्विज का आभिषेचनिक मन्त्र से शान्तिघट के जल द्वारा यजमान को अभिषिक्त करें ।।७५१।।

मत्स्यपुराण में लिखित है—उक्त विधि के अनुसार एक सप्ताह महोत्सव करके देवकुम्भोदक (जिस सब कुम्भों के जल से देवता को स्नान कराया गया है) के द्वारा यजमान का अभिषेक करें । दो, चार, आठ अथवा एक कुम्भ के जल से भी अभिषेक हो सकता है । इन सब कुम्भों में पञ्चरत्न एवं सुवर्ण प्रदान

हयशीर्षपञ्चरात्रे च—

प्राङ्मुखं यजमानन्तु स्नापयित्वा यथाविधि । फलं समर्पयेत्तस्मै परितुष्टमना गुरुः ॥७५५॥

अथ पुनराचार्य्यादिसम्माननम्

यजमानोऽभिषिक्तः सन् देवमभ्यर्च्य शक्तितः ।
आचार्य्यं पूजयित्वास्मै प्रतिष्ठाद्रव्यमर्पयेत् ॥७५६॥

मात्स्ये—

सिताम्बरधरः स्नात्वा देवं सम्पूज्य यत्नतः । स्थापकं पूजयेद्भक्त्या वस्त्रालङ्कारभूषणैः ॥७५७
यज्ञभाण्डानि सर्व्वाणि मण्डपोपस्करादिकम् । यच्चास्य दयितं गेहे तदाचार्य्याय दापयेत् ।
सुप्रसन्ने गुरौ यस्मात्तृप्यन्ति सर्व्वदेवताः ॥७८५॥

हयशीर्षे—

यागोपयोगिद्रव्याणि सर्व्वाण्यस्मै निवेदयेत् । स्नानीयमण्डपोपेतं सर्व्वोपस्करणादिकम् ।
मूलयज्ञगृहं दद्यादाचार्य्याय तथापरम् ॥७५९॥

ततः प्रतिष्ठां कुर्व्वीत द्वारप्रासादयोर्बुधः । विज्ञाय श्रीहयग्रीवपञ्चरात्राच्च तद्विधिम् ॥७६०॥

फलं किञ्चिन्मङ्गलात्मकं फलं पुण्यं वा प्रतिष्ठितदेवं वा ॥७५५॥

शक्तितः निजशक्त्यनुसारेणाचार्य्यं पूजयित्वा वस्त्रभूषण-दानादिना सम्मान्य, अस्मै चाचार्य्याय ॥७५६॥

यच्चाचार्य्यस्य दयितं स्वगृहे तिष्ठेत्तदपि दद्यात् ॥७५८॥

तथापरं परमपि कलसादिमण्डपम् ॥७५९॥

श्रीहयशीर्षदेवेन प्रतिष्ठापञ्चकाख्याने बलिदानपटलानन्तरं द्वारप्रासादयोः प्रतिष्ठाप्रकारश्चोक्तोऽस्ति । स च बलिदानविधिस्तेनैव सुव्यक्तमेकत्रैव विस्तरेण दर्शितोऽस्तीति सुज्ञेयत्वाद्ग्रन्थविस्तरभयाच्च तं पूर्व्ववद-

करके उनको श्वेत वस्त्र से वेष्टन करना चाहिये । 'देवस्य त्वा' इस मन्त्र से, अथवा सामवेद मन्त्र से, आथर्वण मन्त्र किंवा नवग्रह यज्ञ में 'सुरास्त्वामभिषिञ्चन्तु' इत्यादि मन्त्र से अभिषेक क्रिया करनी चाहिये ॥७५२-७५४॥

हयशीर्ष पञ्चरात्र में लिखित है—गुरुदेव, सन्तुष्ट मन से यथाविधि पूर्वाभिमुख यजमान को स्नान कराकर मङ्गलात्मक फल (पुण्य) प्रदान करें ॥७५५॥

अथ पुनराचार्य्यादिसम्माननम्

यजमान अभिषिक्त होकर यथाशक्ति देवपूजा एवं आचार्य्य की पूजा करके प्रतिष्ठा द्रव्यसमूह उनको प्रदान करे ॥७५६॥

मत्स्यपुराण में लिखित है—स्नान करने के बाद श्वेत वस्त्र परिधान पूर्वक यत्न के सहित देवपूजा करके भक्तिपूर्वक वस्त्र एवं भूषण द्वारा स्थापक की पूजा करनी चाहिये। समस्त यज्ञपात्र, मण्डप का उपस्कर एवं गृहमध्यस्थ आचार्य्य के प्रिय वस्तुसमूह आचार्य्य को प्रदान करना चाहिये । कारण, श्रीगुरुदेव सुप्रसन्न होने पर समस्त देवता सन्तुष्ट होते हैं ॥७५७-७५८॥

हयशीर्ष पञ्चरात्र में उक्त है—यथोपयुक्त सामग्रीसमूह आचार्य्य को अर्पण करे एवं स्नान मण्डपस्थ यावतीय उपस्करणादि, मूलयज्ञायतन एवं कलसादि मण्डप भी आचार्य्य को प्रदान करना चाहिये ॥७५९॥

अनन्तर सुधी व्यक्ति, श्रीहयशीर्षपञ्चरात्रोक्त प्रतिष्ठा विधि को सम्यक् रूप से जानकर द्वार प्रतिष्ठा एवं प्रासाद प्रतिष्ठा करे ॥७६०॥

अथ ध्वजारोपणम्

तत्रैव—

अतःपरं प्रवक्ष्यामि ध्वजारोपणमुत्तमम् । यत् कृत्वा पुरुषः सम्यक् समग्रं फलमाप्नुयात् ॥७६१

यातुधाना गुह्यकाश्च कुष्माण्डाः खेचरास्तथा । विघ्नयन्त्यमरश्रेष्ठ ध्वजहीनं सुरालयम् ॥७६२

ध्वजेन रहिते विप्रे प्रासादे तु वृथा भवेत् ।
पूजाहोमादिकं सर्व्वं जपाद्यं यत् कृतं बुधैः ॥७६३॥

रक्षणेन विना यद्वत् क्षेत्रं नश्येत क्षेत्रिणाम् । ध्वजं विना देवगृह तथा नश्येत सर्व्वथा ।७६४॥

रुद्रस्य पार्षदाः क्रूराः कुष्माण्डाद्याश्च ये स्मृताः । पूजादिकन्तु गृह्णन्ति दैवं दृष्ट्वा न रक्षितम्॥७६५

दृष्ट्वा ध्वजं तु देवस्य ज्वलज्ज्वलनवर्च्चसम् । नश्यन्ति तद्भियैवार्करश्मिक्षिप्तं तमो यथा ।७६६

प्रासादविम्बद्रव्याणां यावन्तः परमाणवः । तावद्वर्षसहस्राणि तत्कर्त्ता विष्णुलोकभाक् ।
एतत् पुण्यं कोटिगुणं भवेदारोपिते ध्वजे ॥७६७॥

---

लिखित्वा समासेन दर्शयति— तत इति । कुर्व्वीतेति द्वारस्य प्रासादस्य च प्रतिष्ठाया आवश्यकत्वं दर्शितम् । ननु तर्हि तत्तद्विधिर्लिख्यतां, तत्र लिखति—विज्ञायेति । तस्या द्वारप्रासादप्रतिष्ठाया विधि, तत्र द्वारप्रतिष्ठा प्रथममेकेन पटलेनैवोक्ताऽस्ति । प्रासादप्रतिष्ठा च हृत्प्रतिष्ठापटले, यतः प्रासादप्रतिष्ठैव हृत्प्रतिष्ठेति । तथा च तत्रैव –'अतःपरं प्रवक्ष्यामि प्रतिष्ठां वेदनिर्म्मिताम् । प्रासादस्य महाभाग हृत्प्रतिष्ठेति विश्रुताम् ॥' इति ।७६०॥

यद्यपि ध्वजारोपणस्य विधिरपि तेनैकत्रैव विस्तारेण सुव्यक्तमुक्तोऽस्ति, तथापि तस्य माहात्म्यविशेषात् परमनित्यत्वाच्च तं विशेषतो लिखति – अतःपरमित्यादिना । समग्रं सम्पूर्ण, प्रतिष्ठा-प्रासाद-निर्म्माणादि फलं सम्यक् प्राप्नुयात् ॥७६१॥

दैवं देवगृहं न रक्षितं, ध्वजारोपणेनारक्षितं दृष्ट्वा । यद्वा, दैवं देवोद्देशेन कृतमपि पूजादिकं गृह्णन्ति, बलादाच्छिद्य भुञ्जते । विघ्नन्ति इति पाठे विघ्नयन्ति, न गृह्णन्तीति वा पाठः । ततश्च ये विष्णुपार्षदाः, ये च कुष्माण्डाद्याः क्रूरास्तेऽपि न स्वीकुर्व्वन्ति । अन्यत् समानम् । द्वितीयपाठश्चायं चिन्त्यः ॥७६५॥

विम्बं श्रीमूर्त्ति, प्रासादविम्बयोः शिलादिद्रव्याणाम् ॥७६७॥

---

अथ ध्वजारोपणम्

उक्त ग्रन्थ में वर्णित है—अधुना उत्तम ध्वजारोपण का विषय को कहता हूँ। इस कार्य्य से मानव सम्यक् समग्रफल प्राप्त कर सकता है ।।७६१।।

हे अमरश्रेष्ठ ! देवगृह ध्वजाहीन होने से यातु (राक्षस) गुह्यक, कुष्माण्डक एवं खेचरसमूह उस गृह में विघ्न उपस्थित करते हैं। हे विप्र ! ध्वजारहित प्रासाद में बुधगणकृत जप होमादि सब निष्फल होते हैं। रक्षण व्यतीत क्षेत्री का क्षेत्र जिस प्रकार ध्वंस होता है, ध्वजारोपण के बिना मन्दिर भी उस प्रकार विनष्ट होता है। ध्वजा रहित देवगृह दर्शन करने से कुष्माण्डादि क्रूर रुद्रपार्षद समूह तत्रत्य पूजा हरण करते हैं। सूर्य्यरश्मि द्वारा जिस प्रकार अन्धकार विदूरित होता है, तद्रूप वह्निवत् तेजोमय देवध्वज को देखकर क्रूर भयराशि भी विदूरित होती हैं। प्रासाद में एवं श्रीमूर्त्ति के शिलादि में जितने परमाणु विद्यमान रहते हैं, उतने हजार वर्ष विष्णुधाम में उसके निर्म्माणकर्त्ता का निवास होता है। प्रसाद में ध्वजा रोपण करने पर उक्त पुण्य की अपेक्षा कोटिगुण फल प्राप्त कर सकता है ।।७६२-७६७।।

कुष्माण्डवेदीविम्बानां भ्रमणाद्वायुनानघ। कण्ठस्य वेष्टनाज्ज्ञेयं फलं कोटिगुणं भवेत् ॥७६८॥
ध्वजं निवेशयेद्दण्डे दिशासु विदिशासु च। सूत्रात्मानं विजानीहि ध्वजदण्डं व्यवस्थितम्।
चिच्छक्तिं विद्धि तस्यैव ध्वजरूपां चलाननाम् ॥७६९॥
पताकां प्रकृतिं विद्धि दण्डं पुरुषविग्रहम्। प्रासादं वासुदेवस्य मूर्त्तिभूतं निबोध मे ॥७७०॥
धारणाद्धरणीं विद्धि आकाशं शुषिरात्मकम्। तेजस्तत्पादजं विद्धि वायुस्पर्शगतं तथा ॥७७१
पाषाणादिष्वेव जलं पार्थिवं पृथिवीगुणम्।
प्रतिशब्दोत्तरं शब्दं स्पर्शं स्यात् कर्कशात्मकम् ॥७७२॥
शुक्लादिकं भवेद्रूपं रसमात्मनिदर्शनम्। धूपादिगन्धो गन्धस्तु वाग्गीतादिषु संस्थिता ॥७७३॥
शुकनासा स्मृता नासा बाहू भद्रकरौ स्मृतौ। शिरस्त्वण्डं निगदितं कलसं मूर्द्धजं स्मृतम् ॥७७४
कण्ठं कण्ठमिति ज्ञेयं स्कन्धं वेदी निगद्यते। पायूपस्थे प्रणाले तु त्वक् सुधा परिकीर्त्तिता ॥७७५
मुखं द्वारं भवेदस्य प्रतिमा जीव उच्यते। तच्छक्तिं पिण्डिकां विद्धि प्रकृतिश्च तदाकृतिम् ॥७७६
निश्चलत्वं तु गर्भोऽस्य अधिष्ठातास्य केशवः। एवमेष हरिः साक्षात् प्रासादत्वेन संस्थितः ॥७७७
जङ्घान्तेऽस्य शिवो ज्ञेयस्त्वं स्कन्धान्ते व्यवस्थितः।
ऊर्द्ध्वभागे स्थितो विष्णुरेवमेतदवस्थितम् ॥७७८॥
एवं स्थितस्य चैतस्य प्रासादस्य यथाविधि। प्रतिष्ठां ध्वजरूपेण शृणु मे साम्प्रतं स्फुटम् ॥७७९

---

दण्डं प्रासादोपरितनभागविशेषस्तस्मिन् ॥७६९॥
मूर्त्तिभूतं विग्रहस्वरूपम्, यद्वा, पुरुषरूपं मे मत्तो निबोध शृणु ॥७७०॥
एतदेव पञ्चभूतमयत्वादि विविच्य दर्शयति—धारणादिति सार्द्धैः षड्भिः ॥७७१॥
त्वं—ब्रह्मा ॥७७८॥

---

हे अनघ ! वायुवश श्रीमूर्त्ति के अधिष्ठित प्रासाद पर ध्वजा परिभ्रामित होकर कण्ठदेश(गृहोपरिभाग) में वेष्टन करने पर कोटिगुण पुण्य का सञ्चार होता है ॥७६८॥

दिग् विदिक् और दण्ड में (गृहोपरितन भाग में) ध्वजा सन्निवेश करे। व्यवस्थित ध्वजादण्ड को ही सूत्रात्मा जानना चाहिये। ध्वजरूपा चञ्चलानना को ही प्रभु की चिच्छक्ति, पताका को प्रकृति, और दण्ड को पुरुष विग्रहस्वरूप जानना चाहिये। प्रासाद ही श्रीहरि का मूर्त्तिस्वरूप है। उसका वर्णन करता हूँ,सुनो धारण हेतु धरणी, शुषिर हेतु आकाश, तेजः को चरणज, वायु को स्पर्शगत, पाषाणादि को जल, पार्थिव को पृथ्वीगुण, प्रतिशब्द के उत्तर को शब्द, कर्कशात्मक को स्पर्श, शुभ्रादि को रूप, आत्मनिदर्शन को रस, धूप इत्यादि गन्ध को गन्ध, गीतादि को वाक्य, शुक नासिका को नासिका, दोनों बाहु में शुभकर, अण्ड को मस्तक, कुम्भ को केश, कण्ठ को कण्ठ, वेदी को स्कन्ध, प्रणाली को पायु, एवं उपस्थ, त्वक् को अमृत, द्वार को वदन, प्रतिमा को जीव, पिण्डिका को उनकी शक्ति, तदाकृति को प्रकृति, अचलत्व को गर्भ एवं इसके अधिष्ठाता को केशव जानना चाहिये। श्रीहरि ही साक्षात् प्रासाद रूप में विद्यमान् हैं ॥७६९-७७७॥

इसके जङ्घास्थान में शिव, स्कन्ध प्रान्त में ब्रह्मा, ऊर्द्ध्वभाग में विष्णु अधिष्ठित हैं। इस प्रकार स्थित प्रासाद की यथाविधि ध्वजरूप प्रतिष्ठा मुझसे सुनो। पूर्वकाल में देवासुर संग्राम में विजय लाभार्थ अमरगण ने ध्वजारोपण पूर्वक वाहन एवं आयुधचिह्न धारण करके दैत्य सेनासमूह को जीता था, तदवधि ध्वज की

पूर्व्वे देवासुरे युद्धे विजयार्थं तदामरैः। कृत्वा लक्ष्माणि ह्युपरि वाहनान्यायुधानि च।
जितं दैत्यबलं सर्व्वं तदादौ ध्वजसंस्थितिः ॥७८०॥
अण्डोर्द्ध्वं कलसं न्यस्य तदूर्द्ध्वं विन्यसेद्ध्वजम्।
विम्बार्द्धमानं चक्रं तु त्रिभागेनाथ कारयेत् ॥७८१॥
द्वात्रिंशदङ्गुलं ज्येष्ठं कनिष्ठं त्वष्टहानितः। प्रतिमातुर्य्यभागेन कारयेद्वा सुदर्शनम् ॥७८२॥
लोहजं शैलजं वापि कारयेच्चिह्नपूर्व्वकम्। अष्टारं द्वादशारं वा मध्ये मूर्त्तिसमन्वितम्।
नारसिंहेन रौद्रेण विश्वरूपेण वा पुनः ॥७८३॥
द्वारस्य दैर्घ्याद्द्विगुणं दण्डं वा परिकल्पयेत् ॥७८४॥
ध्वजयष्टिर्देवगृहे ऐशान्यां दिशि देशिकैः। वायव्ये स्थापनीया वा साम्प्रतं ध्वज उच्यते ॥७८५
पट्टकार्पासक्षौमाद्यैर्ध्वजं कुर्य्यात् सुशोभनम्। एकवर्णं विचित्रं वा घण्टाचामरभूषितम् ॥७८६
किङ्किणीजालिकोपेतं वर्हिपत्रविभूषितम्। शुक्लादिवर्णैर्विप्रादिः क्रमाद्वा कारयेद्ध्वजम् ॥७८७
दण्डाग्रात् धरणीं यावद्धस्तैकं विस्तरेण तु। महाध्वजन्तु विख्यातं सर्व्वकामप्रदं शुभम् ॥७८८
तूर्य्यांशहीना विख्याता ध्वजासुरगणार्च्चिता। ध्वजिकार्द्धेन विज्ञेया पताका मानवर्ज्जिता ॥७८९
विस्तारेण ध्वजा कार्य्या विंशत्यङ्गुलसम्मिता।
षोड़शाङ्गुलमानेन ध्वजिका विस्तरात् स्मृता ॥७९०॥
अधिवास्य विधानेन चक्रं दण्डं ध्वजं तथा। देववत् सकलं कृत्वा मण्डपस्नपनादिकम् ॥७९१
नेत्रोन्मीलनकं कृत्वा पूर्व्वोक्तं सर्व्वमाचरेत्।
अधिवासयेत विधिना शय्यायां स्थाप्य देशिकः ॥७९२॥

---

तदादौ तत आरभ्येत्यर्थः। ध्वजस्य संस्थितिः प्रवृत्तिः ॥७८०॥
अथेति विकल्पे, विम्बतृतीयभागेन कारयेत्। अन्यत् सुगमम् ॥७८१॥

---

उत्पत्ति हुई है। प्रासाद के उपरिभाग में ऊर्द्ध्व में कलस स्थापना करके तदुपरि ध्वजारोपण करना चाहिये। श्रीमूर्त्ति का अर्द्धांश वा तृतीयांश परिमाण में चक्र निर्म्माण करना चाहिये। द्वात्रिंदङ्गुल होने से वह ज्येष्ठ, एवं अष्टाङ्गुल परिमाण होने से, अधम। प्रतिमा के चतुर्थांश प्रमाण भी चक्र प्रस्तुत करना चाहिये। यह चक्र लोहे वा पत्थर से बनावे और यथाविहित चिह्नयुक्त करना चाहिये। यह अष्टकोण वा द्वादशकोणयुक्त करे। इसमें घोर नृसिंह मूर्त्ति वा विश्वरूप मूर्त्ति स्थापन करे। देवालय में ईशान वा वायु-कोण में ध्वजयष्टि स्थापन करना देशिक का कर्त्तव्य है। दण्ड का परिमाण द्वार के दैर्घ्य की अपेक्षा द्विगुण होगा, अधुना ध्वजा का विषय को कहते हैं—पट्ट, कार्पास वा क्षौम वस्त्र द्वारा सुन्दर ध्वजा गठन करे। वह एक वर्ण वा नाना वर्ण का भी हो सकता है, और घण्टा चामरालङ्कृत, किङ्किणी मालायुक्त और मयूरवर्ह से अलङ्कृत हो। ब्राह्मणादि चारों वर्ण क्रमानुसार श्वेतादि वर्ण की ध्वजा प्रस्तुत करें। यदि ध्वजा दण्ड के अग्रस्थान से मृत्तिका यावत् एक हस्त विस्तृत हो तो, उसको महाध्वज कहते हैं। यह सर्व-कामप्रद शुभ ध्वज है ॥७७८-७८८॥

हे सुरगणार्जित ! विख्यात महाध्वज, चतुर्थांश न्यून होने से ध्वजा, अर्धांश प्रमाण होने से ध्वजिका एवं परिमाण हीन होने से पताका नाम से अभिहित है। ध्वजा का विस्तार विंशत्यङ्गुल, एवं ध्वजिका

ततः सहस्रशीर्षेति सूक्तं चक्रे न्यसेद्बुधः । तथा सौदर्शनं मन्त्रं मनस्तत्त्वं निवेशयेत् ॥७९३॥
मनोऽनुरूपेणास्यैव सजीवकरणं स्मृतम् । अरेषु मूर्त्तयो न्यस्याः केशवाद्याः सुरोत्तम ॥७९४॥
नाभ्यक्ष-प्रधिनेमीषु न्यसेत्तत्त्वानि देशिकः । नारसिंह विश्वरूपमक्षमध्ये निवेशयेत् ॥७९५॥
सकलं विन्यसेद्दण्डे सूत्रात्मानं सजीवकम् । निष्कलं परमात्मानं ध्वजे ध्यायन् न्यसेद्धरिम् ।
तच्छक्तिव्यापिनीं ध्यायेद्ध्वजारूपाञ्चलाननाम् ॥७९६॥

ततो मण्डपमध्ये तु स्नाप्य पूज्य यथाविधि । पूर्व्वोक्तेन विधानेन होमं कुण्डेषु कारयेत् ॥७९७
ततः प्रभातसमये मूर्त्तिपैः सह देशिकः । कलसे स्वर्णसकलं न्यस्त्वा रत्नानि पञ्च च ॥७९८॥
स्थापयेच्चक्रमन्त्रेण स्वर्णचक्रमधस्ततः । पारदेन तु संप्लाव्य नेत्रपट्टेन स्थापयेत् ॥७९९॥
ततो निवेशयेच्चक्रं द्वादशारं सुदर्शनम् । दुर्निरीक्ष्यं सुरैर्दैत्यैर्भ्रमद्दीप्तस्फुलिङ्गकम् ॥८००॥
तन्मध्ये चिन्तयेद्देवं नृसिंहं दैत्यनिर्द्दलम् । स्फुरत्सौदामिनीजिह्वं ज्वलज्ज्वलनकेसरम् ॥८०१
दीप्तार्कनयनं चन्द्रकोटिभास्वरदंष्ट्रिणम् । तप्तस्य तपनीयस्य सदृशं पुरुषाननम् ।
सर्व्वदुष्टहरं देवं दुष्प्रेक्ष्यं देवदानवैः ॥८०२॥
सर्व्ववर्णान्तवीजेन चतुर्द्दशयुतेन च । विन्दुनालङ्कृतेनादौ प्रणवेनाप्लुतेन च ।
अन्ते प्रणतियुक्तेन स्थापयेद्दुष्टनाशनम् ॥८०३॥

---

विस्तार षोड़शाङ्गुल करे। देववत् चक्र, दण्ड, एवं ध्वज का भी यथाविधि अधिवास करके मण्डल स्नपनादि एवं नेत्रोन्मीलन पूर्वक यावतीय कार्य्य सम्पादन करे। देशिक शय्या में चक्र स्थापन पूर्वक विधानानुसार अधिवासन करें ॥७८९-७९२॥

अनन्तर विज्ञव्यक्ति 'सहस्रशीर्षा' मन्त्र से चक्र में मन्त्रन्यास पूर्वक मनस्तत्त्वरूप सुदर्शन मन्त्र सन्निवेश करावे। मनोऽनुरूप उसका सजीवकरण भी करना चाहिये। हे सुरोत्तम ! समस्त कोण में केशवादि मूर्त्ति-समूह का न्यास करना कर्त्तव्य है ॥७९३-७९४॥

देशिक, नाभि, अक्ष एवं नेमिमूल में तत्त्वसमूह न्यास करे। अक्षमध्य में नृसिंह एवं विश्वरूप का न्यास करना चाहिये। दण्ड में सजीव सूत्रात्म न्यासपूर्वक निष्कल परमात्मा हरि की भावना करके ध्वज में न्यास करे। पश्चात् ध्वजरूपा, व्यापिका, चञ्चलानना तच्छक्ति का ध्यान करना। अनन्तर यथाविधि स्नान पूजा करके पूर्वोक्त नियम से कुण्डसमूह में होम करना चाहिये ॥७९५-७९७॥

अनन्तर प्रातःकाल में देशिक मूर्त्तिपगण के सहित मिलित होकर कलस में स्वर्ण खण्ड एवं पञ्चरत्न प्रदान करके चक्रमन्त्र से स्थापन करे। पश्चात् अधोभाग में पारद के द्वारा स्वर्ण चक्र को संप्लावित करके सूक्ष्मवस्त्र द्वारा स्थापन करना चाहिये। अनन्तर देव दानव दुर्निरीक्ष्य भ्राम्यमाण अग्निस्फुलिङ्ग समन्वित द्वादशकोण विशिष्ट सुदर्शनचक्र स्थापन करना चाहिये। तन्मध्य में दैत्यनिसूदन नृसिंहदेव की चिन्ता करनी चाहिये। वे स्फुरत् सौदामिनी जिह्व, अग्निवत् प्रदीप्त केशरवान्, प्रज्वलित अर्कनेत्र, कोटिचन्द्रवत् तेजोमय दशनसमूह में विराजित, तप्त तपनीयवत् पुरुषानन, सकल दुष्टजननाशन एवं देवासुर कर्त्तृक दुर्निरीक्ष्य हैं। सर्ववर्णान्त एवं चतुर्दश स्वर समन्वित, विन्दु द्वारा समलङ्कृत, एवं आदि में प्रणवयुक्त एवं अन्त में नमः शब्दयुक्त वीज के द्वारा अर्थात् 'ॐ क्षौं नमः' मन्त्र से दुष्टनाशन श्रीहरि को स्थापन करना चाहिये ॥७९८-८०३॥

ततो ध्वजं गृहीत्वा तु यजमानः सबान्धवः। प्रदक्षिणं तु कुर्व्वीत तूर्य्यमङ्गलनिस्वनैः ॥८०४
ततो निवेशयेद्दण्डं मन्त्रेणाष्टाक्षरेण तु। मुञ्चामि त्वेति सूक्तेन ध्वजं मुञ्चेद्विचक्षणः ॥८०५॥
दधिभक्तयुते पात्रे ध्वजस्याग्रं निवेशयेत्। ध्रुवाद्येन फड़न्तेन ध्वजं मन्त्रेण पूजयेत् ॥८०६॥
शिरस्याधाय तत् पात्रं नारायणमनुस्मरन्। मुक्तमात्रे ध्वजे दद्याज्जीवमाचार्य्यसत्तमः ॥८०७
प्रभिन्नं कुञ्जरं दद्यादश्वं वा लक्षणान्वितम्। दासं वा पेशलं वापि दासीं बालसवर्ज्जिताम्।
महाशृङ्गीं प्रदद्यात्तु ग्रामञ्च गुरुतुष्टये ॥८०८॥
आचार्य्यं भोजयित्वा तु मूर्त्तिपान् पूजयेद्बुधः। सुवर्णवस्त्रदानेन वैष्णवानपि पूजयेत् ॥८०९
अनिवारितमन्नाद्यं सर्व्ववर्णेषु कारयेत्। ततो नृत्यञ्च वाद्यञ्च बलिं दद्यात्तथा पुनः ॥८१०॥
कुर्य्याद्यो देवसदने ध्वजं विधिविधानतः। तस्य स्यादक्षयो लोको वैष्णवो नात्र संशय ॥८११
कदाचिद्यदि मानुष्यलोकमायाति स्वेच्छया। तथा सर्व्वेषु भूतेषु ध्वजीभूतः प्रकाशते ॥८१२
आधारभूतं सर्व्वेषां बन्धूनां धनिनां तथा। तस्मात् सर्व्वप्रयत्नेन ध्वजं कुर्य्यात् सुरालये ॥८१३
ध्वजे यष्टि-प्रदानेन वपुष्मान् जायते नरः।
ध्वजमानेन चाप्नोति लोकं शक्रस्य दुर्ल्लभम् ॥८१४॥ इति।
अथ लक्ष्म्याः सुपर्णादि-परिवारगणस्य च। प्रतिष्ठां हयशीर्षोक्तसुव्यक्तविधिनाचरेत् ॥८१५॥

---

हयशीर्षोक्तेन सुव्यक्तेन विधिनेति, तदुक्तं पञ्चरात्रे तद्विधिरत्यन्तस्फुटतया वर्त्तत इति तल्लिखन-विस्तरेणालमिति पूर्व्ववदभिप्रायः ॥८१५॥

---

अनन्तर यजमान, बान्धववृन्द के सहित ध्वज ग्रहण करके तूर्य्यादि मङ्गल शब्द के सहित प्रदक्षिण करे। अनन्तर विचक्षण व्यक्ति, अष्टाक्षर मन्त्र से दण्ड को प्रवेश कराकर 'मुञ्चामि त्वा' मन्त्र से ध्वज मोचन करके दध्यन्नसमन्वित पात्र में ध्वजाग्र को सन्निवेश करे। एवं प्रणवादि फड़न्त मन्त्र से ध्वज की पूजा करे। पश्चात् आचार्य्यश्रेष्ठ,-शिरोपरि उक्त पात्र धारण पूर्वक श्रीहरिस्मरण करते करते खोलते ही इस ध्वज में जीवार्पण करे। तत्पश्चात् श्रीगुरुदेव को प्रसन्न करने के निमित्त मदमत्त वारण, सुलक्षण अश्व, उत्तम दास, निरलसा दासी, महाशृङ्गी धेनु एवं ग्राम देना चाहिये। इसके बाद आचार्य्य को भोजन कराकर मूर्त्तिपगण को पूजा करके स्वर्ण एवं वस्त्र प्रदान कर वैष्णववृन्द की पूजा करना चाहिये ॥८०४-८०९॥

अनन्तर समस्त श्रेणी के मनुष्यों को अनिवारित अन्न प्रदान करके पुनर्वार नृत्य, वाद्य और बलि प्रदान करे। कारण, जो देवगृह में यथाविधि ध्वज अर्पण करते हैं, उनको निःसन्देह अक्षय श्रीहरि का धाम प्राप्त होता है ॥८१०-८११॥

उक्त ध्वज प्रदाता यदि किसी समय निजेच्छानुसार नरलोक में अवतीर्ण हो, तो-वह समस्त लोकों के मध्य में ध्वज स्वरूप (सर्वश्रेष्ठ) होकर विराजमान होता है। ध्वज ही बन्धु है एवं धनीव्यक्तियों का आधार स्वरूप है। तज्जन्य सर्वथा यत्नपूर्वक देवमन्दिर में ध्वज प्रदान करनी चाहिये। ध्वज में दण्ड प्रदान करने से वपुष्मान हो जाता है। और ध्वज परिमाण में दुष्प्राप्य इन्द्रपुरी लाभ होती है। तत्पश्चात् हयशीर्षोक्त स्पष्टीकृत विधानानुसार लक्ष्मी एवं सुवर्ण प्रभृति परिवारवृन्द की प्रतिष्ठा करनी चाहिये ॥८१२-८१५॥

सर्व्वामेतां प्रतिष्ठाञ्च विप्रेण विदुषा सता । गृहिणा वैष्णवेनैव कारयेन्नेतरेण तु ॥८१६॥

तथा च मात्स्ये—

नैतद्विशीलेन न दाम्भिकेन, न लिङ्गिना स्थापनमत्र कार्य्यम् ।
विप्रेण कार्य्यं श्रुतिपारगेण, गृहस्थधर्म्माभिरतेन नित्यम् ॥८१७॥
पाषण्डिनं यस्तु करोतु बुद्धया, विहाय विप्रान् श्रुतिधर्म्मयुक्तान् ।
गुरुं प्रतिष्ठादिषु तच्च नूनं, कुलक्षयः स्यादचिराय पूर्व्वम् ॥८१८॥
स्थानं पिशाचैः परिगृह्यते त,-दपूज्यतां यात्यचिरेण लोके ।
विप्रैः कृतं यच्छुभदं कुले स्या,-त्तत् पूज्यतां याति चिरञ्च कालम् ॥८१९॥ इति ।

अथ चलश्रीमूर्त्तिप्रतिष्ठा

चलमूर्त्तेश्च विविधाः प्रतिष्ठाविधयः स्मृताः । तेष्वादौ श्रीहयग्रीवदेवोक्तो लिख्यते विधि ॥८२०

---

विदुषा प्रतिष्ठाविध्यभिज्ञेन, सता सुशीलेन, न तु इतरेण लिखितादन्येन कारयेत् । यद्यपि पूर्व्वमाचार्य्य-लक्षणलिखनेनैतद्बोधितमेवास्ति, तथापि तदन्यथात्वे महान् दोषसञ्चारः स्यादिति तद्दाढ़्यर्थमेव लिखितमिति दिक् ॥८१६॥

पाषण्डिलक्षणञ्च पाद्मोत्तरखण्डे श्रीमहादेवेनोक्तम्— 'येऽन्यदेवं परत्वेन वदन्त्यज्ञानमोहिताः । नारायणाज्जगन्नाथत्वे वै पाषण्डिनः स्मृताः ॥ शङ्खचक्रोर्द्ध्वपुण्ड्रादिचिह्नैः प्रियतमैर्हरेः । रहिता ये द्विजा देवि ते वै पाषण्डिनः स्मृताः ॥' इत्यादि । पूर्व्वमचिरेण कुलक्षयः स्यात् ॥८१८॥

तत् श्रीमूर्त्तिस्थापनसम्बन्धिस्थानम् । स्थापितश्रीमूर्त्तिः स्थापको वा लोके अपूज्यतां याति । यत् स्थापनं विप्रैः कृत्वा कृतम् ॥८१९॥

अप्यर्थे चकारः, यथा स्थिरमूर्त्तेः प्रतिष्ठाविधयो बहुप्रकारास्तथा चलमूर्त्तेरपि स्मृता अभिज्ञैः । आदाविति पश्चादन्योऽपि लेख्य इत्यर्थः ॥८२०॥

---

प्रतिष्ठाकार्य्य में निपुण, शास्त्रज्ञ, सच्चरित्र ब्राह्मण, गृही वैष्णव के द्वारा ही प्रतिष्ठा करानी चाहिये । इसके अतिरिक्त अपर ब्राह्मण के द्वारा कभी प्रतिष्ठा न करावें ॥८१६॥

तद्विषय में मत्स्यपुराण में लिखित है—शीलताहीन, दम्भपरायण, और धर्म्मध्वजी पुरुष से कभी प्रतिष्ठा न करावे । सदा गृहधर्म्म में रत, वेद के जानने वाले ब्राह्मण से ही प्रतिष्ठा सम्पादन करावे । जो व्यक्ति, वेदपरायण ब्राह्मण को त्यागकर जान-बूझकर पाषण्डी को प्रतिष्ठाकार्य्य में गुरु बनाता है, तत्काल उसके वंश का नाश होता है, इसमें सन्देह नहीं है । पाषण्डी द्वारा श्रीमूर्त्ति को स्थापन कराने पर, वह मूर्त्ति जिस स्थान में स्थापित होती है, वह स्थान पिशाच के अधिकार में होता है और स्थापनकर्त्ता तत्क्षण समाज में अमूल्य हो जाता है । जो व्यक्ति, यथानिर्दिष्ट ब्राह्मण द्वारा श्रीमूर्त्ति को स्थापन कराता है, प्रतिष्ठा स्थान उनके वंश के सब मनुष्यों के पक्ष में ही मङ्गलकारक होता है, और वे आजीवन सम्मानित होकर समय अतिवाहित करते हैं ॥८१७-८१९॥

अथ चलश्रीमूर्त्तिप्रतिष्ठा

चलमूर्त्ति प्रतिष्ठा-विधि अनेक प्रकार हैं । तन्मध्ये प्रथमतः श्रीहयग्रीवोक्त विधि का वर्णन किया जाता है ॥८२०॥

हयशीर्षे च—

अचलश्च चलश्चैव द्विविधो विष्णुरुच्यते। अचलो ह्यादिपुरुषः प्रादुर्भावगतश्चलः ॥८२१॥
प्रासादे ह्यचलस्तद्वद्गृहेषु च चलाचलः। सभामठस्थो ह्यचलो गृहस्थानां मठे चलः ॥८२२॥
चले रत्नादिविन्यासः पिण्डिकायोजनादिकम्। यतो न विद्यते तस्मात् पिण्डिका तस्य नेदृशी।
अतो विशेषाद्वक्ष्यामि चलानां यादृशो विधिः ॥८२३॥
प्रतिविम्वाहतं शस्त्रैरुत्कीर्णं पाकजं तथा। त्रिविधञ्च समुद्दिष्टं विष्णुरूपं विचक्षणैः ॥८२४
प्रतिबिम्वाहतं पूज्यं तावत्कालं तु पार्थिवम्।
न तत्र कश्चित् संस्कारः केवलं तत्त्वयोजनम्।
पूजनान्ते विसर्गश्च पुनर्नेष्टं तदर्च्चनम्। ८२५॥
शस्त्रोत्कीर्णं बहुविधं शिलारत्नादिभेदतः। दारवं शैलजं रूपं प्रासादे स्थापयेत् परम् ॥८२६
रत्नजं निर्म्मितं शस्त्रैः पिण्डिकासहितं शुभम्। पिण्डिकारहितं वापि तदेवं द्विविधं पुनः ॥८२७
रत्नजस्य तु रूपस्य पिण्डिका धातवी स्मृता। शैली तु शैलजस्येष्टा रत्नजस्य तु नेष्यते ॥८२८
पिण्डिकासहितं कार्य्यं चलं रत्नादिनिर्म्मितम्।
पाकजं धातुजं विम्बं पिण्डिकासहितं तु तत् ॥८२९॥
तेषां प्रतिष्ठां वक्ष्यामि संक्षेपाद्वेदनिर्म्मिताम् ॥८३०॥

---

आदिपुरुषः परमात्मा परमेश्वरो भगवान् श्रीवासुदेवः अचलः, सर्व्वव्यापकत्वात्। प्रादुर्भावगतो लीलया स्वीकृतजन्मा, चलः भक्तवात्सल्यादिलीलया इतस्ततः परिभ्रमणात् ॥८२१॥

एवं यथासौ द्विविधः, तथा तत्प्रतिमापि द्विविधा इत्याह—प्रासाद इति ॥८२२॥

पार्थिवं प्रतिविम्बाहतं छायावत् स्थण्डिलेऽङ्किता श्रीमूर्त्तिः। तावत्कालं सद्य एव, न तु कालान्तरेण पुनः पूज्यम् ॥८२५॥

पिण्डिकासहितं पिण्डिकारहितं वेति तत्, रत्नजमेव तद्द्विविधम्। रूपस्य श्रीमूर्त्तेः ॥८२७-८२८॥

---

हयशीर्ष पञ्चरात्र में वर्णित है– अचल एवं चल भेद से श्रीविष्णुमूर्त्ति द्विविध हैं। अचलमूर्त्ति को आदिपुरुष जानना चाहिये एवं चलमूर्त्ति, भक्तवात्सल्यवशतः इतस्ततः विचरण करते हैं ॥८२१॥

श्रीहरि की अचलमूर्त्ति को प्रासाद में एवं चलाचल मूर्त्ति गृह में स्थापित होती है। अचलमूर्त्ति सदा मठ में विराजमान रहती है। एवं चलमूर्त्ति गृही के गृह में विराजित होती है ॥८२२॥

चलमूर्त्ति में रत्नादि विन्यास एवं पिण्डिका योजनादि नहीं है। सुतरां उसकी पिण्डिका भी उस प्रकार नहीं होगी। अतएव अधुना चलमूर्त्ति का विधान सविशेष कीर्त्तन करता हूँ। बुधगण, प्रतिबिम्बाहत, शस्त्रोत्कीर्ण एवं पाकज,–यह त्रिविध श्रीहरिमूर्त्ति का कीर्त्तन किये हैं ॥८२३-८२४॥

पार्थिव विम्बाहत की अर्थात् छायावत् स्थण्डिल में अङ्कित मूर्त्ति की पूजा सद्यः करनी चाहिये। कालान्तर में पूजा करना अनुचित है। इस मूर्त्ति में केवल तत्त्वयोजना करनी चाहिये। इसमें किसी प्रकार का संस्कार नहीं है। पूजावसान में विसर्जन करनी चाहिये। पुनर्वार उसमें पूजा न करे ॥८२५॥

शीलरत्नादि भेद से शस्त्रोत्कीर्ण मूर्त्ति बहुविध हैं। काष्ठमयी एवं शिलामयीमूर्त्ति ही प्रासाद में स्थापन करनी चाहिये। विशुद्ध पिण्डिका के सहित रत्नमयी मूर्त्ति का निर्म्माण शस्त्र द्वारा करना कर्त्तव्य है। रत्नमयी द्विविध हैं, पिण्डिका समन्विता एवं पिण्डिका वर्ज्जिता है। रत्नमयी मूर्त्ति की पिण्डिका धातुमयी

दशहस्तपरीमाणं मण्डपं कारयेच्छुभम् । कुर्य्यात् पञ्चकरां वेदीं तद्वत् कुण्डानि कारयेत्॥८३१

तोरणध्वजकुम्भानां स्थापनं पूर्व्ववत् स्मृतम् ।
विष्णुकुम्भं तथा स्थाप्य लोकपान् पूर्व्ववद्यजेत् ॥८३२॥

सर्व्वतोभद्रकं वेद्यां लिखेदुज्ज्वलवर्णकैः ।
वैष्णवाग्निं तथा कुर्य्याद्याम्ये शय्यां तु पातयेत् ॥८३३॥

ऐशान्यां भद्रपीठं तु न्यस्य कुम्भं तु विन्यसेत् । सर्व्वौषधियुतान् सर्व्वानष्टाशीतिपदे तथा॥८३४

अथोत्तरे मण्डपस्य स्नानवेद्यां तु पश्चिमे । भूमिं प्रलिप्य तत्रादौ तण्डुलैः पञ्चवर्णकैः ॥ ८३५

चतुरस्रं विलिख्यादौ स्वस्तिकं कल्पयेद्गुरुः । तन्मध्ये पीठकं न्यस्य प्रतिमां तत्र विन्यसेत्॥८३६

शङ्खतूर्य्यरवैस्तद्वत् पञ्चगव्यादिना स्नपेत् । पुष्पगन्धादिभिः पूज्य च्छादयेच्छुक्लवाससा ॥८३७

उत्थाप्य त्वभिषेकार्थं निनयेत् स्नानमण्डपम् । शङ्खपुण्याहघोषेण स्नानपीठे निवेशयेत् ॥८३८

अवधार्य्य जगच्छान्तिं तोषयेत् कर्म्मिणस्तथा । देशिकस्य तदा दद्यात् पूर्व्ववत्तरुणीं शुभाम् ।
सपुत्रां वस्त्रसंयुक्तां हेमशृङ्गीं सदक्षिणाम् ॥८३९॥

ततो वेदादिमन्त्रैस्तामालभेद्देशिकोत्तमः । पौरुषेण तु सूक्तेन मूलवीजेन चालयेत् ॥८४०॥

---

तद्वत् पूर्व्ववत् ॥८३१॥
स्नपेत् स्नापयेत्, आदि शब्देन पञ्चामृतपञ्चकषायाष्टमृत्तिकाजलादि ॥८३७॥
जगच्छान्तिमवधार्य्येति स्वस्तिवाचनादिकं कृत्वेत्यर्थः ॥८३९॥
तां प्रतिमामालभेत् स्पृशेत् ॥८४०॥

---

एवं पाषाण मूर्त्ति की पिण्डिका पाषाणमयी करनी चाहिये । रत्नमयी मूर्त्ति की पिण्डिका निर्म्माण न करने पर भी हानि नहीं है । रत्नमयी चलप्रतिमा पिण्डिकायुक्ता करनी चाहिये । धातुज मूर्त्ति को प.कज कहते हैं । यह पिण्डिकायुक्ता होती है । वेद में वर्णित विधानानुसार इन सब मूर्त्तियों की प्रतिष्ठाविधि का वर्णन करता हूँ ॥८२६-८३०॥

दशहस्त परिमित शुभ मण्डप, पञ्चहस्त परिमित वेदी एवं पूर्ववत् कुण्ड निर्म्माण करे । तोरण, ध्वज एवं कुम्भसमूह का स्थापन पूर्ववत् ही करे । एतद्भिन्न विष्णुकुम्भ स्थापन करके पूर्ववत् लोकपालवृन्द की पूजा करे । वेदी में पूर्ववत् उज्ज्वल वर्ण द्वारा सर्वतोभद्रमण्डल चित्रण, वैष्णवाग्नि स्थापन, दक्षिणभाग में शय्यापातन, ईशानदिक् में भद्रपीठ विन्यास, एवं अष्टाशीति पद में सर्वौषधियुक्त कुम्भसमूह स्थापन करे । ॥८३१-८३४॥

अनन्तर गुरुदेव, मण्डप को उत्तरदिक् में एवं स्नानवेदी को पश्चिमदिक् में कृष्णवर्ण तण्डुल के द्वारा भूमि लेपन करके प्रथम चतुरस्र अनङ्ग पूर्वक स्वस्तिक की रचना करें । एवं तदुपरि प्रतिमा स्थापन करें । पश्चात् शङ्ख तूर्य्यादि की ध्वनि के सहित पञ्चगव्यादि के द्वारा स्नान कराना चाहिये । उसके बाद, गन्ध पुष्पादि द्वारा पूजा एवं शुक्लवस्त्र द्वारा आवरण पूर्वक प्रतिमा को उठाकर अभिषेक के निमित्त स्नानमण्डप में आनयन करे । एवं पुण्याह शब्द करते करते स्नानपीठ में स्थापन करे । पश्चात् जगच्छान्ति अवधारणार्थ स्वस्तिवाचनादि करके कर्मकार को प्रसन्न करना चाहिये । तत्पश्चात् देशिक को पूर्ववत् तरुणवयस्का मङ्गलकरी, सवत्सा, सवस्त्रा, स्वर्णशृङ्गी धेनु दान करके यथायथ दक्षिणा प्रदान करे ॥८३५-८३९॥

अनन्तर देशिकोत्तम गुरुदेव, वेदादि मन्त्र पाठ करके प्रतिमा को स्पर्श पुरुषसूक्त एवं मूलवीज द्वारा

कौतुकं मूलवीजेन तत्करे त्वधिरोपयेत् । चित्रं देवेति मन्त्रेण नेत्रे चोन्मीलयेद्गुरुः ॥८४१॥
हैमयाभ्यञ्जयेन्नेत्रे श्लक्ष्णया तु शलाकया । घृतेन मधुना तद्वन्मधुवातेति देशिकः ॥८४२॥
ततः शुद्धेन तोयेन स्नाप्य मन्त्रैः समालभेत् । वेदाद्येन च सूक्तेन चतुर्भिर्मूर्त्तिपैः सह ॥८४३॥
अतो देवेति चावाह्य वासुदेवं जगद्गुरुम् । विशुद्धस्फटिकाभासं हिमकुन्देन्दुसन्निभम् ॥८४४॥
किरणैः शीतलैः सौम्यैः प्रीणयन्तश्चराचरम् । लावण्यामृततोयेन सिञ्चन्तमिव सर्व्वतः ॥८४५

सुनाभं वारिजं पद्मं धारयन्तं गदां शुभाम् । भूषितं मालया तद्वद्दीपितं मणिकाञ्चनैः ।
श्री-पुष्टि-गरुड़ाद्यैस्तु समन्तात् परिवारितम् ॥८४६॥
एवं ध्यात्वा ततः कुम्भैरभिषिञ्चेत् समन्ततः ।
आपो हिष्ठेति मन्त्रेण कुम्भेनासेचयेद्गुरुः ॥८४७॥

समुद्रं गच्छ मन्त्रेण दक्षिणेनाभिषेचयेत् । सोमराजेति मन्त्रेण उत्तरेणाभिषेचयेत् ॥८४८॥
घृतेनाभ्यञ्जयेद्देवं तेजोऽसीति ततो गुरुः । द्रुपदेति समुद्वर्त्य दद्यादामलकं शुभम् ॥८४९॥

याः फणिनीति मन्त्रेण फलैर्नीराजयेत् प्रभुम् ।
काण्डात् काण्डेति मन्त्रेण हरिं निर्म्मञ्छयेत् पुनः ॥८५०॥

फलतोयेन सिञ्चेत गायत्र्या देशिकोत्तमः । तद्विष्णोरिति मन्त्रेण पञ्चगव्येन सेचयेत् ॥८५१
काषायेण तु तोयेन वरुणस्येति सेचयेत् । सुमङ्गलीति मन्त्रेण विद्वानोषधिवारिणा ॥८५२॥
मूर्द्धानं दिवमन्त्रेण वल्मीकेनाभिषेचयेत् । इमं मेति च मन्त्रेण स्नापयेत् सिकताजलैः ॥८५३
देवो वराह मन्त्रेण मृत्तोयेनाभिषेचयेत् । सेचयेत् पद्ममृत्तोयैः शन्नो देवीति देशिकः ॥८५४॥

---

चालन, मूलवीज द्वारा तदीय हस्त में कौतुक सूत्र बन्धन, 'चित्रं देवेति' मन्त्र से चक्षुरुन्मीलन, तीक्ष्णास्त्र सुवर्ण शलाका द्वारा नयनद्वय में अभ्यञ्जन प्रदान करें। पश्चात् देशिक 'मधुवाता' मन्त्र से घृत एवं मधु के द्वारा स्नान एवं अवशेष में मूर्त्तिपचतुष्टय के सहित मिलित होकर वेदादि पुरातन मन्त्रपाठपूर्वक पवित्रोदक द्वारा स्नान कराकर प्रतिमा को स्पर्श करें। पश्चात् 'देवेति' मन्त्र द्वारा जगद्गुरु हरि को आवाहन करके उनका ध्यान करना चाहिये। जिनकी कान्ति, विशुद्ध स्फटिक, तुषार, कुन्दकुसुम एवं चन्द्र सन्निभ है। जो रमणीय स्निग्ध कान्ति के द्वारा चराचर जगत् को तृप्त कर रहे हैं। जिनके लावण्यरूप अमृतोदक से जगत् अभिषिक्त हो रहा है। जिन्होंने स्वीय भुजचतुष्टय में चक्र, शङ्ख, पद्म एवं शुभदा गदा धारण किया हैं। जो माल्य से शोभित, मणिकाञ्चन से प्रदीप्त, एवं श्री, पुष्टि, गरुड़ प्रभृति के द्वारा समन्तात् वेष्टित हैं, उनका ध्यान मैं करता हूँ। इस प्रकार ध्यान करके कुम्भसमूह के द्वारा अभिषेक करना चाहिये। गुरुदेव, 'आपोहिष्ठा' मन्त्र द्वारा कुम्भजल से सेचन, 'समुद्रं गच्छ' मन्त्र से दक्षिणदिक् में अभिषेक, 'सोमं राजेति' मन्त्र से उत्तरदिक् में अभिषेक, तेजोऽसि' मन्त्र से घृत के सहित अभ्यञ्जन एवं 'द्रुपदेति' मन्त्र से उद्वर्त्तन करके आमलक अर्पण करें ॥८४०-८४९॥

पश्चात् 'याः फलिनीति' मन्त्र से फल द्वारा नीराजन करके 'काण्डात् काण्डेति' मन्त्र से पुनर्वार हरि को निर्मञ्छन करना चाहिये। आचार्य्य गायत्री पाठ करके फलजल द्वारा 'तद्विष्णोः' इस मन्त्र से पञ्चगव्य द्वारा, 'वरुणस्य' मन्त्र से काषायोदक द्वारा, 'सुमङ्गली' मन्त्र से ओषधिजल द्वारा, 'मूर्धानं दिव' मन्त्र से वल्मीक मृत्तिका द्वारा 'इमं मेति' मन्त्र द्वारा सैकतोदक से, 'देवोवराह' मन्त्र से मृत्तिकाजल द्वारा,

ऋतं चेत्यादि-सूक्तेन तीर्थमृत्कुम्भवारिणा । नागकेशरतोयेन श्रीश्च तेत्यभिषेचयेत् ॥८५५॥
चन्दनोदककुम्भेन पावमान्याभिषेचयेत् । प्लवसाम्ना ततः पञ्चरत्नतोयेन सेचयेत् ॥८५६॥
पञ्च नद्येत्यृचा देवं नदीनदतड़ागजैः । यासां राजेति मन्त्रेण एकाशीतिघटैर्हरिम् ।
स्नापयेदर्च्चयेद्भक्त्या प्रतिद्रव्यं समाहितः ॥८५७॥
अग्न आयेति मन्त्रेण देवमुष्णोदकेन तु । शुद्धतोयेन देवेशं शुद्धवत्याभिषेचयेत् ॥८५८॥
अतोऽर्च्चयेत् सुरेशानं जितन्त इति देशिकः ॥८५९॥
पाद्यन्तु मूलमन्त्रेण मधुपर्कन्तथैव च । स्नानीयमथवाचामं गायत्र्या विनिवेदयेत् ॥८६०॥
सुरासुरेति युग्मं तु दद्यात्तद्वत् पवित्रकम् । वेदाहमित्युत्तरीयं रोचनां प्रणवेन तु ॥८६१॥
अञ्जनमञ्जतेत्येवं गन्धं गन्धवतीति च । पुष्पवत्या तथा पुष्पं धूपं धूरसि चेत्यृचा ॥८६२॥
तेजोऽसीति तथा दीपमग्निर्मूर्द्धेति प्रापणम् । इन्द्रच्छत्रेति वै च्छत्रं विकर्णेन तु चामरम् ॥८६३
आज्यदोहेन चादर्शं वात आवेति वीजयेत् ।
त्वमिन्द्रेति ध्वजं दद्यात् पताकामोमिति स्मरन् ॥८६४॥
देवव्रतेन साम्ना तु दद्यादाभरणादिकम् । स्तुयात् पुरुषसूक्तेन साकल्येन जनार्द्दनम् ॥८६५॥
दीर्घायुष्येति सम्पूज्य किरेद्दूर्व्वाक्षतं बुधः । या ओषधीति मन्त्रेण पुष्पाणि विकिरेद्गुरुः ॥८६६
पुनर्बृहद्रथैः स्तुत्वा चक्रसाम्ना जनार्द्दनम् । शिवसङ्कल्पसूक्तेन शाकुनेन जनार्द्दनम् ।
उत्तिष्ठेति समुत्थाप्य शय्यायां विनिवेशयेत् ॥८६७॥

---

युग्मं—परिधानोत्तरीय-वस्त्रद्वयम् । पवित्रकं—यज्ञोपवीतम् । रोचनां—गोरोचनातिलकम् ॥८६१॥
प्रापणं—नैवेद्यम् ॥८६३॥ शाकुनेन सूक्तेन ॥८६७॥

---

'शन्नोदेवीति' मन्त्र से पद्म मृत्तिकायुक्त जल द्वारा 'ऋतंच' इत्यादि मन्त्र से तीर्थमृद्युक्त कुम्भ जल द्वारा 'श्रीश्चतेति' मन्त्र से नागकेशर पुष्पवासित जल द्वारा, 'पावमानी' मन्त्र से चन्दनोदक कुम्भ द्वारा, 'प्लव' नामक साम से पञ्चरत्न सलिल द्वारा 'पञ्च नद्येति' मन्त्र से नदी नद तड़ाग जल द्वारा एवं 'यासां राजा' मन्त्र से समाहित चित्त से भक्तिपूर्वक एकाशीति कुम्भ द्वारा प्रभु को स्नान कराकर अर्चन करें। अनन्तर 'अग्न आयेति' मन्त्र से उष्ण जल के द्वारा एवं 'शुद्धवती' मन्त्र से पवित्र जल द्वारा स्नान कराना चाहिये।

अनन्तर देशिक, 'जितन्ते' मन्त्र से देवेश हरि की पूजा करके, मूलमन्त्र से पाद्य, मधुपर्क एवं स्नानीय, गायत्री द्वारा आचमनीय एवं 'सुरासुर' मन्त्र से सोत्तरीय परिधेय वस्त्र एवं यज्ञसूत्र अर्पण करें। तत्पश्चात् 'वेदाहमिति' मन्त्र से उत्तरीय, प्रणव द्वारा रोचना तिलक, 'अञ्जतेति' मन्त्र से अञ्जन, 'गन्धवतीति' मन्त्र से गन्ध, 'पुष्पावती' मन्त्र से पुष्प, 'धूरसि' मन्त्र से धूप, 'तेजोऽसि' मन्त्र से दीप, 'अग्निर्मूर्धा' मन्त्र से नैवेद्य, 'इन्द्रच्छत्रेति' मन्त्र से छत्र, 'विकर्ण' मन्त्र से चामर, 'आज्यदोह' मन्त्र से दर्पण, 'वात आवेति' मन्त्र से वीजन, 'त्वमिन्द्रेति' मन्त्र से ध्वज, 'ॐ' स्मरण पूर्वक पताका, 'देवव्रत' साम से आभरणादि अर्पण करें। एवं समग्र 'पुरुषसूक्त' मन्त्र से जनार्दन की पूजा करनी चाहिये ॥८५०-८६५॥

विज्ञ गुरुदेव 'दीर्घायुष्येति' मन्त्र से पूजा करके दूर्वा एवं अक्षत अर्पण करें। पश्चात् 'या ओषधीति' मन्त्र से पुष्पसमूह विकिरण पूर्वक 'बृहद्रथ' साममन्त्र, चक्रमन्त्र, शिव सङ्कल्प मन्त्र एवं शाकुनसूक्त द्वारा हरि का स्तव करके 'उत्तिष्ठेति' मन्त्र से उठाकर शय्योपरि शयन करावें ॥८६६-८६७॥

अपराजित-मन्त्रेण ध्यायेत् सकलनिष्कलम् ।
व्यापिनन्तु पुनर्ध्यात्वा तत्त्वानि विनियोजयेत् ॥८६८॥
सकलीकरणं कृत्वा पूर्व्वोक्तविधिना हरेः । ततः सहस्रशीर्षेति प्रत्यृचं पूजयेद्बुधः ॥८६९॥
गन्धपुष्पादिभिः सम्यङ्नैवेद्यादि निवेदयेत् । अतो देवेति सूक्तेन गृहोपकरणानि च ॥८७०॥
निद्राकलसविन्यासं कृत्वा पूज्यस्तु मण्डले । सर्व्वतोभद्रके देवो गन्धपुष्पादिभिः क्रमात् ॥८७१
प्रभूतैर्यज्ञिकैर्द्रव्यैर्हेमपुष्पैः समुज्ज्वलैः । वैष्णवे मण्डले पश्चाज्ज्वालयेद्वैष्णवानलम् ॥८७२॥
नयन्मन्त्रैस्तु तं पश्चात् कुम्भेषु द्विजसत्तमः । जुहुयाच्च शतं साष्टं पलाशसमिधा द्विज ॥८७३
तिलांश्च जुहुयादाज्यैर्वैष्णवं प्रपचेच्चरुम् । तिलतण्डुलदुग्धैस्तु घृतेनाघार्य्य साधयेत् ॥८७४॥
अवतार्य्याभिघार्य्यैव मन्त्रैरेभिस्तु होमयेत् । ८७५॥
विष्णवे शिपिविष्टाय विष्णवे निर्गुणेति च । इदं विष्णुर्व्वति मन्त्रेण तद्विष्णोरिति देशिकः ॥८७६
इरावतीति मन्त्रेण त्वं विष्णोरिति चैव हि । प्रतद्विष्णुर्व्वति मन्त्रेण विष्णोर्नुकेति चैव हि ॥८७७
तथा पुरुषसूक्तेन सम्यक् षोड़श आहुतीः । चरुं हुत्वा पुनः पश्चान्मन्त्रैरेभिस्तु होमयेत् ॥८७८॥

तत्र होममन्त्राः

ॐ विष्णवे स्वाहा । ॐ पुरुषोत्तमाय स्वाहा । ॐ त्रैलोक्यमोहनाय स्वाहा । ॐ वैकुण्ठाय स्वाहा । ॐ लक्ष्मीपतये स्वाहा । ॐ लक्ष्मीनिवासाय स्वाहा । ॐ हृषीकेशाय स्वाहा । ॐ नमो नारायणाय स्वाहा । ॐ ब्रह्मणे स्वाहा ॥८७९॥

---

सकलः सगुणश्चासौ निष्कलो निर्गुणश्च, तम् ॥८६८॥
सर्व्वतोभद्रमण्डले देवः पूज्यः ॥८७१॥ तम्—अनलम् ॥८७३॥

---

अनन्तर 'अपराजित' मन्त्र से सगुण-निर्गुण का ध्यान करके पुनर्वार सर्वव्यापक प्रभु का ध्यान करके तत्वसमूह नियोजित करें । तत्पश्चात् पूर्वकथित विधान से श्रीहरि का सकलीकरण सम्पादन पूर्वक 'सहस्रशीर्षा' मन्त्र से पूजा और गन्ध पुष्पादि द्वारा नैवेद्यादि समर्पण करके 'अतोदेवेति' सूक्तमन्त्र से गृहोपकरण समूह निवेदन करें ।।८६९-८७०।।

अनन्तर निद्राकुम्भ स्थापन पूर्वक सर्वतोभद्रमण्डल में गन्ध पुष्पादि द्वारा यथाविधि प्रभु की पूजा करनी चाहिये ।।८७१।।

पश्चात् प्रभूत परिमाण में यज्ञीय सामग्री एवं समुज्ज्वल हेमपुष्प समूह द्वारा पूजा करके वैष्णव मण्डल में वैष्णवानल प्रज्वालित करना चाहिये । हे द्विज ! तत्पश्चात् द्विजसत्तम, उस कुण्ड पर अग्नि को लाकर पलाश समिध द्वारा अष्टोत्तर होम एवं घृत के द्वारा तिल होम करके तिल, अक्षत एवं दुग्ध द्वारा वैष्णवचरु पाक करें । पश्चात् उसको घृत से सिक्त करें । तत्पश्चात् चरु को उतार कर और चरु का नामोच्चारण करके मन्त्रों के द्वारा होम करें । 'विष्णवे शिपिविष्टाय' 'विष्णवेनिर्गुणेति' 'इदं विष्णुर्व्वति' 'तद्विष्णो' इति 'इरावती' इति 'त्वं विष्णोः' इति 'प्रतद्विष्णेति' 'विष्णोर्नुकेति' इन सब मन्त्रों के द्वारा एवं पुरुषसूक्त मन्त्र से षोड़शसंख्यक होम एवं चरु होम करके पुनर्वार वक्ष्यमाण मन्त्रसमूह के द्वारा होम करना चाहिये । ।।८७२-८७८

तत्र होममन्त्राः

'ॐ विष्णवे स्वाहा' इत्यादि मूलोक्त मन्त्रसमूह के द्वारा होम करना चाहिये । पश्चात् गुरुदेव, व्याहृति

हुत्वा व्याहृतिभिः पूर्व्वं गायत्र्या होमयेद्गुरुः । एवं हुत्वा तु जुहुयाच्चक्रादीनां यथाक्रमम् ॥८८०

लक्ष्म्यादीनां ततो हुत्वा ग्रहाणां होमयेत्ततः ।

लोकेशानां तु नागानां होमयेत्तदनन्तरम् ॥८८१॥

नारायणाय हुत्वा तु दद्यात् पूर्णाहुतिं बुधः । ततो विभज्य विद्वांस्तु दद्यात् कनकदक्षिणाम् ॥८८२

ब्रह्मघोषादिना देवं समुत्थाप्य विचक्षणः । ततो मण्डलमध्ये तु स्थापयित्वार्च्चयेत् पुनः ।

प्रत्यृचं निजसूक्तेन गन्धपुष्पादिभिः क्रमात् ।।८८३॥

सान्निध्यं पूर्व्ववत् कृत्वा सजीवकरणं गुरुः । प्रणवेन निरुध्याथ ध्यायेत् सकल-निष्कलम् ॥८८४

पिण्डिकायोजनीयादि मनसैव विचिन्तयेत् ।

न्यासं कृत्वार्च्चयेत् पश्चात् पूर्व्ववद्विधिना गुरुः । ८८५॥

बलिं दद्यात्तु भूतेभ्यः पार्षदेभ्यश्च देशिकः । प्रणिपत्य ततो दद्याद्दक्षिणां गुरवे सुधीः ।।८८६॥

सुवर्णसहितं पात्रं तिलैः पूर्णं सयुग्मकम् । धेनुं स्वलङ्कृतां दद्याद्धेमश्रृङ्गीं तु दक्षिणाम् ।

ब्रह्मणे कनकं दद्यान्मूर्त्तिपेभ्यस्तथैव च ॥८८७॥

अश्वत्थपत्रे कृत्वा तु देशिकं कारुकन्तथा । चरुं सम्प्राशयेद्दन्तैरस्पृशन् प्रणवेन तु ॥८८८॥

तां रात्रिं वैष्णवैः सार्द्धं जाग्रत्तिष्ठेदतन्द्रितः ॥८८९॥

---

निजसूक्तेन सहस्रशीर्षादिना ।।८८३॥
मनसैव चिन्तयेत्, न तु पूर्व्ववत् साक्षाद्ब्रह्मशिलादि-न्यासेनेत्यर्थ. ।।८८५।।
सयुग्मकं—वस्त्रद्वयसहितम् ।।८८७।।
यत्नतः ब्रह्मघोषादिना, अच्छेन—निर्म्मलेन ॥८९०॥
सितयुग्मेन—शुक्लवस्त्रद्वयेन ।।८८८॥

---

द्वारा गायत्री होम करें । अनन्तर चक्रादि का होम, लक्ष्म्यादि का होम, ग्रहवृन्द का होम, लोकेशवृन्द का होम, एवं नागगण के निमित्त होम करके नारायण को पूर्णाहुति प्रदान करना विज्ञ व्यक्ति का कर्त्तव्य है। पश्चात् सुवर्ण दक्षिणा विभाग पूर्वक देनी चाहिये । तत्पश्चात् विचक्षण व्यक्ति वेदध्वनि के सहित प्रभु को उठाकर मण्डलाभ्यन्तर में स्थापन पूर्वक पुनर्वार अर्चन करें। पश्चात् गुरुदेव पुरुषसूक्त के प्रत्येक मन्त्र के द्वारा गन्धपुष्पादि द्वारा पूजा, पूर्ववत् सन्निधीकरण एवं सजीवकरण करके प्रणव के सहित निरोध करके सगुण निर्गुण का ध्यान करें ।।८७९-८८४।।

अनन्तर पिण्डिका योजनादि समस्त कार्य्य का सम्पादन मानसिक भावना से करना चाहिये । पश्चात् न्यास समापनपूर्वक पूर्ववत् विधान से देशिक गुरुदेव पूजा करके भूतगण को एवं पार्षदवृन्द को बलि अर्पण करें। अनन्तर सुधीव्यक्ति गुरुदेव को प्रणाम पूर्वक दक्षिणा प्रदान करें। गुरुदेव को स्वर्ण, दो वस्त्र, तिल-पूरित पात्र, स्वर्णश्रृङ्गी सलङ्कारा धेनु प्रदान करना कर्त्तव्य है । ब्रह्मा को एवं मूर्त्तिपगण को सुवर्णदक्षिणा प्रदान करें। अनन्तर अश्वत्थपत्र में चरु स्थान कर प्रणव द्वारा देशिक एवं शिल्पी को इस प्रकार भोजन कराना चाहिये कि जैसे वह दन्तस्पृष्ट न हो ।।८८५-८८८।।

वैष्णववृन्द के सहित मिलित होकर रात्रि जागरण पूर्वक प्रातःकाल में वेदमन्त्र पाठ करते-करते प्रभु को उठाना चाहिये । पश्चात् प्रभु को भद्रपीठ में स्थापन करके निर्म्मल सलिल के द्वारा स्नान कराकर

प्रभातसमये स्नात्वा देवमुत्थाप्य यत्नतः । भद्रपीठे समारोप्य स्नापयेदच्छवारिणा ॥८९०॥

एकाशीतिघटैर्देवं मूलमन्त्रेण सेचयेत् । वैष्णवेन तु कुम्भेन ऐन्द्रादिकलसैस्तथा ॥८९१॥

सेचयेत् फलतोयेन पञ्चगव्यादिना तथा । सुगन्धेन तथाज्येन स्नाप्य गन्धादिनार्च्चयेत् ।
पौरुषेण तु सूक्तेन प्रत्यृचं चन्दनादिभिः ॥८९२॥

सितयुग्मेन संवेष्ट्य धूपयित्वा गृहं नयेत् । ब्रह्मघोषादिना सम्यग्विनिवेश्यार्च्चयेत् सुधीः ॥

दक्षिणां देशिके दद्यात् कनकं छत्रमेव च ।
ब्राह्मणान् भोजयित्वाथ स्वयं भुञ्जीत वाग्यतः ॥८९४॥
सभृत्यबन्धुवर्गं तु दीनानाथांस्तु भोजयेत् ॥८९५॥

अथ चलश्रीमूर्त्तिप्रतिष्ठामाहात्म्यम्

तत्रैव—

यस्य गेहे सदा तिष्ठेत् मूर्त्तिर्देवस्य चक्रिणः ।
न तत्र मारी दौर्भाग्यं न वालक्ष्मीर्न दुष्कृतम् ॥८९६॥

अनेनैव विधानेन संस्कृत्य प्रतिमां हरेः । विष्णुलोकमवाप्नोति पुनरावृत्तिदुर्लभम् ॥८९७॥
इति ।

अधुना चलमूर्त्तेर्हि प्रतिष्ठायाः परो विधिः । लिख्यते पद्धतिश्रेणी-दृष्टितः सम्मतः सताम् ॥८९८

---

यद्यपि मूर्त्तिरिति प्रतिमामिति च सामान्यतो निर्द्देशः, तथापि चलमूर्त्तिप्रतिष्ठाया उक्तत्वादत्रैव लिखितम् ॥८९६-८९७॥

एवं हयशीर्षोक्तश्चल-श्रीमूर्त्ति-प्रतिष्ठाविधिं लिखित्वा इदानीं ततः संक्षिप्तं बौधायनादिशिष्टवर्गसम्मतं सत्साम्प्रदायिक-बहुलपद्धत्यनुसारेण परमपि लिखति—अधुनेति । एवार्थे हि-शब्द, चलमूर्त्तेरेवान्योऽपि प्रतिष्ठाविधिः श्रीकृष्णदेवाचार्य्यसम्मतः । तथा च श्रीकृष्णदेवाचार्य्यपद्धतौ—बौधायनादिसन्मूलारत्रैविक्रमया दिपद्धतीः । वीक्ष्य वक्ष्यामि विष्ण्वादिचलार्च्चास्थापने विधिम् ॥' इति ॥८९८॥

---

मूलमन्त्र पाठ पूर्वक एकाशीति कुम्भ द्वारा प्रभु का अभिषेक करना चाहिये । तत्पश्चात् वैष्णवकलसोदक, ऐन्द्रादिकलसोदक, फलोदक, पञ्चगव्य, एवं सुगन्धयुक्त घृत के द्वारा स्नान कराकर पूजा करनी चाहिये एवं पुरुषसूक्त के प्रति मन्त्र पाठ पूर्वक गन्धादि द्वारा पूजा करनी चाहिये । अनन्तर प्रभु को शुक्लवस्त्रद्वय द्वारा वेष्टन एवं धूप द्वारा धूपित करके घर में लेजाना चाहिये । पश्चात् विचक्षण व्यक्ति, वेदमन्त्र पाठ के सहित सम्यक् प्रकार से स्थापन पूर्वक पूजा करें । अतःपर गुरुदेव को स्वर्ण, एवं छत्र, दक्षिणा प्रदान करे, एवं ब्राह्मण भोजन कराकर स्वयं भी मौनभाव से भोजन करे । तत्पश्चात् भृत्य, बन्धुगण, एवं अनाथ दुःखी समूह को भोजन कराना चाहिये ॥८८९-८९५॥

अथ चलश्रीमूर्त्तिप्रतिष्ठामाहात्म्यम्

हयशीर्षपञ्चरात्र में लिखित है—चक्रपाणि श्रीहरि की मूर्त्ति जिसके गृह में सदा विराजित हैं, वहाँ महामारी का भय, दौर्भाग्य, अलक्ष्मी और पातक विद्यमान नहीं रहते हैं । इस प्रकार यथाविधि श्रीहरि-मूर्त्ति प्रतिष्ठित करने से पुनर्जन्मशून्य वह दुर्लभ श्रीहरि का धाम प्राप्त किया जाता है ॥८९६-८९७॥

सम्प्रति साधुवृन्द सम्मत पद्धति पर्य्यवेक्षण पूर्वक चलमूर्त्ति प्रतिष्ठा की अति उत्तम विधि लिखी जाती है ॥८९८॥

अथ बौधायनाद्युक्तचलश्रीमूर्त्तिप्रतिष्ठाविधिः

स्थिरमूर्त्तिप्रतिष्ठानुसारेणात्रापि वैष्णवैः । प्रतिष्ठाविधिरुन्नेयो विशेषोऽन्यश्च लिख्यते ॥८९९

अथ तत्र मण्डपादिनिर्म्माणविधिः

प्रासादतो दिशि प्राच्यामुदीच्यां वाथ मण्डपम् ।
ऐशान्यां वाचरेत् स्थानेऽदूरेऽङ्गारादिवर्ज्जिते ॥९००॥
दशहस्तं चतुर्द्वारं चतुरस्रं समं शुभम् । चतुस्तोरणसंयुक्तं सपताकञ्च पूर्व्ववत् ॥९०१॥
तस्मिंश्च विधिवत् कुर्य्यात् सयोन्यास्यत्रिमेखलम् ।
आग्नेय्यां कुण्डमाशायां चतुरस्रं करोन्मितम् ॥९०२॥
प्राच्यां वेदीं करोच्छायविस्तारां चतुरस्रिकाम् ।
ऐशान्यां स्थानमेकञ्च देवस्य स्नपनोचितम् ॥९०३॥

---

तत्र च मण्डपनिर्म्माणादिप्रकारविशेषः स्नपनादौ मन्त्रादिकञ्च प्रायः पूर्व्वलिखितस्थिरमूर्त्तिप्रतिष्ठाविधिवद्विज्ञेयमिति लिखति—स्थिरेति ॥८९९॥

प्रासादोऽत्र भगवदावासालयः, तस्मात्, अङ्गारेण आदि-शब्दात् तुषास्थ्यादिना च रहिते, अदूरेऽनतिदूरे अनतिनिकटे चेत्यर्थः । मण्डपमाचरेत् रचयेत् ॥९००॥

पूर्व्ववदिति स्थिरमूर्त्तिप्रतिष्ठायां तोरणपताकास्थापनादिविधिर्यथा पूर्व्वं लिखितोऽस्ति तथैवेत्यर्थः । यद्यपि मण्डपपरिमाणादिकमपि पूर्व्वलिखनाद्विज्ञातं स्यादेव, तथापि तदेव स्मारयतात्र लिखितमशक्तावन्त्यपक्षं चाङ्गीकुर्व्वता किञ्चिद्विशेषं दर्शयता तल्लिखितम् । एवमग्रेऽप्यूह्यम् ॥९०१॥

तस्मिन्मण्डपे योनिरास्यञ्च वक्त्रं तिस्रो मेखलाश्च तैः सहितमाग्नेय्यामाशायां दिशि विधियुक्तं यथा स्यात्तथा कुर्य्यात् । तद्विधिश्च पूर्व्वं दीक्षाविधौ विस्तार्य्य लिखितोऽस्ति । करोन्मितम् एकहस्तपरिमितम् ॥

करः एकहस्तप्रमाण उच्छ्रायो विस्तारश्च यस्यास्ताम् । स्नपनोचितमिति देव-स्नपनस्य तदुपकरणस्थापनस्य चोपयुक्तमित्यर्थः । ९०३॥

---

अथ बौधायनाद्युक्तचलश्रीमूर्त्तिप्रतिष्ठाविधिः

स्थिर मूर्त्तिप्रतिष्ठा को जिस प्रकार विधि वर्णित है, वैष्णववृन्द यहाँ पर उसी विधि को जानें, उसमें जो कुछ विशेष है, उसका वर्णन करते हैं ॥८९९॥

अथ तत्र मण्डपादिनिर्म्माणविधिः

प्रासाद के पूर्व, उत्तर वा ईशानकोण के अदूर में अङ्गारादि वर्जित स्थान में मण्डप निर्म्माण करना चाहिये ॥९००॥

मण्डप पूर्ववत् दशहस्त, चतुर्द्वार, समचतुरस्र, चतुस्तोरण एवं पताका संयुक्त होगा । मण्डप के अग्निकोण में एक कुण्ड प्रस्तुत करना चाहिये । वह योनि और मुखयुक्त, तीन मेखला से युक्त, चतुष्कोण और एक हस्त परिमाण हो। पूर्वदिक् में एक वेदी एवं ईशान में प्रभु के स्नान कराने योग्य स्थान निर्म्माण करे, वेदी एक हस्त उच्च, एक हस्त विस्तृत और चतुरस्र (चौकोन) हो ॥९०१-९०३॥

अथ तत्र मण्डलविधिः

**मण्डपस्य च नैर्ऋत्यां विधिवद्वास्तु मण्डलम् । मध्ये च देवताच्चार्थं सर्व्वतोभद्रमालिखेत् ।।९०४**

**सकर्णिकञ्च तन्मध्ये पद्मं विरचयेत्तथा । स्वस्तिकं चोत्तरे कृत्वा तत्र शय्यां निवेशयेत् ।।९०५**

अथ ब्राह्मणवरणादिविधिः

**यजमानश्च पूर्व्वेद्युः प्रतिष्ठायाः समाचरेत् । पुण्याहवाचनं विप्रैर्मण्डपस्थापनं तथा ।।९०६।।**

वास्तुमण्डलं चैवं पूर्व्वोत्तरगाभिर्नवनवभी रेखाभिश्चतुःषष्टिपद मण्डलं विधाय तत्र बहिश्चतुष्कोणेषु कोणात्तिर्य्यग्रेखा दत्त्वाष्टा द्विपदानि चतुर्दिक्षु चतुर्विंशतिपदानि मध्ये रेखाद्वयमार्ज्जनेन चतुष्पदमेकम्, तथा तत्प्राच्यादि-चतुर्दिक्षु चत्वारि चतुष्पदानि, तच्चतुष्कोणेषु मध्यवर्त्तिरेखाद्वयमार्ज्जनेनाष्टौ द्विपदानि कुर्य्यात् । एवं पञ्चचत्वारिंशद्देवतास्थानानि भवन्ति । देवताश्चैताः—मध्यमचतुष्पदे ब्रह्मा, तत्प्रागादिचतुष्पदेषु क्रमेण आप-सावित्र-जयरुद्राः, कोणस्थेष्वष्टसु द्विपदेषु ईशानकोणादिक्रमेण अर्य्यम-सवितृविवस्वद्विबुधाधिप-मित्र-राजयक्ष्म-पृथ्वीधरापवत्सकाः । तथा च मात्स्ये—'द्वात्रिंशद्वाह्यतः पूज्याः पूज्याश्चान्तस्त्रयोदश', तथा—'ईशानकोणादिषु सुरान् पूजयेच्च विधानतः', तथा—'ईशानादिचतुष्कोण-संस्थितान् पूजयेद्बुधः। आपश्चैवाथ सावित्रो जयो रुद्रस्तथैव च ।। मध्ये चतुष्पदे ब्रह्मा तस्याष्टौ च समीपगाः। अर्य्यमा सविता चैव विवस्वान् विबुधाधिपः ।। मित्रोऽथ राजयक्ष्मा च तथा पृथ्वीधरः क्रमात् । अष्टमश्चापवत्सस्तु परितो ब्रह्मणः स्मृताः ।।' इति । वाह्यद्वात्रिंशत्पदेषु च ईशानादिक्रमेणैव द्वितीयद्विपदतः शिख्यादयो द्वात्रिंशद्देवताः । तथा च तत्रैव—'शिखी चैवाथ पर्ज्जन्यो जयन्तः कुलिशायुधः । सूर्य्यः सत्यो वृषश्चैव आकाशो वायुरेव च ।। पूषा च वितथश्चैव गृहक्षतयमावुभौ । गन्धर्व्वो भृङ्गराजश्च मृगः पितृगणस्तथा ।। दौवारिकोऽथ सुग्रीवः पुष्पदन्तो जलाधिपः असुरः शोषपापौ च रोगोऽहिर्मुख्य एव च । भल्लाटः सोमसर्पौ च अदितिश्च दितिस्तथा ।।' इति 'एवं सर्व्वाः पञ्चचत्वारिंशद्देवता वास्तुमण्डले । तद्वहिरीशानादिक्रमेण तु चकी स्कन्दा विदारी अर्य्यमा पूतना जम्भका पापराक्षसी लिपिच्छा चेत्यष्टौ देवताः' इति । एवमयं चतुःषष्टिपदमण्डलदेवतास्थानविभागो हयशीर्षपञ्चरात्रस्यानुसारी, न तु मात्स्यपुराणस्य। एतच्च सर्व्वमग्रे प्रासादनिर्म्माणेऽवश्यलेख्यत्वादत्र विस्तार्य्य न लिखितं, तत्रैव विशेषतो व्यक्तं भावि । एतच्च वास्तुमण्डलं विविधरङ्गशालिपिष्टपूरितं कार्य्यम् । मण्डप-मध्ये च मण्डलदेवतापूजार्थं सर्व्वतोभद्राख्यं मण्डलं कुर्य्यात् । तच्च सुप्रसिद्धमेव ।।९०४।।

तस्य सर्व्वतोभद्रस्य मध्ये च कर्णिकासहितं पद्मं तथेति विधिवद्विरचयेत् । तन्मण्डलदेवताश्चैताः—मध्ये ब्रह्मा, मण्डप्रान्ते पूर्व्वाद्यष्टदिक्षु क्रमेण इन्द्रादयोऽष्टलोकपालाः, ईशेन्द्राद्यन्तरालाष्टके च वसवो रुद्रा आदित्या अश्विनौ पितरो नागाः स्कन्दो वृषश्चेत्यष्टौ। ईशानादिपद्मदलेष्वष्टसु क्रमेण दक्षो विष्णुर्दुर्गा स्वधाकारो मृत्युरोगः ससमुद्राः सरितो मरुतो गणपतिश्चेत्यष्टौ । पद्मकर्णिकायाश्चाधः पृथिवी, उपरि मेरुः, तदुपरि स्थाप्यदेवता । मण्डलस्य वाह्यतः प्रागादि-दिक्पालानामायुधानि वाहनानि च, तद्वाह्ये च गौतम-भरद्वाज-विश्वामित्र-कश्यप-जमदग्नि-वशिष्ठादय सप्तर्षयः । ततो वहिर्नवग्रहाः, ततश्च वह्न्याद्यष्टसु क्रमेण ऐन्द्री, कौमारी, ब्राह्मी, वाराही, चामुण्डा, वैष्णवी, माहेश्वरी, वैनायकी चेत्यष्टौ शक्तय इति। उत्तरे तत्सर्व्वतोभद्रमण्डलादुत्तरतः स्वस्तिकं मण्डलं च कृत्वा तदुपरि शय्यां स्थापयेत् ।।९०५।।

एवं मण्डलरचनादिकं लिखित्वा पुण्याहवाचनादिपूर्व्वकमाचार्य्यादिवरणं यजमानस्यकृत्यविशेषं लिखति

---

अथ तत्र मण्डलविधिः

मण्डप के नैर्ऋतकोण में यथाविधि वास्तु मण्डप, मध्यस्थल में देवपूजा हेतु सर्वतोभद्रमण्डल तन्मध्ये सर्वाणक पद्म एवं उत्तरदिक् में स्वस्तिक अङ्कन करके उसमें शय्या विन्यास करें ।।९०४-९०५।।

अथ ब्राह्मणवरणादिविधिः

प्रतिष्ठा के पूर्वदिन में ब्राह्मण द्वारा पुण्याहवाचन और मण्डपस्थापन करना ही यजमान का कर्त्तव्य है।।९०६

मण्डपस्य च वायव्यां मातॄर्गन्धादिनार्च्चयेत् । प्रणवादिनमोऽन्तैश्च नामभिर्विधिवद्बुधः ॥९०७

नान्दीश्राद्धं ततः कृत्वा सद्विप्रं वृणुयाद्गुरुम् ।
मधुपर्कादिनाभ्यर्च्च्य दत्त्वा वस्त्रादि शक्तितः ॥९०८॥

तदर्द्धदानाद्ब्रह्माणं पुराणस्तुतिपाठकम् । सूक्तजापकमप्येवं त्रीन् विप्रान् वृणुयात् परान् ॥९०९

तोरणानि ततोऽभ्यर्च्च्य द्वाराण्युत्तरतस्तथा । पूर्व्ववद्वृप्रांश्चतुरो द्वारजापकान् ॥९१०॥

अथ वास्तुदेवपूजादिविधिः

आचार्य्यो मण्डपेऽभ्येत्य प्राणायामान् विधाय च ।
आपोहिष्ठेति दर्भोदैर्यागस्याभ्युक्षयेद्भुवम् ॥९११॥
विकीर्य्य सर्षपान् शुक्लान् रक्षां कृत्वा च मन्त्रतः ।
विधिवत् पूजयेद्वास्तुदेवता वास्तुमण्डले ॥९१२॥

---

—यजमानश्चेति पञ्चभिः । प्रतिष्ठासमयात् पूर्व्वेद्युः पूर्व्वदिवसे विप्रैः कृत्वा पुण्याहवाचनं मण्डपप्रतिष्ठां च सम्यगाचरेत् ॥९०६॥

गन्धेन, आदि-शब्दात् अक्षतपुष्पादिभिश्च मातॄः पूजयेत् । मातृपूजने मन्त्रान् लिखति—प्रणवादीति । मातरश्च षोड़श पूर्व्वमचलमूर्त्तिप्रतिष्ठारम्भे लिखिता एव । प्रयोगः—'ॐ गौर्य्यै नमः' इत्यादि । विधिवदिति, सर्व्वत्रैवाग्रेऽप्यनुवर्त्तनीयम् ॥९०७॥

सद्विप्रं पूर्व्वलिखितलक्षणं ब्राह्मणम् । मधुपर्केण, आदि-शब्दात् आसनपाद्यार्घ्यादिना च सम्पूज्य शक्तितः यथाविभवं वस्त्रादिकं दत्त्वा, आदि-शब्देन भूषणादि । गुरुवरणविधिश्च पूर्व्वमेव लिखितोऽस्ति । अमुकगोत्रः अमुकशर्म्माहम् अमुकगोत्रामुकशर्म्माण त्वां प्रतिष्ठाचार्य्यत्वेन वृणे । स च वृतोऽस्मीति प्रब्रूयादित्यादिरूपः ॥

तथा मधुपर्कादि-पूजापुरःसरं गुरुसम्प्रदानकवस्त्राद्यर्द्धदानेन ब्रह्माणं वृणुयात् । पुराण-स्तुतिपाठक-सूक्त-जापकौ च मधुपर्कादिना तथैवाभ्यर्च्च्य तदर्द्धदानेन यथाविभवं वा वस्त्रादिदानेन वृणुयादित्यादिरूपश्च ॥ ॥९०८-९०९॥

तदनन्तरं च उत्तरत उत्तरमारभ्य 'तोरणाय नमः' इति-क्रमेण तोरणानि, तथा द्वाराणि चत्वारि 'श्रियै नमः' इत्यभ्यर्च्च्य । पूर्व्ववद्यथाशक्ति मधुपर्कवासोऽलङ्कारादिदानेनेत्यर्थः ॥९१०॥

प्रतिष्ठामण्डपे अभ्येत्य, यागस्य भुवं देवपूजास्थलम् ॥९११॥

विधिवदिति, प्रणवादि-नमोऽन्त-नाममन्त्रैः षोड़शोपचारैः प्रत्येकं पूजयेदित्यर्थः ॥९१२॥

---

बुद्धिमान् व्यक्ति मातृकागण का नामोच्चारण पूर्वक उसके आदि में प्रणव 'ॐ' और अन्त में 'नमः' शब्द योग करके मण्डप के वायुकोण में गन्धादि द्वारा उनकी पूजा करे । पश्चात् नान्दीश्राद्ध समापन करके शक्त्यनुसार मधुपर्क एवं वस्त्रादि द्वारा सद्विप्र को गुरु के पद में वरण करना चाहिये । आचार्य्य को जिन सब द्रव्य के द्वारा वरण करे, तदर्ध परिमाण द्रव्य के द्वारा ब्रह्मा, पुराणस्तुतिपाठक एवं सूक्तज्ञापक,—इन तीन जनों को वरण करना चाहिये । अनन्तर उत्तरादि क्रम से तोरणसमूह की और द्वारसमूह की पूजा करके पूर्ववत् चार द्वारजापक ब्राह्मणों को वरण करे ।।९०७-९१०।।

अथ वास्तुदेवपूजादिविधिः

आचार्य्य, मण्डप में उपस्थित होकर प्राणायाम करके 'आपोहिष्ठेति' मन्त्र से देवपूजा के स्थान को कुशोदक के द्वारा प्रोक्षण करें । पश्चात् श्वेत सर्षप विकीरण पूर्वक मन्त्रपाठ करके रक्षाविधान पूर्वक यथा विधि वास्तुमण्डल में वास्तु देवता की पूजा करें ।।९११-९१२।।

अथ तत्र मन्त्रः

देवा आयान्तु, जातुधानास्त्वपयान्तु, विष्णो देवयजनं रक्षस्व ॥९१३॥ इति ।

ईशानादिक्रमेणाथ कुशपुष्पयुताक्षतैः । शिख्यादिदेवताभ्यश्च विशेषवलिमर्पयेत् ॥९१४॥

आगत्य कुण्डपार्श्वे तु होमं कुर्य्याद्यथाविधि ।
तत्रावश्यं प्रतिद्रव्यं होमान्ते प्रतिमां स्पृशेत् ॥९१५॥

अथ स्नपनविधिः

आचार्य्याय वरं दत्त्वा निजशक्त्यनुसारतः ।
विप्रान् गन्धादिनाभ्यर्च्च्य पुण्याहं वाचयेत् पुनः ॥९१६॥
ततश्च यजमानानुमोदितोऽर्च्चां विशोधयन् ।
आचार्य्यः प्रणिपत्यादौ देवं सम्प्रार्थयेदिदम् ॥९१७॥

तदुक्तम्—

स्वागतं देवदेवेश विश्वरूप नमोऽस्तु ते ।
शुद्धेऽपि त्वदधिष्ठाने शुद्धिं कुर्म्मः क्षमस्व माम् ॥९१८॥ इति ।

ततश्च नवपीठोपवेशितां प्रतिमां गुरुः । मृद्भिर्द्वादशकृत्वस्तां संशोध्य क्षालयेज्जलैः ॥९१९॥
पञ्चगव्यैस्तथा पञ्चामृतैस्तन्मन्त्रतो बुधः । संस्नाप्य हविषाभ्यज्य चूर्णैरुद्वर्त्तयेच्छुभैः ॥९२०॥

---

मन्त्रत इति लिखितं, तमेव मन्त्रं लिखति—देवा इत्यादि ॥९१३॥

शिखी वास्तुमण्डपस्येशानकोणार्द्धपदवर्त्ती । तदादि सर्व्वदेवताभ्योऽग्रे लेख्यतत्तद्विहितद्रव्यासम्भवे पुष्पादिभिर्विशेषवलिं दद्यात् ॥९१४॥

यथाविधीति अग्निं प्रतिष्ठाप्यान्वाधाय गोक्षीरे नीरसे चरुं स्थाप्यदेवताकं स्नपयित्वाज्यभागान्ते पलाशोडुम्बराश्वत्थ न्यग्रोधापामार्गसमिद्भिः प्रत्येकमष्टोत्तरशतमष्टोत्तरसहस्रमष्टाविंशतिं वा लोकपालानुद्दिश्य तत्तन्मन्त्रैर्व्याहृतिभिर्वा जुहुयात् । तावत्संख्यकमाज्यहोमं स्थाप्यदेवतालिङ्गकेन मन्त्रेण कृत्वा समित्तिलाज्यानां प्रतिद्रव्यं तेनैव मन्त्रेण दश दशाहुतीर्दत्त्वा अग्निर्यजुर्भिरित्यनुवाकं जप्त्वा स्थाप्यदेवतामन्त्रेणैव चरोर्दशप्राधानाहुतीर्दत्त्वा चरुशेषेण यदस्य कर्म्मण इति स्विष्टकृते जुहुयात् । 'यथाशक्ति स्थाप्यदेवतामन्त्रमावर्त्त्य ब्रह्मविसर्ज्जनान्तं कुर्य्यात्' इति विधिर्ज्ञेयः ॥९१५॥

यजमानकृत्यं लिखति—वरम् आचार्य्यापेक्षितं वस्त्रालङ्कारादि निजशक्त्यनुसारेण दत्त्वा ॥९१६॥

---

अथ तत्र मन्त्रः

"देवतागण आगमन करें । राक्षसगण दूर हों, हे विष्णो ! इस देवयज्ञ की रक्षा कीजिये ।" इस मन्त्र से पूजा करें ॥९१३॥

अनन्तर ईशानकोण से आरम्भ करके क्रमशः कुश, कुसुम, घृत एवं अक्षत द्वारा शिखी प्रभृति देवगणों के निमित्त विशेष बलि प्रदान करें । तत्पश्चात् कुण्डपार्श्व में आगमन पूर्वक विधानानुसार होम करें । वहाँ प्रत्येक द्रव्य का होम करने के पश्चात् प्रतिमा को अवश्य स्पर्श करना चाहिये ॥९१४-९१५॥

अथ स्नपनविधिः

स्वीय सामर्थ्य के अनुसार आचार्य्य को वस्त्र भूषणादि अर्पण पूर्वक गन्धादि द्वारा विप्रगण की पूजा करके पुनर्व्वार स्वस्तिवाचन कराना चाहिये । पश्चात् आचार्य्य, यजमान कर्त्तृक अनुमोदित होकर प्रतिमा

अथ तन्मन्त्राः

पञ्चगव्यस्नपने पयः पृथिव्यामिति, क्षीरादिचतुःस्नपने पूर्व्वदेव, शर्करास्नपने च आयं गौरिति ॥६२१॥

कोष्णोदकेन प्रक्षाल्य सुगन्धेनानुलिप्य च ।
ततः संस्रवकुम्भाद्भिः संस्नाप्य प्रणमेच्च ताम् ॥६२२॥

अभिषिञ्चेदर्च्चितैस्तु चतुष्कुम्भैः सपल्लवैः । समुद्रज्येष्ठा इत्यादि चतुर्मन्त्रैः परैरपि ॥६२३॥

पद्मान्तः स्वस्तिकप्रान्ते पीठे चोडुम्बरे शुभे । अन्यक्षीरद्रुमीये वा श्रीमूर्त्तिमुपवेशयेत् ॥६२४॥

अथाष्टौ स्थापयेत् कुम्भान् अष्टदिक्ष्वम्बुपूरितान् ॥६२५॥

तेष्वाद्ये सङ्गमक्रोड़ोत्खातवल्मीकमृत्तिकाम् । अश्वहस्तिनदीतीरद्वयमृत्स्नाश्च निक्षिपेत् ॥६२६

---

सम्यक् स्रवति जलानि बहुलच्छिद्रतयेति संस्रवः, तादृशकुम्भस्थ जलेन 'शन्नो देवीः' इति मन्त्रेण संस्नाप्य तां प्रतिमां प्रणमेत् ॥६२२॥

अर्च्चितैर्गन्धाक्षतादिभिः पूजितैः, परैः आकलसेषु धावतीत्यादिभिरन्यैश्च कलसलिङ्गेतिमन्त्रैस्तामभिषिञ्चेत् ॥६२३॥

शुभे त्रिहस्तदैर्घ्य-तदर्द्धविस्तारेण यथासम्भवं परिमाणादिना वा सुन्दरे ॥६२४॥

अष्टदिक्षु श्रीमूर्त्तेः प्राच्यादिषु ॥६२५॥

तेषु कुम्भेषु मध्ये य आद्यः प्राचीस्थापितकुम्भस्तस्मिन् सङ्गमादिस्थानसप्तकमृत्तिकां निक्षिपेत् ॥६२६॥

---

को विशुद्ध करें, और नमस्कार करके इस मन्त्र से प्रार्थना करें "हे देवदेवेश ! हे विश्वरूप ! आपका आगमन हो, आपको नमस्कार है । आपका यह अधिष्ठान स्वभावतः शुद्ध होने पर भी मैं इसका शोधन-कार्य्य करता हूँ । अतएव क्षमा कीजिये । अनन्तर गुरुदेव, नूतन पीठोपरि संन्यस्त प्रतिमा को मृत्तिका द्वारा द्वादशवार संशोधन करके जल द्वारा प्रक्षालन करें । पश्चात् मन्त्र से पञ्चगव्य एवं पञ्चामृत द्वारा स्नान कराकर घृत द्वारा म्रक्षित करके विशुद्ध चूर्ण से उद्वर्त्तन (उबटन) करें ॥९१६-९२०॥

अथ तन्मन्त्राः

'पयः पृथिव्यामिति' मन्त्र से पञ्चगव्य द्वारा, पूर्ववत् मन्त्र से दुग्धादि द्रव्य चतुष्टय द्वारा एवं 'आयं गौः' मन्त्र से शर्करा द्वारा स्नान कराना चाहिये । तत्पश्चात किञ्चिदुष्ण जल द्वारा प्रक्षालन पूर्वक सुगन्धानुलेपन पूर्वक झांझारियुक्त कलस के जल द्वारा स्नान कराकर प्रतिमा को नमस्कार करें । पश्चात् गन्धादि द्वारा पूजित सपल्लव कुम्भ चतुष्टयोदक द्वारा 'समुद्रज्येष्ठा' इत्यादि मन्त्र चतुष्टय एवं 'आ कलसेषु धावति' इत्यादि मन्त्रोच्चारण करके अभिषेक करना चाहिये ॥९२१-९२३॥

पद्म में स्वस्तिक प्रान्त में, शुभ कारक पीठ में अथवा अन्यान्य क्षीरिवृक्षोद्भव पीठ में श्रीमूर्त्ति को उपवेशन कराना चाहिये । पश्चात् श्रीमूर्त्ति को पूर्वादि अष्टदिक् में जलपूर्ण कुम्भाष्टक स्थापन करें । तन्मध्ये पूर्वदिकस्थ प्रथम कुम्भ में सङ्गमादि सप्तस्थान की मृत्तिका अर्थात् सङ्गमस्थल, वराहोत्खात एवं वल्मीक मृत्तिका, अश्व एवं गजोत्खात मृत्तिका, नदी के उभयकूल स्थित मृत्तिका प्रदान करें ॥९२४-९२६॥

द्वितीयेऽश्वत्थचूतादिपल्लवाश्मन्तकत्वचम् । अन्येषु च क्रमात् षट्सु पवित्रान् प्रस्रवोदकम् ।
शान्तिवार्य्यथ गन्धोदमक्षतान् कुसुमानि च ॥९२७॥
स्थापयेत् सर्त्विगाचार्य्यस्तैः कुम्भैरष्टमन्त्रतः । आपो हिष्ठेति त्रितयं हिरण्येति चतुष्टयम् ।
तथैव पवमानेत्याद्यनुवाकं परो मनुः ॥९२८॥

अथ वस्त्राद्यर्पणविधिः

अभिवस्त्रेति वस्त्रे द्वे आहते परिधाप्य च । दत्त्वोपवीतं गन्धाद्यैरुपचारैश्च पूजयेत् ॥९२९॥
हिरण्यगर्भ इत्यादीनष्टौ मन्त्रान् जपन् शुभैः । कुर्य्यान्नीराजनं पिष्टमयैर्दीपैरथाष्टभिः ॥९३०॥
गन्धेन चित्रं देवानामित्यर्द्धर्च्चेन लोचने । देवस्योन्मीलयेत् पार्श्वे स्थित्वा स्वर्णशलाकया ।
देवस्य पुरतस्तिष्ठेत्तदानीञ्च न कश्चन ॥९३१॥
अञ्जनेनाञ्जयेन्नेत्रे अञ्जन्ति त्वामिति स्फुटम् । देवस्य त्वेति मध्वाज्यसिताभिः पुनरञ्जयेत् ।
अथादर्शं प्रदर्श्याथ विविधं भोज्यमर्पयेत् ॥९३२॥

अथ स्तुतिवलिदानादि

अथाचार्य्यः कुशासीनः संस्तूयाद्धारयन् कुशान् । देवं पुरुषसूक्तेन प्रत्यृचं प्रणवं पठन् ॥९३३॥

---

अश्वत्थचूतयोः, आदि शब्दार्ज्जुनादीनाञ्च पल्लवान् अश्मन्तकत्वचञ्च निक्षिपेत् । अन्येषु षट्सु कुम्भेषु पवित्रादिषड़्द्रव्याणि क्रमेण निक्षिपेत् ॥९२७॥

तैरष्टभिः कुम्भैः । अष्ट मन्त्रान् एव लिखति—आप इति । हिरण्येति—हिरण्यवर्णाः शुचयः पावका इति ऋक्चतुष्टयम् । पवमानं सुवर्ज्जन इत्यनुवाकश्च ॥९२८॥

यज्ञोपवीतं च अभिवस्त्रेत्यनेनैव मन्त्रेण दत्त्वा ॥९२९॥

सितो शर्करा, मध्वादिभिर्देवस्य त्वेति मन्त्रेण पुनरभ्यञ्जयेन ॥९३२॥

---

द्वितीय कुम्भ में अश्वत्थ चूत एवं अर्जुनादि वृक्षपल्लव एवं अश्मन्तक बल्कल (आबुर की छाल) प्रदान करें। अवशिष्ट छैः कुम्भों में क्रमशः पवित्र प्रस्रवणोकदादि षट् सामग्री प्रदान करें। अनन्तर आचार्य्य, ऋत्विग्वृन्द के सहित मिलित होकर 'आपोहिष्ठेति' मन्त्रत्रय, 'हिरण्येति' इत्यादि मन्त्र चतुष्टय एवं 'पवमानं सुवर्जन' इत्यादि परम अनुवाक् मन्त्र पाठ पूर्वक उक्त कुम्भोदक में शान्तिवारि, गन्धोदक, अक्षत, एवं पुष्प प्रदान करें ॥९२७-९२८॥

अथ वस्त्राद्यर्पणविधिः

'अभिवस्त्रेति' मन्त्र से नूतन वस्त्रद्वय एवं यज्ञोपवीत प्रदानकर गन्धादि उपचार से पूजा करनी चाहिये 'हिरण्यगर्भ' इत्यादि शुभ मन्त्राष्टक जप करके पिष्टमय दीपाष्टक द्वारा आरात्रिक करे। पश्चात् प्रतिमा के वामपार्श्व में संस्थित होकर स्वर्णशलाका द्वारा गन्ध ग्रहण करके 'चित्रं देवानामिति' मन्त्र द्वारा प्रतिमा के नयनद्वय को उन्मीलन करना चाहिये। उस समय किसी को भी प्रभु के पुरोभाग में रखना निषिद्ध है। उसके बाद 'अञ्जन्ति त्वमिति' मन्त्र से प्रभु के नयनयुगल में अञ्जन प्रदान कर 'देवस्य त्वा' मन्त्र से पुनर्वार मधु, घृत एवं शर्करा द्वारा अञ्जित करे। पश्चात् दर्पण प्रदर्शनपूर्वक विविध भोज्य निवेदन करे॥९२९-९३२

अथ स्तुतिवलिदानादि

अनन्तर आचार्य्य कुशासन में उपवेशन करके कुश धारण करके पुरुषसूक्त के प्रत्येक मन्त्र एवं ॐकार पाठ पूर्वक प्रभु की स्तुति करें। तत्पश्चात् वंशपात्र में पञ्चवर्णयुक्त धान्यान्न स्थापन करके विगताचार विप्र

पञ्चवर्णकधान्यान्नं पात्रे संस्थाप्य वैणवे । तेन नीराजयेद्देवं विगताचारविप्रतः ॥६३४॥
तद्धस्तेन बलिं दद्याद्रुद्राय च चतुष्पथे । नमो रुद्रायेति मन्त्रं सध्रुवञ्च स्वयं जपेत् ॥६३५॥
ब्रह्माणञ्च प्रतिष्ठाप्य तन्मन्त्रेण तदादिकाः । उपचारैः षोड़शभिर्यजेन्मण्डलदेवताः ॥६३६॥
स्थाप्यदेवमथावाह्यार्च्चायां तल्लिङ्गमन्त्रतः । कर्णिकायां मण्डलस्य तामर्च्चामुपवेशयेत् ॥६३७
सुप्रतिष्ठो भवेत्यंतां सम्प्रतिष्ठाप्य तत्र च । पुनः समर्च्चयेद्गन्धाद्युपचारैस्तु पञ्चभिः ॥६३८॥
कुण्डान्तिकमथागत्य तिलाज्यैर्जुहुयात् कृती । तद्देवतानां प्रत्येकं नाममन्त्रैर्दशाहुतीः ॥६३९॥

अथाधिवासनविधि

अथ स्वस्तिकवर्त्तिन्यां शय्यायां ब्राह्मणैः सह ।
श्रीमूर्त्तिं प्राङ्मुखं दिव्यास्तरणेषु निवेशयेत् ॥६४०॥

ततः पुरुषसूक्तेनोत्तरनारायणेन च । उपस्थाप्य ततोऽर्च्चायां न्यसेत्तत्त्वानि तत्त्वतः ॥६४१॥
न्यसेत् पुरुषसूक्तञ्च गन्धाद्यैरर्च्चयेत्ततः । शय्यायां स्वापयेद्देव सुखशायी भवेति तम् ॥६४२॥

---

पञ्चवर्ण-धान्यनिष्पन्न क्षिप्रौदनं वैणवे पात्रे निधाय तेनान्नेन देवं निराचारविप्रहस्तेन नीराजयेत् ॥६३४

सध्रुवं प्रणवसहितम्, तथाहि—'ॐ नमो रुद्राय सर्व्वभूताधिपतये दीप्तशूलधरायोमादयिताय विश्वाधिपतये रुद्राय वै नमः, शिवमर्गाहितं कर्म्मास्तु स्वाहा' इति ॥६३५॥

तन्मन्त्रेण ब्रह्मप्रतिष्ठामन्त्रेण ब्रह्मजज्ञानमित्यादिना ब्रह्माणं प्रतिष्ठाप्य । ६३६॥

तल्लिङ्गमन्त्रतः स्थाप्यदेवलिङ्गमन्त्रेण स्थाप्यदेवमर्च्चायां प्रतिमायामावाह्य ॥६३७॥

तत्र कर्णिकायाम् ॥६३८॥

तासां मण्डलदेवतानां नाममन्त्रैः—'ॐ ब्रह्मणे नमः' इत्यादिरूपैः प्रत्येकं तिलाज्यैर्दशाहुतीर्जुहुयात् ॥६३९

तत्त्वतः यथाविधीत्यर्थः । तच्चैवम्—पुरुषात्मने नमः, प्राणात्मने नम इति शिरसि; प्रकृतितत्त्वाय नमः, बुद्धितत्त्वाय नमः, अहङ्कारतत्त्वाय नमः, मनस्तत्त्वाय नम इति हृदि; तथा शब्दतत्त्वाय नम इति शिरसि; स्पर्शतत्त्वाय नम इति त्वचि; रूपतत्त्वाय नम इति हृदि । एवं रस-गन्धश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थ-पृथिव्यप्तेजोवाय्वाकाशाख्यानि तत्त्वानि वस्तिपादकर्णत्वक्चक्षुर्जिह्वाघ्राणशिखासु यथासम्भवं विन्यस्य देहे विन्यसेदिति ॥६४१॥

पुरुषसूक्तन्यासश्चैवम्—अस्य पुरुषसूक्तमन्त्रस्य 'नारायणऋषिः पुरुषो देवता देवस्याङ्गन्यासे विनियोगः' इति सहस्रशीर्षादि स्मृत्वा, आद्यमृग्द्वयमग्रकरयोः, उपरितनं जानुनोः, तदुपरितनं कट्योः, सभूम्याद्यास्तिस्रो नाभिहृदयकण्ठेषु । तदुपरितनमृग्द्वयं बाह्वोस्तदुपरितनमक्ष्णोः, अन्त्यामृचं मस्तके न्यसेदिति ॥६४२॥

---

के द्वारा प्रभु की आरती करावें। उक्त विप्र के द्वारा ही रुद्र के निमित्त चौराई में वलिप्रदान करनी चाहिये। पुनर्बार आचार्य्य स्वयं प्रणवयुक्त 'नमोरुद्राय' मन्त्र का जप करें। अनन्तर ब्रह्मप्रतिष्ठा मन्त्र से ब्रह्मा की प्रतिष्ठा करके षोड़शोपचार से ब्रह्मादि मण्डलदेववृन्द की पूजा करनी चाहिये। देवलिङ्ग मन्त्र पाठ के सहित प्रभु को स्थापन एवं प्रतिमा में आवाहन करके मण्डल के कर्णिकाभ्यन्तर में प्रतिमा को उपवेशन कराना चाहिये। 'सुप्रतिष्ठो भव' इस मन्त्र से प्रतिमा की वहाँ प्रतिष्ठा करके गन्धादि पञ्चोपचार से पुनर्वार पूजा करनी चाहिये। अनन्तर कृती व्यक्ति, कुण्ड सन्निधान में आगमन पूर्वक नाम मन्त्र से प्रतिमण्डल देवता के निमित्त सघृत तिल के द्वारा दश दश आहुति प्रदान करें। ६३३-६३९॥

अथाधिवासनविधिः

अनन्तर ब्राह्मणवृन्द के सहित मिलित होकर श्रीमूर्त्ति को पूर्वाभिमुख करके स्वस्तिक मध्यस्थ शय्या

अन्तराले न गन्तव्यं कैश्चिन्मण्डलशय्ययोः ।
निषिध्यैवं देवताभ्यो वलिं विधिवदर्पयेत् ॥६४३॥
नैवारिकचरुस्थालीमानीय शयनस्थले । दिग्वलिं चरुशेषेण वितरेद्विधिवद्बुधः ॥६४४॥
कृत्वाधिवासनं त्वेवं गीतवाद्यादिभिः शुभैः ।
सोत्साहं सोत्सवन्ताश्च रजनीमतिवाहयेत् । ६४५॥

अथोत्थापन-विधिः

अरुणोदयकाले त्वुत्तिष्ठ ब्रह्मणस्पते । मन्त्रेणानेन वाद्याद्यैर्देवमुत्थापयेत्ततः ॥६४६॥
स्तुत्वा पुरुषसूक्तेनोत्तरनारायणेन च । सघृतव्रीहिणा कुण्डे विधिवच्छ्रपयेच्चरुम् ॥६४७॥
ततश्चाज्येनाभिघार्य्य जुहुयान्नाममन्त्रतः । दशाहुतीः स्थाप्यदेवमन्त्रतो हविषा दश ॥६४८॥
अवदानानि हुत्वा च चरुशेषेण मन्त्रतः । पूर्णाहुतिञ्च जुहुयात्तन्मन्त्रद्वयतो बुधः ॥६४९॥

---

मण्डलशय्ययोरन्तराले मध्ये कैश्चिन्न गन्तव्यमित्येवं निषेधं कृत्वा, विधिवदिति क्षीरौदनं ब्रह्मणे, घृतान्नमुदकाभिघारितमिन्द्राय, आज्यौदनमग्नये, माषान्नं यमाय, कृष्णव्रीह्यन्नं पुराणेन घृतेन निर्ऋतये, नवनीतौदनं वरुणाय, यवौदनं वायवे, प्रैयङ्गवं सोमाय, गामीशाय वलिं दद्यादिति ज्ञेयम् ॥६४३॥

उत्तिष्ठ ब्रह्मणस्पते इत्यनेन मन्त्रेण ॥६४६॥

नाममन्त्रेण दशाहुतीः स्थाप्यदेवमन्त्रेण च घृतेन दशाहुतीर्जुहुयात् ॥६४८॥

चरुशेषेण मन्त्रतोऽवदानानि कृत्वा । तन्मन्त्रश्चायम्—'अग्नये स्वाहा, सोमाय स्वाहा, धन्वन्तरये कुह्वै अनुमत्यै प्रजापतये विश्वेभ्यो देवेभ्यः, ॐ सर्व्वेभ्यो देवेभ्यः, ॐ भूर्भुवः स्वः अग्नये स्विष्टकृते स्वाहा' इति । तन्मन्त्रद्वयतः पूर्णाहुतिहवनमन्त्राभ्यां सप्त ते अग्ने पुनस्त्वामित्येताभ्यां, बुध इति तत्तत्प्रकारं तत्तन्मन्त्रांश्च जानातीति तद्विशेषलिखनपरिश्रमेण किमिति भावः । एवं सर्व्वत्रैव बोद्धव्यम् ॥६४९॥

---

में दिव्य अस्तरणोपरि उपवेशन कराना चाहिये । एवं पुरुषसूक्त, उत्तर नारायण सूक्त पाठ पूर्वक प्रभु को उपस्थान पूर्वक यथाविधि तत्त्व न्यास करे । पश्चात् पुरुषसूक्त न्यास के बाद गन्धादि द्वारा पूजा करके 'सुखशायी भव' मन्त्र से प्रभु को शयन करावे । पश्चात् 'मण्डल एवं शय्या के अन्तराल में कोई न जाय' इस वाक्य से निवारण पूर्वक विधानानुसार देवगण को वलि अर्पण करे । शय्या के निकट में नैवारिक (नैवार की) चरुस्थाली लाकर चरुशेष द्वारा यथाविधि दिग्वलि अर्पण करे । इस प्रकार अधिवासन समापन करके उत्साह के सहित शुभ गीत-वाद्यादि उत्सव सहित रात्रि अतिवाहित करनी चाहिये ॥६४०-६४५॥

अथोत्थापन विधिः

'उत्तिष्ठ ब्रह्मणस्पते' इस मन्त्र से वाद्यादि के सहित अरुणोदयकाल में प्रभु को उत्थापित करना चाहिये, पश्चात् पुरुषसूक्त एवं उत्तरायण मन्त्र से स्तुतिवाद करके घृत मिश्रित व्रीहि द्वारा कुण्ड में यथाविधि चरु पाक करे । अनन्तर घृत चरु द्वारा चरु का अभिघारण पूर्वक नाम मन्त्र से दशधा होम करके देव मन्त्र से घृत द्वारा तद्रूप आहुति प्रदान करे । पश्चात् मन्त्र पाठ पूर्वक चरुशेष द्वारा अवदान होम करके 'सप्ततेअग्ने' एवं 'पुनस्त्वामित्यादि' मन्त्रद्वय द्वारा पूर्णाहुति प्रदान करना बुद्धिमान् व्यक्ति का कर्त्तव्य है ॥६४६-६४९॥

ततो दत्त्वा धेनुमुख्यां शक्त्याचार्य्याय दक्षिणाम् ।
मेरोरभिमुखं वेद्यां देवं कुर्य्याद्दिनोदये ॥६५०॥
ओषधीरिति मन्त्रेण ततो देवाय दर्शयेत् । सर्व्वौषधिपुष्पमूलफलानि विविधानि च ॥६५१॥
ताम्रपात्रेऽथ मूलेन शतवाराभिमन्त्रितम् । शान्त्यम्बु गुरुरादाय सिञ्चेद्देवस्य मस्तके ॥६५२
विश्वतश्चक्षुरित्येतमुपस्थाप्य प्रकल्पयेत् ।
देवाधो ध्यानतो ब्रह्मशिलां रत्नाष्टकान्वितम् ॥६५३॥
अथ दर्भेपूपविष्टो धृतदर्भः कृताञ्जलिः । ब्रह्मणे नम इत्यादि मन्त्रं सप्रणवं जपेत् ॥६५४॥
ततोऽम्भःपूरितं कुम्भं क्षिप्तसर्व्वौषधिं नवम् ।
अभ्यर्च्च्य यजमानस्य पुरतः स्थापयेद्गुरुः ॥६५५॥
हस्तं कुम्भमुखे न्यस्य वारानष्टौ च विंशतिम् ।
तत्तोयमभिमन्त्र्यास्मिंस्तीर्थान्यावाहयेत्ततः ॥६५६॥
तेनाभिषिञ्चेद्देवाग्रे यजमानं सहर्त्विजः । इमा आपः शिवतमा इत्यादिमनुभिर्गुरुः ॥६५७॥
सुमुहूर्त्ते कृतन्यासो जप्त्वा मूलमनुं ततः । भगवन् प्रतितिष्ठेति मनस्युच्चारयन् मुहुः ॥६५८॥

---

दिनोदये सूर्य्ये उदिते सति ॥६५०॥

अथानन्तरं ताम्रपात्रे स्थापितदेवतामूलमन्त्रेण शतवारानभिमन्त्रितं शान्तिकलसतोयमादायाचार्य्यो मूलमन्त्रेणैवाभिषेकं कुर्य्यात् ॥६५२॥

एतं देवमुपस्थाय, वज्रमौक्तिक-वैदूर्य्य-शङ्ख-स्फटिक-पुष्परागेन्द्रनील-महानीलेति रत्नाष्टकोपेतां ब्रह्मशिलां ध्यानेन देवस्याधस्तात् प्रकल्पयेत् ॥६५३॥

'ॐ ब्रह्मणे नमो विष्णवे नमो रुद्राय नमः । एवमिन्द्राय अग्नये यमाय निर्ऋतये वरुणाय वायवे सोमाय ईशानाय वसुभ्यो रुद्रेभ्य आदित्येभ्योऽश्विभ्याम्, मरुद्भ्यः कुवेराय गङ्गादिभ्यो महानदीभ्योऽग्नीसोमाभ्यामिन्द्राग्नीभ्यां, द्यावापृथिवीभ्यां धन्वन्तरये सर्व्वेशाय विश्वेभ्यो देवेभ्यो ब्रह्मणे नमः' इति मन्त्रं जपेत् ॥६५४

अभ्यर्च्च्य कुम्भमेव गन्धाक्षतादिना सम्पूज्य ॥६५५॥

---

अनन्तर शक्त्यनुसार आचार्य्य को एक उत्तम हेनु दान करके सूर्य्योदय काल में वेदी में प्रभु को मेरु के अभिमुख में रखना चाहिये । अतःपर प्रभु को 'ओषधीः' इस मन्त्र से सर्वौषधि, विविध पुष्प, मूल एवं फल प्रदर्शन करे । पश्चात् गुरुदेव ताम्रपात्र में प्रभु को स्थापन पूर्वक मूलमन्त्र से शतधाभिमन्त्रित शान्तिजल द्वारा मूलमन्त्र पाठ पूर्वक प्रभु के शिरोदेश को अभिषिक्त करें ॥६५०-६५२॥

तत्पश्चात् 'विश्वतश्चक्षुरिति' मन्त्र से प्रभु को उपस्थान पूर्वक ध्यान करके प्रभु के अधोदेश में अष्टरत्न समन्वित ब्रह्मशिला स्थापन करें । पश्चात् कुशोपरि समासीन होकर कुशधारण करके करपुट में सप्रणव 'ब्रह्मणे नमः' इत्यादि मन्त्र जप करें ॥६५३-६५४॥

अनन्तर गुरुदेव, सर्वौषधि समन्वित जलपूर्ण कुम्भ के द्वारा गन्धाक्षतादि द्वारा पूजा करके उसको यजमान के सम्मुख में स्थापन करें । अतःपर कुम्भ के मुख में हस्त स्थापन करके अष्टविंशति वार कुम्भ के जल मन्त्राभिमन्त्रित करके उसमें तीर्थसमूह का आवाहन करना चाहिये । एवं गुरुदेव ऋत्विग्वृन्द के सहित मिलित होकर तद्द्वारा 'इमा आपः शिवतमा' इत्यादि मन्त्र से प्रभु के सम्मुख में यजमान को

कुसुमाञ्जलिना गीतवाद्यमङ्गलघोषतः । देवं मूर्त्तौ प्रतिष्ठाप्य तां च स्पृष्ट्वा जपेदृचम् ॥९५९॥
ध्रुवा द्यौरिति तं चोपतिष्ठेत् पुरुषसूक्तत: ।
यजमानः सभार्य्योऽथ वितरेत् कुसुमाञ्जलिम् ॥९६०॥

तत्र मन्त्रः

स्वागतं देवदेवेश मद्भाग्यात् त्वमिहागतः । प्राकृतत्वमदृष्ट्वा मां बालवत् प्रतिपालय ॥९६१॥

इति ।

शान्तिकुम्भाम्भसा देवं गुरुः पञ्चामृतैरपि । अभिषिच्य स्नापयेत्तं रत्नपुष्पकुशाम्बुना ॥९६२
सच्चिदानन्दमित्यादि-मन्त्रेण कुसुमाञ्जलौ । परिभाव्यागतं देवं न्यसेत् प्रतिकृतौ ततः ॥९६३॥
निरुध्य प्रणवेनाथ प्रादुर्भूतं विचिन्त्य तम् । स्पृष्ट्वाङ्घ्रिनाभिमस्तेषु इहैवैषीति त्रिर्जपेत् ॥९६४
स्वस्वमन्त्रैः परीवारदेवताः पूर्व्ववद्बुधः । प्रतिष्ठापयेदर्च्चासु श्रीमूर्त्तौ वा विचिन्तयेत् ॥९६५
सकलीकृत्य देवञ्च मूलमन्त्रेण पूजयेत् । उपचारैः षोड़शभिः परिवारान्वितं ततः ॥९६६॥
अष्टोत्तरशतं मूलमन्त्रमावर्त्य शक्तितः । प्रणम्य दण्डवद्देवं ब्राह्मणान् स्वस्ति वाचयेत् ॥९६७

---

ताञ्च मूर्त्तिं स्पृष्ट्वा 'ध्रुवा द्यौः' इत्यृचं जपेत् । अथ तञ्च देवं पुरुषसूक्तेनोपतिष्ठेत, भक्त्या स्तुवीत ॥९५९
सच्चिदानन्दं ब्रह्मैव भक्तानुग्रहाय गृहीतविग्रहं करचरणाद्यवयविनं शङ्खचक्रगदाद्यायुधवन्तं निजवाहनाद्युपेतं निजहृत्कमलमध्येऽवस्थितं सर्व्वलोकसाक्षिणमणीयांसं 'परमेष्ठ्यसि परमां मां श्रियं गमय' इति मन्त्रेण मन्त्रेण कुसुमयुक्ताञ्जलावागतं परिभाव्य प्रतिकृतौ श्रीमूर्त्तौ विन्यसेत ॥९६३॥

अर्च्चासु तत्तत्प्रतिमासु प्रतिष्ठापयेत्तदभावे च श्रीमूर्त्तौ मुख्यभगवत्प्रतिमायामेव ताः सर्व्वाः विचिन्तयेत्। शक्तितः यथाशक्ति देवं दण्डवत् प्रणम्य यजमानार्थं स्वस्ति वाचयेत् ॥९६७॥

---

अभिषिक्त करें। तत्पश्चात् सुमुहूर्त्त में न्यास समापन के अनन्तर मूलमन्त्र जप करके मन ही मन पुनः पुनः 'भगवन् प्रतिष्ठित' यह मन्त्र पाठ करें। गीत-वाद्य के सहित पुष्पाञ्जलि लेकर प्रतिमा में प्रभु की प्रतिष्ठा करके देवमूर्त्ति को स्पर्श करके पुरुषसूक्त के सहित 'ध्रुव द्यौः' मन्त्र जप करना चाहिये। अनन्तर सहधर्म्मिणी के सहित एकत्र होकर पुष्पाञ्जलि अर्पण करना यजमान के पक्ष में कर्त्तव्य है ॥९५५-९६०॥

तत्र मन्त्रः

पुष्पाञ्जलि प्रदान का मन्त्र —'हे देवेश ! आपका आगमन सुखपूर्वक हुआ ? मेरे सौभाग्य से ही इस स्थान में आपका शुभागमन हुआ है। मुझको प्राकृत मनुष्यदृष्टि से न देखकर अपनी सन्तान के समान जानकर प्रतिपालन कीजिये' इस मन्त्र से पुष्पाञ्जलि प्रदान करें ॥९६१॥

तत्पश्चात् गुरुदेव, शान्तिकुम्भजल एवं पञ्चामृत द्वारा प्रभु का अभिषेक सम्पन्न करके रत्नोदक, पुष्पोदक, एवं कुशोदक द्वारा प्रभु को स्नान करावें। पश्चात् 'सच्चिदानन्दमित्यादि' मन्त्र पुष्पाञ्जलि में प्रभु की स्वागत चिन्ता करके प्रतिमा में न्यास करें ॥९६२-९६३॥

अनन्तर प्रभु को समागत जानकर प्रणव के द्वारा निरोधपूर्वक पद, नाभि, शिरोदेश को स्पर्श करके 'इहैवैषीति' मन्त्र का जप बारत्रय करना चाहिये। विज्ञव्यक्ति, पूर्ववत् देवपरिवारवर्ग को प्रतिमा में किंवा भगवन्मूर्त्ति में चिन्ता करके निज निज मन्त्र द्वारा प्रतिष्ठा करें। पश्चात् सकलीकरण पूर्वक षोड़शोपचार द्वारा मूलमन्त्र से सपरिकर देवता की पूजा करनी चाहिये। पश्चात् यथाशक्ति अष्टोत्तरशत मूलमन्त्र जप एवं दण्डवत् प्रणाम करके ब्राह्मणगण द्वारा स्वस्तिवाचन करावें ॥९६४-९६७॥

अथाचार्य्यादिसम्माननम्

यजमानस्ततो दद्यादाचार्य्याय तु दक्षिणाम् । गवां शतं तदर्द्धं वा गामेकां वाल्यशक्तितः ॥९६८

दद्यात्तदर्द्धमृत्विग्भ्यो जापिभ्यश्च तदर्द्धकम् । अन्येभ्यश्च यथाशक्ति विविधं दानमाचरेत् ॥९६९

ततो गुरुर्हृष्टमनाः सर्व्वकामितलब्धये । सुक्षणे यजमानाङ्के श्रीमूर्त्ति तां समर्पयेत् ॥९७०॥

ततः सर्व्वं पताकादि-मण्डपस्थं समर्प्य च ।

आचार्य्याय नमस्कृत्य शक्त्या विप्रांश्च भोजयेत् ॥९७१॥

अथ प्रतिष्ठाफलम्

उक्तञ्च बोधायनेन —

एवं कुर्व्वन् प्रतिष्ठाञ्च यज्ञानां फलमाप्नुयात् ।

दीर्घायुर्लब्धलक्ष्मीको वसेत् स्वर्गे चिरं सुखी ॥९७२॥

मर्त्यलोके च जायेत सर्व्वकामसमृद्धिमान् । ततोऽक्षयसुखे लोके वैकुण्ठे रमते सदा ॥९७३॥

अथैकाध्वरमार्गेण चलार्च्चास्थापने विधिः । संक्षिप्तो लिख्यते बौधायनाद्युक्तानुसारतः ॥९७४

अथैकाध्वरप्रतिष्ठाविधिः

कुण्डमण्डपवेदीनां नात्रापेक्षास्ति तादृशी ॥९७५॥

यजमानः पुण्यकाले पुण्यदेशे कृतक्रियः । स्वस्तिवाचनपूर्व्वन्तु नान्दीश्राद्धं समाचरेत् ॥९७६

---

दक्षिणामेव लिखति — गवामिति । अल्पशक्तित इति, पञ्चाशत्स्वशक्तौ पञ्चविंशतिं, तत्र चाशक्तौ द्वादश, अत्राप्यशक्तौ तिस्रः, अत्यन्ताशक्तौ चैकामेवेत्यर्थः ॥९६८॥

तां प्रतिष्ठितां चलां श्रीमूर्त्ति यजमानस्य अङ्के क्रोड़े समर्पयेदिति प्रायश्चलश्रीमूर्त्तेर्गृहस्थापनेन अल्प-परिमाणाद्यपेक्षया, किंवा यजमानस्य भावविशेषयजननाभिप्रायेणेति दिक् ॥९७०॥

तादृशी पूर्व्ववदत्रापेक्षा नास्ति, ताः कृता अकृता वेत्याग्रहो नास्तीत्यर्थः ।, कृताः क्रिया नित्यकर्म्माणि येन ॥९७५-९७६॥

---

अथाचार्य्यादिसम्माननम्

अनन्तर शक्त्यनुसार आचार्य्य को एकशत्, पञ्चाशत् संख्यक वा एक धेनु दान करना यजमान का कर्त्तव्य है । ऋत्विगवर्ग को आचार्य्य से अर्द्ध एवं जापकसमूह को ऋत्विगवर्ग से आधी दक्षिणा देवे, और अपरापर व्यक्तियों को अनेक प्रकार दान देना कर्त्तव्य है ॥९६८-९६९॥

पश्चात् श्रीगुरुदेव, प्रफुल्लमानस से निखिल कामना सिद्धि हेतु शुभक्षण में यजमान के क्रोड़देश में श्रीमूर्त्ति को प्रदान करें । तत्पश्चात् आचार्य्य को मण्डपस्थित पताकादि निखिल वस्तु प्रदान पूर्वक प्रणाम करके शक्त्यनुसार विप्र को भोजन कराना यजमान का कर्त्तव्य है ॥९७०-९७१॥

अथ प्रतिष्ठाफलम्

बौधायन ने कहा है— इस रीति से प्रतिष्ठा करने पर, यावतीय यज्ञफल, दीर्घायुः और श्री प्राप्त की जा सकती है । एवं चिरदिन सुरलोक में वास कर सकता है । पश्चात् मर्त्यलोक में जन्म ग्रहण करके सर्वकाम सम्पन्न एवं समृद्धिमान् होकर अवशेष अक्षय आनन्दप्रद वैकुण्ठधाम में सदा विहार करता है ॥९७२-९७३॥ अतःपर बौधायनाद्युक्त विधानानुसार एकाध्वरमार्ग में चल-प्रतिमा की प्रतिष्ठा-विधि कही जाती है ॥९७४

अथैकाध्वरप्रतिष्ठाविधिः

इस प्रतिष्ठा कार्य्य में कुण्ड, मण्डप वा वेदी निर्म्माण का प्रयोजन उस प्रकार नहीं है । पवित्र समय में

आचार्य्यमेकं वृणुयान्नर्त्विगादींश्च कांश्चन ।
विदध्यात् सर्व्वमाचार्य्ये इत्येकाध्वरिको विधिः ॥९७७॥
आचार्य्यो यजमानानुज्ञया सङ्कल्पमाचरेत् । स्थण्डिलेऽग्निं प्रतिष्ठाप्य व्रीहिना श्रपयेच्चरुम् ॥९७८
आज्यभागान्तमाचार्य्यो मूर्त्ति वाराष्टकं मुदा ।
स्नापयेत् पूर्व्ववत् पञ्चगव्यैः पञ्चामृतैरपि ॥९७९॥
अष्टभिश्चाभिषिञ्चेत्तामापो हिष्ठेति मन्त्रतः । कुम्भैः सदूर्व्वासिद्धार्थपञ्चपल्लवतोयकैः ॥९८०
अभ्यच्चर्य वस्त्रगन्धाद्यैरर्च्चान्तां नाममन्त्रतः । सर्व्वतोभद्रमध्यस्थ-भद्रपीठे निवेशयेत् ॥९८१॥
तत्प्रागाद्यष्टदिक्ष्वष्टौ सगन्धाक्षतपल्लवान् । कुम्भान् जलभृतान्न्यसेद्दीपान् प्रज्वालयेत्तथा ॥९८२
नेत्रे च प्रागवदुन्मील्य मधुनाक्तं प्रदाय च । चित्रान्नवलिमात्मेष्टदेवमाहात्म्यकं स्मरेत् ॥९८३
स्तुत्वा पुरुषसूक्तेन परिपूज्याङ्गदेवताः । प्रत्येकं जुहुयात् साष्टशतन्तु समिदादिभिः ॥९८४॥
एकैकद्रव्यहोमान्ते स्पृशेद्देवञ्च पूर्व्ववत् । क्षिपेदाहुतिसङ्घातं न्यस्तेऽग्न्युत्तरतो घटे ॥९८५॥
ततः पूर्णाहुतिं हुत्वा होमशेषं समापयेत् । ततः कृताङ्गन्यासः सन् देवं हृदि विचिन्तयेत् ॥९८६

---

आचार्य्यमेवैकं वृणुयात्, न त्वन्यान् कांश्चन वृणुयात् ॥९७७॥
दूर्व्वादिसहितैरष्टाभिः कुम्भैस्तां श्रीमूर्त्तिमभिषिञ्चेत् स्नापयेत् ॥९८०॥
नाममन्त्रेणाभ्यर्च्च्य सर्व्वतोभद्रमण्डलमध्यवर्त्तिनि भद्रपीठे स्थापयेत् ॥९८१॥
तथैवाष्टौ दीपान् प्रज्वालयेत् ॥९८२॥
चित्रान्नबलिं प्रदाय च ।९८३॥
समिदादिभिः – समिदाज्यचरुतिलैः ॥९८४॥
अग्नेरुत्तरतो न्यस्ते पुरा स्थापिते, आहुतिसङ्घातं पूर्व्वदेव निक्षिपेत् ।९८५॥

---

पवित्र स्थान में नित्य कर्म समापन पूर्वक स्वस्तिक वाचन पूर्वक वृद्धिश्राद्ध (नान्दीश्राद्ध) करना यजमान के पक्ष में कर्त्तव्य है। तत्पश्चात् अन्यान्य ऋत्विग्वरण न करके केवलमात्र एकजन आचार्य्य को वरण करना चाहिये। एवं उनको यावतीय कार्य्यभार अर्पण करना चाहिये। यही एकाध्वर प्रतिष्ठा विधि है। ॥९७५-९७७॥

यजमान की अनुज्ञा से आचार्य्य सङ्कल्पपूर्वक स्थण्डिल में अग्नि स्थापन करके व्रीहि द्वारा उस स्थण्डिल में चरु प्रस्तुत करें। पश्चात् आचार्य्य सानन्द से पूर्ववत् पञ्चगव्य एवं पञ्चामृत द्वारा आज्यभाग के बाद अष्टवार मूर्त्ति को स्नान करावें। तत्पश्चात् दूर्वा, सिद्धार्थ एवं पञ्चपल्लव समन्वित कुम्भाष्टक जल द्वारा 'आपोहिष्ठेति' मन्त्र से प्रतिमा को अभिषिक्त करें। पश्चात् वस्त्र गन्धादि द्वारा नाम मन्त्र से पूजा करके सर्वतोभद्रमण्डल के मध्यस्थ भद्रपीठ में प्रतिमूर्त्ति स्थापन करें ॥९७८-९८१॥

तत्पश्चात् गन्धाक्षत पल्लवविशिष्ट जलपूर्ण कुम्भाष्टक को पूर्वादि अष्टदिक् में स्थापन करके अष्ट प्रदीप प्रज्वालित करें। अनन्तर नयनद्वय उन्मीलन करके मधु समन्वित विचित्र अन्न द्वारा बलि अर्पण पूर्वक निजेष्टदेव माहात्म्य स्मरण करना कर्त्तव्य है। पश्चात् पुरुषसूक्त पाठकरके स्तुति एवं अङ्गदेवतावृन्द की पूजा करके प्रत्येक के निमित्त घृत चरु एवं तिल के सहित समिध द्वारा अष्टशत आहुति प्रदान करें ॥९८२-९८४

प्रत्येक द्रव्य द्वारा होम करके पूर्ववत् देवता को स्पर्श करना चाहिये। एवं अग्नि को उत्तरदिक् में स्थापित कुम्भ में आहुतिशेष प्रक्षेप करना कर्त्तव्य है। पश्चात् पूर्णाहुति प्रदान करके होम समाप्त करे।

मूलमुच्चारयन्मन्त्रं देवं हृत्स्थश्च सुक्षणे । कुसुमेन प्रतिष्ठाप्य श्रीमूर्त्तौ स्थापयेदथ ॥९८७॥
ध्रुवसूक्तैः प्रतिष्ठाप्य सुप्रतिष्ठो भवेति तम् । प्रणवेन निरुध्येष्टं सम्प्रार्थ्य स्तुतिमाचररेत् ॥९८८
अथाग्रोदककुम्भस्याभिमन्त्रणपुरःसरम् । मूलेनाचमनीयान्तानासनादीन् समर्पयेत् ॥९८९॥
संस्नाप्याथ कृतन्यासं देवं पञ्चामृतैः सुखम् । सम्पातकलसोदेन विशुद्धाम्नोदकेन च ॥९९०॥
शङ्खार्पितेन संस्नाप्य तन्मन्त्रैर्वारसप्तकम् । वस्त्रालङ्कारगन्धादीनुपचारान् प्रकल्पयेत् ॥९९१॥
नैवेद्यानि विचित्राणि पुरुषाहारसम्मितम् । सघृतं शर्करोपेतं पायसं वा निवेदयेत् ॥९९२॥

महानीराजनं कृत्वा प्रक्षिप्य कुसुमाञ्जलिम् ।
आचार्य्यो यजमानाढ्यः शक्त्या वन्देत दण्डवत् ॥९९३॥
दत्त्वा पुष्पाञ्जलिं कृत्वा न्यासं प्रार्थ्याप्यनेकशः ।
पुनः पुष्पाञ्जलिं दत्त्वा स्वस्मिन्नन्यासं समाचरेत् ॥९९४॥

देवपार्श्वस्थकलसैरद्भिः सेचनमन्त्रतः । कुर्व्वीत यजमानस्य विप्रोपेतोऽभिषेचनम् ॥९९५॥

---

इष्टं निजवाञ्छितं सम्यक् प्रार्थ्य पुरुषसूक्तादिना स्तुवीत ॥९८८॥

आसनम्, आदि-शब्देन आवाहन-पाद्यार्घ्यमधुपर्काचमनीयानि ॥९८९॥

तन्मन्त्रैरिति, 'इमा आपः शिवतमाः' इति, सम्पातकलसोदकेन तन्मूलमन्त्रेण च शुद्धाम्नोदकेन वारसप्तकं सप्तकृत्वः संस्नाप्य ॥९९१॥

प्रक्षिप्य देवस्य पादयोर्विकीर्य्य ॥९९३॥

अनेकशः बहुधा, शरणागतोऽयमस्य यजमानस्य कुले सर्व्वदा सानुग्रहदृष्टिर्भवेत्यादिकं प्रार्थ्य । अपि-शब्दः समुच्चये, न्यासं स्वस्मिन् कुर्य्यादित्यनेन पूर्व्वन्तु देवे न्यासं कृत्वेति ज्ञेयम् ॥९९४॥

विप्रोपेतः—ब्राह्मणैः सहितः ॥९९५॥

---

तत्पश्चात् अङ्गन्यास पूर्वक हृदय-मन्दिर में देवता का चिन्तन करना चाहिये । अनन्तर शुभ क्षण में मूल-मन्त्र पाठ पूर्वक हृत्प्रदेशस्थ देवता को पुष्प द्वारा प्रतिष्ठा करके श्रीमूर्त्ति को स्थापन करे । पश्चात् ध्रुवसूक्त द्वारा प्रतिष्ठा करके एवं यथाविधि निज अभीप्सित प्रार्थना करके पुरुषसूक्तादि के द्वारा स्तुति करे । तत्पश्चात् प्रथम कुम्भजल अभिमन्त्रण पूर्वक आसनादि आचमनीय पर्य्यन्त समस्त मूलमन्त्र से निवेदन करे । ॥९८५-९८९॥

अनन्तर मुख में न्यास समापन पूर्वक पञ्चामृत द्वारा प्रभु को स्नान कराकर 'इमा आपः शिव तमाः' इस मन्त्र से शङ्ख जल सम्पात, कुम्भोदक एवं पवित्राम्नोदक द्वारा सप्तधा स्नान कराकर वस्त्र-भूषण गन्धादि उपचार, विचित्र नैवेद्य किंवा एक व्यक्ति के भोजन योग्य घृत शर्करा समन्वित पायस निवेदन करना चाहिये ॥९९०-९९२॥

तत्पश्चात् आचार्य्य, महानीराजन करके देवता के चरण कमलों में पुष्पाञ्जलि प्रदान पूर्वक यजमान के सहित एकत्र होकर यथाशक्ति दण्डवत् प्रणाम करें ॥९९३॥

इस प्रकार पुष्पाञ्जलि अर्पण, न्यास एवं 'शरणागतोऽयमस्य यजमानस्य कुले सर्वदा सानुग्रहदृष्टिर्भव' इत्यादि प्रार्थना करके पुनर्वार पुष्पाञ्जलि प्रदान करें । तत्पश्चात् देवता में न्यासपूर्वक अपने में भी न्यास करना चाहिये । पश्चात् आचार्य्य, विप्रवृन्द के सहित मिलित होकर सेचन मन्त्र उच्चारण करके देवपार्श्व-स्थित कुम्भजल द्वारा यजमान को अभिषिक्त करें ॥९९४-९९५॥

आचार्य्याय ततो दद्याद्यजमानस्तु दक्षिणाम् । वस्त्रालङ्कारगोभूमि-स्वर्णाद्यां निजशक्तितः ॥९९६

यदि वा यजमानः स्यादाचार्य्यः स्वयमेव सः । तदा चाचार्य्यवरणं दक्षिणादानमस्ति न ॥९९७

यजमानः समं विप्रैः पुण्याहं वाचयेत् स्वयम् ।
अभिषेकश्च कुर्व्वीत तांस्तु सम्पूज्य भोजयेत् ॥९९८॥ इति ।

अथैतत्प्रतिष्ठाफलम्

प्रतिष्ठानेत्रे—

इत्यनेन विधानेन प्रतिष्ठां विदधाति यः । तस्य पुण्यफलावाप्तिः सुखं चात्यन्तिकं क्रमात् ॥९९९

अथ वैगुण्ये पुनः संस्कारः

कदाचिच्च कथञ्चिच्चेत् किञ्चिद्वैगुण्यमापयेत् ।
संस्कारादि पुनः कुर्य्यात् सच्छास्त्रोक्तानुसारतः ॥१०००॥

हयशीर्षपञ्चरात्रे—

चालितोत्पाटिता ह्यर्च्चा केनचित् पापकर्म्मणा ।
चण्डालमद्यसंस्पर्शदूषिता वह्निना च या ॥१००१॥

स्वयं वा पतिता जीर्णा नदीवेगादिपातिता । अपुण्यजनसंस्पृष्टाऽविप्रक्षतजदूषिता ॥१००२॥

---

परमपि संक्षिप्तमेव च श्रीमूर्त्तिप्रतिष्ठाविधिं लिखति—यदि वेति द्वाभ्याम् ॥९९७॥

आचार्य्यवरण-तद्दक्षिणादान-व्यतिरेकेन परञ्च कृत्यं पूर्व्ववदेव सर्व्वं कुर्य्यादिति समासेन लिखति—यजमान इति ॥९९८॥

क्रमादिति—क्रमेण यथेच्छं स्वर्गादिभोगानन्तरम् आत्यन्तिकं सुखं श्रीवैकुण्ठप्राप्तिलक्षणं भवतीत्यर्थः ॥९९९

वह्निना च दूषिता दग्धेत्यर्थः । एवं दूषितेत्यस्य समासगतस्याकर्ष आर्षत्वाददोषः । संस्पृष्टेति पाठो वा ॥१००१॥

जीर्णा सती स्वयं पतिता, यद्वा, जीर्णा चेति पृथग् दूषणं चिरकालेन जातक्षतादिभिर्वैगुण्यादि प्राप्नोतीत्यर्थः ॥१००२॥

---

इसके बाद, निज सामर्थ्यानुसार वस्त्र, भूषण, धेनु, भूमि एवं स्वर्णादि दक्षिणा देनी चाहिये । यजमान स्वयं आचार्य्य होने पर आचार्य्य वरण एवं दक्षिणा प्रदान न करे । निज विप्रवृन्द के सहित मिलित होकर पुण्याह वाचन एवं अभिषेक समापन पूर्वक उन सब विप्रवृन्द की पूजा करके भोजन कराना यजमान का कर्त्तव्य है ॥९९६-९९८॥

अथैतत्प्रतिष्ठाफलम्

प्रतिष्ठानेत्र नामक ग्रन्थ में लिखित है—जो इस विधि के अनुसार प्रतिष्ठा करते हैं, वह क्रमशः इच्छानुरूप स्वर्गादि भोगानन्तर परम सुखपूर्ण वैकुण्ठधाम को प्राप्त करते हैं ॥९९९॥

अथ वैगुण्ये पुनः संस्कारः

किसी प्रकार किसी समय में कुछ दोष उत्पन्न होने पर शास्त्रोक्त विधि के अनुसार पुनर्वार उस प्रतिमा का संस्कार करना चाहिये ॥१०००॥

हयशीर्ष पञ्चरात्र में उक्त है—प्रतिमूर्त्ति (प्रतिमा) किसी पातकीजन कर्त्तृक चालित वा उत्पाटित, चण्डाल वा सुरास्पर्श हेतु दूषित, अनलदग्ध, जीर्णताहेतु स्वयं पतित, स्रोतादि में पतित, अपवित्रजनकर्त्तृक स्पृष्ट, अविप्र एवं रक्तादि द्वारा दूषित होने से त्याज्य है । अचला मूर्त्ति,—इस प्रकार नवविध दोष दुष्ट होने

अचलां दूषितामेवं स्थापयेद्विधिनोद्धृताम् । पूर्व्वपीठं परित्यज्य यदन्यदपि तद्गतम् ।
तततो यथोक्तविधिना प्रासादे सन्निवेशयेत् ॥१००३॥
अतिजीर्णां तथा व्यङ्गां दारवीं शैलजां तथा ।
परित्यज्य न्यसेदन्यां पूर्व्वोक्तविधिना गुरुः ॥१००४॥
संहारविधिना तत्र तत्त्वान् संहृत्य देशिकः । सहस्रं नारसिंहेन हुत्वा तामुद्धरेद्बुधः ॥१००५
वृषभं योजयित्वा तु मन्त्रेणोत्पाट्य देशिकः । दारवीं दाहयेद्वह्नौ शैलजां प्रक्षिपेज्जले ॥१००६
धातुजां रत्नजां वापि प्रक्षिपेन्मकरालये । अगाधे चान्यतोये वा क्षिपेन्नद्यां महावने ॥१००७
यानमारोप्य जीर्णार्च्चां छाद्य वस्त्रादिना गुरुः । शङ्खदुन्दुभिनिर्घोषैर्गीतवादित्रनिस्वनैः ॥१००८
नीत्वागाधजलं रम्यं भागीरथ्यां महार्णवे । विष्वक्सेनात्मबीजेन प्रक्षिपेत्तां तदा गुरुः ॥१००९
रत्नानि क्षिप्तान्यादाय स्वयं दद्यात्तु दक्षिणाम् ॥१०१०॥
धेनवो दश वा पञ्च स्वर्णवस्त्राद्यलङ्कृताः । जीर्णोद्धारे प्रदातव्या गुरवे विष्णुतुष्टये ॥१०११
भोजनीया विष्णुभक्ता देयमन्नमवारितम् । त्रिरात्रमुत्सव कार्य्यं पञ्च वा सप्त वा तथा ।
बलिश्च विधिना देयो यथोक्तेन सुरोत्तम ॥१०१२॥

---

एवं नवधा दूषितामचलां स्थिरप्रतिमां विधिना उद्धृतां सतीं स्थापयेत् । कथम् पूर्व्वं पीठं पिण्डिकाम्, अन्यदपि यत् पीठं गतं प्राप्तं, तदपि परित्यज्य अन्यस्थाने स्थापयेदित्यर्थः ॥१००३॥

तत्र चात्यन्तजीर्णादिकां विहाय तत्परिवर्त्तेनान्यां स्थापयेदित्याह—अतिजीर्णामिति ॥१००४॥

उद्धृतामित्युक्तं, तत्प्रकारमेवाह— संहारेति । तत्त्वान् पूर्व्वं प्रतिमायां न्यस्तानि तत्त्वानि ॥१००५॥

नद्याद्यभावतो महावने वा क्षिपेत ॥१००७॥

तत्प्रकारमेव विशिष्याह— यानमिति द्वाभ्याम् ॥१००८॥

क्षिप्तानि पिण्डिकाधः पूर्व्वं न्यस्तानि, ब्राह्मणेभ्यो दक्षिणां दद्यात् ॥१०१०॥

अवारितं यथा स्यात्तथा योग्यायोग्याद्यविचारेण सर्व्वेभ्य एव देयमित्यर्थः ॥१०१२॥

---

से पूर्व पीठ परित्य ग पूर्वक प्रतिमा उठाकर अन्यत्र स्थापन करनी चाहिये । तत्पश्चात् यथोक्तविधान से मूर्त्ति को प्रासाद के अभ्यन्तर में प्रवेश कराना चाहिये ॥१००१-१००३ ।

काष्ठमयी वा शैली प्रतिमा अतिजीर्ण वा विकलाङ्ग होने से गुरुदेव उसको परित्याग करके पूर्वोक्तविधि से उसके परि र्त्त (बदले) में दूसरी प्रतिमा स्थापन करें । विज्ञव्यक्ति, संहार विधान से प्रतिमा में तत्त्व समूह विन्यास पूर्वक नृसिंह मन्त्र द्वारा सहस्र होम करके प्रतिमा को उत्तोलन करें । वृष नियोजन पूर्वक मन्त्र पाठ करते करते प्रतिमा को उत्तोलन करें । पश्चात् काष्ठमयी होने से अग्नि में एवं शैली होने से जल गर्भ में निःक्षेप करे । धातुमयी वा रत्नमयी होने से समुद्र अथवा अन्य किसी अगाध सलिल में किंवा नदी में अथवा महावन में निःक्षेप करे । प्रतिमा निक्षेप के समय, गुरुदेव उस जीर्ण प्रतिमा को वस्त्राच्छादित करके यान में उठाकर शङ्ख, दुन्दुभि एवं गीत-वाद्यादि के सहित लेकर रम्य अगाध जल में, गङ्गागर्भ में वा समुद्र में निक्षेप करें एवं उस समय विष्वक्सेनात्म बीजमन्त्र उच्चारण करें ॥ ००४-१००६॥

अनन्तर पिण्डिका के निम्न में पूर्वस्थापित रत्नसमूह ग्रहण पूर्वक स्वयं ब्राह्मणवृन्द को दक्षिणा प्रदान करें । इस रीति से जीर्णोद्धार होने से गुरुदेव को स्वर्ण वस्त्रादि द्वारा अलङ्कृत दश वा पाँच धेनु दान करे । और श्रीहरि की प्रसन्नता हेतु भक्तवृन्द को भोजन कराकर योग्य अयोग्यादि विचार न करके

ततो निवेशयेदन्यां प्रतिमां लक्षणान्विताम् । तत्क्षणादेव राजेन्द्र तस्य दोषप्रशान्तये ।।१०१३

सम्पत्तिर्वा विपत्तिर्वा नोपेक्षां तत्र कारयेत् ।
अपास्य पिण्डिकां पूर्व्वामन्यां तत्र निवेशयेत् ।।१०१४।।

यद्द्रव्या यत्प्रमाणा वा या मूर्त्तिश्चोद्धृता हरेः ।
तद्द्रव्या तत्प्रमाणा च सा मूर्त्तिस्तत्र कीर्त्यते ।।१०१५।।

यत्प्रमाणं यदाकारं यन्मयं विम्वमुद्धरेत् । तत्प्रमाणं तदाकारं तन्मयं तत्र विन्यसेत् ।।१०१६

विहाय पिण्डिकां पूर्व्वां तद्दिने चापरां न्यसेत् ।
द्वितीये वा तृतीये वा दिवसे स्थापयेद्धरिम् ।
अत ऊर्द्ध्वं भवेद्दोषो विधिनापि निवेशिते ।।१०१७।।

अनेनैव विधानेन लेप्यादींश्च विसर्ज्जयेत् । अन्यां प्रकल्पयेत्तत्र तत्प्रमाणां तदाकृतिम् । १०१८

किञ्च—

भ्रष्टायां तु हृतायां तु नष्टायां तु प्रमादतः । सकूटं नारसिंहं वा लक्षं गुह्यं जपेद्बुधः।।१०१९

पतितायां तथा भूमौ यत्र कुत्रापि वा तथा । कुर्य्यादयुतजप्यन्तु गुरुञ्चापि प्रपूजयेत् ।।१०२०।।

हस्तमात्रच्युतायां तु जपेत् सार्द्धायुतद्वयम् ।।१०२१।।

द्विहस्तमात्रपातस्तु प्रमादाद्यदि जायते । तदा लक्षं जपेन्मन्त्रं वैष्णवानपि पूजयेत् ।।१०२२।।

---

तस्य – देवाज्जातस्य पूर्वोक्तस्य दोषस्य प्रशान्तये, स्वस्येति वा ।।१०१३।।
दार्ढ्यार्थमुक्तपोषन्यायेनाह – यत्प्रमाणं, विम्वं – श्रीमूर्तिम् ।।१०१६।।
कूटं—वीजम् ।।१०१९।।

---

अन्यान्य समस्त व्यक्ति को अन्नदान करना कर्त्तव्य है। हे सुरोत्तम ! इस प्रकार तीन, पाँच, सात रात्र उत्सव द्वारा अतिवाहित करे एवं यथोक्त विधान से पूजोपकरण प्रदान करनी चाहिये ।।१०१०-१०१२।।

हे राजेन्द्र ! तत्पश्चात् अकस्मात् उत्पन्न पूर्वकथित दोष प्रशमन हेतु आशु सुलक्षणान्विता अन्य प्रतिमा स्थापन करनी चाहिये । सम्पद् वा विपद् किसी ओर न देखकर पूर्व पिण्डिका परित्याग पूर्वक वहाँ पर अन्य पिण्डिका प्रवेश करानी चाहिये । श्रीहरि की उद्धृत प्रतिमूर्त्ति जिस द्रव्य से निर्म्मित हुई थी, और उसका परिमाण जितना था, उसी के अनुसार उसी द्रव्य द्वारा उसी परिमाण से प्रतिमा को वहाँ स्थापन करनी चाहिये। जिस प्रकार परिमाण, आकृति और स्वरूपयुक्त प्रतिमा उद्धृत की जाती है वैसा ही परिमाण आकृति और स्वरूपयुक्त करके वहाँ पुनर्वार प्रतिमा स्थापन करे । पूर्व पिण्डिका निक्षेप करके उसी दिन अन्य पिण्डिका स्थापन करनी चाहिये । हरि प्रतिमा उद्धृत करके निक्षेप के द्वितीय वा तृतीय दिन में स्थापन करनी चाहिये । उससे अधिक दिन होने पर यथाविधि स्थापन करने पर भी दोष की उत्पत्ति होती है। ।।१०१३-१०१७।।

लेप्यादि प्रतिमूर्त्ति भी इस विधान से विसर्जन करनी चाहिये, और उस स्थान में पूर्ववत् प्रमाण और आकृतियुक्त करके दूसरी प्रतिमा स्थापन करनी चाहिये ।।१०१८।।

और भी लिखित है—प्रमाद के कारण, प्रतिमा हृत वा विनष्ट होने से सवीज नृसिंह मन्त्र वा गुह्यमन्त्र एक लक्ष जप करना सुधी व्यक्ति के पक्ष में कर्त्तव्य है, भूतल में अथवा जिस किसी स्थान में हो, प्रतिमा निपातित होने से दशशत जप करना एवं गुरुपूजा करना कर्त्तव्य है । एक हस्त ऊपर से प्रतिमा पतित होने

पुरुषप्रमाणपातेन व्यङ्गा तु प्रतिमा यदा ।
पूर्व्ववत् सर्व्वकर्म्माणि कुर्य्यान्नास्त्यत्र संशयः ॥१०२३॥
यावन्मन्त्रस्य जप्यन्तु कृतं तस्य चतुर्थकम् ।
आज्याक्तैश्च तिलैर्होमः कार्य्यो न्यूनादिपूरणे ॥१०२४॥

ब्रह्मपुराणे —

खण्डिते स्फुटिते दग्धे भ्रष्टे मानविवर्ज्जिते । यागहीने पशुस्पृष्टे पतिते दुष्टभूमिषु ।
अन्यमन्त्रार्च्चिते चैव पतितस्पर्शदूषिते ॥१०२५॥
दशस्वेतेषु नो चक्रुः सन्निधानं दिवौकसः ।
इति सर्व्वगतो विष्णुः परिभाषाञ्चकार ह ॥१०२६॥

तत्र च शैवागमे—

खण्डिता स्फुटिता भग्ना यस्मादर्च्चा भयावहा ।
तस्मात् समुद्धरेत्ताञ्च पूर्व्वोक्तविधिना बुधः ॥१०२७॥
देवताप्रतिमापूजा स्वतन्त्रैरेव चोदितैः ।
विज्ञाप्य देवतां मन्त्री पूर्व्ववत् मन्त्रमुच्चरन् ॥१०२८॥
स्वस्थानादुद्धरेदर्च्चां किन्तु तां वृषभादिना ।
चालयेच्छिल्पिभिः सार्द्धं सहायैर्बलवत्तरैः ॥१०२९॥

---

खण्डिते जातक्षते, स्फुटिते भग्नाङ्गे, दग्धे वर्णान्तरापादक-दाहदूषिते, भ्रष्टे निजस्थानाच्चलिते पतिते वा, मानेन उक्तपरिमाणेन विवर्ज्जिते, यागहीने अप्रतिष्ठिते पूजारहिते वा, पशुस्पृष्टे अस्पृश्यपशुस्पर्शदूषिते, दुष्टभूमिषु अशुचिस्थानेषु कथञ्चित् पतिते, अन्यदेवमन्त्रेणार्च्चिते ॥१०२५॥

एतेषु अधिष्ठानेषु, एतच्च सत्यमेवेत्याह — इतीति ॥१०२६॥

तत्र कथं व्यवहर्त्तव्यमित्यपेक्षायां शैवागमोक्तं लिखति — खण्डितेत्यादि ॥१०२७॥

---

पर पञ्चविंशति सहस्र जप करना चाहिये, एवं प्रमाद निबन्धन दो हस्त उच्च से प्रतिमा पतित होने से लक्ष जप एवं वैष्णव पूजन करना कर्त्तव्य है । पुरुषपरमित उच्च स्थान से निपतित होकर विकलाङ्ग होने से पूर्ववत् समस्त क्रिया का अनुष्ठान करना कर्त्तव्य है, इसमें सन्देह नहीं है । जितना मन्त्र जप करे, उसका चतुर्थ अंश सघृत तिल होम करे । इस रीति से कार्य्य करने पर न्यूनता की परिपूर्त्ति होती है ॥१०१९-२४॥

ब्रह्मपुराण में लिखित है—खण्डित, स्फुटित, दग्ध, भ्रष्ट, परिमाण रहित यागवर्ज्जित, अस्पृश्य, पशु-स्पर्श हेतु दूषित, अपवित्र स्थान में पतित, अन्य देव-मन्त्र से पूजित एवं पतितजन स्पर्श हेतु दूषित, इन दश प्रकार की प्रतिमूर्त्ति में देवता का सान्निध्य (देवता का अधिष्ठान) नहीं रहता है । सर्वगत भगवान् विष्णु ने यही कही है ॥१०२५-१०२६॥

शैवागम में वर्णित है—प्रतिमा खण्डित, स्फुटित, भग्न होने से भय का कारण है । सुतरां पूर्वोक्तविधान से तादृशी प्रतिमा उद्धृत करके वर्जन करना बुद्धिमान व्यक्ति का कर्त्तव्य है । मन्त्रज्ञ व्यक्ति, प्रतिमा-पूजा विषयक स्वतन्त्र कथित विधान से देवता के समीप में विज्ञापन पूर्वक मन्त्र पाठ करके स्वस्थान से प्रतिमा को उत्तोलन करे । वृषादि एवं महाबल शिल्पीवृन्द की सहायता से प्रतिमा को चलाना चाहिये ॥१०२७-१०२९॥

चालितोत्पाटिता वार्च्चा केनचित् पापकारिणा ।
स्वस्थानपतिता भ्रष्टा निर्व्रणा लक्षणान्विता ॥१०३०॥
मन्त्रतन्त्रप्रदेशज्ञः प्रतिष्ठातन्त्रनिर्म्मलः । स्थापयेत्तां प्रयत्नेन पूर्व्ववद्विधिना गुरुः ॥१०३१॥
अर्च्चा समुद्धृता यत्र निर्व्रणा लक्ष्मणान्विता ।
तत्र तां स्थापयेन्मन्त्री पूर्व्ववद्ब्रह्मणः शिलाम् ॥१०३२॥
संशोध्य मन्त्रसंस्कारैः कृत्वा चैवाधिवासनम् ।
पूर्व्वोक्तेन विधानेन स्थापयेच्छास्त्रवित्तमः ॥१०३३॥
खण्डितां स्फुटितां जीर्णामवलीढ़ाञ्च वह्निना ।
प्रतिमां वर्ज्जयेद्यत्नाद्भग्नां स्वैर्लक्षणैर्युताम् ॥१०३४॥
विधिवत् पाटितामर्च्चां दारुजां शैलजादिकाम् ।
निक्षिपेद्दारुजामग्नौ तथान्यामप्सु निक्षिपेत् ॥१०३५॥
यद्रूपा यत्प्रमाणा च यस्मिन्नर्च्चा समुद्धृता ।
तद्रूपां तत्प्रमाणाञ्च तस्मिन्नर्च्चां निवेशयेत् ॥१०३६॥
प्रतिमा यस्य देवस्य स्व-शास्त्रे सम्प्रकीर्त्तिता ।
तस्य देवस्य तैर्मन्त्रैरर्च्चां संस्थापयेद् बुधः ॥१०३७॥

---

भ्रष्टा दुष्टस्थाने पतिता च, निर्व्रणा चेत्तर्हि पुनः संस्कार्य्येत्याह—चालितेति चतुर्भिः । लक्षणान्वितेत्यानेन मानहीना त्याज्येत्यर्थः ॥१०३०।

तथा 'खण्डितादिकापि हेयैव' इत्याह—खण्डितामिति ॥१०३४॥

वर्ज्जनप्रकारमेवाह—विधिवदिति । पाटितां उत्पाटितां सतीम् । तद्विधिः श्रीहयशीर्षदेवोक्तो लिखित एव ॥१०३५॥

स्थापनप्रकारञ्चाह—यद्रूपेति ॥१०३६॥

---

हे भद्रे ! किसी पातकी व्यक्ति कर्त्तृक प्रतिमूर्त्ति चालित वा यथारीति लक्षणयुक्त रहे तो, मन्त्र तन्त्र विद्, स्थानवेत्ता, प्रतिष्ठा तत्त्वज्ञ गुरुदेव, पूर्वोक्त विधान से यत्नपूर्वक उसको स्थापन करें । प्रतिमूर्त्ति उद्धृत होकर अखण्डित एवं यथायथ लक्षण समन्वित होने पर, उस ब्रह्मशिला को पूर्ववत् पूर्वस्थान में स्थापन करना मन्त्रज्ञ व्यक्ति के पक्ष में कर्त्तव्य है । शास्त्रवित्तम व्यक्ति, मन्त्र संस्कार पूर्वक शिला का शोधन एवं अधिवासन करके पूर्ववर्णित विधान से स्थापन करे ॥१०३०-१०३३॥

प्रतिमा खण्डित, स्फुटित, जीर्ण एवं वह्निदग्ध होने से एवं सुलक्षणायुक्त प्रतिमा भग्न होने पर उसको यत्नपूर्वक परित्याग करें । काष्ठमयी प्रतिमा उत्पाटित होने से विधि पूर्वक अग्नि में एवं शैली प्रतिमा उत्पाटित होने से विधिपूर्वक जलगर्भ में निक्षेप करे । जिस स्थान से यद्रूपा एवं जिस परिमाण की प्रतिमा उद्धृता होगी, उस स्थान में तद्रूपा एवं तत्परिमिता प्रतिमा ही स्थापना करनी चाहिये । जिस देवता की जिस प्रकार प्रतिमूर्त्ति शास्त्र में सम्यक् प्रकार से वर्णित है, विज्ञव्यक्ति उस देवता की तद्रूप प्रतिमूर्त्ति उस मन्त्र से सन्निवेश करे ॥१०३४-१०३७॥

एकाहपूजाविहतौ कुर्य्याद्द्विगुणमर्च्चनम् । त्रिरात्रे तु महापूजां संप्रोक्षणमतःपरम् ।।१०३८।।

मासादूर्द्ध्वमनेकाहं पूजा यदि विहन्यते ।
प्रतिष्ठैवेष्यते कैश्चित् कैश्चित् संप्रोक्षणक्रमः ।।१०३९।।

किञ्च—

संप्रोक्षणन्तु देवस्य देवमुद्वास्य पूर्व्ववत् । अष्टपञ्चक्रमेणैव स्नापयित्वा मृदम्भसा ।।१०४०।।

गवां रसैश्च संस्नाप्य दर्भतोयैर्विशोध्य च ।
प्रोक्षयेत् प्रोक्षणीतोयैर्मूलेनाष्टोत्तरं शतम् ।।१०४१।।

सपुष्पं सकुशं पाणिं न्यस्य देवस्य मस्तके । पञ्चावरं जपेन्मूलमष्टोत्तरशतोत्तरम् ।।१०४२।।

ततो मूलेन मूर्द्धादि पीठान्तं संस्पृशेदपि । पूजाञ्च महतीं कुर्य्याद्देवमावाह्य पूर्व्ववत् ।।१०४३

देवीपुराणे—

देवार्च्चा नैव सञ्चाल्या मृन्मय्यपि भयावहा ।
हैमादिर्दोषदा वत्स पूर्व्वामुद्धृत्य स्थापिता ।।१०४४।।

---

संप्रोक्षणं—महास्नानम् ।।१०३८।।

यागहीनायां कृत्यमाह—मासादिति । एवं पशुस्पृष्टान्यमन्त्रार्च्चितान्त्यजादि-स्पर्शदूषितासु महास्नानमेव ज्ञेयम् ।।१०३९।।

संप्रोक्षणप्रकारमेवाह संप्रोक्षणमिति चतुर्भिः । अष्टपञ्चक्रमेणेति आदौ वल्मीकाद्यष्टस्थानमृत्तिकाजलेन, ततस्तीर्थादिपञ्चस्थानमृत्तिकाजलेन पञ्चकषायादि जलेन वा इत्यर्थः ।।१०४०।।

पञ्च अवरा यत्र, अष्टोत्तरशतमुत्तराणि यत्र । पञ्चवारतोऽष्टोत्तरशतवार-पर्य्यन्त-जपे यथाशक्ति मूलमन्त्रं जपेदित्यर्थः ।।१०४२।।

मूर्द्धादि देवस्य श्रीमस्तकमारभ्य, पूर्व्ववदिति प्रथमं प्रतिष्ठायां यथा कृतास्ति, तथैव कुर्य्यादित्यर्थः ।।१०४३।।

पूर्व्वां पूर्व्वस्थापितां मृन्मयीमुद्धृत्य तत्परिवर्त्तेन हैमादिः हेमादिनिर्म्मिता तत्स्थाने स्थापितापि दोषदा अशुभकरी ।।१०४४।।

---

एक दिन प्रतिमा की पूजा न करने से द्विगुण पूजा करनी चाहिये । तीन दिन पूजा न करने से महापूजा करनी चाहिये । एवं ततोऽधिक दिन अपूजित होने पर महास्नान कराना कर्त्तव्य है । कतिपय विज्ञव्यक्ति इस प्रकार निर्देश करते हैं कि, एक मास के अतिरिक्त बहुदिन प्रतिमा अपूजित होने पर पुनः प्रतिष्ठा करनी चाहिये । एवं कोई कोई महास्नान का विधान देते हैं ।।१०३८-१०३९।।

और भी कथित है—पूर्वोक्त विधान से देवता का उद्वासन करके संप्रोक्षण कराना आवश्यक है । अष्ट-पञ्च क्रम से अर्थात् प्रथमतः वल्मीकादि अष्टस्थानस्थ मृत्तिकायुक्त सलिल द्वारा, अथवा पञ्चकषायादि सलिल द्वारा स्नान कराकर पश्चात् दुग्ध द्वारा स्नान करावे । तत्पश्चात् कुशोदक द्वारा शोधन पूर्वक मूल-मन्त्र पाठ करके प्रोक्षणीपात्रस्थ जल द्वारा अष्टोत्तरशत वार प्रोक्षण करे । पुष्प एवं कुशहस्त से देवता के मस्तक को स्पर्श पूर्वक अष्टोत्तरशत करके पाँच वार मूलमन्त्र जप करना चाहिये । पश्चात् मूलमन्त्र पाठ पूर्वक मस्तकादि पीठ पर्य्यन्त स्पर्श करे एवं पूर्ववत् देवता को आवाहन करके महापूजा सम्पन्न करे । ।।१०४०-१०४३।।

देवीपुराण में कथित है—हे वत्स ! देवमूर्त्ति को चलायमान न करे । पूर्वस्थापिता प्रतिमा मृन्मयी होने पर भी उसको उठाकर उसके स्थान में स्वर्णादि निर्मिता मूर्त्ति स्थापन करना निषिद्ध है । ऐसा करने से

महादुर्भिक्षजननी मरकारिष्टदा भवेत् । कर्त्तुर्गोत्रस्य भयदा रिपुवंशविवर्द्धिनी ॥१०४५॥

अथ पुनः संस्कारमाहात्म्यम्

तत्रैव —

शीर्णो देवोऽथ प्रासादो यैः पुनः संस्कृतो द्विज ।
अशोच्यास्ते महात्मानो धूतपापा महाधियः ॥१०४६॥

हयशीर्षे—

यो जीर्णं विधिना देवं संस्कुर्य्यान्मानवो भुवि ।
फलं दशगुणं तस्य मूलान्नास्त्यत्र संशयः ॥१०४७॥

मूलाद्दशगुणं पुण्यं कूपादेः परिकीर्त्तितम् । प्रतिमादौ शतगुणं जीर्णसंस्करणाद्भवेत् ॥१०४८॥

इति श्रीगोपालभट्ट-विलिखिते श्रीभगवद्भक्तिविलासे प्रातिष्ठिको नामैकोनविंशो विलासः ।

---

दोषमेवाह—महेति ॥१०४५॥

देवः तत्प्रतिमेत्यर्थः । अथ-शब्दो विकल्पे, प्रासादो वा । महात्मानो निरभिमानाः, महाधियश्च परम-विवेकिनः, स्वकीर्त्त्यनपेक्षणेन परकीर्त्तिसंरक्षणेन च पुण्यविशेषसिद्धेः ॥१०४६॥

मूलात्—प्रथमस्थापकात् ॥१०४७॥

इत्यूनविंशो विलासः ।

---

वह मृन्मयी प्रतिमा महादुर्भिक्षोत्पादिका, मरकादि अरिष्टदा, स्थापक वंश को भयदायिका एवं अरिकुल वर्द्धिनी होती है ॥१०४४-१०४५॥

अथ पुनः संस्कारमाहात्म्यम्

उक्त पुराण में ही उक्त है—हे द्विज ! जो सब व्यक्ति, जीर्ण प्रतिमा वा जीर्ण प्रासाद का पुनः संस्कार करते हैं, वे अशोच्य, माहात्म्य, निष्कलमय, एवं महाबुद्धिमान् होते हैं ॥१०४६॥

हयशीर्ष पञ्चरात्र में लिखित है—पृथिवी में जो व्यक्ति यथाविधि पुरानी प्रतिमा का संस्कार करता है, वह प्रथम स्थापक की अपेक्षा दशगुण अधिक फल लाभ निःसन्दिग्ध रूप से करता है । कूपादि का जीर्ण संस्कार करने पर प्रथम स्थापक की अपेक्षा दशगुण अधिक पुण्य होता है एवं प्रतिमादिका जीर्ण-संस्कार करने से शतगुण फल होता है ॥१०४७-१०४८॥

इति श्रीगोपालभट्ट-विलिखिते श्रीभगवद्भक्तिविलासे प्रातिष्ठिको नामैकोनविंशो विलासः ।

———

# विंश-विलासः

श्रीश्रीचैतन्यचन्द्राय नमः

कथञ्चन स्मृते यस्मिन् दुष्करं सुकरं भवेत् । विस्मृते विपरीतं स्यात् श्रीचैतन्यं नमामि तम् ॥१
श्रीमूर्त्तेः स्थापनार्थकं वेश्मावश्यमपेक्ष्यते । अतो मन्दिरनिर्म्माणविधिरत्र विलिख्यते ॥२॥

अथ श्रीभगवन्मन्दिरनिर्म्माणम्

भवेद्बहुविधं तच्च वेश्म तत्र स्वशक्तितः । शास्त्रानुसारतः कुर्य्यादेकं वासोचितं प्रभोः ॥३॥

अथ मन्दिरनिर्म्माणमाहात्म्यम्

वामनपुराणे—

यः कारयेन्मन्दिरं माधवस्य, पुण्यान् लोकान् स जयेच्छाश्वतान् वै ।
दत्त्वारामान् पुष्पफलाभिपन्नान्, भोगान् भुङ्क्ते कामतः स्वर्गसंस्थः ॥४॥

---

सिध्येन् प्रासादिको भक्तिविलासो यत्प्रसादतः । स मे प्रसन्नवदनः श्रीचैतन्यः प्रसीदतु ॥

श्रीभगवतो मन्दिरनिर्म्माणविधिं लिखिष्यन् तल्लिखने चात्मनाऽशक्येऽपि तस्य स्मरणप्रभावेण शक्तिं संभावयन् तं प्रणमति—कथञ्चनेति । येन केनापि प्रकारेण स्मृतोऽपि, दुष्करं कर्त्तुमशक्यमपि, विपरीतं सुकरमपि दुष्करं स्यात् । एवमन्वय-व्यतिरेकाभ्यां स्मरणप्रभावो दर्शितः ॥१॥

ननु वैष्णवानामावश्यककर्म्मलिखनमेव प्राक् प्रतिज्ञातं, तत् किं प्रासादलिखनेन ? तत्र लिखति—श्रीमूर्त्तेरिति । पूजार्थमवश्यं श्रीभगवन्मूर्त्तिरपेक्ष्यते, तदर्थं चावश्यं गृहमेकं तद्योग्यमपेक्ष्यते, अतस्तन्निर्म्माण-प्रकारलिखनमप्युपयुक्तमेवेति भावः ॥२॥

प्रासादमण्डपादिभेदेन बहुविधं, तच्च न शास्त्रोक्तव्यतिक्रमेण कार्य्यमिति लिखति– शास्त्रेति । यतः प्रभोर्जगदीश्वरस्य वासोचितम् ॥३॥

शाश्वतान् लोकानिति बहुत्वं श्रीवैकुण्ठलोकस्य गौरवाभिप्रायेण, तत्रत्यबहुलप्रदेश-विशेषापेक्षया वा ज्ञेयम्, अन्येषां सर्व्वेषामशाश्वतत्वात् ॥४॥

---

जिस किसी प्रकार से जिनका स्मरण करने से दुःसाध्य कार्य्य भी सुसाध्य होता है, एवं जिनको विस्मृत होने पर सुकर कार्य्य भी दुष्कर होता है, मैं उन श्रीकृष्णचैतन्यदेव को प्रणाम करता हूँ ॥१॥

श्रीमूर्त्ति को स्थापना करने के निमित्त एक मन्दिर अत्यावश्यक है । अतएव यहाँ पर मन्दिर निर्म्माण विधि का वर्णन हो रहा है ॥२॥

अथ श्रीभगवन्मन्दिरनिर्म्माणम्

देवगृह बहुविध होते हैं । तन्मध्ये स्वीय सामर्थ्यानुसार शास्त्रीय विधि से श्रीप्रभु के वासोचित मन्दिर निर्म्माण करे ॥३॥

अथ मन्दिरनिर्म्माणमाहात्म्यम्

वामनपुराण में लिखित है—श्रीहरि का मन्दिर निर्म्माण कराने पर वैकुण्ठ एवं तत्रत्य पवित्र एवं नित्यलोक समूह को जय कर सकता है । मन्दिर निर्म्माता व्यक्ति एवं फल-पुष्प शोभित उपवन अर्पण-कारी व्यक्ति स्वर्गस्थ होकर प्रचुर सुख भोग कर सकता है ॥४॥

पितामहस्य पुरतः कुलान्यष्टौ च यानि तु । तारयेदात्मना सार्द्धं विष्णोर्म्मन्दिरकारकः ॥५।

किञ्च पितृगाथायाम्—

अपि न स्वकुले कश्चिद्विष्णुभक्तो भविष्यति । हरिमन्दिरकर्त्ता यो भविष्यति शुचिव्रतः ?॥६।

अग्निपुराणे—

ये ध्यायन्ति सदा बुद्धचा करिष्यामो हरेर्गृहम् । तेषां विलीयते पापं पूर्व्वजन्मशतोद्भवम् ॥७

किञ्च—

समतीतं भविष्यञ्च कुलानामयुतं नरः । विष्णुलोकं नयत्याशु कारयित्वा हरेर्गृहम् ॥८॥

किञ्च—

लक्षेणाथ सहस्रेण शतेनार्द्धेन वा हरेः । तुल्यं फलं समाख्यातमिहेश्वरदरिद्रयोः ॥९॥

विष्णुधर्म्मोत्तरे तृतीयकाण्डे—

कृत्वा वासगृहं तस्य देवस्य परमेष्ठिनः । राजसूयाश्वमेधानां फलेन सह युज्यते ॥१०॥

सुरवेश्मनि यावन्तो द्विजेन्द्राः परमाणवः । तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥११॥

---

न च स एवैकः, किन्तु निजपूर्व्वजैरप्यन्वित इत्याह—पितेति । तारयेद्दुष्कर्म्मभिः संसाराब्धौ नरकेषु वा पतितानपि श्रीवैकुण्ठलोकप्रापणेनाशेषदुःखपारं नयेदित्यर्थः ॥५॥

अतएव पितृभिर्गीयते—अपीति ॥६॥

करिष्याम इति बुद्धचा ध्यायन्ति, दृढ़ेच्छां कुर्व्वन्ति; यद्वा, बुद्धचा भावनया करिष्याम इति सदा चिन्तयन्त्येव, न तु तादृशमपि कदापि कर्त्तुं शक्नुवन्ति, तेषामपि ॥७॥

लक्षेणेति—समर्थो बहुवित्तव्ययेन हरेर्गृहं करोतु, दरिद्रो वाल्पव्ययेन करोतु, द्वयोरपि हरेः सकाशात् फलं समानमेव कथितमभिज्ञैः, श्रद्धादिसाम्यात् परमफलवैकुण्ठैक-प्रापणाद्वेति दिक् ॥९॥

हे द्विजेन्द्राः ॥११॥

---

जो विष्णु-मन्दिर निर्म्माण करता है, वह अपने को एवं पितामह के ऊद्ध्र्वतन आठ कुलों की रक्षा करता है ॥५॥

पितृगाथा में उक्त है—हमारे वंश में ऐसा कौन हरिभक्त उत्पन्न होगा, जो पवित्र व्रतधारी होकर श्रीहरि-मन्दिर निर्म्माण करेगा ॥६॥

अग्निपुराण में उक्त है—जो लोक 'श्रीहरि-मन्दिर निर्म्माण कराऊँगा' मन ही मन इस प्रकार सङ्कल्प करता है, उसका पूर्व शतजन्मार्जित पातक विनष्ट होता है ॥७॥

और भी लिखित है—जो मानव श्रीहरि-मन्दिर निर्म्माण कराता है, उसके अतीत एवं भविष्यत् अयुत कुल आशु विष्णुधाम प्राप्त होते हैं ॥८॥

और भी लिखित है—लक्ष्य, सहस्र, शत वा तदर्ध व्यय करके जिस किसी प्रकार श्रीहरिगृह निर्म्माण करने से तुल्यफल लाभ होता है । इसमें धनी के सहित दरिद्र का कोई भेद नहीं है ॥९॥

विष्णधर्म्मोत्तर के तृतीयकाण्ड में लिखित है—परमेष्ठी श्रीहरि का वासगृह प्रस्तुत करने से राजसूय एवं अश्वमेध यज्ञ के समान फल लाभ होता है ॥१०॥

हे द्विजेन्द्रवृन्द ! देव-मन्दिर में जितने संख्यक परमाणु होते हैं, उतने सहस्रवर्ष पर्य्यन्त सुरलोक में निवास होता है ॥११॥

प्रासादे मृन्मये पुण्यं मयैतत् कथितं द्विजाः । तस्माद्दारुमये पुण्यं कृते शतगुणं भवेत् ।।१२।।
ततो दशगुणं पुण्यं तथा शैलमये भवेत् । ततो दशगुणं लौहे ताम्रे शतगुणं ततः ।।१३।।
सहस्रगुणितं रौप्ये तस्मात् फलमुपाश्नुते । ततः शतसहस्रं वै सौवर्णे द्विजसत्तमाः ।
अनन्तफलमाप्नोति रत्नचित्रे मनोहरे ।।१४।।

स्कान्दे—
आरम्भे कृष्णधिष्ण्यस्य सप्तजन्मनि यत् कृतम् । पापं विलयमाप्नोति नरकादुद्धरेत् पितॄन् ।।१५
प्रासादपादे कृष्णस्य यावत्तिष्ठन्ति रेणुकाः । तावद्वर्षसहस्राणि वसते विष्णुसद्मनि ।।१६।।
प्रासादे कृष्णदेवस्य चित्रकर्म्म करोति यः । वसते विष्णुलोके तु यावत्तिष्ठन्ति सागराः ।।१७

नारसिंहे—
यः कुर्य्याच्छोभनं वेश्म नरसिंहस्य भक्तिमान् । सर्व्वपापविनिर्मुक्तो विष्णुलोकमवाप्नुयात् ।।१८

हयशीर्षे—
देवागारं करोमीति मनसा यस्तु चिन्तयेत् । तस्य कायगतं पापं तदह्ना विप्र नश्यति ।
कृते तु किं पुनस्तस्य प्रासादे विधिनैव तु ।।१९।।

---

रत्नैश्चित्रै खचिते ।।१४।।
कृष्णस्य प्रासादस्तस्य पादे मूले प्रदेशे वा यावद् यावत्यो रेणुकास्तिष्ठन्ति ।।१७।।
भक्तिमत्त्वेनैव शोभनवेश्मकरणाद्भक्तिमानित्युक्तं, न चाधिकारिविशेषणत्वेनेति दिक् ।।१८।।
मनसा चिन्तयेत्, केवलमिच्छामात्रं करोतीत्यर्थः ।।१९।।

---

हे द्विजवृन्द ! मृन्मय मन्दिर निर्म्माण करने से जो फल होता है, उसका वर्णन हुआ । काष्ठ-मन्दिर निर्म्माण करने पर तदपेक्षा शतगुण फल होता है । शैलमय मन्दिर करने से काष्ठ-मन्दिर की अपेक्षा दशगुण फल होता है, लौहमन्दिर निर्म्माण से शैलमन्दिर अपेक्षा दशगुण फल होता है । ताम्रमय मन्दिर निर्म्माण करने से लौह-मन्दिर अपेक्षा शतगुण फल होता है । रौप्यमय मन्दिर निर्म्माण करने से ताम्र अपेक्षा सहस्र गुण फल लाभ होता है । हे द्विजसत्तमवृन्द ! सुवर्णमय मन्दिर निर्म्माण करने से रौप्य अपेक्षा शतसहस्रगुण एवं रत्नखचित मन्दिर निर्म्माण करने से अनन्त फल लाभ होता है ।।१२-१४।।

स्कन्दपुराण में लिखित है—कृष्ण-मन्दिर निर्म्माण करने में प्रवृत्त होने से ही सप्तजन्मकृत पातक विनष्ट होता है एवं तदीय पितृगण नरक से उद्धार प्राप्त होते हैं । कृष्णमन्दिर के मूलभाग में जितने संख्यक रेणु हैं, उतने सहस्रवर्ष यावत उनका हरिधाम में निवास होता है । जो श्रीकृष्ण-मन्दिर में चित्र कार्य्य करता है, यावत् सागरसमूह विद्यमान हैं, तावत् काल पर्य्यन्त उसकी स्थिति श्रीहरिधाम में होती है ।।१५-१७।।

नृसिंहपुराण में उक्त है—जो भक्तिमान् व्यक्ति, मनोहर रूप में नरसिंहदेव का भवन निर्म्माण करता है, वह निखिल पातकों से मुक्त होकर हरिधाम गमन करता है ।।१८।।

हयशीर्ष पञ्चरात्र में लिखित है—हे विप्र ! यथाविधि प्रासाद निर्म्माण करने की कथा तो दूर है 'देवालय निर्म्माण करूँगा' इस प्रकार मन में अभिलाष होने से उसी दिन उस व्यक्ति का देहस्थ पातक ध्वंस होता है । जो व्यक्ति, अष्टसंख्यक इष्टकयुक्त विष्णु मन्दिर निर्म्माण करता है, कोई भी व्यक्ति उसके पुण्य का वर्णन करने में सक्षम नहीं हैं । सुतरां विस्तीर्ण प्रासाद निर्म्माण करने से किस प्रकार फल होगा,

अष्टेष्टकासमायुक्तं यः कुर्य्याद्वैष्णवं गृहम् । न तस्य फलसम्पत्तिर्वक्तुं शक्येत केनचित् ।
अनेनैवानुमेयं तु फलं प्रासादविस्तरात् ॥२०॥
मरणञ्च व्रजेन्मर्त्यो यः कृत्वा प्रथमेष्टकाम् । स समाप्तस्य यज्ञस्य फलमाप्नोत्यसंशयम् ॥२१॥

विष्णुरहस्ये—

बाल्ये संक्रीड़माना ये पांशुभिर्भवनं हरेः । वासुदेवस्य कुर्व्वन्ति तेऽपि तल्लोकगामिनः ॥२२॥

आदिपुराणे—

लेपनाच्छादनं चैव यः करोति पुनर्नवम् । देवस्यायतनं कृत्वा न भवेत् कीटजं भयम् ॥२३॥

अथ मन्दिरनिर्म्माणकालः

मात्स्ये—

चैत्रे व्यधिमवाप्नोति यो गृहं कारयेन्नरः । वैशाखे धनरत्नानि ज्यैष्ठे मृत्युं तथैव च ॥२४॥
आषाढ़े भृत्यरत्नानि पशुवर्गमवाप्नुयात् । श्रावणे मित्रलाभन्तु हानिं भाद्रपदे तथा ॥२५॥
पत्नीनाशं चाश्वयुजे कार्त्तिके धनधान्यकम् । मार्गशीर्षे तथा भक्तं पौषे तस्करजं भयम् ॥२६॥
लाभन्तु बहुशो विद्यादीनां माघे विनिर्द्दिशेत् ।
काञ्चनं फाल्गुने पुत्रानिति कालबलं स्मृतम् ॥२७॥

---

प्रथमेष्टकान्यासार्थं प्रतिष्ठितलिङ्गाद्यष्टेष्टकामध्ये प्रथमामाद्यां कृत्वा विन्यस्यापि, यद्वा, प्रासादार्थं निर्म्मीयमाणासंख्येष्टकामध्ये प्रागेकमात्रेष्टकां निर्माय; समाप्तस्य सम्पूर्णदक्षिणादिकस्य ॥२१॥

वासुदेवस्य—श्रीवसुदेवनन्दनस्य हरेः ॥२२॥

लेपनं सुधादिलेपम्, आच्छादनञ्च चूर्णादिभिर्निश्छिद्रतापादनम्; कुत्र ? इत्यपेक्षायामाह—देवस्यायतनं प्रति कृत्वेति । यद्वा, एतद्दृष्टान्तत्वेनोह्यम् । कीटाः सर्पादयः क्षुद्रलोका वा, तज्जम् ॥२३॥

---

उसका अनुमान उससे ही होता है । जो व्यक्ति, मन्दिर निर्म्माण के प्रारम्भ में प्रथम इष्टक स्थापन वा एक इष्टक निर्म्माण करके ही कालकवलित होता है, वह सदक्षिण समस्त यज्ञों का फल लाभ निसन्देह रूप से करता है ॥१९-२१॥

विष्णुरहस्य में लिखित है—जो सब बालक, बाल्यावस्था में खेलते खेलते धूलि द्वारा श्रीहरि मन्दिर निर्म्माण करते हैं, वे ही हरिधाम प्राप्त होते हैं ॥२२॥

आदिपुराण में लिखित है—जो व्यक्ति, चूर्णादि द्वारा देवायतन लेपन किंवा छिद्रसमूह का अवरोध करता है, वह सर्पादि कीटज भय से मुक्त होता है ॥२३॥

अथ मन्दिरनिर्म्माणकालः

मत्स्यपुराण में लिखित है—चैत्र मास में श्रीहरि-मन्दिर निर्म्माण करने से रोगाक्रान्त होना पड़ता है । उसी प्रकार वैशाख में धन-रत्न लाभ, ज्यैष्ठ में मरण, आषाढ़ में भृत्यरत्न एवं पशु लाभ, श्रावण में मित्र-लाभ, भाद्र में क्षति, आश्विन में पत्नीनाश, कार्त्तिक में धनधान्य लाभ, मार्गशीर्ष में अन्न लाभ, पौष में चौर्य्यभीति, माघ में विद्यादि बहु लाभ, एवं फाल्गुन में काञ्चन एवं पुत्र लाभ होता है । देव-प्रासादादि निर्म्माण का कालबल इसी प्रकार निर्णय किया गया है ॥२४-२७॥

अश्विनी रोहिणी मूलमुत्तरात्रयमैन्दवम् । स्वाती हस्तोऽनुराधा च गृहारम्भे प्रशस्यते ।।२८

आदित्यभौमवर्ज्जञ्च सर्व्वे वारा: शुभावहाः । वज्र-व्याघात-शूलानि व्यतीपातातिगण्डके ।
विष्कुम्भ-गण्ड-परिघान् वर्ज्ज्य योगेषु कारयेत् ।।२९।।

श्वेते मैत्रे च माहेन्द्रे गान्धर्व्वाभिजिद्रौहिणे । तथा वैराजसावित्रे मुहूर्त्ते गृहमारभेत् ।।३०।।

चन्द्रादित्यबलं लब्ध्वा लग्नं शुभनिरीक्षितम् । स्तम्भोच्छ्रयादि कर्त्तव्यमन्यत्र परिवर्ज्जयेत् ।।३१

हयशीर्षे —

वास्तुकर्म्म न चारभ्यं वर्षाकाले विजानता । कृष्णपक्षे त्रिभागान्ते शुक्लस्यादौ द्वितीयके ।
चतुर्थी नवमी वर्ज्ज्या तिथिश्चापि चतुर्द्दशी ।।३२।।

भौमस्य तु दिनं वर्ज्ज्यं करणं विष्टिसंज्ञितम् । क्षित्यन्तरीक्षदिव्योत्थैरुत्पातैर्भयपीड़ितम् ।
उपसृष्टं ग्रहैर्भञ्च व्यतीपातहतं तथा ।।३३।।

---

ऐन्दवं—मृगशीर्षम् ।।२८।।

वर्ज्ज्य—वर्ज्जयित्वा ।।२९।।

श्वेतादिसंज्ञकानां नवमूहूर्त्तानामेकतमे ।।३०।।

अन्यत्र उक्तेतरकाले परिवर्ज्जयेत्, न प्रारभेदित्यर्थः ।।३१।।

त्रयाणां भागानामन्ते सति एकादश्यादिषु न आरभ्यम्, तथा शुक्लपक्षस्य आदिभागे द्वितीयभागे च न चारभ्यम् । तत्रापि कृष्णपक्षस्य प्रथम-भागे चतुर्थी, तथा द्वितीये नवमी, शुक्लस्य चान्ते चतुर्द्दशी रिक्तात्वेन वर्ज्जनीया ।।३२।।

क्षित्युत्थ उत्पातः भूकम्पादिः, अन्तरीक्षोत्थ उल्कापातादिः, दिव्यश्च सूर्य्यग्रहणादिः, तैर्भयरूपैः पीड़ितं बाधितं दिनं वर्ज्ज्यम् । यद्वा, तैरुत्पातैर्लक्षितम् । अन्यैर्भयैश्च बन्धुवियोगादिभिः पीड़ितं दिनं वर्ज्ज्यम् । उपसृष्टं पीड़ितं ग्रहैः शनैश्चरादिभिः ।।३३।।

---

देवगृहारम्भ में अश्विनी, रोहिणी, मूला, उत्तरात्रय, मृगशिरा, स्वाती, हस्ता एवं अनुराधा,-यह सब नक्षत्र प्रशस्त हैं। मन्दिर निर्म्माण में रवि एवं मङ्गलवार भिन्न समस्तवार एवं वज्र, व्याघात, शूल, व्यतीपात, अतिगण्ड, विष्कुम्भ, गण्ड एवं परिघ भिन्न अन्य समस्त योग शुभद हैं। श्वेत, मैत्र, माहेन्द्र, गान्धर्व, अभिजित, रौहिण, वैराज, सावित्र,–इन सब मुहूर्त्तों में गृहनिर्म्माण प्रारम्भ करना चाहिये।।२८-३०

चन्द्रबल, सूर्य्यबल एवं शुभग्रह कर्त्तृक दृष्ट लग्न प्राप्ति होने से ही उस समय स्तम्भ की उच्चता आदि को निर्म्माण करे। उक्त समय को छोड़कर अन्य समय में मन्दिर निर्म्माण न करे।।३१।।

हयशीर्ष पञ्चरात्र में लिखित है– विधिविद् व्यक्ति, वर्षाकाल में वास्तुकर्म्म प्रारम्भ न करे। कृष्णपक्ष के त्रिभागान्त में (एकादश्यादि में) शुक्लपक्ष का आद्य और दूसरा भाग, कृष्णपक्ष के दूसरे भाग में चतुर्थी कृष्ण एवं शुक्लपक्ष के तीसरे भाग में नवमी, शुक्लपक्ष के अन्त में चतुर्द्दशी,–यह सबको सर्वथा परित्याग करे। कुजवार (मङ्गलवार) विष्टिकरण, क्षितिजनित उत्पात, गगनोत्थ उत्पात एवं सूर्य्यग्रहादि भय, इन सबसे जो दिन आक्रान्त हो अथवा जिस दिन बन्धु बान्धवादि वियोग हो, जिस दिन नक्षत्र शनैश्चरादि ग्रह-गण कर्त्तृक पीड़ित, और जो दिन व्यतीपात द्वारा निपीड़ित है, वे सब दिन परित्याज्य हैं। चन्द्र तारा अनुकूल देखकर कार्य्य में प्रवृत्त होना चाहिये। वास्तुकार्य्य में स्थिरलग्न प्रशस्त है। नैर्ऋत (मूला), शक्र-दैवत (ज्येष्ठा), पुष्या, पौष्ण (रेवती) सावित्र (हस्त), वायव्य (स्वाती) एवं वैष्णव नक्षत्र (श्रवण) नक्षत्र,

चन्द्रतारानुकूले च कार्य्यं कर्म्म विजानता । ध्रुवाणि चात्र शस्तानि नैर्ऋतं शक्रदैवतम् ।
पुष्यं पौष्णञ्च सावित्र्यं वायव्यं वैष्णवन्तथा ॥३४॥

स्थिरांशे च स्थिरे लग्ने कर्त्तुश्चोपचयात्मके । केन्द्रे सौम्यग्रहो यस्य त्रिकोणे तु सुरोत्तमः ।
पापाश्चोपचयस्थाने तदा कार्य्यं समारभेत् ॥३५॥ इति ।

प्रासादरचनास्थानं प्रतिष्ठास्थाननिर्णयात् । व्यक्तमेवाभवत् कश्चिद्विशेषोऽन्योऽत्र लिख्यते ॥३६

अथ प्रासादरचनास्थानम्

हयशीर्षे—

पूर्व्वं देवकुलं पीड्य प्रासादं स्वल्पकं तथा । समं वाप्यधिकं वापि न कर्त्तव्यं विजानता ॥३७

उभयोर्द्विगुणां सीमां त्यक्त्वा चोच्छ्रायसम्मिताम् ।
प्रासादं कारयेदन्यं नोभयं पीड़येद्बुधः ॥३८॥

अथ स्थानशोधनानि

देवीपुराणे—

देवा विष्णुस्तथा रुद्रो ब्रह्माद्याः सुरसत्तमाः ।
प्रतिष्ठाप्याः शुभे स्थाने अन्यथा ते भयावहाः ॥३९॥

---

ध्रुवाणि स्थिराणि, नैर्ऋतं मूल, शक्रदैवतं ज्येष्ठा, पौष्णं रेवती, सावित्र्यं हस्तः, वायव्यं स्वाती, वैष्णवं श्रवणम् ॥३४॥

केन्द्रं लग्नं, ततश्चतुर्थं सप्तमं दशमं चेत्येवं स्थानचतुष्कं, तस्मिन् । त्रिकोणे नवपञ्चमे, उपचयस्थानं तृतीयं षष्ठं दशममेकादशञ्च, तस्मिन् ॥३५॥

श्रीमूर्त्तिप्रतिष्ठास्थान 'सिद्धक्षेत्रं सरः पुण्यम्' इत्यादिवचनेन, तथा 'नगरग्राममध्ये तु' इत्यादि हयशीर्ष-पञ्चरात्रवचनैश्च यो निर्णयः पूर्व्वं लिखितोऽस्ति, तस्मादेव प्रासादरचनायाः स्थानमपि व्यक्तमेवाभवत्, निर्णीतमभूदेवेत्यर्थः । प्रासादान्तरे श्रीमूर्त्तिस्थापनादत्र प्रासाद-रचनास्थाननिर्णये कश्चिदन्योऽपि विशेषो लिख्यते ॥३६॥

पूर्व्वं प्राचीनं, देवकुलं प्रासादमेव । पीड्य पीड़यित्वा, तत्सीमामाक्रम्येत्यर्थः ॥३७॥

---

कर्त्ता का उन्नति सूचक स्थिरांश और स्थिर लग्न,—यह सब प्रशस्त हैं । जिसके केन्द्र में अर्थात् लग्न में—चतुर्थ, सप्तम वा दशम स्थान में सौम्यग्रह, त्रिकोण में अर्थात् नवम वा पञ्चम में शुभग्रह बृहस्पति, और उपचय स्थान में अर्थात् तृतीय, षष्ठ, दशम एवं एकादश में पाप ग्रह विद्यमान है, वह व्यक्ति,—उस समय कार्य्य में प्रवृत्त होवे ॥३२-३५॥

प्रतिष्ठा स्थान निरूपणार्थ प्रासाद निर्म्माण स्थल का विषय, प्रथम लिखा गया है । अधुना अन्यान्य जो विशेष है, उसका वर्णन किया जाता है ॥३६॥

अथ प्रासादरचनास्थानम्

हयशीर्ष पञ्चरात्र में लिखित है—प्राचीन प्रासाद की सीमा उल्लङ्घन पूर्वक उस परिमाण, स्वल्प परिमाण का अधिक परिमाण में प्रासाद निर्म्माण न करे । प्रासाद के पार्श्वद्वय के द्विगुण सीमा और उच्च परिमाण त्यागकर अन्य प्रासाद निर्म्माण करना चाहिये । दोनों सीमा का उल्लङ्घन करना बुद्धिमान् पुरुष के पक्ष में अनुचित है ॥३७-३८॥

अथ स्थानशोधनानि

देवीपुराण में उक्त है—विष्णु, रुद्र एवं ब्रह्मादि देवश्रेष्ठवृन्द को शुभ स्थान में स्थापन करना कर्त्तव्य है,

गर्त्तादिलक्षणा धात्री गन्धास्वादेन या भवेत् । वर्णेन च सुरश्रेष्ठ सा मही सर्व्वकामदा ॥४०

मात्स्ये—

पूर्व्वं भूमिं परीक्षेत पश्चाद्वास्तुं प्रकल्पयेत् । श्वेता रक्ता तथा पीता कृष्णा चैवानुपूर्व्वशः ।
विप्रादेः शस्यते भूमिरतः कार्य्यं परीक्षणम् ॥४१॥

विप्राणां मधुरास्वादा कषाया क्षत्रियस्य च । कषायकटुता तद्वद्वैश्य- शूद्रेषु शस्यते ॥४२॥

अरत्निमात्रे वै गर्त्ते स्वनुलिप्ते च सर्व्वतः । घृतमामशरावस्थं कृत्वा वर्त्तिचतुष्टयम् ।
ज्वालयेद्भूपरीक्षार्थं पूर्णं तत् सर्व्वदिङ्मुखम् ॥४३॥

दीप्तां पूर्व्वादि गृह्णीयाद्वर्णानामनुपूर्व्वशः । वास्तुः सामूहिको नाम दीप्यते सर्व्वतस्तु यः ।
शुभदः सर्व्ववर्णानां प्रासादेषु गृहेषु च ॥४४॥

अरत्निमात्रकं गर्त्तं परीक्ष्यं खातपूरणे । अधिके श्रियमाप्नोति न्यूने हानिं समे समम् ॥४५॥

---

सुगन्धादिलक्षिता च या भवेत् ॥४०॥

विप्र-क्षत्रिय-वैश्य-शूद्राणां क्रमेण श्वेतादिभूमिः प्रशस्ता भवति ॥४१॥

आमशरावस्थं घृतं कृत्वा तत्र च वर्त्तिचतुष्टयं कृत्वा, तच्च वर्त्तिचतुष्टयं सर्व्वदिङ्मुखं चतुर्द्दिगभिमुखं पूर्णं कृत्वा भूपरीक्षार्थं प्रज्वालयेत् । पूर्णमिति घृतविशेषणं वा ॥४३॥

तत्र च प्रादक्षिण्येन सम्यग् दीप्तिविशेषेण दीप्तां वर्त्तिं लक्षीकृत्य पूर्व्वादि-दिशमारभ्य क्रमेण विप्रादीनां शुभं जानीयादित्यर्थः । तत्र यदि वर्त्तिद्वयमधिकं दीप्यते, तदा द्वयोरेव शुभं, तत्र च पूर्व्वदक्षिणयोश्चेत्तर्हि विप्रक्षत्रिययोः पूर्व्वोत्तरयोश्चेत्तर्हि विप्रशूद्रयोरित्येवमूह्यम् । यत्र च वर्त्तिचतुष्टयं सर्व्वमेवाधिकं दीप्यते, तत्र सर्व्वेषामेव शुभमित्याह—वास्तुरिति ॥४४॥

कथं परीक्ष्यम्? तदाह—खातस्य तद्गर्त्तस्य तन्मृत्तिकादिना पूरणे सति यदि तन्मृत्तिकादिकमधिकमुद्धृतं स्यात्तर्हि शुभं स्यादित्यर्थः । तथा चोक्तं हयशीर्षदेवेन—'सम्पूर्य्यमाणे खाते तु तथाधिकमृदं शुभाम्' इति । एवमग्रेऽप्यूह्यम् ॥४५॥

---

अन्यथा वे भय उत्पन्न करते हैं। हे सुरश्रेष्ठ ! जो भूमि, गर्त्तादि लक्षणयुक्त एवं सुगन्धादि लक्षण विशिष्ट एवं जिसका वर्ण सुन्दर है, उसी को सर्व कामदायिनी जाननी चाहिये ॥३९-४०॥

मत्स्यपुराण में वर्णित है—प्रथमतः भूमि परीक्षा करके पश्चात् वास्तु की कल्पना करे। विप्रादि चतुः वर्ण के पक्ष में क्रमशः श्वेत, रक्त, पीत एवं कृष्णवर्ण भूमि प्रशस्त है। सुतरां परीक्षा द्वारा निरूपण करे। मधुरास्वादयुक्त भूमि ब्राह्मण के, काषायभूमि क्षत्रिय और वैश्य के एवं कटु आस्वादयुक्त भूमि शूद्र के पक्ष में प्रशस्त है ॥४१-४२॥

अरत्नि परिमित, सम्यक् प्रकार से गोमयोपलिप्त गर्त्त में घृतपूर्ण अपक्व शराव रखकर पूर्वादि चारों ओर में चारों बत्तियों को प्रज्वालित करे। यदि यह बत्तियाँ पूर्वादिदिक् में क्रम से एक एक ज्वलें तो, ब्राह्मणादि चारों वर्णों का शुभ निरूपण करे। यदि वर्त्तिचतुष्टय ही सम्यक् प्रज्वलित हो उठें तो उस वास्तु को 'सामूहिक वास्तु' कहते हैं। प्रासाद वा गृहनिर्म्माण काल में उक्त सामुहिक वास्तु विप्रादि वर्ण के पक्ष में शुभदायक जानना चाहिये ॥४३-४४॥

अरत्नि परिमित गर्त्त करने के समय जो मृत्तिका उद्धृत (उखड़ती) होती है, यदि गर्त्त पूर्ण करने के समय उस मृत्तिका से गर्त्त पूर्ण न होकर और भी अधिक मृत्तिका की आवश्यकता हो, तो, शुभ कारक है, न्यून होने पर अशुभ कारक और समान होने पर समान फल समझना चाहिये ॥४५॥

कालकृष्टेऽथवा देशे सर्व्वबीजानि रोपयेत् । त्रिपञ्चसप्तरात्रेण यत्र रोहन्ति तान्यपि ।
ज्येष्ठोत्तम-कनिष्ठा भूवर्ज्जनीयेतरा सदा ।।४६।।

हयशीर्षे—

सुरभीणां रतिर्यत्र सवत्सानां वृषैः सह । सुन्दरीणां रतिर्यत्र पुरुषैः सह सत्तम ।।४७।।
राज्ञां पूर्व्वं गृहं यस्यामग्नीनां यज्वनां तथा । काश्मीरचन्दनामोदा कर्पूरागुरुगन्धिनी ।।४८।।
कमलोत्पलगन्धा च जातिचम्पकगन्धिनी । पाटलामल्लिकागन्धा नागकेशरगन्धिनी ।।४९।।
दधिक्षीराज्यगन्धा च मदिरासवगन्धिनी । सुगन्धिव्रीहिगन्धा च शुभद्रव्यस्वना च या ।
सर्व्वेषां वर्णिनां भूमिः सर्व्वसाधारणी मता ।।५०।।
दुर्गन्धा दुःस्वना या च नानावर्णा च दुर्भगा । वृत्तार्द्धचन्द्रसदृशी विस्ताराद्द्विगुणायता ।।५१
विवर्णा वर्णहीना च चक्रा सूचिमुखा तथा । द्विवर्णा सूर्पसदृशी गोमुखा च त्रिकोणिका ।५२
षड़स्रा शूलसदृशी दण्डिपृष्ठोपमा च या । सरीसृपसमा या च दिङ्मूढ़ा शकटाकृतिः ।
एवम्प्रकारा या भूमिर्वर्ज्ज्या यत्नेन देशिकैः ।।५३।।

किञ्च—

प्रासादस्य विशेषेण प्रोक्ता भूमिश्चतुर्व्विधा । सुपद्मा भद्रिका पूर्णा धूम्रा वेगिन्यथापि सा ।।५४
तिलकैर्नारिकेलैश्च वर्हिःकाशैश्च शोभिता । पद्मेन्दीवरसंयुक्ता सा सुपद्मेति विश्रुता ।।५५।।

त्रिरात्रेण यस्यां बीजानि रोहन्ति, सा ज्येष्ठा, पञ्चरात्रेण यस्यां सा मध्या, सप्तरात्रेण च यस्यां सा कनिष्ठा भूर्ज्ञेया इत्यर्थः । तत्र चाण्डिकां कनिष्ठां च वर्ज्जयेत् । पाठान्तरेऽपि स एवार्थः ।।४६।।
विवर्णा—दुर्वर्णा ।।५२।।

अनन्तर हलकृष्ट भूमि में सब प्रकार बीजरोपण करना कर्त्तव्य है । जिस क्षेत्र में त्रिरात्र के मध्य में बीज से अङ्कुर उत्पन्न हो, वही क्षेत्र श्रेष्ठ है । जिस खेत में पाँचरात्रि के मध्य में बीज से अङ्कुर उत्पन्न हो, वह मध्यम, और जिस क्षेत्र में सप्ताह के पश्चात् बीज से अङ्कुर की उत्पत्ति हो, उसको कनिष्ठ जानना चाहिये । श्रेष्ठ, मध्यम और कनिष्ठ के अतिरिक्त अन्य क्षेत्र सर्वदा वर्जनीय है ।।४६।।

हयशीर्ष पञ्चरात्र में लिखित है—जिस स्थान में सवत्सा धेनु के सहित वृषभ समूह केलि करते रहते हैं, जिस स्थान में रूपवती स्त्रियों के सहित पुरुष विहार करते हैं, जिस भूमि की पूर्व दिशा में राजा अग्नि और याज्ञकवृन्द का निवास है, जिस भूमि पर काश्मीर, चन्दन, अगर, कर्पूर, पद्म, उत्पल, जाती, चम्पक, पाटला (पाटलफुल), मल्लिका, नागकेशर, दधि, दुग्ध, घृत, मद्य वा आसव के सदृश गन्धयुक्त, जो भूमि, सुगन्धित व्रीहि के समान गन्धपूर्ण है, जिस भूमि में शुभ द्रव्य का शब्द सुनाई देता है, और जिस भूमि में ब्रह्मचारी वास करते हैं, उसी को सर्व वर्ण की सर्व साधारणी भूमि कहते हैं । दुर्गन्धपूर्ण, दुःशब्दयुक्त और विविध वर्णयुक्त भूमि दुर्भगा कही गई है । जो भूमि वृत्ताकार (गोलाकार), अर्द्ध चन्द्राकार, विहित परिमाण से द्विगुण विस्तृत, विकृत वर्ण, वर्णशून्य, वक्र, सूचिमुख, द्विवर्ण, सूर्पवत्, गोमुखाकार, त्रिकोण, षट्कोण, शूलाकृति, करिपृष्ठ सदृश, सर्प वृश्चिकादि सरीसृप तुल्य, दिङ्मूढ़ शकटाकार है, आचार्य्यगण, यत्नपूर्वक ऐसी भूमि को परित्याग करें ।।४७-५३।।

और भी लिखित है—प्रासाद निर्म्माण हेतु भूमि चतुर्विध हैं,-सुपद्मा, भद्रिका, पूर्णा, धूम्रा वा योगिनी है । जो भूमि, चतुर्द्दिक से तिलक, नारिकेल, कुश और काशवृक्ष द्वारा शोभित है, एवं जो पद्म एवं इन्दीवर

नदीसमुद्रायतनतीर्थपर्य्यन्तशोभिता । पुष्पवृक्षसमाकीर्णा क्षीरवृक्षोपशोभिता ॥५६॥

वनोद्यान-लतागुल्म-फुल्लस्तम्ब-समावृता । यज्ञीयवृक्षसुक्षेत्रयुक्ता भद्रेति कीर्त्तिता ॥५७॥

वकुलाशोकबहुला तथा प्लक्षाम्रलोहितैः । माधवीवेष्टिता या च मुद्गनिष्पावकोद्रवैः ॥५८॥

शूकधान्यैश्च पुन्नागैर्गिरिपार्श्वगता च या ।
तोयञ्च स्वल्पक यस्यां सा पूर्णा परिकीर्त्तिता ॥५९॥

विल्वार्कस्नुहिपोलूनां वनैर्या परितो वृता । सशर्करा च कठिना युक्ता कण्टकिभिर्द्रुमैः ॥६०॥

गृध्रगोमायुकाकानां श्येनानां या कुलाकुलैः ।
धूम्रेति कीर्त्तिता सा तु तां यत्नात् परिवर्ज्जयेत् ॥६१॥

ततो भूमिं परीक्षेत पूर्व्वोदक्प्रवणां शुभाम् । असङ्कटां तथाच्छन्नामल्पतोयां परिप्लुताम् ॥६२

सम्पूर्य्यमाणे खाते तु तथाधिकमृदं लभेत् । कुसुम्भसदृशं वर्णं यस्यां न म्लानिमृच्छति ॥६३

न निर्व्वाति तथा दीपस्तोयं शीघ्रं न जीर्य्यते ।
श्वेतारुणा पीतकृष्णा विप्रादीनां प्रशस्यते ॥६४॥

आज्यासृग्गन्धमद्यानां तुल्यगन्धा तु या भवेत् ।
मधुरा च कषाया च अम्ला च कटुका च या ॥६५॥

कुशैः शरैस्तथा काशैर्दूर्व्वाभिर्या च संवृता ।
तस्यां पुण्येऽथ नक्षत्रे कुर्य्याद्भूमिपरिग्रहम् ॥६६॥

---

प्लक्षादिभिर्विशिष्टा, एवमग्रेऽपि ज्ञेयम् । स्नुहिः— शिजुः ॥५८-६०॥

आज्यादिभिस्तुल्यो गन्धो यस्याः सा । तत्राज्यं घृतम्, असृक् रक्तं, गन्धः—अगुर्वादिसाधितसुगन्धिरस-विशेषः ॥६५॥

---

युक्त है, उसको सुपद्मा कहते हैं। जो, नदी और सागरायतन तीर्थ पर्य्यन्त विराजित है, पुष्पवृक्षों से समाकीर्ण, क्षीर वृक्ष से शोभित, वन, उद्यान, लता, गुल्म और फुल्लस्तम्बों से समाकीर्ण, और जो यज्ञीय तरु तथा सुक्षेत्रयुक्त है, उसी भूमि का नाम भद्रा है। जो, वकुल, अशोक, प्लक्ष, आम्र और लोहित वृक्ष से सुशोभित है, माधवी द्वारा परिवेष्टित है, मूँग, निष्पाव, कोदों शुकधान्य ओर पुन्नाग से समाकीर्ण है, जो गिरि पार्श्वस्थ और जिसमें थोड़ा जल रहता है, एसो भूमि को पूर्णा कहते हैं। जो विल्व, अर्क, स्नुहि एवं पीलु वृक्ष के वन द्वारा सर्वथा वेष्टित, शर्करा समन्वित, कठिन, कल्पतरु समूह से समाकीर्ण एवं गृध्र, गोमायु, वायस, श्येन,–यह सबके द्वारा वेष्टित है, उसको धूम्रा कहते हैं। इस प्रकार भूमि को यत्नपूर्वक वर्जन करे। यथाविधि भूमि ग्रहण पूर्वक उसकी परीक्षा करनी चाहिये। जिस भूमि की पूर्व एवं उत्तरदिक् नत, शुभ, अदुर्गम एवं तृणादि से आवृत अल्प जलयुक्त, जिस स्थान के गर्त्त को पूर्ण करने के निमित्त उत्तोलित मृत्तिकासमूह की आवश्यकता नहीं होती है, जो कुसुम्भ वर्ण अम्लान है, जहाँ दीप निर्वापित नहीं होता है, जिसका जल शुष्क नहीं होता है, उस प्रकार भूमि हीं प्रशस्ता है। विप्रादि चार वर्ण के निमित्त क्रमपूर्वक श्वेत, अरुण, पीत एवं कृष्णवर्ण भूमि प्रशस्ता है, जिस भूमि की गन्ध, घृत, रक्त, सुरा एवं अगुरु के सदृश है। जिस भूमि का आस्वाद मधुर, कषाय, अम्ल व कटु है, जो कुश, शर, काश एवं दूर्वा द्वारा आवत है, पवित्र नक्षत्र में ऐसी भूमि ही ग्रहण करनी चाहिये ॥५४-६६॥

अथ भूमिपरिग्रहः

तत्रैव—

प्राकारसीमापर्य्यन्तं ततो भूतबलिं हरेत् ।।६७।।

माषं हरिद्राचूर्णञ्च सलाजा दधिशक्तवः । एभिर्भूतबलिं दत्त्वा सूत्रमष्टाक्षरेण तु ।
पातयित्वा ततः शङ्कूनष्टदिक्षु निवेशयेत् ।।६८।।

राक्षसाश्चापि भूताश्च येऽस्मिंस्तिष्ठन्ति भूतले । ते सर्व्वे व्यपगच्छन्तु स्थानं कुर्य्यामहं हरेः ।
इत्यनुज्ञाप्य भूतादीन् तां भूमिं परिशोधयेत् ।।६९।।

आदित्यादिग्रहाणाञ्च लोकपालैः समङ्कृती । आज्येनेष्टविधानेन ततो वै होममाचरेत् ।।७०।।

चरुहोमं ततः कुर्य्यान्मूलमन्त्रेण देशिकः । दद्यात् पूर्णाहुतिं पश्चाद्वौषडन्तेन देशिकः ।।७१।।

वृषभौ कपिलौ गृह्य सवर्णौ वा विचक्षणः । योजनार्थं हलञ्चैव गृह्णीयादसनोद्भवम् ।।७२।।

प्राङ्मुखं योज्य मन्त्रज्ञो वस्त्रालङ्कारभूषितः । आसनीं यष्टिमादाय द्वादशाक्षरविद्यया ।
सम्मर्द्दनं समीकृत्य शुभवीजानि वापयेत् ।।७३।।

सम्प्राप्ते शुभकाले तु गोभिस्तत् खादयेद्बुधः । पुनस्तत् कर्षयित्वा तु समीकृत्य ग्रहं गुरुः ।।७४

मात्स्ये च—

हीनाधिकाङ्गतां वास्तोः सर्व्वतः परिवर्ज्जयेत् । नगरग्रामदेशेषु सर्व्वत्रैव विवर्जयेत् ।।७५।।

---

लोकपालैरिन्द्रादिभिः समं समन्वितानामादित्यादिग्रहानां होमं कुर्यात् ।।७०।।
गृह्य गृहीत्वा, असनः चारवृक्षः, तद्भवम् । हलस्येति पाठे हलमिति शेषः ।।७२।।
योज्य योजयित्वा । समीकृत्य तद्भूतलम् ।।७३।।
तत् तत्र जातं शस्यादि, तं प्रदेशं, तदिति वा पाठः, गृहं प्रारभेदिति शेषः ।।७४।।
भूमिपरिगेहे च किञ्चिद्विशेषमन्यं लिखति - हीनेति । सर्व्वतः समन्ताद्भूतल समं कुर्य्यादित्यर्थः ।।७५।।

---

अथ भूमिपरिग्रहः

हयशीर्ष पञ्चरात्र में ही उक्त है—अनन्तर माष, हरिद्राचूर्ण, दधि एवं शक्तु,-इन सब वस्तुओं के द्वारा प्राकार की सीमा पर्य्यन्त भूतबलि अर्पण करके अष्टाक्षर मन्त्र से सूत्रपात करे । तत्पश्चात् अष्टदिक् की भूमि में आठ शङ्कु (कीलें) प्रोथित करनी चाहिये । पश्चात् जो इस भूमि में वास करते हैं, वे राक्षस और भूतगण इस स्थान को छोड़कर चले जाँय, मैं श्रीहरि के निमित्त मन्दिर निर्म्माण करता हूँ' भूतवृन्द को इस प्रकार विज्ञापन करके भूमि शोधन करे । अनन्तर कृतीव्यक्ति, लोकपालवर्ग एवं आदित्यादि ग्रहवृन्द के निमित्त इष्ट विधान के अनुसार घृत होम करे । पश्चात् देशिक, मूल-मन्त्र से चरु होम करके बौषडन्त मन्त्र से पूर्णाहुति अर्पण करे । तत्पश्चात् बुद्धिमान् व्यक्ति कपिलवर्ण अथवा सवर्ण (समान वर्ण) दो वृष लेकर जोतने के निमित्त असन वृक्ष (चार वृक्ष–विजयसार) का बना हुआ हल ग्रहण करे । मन्त्रज्ञ व्यक्ति, वस्त्र भूषण से भूषित होकर पूर्वमुख में हल योजन पूर्वक द्वादशार्ण मन्त्र से असन काष्ठ निर्म्मित यष्टि ग्रहण पूर्वक भूमि को सम्मर्दन द्वारा समान करके पवित्र बीजारोपण करे । पुनर्वार शुभ समय उपस्थित होने पर बुद्धिमान् व्यक्ति गोगण द्वारा उस खेत से उत्पन्न धान्यादि भोजन कराकर पुनर्वार उसको जोतकर उसमें गृहनिर्म्माण आरम्भ करे ।।६७-७४।।

मत्स्य पुराण में लिखित है—वास्तु को सर्वथा समान करना चाहिये । हीन वा अधिक न हो, नगर, ग्राम वा देश में सर्वत्र ही हीन अथवा अधिक परित्याज्य है ।।७५।।

अथ दिक्साधनम्

हयशीर्षे —

वाह्यवास्तुं समं कृत्वा चतुरस्रं समन्ततः । भूमिं तोयसमां कृत्वा दर्पणोदरसन्निभाम् ।

द्वादशाङ्गुलमानेन चाष्टौ वारांस्तु भ्रामयेत् ॥७६॥

मध्ये सुनिश्चलं शङ्कुं स्थाप्य छायां निरीक्षयेत् ।

प्रवेशे निष्क्रमे तस्यां शङ्कुच्छायां निरूपयेत् ॥७७॥

शङ्कुच्छायाग्रह्निाभ्यां प्राक्प्रतीच्यौ प्रसाधयेत् ।

प्राक्प्रतीचीं गते सूर्य्ये उदग्यामौ प्रसाधयेत् ॥७८॥

वैष्णुवे विमले व्योम्नि शङ्कुना साधयेद्दिशम् । शरद्वसन्तयोरेवमादित्यात् साधयेद्दिशम् । ७९

प्राचीं वा पुष्पवेधेन चित्रास्वात्यन्तरेण वा । उदीचीं ध्रुववेधेन मध्ययोगेन चोन्नयेत् ॥८०॥

चतुरस्रां शिलां गृह्य इष्टकां वा सुशोभनाम् । चतुर्दिक्षु निवेश्याथ सूत्रचिह्नं तु कारयेत् । ८१

एवं कृत्वा सूत्रचिह्नं ब्राह्मणांस्तत्र भोजयेत् ।

वैष्णवान् पायसेनाग्र्यान् द्वादशैव समाहितः ॥८२॥

---

स्थाप्य स्थापयित्वा, तस्यां भूमौ, छायायाः प्रवेश निष्क्रमे च निर्गमे ॥७७॥

न च शङ्कुना सदा दिक्साधनं स्यादित्याह—वैषुवे इति । शङ्कुलक्षणं चोक्तं श्रीहयशीर्षदेवेन—'प्रशस्तं दारुमादाय सारवत् खदिरादिकम् । चतुरस्रं तु तद्दारु कारयित्वा तु शिल्पिना ॥ वृत्तं भूमिसमं कुर्य्यान्निर्व्रणं सुसमं तथा । द्वादशाङ्गुलमायाममग्रे चाङ्गुलमुच्यते ॥ मूले षड़ङ्गुलश्चास्य परिणाहः स्वमानतः । ह्रस्वात् ह्रस्वतरं कार्य्यमग्रेऽस्य यवमात्रकम् । भूमिच्छेदसमं कुर्य्यान्मूलमग्रं सुसम्मितम् ॥' इति । शरद्वसन्तयोरिति—प्रायस्तदानीं प्राचीदिङ्मध्य एवादितोदयात् ॥७९॥

मध्ययोगेन साधितप्राचीप्रतीचीमध्यप्रदेशद्वारेणैवेत्यर्थः । गृह्य गृहीत्वा ॥८०-८१॥

---

अथ दिक्साधनम्

हयशीर्ष में उक्त है—वाह्य वास्तु को समान करके सर्वथा चतुर्दिक् की भूमि को जल के समान वा दर्पण तुल्य अर्थात् समतल करके द्वादशाङ्गुल परिमित शङ्कु को आठ वार भ्रामण करावे । पुनर्वार मध्य स्थान में दृढ़ शङ्कु (मजबूत कीलें) स्थापन करके छाया को देखे । उस क्षेत्र में प्रवेश और निर्गम में छाया का निर्णय करना चाहिये । शङ्कु और छाया के अग्र इन दोनों से पूर्व पश्चिम को निर्णय करे । और सूर्य्य की पूर्व पश्चिम गति के द्वारा उत्तर दक्षिण को निरूपण करना चाहिये । विषुव संक्रान्ति के दिन निर्म्मल आकाश में शङ्कु के द्वारा दिक् निर्णय करना कर्त्तव्य है । शरत्काल एवं वसन्त ऋतु में इस प्रकार सूर्य्य के द्वारा दिक् साधन करना चाहिये । किंवा पुष्पवेध वा चित्रा स्वाती के मध्य के द्वारा पूर्वदिक् एवं ध्रुव-वेध वा मध्य योग द्वारा उत्तरदिक् निर्णय करे । चतुष्कोण शिला वा सुशोभन इष्टक लेकर चतुर्द्दिक में स्थापन करके सूत्रचिह्न करना चाहिये । तत्पश्चात् वहाँ ब्राह्मण भोजन करावे एवं समाहित होकर द्वादश संख्यक वैष्णव श्रेष्ठ को पायस भोजन कराना कर्त्तव्य है ॥७६-८२॥

अथ शल्योद्धरणम्

मात्स्ये—

गृहारम्भेऽतिकण्डूतिः स्वाम्यङ्गे यत्र जायते । शल्यन्त्वपनयेत्तत्र प्रासादे भवने तथा ।
सशल्यं भयदं यस्मादशल्यं भयनाशनम् ॥८३॥

हयशीर्षे—

आदिशेद्वास्तुनः शल्यं गृहिणोऽङ्गविकारतः । शकुनो दृश्यते वापि यस्य वा श्रूयते ध्वनिः ।
कीर्त्यते यस्य वै नाम शल्यं तस्य विनिर्द्दिशेत् ॥८४॥

अथ वास्तुमण्डलम्

मात्स्ये—

पञ्चगव्यौषधिजलैः परीक्षित्वावसेचयेत् । एकाशीतिपदं कुर्य्याद्रेखाभिः कनकेन तु ॥८५॥

---

स्वामी गृहकर्त्ता, तस्याङ्गे गात्रे, यत्र यस्मिन् स्थाने ॥८३॥

अङ्गविकारः कण्डूयनादिः तस्मात् । कीदृशं तच्छल्यम्? इत्यत्राह—शकुन इति । तस्य शकुनस्यास्थ्यादि-रूपं शल्यम् ॥८४॥

परीक्षित्वा 'पूर्व्वं भूमिं परीक्षेत' इत्यादिनोक्तप्रकारं भूमिपरीक्षणं कृत्वा । ततः पञ्चगव्यैरोषधिजलैश्च भूमिमवसेचयेत् प्रोक्षेत । अत्र चाय ग्रन्थानुसारेण शिष्टसम्मतो विशेषो ज्ञेयः । प्रथमं यजमानो मातृकार्च्चन-पूर्व्वकं वृद्धिश्राद्धमाभ्युदयिकं विधाय प्राङ्मुखमासीन उदङ्मुखांस्त्रीन् ब्राह्मणानुपवेश्य चन्दन-पुष्पाक्षत-ताम्बूलवासोहिरण्यैरभ्यर्च्चर्य । 'ॐ पुण्याह भवन्तो ब्रुवन्तु' इति प्रथमं ब्राह्मणवाचनम् । 'ॐ ऋध्यताम्' इतिवाचनं त्रिः कुर्य्यात् । ततो भगवत्प्रीतये 'अमुकवास्तुकर्म्माहं करिष्ये, तत्र त्वमाचार्य्यो भव' इति आचार्य्यं वृणुयात् । 'भवामि' इत्याचार्य्येणाभिहिते तच्छास्त्रोक्तविधिना तमर्च्चयेत् । तत आचार्य्यो गायत्र्या गोमूत्रं, 'गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्व्वभूतानां त्वामिहोपह्वये श्रियम् ॥' इति मन्त्रेण गोमयम् । 'ॐ आप्यायस्व समेतु ते विश्वतः' इत्यादि-मन्त्रेण दुग्धम् । 'दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिना । सुरभिनो मुखाकरत् प्राणआयुंसि तारिषत् ॥' इत्यादिमन्त्रेण दधि । 'तेजोऽसि, शुक्रमसि, अमृतमसि, धामनामासि, प्रियं देवानामनाधृष्टं देवयजनमसि' इति मन्त्रेण घृतम् । 'ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्वाहुभ्यां, पुष्णो हस्ताभ्यां, सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामि' इति मन्त्रेणोदकम् । एवं पृथक् पृथक् अभिमन्त्र्य सर्व्वमेकीकृत्य तेन पञ्चगव्येनोदकेन च तां भूमिं प्रोक्षेतेति । तन्मध्ये च कनकेनेति । स्वर्णशलाकयेति ज्ञेयम् । तदभावे रजत-फल-पुष्प-धान्यानामन्यतमेनापि रेखाः कृत्वा ताभिरेकाशीतिपदं नाम वास्तुमण्डलं कुर्य्यादित्यर्थः ॥८५॥

---

अथ शल्योद्धरणम्

मत्स्यपुराण में लिखित है—जहाँ गृहनिर्म्माण करने में प्रवृत्त होने पर गृहकर्त्ता के शरीर में खुजली उत्पन्न हो, वहाँ प्रासाद वा भवन निर्म्माण करने के पहले शल्योद्धार करना कर्त्तव्य है। कारण, शल्य विद्यमान होने पर वह स्थान भय का कारण होता है। सुतरां शल्यहीन स्थान भयहारी कहा गया है ॥८३

हयशीर्ष में कथित है—गृहकर्त्ता की अङ्गविकृति को देखकर ही वास्तु का शल्य निर्णय करना चाहिये अर्थात् गृहस्वामी के शरीर में कण्डूति दृष्ट होने पर समझना होगा कि उस स्थान में शल्य है। जो शकुन दिखाई दे, वा जो शब्द सुना जाय, उसी का शल्य (अस्थि आदि) उस स्थान में हैं, ऐसा समझना चाहिये। ॥८४॥

अथ वास्तुमण्डलम्

मत्स्यपुराण में वर्णित है—भूमि परीक्षा के पश्चात् पञ्चगव्य एवं ओषधिजल से सेचन पूर्वक स्वर्ण-

पश्चाल्लेपेन चालिप्य सूत्रेणालोड्य सर्व्वतः । दश पूर्व्वायता रेखा दश चैवोत्तरायताः ।
सर्व्ववास्तुविभागेषु विज्ञेया नवका नव ॥८६॥

एकाशीतिपदं कृत्वा वास्तुवित् सर्व्ववास्तुषु । पदस्थान् पूजयेद्देवान् त्रिंशत् पञ्चदशैव च । ८७
द्वात्रिंशद्वाह्यतः पूज्याः पूज्याश्चान्तस्त्रयोदश ।
नामतस्तान् प्रवक्ष्यामि स्थानानि च निबोध मे ॥८८॥

ईशकोणादिषु सुरान् पूजयेच्च विधानतः । शिखी चैवाथ पर्ज्जन्यो जयन्तः कुलिशायुधः ॥८९
सूर्य्यः सत्यो भृशश्चैव आकाशो वायुरेव च । पूषा च वितथश्चैव गृहक्षतयमावुभौ ॥९०॥
गन्धर्व्वो भृङ्गराजश्च मृगः पितृगणस्तथा । दौवारिकोऽथ सुग्रीवः पुष्पदन्तो जलाधिपः ॥९१
असुरः शोषपापौ च रोगोऽहिर्मुख्य एव च । भल्लाटः सोमसर्पौ च अदितिश्च दितिस्तथा ।
वहिर्द्वात्रिंशदेते तु तदन्तश्च सुरान् शृणु ॥९२॥

---

तत्प्रकारमेवाभिव्यञ्जयति—पश्चादिति द्वाभ्याम् । नवका नवेति एकाशीतिरित्यर्थः । अत्र चायं विशेषः—'शान्ता यशोवती कान्ता विशाला प्राणवाहिनी । सती सुमना नन्दा सुभद्रा सुरथा' इतिसंज्ञिका दश प्राक् पश्चिमायता दक्षिणोपक्रमा उदगपवर्गा रेखाः कृत्वा तदुपरि हिरण्या सुव्रता लक्ष्मीर्विभूतिर्विमला प्रिया जया कला विशोका च ईडेतिसंज्ञिका दश दक्षिणोत्तरायताः पश्चिमोपक्रमाः पूर्व्वापवर्गा रेखाः कुर्य्यात् । ततः शुक्लरङ्गसूत्रडोरेण ताः सम्यङ्निर्म्माय नवभिर्नवकैरेकाशीतिपदानीति मण्डलं कुर्य्यादिति ॥८६॥

त्रिंशत् पञ्चदश चेति पञ्चचत्वारिंशतमित्यर्थः ॥८७॥

तत्रैव विशेषमाह—द्वात्रिंशदिति । वाह्यतः मण्डलस्य चतुर्दिक्षु वाह्यपङ्क्तिद्वये, अन्तश्च तदभ्यन्तरे॥८८

ईशकोणादिषु पञ्च, ईशानकोणमारभ्य वक्ष्यमाणविधिना शिख्यादिपञ्चचत्वारिंशद्देवान् पूजयेत् । तानेव यथास्थानं विभज्य दर्शयन् आदौ क्रमेण द्वात्रिंशद्देवानाह—शिखीति सार्द्धत्रयेण ॥८९॥

एते शिखिप्रभृतयो द्वात्रिंशद्देवा वहिर्मण्डलवाह्यपङ्क्तिद्वयस्य द्विपञ्चाशत्पदेषु पूज्या इत्यर्थः । तत्र च वक्ष्यमाणवचनादेकपदा द्वादश, द्विपदाश्च विंशतिर्ज्ञेयाः । एतच्चाग्रे व्यक्तं भावि ॥९२॥

---

शलाकाकृत रेखा द्वारा एकाशीति पद (वास्तुमण्डल) निर्म्माण करे । तत्पश्चात् गोमयादि द्वारा लेपनपूर्वक श्वेत सूत्र से वेष्टन करके पूर्वायत दश रेखा एवं उत्तरायत दश रेखा करे । तत्पश्चात् सर्व वास्तु विभाग में उस प्रकार रेखा करके तदुपरि नवक से नवगुणित करके एकाशीतिपद (इक्यासी) रचना करके पदस्थित पञ्चचत्वारिंशत् देवता की पूजा करनी चाहिये ॥८५-८७॥

इन सब देवता के मध्य में मण्डल के चतुर्दिक में वाह्य पङ्क्तिद्वय में द्वात्रिंशत्संख्य देवता एवं अभ्यन्तर भाग में त्रयोदश संख्यक देवता की पूजा करनी चाहिये । इन सब देवताओं के नाम और स्थान का वर्णन करता हूँ, श्रवण करो । ईशानकोण प्रभृति में यथाविधि देववृन्द की पूजा करनी चाहिये । जो क्रमानुसार शिखी, पर्जन्य, जयन्त, कुलिशायुध, सूर्य्य, सत्य, भृश, आकाश, वायु, पूषा, यम, गन्धर्व, भृङ्गराज, मृग, पितृगण, दौवारिक, सुग्रीव, पुष्पदन्त, जलाधिप, असुर, शोष, पाप, रोग, अहि, मुख्य, मल्लाट, सोम, सर्प, अदिति एवं दिति नाम से कथित है । वहिर्भाग में इन बत्तीस देवताओं की पूजा करे । सम्प्रति अभ्यन्तरस्थ (भीतरी) देवताओं के नामों को कहता हूँ, सुनो ॥८८-९२॥

ईशानादिचतुष्कोणसंस्थितान् पूजयेद्बुधः । आपश्चैवाथ सावित्रो जयो रुद्रस्तथैव च ॥९३॥

मध्ये नवपदो ब्रह्मा तस्याष्टौ च समीपगाः ।
सर्व्वानेकोत्तरान् विद्यात् पूर्व्वादीन् नामतः शृणु ॥९४॥
अर्य्यमा सविता चैव विवस्वान् विबुधाधिपः ।
मित्रोऽथ राजयक्ष्मा च तथा पृथ्वीधरः क्रमात् ॥९५॥

अष्टमश्चापवत्सश्च परितो ब्रह्मणः स्मृताः । पापश्चैवापवत्सश्च पर्ज्जन्योऽग्निर्दितिस्तथा ॥९६
पदिकानां च वर्गोऽयमेवं कोणेष्वशेषतः । तन्मध्ये तु वहिर्विशद्विपदास्ते तु सर्व्वतः ॥९७॥
अर्य्यमा च विवस्वांश्च मित्रः पृथ्वीधरस्तथा । ब्रह्मणः परितो दिक्षु त्रिपदास्ते तु सर्व्वतः ॥९८

---

ईशानादिचतुष्कोणसंस्थितानिति वहिष्कोणचतुष्टयस्याधस्ताद्यद्द्वितीयपङ्क्तेः कोणचतुष्टयं, तत्र ईशानादिक्रमेण स्थितान् आपादीन् चतुरो देवान् पूजयेदित्यर्थः ॥९३॥

नवानि पदानि यस्य स नवपदस्थितो ब्रह्मा पूज्य इत्यर्थः । तस्य ब्रह्मणः समीपगाः पार्श्वाष्टदिक्षु चाष्टौ पूज्या इत्यर्थः । आदौ सामान्यतस्तेषां संस्थापनमाह—एको ब्रह्मा उत्तरो मध्यवर्त्ती येषां तथाभूतान् सर्व्वानष्टावपि जानीयात् । पाठान्तरे एकः सर्व्व एव अन्तरा मध्ये आविष्टः प्रविष्टो येषामिति तथैवार्थः । पूर्व्वादीनिति—पूर्व्वादिक्रमेण स्थितान् आपादीन् चतुरो देवान् पूजयेदित्यर्थः ॥९३॥

नवानि पदानि यस्य स नवपदस्थितो ब्रह्मा पूज्य इत्यर्थः । तस्य ब्रह्मणः समीपगाः पार्श्वाष्टदिक्षु चाष्टौ पूज्या इत्यर्थः । आदौ सामान्यतस्तेषां संस्थापनमाह— एको ब्रह्मा उत्तरो मध्यवर्त्ती येषां तथाभूतान् सर्व्वानष्टावपि जानीयात् । पाठान्तरे एकः सर्व्व एव अन्तरा मध्ये आविष्टः प्रविष्टो येषामिति तथैवार्थः । पूर्व्वादीनिति—पूर्व्वदिक्रमेण स्थितान् इत्यर्थः ॥९४॥

तानेवाह—आपश्चेति सार्द्धद्वयेन । आपादयः पञ्च ॥९६॥

पदिकानां पदानां पदवतां वा मध्ये । एक एवायं ज्ञेयः । पार्श्ववर्त्तित्वेन परस्परमेकत्र मिलितत्वादेकपदत्वाच्चेति दिक् । एवमनेनोक्तप्रकारेण कोणेषु अन्यस्मिन् कोणत्रयेऽपि पूर्व्ववदन्योऽन्यर्मिलितैरेव पदैः पञ्चपञ्चभिरेकैको वर्गो ज्ञेय इत्यर्थः । तत्र च मण्डलस्येशानकोणे शिखी, तस्य वामे दितिः, दक्षिणे पर्ज्जन्यः, अधश्चापः, तदधश्चापवत्स इति पञ्चभिरेको वर्गः । आग्नेये च वायुः, तस्य वामे आकाशः, दक्षिणे पूषा, अधः सावित्र्यः, तदधश्च सवितेति पञ्चभिरन्यः । नैर्ऋते पितृगणः, तस्य वामे मृगः, दक्षिणे दौवारिकः, अधो जयः, तदधस्ताच्च विबुधाधिप इति पञ्चभिरपरः । वायव्ये च रोगः, तस्य वामे पापः, दक्षिणे अहिः, अधो रुद्रस्तदधस्ताच्च राजयक्ष्मेति पञ्चभिः परः । अशेषत इत्यनेन चान्यत्रापि सर्व्वत्र वक्ष्यमाणप्रकारेण वर्गं ऊह्यः । तथा हि—मण्डलस्य पूर्व्वस्मिन् भागे जयन्तादिभिर्द्विपदैः पञ्चभिरेकः, दक्षिणे तथैव वितथादिभिरेकः, पश्चिमे

---

सुधी व्यक्ति, ईशानादि चतुष्कोणस्थित इन सब देवताओं की पूजा करे । वे क्रमशः आप, सावित्र, जय रुद्र एवं मध्य में नवपद ब्रह्मा नाम से अभिहित हैं । ब्रह्मा के समीप में आठ जन स्थित हैं । प्रत्येक के पीछे एक एक देवता अवस्थित है । अधुना पूर्वादिविन्यस्थ देवतावृन्द का नाम कीर्त्तन करता हूँ, श्रवण करो । ब्रह्मा के चतुर्दिक में जो आठ जन अवस्थित हैं, वे क्रमशः अर्य्यमा, सविता, विवस्वान्, विबुधाधिप, मित्र, राजयक्ष्मा, पृथ्वीधर और आपवत्स नाम से विख्यात हैं । कोणसमूह स्थित पद में जो अवस्थित हैं, वे आप, आपवत्स, पर्जन्य, अग्नि एवं दिति हैं । उनके मध्य में वहिर्देश में विंशति द्विपद अवस्थित हैं । ब्रह्मा के चतुर्दिक् में चार, त्रिपद अवस्थित हैं, वे अर्य्यमा, विवस्वान्, मित्र एवं पृथ्वीधर नाम से ख्यात हैं ॥९३-९८

वंशानिदानीं वक्ष्यामि रज्जूरपि पृथक् पृथक् ।
वायुं यावत्तथा रोगात् पितृभ्यः शिखिनं तथा ॥९९॥
मुख्याद्भृशं तथा शोषाद्वितथं यावदेव तु । सुग्रीवाददितिं यावद्भृङ्गात् पर्ज्जन्यमेव च ॥१००
एते वंशाः समाख्याताः क्वचिदृजव एव तु ॥१०१॥
एतेषां यस्तु सम्पातः पदमध्यं समं तथा । मर्म्म चैतत् समाख्यातं त्रिशूलं कोणगञ्च यत् ॥१०२
स्तम्बन्यासेषु वर्ज्ज्यानि तुला वेधेषु सर्व्वदा । कीलोत्सृष्टोपघातादि वर्ज्जयेद्यत्नतो नरः ।
सर्व्वत्र वास्तुर्निर्दिष्टः पितृवंशोत्तरायतः ॥१०३॥
मूर्द्धन्यग्निः समाविष्टो मुखे चापः समास्थितः ।
पृथ्वीधरोऽर्य्यमा चैव स्तनयोस्तावधिष्ठितौ ॥१०४॥

---

तथैव-सुग्रीवादिभिरेकः, उत्तरे च तथैव मुख्यादिभिरेकः, मध्येऽपि ब्रह्मणा तच्चतुर्दिक्स्थितैश्चार्य्यमादिभिश्चतुर्भिरेवं पञ्चभिरेवैक इत्येवं नववर्गाः, तैश्च पञ्चचत्वारिंशद्देवता भवन्तीति । इत्थमेवाग्रे वक्ष्यमाणवास्तुपुरुषस्य मस्तकाद्यङ्गेषु क्रमेण शिख्यादिदेवतापूजाविधिरपि सङ्गच्छत इति दिक् । तेषां कोणस्थितानां मध्ये वहिश्चापवत्स्याद्यधिष्ठितपदपङ्क्तितो वाह्यपङ्क्तिद्वये एकस्यां दिशि द्विपदाः पञ्चेत्येव सर्व्वतः चतुर्दिक्षु विंशतिर्द्विपदा ज्ञेया इत्यर्थः । तत्र च पूर्व्वस्यां दिशि पर्ज्जन्यदक्षिणतो वहिरेकपदे तदधश्चान्तरेकपदे, एवं पदद्वये क्रमेण जयन्तादयः पञ्च, दक्षिणस्यां तथैव वितथादयः पञ्च, पश्चिमायां तथैव सुग्रीवादयः पञ्च, उत्तरस्यां तथैव मुख्यादयः पञ्चेत्येवं ज्ञेयम् । चत्वारश्चात्र पदा इत्याह—अर्य्यमेति । एवं सर्व्वे एकपदा विंशतिः, द्विपदाश्च विंशतिः, त्रिपदाश्चत्वारः, नवपदश्चैको ब्रह्मा, तत्र च वहिरेकपदा द्वादश, द्विपदाश्च विंशतिरेव, वहिष्कोणचतुष्टयादधः कोणचतुष्टये चत्वार एकपदाः, ब्रह्मणः पूर्व्वादिदिक्षु त्रिपदाश्चत्वारः । तस्यैव चतुष्कोणेषु चत्वारश्चैकपदा एवेत्येवमेकाशीति-पदेषु पञ्चचत्वारिंशद्देवताः पूज्या इति वाराह्यादिसम्मत्या शिष्टाचारतो ज्ञेयम् ॥९७-९८॥

प्रसङ्गाद्वास्तुमण्डले वंशानाह—वंशानीति द्वाभ्याम् । ऋजूनिति पाठे वंशानां विशेषणम् । रोगपदाद्वायुपदं यावदेको वंशः । एवमन्येऽप्यग्रे ज्ञेयाः ॥९९॥ एते—षड् वंशाः ॥१०१॥

वंशकथन प्रयोजनमाह—एतेषामिति द्वाभ्याम् । तत्र सम्पातः—द्वाभ्यामेकत्र संश्लेषः ॥१०२॥

वास्तुपुरुषस्याङ्गेषु तत्तद्देवतापूजां विभज्य वक्ष्यन् आदौ तस्य देहेयत्तामाह—सर्व्वत्रेत्यर्द्धेन । शिखिनमारभ्य शिखिनं यावद्यो वंशस्तस्योत्तरमन्तं यावदायतो वास्तुपुरुष इत्यर्थः ॥१०३॥

अधोमुखपतितस्य वास्तुपुरुषस्य मूर्द्धनि समाविष्टः अधिष्ठितोऽग्निः पूजनीय इत्यर्थः । एवमग्रेऽपि ज्ञेयम् ॥१०४॥

---

अधुना वंश एवं रज्जुसमूह का वर्णन करता हूँ । रोगपद से वायुपद पर्य्यन्त एक बंश है । इस प्रकार पितृपद से शिखापद यावत् एक वंश है, मुख्यपद से भृशपद पर्य्यन्त एक वंश है, शोषपद से वितथपद पर्य्यन्त एक वंश है, सुग्रीवपद से अदितिपद यावत् एक वंश है एवं भृङ्गपद से पर्जन्यपद पर्य्यन्त एक बंश है । इस प्रकार छः वंश निर्दिष्ट हैं । इसको ऋजु भी कहते हैं । इसके मध्य में सम्पात अर्थात् दोनों का एकत्र मिलन को पदमध्य एवं सम कहा गया है । एवं जो त्रिशूलवत् कोणगत है, उसको मर्म्म कहा गया है । स्तम्बन्यास में यह सब परित्याज्य हैं एवं वेधनों तुला भी वर्जित है । कीलोत्सृष्ट उपघातादि को यत्नपूर्वक परित्याग करे । शिखिपद से आरम्भ कर वंश के शेष यावत् वास्तु पुरुष के नाम से अभिहित हैं ॥९९-१०३॥

अधोमुख में पतित वासुपुरुष के मस्तकस्थित वह्नि को, मुख में अवस्थित आपको, स्तनद्वय में अवस्थित

वक्षःस्थले चापवत्सः पूजनीयः सदा बुधैः । नेत्रयोर्दितिपर्ज्जन्यौ श्रोत्रेऽदितिजयन्तकौ ॥१०५

सर्पेन्द्रावंशसंस्थौ तु पूजनीयौ प्रयत्नतः । सूर्य्यसोमादयस्तद्वद्बाह्वोः पञ्च च पञ्च च ॥१०६॥

रुद्रश्च राजयक्ष्मा च वामहस्तं समाश्रितौ । सावित्रः सविता तद्वद्धस्तं दक्षिणमाश्रितौ ॥१०७

विवस्वानथ मित्रश्च जठरे संव्यवस्थितौ । पूषा च पापयक्ष्मा च हस्तयोर्मणिबन्धने ॥१०८॥

तथैवासुरशोषौ च वामं पार्श्वं समाश्रितौ । पार्श्वे तु दक्षिणे तद्वद्वितथः रुगृहक्षतः ॥१०९॥

ऊर्वोर्यमाम्बुपौ ज्ञेयौ जान्वोर्गन्धर्व्वपुष्पकौ ।
जङ्घयोर्भृङ्गसुग्रीवौ स्फिक्स्थौ दौवारिको मृगः ॥११०॥

जयः शक्रस्तथा मेढ्रे पादयोः पितरस्तथा । मध्ये नवपदो ब्रह्मा हृदये तु स पूज्यते ॥१११॥

चतुःषष्टिपदो वास्तुः प्रासादे ब्रह्मणः स्मृतः ।
ब्रह्मा चतुष्पदस्तद्वत् कोणेष्वेकपदास्तथा ॥११२॥

---

श्रोत्रे श्रोत्रयोः, अदितिजयन्तौ ॥१०५॥

सर्पः—अदितेरुत्तरतो निरन्तरस्थितो द्विपदः, तौ स्कन्धस्थितौ पूज्यौ, सूर्य्यादयः पञ्च दक्षिणे बाहौ, आदि-शब्देन सूर्य्यस्य दक्षिणे निकटवर्त्तिनः सत्यभृशाकाशवायवश्चत्वारः तथा सोमादयश्च पञ्च वामबाहौ पूज्या इत्यर्थः । अत्रादि शब्देन सोमस्योत्तरे निकटवर्त्तिनो भल्लाटमुख्या हि रोगाश्चत्वारः ॥१०६॥

हस्तयोरिति द्वित्वेन मणिबन्धस्यापि द्वित्वं ज्ञेयम् । मणिबन्धयोरिति वा पाठः । तत्र दक्षिणे मणिबन्धे पूषा, वामे च पापयक्ष्मा पाप एव; अतएव वलिदानेऽप्यग्रे वक्तव्यं, 'गोधा वै पापयक्ष्मणः' इति । राजयक्ष्मेति पाठश्चिन्त्यः । रुद्रस्याधःकोणस्थितस्य राजयक्ष्मणो रुद्रेण सह वामहस्ते च पूर्व्वं स्थित्युक्तेः ॥१०८॥

अम्बुपो वरुणः, पुष्पकः पुष्पदन्तः, भृङ्गो भृङ्गराजः, स्फिक्कटी ॥११०॥

शक्रो विबुधाधिपः जयन्तस्याधःकोणवर्त्ती । मेढ्रे मेढ्रयोः, एवं मूर्द्धमुखवक्षःसु त्रिष्वङ्गेषु प्रत्येकमेक इति त्रयः । स्तनादिदशयुगलेषु च प्रतियुगलं द्वाविति विंशतिः । बाह्वोः पञ्च च पञ्च चेत्युक्तेस्तयोर्दश । हस्तयोः पार्श्वयोश्च प्रत्येकं द्वयोक्तेरष्टौ, जठरे चैकस्मिन् द्वौ, पादयोः पितरस्तथेत्युक्तेस्तयोः पितृगण एक एव । हृदये च मर्म्मणि ब्रह्मैक एवेति सर्व्वेष्वङ्गेषु पञ्चचत्वारिंशद्देवविभागो ज्ञेयः । १११॥

चतुःषष्टिपदमण्डलमाह—चतुरिति द्वाभ्याम । ब्रह्मणः प्रासादे, नान्यस्य । श्रीहयशीर्षमते च सर्व्वत्रैवेत्यग्रे व्यक्तं भावि । तद्वत् एकाशीतिपदवन्मध्ये ब्रह्मा, स चात्र चतुष्पद इत्यर्थः । ततो ब्रह्मणः कोणेषु येषु चतुर्षु पूर्व्वमेकपदाः स्थिताः, तेषु चात्र कोणेषु रेखां दत्त्वाष्टावर्द्धपदाः स्थिताः कार्य्या इत्यर्थः ॥११२॥

---

पृथ्वीधर, एवं अर्य्यमा को, वक्षःस्थल में अवस्थित चापवत्स की, नेत्रद्वय में अवस्थित दिति एवं पर्जन्य की, कर्णयुगल में अवस्थित अदिति एवं जयन्त की, स्कन्धद्वय में अवस्थित सर्प एवं इन्द्र की पूजा करनी चाहिये। पश्चात् बाहुद्वय के प्रत्येक में सोमसूर्य्यादि पञ्च की, वाम हस्त में रुद्र एवं राजयक्ष्मा की, तद्वत् दक्षिण हस्त में सावित्र एवं सविता की, उदर में विवस्वान् एवं मित्र की, हस्तद्वय के मणिबन्ध में पूजा एवं पापयक्ष्मा की, वामपार्श्व में असुर एवं शोष की, दक्षिण भाग में वितथ एवं गृहक्षत की, ऊरुद्वय में यम एवं सुग्रीव की, कटिद्वय में दौवारिक एवं मृग की, मेढ़ में जय एवं शक्र की, पदद्वय में पितृवृन्द की, एवं हृदयाभ्यन्तर में नवपद ब्रह्मा की पूजा करनी चाहिये ॥१०४-१११॥

ब्रह्मा का प्रासाद होने पर उस स्थान में वास्तु चतुःषष्टिपद, उसके मध्य में ब्रह्मचतुष्पद एवं कोणसमुह

वहिष्कोणेषु चाष्टौ तु सार्द्धाश्चोभयतः स्मृताः । विंशतिर्द्विपदास्तेषां चतुःषष्टिपदे स्मृताः ॥११३

हयशीर्षे —

वास्त्वङ्गं सूत्रयेत् प्राज्ञः श्वेताम्बरधरः शुचिः । श्वेतगन्धानुलिप्ताङ्गः सर्व्वालङ्कारभूषितः ।
चतुःषष्टिन्तु प्रासादे एकाशीतिं गृहे सदा ॥११४॥

चतुरस्रीकृते क्षेत्रे ह्यष्टधोभयभाजिते । कोणरेखां ततो दत्त्वा सुरभागांस्तु कल्पयेत् ॥११५॥

शिरः कोणार्द्धतो ज्ञेयः पर्ज्जन्यः पदसंस्थितः । द्विपदस्थो जयो ज्ञेयः सुरेशश्चैकपादिकः ॥११६

भास्करस्तु पदे ज्ञेयो द्विपदः सत्य इष्यते । भृशः पदस्थो विज्ञेयो व्योम चैव पदार्द्धगः ॥११७

हुताशनः पदार्द्धश्च पूषा च पदसंस्थितः । वितथो द्विपदश्चैव पदैकश्च गृहक्षतः ॥११८॥

वैवस्वतः पदैकस्थो गन्धर्व्वो द्विपदस्थितः । भृङ्गश्चैकपदो ज्ञेयो मृगश्चार्द्धपदे स्थितः ॥११९॥

पितरश्चार्द्धतो ज्ञेयाः पदे दौवारिकस्तथा । सुग्रीवश्च पदौ ज्ञेयौ ह्येकस्थः पुष्पदन्तकः ॥१२०

यादसां पतिरेकस्थो ह्यसुरस्तु द्विसंस्थितः । शोषश्चैकपदे ज्ञेयो ह्यर्द्धगः पाप इष्यते ॥१२१॥

रोगश्चार्द्धपदे ज्ञेयो नागश्चापि पदे स्थितः । मुख्यश्च द्विपदे ज्ञेयो भल्लाटः पदसंस्थितः ॥१२२

यज्ञेश्वरः पदे ज्ञेयो नागराड् द्विपदे स्थितः । पदस्था श्रीमहादेवी अदितिश्चार्द्धसंस्थिता ॥१२३

---

किञ्च, मण्डलस्य वहिश्चतुष्कोणेषु च तथैवाष्टौ। किञ्च, मण्डलवहिष्कोणानां तेषामुभयतः पार्श्वद्वये अष्टौ देवाः सार्द्धपदाः कार्य्या इत्यर्थः। एवं वाह्याभ्यन्तराष्टकोणेष्वर्द्धपदाः षोड़श। ते च ऐशानदक्षिणकोणार्द्ध-क्रमेण वहिः शिख्याकाशवायुमृगपितृपापरोगा दितयोऽष्टावन्तश्च तथैव सावित्र-विवुधाधिप-जय-रुद्र-राजयक्ष्म-चापवत्स-सवितारोऽष्टौ ज्ञेयाः। अष्टौ च सार्द्धपदाः। ते च ईशानदक्षिणक्रमेणैव पर्ज्जन्यभृशपूषभृङ्गराज-दौवारिक-शोषा हि अदितयो ज्ञेयाः। द्विपदाश्च विंशतिः। तत्र चैकाशीतिपदवन्मण्डलस्य पूर्व्वस्यां जयन्तादयः क्रमेण चत्वारः। तथैव दक्षिणस्यां वितथादयः, पश्चिमायां सुग्रीवादयः, उत्तरस्यां च मुख्यादयः, ब्रह्मणः पूर्व्वादिचतुर्दिक्षु चार्य्यमादयश्चत्वार इति विवेचनीयम्। मध्ये ब्रह्मा चैकश्चतुष्पद इत्येवं चतुःषष्टि-पदेषु पञ्चचत्वारिंशद्देवा ज्ञेया इति। तथा च वाराह्याम्—'अष्टाष्टकपदमथवा कृत्वा रेखास्तु कोणगास्तिर्य्यक्। ब्रह्मा चतुष्पदेऽस्मिन्नर्द्धपदा ब्रह्मकोणस्थाः॥ अष्टौ च वहिष्कोणेष्वप्यर्द्धपदास्तदुभयतः स्थिताः सार्द्धाः। उक्तेभ्यो ये शेषास्ते द्विपदा त्रिंशतिस्ते च॥' इति ॥११३॥

चतुःषष्टिपदविभागमाह—चतुरस्रीकृत इति। अष्टधा अष्टाष्टत्वेन, उभयतः तिर्य्यगूर्द्ध्वमधो नवरेखाभि-र्भाजिते कृतभागे क्षेत्रे, कोणरेखां दत्त्वेति वहिश्चतुष्कोणेषु मध्ये मध्ये रेखयाऽर्द्धार्द्धत्वेनाष्टभागान् कल्पयित्वेत्यर्थः॥११५॥

---

एक पद होगा। बाहरी कोण में अष्ट और दोनों पार्श्व में सार्द्धपद करना चाहिये। इन चौंसट पदों में बीस द्विपद कहे गये हैं ॥११२-११३॥

हयशीर्ष पञ्चरात्र में उक्त है—विचक्षण व्यक्ति, श्वेत वस्त्र धारण, पवित्र, श्वेत गन्धानुलेपन से लिप्त देह, एवं सर्वाभरण भूषित होकर वास्तु के अङ्ग में सूत्रपात करे। प्रासाद में चतुषष्टि पद एवं गृह में एका-शीत पद करने चाहिये। चतुःषष्टि पद का विभाग करना हो तो, प्रथमतः क्षेत्र को चतुष्कोण करके दो दिक् में आठ आठ भाग कर कोण रेखा के द्वारा देवभाग की कल्पना करनी चाहिये। शिव–कोणार्ध में, पर्जन्य– एक पद में, सुरेश- एक पद में, सूर्य्य- एक पद में, सत्य- द्विपद में, भृश- एक पद में, व्योम- अर्ध पद में,

आपो ज्ञेयास्तु पदगापवली द्विपदास्थिता। चतुष्पदस्थो विज्ञेयस्त्वर्य्यमा पूर्व्वमध्यगः ॥१२४
सविता तु पदे ज्ञेयः सावित्री च पदे स्थिता। ततो विवस्वान विज्ञेयश्चतुष्पयपदे स्थितः ॥१२५
इन्द्रश्चन्द्रो जयश्चव एकैके संव्यवस्थितौ। मित्रश्चतुष्पदस्थश्च पश्चिमे तु व्यवस्थितः ॥१२६
रुद्रः पदैकसंस्थो वै यक्ष्मा चैकपदे स्थितः। धराधरश्च विज्ञेयो ह्युत्तरे च चतुष्पदः।
चतुर्म्मुखश्चतुष्कस्थो मध्ये ज्ञेयः प्रजापतिः ॥१२७॥

अथ वास्तुपूजा

मात्स्ये—

अथातः सम्प्रवक्ष्यामि प्रासादविधिनिर्णयम्। वास्तौ परीक्षिते सम्यक् वास्तुदेहविचक्षणाः।
वास्तूपशमनं कुर्य्यात् पूर्व्वमेव विचक्षणः ॥१२८॥
एकाशीतिपदं लिख्य वास्तुमध्ये तु पिष्टकैः। होमस्त्रिमेखले कार्य्यः कुण्डे हस्तप्रमाणके ॥१२९

पदगा आपो ज्ञेयाः। विमर्गलापेऽपि सन्धिरार्षः। आपवली द्विपदस्थिता। एवमत्रार्द्धपदाश्चतुष्कोणेष्वष्टौ। तन्मध्ये प्रतिदिशं षड़ित्येवं चतुर्दिक्षु चतुर्विंशतिरेकपदा, एवञ्च वहिर्द्वात्रिंशत्। मध्ये ब्रह्मा चतुष्पदः। तस्य चतुर्द्दिक्षु चत्वारश्चतुष्पदाः। तच्चतुष्कोणीयषोड़शपदेषु चाष्टौ द्विपदा इत्येवं चतुषष्टिपदेषु पञ्चचत्वारिंशद्-देवताविभागाः। अत्र देवताविभागक्रमश्च वक्ष्यमाणपूजाक्रमापेक्षयैवोक्तः, न च पदक्रमापेक्षयेति ज्ञेयम्। किञ्च, मात्स्योक्तो देवतानाम-स्थान-विभागादि-भेदश्च प्रासादाधिष्ठातृदेवादिभेदतः कल्पनीय इति दिक्। एतच्छ्रीहयशीर्षदेवोक्त-विभागानुसारेणैव श्रीकृष्णदेवाचार्य्यपादैर्विभागो लिखितः। केवलमत्स्योक्तानुसारेण तैर्देवतानामानि लिखितानि, तच्च पूर्व्वं चलमूर्त्तिप्रतिष्ठायां लिखितमेवास्ति ॥१२४॥

हे विचक्षणा इति तत्रस्थश्रोतॄणां सम्बोधनम् ॥१२८॥

वास्तूपशमनप्रकारमाह—एकाशीति इत्यादिना। पिष्टकैर्लिख्य लिखित्वा। यद्वा, पिष्टकैरित्यस्य परेणान्वयः। कुण्डनिर्म्माणादि-विधिविशेषश्च पूर्व्वं दीक्षाविधौ लिखित एवास्ति, होमादौ चाय विशेषो ग्रन्थान्तरानुसारेण शिष्टसम्मतो ज्ञेयः। तथा हि—'तस्मिन् कुण्डे गोमयोपलिप्ते सिकताकीर्णे यथोक्त-होमोपकरणान्युपस्थाप्याचार्यो ब्रह्मवरणं विधाय स्वगृह्योक्तविधिनाग्निमुपसमाधाय मण्डलसमीप गत्वा

पूषा- एक पद में, वितथ- द्विपद में, व्योम- अर्ध पद में, अग्नि- अर्ध पद में, पूषा- एक पद में, वितथ- द्विपद में, गृहक्षत- एक पद में, वैवस्वत- एक पद में, गन्धर्व- द्विपद में, भृङ्ग- एक पद में, मृग- पदार्ध में, पितृगण- अर्ध पद में, दौवारिक- एक पद में, सुग्रीव- एक पद में, पुष्पदन्त- एक पद में, वरुण- एक पद में, असुर- द्विपद में, शोष- एक पद में, पाप- पदार्ध में, रोग- अर्ध पद में, नाग- एक पद में, मुख्य- द्विपद में, भल्लाट- एक पद में, यज्ञेश्वर- एक पद में, नागराज- द्विपद में, महादेवी- एक पद में, एवं अदिति- पादार्ध में अवस्थित है। अप- एक पद में, आपबली- द्विपद में, अर्य्यमा- पूर्वमध्यस्थ चार पद में, सविता-एक पद में, विवस्वान् चतुष्पद में, इन्द्र- एक पद में, चन्द्र- एक पद में, जय- एक पद में, मित्र- पश्चिमदिक् स्थित चतुष्पद में, रुद्र- एक पद में, एवं यक्ष्मा- एक पद में अधिष्ठित है। धराधर- उत्तरदिक् स्थित चतुष्पद में ब्रह्मा एवं प्रजापति- मध्य भाग में अवस्थित हैं ॥११४-१२७॥

अथ वास्तुपूजा

मत्स्यपुराण में उक्त है—हे वास्तु देह विचक्षण वृन्द ! सम्यक् वास्तु परीक्षित हुआ, अधुना प्रासादविधि का निर्णय को कहता हूँ। प्रथमतः वास्तु का आगमन करना ही बुद्धिमान् व्यक्ति का कर्त्तव्य है ॥१२८॥

वास्तु के मध्य में पिष्टक द्वारा एकाशीत पद अङ्कन करके हस्त परिमित त्रिमेखला विशिष्ट कुण्ड में

यवैः कृष्णतिलैस्तद्वत् समिद्भिः क्षीरवृक्षजैः । पालाशैः खादिरैर्वापामार्गोडुम्बरसम्भवैः ॥१३०

कुशदूर्व्वामयैश्चापि मधुसर्पिःसमन्वितैः । कार्य्यस्तु पञ्चभिर्विल्वैर्विल्ववीजैरथापि वा ।
होमान्ते भक्ष्यभोज्यैश्च वास्तुदेवे वलिं हरेत् ॥१३१॥
तद्वद्विशेषनैवेद्यमिदं दद्यात् क्रमेण तु ॥१३२॥

ईशकोणे घृतान्नन्तु शिखिने विनिवेदयेत् । ओदनं सोत्पलं दद्यात् पर्ज्जन्याय घृतान्वितम् ॥१३३

जयन्ताय ध्वजं पीतं पैष्टं कूर्म्मञ्च सन्त्यजेत् । इन्द्राय पञ्चरत्नानि पैष्टञ्च कुलिशं तथा ॥१३४

वितानकञ्च सूर्य्याय धूम्रं रक्तं तथैव च । सत्याय घृतगोधूमं मत्स्यान् दद्याद्भृशाय च ॥१३५

---

शिखिप्रभृतिपञ्चचत्वारिंशद्देवता ईशानकोणादिष्वष्टपदेषु षट्पञ्चाशदुत्तरशतद्वयसख्यैर्यजमानमुष्टिपरिमितै-स्तण्डुलैः सप्रणव-महाव्याहृतिभिरावाह्य तैरेव स्थापयित्वा प्रणवादिनमोऽन्तेन स्व-स्व-नाममन्त्रेण प्रत्येकं पाद्यादिताम्बूलान्तैरुपचारैरर्च्चयेत् । अथ कुण्डसमीपमेत्य स्वगृह्योक्तविधिना ब्रह्मोपवेशनाद्याज्यभागान्तं कर्म्म निर्व्वर्त्त्य शिख्यादिपञ्चचत्वारिंशद्देवताभ्यः प्रणवव्याहृतिपूर्व्वेण महाव्याहृतिपूर्व्वेण च तत्तन्मन्त्रेण यवादिभिः पलाशादीनामन्यतमसमिद्भिर्वा कुशदूर्व्वादिभिर्वा प्रत्येकं दशदशाहुतीर्जुहुयात् । केचित्तु शिख्यादि देवताभ्यः प्रत्येकमाहुतिदशक प्रजेशायाहुतिशतमित्याहुः । तथा प्रजापतये उक्तद्रव्याणामन्यतमेन प्राजापत्येन मन्त्रेण शतमाहुतीर्जुहुयात । ॐ वास्तोष्पते प्रतिजानीह्यस्मान् स्वावेशो अनमीवो भवानः, यत्वे महे प्रति तन्नो जुषस्व, शन्नो भव द्विपदे शं चतुष्पदे । ॐ वास्तोष्पते प्रतरणो नो एधि गयस्फानो गोभिरश्वेभिरिन्दो अजरासस्ते सख्ये स्याम पितेव पुत्रान् प्रति नो जुषस्व । ॐ वास्तोष्पते शग्मया संसदा ते शक्षीम हिरण्मया-गातुमत्या पाहि क्षेम उत योगे वरं नो यूयं पात स्वस्तिभिः सदा नः । ॐ अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन् सखा सुशेव एधि नः । ॐ वास्तोष्पते ध्रुवा स्थूणां सत्रं सौम्यानाम्, द्रप्सो भेत्ता पुरां शश्वती-नामिन्द्रो मुनीनां सखा स्वाहा ।' इति पञ्चभिर्मन्त्रैः प्रतिमन्त्रं पञ्च विल्वफलानि विल्ववीजानि वा एकैकशो जुहुयात । वनवास्तौ तु वास्तोष्पतीयहोमात् पूर्व्वं 'वनमालाय स्वाहा, शिखिध्वजाय स्वाहा, सोमाय स्वाहा, नागराजाय स्वाहा' इत्येभिर्मन्त्रैः प्रत्येकदैवतं यवादि-होमद्रव्याणामन्यतमेन द्रव्येण अष्टसहस्राष्टशताष्ट-विंशत्यन्यतम-संख्याका आहुतीर्जुहुयादिति । श्रीहयशीर्षमते चायं होमो विशेषवलिदानान्तरमेव । तच्चाग्रे व्यक्तं भावि ॥१२९॥

अथ पूर्णाहुतिं दत्त्वा वास्तुदेवताभ्यस्तदभीष्टवलिं प्रत्येकं दद्यादित्याह— तद्वदित्यादिना ॥१३२॥

तत्र तु 'ॐ शिखिने अयं घृतान्नवलिर्नमः' इत्यादि वाक्यम् ॥१३३॥

पैष्टं—पिष्टनिर्म्मितम् ॥१३४॥

घृतगोधूम सघृतगोधूमान्नम् । मत्स्यान् मत्स्यान्नं केवलमत्स्यान् वा ॥१३५॥

---

आहुति प्रदान करे । यव कृष्णतिल, क्षीर, पलाश खदिर, अपामार्ग, वा उडुम्बर बृक्षोत्थ समिध, मधु घृतान्वित कुश वा दूर्वा द्वारा, विल्व वा विल्ववीज, इन पञ्च द्रव्यों के द्वारा होम करना चाहिये । होमा-वसान में वास्तुदेव के उद्देश्य से भक्ष्य भोज्य द्वारा वलि अर्पण करनी चाहिये ॥१२९-१३१॥

इसी प्रकार नैवेद्य विशेष भी क्रमशः प्रदान करे । ईशानकोण में शिखी को घृतान्न, पर्जन्य को घृतोत्पल समन्वित अन्न, जयन्त को पीतवर्ण ध्वज एवं पिष्टमय कूर्म्म, इन्द्र को पञ्चरत्न एवं पिष्टमय कुलिश, सूर्य्य को धूम्रवर्ण वा लोहित वर्ण चन्द्रातप, सत्य को घृत एव गोधूम, भृश को मत्स्य, अन्तरीक्ष को शष्कुली, वायु को शक्तु पूषा को लाज, वितथ को चणकान्न, गृहक्षत को मधुसमन्वित अन्न, यम को पिशितौदन, गन्धर्व को गन्धयुक्त उदन, भृङ्ग को मेष शृङ्ग, मृग को यावक, पितृगण को कृशर, दौवारिक को, दशन-

शष्कुलीश्चान्तरीक्षाय दद्याच्छक्तुंश्च वायवे । पूष्णे लाजास्तु दातव्या वितथे चणकौदनम् ॥१३६
गृहक्षताय मध्वन्नं यमाय पिशितौदनम् । गन्धौदनञ्च गन्धर्व्वे भृङ्गे मेषस्य शृङ्गकम् ॥१३७
मृगाय यावकं देयं पितृभ्यः कृशरा मता । दौवारिके दन्तकाष्ठं पैष्टं कृष्णं वलिन्तथा ॥१३८
सुग्रीवे पूपकं दद्यात् पुष्पदन्ताय पायसम् । कुशस्तम्बेन सहितं दद्यात् पद्मञ्च वारुणे ॥१३९॥
पैष्टं सिरण्मयं दद्यादसुराय सुरा मता । घृतौदनञ्च शोषाय गोधां वै पापयक्ष्मणे ॥१४०॥
घृतलड्डूंश्च रोगाय नागे पुष्पफलान्वितम् । सर्पिर्मुख्याय दातव्यं मुद्गौदनमतःपरम् ॥१४१
भल्लाटाय ततो दद्यात् सोमाय घृतपायसम् । सर्पाय पैष्टं शालूकमदित्यै लोचिकास्तथा ।
दित्यै तु पूरिकां दद्यादित्येवं वाह्यतो वलिः ॥१४२॥

क्षीरमापाय दातव्यमापवत्साय वै दधि ।
सावित्रे लड्डुकान् दद्यात् समरीचान् कुशौदनम् ॥१४३॥

सवितुर्गुड़पूपांश्च जयाय धृतचन्दनम् । विवस्वते तथा दद्याद्रक्तचन्दनपायसम् ॥१४४॥
हरितालौदनं दद्यादिन्द्राय घृतसंयुतम् । घृतौदनञ्च मित्राय रुद्राय घृतपायसम् ॥१४५॥

आमं पक्वं तथा मांसं देयं स्याद्राजयक्ष्मणे ।
पृथ्वीधराय मांसानि कुष्माण्डाय च दापयेत् ॥१४६॥

शर्करापायसं दद्यादर्यम्ने सर्व्वशः क्रमात् । नमस्कारान्तयुक्तेन पायसं पुनरेव च ॥१४७॥
पञ्चगव्यं यवांश्चैव तिलाक्षतहविश्चरून् । भक्ष्यं भोज्यञ्च विविधं ब्रह्मणे विनिवेदयेत् ॥१४८

एवं सम्पूजिता देवाः शान्तिं कुर्व्वन्ति ते सदा ।
सर्व्वेभ्यः काञ्चनं दद्याद्ब्रह्मणे गां पयस्विनीम् ॥१४९॥

---

पैष्टं कृष्णं वलिं, कृष्णवर्णपिष्टवलिश्च हिरण्मयपिष्टवलिश्च वरुणाय दद्यात् ॥१३८॥
नागे अहये, भल्लाटाय मुद्गौदनम् ॥१४१॥
गुड़ैर्ये पूपा अपूपास्तान्, घृतं चन्दनञ्च रक्तचन्दनं पायसञ्च ॥१४४॥
हरितालवदोदनं पीतवर्णभक्तमित्यर्थः । घृतसंयुत हरितालौदनम् ॥१४५॥
एवं प्रत्येकं वलिविशेषं दत्वा पश्चात् क्रमेण सर्व्वेभ्यः शिखिप्रभृतिभ्यः काञ्चनं, ब्रह्मणे च धेनुं प्रणवादि-नमोऽन्त-चतुर्थ्यन्त-तत्तन्नाममन्त्रेण दद्यात् ॥१४९॥

---

काष्ठ, बलि को कृष्णावर्ण पैष्ट, सुग्रीव को पूपक, पुष्पदन्त को पायस, वरुण को कुशस्तम्बयुक्त पद्म, असुर को सुवर्णमय पिष्टक एवं सुरा, शोष को घृतौदन, पापयक्ष्मा को गोधा, रोग को घृतलड्डुक, नाग को पुष्प एवं फल, मुख्य को घृत, भल्लाट को मुद्गौदन, सोम को घृतपायस, सर्प को पैष्ट शालूक, अदिति को लुचि एवं दिति को पुरी प्रदान करे । इस प्रकार वाह्यवलि अर्पण करनी चाहिये । आप को क्षीर, आपवत्स को दधि, सावित्र को लड्डुक, एवं मरीच के सहित कुशोदन, सविता को गुड़पिष्टक, जय को घृत चन्दन, विवस्वान् को रक्तचन्दन एवं पायस, इन्द्र को सघृत हरितालौदन, मित्र को घृतौदन, रुद्र को घृतपायस, राजयक्ष्मा को अपक्व एवं पक्व मांस, पृथ्वीघ्न को एवं कुष्माण्ड को मांस एवं अर्य्यमा को शर्करा पायस प्रदान करे । इस प्रकार क्रमशः यावतीय देवता को नमस्कार करके मन्त्र के द्वारा पुनर्वार पायस, पञ्चगव्य

राक्षसीनां बलिर्देयो अपि याद्दक् तथा शृणु ॥१५०॥

मांसौदनं घृतं पद्मकेशरं हविषान्वितम् । ईशानभागमाश्रित्य चरक्यै विनिवेदयेत् ॥१५१॥

मांसौदनं सरुधिरं हरिद्रौदनमेव च । आग्नेयीं दिशमाश्रित्य विदार्य्यै विनिवेदयेत् ॥१५२॥

दध्योदनं सरुधिरमस्थिखण्डैश्च संयुतम् । पीतरक्तबलिं दद्यात् पूतना या तु राक्षसी ।

वायव्ये पापराक्षस्यै मत्स्यमांससुरासवम् ॥१५३॥

पायसं वापि दातव्यं स्वनाम्ना सर्व्वतः क्रमात् । नमस्कारान्तयुक्तेन प्रणवाद्येन सर्व्वतः ॥१५४

ततः सर्व्वौषधिस्नानं यजमानस्य कारयेत् । द्विजांस्तु पूजयेद्भक्त्या ये चान्ये गृहमागताः ॥१५५

एतद्वास्तूपशमनं कृत्वा कर्म्म समारभेत् ॥१५६॥

प्रासादभवनोद्यान-प्रारम्भे परिवर्त्तने । परवेश्मप्रवेशेषु सर्व्वदोषापनुत्तये ॥१५७॥

इति वास्तूपशमनं कृत्वा सूत्रेण वेष्टयेत् । रक्षोघ्न-पवमानेन सूक्तेन भवनादिकम् ।

नृत्यमङ्गलवाद्येन कुर्य्याद्ब्राह्मणवाचनम् ॥१५८॥

---

अथ मण्डलाद्वहिरैशानादि-विदिक्चतुष्टये क्रमेण राक्षसीभ्यश्चतसृभ्यो बलिदानमाह—राक्षसीनामिति चतुर्भिः । हविषान्वितमिति पाठे पद्मकेशरञ्च हविःसहितमेवेत्यर्थः ॥१५०॥

या पूतना, तस्यै नैर्ऋते दध्योदनानि दद्यात् । सुरासवयोः पैष्टादिभेदेन भेदः ॥१५३॥

वैष्णवैः कथं मत्स्यमांसादिकं देयम् ? इत्याशङ्क्य पक्षान्तरमाह - पायसं वेति । सर्व्वतः सर्व्वस्थानेषु सर्व्वेभ्योऽपि शिखि-प्रभृतिभ्यः । एवमपौनरुक्त्यम् । नमस्कारान्तयुक्तेन नम इत्यन्तेस्त्यर्थः; चतुर्थ्यन्तेन चेति ज्ञेयम् ॥१५४॥

यजमानस्य सर्व्वौषधि-स्नपणं कारयेदित्यत्रायं विशेषो ज्ञेयः—आचार्य्यः प्रत्यङ्मुखो भूत्वा प्राङ्मुखं यजमानं शान्तिकलसेन 'सुरास्त्वामभिषिञ्चन्तु' इत्याद्यभिषेकमन्त्रैर्मङ्गलाभिषेकं कृत्वा पश्चात् सर्व्वौषधि-जलेन स्नापयेदिति । अन्यश्चात्रापेक्ष्यो विशेषः शिष्टाचारतो विज्ञेयः ॥१५५॥

परिवर्त्तने जीर्णोद्धरणादिना प्रासादादीनामेव परिवर्त्त्य संस्करणे ॥१५७॥

रक्षोघ्नेन पवमानेन च सूक्तेन ॥१५८॥

---

एवं यव, ब्रह्मा को तिल, अक्षत, घृत, चरु एवं विविध भक्ष्यभोज्य अर्पण करे। इस प्रकार सुरगण पूजित होने से सर्वथा शान्ति विराजित होती है। सुरगण को सुवर्ण एवं ब्राह्मण को दुग्धवती धेनु प्रदान करनी चाहिये ॥१३२-१४९॥

राक्षसीवृन्द को जिस प्रकार बलि देनी चाहिये, वह सुनो। उनको मांसौदन, घृत एवं सघृत पद्मकेशर प्रदान करे। ईशानदिक् में चरकी राक्षसी को सरक्त मांसौदन एवं हरिद्रौदन, आग्नेयदिक् में विदारी को दध्योदन एवं शोणित के शोणित के सहित अस्थिखण्ड, नैर्ऋतकोण में पूतना नाम्नी राक्षसी को पीतरक्त बलि एवं वायु कोण में पापराक्षसी को मत्स्य, मांस, सुरा एवं आसव अर्पण करे। वैष्णवों के पक्ष में मत्स्य मांसादि प्रदान करना सम्भव नहीं है। तज्जन्य कहते हैं—किंवा स्वीय नामोच्चारण पूर्वक प्रणवादि नमस्कारान्त मन्त्र के द्वारा क्रमश सबको पायस अर्पण करना चाहिये। पश्चात् सर्वौषधि जल के द्वारा यजमान को स्नान कराना चाहिये। उस समय गृहागत ब्राह्मणवृन्द की पूजा भक्तिपूर्वक करनी चाहिये। इस प्रकार वास्तु का उपशमन करके कर्म में प्रवृत्त होना चाहिये। प्रासाद, भवन एवं उद्यान के प्रारम्भ में जीर्णोद्धार एवं पर भवन प्रवेश समय में सर्वदोष विदूरण के निमित्त इस प्रकार वास्तु का उपशम करके

अनेन विधिना यस्तु प्रतिसंवत्सरं बुधः । गृहे वायतने कुर्य्यान्न स दुःखमवाप्नुयात् ॥१५९॥
न च व्याधिभयं तस्य न च बन्धुधनक्षयः । जीवेद्वर्षशतं स्वर्गे कल्पमेकं वसेन्नरः ॥१६०॥

हयशीर्षपञ्चरात्रे—

एवं प्रगृह्य कोष्ठानि रजसापूर्य्य देशिकः । एतेषामेव देवानां वलिं दद्यात्तु कामिकः ॥१६१॥
ईशानाय प्रदातव्यं पायसं मधुना सह । पर्ज्जन्याय जलं देयं पुष्पगन्धाधिवासितम् ॥१६२॥
जयन्ताय प्रदातव्या पताका पीतवर्णिका । सुरेश्वराय रत्नानि भास्कराय घृतं तथा ॥१६३॥
धूम्रकं पीतवर्णं वा सत्ये दद्याद्वितानकम् । दद्यान्मांस भृशेऽपूपं व्योमाय स्रुवमग्नये ॥१६४॥
पूष्णे धानाः सलाजास्तु सुवर्णं वितथे तथा । गृहक्षताय मध्वन्नं यमाय पिशितौदनम् ॥१६५
गन्धं गन्धर्व्व देवाय भृङ्गे दद्यात्तु शाकुनम् । मृगे तिलयवांश्चैव पितृभ्यः कृशरं तथा ॥१६६
दौवारिके दन्तकाष्ठं सुग्रीवे यावकं तथा । पुष्पदन्ते कुशा देया वरुणे पद्ममुत्पलम् ॥१६७॥
असुरायैक्षवं देयं रसं शोषे घृतौदनम् । यवास्तु देयाः पापाय रोगाय घृतमण्डकम् ॥१६८॥
नागाय नागपुष्पाणि भक्ष्याग मुख्याय दापयेत् । चित्रौदनञ्च भल्लाटे सोमाय मधुपायसम् ॥१६९
सर्पाय चापि शालूकं श्रिये सरसपायसम् । अदित्यै पूरिका देया क्षीराञ्चाद्भ्यो ददेद्वलिम् ॥१७०

---

एवमिति—'शिवः कोणार्द्धतो ज्ञेयः' इत्यादिनोक्तविभागप्रकारेण कोष्ठानि पदानि प्रगृह्य विभज्य ॥१६१

ईशान ईशानकोणस्थितः शिवस्तस्मै ॥१६२॥

भृशे मांसं, व्योमाय च अपूपं पक्षिमांसमेव दद्यादिति ज्ञेयम् । यद्वा, 'दद्यान्मांसं भृशेऽपूपं व्योमाय इति पाठः ॥१६४॥

शाकुनं—पक्षिमांसम् ॥१६६॥

---

सूत्र द्वारा वेष्टन करना चाहिये । रक्षोघ्न मन्त्र एवं पवमान सूक्त द्वारा भवनादि शोधन करके, नृत्य एवं मङ्गल वाद्य के सहित ब्राह्मण द्वारा स्वस्ति वाचन कराना चाहिये । जो बुद्धिमान् मनुष्य वर्ष वर्ष में इस विधि से गृह में वा आयतन में वास्तु का उपशम करता है, उसको कभी भी दुःख प्राप्त करना नहीं पड़ता है, तदीय व्याधिभय नहीं होता है । बन्धुक्षय वा धनहानि भी नहीं होती है एवं वह शत वर्ष जीवित रह कर एक कल्प पर्य्यन्त स्वर्ग में निवास कर सकता है ॥१५०-१६०॥

हयशीर्ष पञ्चरात्र में वर्णित है—आचार्य्य, इस प्रकार काष्ठसमूह को ग्रहणपूर्वक धूलि द्वारा पूरण करके कामना परायण होकर देवगण को वलि अर्पण करें । ईशान को मधुयुक्त पायस, पर्जन्य को पुष्पगन्ध समन्वित जल, जयन्त को पीतवर्णिका पताका, सुरेश्वर को रत्न, भास्कर को घृत, सत्य को धूम्रवर्ण वा पीतवर्ण वितानक, भृश को पिशित, व्योम को पूप, अग्नि को स्रुव, पूषा को लाजसह भृष्ट यव, वितथ को सुवर्ण, गृहक्षत को मध्वन्न, यम को पिशितौदन, गन्धर्व को गन्ध, भृङ्ग को पक्षिमांस, मृग को तिल एवं यव, पितृगण को कृशर, दौवारिक को दन्तकाष्ठ, सुग्रीव को यावक, पुष्पदन्त को कुश, वरुणदेव को पद्म एवं उत्पल, असुर को इक्षुरस, शोष को घृतौदन, पाप को यव, व्याधि को घृतमण्डल, नाग को नागकुसुम, मुख्य को भक्ष्य, भल्लाट को चित्रौदन, सोम को मधुपायस, सर्प को शालूक, लक्ष्मी को सरस पायस, अदिति को पूरिका, आप को क्षीर, चापवली को दधि एवं क्षीर, अर्य्यमा को लड्डुक, सविता को कुशोदक सावित्र को गुड़पूपक, विवस्वान् को लोहित कुसुम एवं लोहित चन्दन, इन्द्र को हरिद्रावर्ण अन्न, इन्द्रजय को घृत सहित हरिद्रावर्ण अन्न, मित्र को घृतपूर, रुद्र को गुड़पायस, राजयक्ष्मा को पक्व एवं अपक्व पिशित

दधि क्षीरं चापवत्यै अर्य्यम्ने लड्डुकं वलिम् । कुशोदकं सवित्रे च सावित्रे गुड़पूपकम् ॥१७१
विवस्वते रक्तपुष्पं रक्तचन्दनमेव च । हरिद्रान्नं तथेन्द्राय साज्यमिन्द्रजयाय च ॥१७२॥
घृतपूरं तु मित्राय रुद्राय गुड़पायसम् । आमपक्वानि मांसानि प्रदद्याद्राजयक्ष्मणे ॥१७३॥
पृथ्वीधरायाममांसं खड़्गीमांसं वलिं हरेत् । साक्षतं सतिलञ्चैव पञ्चगव्यं तथा चरुम् ।
कुशान् गन्धं तथा पुष्पं ब्रह्मस्थाने निवेशयेत् ॥१७४॥
आममांसं पूर्व्वभागे सर्व्वस्कन्दे तु मोदकम् ।
सितपद्मं घृतं मांसं विदार्य्यै चाग्निकोणके ॥१७५॥
कृशरापूपकं मांसमर्य्यम्नायै च दक्षिणे । पिण्डञ्चैव तथा रक्तं पूतन्यै नैर्ऋते तथा ॥१७६॥
सासृङ्मांसं प्रदातव्यं जम्भकायै च पश्चिमे । अस्थिखण्डैश्च सहितं रक्तपिण्डेन मिश्रितम् ॥१७७
प्रदेयं पापराक्षस्यै वायव्यां मांसमेव च । उत्तरे पिलिपिच्छायै सान्द्रं रक्तं वलिं हरेत् ।
वाराह्यै छागमांसानि ऐशान्यां दिशि दापयेत् ॥१७८॥
ततो भूतगणानान्तु राक्षसानां सुरोत्तम । पिशाचानां गणानान्तु वलिर्देयस्तु कामिकः ।
एतान् वा पूजयेत् सर्व्वान् कुशपुष्पाक्षतैर्बुधः ॥१७९॥
एवं सम्पूजिता देवाः शान्तिपुष्टिप्रदा नृणाम् । अपूजिता विहिंसन्ति कारकं स्थापकं तथा ॥१८०
तस्मादेतांस्तु सम्पूज्य गन्धपुष्पैर्मनोहरैः । प्रासादं कारयेद्विद्वान् गृहं वा सुरसत्तम ॥१८१॥

---

साज्यम्—आज्यसहितं हरिद्रावर्णान्नम् ॥१७२॥

आममांसमित्युक्तं, तच्च कस्येत्यपेक्षायामाह—खड्गीमांसमिति । आममाषानिति वा पाठः ॥१७४॥

'स्थाप्यदेवतानुचरा वाह्ये सर्व्वस्कन्दादयः स्थिताः' इति, ये मण्डलाद्वहिरष्टावुक्तास्तेषां क्रमेणाष्टदिक्षु वलिदानमाह—आममांसमिति सार्द्धचतुर्भिः । तत्र क्वचिच्च स्कन्ध इति नाम, तथा अर्य्यम्ने जम्भकाय पिलिपिच्छायेत्येवं चतुर्द्दिक्षु चतुर्णां पुंस्त्वेन निर्द्देशश्च ॥१७५-१७८॥

पश्चादन्येभ्योऽपि भूतगणादिभ्यो वलिं दद्यादित्याह—तत इति कामिकः तत्तदभीष्टः । पूर्व्ववत् पक्षान्तरमाह—एतान् वेति ॥१७९॥ स्थापकम्—आचार्य्यम् ॥१८०॥

---

पृथ्वीधर को आमपिशित एवं खड्गी पिशित अर्पण करना चाहिये । तत्पश्चात् ब्रह्मस्थान में अक्षत एवं सतिल पञ्चगव्य, चरु, कुश, गन्ध एवं पुष्प स्थापन करना चाहिये ॥१६१-१७४॥

पूर्वदिक् में सर्वस्कन्द की अपक्व पिशित एवं मोदक, अग्निकोण में विदारी को श्वेत पद्म, घृत एवं पिशित, दक्षिणदिक् में अर्य्यमा को कृशर, पिष्टक एवं पिशित, नैर्ऋतकोण में पूतनी को पिण्ड एवं शोणित, पश्चिमदिक् में जम्भ का को रक्त मांस, वायुकोण में पाप राक्षसी को शोणित पिण्ड मिश्रित, अस्थिखण्ड समन्वित पिशित, उत्तर भाग में पिलिपिच्छा को गाढ़ शोणित एवं ईशानकोण में वाराही के निमित्त अज पिशित अर्पण करना चाहिये। हे सुरोत्तम! पश्चात् भूत, राक्षस, एवं पिशाचगण के निमित्त उनके अभिमत वलि अर्पण करे । बुद्धिमान् व्यक्ति, उनकी पूजा, कुश, पुष्प एवं अक्षत द्वारा करे। इस प्रकार पूजित होने से मनुष्यवृन्द को शान्ति एवं पुष्टि प्रदान करते हैं। इनकी पूजा न करने से कर्त्ता एवं स्थापक के प्रति हिंसाचरण करते हैं। सुतरां मनोहर गन्ध पुष्प के द्वारा इनकी पूजा करनी चाहिये। हे सुरसत्तम ! यथाविधि प्रासाद वा गृहनिर्म्माण करना विज्ञ व्यक्ति का कर्त्तव्य है ॥१७५-१८१॥

अथ प्रासादमूलारम्भः

तत्रैव—

ब्रह्मस्थाने ततः कुर्य्याद्वासुदेवस्य पूजनम् । श्रियः सम्पूजनं कुर्य्यात् हृषीकेशगणस्य च ॥१८२

पूजनन्तु ततः कुर्य्याद्वासुदेवगणस्य च । गन्धार्घ्य-पुष्पनैवेद्य-धूपदीपैः सुरोत्तम ॥१८३॥

ततः सम्पूजयेत्तस्मिन् सर्व्वलोकधरां महीम् । सुरूपां प्रमदारूपां दिव्याभरणभूषिताम् ॥१८४

ध्यात्वा समर्च्चयेद्देवीं परितुष्टां स्मिताननाम् ।
तत प्रणम्य विज्ञाप्य तन्मयत्वेन चिन्तयेत् ॥१८५॥

ततः स्वनाममन्त्रेण सर्व्वामरमयं परम् । ध्यात्वा समर्च्चयेत्तत्र यत्तद्वास्तुमयं नरः ॥१८६॥

ब्रह्मस्थाने ततो विद्वान् कुर्य्यादाधारमक्षतैः ।
तस्मिन् संस्थापयेत् कुम्भं वर्द्धन्या सह पूजितम् ॥१८७॥

हैमं वा राजतं वापि मृन्मयं वा दृढ़ नवम् । सर्व्वबीजौषधीयुक्तं सुवर्णरजतान्वितम् ॥१८८॥

रत्नगर्भं सुसम्पूर्ण वस्त्रपूतेन वारिणा । प्रशस्तपल्लवोपेतं श्वेतचन्दनचर्च्चितम् ॥१८९॥

पुष्पैः सुमानितं कृत्वा गन्धपुष्पैर्विधूपितम् । आहतेन तु शुक्लेन वस्त्रयुग्मेन वेष्टितम् ॥१९०॥

ब्रह्मस्थाने ततो मन्त्री कलसं स्थाप्य पूजयेत् । तस्मिंश्चतुर्मुखं देवं प्रजेशं मन्त्रविग्रहम् ।

गन्धपुष्पैश्च धूपैश्च नैवेद्यैः सुमनोहरैः ॥१९१॥
ततो मण्डलवाह्ये तु प्राच्यां वा प्राङ्मुखः स्थितः ।
आचार्य्यो गृह्य सम्भारान् ग्रहादींस्तर्पयेत् सुरान् ॥१९२॥

---

हृषीकेशगणो हृषीकेशादि-नवव्यूहः ॥१८२॥
वासुदेवगणः—चतुर्व्यूहः ॥१८३॥
यत्तदित्यव्ययं प्रसिद्धौ ॥१८६॥
स्थाप्य स्थापयित्वा, कलसस्थापनं चेदं विशेषवलिदानात् पूर्व्वमेवेति केषाञ्चिन्मतम्; तथा होमश्च तदानीमेवेति मत्स्यपुराणसम्मतं लिखितमेव ॥१९१॥

---

अथ प्रासादमूलारम्भः

उक्त ग्रन्थ में लिखित है—हे सुरोत्तम ! पश्चात् ब्रह्मस्थान में गन्ध अर्घ्य, पुष्प, धूप, दीप एवं नैवेद्य द्वारा वासुदेव, लक्ष्मी एवं हृषीकेशादि नवव्यूह की एवं वासुदेवगण की चतुर्व्यूह पूजा करनी चाहिये। तत्पश्चात् दिव्याभरण भूषिता, सुरूपा, प्रमदारूपिणी, स्मृतानना, सुप्रसन्ना, सर्वलोक धारिणी, पृथ्वीदेवी का ध्यान, पूजा, प्रणाम, एवं विज्ञापन पूर्वक तन्मयभाव से चिन्ता करनी चाहिये। अनन्तर स्वीय नाममन्त्र में सर्व देवमय परब्रह्म को चिन्ता करके वास्तु पुरुष का ध्यान करना मानव का कर्त्तव्य है ॥१८२-१८६॥

तदनन्तर विज्ञव्यक्ति, ब्रह्मस्थान में अक्षत द्वारा आधार स्थापन पूर्वक तदुपरि हैम वा राजत वा नव दृढ़ मृन्मय कलस बन्धनी के सहित पूजा करके स्थापन करे। यह कलस वस्त्रपूत जलपूर्ण, सर्व बीज एवं सर्वौषधियुक्त स्वर्ण रौप्यान्वित, रत्नगर्भ, प्रशस्त पल्लवयुक्त, श्वेत चन्दनलिप्त, पुष्प विभूषित, गन्ध पुष्पे विधूपित एवं नव शुक्ल वस्त्र द्वारा वेष्टित होवे। पश्चात् मन्त्री ब्रह्मस्थान में कुम्भ स्थापन करके उसमें मन्त्र विग्रह चतुरानन प्रजापति को गन्ध पुष्प, धूप एवं सुमनोहर नैवेद्य द्वारा पूजा करे ॥१८७-१९१॥

तत्पश्चादाचार्य्य मण्डल के बाहर वा पूर्वदिक् में पूर्वास्य होकर पूजा के समस्त उपकरण लेकर ग्रहादि

घृतैस्तिलैर्यवैर्मन्त्री ब्रह्मादींस्तर्पयेत्ततः । प्रजेशं तर्पयेद्विद्वानाहुतीनां शतेन च ॥१९३॥
इतरान् दशभिर्देवानाहुतिभिः प्रतर्पयेत । दद्यात् पूर्णाहुतिं पश्चाद्वौषडन्तेन मन्त्रवित् ॥१९४॥
ततः प्रणम्य विज्ञाप्य कृत्वा वै स्वस्तिवाचनम् । प्रगृह्य कर्करीं सम्यग्मण्डलन्तु प्रदक्षिणम् ।
सूत्रमार्गेण दिव्येन तोयधारां तु भ्रामयेत् ॥१९५॥
पूर्ववत्तेन मार्गेण सप्तवीजानि भ्रामयेत् । सुशोभनं शुभं स्थानं तथा खातस्य कारयेत् ॥१९६
ततो गर्त्तं खनेन्मध्ये हस्तमात्र-प्रमाणतः । चतुरङ्गुलमात्रं तदधः खन्यात् सुसम्मितम् ।
गोमयेनोपलिप्याथ चन्दनेन विभूषयेत् ॥१९७॥
मध्ये दत्त्वा तु पुष्पाणि शुक्लान्यक्षतमेव च ।
आचार्य्यः प्राङ्मुखो भूत्वा ध्यायेद्देवं चतुर्भुजम् ॥१९८॥
तूर्य्यमङ्गलघोषेण ब्रह्मघोषरवेण वा । अर्घ्यं दद्यात् सुरश्रेष्ठ कुम्भतोयेन मन्त्रवित् ॥१९९॥
प्रगृह्य कर्करीं तावत्तच्छ्वभ्रं पूरयेज्जलैः । सर्व्वरत्नसमाकीर्णैर्विमलैः ससुगन्धिभिः ।
तस्मिन् शुक्लानि पुष्पाणि प्रक्षिपेदोमिति स्मरन् ॥२००॥
तदा वर्णं परीक्षेत वेदाद्येनाक्षतं क्षिपेत् । शुभं स्याद्दक्षिणावर्त्तेऽशुभं वामे भवेत्ततः ॥२०१॥

---

प्रदक्षिणं यथा स्यात्तथा भ्रामयेत् ॥१९५॥

सप्तवीजानि—यव-गोधूम-धान्य-तिल-कङ्गु-श्यामाक-नीवारात्मक-सप्तधान्यानि ॥१९६॥

तदनन्तरमाचार्य्यो यजमानो वा उदङ्मुखः, शक्तौ सुवर्णकुद्दालेन प्रारभ्य योग्यखनित्रेण हस्तप्रमाणं गर्त्तं खनेत्; तस्य गर्त्तस्याधश्चतुरङ्गुलप्रमितं खनेत् । तन्मृदश्च राजतौत्तौलिकया पूर्व्वादि-चतुर्दिक्षु प्रादक्षिण्येन निक्षिपेदिति शिष्टाचारतो ज्ञेयम् ॥१९७॥

कुम्भतोयेनेति—ब्रह्मस्थाने स्थापितं कुम्भं तूर्य्यमङ्गलघोषादिनैवानीय तस्य जलेनार्घ्यं दद्यादित्यर्थः । मन्त्रविदिति, मन्त्रश्चायम्—'ॐ नमो वरुणाय' इति ॥१९९॥

जलैस्तत्कुम्भस्थैरेव, तस्मिन् श्वभ्रे ॥२००॥ कथमावर्त्तं परीक्षेतेति ? तदाह—शुभमिति ॥२०१॥

---

सुरगण को तृप्त करें । पश्चात् मन्त्रज्ञ व्यक्ति, घृत, तिल एवं यव द्वारा, ब्रह्मादि देवगण को सन्तुष्ट करने के निमित्त कार्य्य करे । बुधव्यक्ति, प्रजेश को शतसंख्यक होम द्वारा तृप्त करे । अन्यान्य देवगण को दशधा होम करके सन्तुष्ट करे । तत्पश्चात् मन्त्रज्ञ आचार्य्य वौषडन्त मन्त्र से पूर्णाहुति अर्पण करे ॥१९२-१९४॥

अनन्तर प्रणति, विज्ञापन एवं स्वस्ति वाचन पूर्वक झारी लेकर सम्यक् विधानानुसार मण्डल प्रदक्षिण करते करते दिव्य सूत्रमार्ग द्वारा जलधारा भ्रामित करावें । तत्पश्चात् पूर्ववत् उस पथ में सप्तवीज भ्रामित करके खात के निमित्त सुशोभन शुभस्थान निर्द्धारण करें । अनन्तर मध्यस्थल में एक हस्त परिमित एक खात खनन करे । पश्चात् उसको गोमय लिप्त एवं चन्दन विभूषित करें । उसके मध्य में आचार्य्य श्वेतपुष्प एवं अक्षत निक्षेप पूर्वक पूर्वमुख होकर उपवेशन करके चतुर्भुज देव का ध्यान करें ॥१९५-१९८॥

हे सुरश्रेष्ठ ! मन्त्रज्ञ व्यक्ति, तत्पश्चात् शुभ तूर्य्यध्वनि वा वेदध्वनि के सहित कुम्भसलिल के द्वारा अर्घ्य अर्पण करें । रन्ध्रयुक्त झारी लेकर सर्वरत्न समाकीर्ण, स्वच्छ, सुगन्धपूर्ण सलिल द्वारा उस गर्त्त को पूर्ण करें । प्रणव स्मरणपूर्वक उक्त गर्त्तस्थ जल में शुक्लपुष्प निक्षेप करें । उस समय उसकी वर्ण परीक्षा करनी चाहिये । परीक्षा के समय प्रणव के सहित उसमें अक्षत प्रदान करना चाहिये । दक्षिणावर्त्त में शुभ एवं वामावर्त्त में अशुभ जानना होगा ॥१९९-२०१॥

वीजैः शालियवादीनां तं गर्त्तं पूरयेद्बुधः । क्षेत्रजाभिः पवित्राभिर्मृद्भिर्गर्त्तं प्रपूरयेत् ।।२०२

एवं निष्पाद्य विधिना चार्घ्यदानं सुरोत्तम । सुवर्णं गां वस्त्रयुग्ममाचार्य्याय निवेदयेत् ।।२०३

कालज्ञस्थपती पूज्यौ वैष्णवान् शक्तितोऽर्च्चयेत् ।
ब्राह्मणान् भोजयित्वा च गेयनृत्यादि कारयेत् ।।२०४।।
ततस्तं खातयेद्यत्नाज्जलान्तं यावदेव तु ।।२०५।।
पुरुषाधःस्थितं शल्यं न गृहे दोषदं भवेत् ।
प्रासादे दोषदं शल्यं भवेद्यावज्जलान्तिकम् ।।२०६।।
तस्मात् प्रासादिकी भूमिः शोध्या यावज्जलान्तिकम् ।
शिलान्तं कर्क्करान्तं वा यावद्वा भूः कुमारिका ।
अकोट्य तां समीकृत्य ततो यागं समापयेत् ।।२०७।।

किञ्च—

पूरयेत् खातकं यत्नात् पादं पादं यथाक्रमम् । अष्टाङ्गुलं मृत्तिकया स्वस्तिकञ्चेष्टकादिभिः ।
सिक्त्वा सिक्त्वा तु तोयेन कलसैः काञ्चनादिभिः ।।२०८।।

आकोटनं ततः कुर्य्यान्मुद्गरैर्ब्रह्मवृक्षजैः । पादोनं पूरयेत् खातं सुसमञ्चैव कारयेत् ।।२०९।।

देशिकः पञ्चगव्येन तां भूमिं प्रोक्षयेद्बुध । सुवर्णव्रीहिगर्भेण चूतपल्लवशोभिना ।
तीर्थतोयसुपूर्णेन स्वर्णताम्रभयेन वा ।।२१०।।

सेचयेदभिजप्तेन वारिणा कलसेन तु । ततः शुद्धा भवेद्भूमिर्दोषयुक्तापि या भवेत् ।।२११।।

---

न च केवलं वीजैरेव, किन्तु मृत्तिकाभिश्चेत्याह – क्षेत्रजाभिरिति ।।२०२।।

आकोट्य दृढ़मुद्गरादिप्रहारैः कुट्टनं कृत्वा, यागविधिरग्रे विज्ञाप्यः ।।२०७।।

स्वस्तिकं सम्यग्यथा स्यात्; यद्वा, स्वस्तिकमण्डलाकारेण अष्टाष्टाङ्गुलक्रमेण, मृत्तिकया इष्टकाभिः, आदि-शब्दाच्छिलाकर्करादिभिश्च तत खातं पूरयेत् ।।२०८।।

---

अनन्तर शालि एवं यवादि के बीज एवं क्षेत्रोत्थ मृत्तिका द्वारा विशेष रूप से उस गर्त्त को पूर्ण करना बुद्धिमान् व्यक्ति का कर्त्तव्य है । हे सुरोत्तम ! इस प्रकार अर्घ्य प्रदान करके आचार्य्य को सुवर्ण, धेनु एवं वस्त्रद्वय अर्पण करे । तत्पश्चात् दैवज्ञ, शिल्पी एवं वैष्णववृन्द को शक्त्यनुसार पूजा करके ब्राह्मण भोजन एवं नृत्यगीतादि का अनुष्ठान कराना चाहिये । अनन्तर जहाँ तक खोदने से जल निर्गत होता है, वहाँ तक खनन करे । पुरुषदेह परिमाण में खनन करने से उसके नीचे शल्य होने पर गृहदोष नहीं होता है । जिस परिमाण खनन करने से जल निर्गत होता है, उसके मध्य में शल्य होने से ही प्रासाद दोषावह होता है । सुतरां प्रासाद सम्बन्धिनी भूमि का शोधन जलसमीप पर्य्यन्त ही करना चाहिये । अथवा शिला अवधि वा कर्कर अवधि खनन करना चाहिये । उस भूमि को कुमारिका कहते हैं । खनन के पश्चात् मुदगर प्रहारादि द्वारा कुट्टनपूर्वक उसको समतल करके उस स्थान में योग आरम्भ करे ।।२०२-२०७।।

और भी लिखित है – यत्नपूर्वक क्रमशः पाद पाद करके खात को पूर्ण करना चाहिये । स्वस्तिक मण्डलाकार में अष्टाष्टाङ्गुल क्रम से मिट्टि, ईट, शिला और कर्करा (कंकर) इत्यादि द्वारा खात (गड्ढे) को भर देना चाहिये । एवं काञ्चनादि निर्म्मित कुम्भोदक में पुनः पुनः सेचन पूर्वक पलाशकाष्ठ गठित मुद्गर

## अथ शिलालक्षणम्

मात्स्ये—

आदावेव समासेन शिलालक्षणमुत्तमम् । शिलान्यास-विधानञ्च प्रोच्यते तदनन्तरम् ॥२१२॥

शिला वाथेष्टका वापि चतस्रो लक्षणान्विताः । प्रासादादौ विधानेन न्यस्तव्याः सुमनोहराः ।

चतुरस्राः समाः कृत्वा समन्तादथ वेष्टकाः ॥२१३॥

शिलारूपाः स्मृता विद्या नन्दाद्याश्चेष्टकान्विताः ।

सम्पूर्णाः सुतलाः स्निग्धाः सुषमा लक्षणान्विताः ।

कुशदूर्व्वाङ्किता धन्याः सध्वजच्छत्रचामराः ॥२१४॥

साङ्कुशास्तोरणोपेताः कूर्म्ममत्स्यफलान्विताः । दर्पणहस्तिवज्राङ्काः प्रशस्तद्रव्यलाञ्छिताः ।

शस्तपक्षिमृगाङ्काश्च वृषाङ्काः सर्व्वदा हिताः ॥२१५॥

स्वस्तिका वेदिकाः शुक्रा नन्द्यावर्त्तकलाञ्छिताः । पद्मादिलक्षणोपेताः शिलाः सर्व्वार्थसिद्धिदाः।

तथा गोवाजिपादाङ्काः शिला धन्याः सुखावहाः ॥२१६॥

क्रव्यादमृगपादाङ्का न शस्ताः पक्षिणस्तथा ॥२१७॥

दिङ्मूढ़ा दिग्विहीनाश्च दीर्घह्रस्वाः क्षतान्विताः ।

विवर्णाः स्फुटिता भग्नाः सन्त्यज्या लक्षणच्युताः ॥२१८॥

प्रशस्तप्राणिरूपाङ्काः प्रशस्तद्रव्यलाञ्छिताः ।

यथोक्तलक्षणोपेताः शिला नित्यं हितावहाः ॥२१९॥

---

सध्वजेति - ध्वजादिचिह्नसहिता इत्यर्थः; एवमग्रेऽपि ज्ञेयम् ॥२१४॥

तथा पक्षिण इति दुष्टपक्षिपादाङ्काश्च न शस्ता इत्यर्थः ॥२१७॥

---

द्वारा आघात करके कुट्टन करना कर्त्तव्य है । एक पाद ऊन (कम) रखकर खात को पूर्ण करके समतल (बराबर) करना चाहिये । पुनर्वार बुद्धिमान्आचार्य्य, पञ्चगव्य द्वारा उस भूमि को प्रोक्षण करें । तत्पश्चात् स्वर्णगर्भ, शस्यगर्भ, आम्रपल्लव शोभित, तीर्थवारि पूरित, स्वर्ण वा ताम्रमय कुम्भ से मन्त्रपूत उदक ग्रहण करके तद्द्वारा सेचन करना चाहिये । इस प्रकार करने से दोषयुक्त भूमि भी शुद्ध होती है ॥२०८-२११॥

### अथ शिलालक्षणम्

मत्स्य पुराण में लिखित है—प्रथमतः संक्षेप से उत्तम शिला लक्षण का लक्षण को कहकर पश्चात् शिलान्यास विधि का कीर्त्तन करूँगा । प्रथमतः सुलक्षणयुक्त चार मनोहर शिला वा चार इष्टक यथाविधि प्रासाद में विन्यास करनी चाहिये । शिलासमूह को चतुरस्र एवं समतल करके अथवा इष्टक समन्तात स्थापन करे । शिला ही विद्या एवं इष्टकादि नन्दादि नाम से कथित हैं । यदि शिला सम्पूर्ण, सुन्दर तल-विशिष्ट, स्निग्ध, दिव्य लक्षणान्वित एवं कुशदूर्वादि चिह्नयुक्त होती है तो उसको प्रशस्त समझना होगा । जो शिला ध्वज छत्र एवं चामर चिह्न विशिष्ट, अङ्कुश, तोरण चिह्न से चिह्नित, कूर्म्म, मत्स्य वा फल चिह्न विशिष्ट दर्पण हस्ती वा वज्र चिह्न युक्त, प्रशस्त द्रव्य चिह्न विशिष्ट, प्रशस्त पक्षी वा मृगचिह्न चिह्नित वा वृष चिह्न युक्त है, वह शिला सर्वदा शुभदा है । जिस शिला में स्वस्तिक, वेदी, नन्द्यावर्त्त वा शुक्र चिह्न है, जो पद्मादि चिह्न विशिष्ट है, वह सर्वार्थ सिद्धिद है । शिला में गोपद-चिह्न वा अश्वपद-चिह्न

अथ इष्टका-लक्षणम्

तत्रैव —

इष्टकानां समासेन लक्षणं शृणु साम्प्रतम् ।।२२०।।

एकवर्णाः सुपक्वाश्च सुप्रमाणा मनोरमाः ।

नन्द्याद्याश्चेष्टकाः कार्य्याश्चतुरस्राः सुसम्मिताः ।।२२१।।

अस्थ्यङ्गारान्विता नेष्टाः कृष्णवर्णा सशर्कराः । मन्दपक्वा विपक्वाश्च बहुदिन्याश्च वर्ज्जिताः ।

भग्नाश्च विषमा हीना वर्ज्जनीयाः प्रयत्नतः ।।२२२।।

हयशीर्षपञ्चरात्रे—

इष्टकानां प्रमाणञ्च लक्षणं साम्प्रतं शृणु । सुतला लक्षणोपेता द्वादशाङ्गुलसम्मिताः ।।२२३

सुविस्तारविभागेन नैपुण्येन च सम्मिताः ।।२२४।।

सुपक्वाः सुप्रमाणाश्च एकवर्णा मनोहराः । विमला इष्टकाः कार्य्याश्चतुरस्राः सुसम्मिताः ।

छिन्नकर्णाश्चाप्रशस्ताः पाणिपादविवर्ज्जिताः ।।२२५।।

सशर्करा कृष्णवर्णा अस्थ्यङ्गारचिताश्च याः । विवर्णा मन्दगन्धाश्च याः पीनर्पिण्डकास्तथा ।

हीनाश्च विषमा भग्ना जर्ज्जराश्च विवर्ज्जिताः ।।२२६।।

---

बहुदिन्याश्चिरन्तन्यः, हीनाः—उक्तलक्षणरहिता अभिनवाः ।।२२२।।

श्रीहयशीर्षदेवेन शिलालक्षणं श्रीमूर्त्तिप्रादुर्भावप्रसङ्गे पूर्व्वमेवोक्तमस्ति, अधुना इष्टकालक्षणमत्रोच्यते—इष्टकानामिति सार्द्धचतुर्भिः ।।२२३।।

पाणिपादैः उपर्य्यधोभागैर्विवर्ज्जिताः ।।२२५।।

---

विराजित होने पर वह धन्य एवं सुखावह है । मांसाशि पशु पदाङ्कित वा दुष्ट पक्षी के पदचिह्न युक्त शिला शिला प्रशस्त नहीं है । जो शिला, दिङ्मूढ़, दिग्विदिक्विहीन, अति दीर्घ किंवा अति ह्रस्व, क्षतयुक्त, विवर्ण, स्फुटित, भग्न, एवं सुलक्षण रहित है, उसको परित्याग करे । शिला में प्रशस्त प्राणी का चिह्न, प्रशस्त द्रव्यचिह्न वा यथाविहित लक्षण विराजित हो तो वह सर्वदा शुभदा है ।।२१२-२१६।।

अथ इष्टका-लक्षणम्

उक्त ग्रन्थ में लिखित है—अधुना संक्षेप से इष्टका लक्षण को सुनो । नन्दादि नामक इष्टकसमूह एक वर्ण, सुपक्व, सुप्रमाण आयतन विशिष्ट, मनोहर, चतुष्कोण एवं ससम्मित, अस्थि वा अङ्गार विशिष्ट, अवाञ्छित कृष्णवर्ण वालुका पूर्ण, मन्दपक्व, विपरीत पक्व, बहु पुरातन, भग्न, विषम एवं हीन इष्टक यत्न पूर्वक वर्जनीय है ।।२२०-२२२।।

हयशीर्ष पञ्चरात्र में उक्त है—अधुना इष्टक का लक्षण एवं प्रमाण का श्रवण करो, सुतल लक्षणविशिष्ट द्वादशाङ्गुल प्रमाण, सुविस्तृत, सुकौशल से निर्मित, सुपक्व, सुप्रमाण आयतन विशिष्ट, एक वर्ण, मनोहर, विमल, सम्यक् प्रस्तुत चतुष्कोण एवं सुसज्जित करके इष्टक गठन करे । छिन्नकर्ण, अप्रशस्त, उपरिभाग में वा अधोभाग में विरहित, बालुकापूर्ण, कृष्णवर्ण, अस्थि एवं अङ्गारयुक्त, विवर्ण, दुर्गन्ध, पीतपिण्डिकान्वित, हीन, विषम, भग्न एवं जीर्ण इष्टक को परित्याग करे ।।२२३-२२६।।

अथ शिलादिन्यास-व्यवस्था

मात्स्ये —

शिलान्यासस्तु कर्त्तव्यः प्रासादे तु शिलामये । इष्टकानां तु विन्यासः प्रासादे चेष्टकामये ।।२२७

शैलजे शैलजः पीठ ऐष्टके चेष्टकः स्मृतः । शिलान्यासादिको भद्रे मूलपादे विधीयते ।।२२८

हयशीर्षे च—

कर्त्तव्यश्चेष्टकान्यासः प्रासादे चेष्टकामये ।
शैले शिलानां विन्यासः कार्करे कर्करं न्यसेत् ।।२२९।। इति ।
कृत्वा शिलादिन्यासञ्च प्राक् शिलाभ्यधिवासनम् ।
इष्टकानां प्रतिष्ठाञ्च गर्भाधानञ्च कारयेत् ।।२३०।।

गुरुवे दक्षिणां दत्त्वा पीठबन्धञ्च साधयेत् । स्वयं श्रीहयशीर्षेणैव प्रोक्तस्तत्तद्विधिः स्फुटम् ।।२३१

---

मत्स्यपुराणानुक्तमपि शिलादिन्यासे शिलाधिवासनादिकं श्रीहयशीर्षपञ्चरात्र-दृष्ट्या लिखति—कृत्वेति द्वाभ्याम् ।।२३०।।

ननु शिलाधिवासनादिविधिः कीदृशः ? इत्यपेक्षायां लिखति—स्वयमिति । स्फुटमिति—एकत्रैव व्यक्तं तत्र वर्त्तमानत्वादत्र न लिखित इति भावः । तथा च तत्र शिलाधिवासनपटले—'नवैव परिगृह्णीयाताम्र-कुम्भान् सुशोभनान् । आहृत्य सर्व्वसम्भारानिष्टकामधिवासयेत् ।। ऐशान्यां मण्डपं कृत्वा तद्वत् प्राच्यां च मण्डपम् । कुम्भानामिष्टकानाञ्च ततः स्नपनमाचरेत् ।। अथ पञ्चकषायेण सर्व्वौषधिजलेन च । गन्धतोयेन च तथा कुम्भैस्तोयसुपूरितैः ।। हिरण्यव्रीहिसंयुक्तैर्गन्धचन्दनचर्च्चितैः । आपो हिष्ठेति तिसृभिः शन्नो देवीति चाप्यथ ।। तरत् समन्दीति तथा पावमानीभिरेव च । उदुत्तमं वरुणेति इमम्मेति तथैव च ।। वरुणस्येति मन्त्रेण हंसः शुचिषदित्यपि । श्रीसूक्तेन तथा कुम्भैः स्नापयेदिष्टकां तथा ।। श्रावणीयं पठन् सूक्तं कुम्भांस्तान् स्नापयेद्बुधः । ततोऽनुलेपनं कार्य्यं चन्दनेन सुगन्धिना ।। आच्छादनं ततः कुर्य्याद्वासोभिः कुसुमैस्ततः । शय्यायां तु प्रकृष्टायां मण्डपे स्थाप्य पूजयेत् ।। नानाप्रख्यौदनैश्चैव गन्धैः पुष्पैर्मनोहरैः । धूपं दीपञ्च नैवेद्यं तेषां यत्नान्निवेदयेत् ।। एवं कृत्वा ततः सम्यगिष्टकाहोममाचरेत् । तस्मिंस्तु मण्डपे लिख्य वैष्णवं मण्डलं शुभम् ।। विष्णुमभ्यर्च्चयेत्तत्र कुण्डेऽग्निं जुहुयात्ततः । वैष्णवाग्निं ज्वलित्वादौ यथाविधि समाहितः ।। कुर्य्याच्च समिदाधानं द्वादशाक्षरविद्यया । आघाराज्यद्विभागौ तु प्रणवेनैव कारयेत् ।। अष्टाक्षरैस्ततो व्यस्तैः कुर्य्यादष्टाहुतीः क्रमात् । आज्यं वाहृतिभिर्हुत्वा लोकेशानां क्रमेण तु ।। अग्नये चैव सोमाय ग्रहेभ्य इति चैव हि । पुरुषोत्तमायेति हुत्वा व्याहृतीर्जुहुयात्तत ।। प्रायश्चित्तं ततो हुत्वा दद्यात् पूर्णाहुतिं ततः । द्वादशाक्षर-

---

अथ शिलादिन्यास-व्यवस्था

मत्स्यपुराण में कथित है– हे कल्याणि ! शिलागठित प्रासाद में शिलान्यास, इष्टकगठित प्रासाद में इष्टकन्यास एवं शैलमय प्रासाद में शैलजात एवं इष्टकमय प्रासाद में इष्टकमय पीठन्यास करना कर्त्तव्य है। मूलपाद में शिलान्यासादि का विधान करना चाहिये ।।२२७-२२८।।

हयशीर्ष पञ्चरात्र में उक्त है— इष्टकगठित प्रासाद में इष्टक, शैल में शिला, कर्करमय में कर्कर (काँकर) का न्यास करना चाहिये । प्रथम शिलादिन्यास करके शिला का अधिवासन करना चाहिये । श्रीगुरुदेव को दक्षिणा प्रदान करके पीठबन्ध करना कर्त्तव्य है । एतद्विषय का विधान श्रीहयशीर्ष पञ्चरात्र में सुस्पष्ट रूप से है ।।२२९-२३१।।

### अथ पीठबन्धनम्

हयशीर्षे—

**पीठबन्धं ततः कुर्य्यान्महाप्रासादमानतः। पीठोत्तमं चोच्छ्रयेण प्रासादस्योद्ध्र्वमानतः ॥२३२**

मन्त्रेण वेदाद्यैरथवानघ। कुण्डेषु मूर्त्तिपाः सम्यक्जुहुयुः सघृतांस्तिलान् ॥'; अथ पातालयागपटले च— 'कुम्भन्यासं ततः कुर्य्यादिष्टकान्यासमेव च। देशिकः प्राङ्मुखो भूत्वा सर्व्वालङ्कारभूषितः ॥ विलिप्य गोमयैर्भूमिं विन्यसेत् कलसान्नव। अष्टदिक्षु यथान्यायं मध्ये चैकं तथा न्यसेत् ॥पञ्चरत्नसमायुक्तान्मङ्गलौषधि-संयुतान्। पारदेन समायुक्तान् कृत्वा वस्त्रेण भूषितान्॥ शङ्खं चैव महापद्मं मकरं कच्छपं तथा। मुकुन्दश्च तथा नन्दं शङ्खञ्च पद्मिनीम्। एतास्तु देवताः कुम्भेन्यसनीया यथाक्रमम् ॥ एवं विन्यस्य कलसान् पुनर्नैतान् प्रवालयेत्। कुम्भस्योपरि विन्यस्य इष्टकादौ यथाक्रमम्। ईशाने च तथा कोणे इष्टकां प्रथमां न्यसेत् ॥ प्रदक्षिणक्रमेणैव इष्टकान्यास इष्यते। शक्तयो विमलाद्यास्तु इष्टकानां तु देवताः ॥ न्यसनीया यथान्यायं मध्ये न्यस्यास्ततो ग्रहाः। अव्यङ्गे चाक्षते पूर्णे मुनेरङ्गिरसः सुते। इष्टके त्वं प्रयच्छेष्टं प्रतिष्ठां कारयाम्यहम् ॥ मन्त्रेणानेन विन्यस्य इष्टकां देशिकोत्तमः। गर्भाधानं ततः कुर्य्यान्मध्यस्थाने समाहितः ॥' इत्यादि। अत्र केषाञ्चिच्छिष्टानां मतमेवम्—प्रासादस्य चतुष्कोणेषु चतुरो गर्त्तान् विधाय, प्रतिगर्त्तोपरि वेदीं निर्म्माय, तदुपरि शुक्लतण्डुलान् निक्षिप्य तदुपर्य्याग्नेयादिकोणेषु प्रशस्ता नन्दाद्याः शिला इष्टका वा विधाय प्रतिवेदीसन्निधौ सुलक्षणं पञ्चपल्लवादियुत निर्म्मलजलपूरितं कलसं संस्थाप्याग्नेयादिषु स्वस्ववेद्युपरि नन्दाद्याः स्थापयेत्। ततः प्रशस्तेन केनापि वारिणा प्रत्येकं प्रणवेन संस्नाप्य अस्त्राय फड़िति पुनरपि स्नापयेत्, वस्त्रेण तोयमपनयेच्च। एवं चतसृणामपि प्रत्येक स्नपनं विधाय 'ॐ नन्दायै नमः' इति गन्धपुष्पा-दिभिरुपचारैः प्रत्येकमर्च्चयेत्। ततो वक्ष्यमाणमन्त्रैर्विज्ञाप्य गीत-वाद्य-वेदनिर्घोषैः स्व-स्व-दिक्ष्ववतारयेत्। प्रथमशिलावतारणे प्रशस्तशकुनादिकमपि निरूपणीयम्। शिलास्तु प्रागुक्तरूपवाः। अथोदकान्तरेणास्त्राय फड़िति स्नापयित्वा मन्त्रवारिणा स्नापयेत्। ततो दिव्यरूपां हेमाभां सुभूषितां स्मिताननां तां ध्यात्वा मन्त्र-मुच्चार्य्य 'ॐ भगवति नन्दे इहागच्छ इह तिष्ठ' इत्यावाह्य वैदिकैरपि मन्त्रैः प्रतिष्ठाप्य पूर्व्वदिक्स्थकुम्भोदकेन मन्त्रेण स्नापयित्वा अवशिष्टकुम्भोदकेन 'ॐ नन्दायै नमः' इति स्नापयेत्। ततो वस्त्रेण तोयमपनीय वस्त्र-गन्धादिभिरुपचारैः प्रत्येकमर्च्चयेत्। ततो धूपयित्वा पुनरभ्यर्च्च्य सामान्यमुद्रां बद्ध्वा दधिमांसादिनैवेद्यं निवेद्य 'ॐ नन्दायै नमः, 'ॐ नन्दे त्वं नन्दसे पुंसां रक्ष मां स्थापयाम्यहम्। अस्मिन् सन्तिष्ठ संहृष्टा यावदा-चन्द्रतारकम् ॥ आयुष्कामं प्रियं नन्दे ददासि सर्व्वदा नृणाम्। अस्मिन् रक्षा त्वया कार्य्या प्रासादे जयतः सदा ॥' इति मन्त्रेण नन्दां स्थापयित्वा पूर्व्ववदुपचारैर्भद्रामभ्यर्च्च्य 'ॐ भद्रायै नमः', ॐ भद्रे त्वं सर्व्वदा भद्रं पुंसां कुरु हितावहम्। आयुष्कामप्रदा देवि श्रीपदा सर्व्वदा भव ॥ ततो जयां प्रति, ॐ जयायै नमः, ॐ जये त्वं सर्व्वदा भद्रे संतिष्ठ स्थापिता मया। नित्यं जयं जये देवि स्वामिनो जयदा भव ॥ ततः पूर्णां प्रति, ॐ पूर्णायै नमः, ॐ पूर्णे त्वं च महाविद्ये सर्व्वसन्दोहलक्षणे। सर्व्वं सम्पूर्णमेवात्र प्रसादं कुरु सम्पदा ॥ एवं प्रसादयेत्। ततः प्रभृति शिलानामिष्टकानाञ्च चालनं न कर्त्तव्यम्। ततश्च—'यान्तु देवगणाः सर्व्वे पूजामादाय पार्थिवात्। इष्टकामप्रसिद्धचर्थं पुनरागमनाय च ॥' इति पठित्वा क्षमध्वमिति चोक्त्वाचार्य्यो देवता विसर्जयेत्। ततो यजमानः प्राङ्मुखोपविष्टायाचार्य्याय दक्षिणां गां वस्त्रादिकं च दद्यात्। अथ स्वस्ति-वाचकान् दैवज्ञस्थपति-वैष्णवांश्च सम्पूज्य शक्त्या ब्राह्मणान् भोजयेदिति ॥२३१॥

पीठबन्धो नाम प्रासादस्य मूलाद्भूम्युपरितनभागं यावत् ॥२३२॥

---

### अथ पीठबन्धनम्

**हयशीर्ष में उक्त है—अनन्तर महाप्रासाद के परिमाणानुसार पीठबन्धन करना चाहिये। प्रासाद की उच्चता का परिमाण जितना है, उससे आधा परिमाण होने पर भी वह पीठ उत्तमपरिगणित होता है।**

पादहीनं मध्यमं स्यात् कन्यसं चार्द्धमानतः । उत्तमं वासुदेवस्य कुर्य्यात् पीठं विचक्षणः ॥२३३

अथ प्रासादादिलक्षणानि

मात्स्ये—

एवं वास्तुवलिं कृत्वा भजेत् षोड़शभागिकम् । तस्य मध्ये चतुर्भिस्तु भागैर्गर्भञ्च कारयेत् ॥२३४

भागद्वादशकं तत्र भित्त्यर्थं परिकल्पयेत् । चतुर्भागेन भित्तीनामुच्छ्रायः स्यात् प्रमाणतः ।

द्विगुणः शिखरोच्छ्रायो भित्त्युच्छ्रायात् प्रमाणतः ॥२३५॥

शिखरार्द्धस्य चार्द्धेन विधेया तु प्रदक्षिणा । चतुर्द्दिक्षु तदा ज्ञेयो निर्गमस्तु तथा बुधैः ॥२३६॥

गर्भसूत्रद्वयं भागो विस्तारो मण्डपस्य तु । आयतः स्यात् त्रिभिर्भागैर्भद्रयुक्तः सुशोभनः ॥२३७

पञ्चभागेन संभज्य गर्भमानं विचक्षणः । भागमेकं गृहीत्वा तु प्राग्ग्रीवं कल्पयेद्बुधः ॥२३८॥

गर्भसूत्रसमो भागादग्रतो मुखमण्डपः । एतत् सामान्यमुद्दिष्टं प्रासादस्येह लक्षणम् ॥२३९॥

किञ्च—

मेरुमन्दरकैलास-कुम्भसिंहमृगास्तथा । विमानच्छन्दकस्तद्वच्छ्रीवृक्षोऽथ मृगाधिपः ॥२४०॥

बलभीच्छन्दकस्तद्वद्वर्त्तूलः सर्व्वभद्रकः । गजश्च नन्दनश्चैव नन्दिवर्द्धन एव च ॥२४१॥

हंसो वृषः सुपर्णश्च पद्मकोऽथ समुद्गकः । प्रासादा नामतः प्रोक्ता विभागं शृणुत द्विजाः ॥२४२

---

षोड़शभागिकं भजेत्, षोड़शभागान् कुर्य्यादित्यर्थः । तथा चोक्त श्रीहयशीर्षदेवेन—'चतुरस्रीकृतं क्षेत्रं भजेत् षोड़शधा पुनः' इति । एवमग्रे लेख्यहयशीर्षपञ्चरात्रवचनानुसारेणाग्रेऽन्यत्राप्यर्थो बोद्धव्यः ॥२३४॥

प्रदक्षिणादयश्च प्रासादोपरितनभागविशेषाः शिल्पिशास्त्रतः स्थपतिषु प्रसिद्धा एव, तथेति प्रदक्षिणातुल्यमान इत्यर्थः ॥२३६॥ त्रिभिर्भागैर्मण्डप आयतः स्यात् ॥२३७॥

नामतो लक्षणतो मानतश्च विंशतिप्रासादानाह— मेर्वित्यादिना शुभलक्षणा इत्यन्तेन ॥२४०॥

---

पादहीन होने से मध्यम, एवं उसका अर्धपरिमाण होने पर कनिष्ठ जानना चाहिये । विज्ञ व्यक्ति, इस प्रकार से ही वासुदेव के उत्कृष्ट पीठ प्रस्तुत करें ॥२३२-२३३॥

अथ प्रासादादिलक्षणानि

मत्स्यपुराण में लिखित है—इस प्रकार वास्तुवलि अर्पणपूर्वक क्षेत्र को षोड़शधा विभक्त करना चाहिये तन्मध्य में चार भाग के भाग द्वारा गर्त्त करना चाहिये एवं द्वादश भाग को भित्ति एवं चार भाग में भित्ति को उन्नत करे । भित्ति की उन्नति जैसे होगी, उपरिभाग उसका द्विगुण करना चाहिये । एवं शिखरार्द्ध के अर्ध परिमित प्रदक्षिणा देनी चाहिये । चतुर्दिक में निर्गम पथ करना बुद्धिमान् व्यक्ति का कर्त्तव्य है । गर्भ-सूत्र के दो भाग के सदृश मन्दिर को विस्तृत करे एवं भागत्रय में भद्रयुक्त करके मनोहर आयत करना कर्त्तव्य है । मध्य स्थान के परिमाण को पञ्च अंशकरके उसके एक अंश के समान पूर्व ग्रीवा करे । गर्भसूत्र के समान भाग के अग्रदिक् में मण्डप का मुख करना चाहिये । संक्षेप से यह प्रासाद का लक्षण वर्णित हुआ ॥२३४-२३९॥

और भी लिखित है—हे द्विजवृन्द ! मेरु मन्दर, कैलास, कुम्भ, सिंह, मृग, विमानच्छन्दक, श्रीवृक्ष, मृगाधिप, वलभीच्छन्दक, वर्त्तुल, सर्वभद्रक, गज, नन्दन, नन्दिवर्धन, हंस, वृष, सुपर्ण, पद्मक एवं समुद्गक, यह सब प्रासाद के नाम हैं । अनन्तर इसका विभाग श्रवण करो । जो प्रासाद, शतशृङ्गविशिष्ट, चतुर्द्वार-युक्त, भूमि का षोड़शांश उच्च एवं जिसका शिखरदेश विविध चित्र विचित्र है, उसको मेरु प्रासाद कहते

शतशृङ्गश्चतुर्द्वारो भूमिका-षोड़शोच्छ्रितः । नानाविचित्रशिखरो मेरुप्रासाद उच्यते ॥२४३॥
मन्दरो द्वादश प्रोक्तः कैलासो दशभूमिकः । विमानछन्दकस्तद्वदनेकशिखराननः ॥२४४॥
स चाष्टभूमिकस्तद्वत् सर्वाभिर्नन्दिवर्द्धनः । विंशाण्डकसमायुक्तो नन्दनः समुदाहृतः ॥२४५॥
षोड़शाण्डकसंयुक्तो नानारूपसमन्वितः । अनेकशिखरस्तद्वत् सर्व्वतोभद्र उच्यते । २४६॥
चन्द्रशाला-समोपेतो विज्ञेयः पञ्चभूमिकः । बलभीच्छन्दकस्तद्वच्छुकनासात्रयान्वितः । २४७॥
वृषस्योच्छ्रायतस्तुल्यो वर्त्तुलश्चास्रवर्ज्जितः । सिंहः सिंहाकृतिर्ज्ञेयो मृगो मृगसमस्तथा ।
कुम्भः कुम्भाकृतिस्तद्वद्भूमिकानवकोच्छ्रयः ॥२४८॥
अङ्गुलीपुटसंस्थान-पञ्चाण्डकविभूषितः । षोड़शास्रः समन्तात्तु विज्ञेयः स समुद्गकः ।
पार्श्वयोश्चन्द्रशालास्य उच्छायो भूमिकाद्वयम् ॥२४९॥
हंसो हंससमाकारो नातिदीर्घो न चोच्छ्रितः । षोड़शास्रः स विज्ञेयो विचित्रशिखरः शुभः ॥२५०
मृगराजस्तु विख्यातश्चन्द्रशालाविभूषितः । प्राग्ग्रीवेण विशालेन भूमिकासु षडुन्नतः । २५१
अनेकचन्द्रशालस्तु गज-प्रासाद उच्यते । पर्य्यस्तगृहराजो वै गरुड़ो नाम नामतः ॥२५२॥
सप्तभूम्युच्छ्रायस्तद्वच्चन्द्रशालात्रयान्वितः । भूमिकाषड़शीतिस्तु वाह्यतः सर्व्वतो भवेत् ॥२५३॥
तथान्यो गरुड़े तद्वदुच्छ्रायो दशभूमिकः । पद्मकः षोड़शास्रस्तु भूमिद्वयसमन्वितः ।
पद्मतुल्यप्रमाणेन श्रीवृक्षक इति स्मृतः ॥२५४॥
पञ्चाण्डकस्त्रिभूमिस्तु गर्भे हस्तचतुष्टयम् । वृषो भवति नाम्ना यः प्रासादः सार्व्वकामिकः ॥२५५

---

द्वादशेति द्वादशभूमिकः, एवमग्रेऽप्यूह्यम् ॥२४४॥

---

हैं । भूमि का द्वादश भाग उन्नत होने से मन्दर दश भाग उन्नत होने से कैलास, एवं बहुशिखर, बहुमुख एवं अष्टभूमिक होने से विमान च्छन्दक कहा गया है । समतत्र प्रासाद, नन्दिवर्धन नाम से एवं विंशाण्डक (गुम्मज) युक्त प्रासाद को नन्दक कहते हैं । षोड़शाण्डक विशिष्ट, नानाविध रूपयुक्त एवं बहुशिखर युक्त प्रासाद का माम सर्वतोभद्र है । चन्द्रशाला विशिष्ट पञ्चभूमिक एवं शुकनासात्रय युक्त प्रासाद का नाम वलभीच्छन्दक है । बृषवत् उच्च एवं कोणरहित होने से वर्त्तुल नाम से अभिहित है । सिंहाकारक को सिंह मृगाकार को मृग, कुम्भाकार क कुम्भ, एवं भूमि से नवगुणोन्नत अङ्गुलीपुट संस्थान, पञ्चाण्ड को सुशोभित एवं सर्वथा षोड़शास्र होने से उसका नाम समुद्गक है । इसके पार्श्वद्वय में चन्द्रशाला विद्यमान है एवं इसका भूमिकाद्वय उच्च हैं । नातिदीर्घ अनुच्छ्रित, हंसाकृतियुक्त, षोड़शास्र एवं सुन्दर विचित्र शिखरयुक्त होने से वह हंस नाम से अभिहित होता है । चन्द्रशाला द्वारा समलङ्कृत प्रासाद को मृगराज कहते हैं । जिस प्रसाद की पूर्वदिकस्थ ग्रीवा विशाल है, जो भूमि में छः भाग उन्नत एवं चन्द्रशाला युक्त है, वह गज प्रासाद नाम से कथित है । जिस प्रासाद के चतुर्द्दिक में गृहराज संस्थित है, उसको गरुड़ कहते हैं । वह सप्तभूमि उच्च, चन्द्रशालात्रय विशिष्ट एवं वहिर्भाग में समस्तदिक् में षडशीति भूमि विशिष्ट है । अन्य एक प्रकार गरुड़ प्रासाद पूर्ववत्, दशभूमिक उन्नत है । भूमिद्वय विशिष्ट षोड़शास्र प्रासाद को पद्मक कहते हैं । श्रीवृक्ष नामक प्रासाद भी पद्म के समान परिमाण होगा । पञ्चाण्डक, त्रिभूमिक एवं चतुर्हस्त परिमित गर्भ विशिष्ट प्रासाद को वृष कहते हैं, यह सर्व कामद है ॥२४०-२५५॥

सप्ताष्टौ पञ्चधा चैव प्रासादा ये मयोदिताः ।
सिंहस्य ते समा ज्ञेया ये चान्ये तत्प्रमाणतः ॥२५६॥
चन्द्रशालैः समोपेताः सर्व्वे प्राग्ग्रीवसंयुताः ।
ऐष्टिका दारवाश्चैव शैला वा स्युः सतोरणाः ॥२५७॥

मेरुः पञ्चाशद्धस्तः स्यान्मन्दरः पञ्चहीनकः । चत्वारिंशत्तु कैलासश्चतुस्त्रिंशद्विमानकः ॥२५८
नन्दिवर्द्धनकस्तद्वद्द्वात्रिंशत् समुदाहृतः । त्रिंशता नन्दनः प्रोक्तः सर्व्वतोभद्रकस्तथा ।
वर्त्तुलः पद्मकश्चैव विंशद्धस्त उदाहृतः ॥२५९॥

मृगः सिंहश्च कुम्भश्च बलभीच्छन्दकस्तथा । एते षोड़शहस्ताः स्युश्चत्वारो देववल्लभाः ॥२६०
श्रीवृक्षौ मृगराजश्च समुद्गकगजौ तथा । एते द्वादशहस्ताः स्युरेतेषां हंसकः समः ॥२६१॥
गरुड़ोऽष्टकरो ज्ञेयो वृषा दश उदाहृताः । एवमेते प्रमाणेन कर्त्तव्याः शुभलक्षणाः ॥२६२॥
यक्षराक्षसनागानां मातृहस्तः प्रशस्यते । तथा मेर्वादयः सप्त ज्येष्ठलिङ्गे सुखावहाः ॥२६३॥
श्रीवृक्षकादयश्चाष्टौ मध्यमस्य उदाहृताः । तथा हंसादयः पञ्च कन्यसे शुभदा मताः ॥२६४

हयशीर्षपञ्चरात्रे च—

प्रासादं सम्प्रवक्ष्यामि सर्व्वसाधारणं शृणु ॥२६५॥
चतुरस्त्रीकृतं क्षेत्रं भजेत् षोड़शधा पुनः । मध्ये तस्य चतुर्भिस्तु कुर्य्याद्द्वारसमन्वितम् ।
द्वादशैव तु भागानि भित्त्यर्थं परिकल्पयेत् ॥२६६॥

---

वर्त्तुल एव मण्डल इत्युक्तपरिमाणं कार्य्यमन्यत्र चात्महस्तेनैवेत्यर्थः ॥२५९॥
कन्यसे—कनिष्ठलिङ्गे ॥२६४॥
भजेत्—विभजेत् ॥२६६॥

---

सप्त, अष्ट एवं पञ्चधा रूप में जिन सब प्रासादों का वर्णन हुआ तत् समस्त सिंहवत् प्रमाणान्वित हैं । वे सब प्रासाद चन्द्रशाला विशिष्ट, पूर्ववर्त्ती ग्रीवा समन्वित, इष्टक, काष्ठ एवं शिला गठित एवं तोरणयुक्त हैं । मेरु नामक प्रासाद का परिमाण पञ्चाशत् हस्त होगा । मन्दर पञ्चचत्वारिंशत्, कैलास चत्वारिंशत्, विमानक त्रिंशत्, नन्दिवर्धन द्वात्रिंशत्, नन्दन एवं सर्वतोभद्र त्रिंशत्, वर्त्तुल एवं पद्मक विंशति, मृग, सिंह, कुम्भ एवं वलभीच्छन्दक षोड़श, देववल्लभ, चार, श्रीवृक्ष, मृगराज, समुद्गम-गज एवं हंस द्वादश, गरुड़-अष्ट एवं वृक्ष नामक प्रासाद परिमाण में दश हस्त होगा । शुभलक्षण प्रासादसमूह का निर्म्माण, इस नियम से करना चाहिये ॥२५६-२६२॥

यक्ष, राक्षस, एवं नाग—इनके प्रासाद को मातृहस्त (अ ठ हाथ) करना चाहिये । मेरु प्रभृति सप्त प्रकार प्रासाद प्रशस्त परिमाण में निर्मित होने पर सुखदायक होते हैं । श्रीवृक्षादि अष्ट संख्यक प्रासाद मध्य विध परिमाण में निर्म्माण कर सकता है । एवं हंसादि पञ्च प्रासाद कनिष्ठ परिमाण में निर्मित होने पर भी मङ्गलदायक हैं ॥२६३-२६४॥

हयशीर्ष पञ्चरात्र में उक्त है—सर्वसाधारण प्रासाद का वर्णन करता हूँ सुनो । भूमि को चतुष्कोण करके पुनर्वार उसको षोड़शांश में विभक्त करे । तन्मध्ये चार द्वार, द्वादश अंश के एकांश भित्ति, एवं जङ्घा की उच्चता एवं आयतन चार चार भाग करे । मञ्जरी को जङ्घा से द्विगुण उन्नत करना कर्त्तव्य है,

जङ्घोच्छ्रायन्तु कुर्व्वीत चतुर्भागेन चायतम् । जङ्घयोर्द्विगुणोच्छ्रायं मञ्जर्य्याः कल्पयेद्बुधः ॥२६७
चतुर्भागेन मञ्जर्य्याः कार्य्या सम्यक् प्रदक्षिणा । तन्मानं निर्गमं कार्यमुभयोः पार्श्वयोः समम्॥ २६८
शिखरेण समं कार्य्यमग्रे जगति विस्तरम् । त्रिगुणेनापि कर्त्तव्यं यथाशोभानुरूपतः ॥२६९॥
विस्तारं मण्डपस्याग्रे गर्भसूत्रद्वयेन तु । दैर्घ्यात् पादाधिकं कुर्य्यान्मध्ये स्तम्भैर्विभूषितम् ॥२७०
प्रासादगर्भमानं वा कुर्व्वीत मुखमण्डपम् । एकाशीतिपदैर्वास्तुमिष्ट्वा मण्डपमारभेत् ॥२७१॥

शुकाढ्यद्वारि विन्यासे पदान्तस्थान् यजेत् सुरान् ।
तथा प्राकारविन्यासे यजेद्द्वात्रिंशदन्तगान् ॥२७२॥

सर्व्वसाधारणञ्चैतत् प्रासादस्य तु लक्षणम् । मानेन प्रतिमा या वा प्रासादमपरं शृणु॥ २७३

प्रतिमायाः प्रमाणेन कर्त्तव्या पिण्डिका शुभा ।
गर्भस्तु पिण्डिकार्द्धेन गर्भमानात्तु भित्तयः ॥२७४॥

भित्तेरायाममानेन उच्छ्रायन्तु प्रकल्पयेत् । भित्युच्छ्रायात्तु द्विगुणं शिखरं कल्पयेद्गुरुः ॥२७५॥
शिखरस्य तु तूर्य्येण भ्रमणं परिकल्पयेत् । शिखरस्य चतुर्थेन अग्रतो मुखमण्डपम् ॥२७६॥
अष्टकांशेन गर्भस्य रथकानान्तु निर्गमः । परिधेर्गुणभागेन रथकांस्तत्र कल्पयेत् ॥२७७॥
तत्तृतीयेन वा कुर्य्याद्रथकानान्तु निर्गमम् । रामत्रयं स्थापनीयं रथकत्रितये सदा ॥२७८॥
शिखरार्थं च सूत्राणि रत्नानि विनिपातयेत् । शिखरस्यार्द्धभागस्थं सिंहं तत्र च कारयेत् ॥२७९

शुकनासां स्थिरीकृत्य मध्यसन्धौ निधापयेत् ।
अपरे च तथा पार्श्वे तत्तत् सूत्रं विधारयेत् ॥२८०॥

तदूर्द्ध्वं तु भवेदंशः कण्ठः श्यामलसारवान् । स्कन्धभुग्नं तु कर्त्तव्यं विकरालं तथैव च ।
उद्धृतं वेदिकामानात् कलसं परिकल्पयेत् ॥२८१॥

---

भ्रमणं प्रदक्षिणां, रथकादिलक्षणञ्च शिल्पिमुखादेः सम्यग्ज्ञातं भवतीति तद्विस्तारेणालम् । अन्यच्च स्पष्टमेव ॥२७६-२७८॥

---

मञ्जरी के चार भाग में एक भाग प्रदक्षिणा होगी । प्रदक्षिणा के परिमाण में उभयदिक् में ही समान भाव से जलनिर्गमन स्थान करे । सम्मुख भाग में जगति शिखर के समान हो, अथवा, त्रिगुणित करके सुसज्जित करे । मण्डप के सामने के विस्तार को ही गर्भसूत्र के द्वारा सम्पादन करे । दैर्घ्य में पादाधिक (एक चौथाई अधिक) करके मध्य में स्तम्भ द्वारा अलङ्कृत करे । प्रासाद के मध्य खण्ड का जितना परिमाण हो, उसी के अनुसार मण्डप का मुख करना चाहिये । एकाशीति विन्यास पूर्वक वस्तु भाग करके मण्डप आरम्भ करना चाहिये । शुक (तोते) युक्त द्वारा देश विन्यास करके वहाँ पदान्तस्थ (पद के समान स्थान में स्थित) देवताओं की ओर प्राकार विन्यास करके वहाँ अन्तर्गत द्वात्रिंशत् संख्यक देवता की पूजा करनी चाहिये । साधारण रीति से प्रासाद के यह लक्षण कहे गये हैं । प्रतिमा के परिमाण भेद से प्रासाद के अन्य प्रकार लक्षण कहता हूँ, सुनो । गुरुदेव, प्रतिमा के परिमाणानुसार शुभ पिण्डिका रचना करें । पिण्डिका के अर्ध परिमाण में गर्भ, गर्भ के समान भित्ति, भित्ति के उच्छ्राय से द्विगुण (दूना) शिखर, शिखर के तूर्य्यांश (चतुर्थांश) अग्रस्थित मुखमण्डप, गर्भ के अष्टमांश परिमाण रथनिर्गम, परिधि के गुणभाग परिमाण रथक

किञ्च—

गरुत्मन्तं तथा कुर्य्यादुपरिष्टाच्चतुर्गुणम् । कुर्य्याद्दिक्प्रतिमायामान् दिक्षु चाष्टसु चोपरि ।।२८२

महावराहमैन्द्रयां तु नरसिंहन्तु दक्षिणे । प्रतीच्यां श्रीधरं देवमुदीच्यां हयशीर्षकम् ।।२८३।।

आग्नेय्यां जामदग्न्यञ्च नैर्ऋते राममेव च । वामनञ्चैव वायव्यां वासुदेवमथापरे ।।२८४।।

किञ्च—

पूर्व्वभूमौ तु शयनं द्वितीये चासनं भवेत् । स्थानमेव तृतीये तु चतुर्थे यानमेव च ।।२८५।।

पञ्चमे योगनिद्रा च षष्ठे योगासनं भवेत् । स्थानं योगसमायुक्तं सप्तमे परिकल्पयेत् ।।२८६।।

नानागवाक्षकैर्यत्नात् पत्रवल्ल्यादिभूषितम् । नानाप्रकारपुष्पाद्यैर्यथाशोभं प्रकल्पयेत् ।।२८७।।

कनिष्ठमध्यज्येष्ठानां प्रासादानां यथाक्रमम् । वसुभार्गवऋत्विग्भिः प्रदेयाचरणा बुधैः ।।२८८।।

द्वारस्य चाष्टमे युक्ते नवमे दशमे तथा । ललाटवेधो नैवं स्यादायामं शृणु साम्प्रतम् ।।२८९

यावद्धस्तैरभिप्रेतः प्रासादः कर्त्तृणानघ । तावद्भिरङ्गुलैरापो वसुभागेन वा भवेत् ।।२९०।।

एकस्तम्भो ध्वजो ज्ञेयो द्विस्तम्भा वेदिका मता । दशभूम्यन्तरे नित्यञ्चतुःस्तम्भं प्रकल्पयेत् ।।२९१

अथ मण्डपलक्षणविशेषः

मात्स्ये —

अथातः सम्प्रवक्ष्यामि मण्डपानान्तु लक्षणम् । मण्डपान् प्रवरान् वक्ष्ये प्रासादस्यानुरूपतः ।।२९२

---

एवं उसके तृतीयांश द्वारा रथ निर्गमन मार्ग प्रस्तुत करे । तीन रथ में राममूर्त्तित्रय को स्थापन करना चाहिये । शिखर के निमित्त सूत्र एवं रत्नपात करना चाहिये । शिखर के अर्धांश के परिमाण में सिंह होगा। एवं शुक नासा निर्णय पूर्वक मध्यस्थ सन्धि में धारण करे । अपर पार्श्व में भी इस प्रकार सूत्रपात करें। उसका ऊद्ध्र्व भाग ही कण्ठ है । वह श्यामल एवं सारवान् होना आवश्यक है । कलस को नतस्कन्ध, विकराल एवं वेदिका परिमाण से उन्नत करना चाहिये ।।२६५-२८१।।

और भी वर्णित है—उपरिदेश में चतुर्गुणित गरुड़ एवं अष्टदिक् के ऊद्ध्र्वदेश में प्रतिमा का विस्तार प्रस्तुत करे । महावराहमूर्त्ति को पूर्वदिक् में, नरसिंह को दक्षिणदिक् में, श्रीधर को पश्चिमदिक् में, हयशीर्ष को उत्तरदिक् में, जामदग्न्य को अग्निकोण में, राम को नैर्ऋतकोण में, वामन को वायुकोण में एवं वासुदेव को ईशानकोण में विन्यास करे ।।२८२-२८४।।

और भी लिखित है—पूर्व भूमि में शयन, द्वितीय में आसन, तृतीय में स्थान, चतुर्थ में यान, पञ्चम में योगनिद्रा, षष्ठ में योगासन एवं सप्तम में योग समायुक्त स्थान की कल्पना करे । यत्नपूर्वक क्रमशः कनिष्ठ, मध्यम, एवं ज्येष्ठ यह सब प्रासादसमूह विविध गवाक्ष से भूषित, पत्रलतादि द्वारा शोभित एवं विविध पुष्प द्वारा सुसज्जित करे । द्वार के अष्टम, नवम एवं दशम स्थान में विचक्षण, वसु, भार्गव एवं ऋत्विग्गण अवस्थान करे । इस प्रकार से ललाटवेध नहीं होता है । अधुना आयाम का वर्णन करता हूँ श्रवण करो । हे अनघ ! जितने हस्त प्रासाद गठन करने की इच्छा कर्त्ता की होती है, उतने परिमित अङ्गुलि द्वारा वा अष्टांश द्वारा आप करना चाहिये । ध्वज एक स्तम्भ विशिष्ट एवं वेदिका दो स्तम्भ विशिष्ट होनी चाहिये एवं दशभूमि के मध्य में चतुःस्तम्भ की कल्पना करनी चाहिये ।।२८५-२९१।।

अथ मण्डपलक्षणविशेषः

मत्स्यपुराण में वर्णित है—अनन्तर मण्डपसमूह का वर्णन करता हूँ । मण्डप का प्राधान्य प्रासाद के

विविधा मण्डपाः कार्य्या ज्येष्ठ-मध्य-कनीयसः ।
नामतस्तान् प्रवक्ष्यामि श्रृणुध्वं द्विजसत्तमाः ॥२९३॥
पुष्पकः पुष्पभद्रश्च सुवृत्तोऽमृतनन्दनः । कौशल्यो बुद्धिसङ्कीर्णो राजभद्रो-जयावहः ॥२९४॥
श्रीवृक्षो विजयश्चैव वास्तुकीर्णः श्रुतिन्धरः । यज्ञभद्रो विशालश्च संम्लिष्टः शत्रुमर्द्दनः ॥२९५
भागपञ्चो नन्दनश्च मानवो मानभद्रकः । सुग्रीवो हर्षणश्चैव कणिकारः पदार्द्धकः ॥२९६॥
सिंहश्च श्यामभद्रश्च सुभद्रश्च तथैव च । सप्तविंशतिर्विख्याता लक्षणं श्रृणुत द्विजाः ॥२९७॥
स्तम्भा यत्र चतुःषष्टिः पुष्पकः स उदाहृतः । द्वाषष्टिः पुष्पभद्रस्तु षष्टिः सुवृत्त उच्यते ॥२९८
अष्टपञ्चाशकः स्तम्भः कथ्यतेऽमृतनन्दनः । कौशल्यः षट् च पञ्चाशच्चतुःपञ्चाशता पुनः ।
नाम्ना तु बुद्धिसङ्कीर्णो द्विहीनो राजभद्रकः ॥२९९॥
जयावहस्तु पञ्चाशत् श्रीवृक्षस्तु द्विहीनकः । विजयस्तु द्विहीनः स्याद्वास्तुसङ्कीर्णकस्तथा ।
द्वाभ्यामेव प्रहीयेत ततः श्रुतिन्धरः परः ॥३००॥
चत्वारिंशद्यज्ञभद्रो द्विहीनोऽथ विशालकः । षट्त्रिंशच्चैव संम्लिष्टो द्विहीनः शत्रुमर्द्दनः ॥३०१
द्वात्रिंशद्भागपञ्चस्तु त्रिंशता नन्दनः स्मृतः । अष्टाविंशो मानवस्तु मानभद्रो द्विहीनकः ॥३०२
चतुर्विंशस्तु सुग्रीवो द्वाविंशद्धर्षणो मतः । विंशतिः कर्णिकारः स्यादष्टादशपदार्द्धकः ॥३०३
सिंहो भवेद्द्विहीनश्च श्यामभद्रो द्विहीनकः । सुभद्रस्तु तथा प्रोक्तो द्वादशस्तम्भसंयुतः ।
मण्डपाः कथिता ह्येते यथावल्लक्षणान्विताः ॥३०४॥
त्रिकोणं वृत्तमध्यस्थमष्टकोणं द्विरष्टकम् । चतुष्कोणश्च कर्त्तव्यं संस्थानं मण्डपस्य तु ॥३०५
राज्यश्च विजयश्चैव आयुर्वर्द्धनमेव च । पुत्रलाभः श्रियः पुष्टिस्त्र्यस्रादिषु भवेत् क्रमात् ।
एवं तु शुभदाः प्रोक्ता अन्यथा तु भयावहाः ॥३०६॥

---

अनुरूप वर्णन किया जाता है। मण्डप तीन प्रकार के हैं। ज्येष्ठ, मध्यम एवं कनिष्ठ। पुष्पक, पुष्पभद्र, सुवृत्त, अमृतनन्दन, कौशल्य, बुद्धिसंकीर्ण, राजभद्र, जयावह, श्रीवृक्ष, विजय, वास्तुकीर्ण, श्रुतिन्धर, यज्ञभद्र, विशाल, सम्लिष्ट, शत्रुमर्दन, भागपञ्च, नन्दन, मानव, मानभद्रक, सुग्रीव, हर्षण, कणिकार, पदार्धक, सिंह, श्यामभद्र एवं सुभद्रा क्रमशः यह सप्तविंशति प्रकार लक्षणों के मण्डप विख्यात हैं। हे द्विजवृन्द! इन सत्ताईस प्रकार मण्डप के लक्षण का वर्णन करता हूँ, श्रवण करो ॥२९२-२९७॥

चतुःषष्टि स्तम्भयुक्त मण्डप को पुष्पक कहते हैं। तद्रूप द्विषष्टिस्तम्भ होने से पुष्पभद्र, षष्टिस्तम्भ होने से सुवृत्त, अष्टपञ्चाशत् होने से अमृतनन्दन, षट्पञ्चाशत् होने से कौशल्य, चतुःपञ्चाशत् होने से बुद्धिसङ्कीर्ण, द्विपञ्चाशत् होने से राजभद्र, पञ्चाशत् होने से जयावह, अष्टचत्वारिंशत् होने से वास्तुसंकीर्ण, द्विचत्वारिंशत् होने से विशाल, षट्त्रिंशत् होने से सुग्रीव, द्वाविंशति होने से हर्षण, विंशति होने से कर्णिकार, अष्टादश होने से पदार्धक, षोड़श होने से सिंह, चतुर्दश होने से श्यामभद्र, एवं द्वादश होने से उस मण्डप को सुभद्र कहते हैं। मण्डपसमूह के लक्षणों का वर्णन यथारीति हुआ ॥२९८-३०४॥

त्रिकोण, वृतमध्य, अष्टकोण, षोड़शकोण, एवं चतुष्कोण मण्डप निर्म्माण करे। त्रिकोणमण्डप निर्म्माण करने पर राज्य, वृत्तमध्य होने पर विजय, अष्टकोण करने पर दीर्घायु, षोड़शकोण होने पर पुत्र और

अथ तत्र द्वारनिर्णयः

हयशीर्षपञ्चरात्रे—

ग्राममध्ये च पूर्व्वे च प्रत्यग्द्वारं प्रकल्पयेत् । विदिशासु च सर्व्वासु तथा प्रत्यङ्मुखं भवेत् ।
दक्षिणे चोत्तरे चैव पश्चिमे प्राङ्मुखं भवेत् ॥३०७॥

किञ्च—

विस्ताराद्द्विगुणं द्वारं कर्त्तव्यं तु सुशोभनम् । जातरूपं सरजतं तद्वदौडुम्बरैर्वृतम् ॥३०८॥
उडुम्बरोद्र्ध्वतः स्वर्णं द्वादशाख्यं न्यसेद्बुधः ।
तूर्य्यमङ्गलघोषेण ब्राह्मणान् स्वस्ति वाच्य च ॥३०९॥
द्वारस्य तु चतुर्थांशे कार्य्यौ चण्डप्रचण्डकौ ।
दण्डहस्तौ च कर्त्तव्यौ विष्वक्‌सेनोपमावुभौ ॥३१०॥
शाखोद्र्ध्वं न्यस्य रत्नानि न्यसेदूद्र्ध्वमुडुम्बरम् ।
तस्य मध्ये स्थिता देवी साक्षाल्लक्ष्मीः सुरेश्वरी ॥३११॥
कर्त्तव्या दिग्गजैः सा तु स्नाप्यमाना घटेन तु ।
शाखोडुम्बरकौ कार्य्यौ पत्रवल्ल्यादिभूषितौ ॥३१२॥
एकशाखं त्रिशाखं वा षट्शाखं द्वारमिष्यते । नवशाखञ्च कुर्व्वीत अत्र ऊद्र्ध्वं न कारयेत् ।
विष्ण्ववताररूपाद्यैः शाखां यत्नाद्विभूषयेत् ॥३१३॥

मात्स्ये च—

चतुःषष्टिपदं कृत्वा मध्ये द्वारं प्रकल्पयेत् ॥३१४॥

---

चतुष्कोण करने पर श्रीवृद्धि होती है। इस प्रकार मण्डप ही शुभदायक कहे गये हैं। इसके अन्यथा (विपरीत) होने पर भयावह होता है ॥३०५-३०६॥

अथ तत्र द्वारनिर्णयः

हयशीर्ष पञ्चरात्र में उक्त है—ग्राम के मध्य में पूर्वदिक् होने पर पूर्व द्वारा, चतुष्कोण में पश्चिम द्वारा दक्षिण, उत्तर एवं पश्चिमदिक में पूर्वमुख द्वारा करना चाहिये ॥३०७॥

और भी लिखित है—द्वारसमूह को विस्तृति की अपेक्षा द्विगुण एवं मनोहर करना चाहिये। यह सुवर्ण एवं रौप्य समन्वित और औडुम्बर (गूलर) द्वारा समावृत हो, विचक्षण व्यक्ति, उडुम्बर के ऊद्र्ध्व भाग में द्वादशाख्य स्वर्ण स्थापन करे। तुर्य्यध्वनि एवं मङ्गलध्वनि के सहित ब्राह्मणवृन्द को स्वस्तिवाचन कराकर द्वार के चतुर्थांश में विष्वक्सेन सदृश चण्ड एवं प्रचण्ड नामक दो दण्डपाणि मूर्त्ति को विन्यास करे। शाखा के ऊद्र्ध्व भाग में रत्न स्थापन करके ऊद्र्ध्व भाग में उडुम्बर स्थापन करे। उसके मध्य में मूर्त्तिमती सुरेश्वरी लक्ष्मी विराजमान रहती हैं। उन देवी को ऐसे भाव से निर्म्माण करावे कि दिग्गजगण कुम्भ द्वारा स्नान कराने में रत हैं। इसके अतिरिक्त वहाँ पर पत्रलता समलङ्कृत उडुम्बरशाखाद्वय को निर्म्माण करे। द्वार, एकशाख, त्रिशाख, षट्शाख, वा नवशाख विशिष्ट होना चाहिये। उसकी अपेक्षा अधिक शाखा युक्त न करे। विष्णु के अवतारों की मूर्त्ति के द्वारा यत्नपूर्वक शाखा को विभूषित करे ॥३०८-३१३॥

मत्स्यपुराण में लिखित है—चतुःषष्टि (चौंसठ) पद करके मध्य में द्वार प्रस्तुत करना चाहिये। विस्तृति से द्विगुण उच्छ्राय एवं उसके तीन भाग में कटि (कमर) करनी चाहिये। विस्तृति का अर्धांश गर्भ

विस्ताराद्द्विगुणोच्छ्रायस्तन्त्रिभागा कटिर्भवेत् ।
विस्ताराद्धाद्भवेद्गर्भो भित्तयोऽन्याः समन्ततः ॥३१५॥

गर्भपादेन विस्तीर्णं द्वारं द्विगुणमायतम् । उच्छ्रायात् पादविस्तीर्णा शाखा तद्वदुडुम्बरः ॥३१६

विस्तारपादप्रतिमं बाहुल्यं शाखयोः स्मृतम् । त्रिपञ्चसप्तनवभिः शाखाभिर्द्वारमिष्यते ॥३१७

कनिष्ठं मध्यमं ज्येष्ठं यथायोगं प्रकल्पयेत् ॥३१८॥

अङ्गुलीनां शतं सार्द्धं चत्वारिंशद्भिरुत्तमम् । धन्यमुत्तममायुष्यं धनधान्यदमेव च ॥३१९॥

शतं चाशीतिसहितं वातनिर्गमनं भवेत् । अधिकं दशभिस्तद्वन्मध्यं षोड़शभिः शतम् ।
विज्ञेयं वै तृतीयन्तु भवत्यशीतिभिस्तथा ॥३२०॥

शुभद्वाराणि चैतानि क्रमेणोक्तानि सर्व्वदा । अन्यानि वर्ज्जनीयानि मानसोद्वेगदानि तु ॥३२१

द्वारवेधं तु यत्नेन सर्व्ववास्तुषु वर्ज्जयेत् ॥३२२॥

वृक्षकोणाच्च भूद्वारात् स्तम्भकूपध्वजादपि । कुल्याश्वभ्रेण वा विद्धं न द्वारं शुभदं भवेत् ॥३२३

क्षयश्च दुर्गतिश्चैव प्रवासः क्षुद्भयं तथा । दौर्भाग्यं बन्धनं रोगो दारिद्र्यं कलहन्तथा ।
विरोधश्चार्थनाशश्च सर्व्ववेधे भवेत् क्रमात् ॥३२४॥

अथ प्रकारादिनिर्णयः

हयशीर्षपञ्चरात्रे—

प्रासादस्य चतुर्भागैः प्राकारस्योच्छ्रयो भवेत् ।
पञ्चहस्तस्य देवस्य एकहस्ता तु पीठिका ॥३२५॥

तस्मात्तु द्विगुणः प्रोक्तस्तथा गरुड़मण्डपः । एकहस्तादि कुर्व्वीत त्रिशद्धस्तान्तमेव च ॥३२६

---

और चार दिशा में (चतुर्दिक में) अपरापर भित्ति करे। द्वार, गर्भपाद सदृश विस्तृत एवं द्विगुणायाम समन्वित होगा। उच्छ्राय की एक चतुर्थांश एवं तत्सदृश उडुम्बर होना चाहिये। एवं शाखाद्वय एवं पाद-देश वत् विस्तीर्ण होना आवश्यक है। द्वार, त्रिशाख, पञ्चशाख, सप्तशाख, वा नवशाख हो सकता है। अवस्था भेद से द्वार, ज्येष्ठ, मध्यम् वा कनिष्ठ होगा। एकशत चत्वारिंशत् अङ्गुलीपरिमाण होने पर श्रेष्ठ होता है। वह धन्य, उत्तम, आयुप्रद एवं धनधान्य दायक है। एकशत अशीति संख्यक गवाक्षयुक्त होने से श्रेष्ठ। एकशत दश वा एकशत षोड़श संख्यक गवाक्षयुक्त होने से मध्यम, एवं अशीति संख्यक होने से तृतीय जानना होगा। इस प्रकार द्वार मूह ही शुभ द्वार शब्द से अभिहित है। अन्यविध द्वार को बर्जन करना चाहिये। कारण, तत्समूह मानसिक उद्वेगजनक हैं। यावतीय वास्तु में ही सयत्न से द्वारवेध वर्जन करना चाहिये। वृक्ष कोण, भूद्वार, स्तम्भ कूप, ध्वज, कूल्या एवं गर्त्त यह सब द्वार द्वारा बिद्ध होने से मङ्गलकर नहीं होते हैं। एवं उस प्रकार वेध निबन्धन क्षय, दुर्गति, प्रवास, क्षुधा, भय, दौर्भाग्य, बन्धन, रोग, दारिद्र्य, कलह, विरोध एवं अर्थनाश यह सब क्रमशः होते हैं ॥३१४-३२४॥

अथ प्राकारादिनिर्णयः

हयशीर्ष पञ्चरात्र में उक्त है—प्राकार का उच्छ्राय – प्रासाद का चतुर्थंश करना चाहिये। देवमूर्त्ति पञ्चहस्त होने से उसकी पीठिका एक हस्त करनी चाहिये। गरुड़मण्डप तदपेक्षा द्विगुण होना आवश्यक है, एवं मण्डपसमूह एक हस्त से त्रिंशत् हस्त के अतिरिक्त न हों ॥३२५-३२६॥

अथ वृक्षरोपणनिर्णयः

मात्स्ये—

पूर्व्वेण फलिनो वृक्षाः क्षीरवृक्षास्तु दक्षिणे । पश्चिमेन जलं श्रेष्ठं पद्मोत्पलविभूषितम् ।
उत्तरेण नलैस्तालैः शुभा स्यात् पुष्पवटिका ॥३२७॥
सर्व्वतस्तु जलं श्रेष्ठं स्थिरमस्थिरमेव च । सर्व्वतश्चापि कर्त्तव्यं परिखावलयादिकम् ॥३२८॥
याम्ये तपोवनस्थानमुत्तरे मातृकागृहम् । महानसं तथाग्नेये नैर्ऋते तु विनायकः ॥३२९॥
वारुणे श्रीनिवासश्च वायव्ये गृहमालिका । उत्तरे यज्ञशाला तु निर्म्माल्यस्थानमेव च ॥३३०
वारुणे सोमदैवत्ये वलिनिर्व्वपणं स्मृतम् । पुरतो गरुड़स्थानं तथान्येषां यथोचितम् ।
एवमायतनं कुर्य्याच्छुभमण्डपसंयुतम् ॥३३१॥
घण्टावितानक-सतोरणचित्रयुक्तं, नित्योत्सवप्रमुदितेन जनेन सार्द्धम् ।
यः कारयेत् सुरगृहं विविधध्वजाढ्यं, श्रीस्तं न मुञ्चति सदा दिवि पूज्यते च ॥३३२॥

अथ जीर्णोद्धारः

विष्णुधर्म्मोत्तरे तृतीयकाण्डे—

यस्य राज्ञस्तु विषये देववेश्म विशीर्य्यते । तस्य सीदति तद्राज्यं देववेश्म यथा तथा ॥३३३॥
कृत्वा शीर्णस्य संस्कारं तथा देवेशवेश्मनि । द्विगुणं फलमाप्नोति नात्र कार्य्या विचारणा ॥३३४

विष्णुरहस्ये—

पतितस्य च यः कर्त्ता पतमानस्य रक्षिता । विष्णोरायतनस्येह स नरो विष्णुलोकभाक् ॥३३५

---

अथ वृक्षरोपणनिर्णयः

मत्स्यपुराण में कथित है—पूर्वदिक् में फलशाली वृक्षसमूह, दक्षिणदिक् में क्षीरिवृक्ष, पश्चिमदिक् में पद्म एवं उत्पलादि समाकीर्ण श्रेष्ठ जलाशय एवं उत्तरदिक् में नल तालादि तरुराजि विराजित पुष्पोद्यान निर्माण करने से मङ्गल होता है। चतुर्दिक् में स्थिर वा अस्थिर जल होने से प्रशस्त होता है। समस्त दिकों में परिखावलयादि, दक्षिण में तपोवन, उत्तरदिक् में मातृका गृह, अग्निकोण में महानस, नैर्ऋत में विनायक, पश्चिमदिक् में श्रीनिवास, वायुकोण में गृहपालिका, और उत्तरदिक् में यज्ञशाला निर्म्माण का स्थान एवं निर्म्माल्य स्थान होगा। पश्चिमदिक् में वलि अर्पण का स्थान एवं सम्मुख में गरुड़ का स्थान करना चाहिये। इस प्रकार शुभ मण्डपयुक्त आयतन करना चाहिये। जो नित्योत्सव में आनन्दित व्यक्ति के सहित मिलित होकर घण्टा, वितान, चित्रविचित्र तोरण एवं विविध ध्वजा युक्त देवालय प्रस्तुत करता है, कमला, उसको परित्याग नहीं करती है, वह सर्वदा सुरलोक में पूजित होता है ॥३२७-३३२॥

अथ जीर्णोद्धारः

विष्णुधर्मोत्तर के तृतीयकाण्ड में लिखित है—जिस राजा के राज्य में देवालय अवशीर्ण (छिन्नभिन्न) होता है, उसका राज्य भी उसी प्रकार अवशीर्ण हो जाता है। देव-मन्दिर का जीर्णसंस्कार होने पर द्विगुण फल लाभ होता है। इसमें सन्देह नहीं है। विष्णु रहस्य में लिखा है—जो व्यक्ति, पतित विष्णु मन्दिर को पुनर्निर्म्माण करता है, एवं पतनोन्मुख मन्दिर की रक्षा करता है, उसको श्रीहरि का धाम प्राप्त होता है ॥३३५॥

अग्निपुराणे —

पतितं पतमानन्तु तथार्द्धस्फुटितं नरः। समुद्धृत्य हरेर्धाम द्विगुणं फलमाप्नुयात् ॥३३६॥

देवीपुराणे—

मूलाच्छतगुणं पुण्यं प्राप्नुयाज्जीर्णकारकः। तस्मात् सर्व्वप्रयत्नेन जीर्णस्योद्धारमाचरेत् । ३३७

हयशीर्षपञ्चरात्रे च—

वापीकूपतड़ागानां सुरधाम्नां तथानघ। प्रतिमानां सभानाञ्च संस्कर्त्ता यो नरो भुवि।
पुण्यं शतगुणं तस्य भवेन्मूलान्न संशयः ॥३३८॥

प्रतिष्ठाया विधिः कार्य्यस्तथा मन्दिरनिर्म्मिते। प्रायः श्रीहयशीर्षोक्तेरनुसारेण वैष्णवैः ॥३३९

देवालयप्रतिष्ठा च ख्याता तल्लिखनेन किम् ? श्रीमूर्त्तिस्थापनेनैव सम्पूर्णा सा विशेषतः ॥३४०

यथोक्तं तत्रैव—

देवगृहं देवतायाः प्रतिष्ठाविधिना सदा। संस्कार्य्यं मनुजानान्तु समुदायोक्तकर्म्मणा ।३४१॥

अथ श्रीतुलसीं धन्यां विवाह्य प्रभुणा समम्।
सम्प्रतिष्ठापयेच्छक्त्या वैष्णवः कृष्णतुष्टिकृत् ॥३४२॥

अथ तुलसीविवाहः प्रतिष्ठाविधिश्च

श्रीवशिष्ठ उवाच—

विवाहं सम्प्रवक्ष्यामि तुलस्यास्तु यथाविधि।
यथोक्तं पञ्चरात्रे वै ब्रह्मणा भाषितं पुरा ॥३४३॥

---

अग्निपुराण में लिखित है—श्रीहरि का मन्दिर पतित वा पतनोन्मुख वा अर्ध स्फुटित हरि-मन्दिर का उद्धार करने पर द्विगुण फल लाभ होता है ॥३३६।

देवीपुराण में लिखित है—प्रथम निर्म्माणकर्त्ता की अपेक्षा जीर्ण संस्कारक का शतगुण फल लाभ होता हैं। सुतरां सर्वथा यत्नपूर्वक जीर्णोद्धार करना चाहिये ॥३३७॥

हयशीर्ष पञ्चरात्र में लिखित है—हे अनघ! पृथिवी में जो मानव, वापी, कूप, तड़ाग, देवालय, प्रतिमा एवं सभा का संस्कार करते हैं। मूल स्थापक की अपेक्षा उनको शतगुण अधिक पुण्य लाभ होता है, इसमें सन्देह नहीं है ॥३३८॥

श्रीहयशीर्ष पञ्चरात्र के लिखित के अनुसार प्रतिष्ठाविधि एवं मन्दिर निर्म्माण विधि का अनुष्ठान बहुल रूप में करना ही वैष्णवों का कर्त्तव्य है। देवालय की प्रतिष्ठा, साधारणतः विख्यात है। अतः उसको लिखने की आवश्यकता सम्प्रति नहीं है। श्रीमूर्त्तिस्थापन प्रकरण में उसका विशेष वर्णन हुआ है ॥३३९-३४०॥

उक्त ग्रन्थ में लिखित है—देवता प्रतिष्ठा विधानानुसार लिखितकर्म के द्वारा सर्वदा देवालय का संस्कार करना मानवों का कर्त्तव्य है ॥३४१॥

अनन्तर वैष्णव व्यक्ति, श्रीहरि के सहित धन्या श्रीतुलसीदेवी का विवाह करके शक्ति अनुसार श्रीकृष्ण प्रीतिकारिणो तुलसी प्रतिष्ठा करें ॥३४२॥

अथ तुलसीविवाहः प्रतिष्ठाविधिश्च

श्रीवशिष्ठ ने कहा है—पूर्वकाल में ब्रह्मा ने तुलसी के विवाह का विषय जिस प्रकार कथा था, पञ्चरात्र के अनुसार उसका वर्णन यथारीति करता हूँ ॥३४३॥

आदावेव वने वाप्य तुलसीं स्वगृहेऽपि वा । वर्षत्रयेण पूर्णेन ततो यजनमारभेत् ।।३४४।।

सौम्यायने प्रकर्त्तव्यं गुरुशुक्रोदये तथा । अथवा कार्त्तिके मासि भीष्मपञ्चदिनेषु च ।

वैवाहिकेषु ऋक्षेषु पूर्णिमायां विशेषतः ।।३४५।।

मण्डपं कारयेत्तत्र कुण्डवेदीं यथा पुनः । शान्तिकञ्च प्रकर्त्तव्यं मातृणां स्थापनं तथा ।

मातृश्राद्धादिकं सर्व्वं बिवाहवत् समाचरेत् ।।३४६।।

ब्राह्मणांश्च शुचिस्नातान् वेदवेदाङ्गपारगान् । ब्रह्मा वा देशिकश्चैव चत्वारश्च तथर्त्विजः ।।३४७

वैष्णवेन विधानेन वर्द्धनीकलसं यजेत् । मण्डपं कारयेत्तत्र लक्ष्मीनारायणं शुभम् ।।३४८।।

गृहयज्ञं पुरः कृत्वा मातृणां यजनन्तथा । कृत्वा नान्दीमुखं श्राद्धं सौवर्णं स्थापयेद्धरिम् ।।३४९

कृत्वारोप्याञ्च तुलसीं लग्ने त्वस्तमिते रवौ । वासःशतेन मन्त्रेण वस्त्रयुग्मेन वेष्टयेत् ।।३५०।।

यदाबध्नेति मन्त्रेण कङ्कणं पाणिपल्लवे । कोऽदादिति च मन्त्रेण करग्राहो विधीयते ।।३५१।।

ततः कुण्डे समागत्य आचार्य्यः सह ऋत्विजैः ।

आचार्य्यो वेदिकाकुण्डे जुहुयाच्च नवाहुतीः ।।३५२।।

विवाहकर्म्मवत् सर्व्वं देशिकोत्तमैः । कर्त्तव्यश्च ततो होमो विशेषाद्विधिपूर्व्वकम् ।।३५३।।

ॐ नमो भगवते केशवाय नमः स्वाहा, नारायणाय स्वाहा । माधवाय गोविन्दाय विष्णवे मधुसूदनाय त्रिविक्रमाय वामनाय श्रीधराय हृषीकेशाय पद्मनाभाय दामोदराय उपेन्द्राय प्रद्युम्नाय अनिरुद्धाय अच्युताय अनन्ताय गदिने चक्रिणे विष्वक्सेनाय वैकुण्ठाय जनार्द्दनाय मुकुन्दायाधोक्षजाय स्वाहा । इति होमः ।।३५४।।

यजमानः सपत्नीको अन्ये ये गोत्रबान्धवाः । प्रदक्षिणाश्च कर्त्तव्याश्चत्वारो विष्णुना सह ।।३५५

तुलस्याः पाणिग्रहणे वेदिकायां विभावसौ । शतं कुम्भं जपेत् सूक्तं पावमानीं विशेषतः ।।३५६

तथैव शान्तिकाध्यायं नवसूक्त तथैव च । जीवसूक्तं पुनर्जप्त्वा तथा वैष्णवसंहिताम् ।।३५७।।

---

प्रथमतः वन में अथवा गृह में तुलसी रोपण कर तीन वर्ष के पश्चात् उनकी पूजा (प्रतिष्ठा) आरम्भ करे । उत्तरायण में, गुरु शुक्र के उदय में अथवा कार्त्तिकमास में, भीष्मपञ्चक दिन में, विवाहोचित नक्षत्र में, विशेषतः पूर्णिमा तिथि में मण्डप निर्म्माण उसमें कुण्ड एवं वेदी प्रस्तुत करके शान्ति विधान करना चाहिये । अनन्तर मातृगण का स्थापन एवं मातृ श्राद्धादि विवाहवत् समाधान करे । पश्चात् वेद वेदाङ्ग पारग, स्नातक एवं पवित्र ब्राह्मणगण के मध्य में ब्रह्मा वा देशिक एवं चारजन ऋत्विक् को नियुक्त करना चाहिये । वैष्णव विधि के अनुसार वर्धनी कलसो की पूजा करके वहाँ मण्डप में शुभ लक्ष्मी नारायण मूर्त्ति स्थापन करना चाहिये । पश्चात् गृहयज्ञ, मातृगण की पूजा एवं नान्दीमुख श्राद्ध करके सुवर्णमयी हरि मूर्त्ति स्थापन करना चाहिये । रजतमयी तुलसी गठन करके सन्ध्या लग्न में 'वासःशतं' मन्त्र से वस्त्रद्वय के द्वारा वेष्टन करना चाहिये । तत्पश्चात् 'यदाबध्नेति' मन्त्र से करपल्लव कङ्कन बन्धन पूर्बक 'कोऽददात्' इस मन्त्र से पाणिग्रहण सम्पादन करना चाहिये । पुनर्वार आचार्य्य ऋत्विक् वर्ग के सहित मिलित होकर कुण्ड में आगमन करके वेदिका कुण्ड में नव-आहुति प्रदान करें । देशिकोत्तम विवाह क्रिया के समान समस्त

शङ्खझल्लरिनिर्घोषैर्भेरीतूर्य्यस्य निस्वनैः। गायन्ते मङ्गला नार्य्यो माङ्गल्यं विधिनाचरेत्।
दद्यात् पूर्णाहुतिं पश्चादभिषेकविधिन्ततः ॥३५८॥
ब्रह्मणे वृषभं दद्यादाचार्य्यं परिधाप्य च। गां पदश्च तथा शय्यामाचार्य्याय प्रदापयेत्।
ऋत्विग्भ्यो दापयेद्वस्त्राण्येषां दद्याच्च दक्षिणाम् ॥३५९॥
एवं प्रतिष्ठितां देवीं विष्णुना च समर्च्चयेत्। आजन्मोपार्ज्जितं पापं दर्शनेन प्रणश्यति ॥३६०॥
रोपयेत्तुलसीं यस्तु सेचयेच्च प्रयत्नतः। प्रतिष्ठाप्य यथोक्तेन विष्णुना सह मानवः ॥३६१॥
स मोक्षं लभते जन्तुर्विष्णुलोकं तथाक्षयम्।
प्राप्नोति विपुलान् भोगान् विष्णुना सह मोदते ॥३६२॥
प्रतिष्ठा श्रीतुलस्यास्तु लिखिता विष्णुयामले ॥३६३।

अथोपसंहारः

यो यो विशेषोऽपेक्ष्यः स्यादन्योऽपि लिखितेष्विह।
तत्तच्छास्त्रात् स स ज्ञेयो नितराञ्च गुरोर्मुखात् ॥३६४॥
सन्त्यन्येऽपि सदाचारा बहवः शास्त्रदर्शिताः।
न लिख्यन्तेऽत्र ते सर्व्वे ग्राहकाभावतोऽधुना ॥३६५॥
कृत्यान्येतानि तु प्रायो गृहिणां धनिनां सताम्। लिखितानि न तु त्यक्तपरिग्रहमहात्मनाम् ॥३६६

---

वैष्णव कर्म्म सम्पन्न करके विशेष विधान से 'ॐ नमो भगवते केशवाय नमः स्वाहा' इत्यादि मूलोक्त मन्त्र से होम करें। पश्चात् यजमान, तत् सहधर्म्मिणी एवं अन्यान्य गोत्रबान्धववृन्द श्रीविष्णु के सहित तुलसी की चार बार प्रदक्षिणा करे। तत्पश्चात् तुलसीविवाह विषयक विभावसुवेदिका में शतकुम्भसूक्त, पावमानी सूक्त, शान्तिकाध्याय, नवसूक्त, जीवसूक्त एवं वैष्णव संहिता का जप करना चाहिये ॥३४४-३५७॥

तत्पश्चात् शङ्ख, झल्लरी, भेरी, तुर्य्य—इत्यादि की वाद्य-ध्वनि के सहित मङ्गल-गान करते करते यथा विधि मङ्गलाचरण करना नारीवृन्द का कर्त्तव्य है। पश्चात् पूर्णाहुति अर्पण करके अभिषेक विधि समापन पूर्व्वक ब्रह्मा को वृष प्रदान करके एवं आचार्य्य को वस्त्र परिधान कराकर गो, पट एवं शय्या एवं ऋत्विक् वृन्द को वस्त्र प्रदान करके इन सबको दक्षिणा प्रदान करें ॥३५८-३५९॥

इस प्रकार तुलसीदेवी को प्रतिष्ठित करके श्रीविष्णु के सहित उनकी पूजा करनी चाहिये। तुलसी-विवाह दर्शन करने से आजन्म सञ्चित पातक सम्पूर्ण रूप से ध्वंस होता है। जो मानव, यत्नपूर्वक तुलसी रोपण एवं सेचन तथा विधानानुसार श्रीविष्णु के सहित प्रतिष्ठा करते हैं, वे मोक्ष, अक्षय हरिलोक एवं विपुल भोग प्राप्त होकर श्रीहरि के सहित आनन्द लाभ कर सकते हैं। श्रीतुलसी प्रतिष्ठा का विवरण विष्णुयामल ग्रन्थ में लिखित है ॥३६०-३६३।

अथोपसंहारः

इस ग्रन्थ में लिखित विषयसमूह के मध्य में अन्यान्य जो कुछ विषयों को विशेष रूप जानने की आवश्यकता हो तो उसको यथायोग्य शास्त्र वा गुरु के मुख से जानना चाहिये। शास्त्रविहित अन्यान्य अनेक सदाचार हैं, अधुना अनुष्ठाता के अभाव निबन्धन यहाँ वह नहीं लिखे गये। प्रायशः सज्जन धनाढ्य गृहिवृन्द

अवश्यं तानि सर्व्वाणि तेषां तादृक्त्वसिद्धये । प्रागपेक्ष्याणि भक्तिर्हि सदाचारैकसाधना ॥३६७

तेषाञ्च पूर्व्वलिखितात् कृत्यान्येकान्तिलक्षणात् ।
व्यक्ति यातान्यथाप्यन्ते लिख्यन्तेऽल्पानि कानिचित् ॥३६८॥

अथैकान्तिकृत्यम्

प्राक्प्रेमभक्तिसम्पत्तेश्चिह्नानि लिखितानि हि ।
तान्येवैकान्तिनां प्रायो ज्ञापकानि विदुर्बुधाः ॥३६९॥

सर्व्वत्यागेऽप्यहेयायाः सर्व्वानर्थभुवश्च ते । कुर्य्युः प्रतिष्ठाविष्ठाया यत्नमस्पर्शने वरम् ॥३७०

अतएवोक्तमेकादशे श्रीभगवता (१८।२८)—

ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वानपेक्षक: ।
सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचरः ॥३७१॥ इति ।

एकान्तितां गतानान्तु श्रीकृष्णचरणाब्जयोः ।
भक्तिः स्वतः प्रवर्त्तेत तद्विघ्नैः किं व्रतादिभिः ? ॥३७२॥

(श्रीभा ११।२०।४६)—

न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः । साधूनां समचित्तानां बुद्धेः परमुपेयुषाम् ॥३७३

तथा ब्रह्मवैवर्त्ते—

यथा कथमपि श्रीमान् श्रीकान्तं समुपाश्रितः ।
कुरुतेऽखिलपापानां प्रलयं किं पुनर्व्रतैः ? ॥३७४॥

---

का कर्त्तव्य कार्य्य ही प्रदर्शित हुआ है, सर्वत्यागी उदासीन महात्मावृन्द के सम्बन्ध में लिखित नहीं हुआ है । तादृशी सिद्धि प्राप्ति हेतु (त्यक्त परिग्रह साधुओं की सिद्धि लाभ हेतु) उन उन महात्मावृन्द को पूर्वोक्त तत्तत् कार्य्यानुष्ठान करना अवश्य चाहिये । कारण, भक्ति का एकमात्र साधन सदाचार ही है । इसके पहले एकान्तीवृन्द का जो लक्षण लिखित हुआ है, उससे ही उन सबके कृत्यसमूह सुस्पष्टीकृत हुए हैं । तथापि ग्रन्थ के अवशेष में उसके कतिपय अङ्गों का वर्णन करते हैं ॥३६४-३६८॥

अथैकान्तिकृत्यम्

इसके पहले प्रेमभक्ति सम्पत्ति के चिह्नसमूह का वर्णन हुआ है । सुधीगण, उन्हीं को एकान्ति भक्तवृन्द का विज्ञापक जानें । सर्वत्याग करके भी जिसका त्याग करना कठिन है, जो समस्त अनर्थों का मूल कारण है, उस प्रतिष्ठारूपा विष्ठा को स्पर्श करने का प्रयत्न न करना ही श्रेयस्कर पन्था है ॥३६९-३७०॥

अतएव भागवत के एकादशस्कन्ध में श्रीभगवान् ने कहा है । ज्ञानवान्, विषयवितृष्ण, एवं जो निरपेक्ष मेरा भक्त है, वह आश्रमोचित धर्मादि के प्रति आसक्ति परित्याग पूर्वक विधिनिषेध के अतीत होकर सर्वत्र भ्रमण करे ॥३७१॥

श्रीकृष्ण के चरणयुगलों में ऐकान्तिकभाव से आश्रय ग्रहण करने से पर स्वतः ही भक्ति प्रवाहित होती है । अतएव भक्ति में विघ्नकर होने पर उनको व्रतादि अनुष्ठान करने की आवश्यकता ही क्या है ? ३७२॥

मदीय एकान्त भक्तवृन्द—प्रकृत्यतीत, समचित्त एवं साधु होते हैं, अतएव विधि निषेध जनित गुण दोषादि उनको स्पर्श करने में सक्षम नहीं हैं ॥३७३॥

ब्रह्मवैवर्त्त पुराण में लिखित है—जिस किसी प्रकार से श्रीपति श्रीहरि का आश्रय ग्रहण करने पर

विष्णुरहस्ये ब्रह्मनारदसंवादे मासोपवासकथनान्ते—

इन्द्रियार्थेष्वसक्तानां सदैव विमला मतिः । परितोषयतो विष्णुं नोपवासो जितात्मनः ॥३७५

किं तस्य बहुभिस्तीर्थैः स्नानहोमजपव्रतैः ?

येनेन्द्रियगणो घोरो निर्ज्जितोऽदुष्टचेतसा ? ॥३७६॥

जितेन्द्रियः सदा शान्तः सर्व्वभूतहिते रतः । वासुदेवपरो नित्यं न क्लेशं कर्त्तुमर्हति ॥३७७॥

ये स्मरन्ति सदा विष्णुं विशुद्धेनान्तरात्मना ।

ते प्रयान्ति भयं त्यक्त्वा विष्णुलोकमनामयम् ॥३७८॥

प्रभाते चार्द्धरात्रे च मध्याह्ने दिवसक्षये । कीर्त्तयन्ति हरिं ये वै ते तरन्ति भवार्णवम् ॥३७९

आनन्दितोऽथवा चार्त्तः क्रुद्धः शान्तोऽथवा हरिम् ।

योऽनुकीर्त्तयते भक्त्या स गच्छेद्वैष्णवीं पुरीम् ॥३८०॥

गर्भजन्मजरारोगदुःखसंसारबन्धनैः । न बाध्यते नरो नित्यं वासुदेवमनुस्मरन् ॥३८१॥

एवमेकान्तिनां प्रायः कीर्त्तनं स्मरणं प्रभोः ।

कुर्व्वतां परमप्रीत्या कृत्यमन्यन्न रोचते ॥३८२॥

भावेन केनचित् प्रेष्ठश्रीमूर्त्तेरङ्घ्रिसेवने ।

स्यादिच्छैषां स्वमन्त्रेण स्वरसेनैव तद्विधिः ॥३८३॥

विहितेष्वेव नित्येषु प्रवर्त्तन्ते स्वयं हि ते ।

इत्याद्येकान्तिनां भाति माहात्म्यं लिखितं हि तत् ॥३८४॥

---

मनुष्य श्रीमान् होकर समस्त पापों को ध्वंस कर सकता है। सुतरां अन्य व्रतादि का अनुष्ठान करने की उसको आवश्यकता ही क्या है? ॥३७४॥

विष्णुरहस्य के ब्रह्म-नारद-संवाद में मासोपवास व्रत वर्णन के अन्त में लिखित है—विमलमति, सर्वदा ही श्रीहरि प्रीति विधायनी होती है, अजितेन्द्रिय व्यक्ति के पक्ष में उपवास के द्वारा भी श्रीहरितोषण नहीं होता है। जितेन्द्रिय व्यक्ति के पक्ष में तीर्थ, स्नान, होम, जप, व्रत का प्रयोजन ही क्या है? जिन्होंने शुद्धान्तःकरण होकर इन्द्रिय ग्राम को वशीभूत किया है, जो जितेन्द्रिय, सदा शान्त, सर्वभूत हितैषी, और निरन्तर श्रीहरि परायण हैं, उनको कभी क्लेश भोगना नहीं पड़ता है। जो व्यक्ति पवित्र मन से सर्वदा श्रीहरि का स्मरण करते हैं, वे निर्भय होकर अनामय श्रीहरि के धाम में प्रस्थान करते हैं। जो लोक, प्रातः काल में अर्धरात्र में, मध्याह्न काल में एवं सन्ध्याकाल में श्रीहरि-कीर्त्तन करते हैं, वे ही वैष्णवीपुरी में गमन करते हैं। जो मानव, नित्य श्रीहरि का स्मरण करते हैं, गर्भ, जन्म, जरा, रोग, दुःख,–यह सब संसार बन्धन उनको आक्रमण नहीं कर सकते हैं ॥३७८-३८१॥

जो सब एकान्ती भक्त, इस प्रकार परम प्रीतिपूर्वक बहुल भाव से प्रभु का कीर्त्तन एवं स्मरण करते हैं और किसी प्रकार कार्य्यानुष्ठान में उनकी रुचि नहीं होती है। वे जिस किसी अनिर्वचनीय भाव से परम प्रिय श्रीमूर्त्ति चरणकमल सेवन में अभिलाष करते हैं, उनके स्वीय अभीष्टमात्र एवं प्रेमरस के प्रभाव से ही वह अभिलाष समुद्भुत होता है। वे स्वतः ही विहित नित्यकर्म में प्रवृत्त होते हैं। ऐकान्तिक भक्तवृन्द का माहात्म्य इस प्रकार विवृत हुआ ॥३८२-३८४॥

सदा सदाचारपरास्तु ये नरा, भवन्ति दामोदरभक्त्यपेक्षया ।
तदीयपादाम्बुजधूलिधूसरं, कदा भवेदस्य शिरोऽधमस्य मे ? ॥३८५॥
श्रीनन्दसुन्दरमुकुन्दपदारविन्द,-प्रेमामृताब्धिरसतुन्दिलमानसा ये ।
नानार्थवृन्दमनुसन्दधते न च स्वं, तेषां पदाब्जमकरन्दमधुव्रतः स्याम् ॥३८६॥

इति श्रीगोपालभट्ट-विलिखिते श्रीभगवद्भक्तिविलासे प्रासादिको नामविंशतितमो विलासः ।

समाप्तश्चायं श्रीभगवद्भक्तिविलासो ग्रन्थः ।

शकाब्दे पञ्चषट्शक्रसंख्ये सूर्य्ये तुलां गते ।
वृन्दावनान्तर्ग्रन्थोऽयं नन्दावासे समापितः ॥

———

श्रीदामोदर में भक्ति प्राप्त होने की अभिलाषा से जो निरन्तर सदाचारनिष्ठ रहते हैं, उनके चरणकमलों की रेणु से कब यह मेरा शिरोदेश अलङ्कृत होगा ? ॥३८५॥

जिनका हृदय श्रीनन्दनन्दनमुकुन्द के सुन्दर चरणकमल के प्रेमामृतसिन्धुरस से परिपूर्ण है, वे स्वयं ही अन्य किसी विषय में स्वार्थानुसन्धित्सु नहीं होते हैं। मैं जैसे उनके पदाब्जमकरन्दपायी भृङ्ग बन सकूँ ॥३८६॥

इति श्रीगोपालभट्ट-विलिखिते श्रीभगवद्भक्तिविलासे प्रासादिको नाम विंशतितमो विलासः ।

सूर्य्य तुलाराशिस्थ होने पर १४६५ शकाब्द में वृन्दावनान्तर्गत नन्दालय में प्रस्तुत ग्रन्थ विरचन सम्पूर्ण हुआ ।

समाप्तश्चायं श्रीभगवद्भक्तिविलासो ग्रन्थः ।

शास्त्रिणाहरिदासेन वृन्दारण्य निवासिना
रचिता विमला भाषा सज्जनानन्दवर्द्धिनी ।
हयाकाशे ग्रहेचन्द्रे माधवस्य शुभे दिने ।
प्रतिपत्तिथि सम्प्राप्ते ग्रन्थोऽयं पूर्णतां गतः ॥

श्रीगुर्वार्पणमस्तु ॥

श्रीगदाधरगौराङ्गौ जयतः

# श्रीश्रीहरिभक्तिविलासस्य क्रोड़पत्रम्

## महाद्वादशी-व्रतनिर्णायक-समालोचनम्

भान्यर्कोदयमारभ्य प्रवृत्तान्यधिकानि चेत् । समान्यूनानि वा सन्तु ततोऽमीषां व्रतौचिती ॥१॥
किंवा सूर्य्योदयात् पूर्व्वं प्रवृत्तान्यधिकानि चेत् । समानि वा तदामीषां (तदाप्येषा) व्रताचरणयोग्यता ॥२॥
श्रवणाव्यतिरिक्तेषु नक्षत्रेषु खलु त्रिषु । सूर्य्यास्तमन-पर्य्यन्तं कार्य्यं द्वादश्यपेक्षणम् ॥३॥
श्रवणे त्वस्तमनतः प्राग्द्वादश्यां समाप्तताम् । गत यामपि तत्रैव व्रतस्योचितता भवेत् ॥४॥
( ह भ वि १३।२८६-२८९)

'भान्यर्कोदयमारभ्य' इत्यादिषु 'किंवा सूर्य्योदयात् पूर्व्वम्' इत्यादिषु च नक्षत्राणामाधिक्यादिकन्तु तिथिमानापेक्षया, न त्वहोरात्रापेक्षया, न वा स्वमानापेक्षयेति ज्ञेयम् । 'अथ ऋक्षप्रयुक्तानाम्' इत्यादि-सन्निहितोक्त्या तस्या एव प्रकरणप्राप्तत्वात्, गौड़ोत्कल-मध्यममाथुरादिषु तथैव चिरन्तन-सदाचार-दर्शनाच्च सर्वप्रमाणोपमर्द्दकश्चिरन्तनसदाचारो नान्यथा कर्त्तुं केनापि शक्यः । श्रीमद्भिर्महामहोपाध्यायै रघुनन्दन-भट्टाचार्य्यैरपि गौड़देशाचारदृष्ट्या बहुतर-प्रमाणवचनान्यन्यथा व्याख्याय अरुणोदयदशमीविद्धाया-मेकादश्यामुपवासो व्यवस्थापितः । तथा ह्येकादशीतत्त्वे "गौड़ीयानां विशेषतो देशाचारादुदयोपरिविद्धा तु नोपोष्या" इत्यादि ।

ननु प्रमाणवचनेषु तिथिनक्षत्रयोर्यथा-कथञ्चित् संयोग एव जयादिव्रतं विहितम्, किमिति 'भान्यर्को-दयमारभ्य' इत्यादिना सङ्कोचः क्रियते ? इत्यत आह—नृसिंहपरिचर्य्यादीति, आदिना श्रीवैष्णवादीनां मतानि परिगृहीतानि, तथा हि "चतसृष्वृक्षं दिनादेर्भवेत्, पूर्णं चोनमथाधिकम्" इत्यादि । "ऋक्षाधिक्य-समत्वयोस्तु दिनतः प्राग् भे च पश्चाद्व्रतम्," "हित्वा वैष्णवमस्तसत्तमितरेष्वृक्षेषु भद्रातिथे,-स्तत्रार्वागपि तत्-प्रखण्डन इहैवाह्नि व्रते" इत्यादि-नृसिंहपरिचर्य्यादिषु तत्र तत्र सङ्कोचदृष्ट्यैवात्र सङ्कोचः कृतः । अत्र केचित् नृसिंहपरिचर्य्यायाष्टीकाभासमुट्टङ्क्य 'ह्रासवृद्धिपर्य्यालोचनया' इत्यादिलिपितः अहोरात्रापेक्षया साम्याधिक्ये वदन्ति, तन्न समीचीनम् । तथा सति टीकायां 'यदा नक्षत्रवृद्धौ सूर्य्योदयात् प्राक्प्रवृत्तानि नक्षत्राणि साम्यमाधिक्यं वा भजन्ते, तदा सूर्य्योदयादुपर्य्येव नक्षत्रेण भवितव्यमिति न नियमः' इति न सङ्गच्छते, न हि सूर्य्योदयादुपरि नक्षत्राणामवस्थानमृतेऽहोरात्रापेक्षया तेषामाधिक्यं भवितुमर्हति, तिथ्य-पेक्षया तु सर्वथा भवितुमर्हत्येव । यत्तु पूर्ववाक्ये सममित्यनुक्त्वा पूर्णमित्युक्तं, तत्तु च्छन्दोऽनुरोधेनैव समार्थकः पूर्णशब्दः प्रयुक्त इति । टीकाकारेणापि तदभिप्रेत्यैव 'साम्यम्' इत्युक्तं, न तु पूर्णतेति; अन्यथा ग्रन्थकृदपि 'पूर्णान्यूनानि वाप्यस्युः' इत्येवोच्येत । यदा नक्षत्रवृद्धौ सूर्य्योदयात् प्राक्प्रवृत्तानि नक्षत्राणि साम्यमाधिक्यं वा भजन्ते—इत्यत्र कस्य साम्यमाधिक्यं वा, दिनमानस्येति चेत्, तदपि न घटते, नक्षत्रवृद्धौ दिनमानसाम्य न कर्हिचिदपि भवितुमर्हति, किन्तर्हि ? द्वादश्याः साम्यमाधिक्यञ्चेति द्वितीयमेव सम्भवति । ह्रासवृद्धिपर्य्या-लोचनयेत्यादिकन्तु द्वादश्यपेक्षयेति युज्यते, न तावत् कष्टकल्पनया दिनमानापेक्षयेति । न वा नक्षत्रवृद्धेः साम्ये आधिक्ये वा निमित्तत्वम्, किन्तर्हि ? परदिने द्वादशीनिःसरण एव; नृसिंह-परिचर्य्यायां दिनपदप्रयोगः, नास्ति संशय इत्यपि न साधीयः । यदि कारिकायाम् 'ऋक्षं दिनादेर्भवेत्" इति, "दिनतः प्राग्भे च" इति दिनपदद्वयेन दिनमानापेक्षत्वमुच्यते, तर्हि 'भद्रातिथेः" इत्यनेनापि द्वादशीमानापेक्षत्वं किं न घटेत, किन्तु तत्र तत्राधिक्यादीनामन्वयाभावात् न तत्तन्मानापेक्षत्वम् । दिनादेरिति पञ्चमी आरम्भार्था, तेन दिनादि सूर्य्योदयमिति यावत्, सूर्य्योदयमारभ्येत्यर्थः । दिनतः सूर्य्योदयादिति यावत्, प्राक् पूर्वं प्रवृत्ते भे नक्षत्रे ।

ग्रन्थकृतापि 'भान्यर्कोदयमारभ्य', 'किंवा सूर्य्योदयात् पूर्वम्' इत्येव लिखितम् । न तावद् दिनशब्दोऽहोरात्र-पर्य्यायः, किन्तर्हि ? सूर्य्यकिरणावच्छिन्नकालमात्रपरः । लक्षणयाऽहोरात्रपरत्वे प्रयोजनाभावात् कष्ट-कल्पनामात्रं स्यात् । यदि साम्याधिक्ये अहोरात्रापेक्षयेति ग्रन्थकृतोऽभिप्रायोऽभविष्यत्, तदा "किंवा सूर्य्योदयात् पूर्वं प्रवृत्तान्यधिकानि चेत् । समानि वाऽहोरात्रस्य तदैवैषां व्रतौचिती ॥" इत्येवावक्ष्यत् । अतएव हरिभक्तिविलास-नृसिंहपरिचर्य्ययोरैकमत्याज्जयादिषु नक्षत्राणामाधिक्यादिकं द्वादशीमानापेक्षयेति मनीषिभिः परामृष्टम् । "श्रवणे त्वस्तमनतः" इत्यादौ नृसिंह-परिचर्य्याटीकानुवृत्त्या सार्द्धयामादुपरि द्वादशी-समाप्ताविति यत्तदपि न समीचीनं, तथा सति किं ग्रन्थकृतः "श्रवणे त्वस्तमनतः प्राक् सार्द्धप्रहरात् परम् । द्वादश्याञ्च समाप्तायां व्रताचरणयोग्यता ॥" इति वक्तुं किमसामर्थ्यमासीत् ? वस्तुतस्तु यस्मिन् कस्मिंश्चिदेव समये द्वादशीसमाप्तौ तस्मिन्नेव दिने व्रतमिति ग्रन्थकृतो हार्द्दम् । तत्त्वतस्तु ग्रन्थकृता केवलनृसिंहपरिचर्य्या-मनुसृत्य स्वग्रन्थ आविर्भावितः, किन्तर्हि ? पूर्वाचार्य्यव्रजग्रन्थाचारादिकमिति यदि नृसिंहपरिचर्य्याया अनुसरणमुरीक्रियते, तदा कारिका एव न सर्वथा टीकाया इति सर्वमनवद्यमिति ।

# श्रीनृसिंहपरिचर्य्या

## तृतीय-पटलः

एवं तावदनेकमहापातकोपपातकातिपातकादिहेतु-दानवबलवृद्धिनिमित्त-विद्धैकादशीपरित्यागेन शुद्धोपवासः सनियमविशेषं प्रदर्शितः । अधुना शुद्धामप्येकादशीं काञ्चित् परित्यज्य द्वादश्यामेवोपवसेदिति तदपवादेनाष्टौ महाद्वादश्यः प्रस्तूयन्ते ॥१॥

तत्रैव संग्रहः —

शुद्धं वृद्धिमुपैति चेद्धरिदिनं भद्रा न सोन्मीलनी, भद्रैवाभ्यधिका न हर्य्यहरियं वञ्जुल्यभिख्या सती ।
नन्दादित्रितयान्वये तु महती स्यात्त्रिस्पृशा द्वादशी, पूर्णे पर्व्वणि निर्गते परदिने स्यात् पक्षवर्द्धिन्यपि ॥२॥
आदित्येन जयाच्युतेन विजया पुष्येण पापापहा, रोहिण्या च जयन्तिकापि चतसृष्वृक्षं दिनादेर्भवेत् ।
पूर्णं चोनमथाधिकं च हरिभाधिक्ये तु भान्तर्भुजि, ऋक्षाधिक्यसमत्वयोस्तु दिनतः प्राग्भे च पश्चाद्व्रतम् ॥३॥
हित्वा वैष्णवमस्तसप्तमितरेष्वृक्षेषु भद्रातिथे,- स्तत्रर्क्षाग्रगपि तत्प्रखण्डन इहैवाह्नि व्रते पारणम् ।
अन्यस्मिन्नधिका तिथिर्यदि ततो भान्तेन वृद्धौ तिथे,-रन्तःपारणकं भवेदिति महाष्टद्वादशीनिर्णयः ॥४॥

अयमर्थः —दशमीवेधरहितैकादशी परदिने कियन्मात्रा दृश्यते, न द्वादशी, सा तु उन्मीलनी महा-द्वादशी । द्वादशीमात्रवृद्धौ वञ्जुली । एकादशीद्वादशीत्रयोदशीयोगे त्रिस्पृशा । षष्टिघटिका भूत्वा पूर्णा वा अमा वा परदिने कियन्मात्रा वर्द्धते, सा पक्षवर्द्धिनी । पुनर्वसुयोगे जया; श्रवणायोगे विजया, पुष्ययोगे पाप-नाशिनी, रोहिणीयोगे जयन्ती ॥५॥

एतासु नक्षत्रप्रयुक्तासु चतसृषु द्वादशीदिने सूर्य्योदयादारभ्य नक्षत्रेण भवितव्यं, न प्राक् । ह्रासवृद्धि-पर्य्यालोचनाय नक्षत्रन्यूनत्वसाम्याधिक्येषु सत्स्वपि रोहिणीश्रवणौ चेत् षष्टिघटिका भूत्वा पारणदिने वर्द्धते, तदा नक्षत्रमध्य एव पारणम् । यदा नक्षत्रवृद्धौ सूर्य्योदयात् प्राक्प्रवृत्तानि नक्षत्राणि साम्यमाधिक्यं वा भजन्ते, तदा सूर्य्योदयादुपर्य्येव नक्षत्रेण भवितव्यमिति न नियमः ॥६॥

श्रवणातिरिक्तेषु त्रिषु नक्षत्रेषु द्वादश्या अस्तसमयपर्य्यन्ता भवितव्यैव। श्रवणे तु अस्तात् प्रागपि सार्द्ध यामादुपरि द्वादशीसमाप्तौ तदहरेवोपावसः। पारणदिने नक्षत्रतिथ्योरनुवृत्तौ यदि तिथेरधिकं नक्षत्रं, तर्हि तिथिमध्य एव पारणं, द्वादशीलङ्घनस्य शतशो निषिद्धत्वात्। तिथ्याधिक्ये तु नक्षत्रे नष्टे पारणं, न प्रागित्येषोऽष्टमहाद्वादशीनिर्णयः ॥७॥

— —

## पुनर्वस्वादिनक्षत्रचतुष्टययोगे महाद्वादशीव्रतनिर्णयः

"नाम्ना सा तु जया ख्याता तिथीनामुत्तमा तिथिः। तामुपोष्य" इत्यादि-पुराणवाक्येषु द्वादश्यां तत्र नक्षत्रस्य (तत्तन्नक्षत्रस्य) योगे सति महाद्वादशीत्वेन तत्रैव व्रतं विहितम्, तच्च किं कृत्स्नायामेव तस्यां तदन्यूनाधिकतत्तल्लक्षणयोगे (तत्तन्नक्षत्रयोगे) एव विधीयते, किंवा तत्तल्लक्षणस्य (तत्तन्नक्षत्रस्य) अधिकसमन्यूनतायां सत्यामपि तस्याः काल- (कला)-विशेषयोगेनेत्यादि-शङ्कानिरासाय कारिकाचतुष्टयेन व्याख्यां लिखति—भानीति। अर्कोदयमारभ्य प्रवृत्तानि भानि व्रतयोग्यानि, न तु तदनन्तरप्रवृत्तान्यपि। तानि च द्वादशीतः अधिकानि समानि न्यूनानि वा यथेष्टं सन्तु इति कामचारे लोट्, न तत्र आग्रह इति भावः ॥१॥

ननु अर्कोदयमारभ्य प्रवृत्तानि इत्युक्ते अर्कोदयात् पूर्वं नक्षत्रस्य प्रवृत्तौ न व्रतयोग्यता स्यादित्याशङ्क्य पक्षान्तरं लिखति—किंवेति। अर्कोदयात् पूर्वं प्रवृत्तान्यपि व्रतयोग्यानि, किन्तु अधिकानि समानि चेद्भवन्ति, न तु न्यूनानि। अर्कोदयात् पूर्वं प्रवृत्तौ न्यूनत्वस्यापि सम्भवात् ॥२॥

ननु कारिकाद्वये भान्यधिकानीत्युक्ते द्वादश्या न्यूनत्वमायातं, तथा नक्षत्रस्यार्कोदयात् पूर्वप्रवृत्तौ तत्पूर्वप्रवृत्तिकालस्य नियमाकरणात् द्वादश्याः परिमितेरप्यकरणात् कदाचित् तयोः पूर्वदिनत एव प्रवृत्तौ परदिने अत्यल्पमपि सम्भवेत्, तर्हि श्रवणद्वादशीवत् तयोरत्यल्पयोगे जयादीनां व्रतौचित्यं स्यादित्याशङ्क्य द्वादशीपरिमाणं लिखति—श्रवणाव्यतिरिक्ते ष्विति। त्रिषु नक्षत्रेषु पुनर्वसु-रोहिणी-पुष्यासु सूर्य्यास्तमनपर्य्यन्तं द्वादश्यपेक्षणं कार्य्यमिति तत्पर्य्यन्ता द्वादशीव्रते अपेक्षा स्यात्, न तु ततो न्यूनतेत्यर्थः। एममग्रे नक्षत्रस्यापि सूर्य्यास्तमनपर्य्यन्तस्थितन्यूनत्वे न व्रतौचित्यमेतदभिप्रेत्यैव सूर्य्योदयात् पूर्वप्रवृत्तौ न्यूनत्वं न गृहीतम्। सूर्य्योदयमारभ्य प्रवृत्तौ तु कदाचिदपि अस्तमनतो न्यूनत्वं न सम्भवेदतस्तत्र न्यूनत्वमपि न गृहीतम्। तस्मादस्तमनानन्तरस्थित-द्वादशीतो नक्षत्राणां न्यूनत्वेऽपि न व्रतौचित्याभाव इति ॥३॥

ननु तर्हि श्रवणे कथं स्यादित्यत आह—श्रवणे त्विति। अस्तमनात् प्राक् द्वादश्यां समाप्ति गतायामपि, तथा तत्रैव दिने श्रवणस्य यत्किञ्चिद्योगे व्रतौचित्याभिप्रायः। अत्रायं भावः—न हि नक्षत्राणां सूर्य्योदयमारभ्य प्रवृद्धौ तत् पूर्व्वं वा प्रवृत्तौ किमपि तात्पर्य्यं, व्रतौचित्ये उभयोरप्यविशेषात्, किन्तु सूर्य्योदयकालव्याप्तेरेव नियमाः, तथा द्वादश्यास्तत्तन्नक्षत्रस्य च सूर्य्यास्तमनपर्य्यन्तस्थितेरेव व्रतौचित्यविधायकाः। तदनन्तरन्तु तत्तन्नक्षत्रस्य अधिकसमन्यूनत्वानि यथेष्टं सन्तु, न तु तानि व्रतौचित्यविधायकानि, न च तद्विधातानि इति। एतेन श्रवणव्यतिरिक्तनक्षत्रत्रयाणां द्वादश्याश्च सूर्य्योदयकालव्याप्ति-पूर्व्वक सूर्य्यास्तकालव्याप्तित्वमेव व्रतौचित्ये वीजम्, न त्वन्यत् किञ्चिदपीति प्रकरणे अस्मिन् फलितोऽर्थः। इत्यलमतिविस्तरेण ॥४

श्रीश्रीराधादामोदरसेवाध्यक्षेण श्रीकेशवलालदेवगोस्वामिना कृतेयं व्याख्या।

— —